।। कोबातीर्थमंडन श्री महावीरस्वामिने नमः ।।

।। अनंतलब्धिनिधान श्री गौतमस्वामिने नमः ।। ।। गणधर भगवंत श्री सुधर्मास्वामिने नमः ।।

।। योगनिष्ठ आचार्य श्रीमद् बुद्धिसागरसूरीश्वरेभ्यो नमः ।। ।। चारित्रचूडामणि आचार्य श्रीमद् कैलाससागरसूरीश्वरेभ्यो नमः ।।

# आचार्य श्री कैलाससागरसूरि ज्ञानमंदिर

## पुनितप्रेरणा व आशीर्वाद

## राष्ट्रसंत श्रुतोद्धारक आचार्यदेव श्रीमत् पद्मसागरसूरीश्वरजी म. सा.

## जैन मुद्रित ग्रंथ स्केनिंग प्रकल्प

ग्रंथांक : १




**श्री महावीर जैन आराधना केन्द्र**

आचार्यश्री कैलाससागरसूरि ज्ञानमंदिर
कोबा, गांधीनगर-श्री महावीर जैन आराधना केन्द्र
आचार्यश्री कैलाससागरसूरि ज्ञानमंदिर
कोबा, गांधीनगर-३८२००७ (गुजरात)
(079) 23276252, 23276204
फेक्स : 23276249
Websiet : www.kobatirth.org
Email : Kendra@kobatirth.org

**शहर शाखा**

आचार्यश्री कैलाससागरसूरि ज्ञानमंदिर
शहर शाखा
आचार्यश्री कैलाससागरसूरि ज्ञानमंदिर
त्रण बंगला, टोलकनगर
परिवार डाइनिंग हॉल की गली में
पालडी, अहमदाबाद – ३८०००७
(079) 26582355



पण्डितकुलपतिः श्रीजीवानन्दविद्यासागर वि, ए।

PANDIT JIVANANDA VIDYASAGARA B. A.

SUPERINTENDENT FREE SANSKRIT COLLEGE CALCUTTA.

# स्मृतितत्त्वस्य

प्रथमो भागः।



तिथितत्त्वम् + श्राद्धतत्त्वम् + आह्निकतत्त्वम् + प्रायश्चित्ततत्त्वम्
ज्योतिस्तत्त्वम् + मलमासतत्त्वम् + संस्कारतत्त्वम्।

महामहोपाध्याय श्रीरघुनन्दनभट्टाचार्य्य

विरचितः।



बि, ए, उपाधिधारिणा पण्डितकुलपतिना
श्रीजीवानन्दविद्यासागरेण संस्कृतः

प्रकाशितश्च।



द्वितीय संस्करणम्।



कलिकातानगर्य्यां
"नारायण यन्त्रे"
मुद्रितः।



इं० १८९५।

# प्रथमभागस्य सूचीपत्रम्।



## तिथितत्त्वम्।

## श्राद्धतत्त्वम् ।

| प्रकरणम् | | | पृष्ठायां |
|---|---|---|---|


## प्रायश्चित्ततत्त्वम् ।

| | | | |
|---|---|---|---|

---

संस्कारतत्त्वम् ।

श्रीगणेशाय नमः।

# तिथितत्त्वम्।

प्रणम्य सच्चिदानन्दं रामं कामदमीश्वरम्।
तिथ्यादितत्त्वं तत्प्रीत्यै वक्ति श्रीरघुनन्दनः॥

तत्र तिथिस्वरूपमाह हेमाद्रिकालमाधवीययोः स्कान्दे प्रभासखण्डम्। "अमा षोड़शभागेन देवि प्रोक्ता महाकला। संस्थिता परमा माया देहिनां देहधारिणी॥ अमादिपौर्णमास्यन्ता या एव शशिनः कलाः। तिथयस्ताः समाख्याताः षोड़शैव वरानने"॥ चन्द्रमण्डलस्य षोड़शभागेन परिमिता देहधारिणी आधारशक्तिरूपा अमानाम्नी महाकला प्रोक्ता चयोदयरहितत्वान्नित्या स्रक्सूत्रवत् सर्वानुस्यूता तदन्याः पञ्चदश कलाः प्रतिपदादितिथिविशेषरूपा इति षोड़शैव कलास्तिथय इति। अत्र प्रथमकला क्रियारूपा प्रतिपत् एवं द्वितीयादिकला क्रियारूपा द्वितीयादिः सा च वृद्धिरूपा चेत् शुक्ला ह्रासरूपा चेत् कृष्णेति। तथा च षट्त्रिंशन्मतम्। "तत्र पक्षावुभौ मासे शुक्लकृष्णौ क्रमेण हि। चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मकः॥ पक्षत्याद्यास्तु तिथयः क्रमात् पञ्चदश स्मृताः। दर्शान्ताः कृष्णपक्षे ताः पूर्णिमान्ताश्च शुक्लके"॥ पक्षतिः प्रतिपत् एतत्सर्वं क्रियैव काल इति मतानुसारादुक्तं तदतिरिक्तकालवादिमते तु तत्तत्क्रियोपलक्षितः काल इति। यथा विष्णुपुराणे। "कालस्वरूपं रूपं तद्विष्णोर्मैत्रेय वर्त्तते"। विष्णुधर्मोत्तरे च। "अनादिनिधनः कालो रुद्रः सङ्-

पेक्ष: स्मृत:। कलनात् सर्वभूतानां स काल: परिकीर्त्तित:" ॥ कलनात् लयकरणात्। तथा च विष्णुपुराणम्। "ये समर्था जगत्यस्मिन् सृष्टिसंहारकारिण:। तेऽपि कालेन लीयन्ते कालो हि बलवत्तर:" ॥ न च "अष्टमांशे चतुर्द्दश्या: क्षीणो भवति चन्द्रमा:। अमावास्याष्टमांशे च तत: किल भवेदणु:" इति कात्यायनीयदर्शनाच्चतुर्दश्या: शेषयामे पञ्चदश्या: कलाया: क्षयारम्भादेवं दर्शान्त्ययामे आद्यकलाया उत्पत्तेर्विरोध इति वाच्यं तस्य दर्शश्राद्धोपयुक्तपारिभाषिकक्षयोत्पत्तिपरत्वं न तु तद्वास्तवं स्मृतिज्योति:शास्त्रविरोधात्। तथाहि गोभिल:। "सूर्य्याचन्द्रमसोर्य: पर: सन्निकर्ष: साऽमावस्या" इति पर: सन्निकर्षश्च उपर्य्यधोभावापन्नसमसूत्रपातन्यायेन राश्येकांशावच्छेदेन सहावस्थानरूप:। तथा च अमावास्याघटकताद्दशसहावस्थानयुक्तार्कमण्डलाच्चन्द्रमण्डलस्य। "अर्काद्विनि:सृत: प्राचीं यद् यात्यहरह: शशी। भागैर्द्वादशभिस्तत् स्यात्तिथिश्चान्द्रमसं दिनम्"। इति सूर्य्यसिद्धान्तोक्तेन। "त्रिंशांशकस्तथाराशिभाग इत्यभिधीयते ॥ आदित्याद्विप्रकृष्टस्तु भागं द्वादशकं यदा। चन्द्रमा: स्यात्तदा राम तिथिरित्यभिधीयते" इति विष्णुधर्मोत्तरवचनाद्राशिद्वादशांशद्वादशांशभोगात्मकनिर्गमरूपवियोगेन शुक्लाया: प्रतिपदादि तत्तत्तिथेरुत्पत्तिरेवं "सूर्य्याचन्द्रमसोर्य: परो विप्रकर्ष: सा पौर्णमासी" इति गोभिलोक्तेन पौर्णमासीघटकसप्तमराश्यवस्थानरूपपरमवियोगानन्तरमर्कमण्डलप्रवेशाय चन्द्रमण्डलस्य राशिद्वादशांशद्वादशांशभोगात्मकप्रवेशरूपसन्निकर्षेण कृष्णायास्तत्तत्तिथेश्चोत्पत्ति:।

तत्र तिथिविशेषविहिते कर्मणि उभयदिने तिथिलाभे प्रश्नपूर्वकं निर्णयमाह विष्णुधर्मोत्तरम्। "नक्षत्रं देवदेवेश

तिथिवृद्धिविनिर्गताम् । दृष्टोपवासः कर्त्तव्यः कथं शङ्कर जानता" ॥ शङ्कर उवाच । "सा तिथिस्तदहोरात्रं यस्यामभ्युदितो रविः । तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम् ॥ सा तिथिस्तदहोरात्रं यस्यामस्तमितो रविः । तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम्" इति । "शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः । कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः" । अत्रामावास्यावत्तिथिवृद्धिक्षयाभ्यां न व्यवस्था । किन्तु रवेरुदयास्तमयतिथिसम्बन्धात् शुक्लकृष्णपक्षाभ्यां व्यवस्था । सा च युग्माद्यनाघ्राततिथिकर्मपरा सामान्यविशेषन्यायात् । युग्ममाह गृह्यपरिशिष्टं निगमश्च । "युग्माग्निकृतभूतानि षण्मुन्योर्वसुरन्ध्रयोः । रुद्रेण द्वादशीयुक्ता चतुर्दश्याथ पूर्णिमा ॥ प्रतिपदाप्यमावास्या तिथ्योर्युग्मं महाफलम् । एतद्व्यस्तं महाघोरं हन्ति पुण्यं पुराकृतम्" ॥ द्वितीयातृतीययोश्चतुर्थीपञ्चम्योः षष्ठीसप्तम्योरष्टमीनवम्योरेकादशीद्वादश्योश्चतुर्दशीपौर्णमास्योः प्रतिपदमावास्ययोर्युग्मं मेलनं तत्तत्तिथिमात्रनिमित्तके कर्मणि महाफलम् । एतत् प्रयोजनन्तु तिथिविशेषविहिते कर्मणि तिथिखण्डविशेषनियमनम् । स्वतिथ्या कर्मानिर्वाहे सहायभावे नान्यतिथ्यनुप्रवेशादुपवासाद्याचरणञ्च । अतएव विष्णुधर्मोत्तरे । सा तिथिस्तदहोरात्रमित्यनेन खण्डतिथेरहोरात्रत्वानुकीर्त्तनमहोरात्रसाध्योपवासादिकर्मार्हत्वार्थं तच्च तिथ्यन्तरसहायभावं विना प्रायशो न सम्भवतीति । अतः प्रातःकाले तत्तिथ्यलाभे तिथ्यन्तरेऽप्युपवाससङ्कल्पः । अहोरात्राभोजनरूपस्य तस्य प्रातरारम्भार्हत्वात् । संवत्सरप्रदीपेऽपि "प्रातःसन्ध्यान्ततः कृत्वा सङ्कल्पं बुध आचरेत्" । इत्युक्तम् अत्रेदं वीजं कर्मणस्तावदपूर्वजनकत्वेन विधेयत्वेन च प्राधान्यं तिथ्यादेस्तु

गुणत्वेन क्वचिदुपलक्षणत्वं तदाह गर्गः। "तिथि नक्षत्र-वारादि साधनं पुण्यपापयोः। प्रधानगुणभावेन स्वातन्त्र्येण न ते क्षमाः"। प्रधानस्य विधेयकर्म्मणो गुणभावेनाङ्गत्वेन तदुक्तं "कर्म्मासन्निहितं नैव बुद्धौ विपरिवर्त्तते शब्दात्तु तदुपस्थानमुपादेये गुणो भवेत्"। प्रमाणान्तरासन्निहितं कर्म बुद्धौ प्रथमं न विषयीभवति प्राथमिकशब्दादेव तस्य कर्मण उपस्थितिरिति उपादेये स्वविधेये कर्मणि पूजादौ चन्द्रादिक्रियात्वेन तदवच्छिन्नकालत्वेन वा शुचि तत्कालजीविनः कर्माधिकारात्तस्मिन् प्रमाणान्तरलभ्यत्वेनाविधेयत्वात् तिथ्यादिर्गुण इति। अतस्तत्तिथिं विनापि प्रातरेव सङ्कल्पः न तु तत्तिथ्यनुरोधादन्यत्रेति। एवञ्च मासपक्षतिथीनाञ्चेत्याद्यनुरोधेन प्रातः-सङ्कल्पयेदित्यनुरोधेन च अन्यतिथिकर्म्मणोऽन्यतिथ्यारम्भेऽमुकतिथावारभ्यामुकं कर्म्म कर्त्तव्यमिति वक्तव्यम्। आरम्भ एव तत्तिथेरनुप्रवेशान्न दोषः। एतदशस्तं युग्मविपरीतं प्रतिपद्द्वितीययोः तृतीयाचतुर्थ्योरित्याद्योर्मेलनं महाघोरं महापापजनकम्। अत्रापवादो वक्ष्यते अतः "पूर्वाह्णो वै देवानां मध्यंदिनं मनुष्याणामपराह्णः पितॄणाम्।" इत्यादि श्रुत्याद्यनुरोधेनोभयदिने कर्म्मयोग्यप्रशस्तकाले द्वितीयालाभे तृतीयायुतैव द्वितीया ग्राह्या न प्रतिपद्युता तृतीयापि द्वितीयायुतैव न चतुर्थीयुता एवमन्यत्र नत्वेकदिन एव कर्म्मयोग्यप्रशस्तकाललाभेऽपि युग्माद्यादरः। अतएव, "कर्म्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः। तया कर्म्माणि कुर्वीत ह्रासवृद्धी न कारणम्"॥ इति वृद्धयाज्ञवल्कीयेन सन्देहनिरासात् सन्देहविषय एव युग्मादिवचनप्रवृत्तेः प्रधानस्य कर्म्मणो बोधकेन पूर्वाह्णादिशास्त्रेण गुणस्य तिथ्यादेर्नियामकस्य युग्मादिशास्त्रस्य जेतव्यत्वाच्च। व्यस्ततिथिनिन्दार्थवादोऽपि सन्देह-

विषयनिर्णयपर एव विधिशेषत्वात्तस्य। एवञ्च पूर्वदिने पूर्वाह्ने युग्मसम्बन्धिपरतिथेरप्राप्तौ परदिने च तत्प्राप्तौ तत्तिथिविहितपूजादेः पूर्वाह्नानुरोधात् परदिनकर्त्तव्यत्वं प्रतीयते। नतु युग्मानुरोधात् पूर्वदिने। अत्र च। "पञ्चमी सप्तमी चैव दशमी च त्रयोदशी। प्रतिपन्नवमी चैव कर्त्तव्या सम्मुखी तिथिः"॥ इति पैठीनसिवचनस्य तु। "साम्मुख्यं नाम सायाह्नव्यापिनी दृश्यते यदा"। इति स्कन्दपुराणेन सायाह्नव्यापिनी तिथेः साम्मुख्यविधानेन पूजादावनवकाशादुपवासपरत्वम्। एवं, "त्रिसन्ध्यव्यापिनी यातु सैव पूज्या सदा तिथिः। न तत्र युग्मादरणमन्यत्र हरिवासरात्"॥ इति पाराशरीयेण त्रिसन्ध्यव्यापित्वेन नियमाभिधानं तदुपवादकमिति सायाह्नव्यापित्वमपि मुहूर्त्तान्यूनत्वेन ज्ञेयम्। "व्रतोपवासस्नानादौ घटिकैका यदा भवेत्। सा तिथिः सकला ज्ञेया पित्रर्थे चापराह्णिकी"॥ इति देवलवचनात्। नन्वहोरात्रसाध्योपवासादौ कुतो न रात्रियुग्मग्रहणं मैवं तत्रापि कर्मार्थं दिवा तदङ्गस्नानदेवतापूजादीनां कर्मणां कर्त्तव्यत्वाद्रात्रौ च तन्निषेधात् दिवायुग्मस्यैव ग्रहणमिति तिथिविवेकः। अतएव जावालः। "अहःसु तिथयः पुण्याः कर्मानुष्ठानतो दिवा। नक्तादि व्रतयोगे तु रात्रियोगो विशिष्यते"॥ दिवाकर्मानुष्ठाने कर्त्तव्ये अहःसु तिथयः पुण्याः तिथ्यन्तरसंयोगात् पुण्या अतः कर्मानुष्ठाने ता एव ग्राह्याः। अन्यथाहर्विहिते कर्मण्यहर्विधानमनर्थकं स्यात्। नक्तादिव्रतयोगेत्विति निशासाध्यकर्मोपलक्षणम् अत्र रात्रियोगो विशिष्यते रात्रौ तिथ्यन्तरसंयोगो विशिष्यत इत्यर्थः। वस्तुतस्तु पञ्चमीसप्तमी चैव इत्यादिना विशेषतः सायाह्नव्यापिनी तिथेर्ग्रहणादुपवासेऽपि न रात्रियुग्मादरः अन्यथा तदभिधान मन-

र्थकं स्यात् । एतच्च जयन्ती शिवरात्र्यादिविशेषेतरपरम् । यद्यपि "स्नानं दानं जपःश्राद्धमनन्तं राहुदर्शने । आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्जयेत्" ॥ इति पर्य्युदस्तेतरकालोऽपि कर्मयोग्यस्तथापि, "पूर्वाह्णो वै देवानां मध्यं दिनं मनुष्याणामपराह्णः पितॄणाम्" । इति श्रुत्युक्तकाललाभे स एव नियामकः प्रशस्तत्वात् । अतएव "ययास्तं सविता याति पितरस्तामुपासते । तिथिन्तेभ्योऽपराह्णो हि स्वयं दत्तः स्वयम्भुवा" ॥ इति गृह्यपरिशिष्टीयेन अस्तगामिन्यास्तिथेः प्रायेणापराह्णसम्बन्धेनापराह्णो हेतुतया निर्दिष्टो नतु पर्य्युदस्तेतरकालः प्रशस्तकालालाभे तु सामान्यकालमादाय युग्मादिना व्यवस्था क्वचित् विशेषवचनादेव रात्रियुग्मादरः यथा । "मध्याह्नव्यापिनी ग्राह्या एकभक्ते सदा तिथिः । नक्तादिव्रतयोगे तु रात्रियोगी विशिष्यते" ॥ अत्र युग्मेतर कृष्णपक्षप्रतिपदुभयपक्षदशमी त्रयोदशी कृष्णचतुर्दशी द्वैधे तु प्रागुक्तशुक्लपक्षे तिथिर्ग्राह्येत्यादिना वक्ष्यमाण प्रतिपत् सद्वितीया स्यादित्यादिवचनाद्व्यवस्था । तिथेः पूज्यकालापेक्षा विधेयकर्मण्येव निषिद्धे कर्मणि तु तत्तत्तिथिमात्रापेक्षा । न तत्र पूज्यकालमात्रापेक्षा । तदाह कालमाधवीये वृद्धगार्ग्यः । "निमित्तं कालमादाय वृत्तिर्विधिनिषेधयोः । विधिः पूज्यतिथौ तत्र निषेधः कालमात्रके ॥ तिथीनां पूज्यता नाम कर्मानुष्ठानतो मता । निषेधस्तु निवृत्त्यात्मा कालमात्रमपेक्षते ॥" एतद्वचनद्वयं कलञ्जाधिकरणन्यायमूलमिति विवृतमेकादशीतत्त्वे । कर्मानुष्ठानतः कर्मानुष्ठाने वृत्तिः पालनम् । गार्ग्यवचनोक्तनिमित्तमित्यत्र विधिनिषेधयोरनुष्ठानाननुष्ठानरूपपालने कालस्य निमित्तत्वेन अभिधानात् । "अतःकालं प्रवक्ष्यामि निमित्तं कर्मणामिह" । इति भविष्यपुराणाच्च ।

आवश्यकपर्वादिक्रियमाणस्य नित्यनैमित्तिकत्वम् । व्यक्तमाह मार्कण्डेय पुराणम् । "नित्यं नैमित्तिकं ज्ञेयं पर्वश्राद्धादि पण्डितैः" इति एवञ्च अशौचान्तात् द्वितीयेऽह्नीत्यादिकस्य कालविशेषस्य निमित्तत्वेनोल्लेखः सङ्गच्छते । "मासपक्ष-तिथीनाञ्च निमित्तानाञ्च सर्वशः । उल्लेखनमकुर्वाणो न तस्य फलभाग्भवेत् । इति ब्रह्माण्डभविष्यपुराणोक्तेः । निमित्तानामुत्पत्तिविधिसमभिव्याहृतनियतानां न तु प्राश-स्त्येनोक्तानाम् अत्र चकारद्वयश्रुतेर्मासादीनां पृथक्निमि-त्तानाञ्चोल्लेखः । न तु मासपक्षतिथीनां निमित्तीभूता-नामेव ।

अत्र च वैदिकक्रियानिमित्तस्य कालविशेषस्य शुचितत्-काल जीवित्वेनाधिकारिविशेषणीभूतस्यान्ते या सप्तमी सा नाधिकरणे यो जटाभिः स भुङ्क्ते इतिवत् कालस्य विशेषणत्वेन तृतीयाप्राप्तेः किन्तु कालभावयोः सप्तमीत्यनेन तद्वाधिका पुनः सप्तमी विधीयते शरदि पुष्प्यन्ति सप्तच्छदा इतिवत् । अतः कर्तृविशेषणीभूतस्यापि कालस्य वैदिकक्रियाया निमित्त-तयोल्लेखः क्रियैव काल इति मतेतु सुतरां नाधिकरणता सूर्य्या-दिक्रियाया कर्त्तव्यस्य कर्मणो अधिकरणतानुपपत्तेरिति पूर्वा-ह्लादेस्तु प्रशस्तत्वेन निमित्ततया नोल्लेख इति । युग्मादरस्तु दैवकृत्य एव न पितृकृत्ये । तथा च व्यासनिगमौ "द्विती-यादिकयुग्मानां पूज्यतानियमादिषु । एकोद्दिष्टादिवृद्धादौ ह्रासवृद्धादिदेषणा" ॥ इति एकोद्दिष्टादिवृद्धादौ एको-द्दिष्टादिश्राद्धनिमित्तभूत तिथिविशेषस्य वृद्धादौ वृद्धादावित्य-त्रादिशब्दात् क्षयस्तम्भितत्वे ग्राह्ये तथा सति श्राद्धकालस्य सन्देहे ह्रासवृद्धादिदेषणा ह्रासवृद्धादिविधायको नियामक इति यावत् । अत्र वृद्धिह्रासौ चन्द्रस्य ताभ्यां शुक्लकृष्णपक्षौ

लभ्येते। "शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः। कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः" ॥ इति विष्णुधर्मोत्तरैकवाक्यत्वात्। तेन तिथिद्वैधे आपराह्णिकेतरपितृकृत्ये शुक्लकृष्णपक्षयो रवेरुदयास्ताभ्यां व्यवस्था। आपराह्णिके तु सपिण्डीकरणादौ ह्रासवृद्ध्यादौत्यादिशब्दात् प्रागुक्त ययास्तमित्यादिना व्यवस्था। एतद्विषय एव कालमाधवीयधृतं सुमन्तु वचनम्। "द्व्यह्नन्तु व्यापिनी चेत् स्यामृताहस्य तु या तिथिः। पूर्वस्यां निर्वपेत् पिण्डमित्याङ्गिरसभाषितम्" ॥ तिथिविवेकेऽपि। पितृकृत्ये च पूर्वाह्ने मध्याह्नविहिते संशये विष्णुधर्मोत्तरवचनात् शुक्लपक्षकृष्णपक्षभेदेन व्यवस्था। एवञ्च प्रागुक्तविष्णुधर्मोत्तरवचने उपवासश्च कर्त्तव्यः कथमित्यत्रोपवासपदमपराह्णविहितेतरपितृकृत्यदैवकृत्योपलक्षकम् एतच्च प्रत्युत्तरवचने उपवासमित्यनभिधाय कर्म्ममात्रनिर्द्देशात् कर्म्माणीति बहुवचननिर्द्देशाच्चावगम्यते। अपराह्णविहितन्तु ययास्तं सविता यातीत्यस्य विषयो हेतुवन्निगदस्वरसादित्युक्तम्। एतच्च उभयदिनापराह्णलाभे ज्ञेयम्। यत्र चोभयदिनेऽपि न तल्लाभस्तत्र दर्शेतरतिथिषु। "अपराह्णे तु संप्राप्ते अभिजिद्रौहिणोदये। यदत्र दीयते जन्तोस्तदक्षयमुदाहृतम्" ॥ इति मत्स्यपुराणवचनादपरदिने गौणापराह्णे श्राद्धम्। अभिजिदष्टमघटिका रौहिणं नवमघटिका मुख्यापराह्णस्तु पञ्चधाविभक्तदिनचतुर्थांशो यथा "प्रातःकालो मुहूर्त्तां स्त्रीन् सङ्गवस्तावदेव तु। मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्णस्ततः परम् ॥ सायाह्नस्त्रिमुहूर्त्तः स्यात् श्राद्धं तत्र न कारयेत्। राक्षसी नाम सा वेला गर्हिता सर्वकर्म्मसु" ॥

ननु सपिण्डीकरणस्यापराह्णिकत्वे किं मानमितिचेदप-

राद्धे तु पैत्वकमित्युत्सर्गवचनमेव मानम्। किञ्च। "यद्यप्यदन्तकः पूषा पैष्टमत्ति सदा चरुम्। अग्नीन्द्रेश्वरसामान्यात्तण्डुलोऽत्र विधीयते"॥ इति छन्दोगपरिशिष्टे यथा बहूनामनुरोधात्तण्डुलचरुनैकानुरोधात् पैष्टचरुः 'विरुद्धधर्मसमवाये भूयसां स्यात् सधर्मकत्वम्' इति जैमिनिसूत्राच्च तद्वदत्रापि बहुदेवताकपार्वणानुरोधादेकोद्दिष्टकालबाध इति। एवं संवत्सरमधिकृत्य। "सपिण्डीकरणं तस्मिन् काले राजेन्द्र तच्छृणु। एकोद्दिष्टविधानेन कार्य्यं तदपि पार्थिव"॥ इति विष्णुपुराणीयमेकोद्दिष्टांशे तदितिकर्त्तव्यतापरं नतु तत्कालपरं तथाच परिशिष्टप्रकाशधृतम्। "श्राद्धद्वयमुपक्रम्य कुर्वीत सहपिण्डनम्। तयोः पार्वणवत् पूर्वमेकोद्दिष्टमथापरम्"॥ इति शङ्खवचनान्तरं यत्र च प्रथमषण्मासाभ्यन्तरे मलमासपातेऽपि षष्ठमासिकपूर्वतिथिरेव प्रथमषाण्मासिकस्य कालः एकाहन्यूनषण्मासे तस्य विधानात्। द्वितीयस्य तु त्रयोदशमासिकपूर्वतिथिः एकाहन्यूनसंवत्सरे विधानात् यथा छन्दोगपरिशिष्टम्। "एकाहेन तु षण्मासा यदा स्युरपि वा त्रिभिः। न्यूनाः संवत्सरश्चैव स्यातां षाण्मासिके तदा"॥ संवत्सरश्च त्रयोदशभिरपि मासैर्भवति। तथाच श्रुतिः। द्वादशमासाः संवत्सरः क्वचित्त्रयोदशमासाः संवत्सरः इति। अत्र कालमाधवीयधृतेन। "षाण्मासिकाब्दिके श्राद्धे स्यातां पूर्वेद्युरेव ते। मासिकानि स्वकीये तु दिवसे द्वादशेऽपि च"॥ इति पैठीनसिवचनैकवाक्यत्वात्। एकाहन्यूनपदेन मृततिथिपूर्वतिथेर्ग्रहणम्। एतच्च पूर्वमृततिथिं विहाय अपरमृततिथिमादाय मासवर्षगणनया सिद्धम्। एतेन पूर्वमृततिथिमादाय मासवर्षगणनया मृततिथेः पूर्वतिथिं विहाय तत् पूर्वदिने मैथिलानां यत् षाण्मासिकद्वयकरणं तद्धेयमेव। अत्र

स्यातां षाण्मासिके तदा इत्यत्र । "द्वादशप्रतिमास्यानि आद्यं षाण्मासिके तथा । सपिण्डीकरणञ्चैव इत्येतत् श्राद्धषोड़शम्"॥ इति छन्दोगपरिशिष्टीयगणनायामपि षाण्मासिके इत्युपादानात् प्रथमद्वितीयषाण्मासिकत्वेनैवोल्लेखः नतु न्यूनषाण्मासिकत्वेन न्यूनसांवत्सरिकत्वेनेति । एवञ्च द्वितीयषाण्मासिकस्य पैठीनसिना यदाब्दिकत्वमुक्तं तच्च । "आब्दिके कृच्छ्रपादः स्यादेकाहः पुनराब्दिके"। इति शङ्खोक्तप्रायश्चित्तविशेषज्ञापनार्थं तत्परदिनकर्त्तव्यप्रेतश्राद्धस्य पुनराब्दिकत्वार्थञ्च अतएव "पूर्वेद्युराब्दिकं श्राद्धं परेद्युः पुनराब्दिकम्"। इति शङ्खवचनान्तरम् एतेन द्वितीयाब्दीय प्राप्तपितृत्वसम्प्रदानकश्राद्धान्नभोजनेऽपि शूलपाण्युक्तप्रायश्चित्तं हेयमिति । नन्वेवं परत्र सप्तमे मासि क्रियमाणस्य कथं षाण्मासिकत्वमितिचेत् भाक्तम् । उत्तरषण्मासे मलमासपातेऽपि तथात्वस्यावश्यकत्वात् । अथ यत्रापकृष्ट सपिण्डनं कृतं तत्र पश्चात् वृद्ध्यप्राप्तितौ का गतिरितिचेत् यथा अपकृष्ट सपिण्डनजन्यापूर्वं पूर्णसंवत्सरकालं प्राप्य पितृत्वप्रापकम् । "कृते सपिण्डीकरणे नरः संवत्सरात्परम् । प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यते" ॥ इति विष्णुधर्मोत्तरीयात्तथा वृद्ध्यारम्भकालेऽपि कल्प्यते । "अर्वाक् संवत्सराद्वृद्धौ पूर्णसंवत्सरेऽपि वा । ये सपिण्डीकृताः प्रेता न तेषान्तु पृथक् क्रिया" ॥ इति शातातपीय पूर्णसंवत्सरवृद्ध्यारम्भकालयोस्तुल्यत्वाभिधानात् यत्र तु "यदहर्वा वृद्धिरापद्येत" इति गोभिलसूत्रेण अपकर्षो विधीयते तत्र "प्रागावर्त्तनादह्नः कालं विद्यात्" इति गोभिलसूत्रान्तरेण चूडादिरूपवृद्ध्योर्मध्याह्नयान्तर्विधानात् सपिण्डीकरणस्य अपराह्णे विधानात्तयोरबाधायासन्नपूर्वदिने अपकर्षः । एवञ्च शुद्धितत्त्वलिखितस्यमन्त्रकोपाख्यानवद्वृद्धिं

निश्चित्य कृतं सपिण्डनं तदानीं विघ्नेन वृद्धग्रभावेऽपि वृद्धारम्भकालान्तरं पूर्णसंवत्सरं वा प्राप्य तदेव पितृत्वप्रापकमिति न सपिण्डनान्तरम्। अत्र "श्वः कर्त्तास्मीति निश्चित्य दाता विप्रान्निमन्त्रयेत्"। इतिवन्निश्चित्येति उत्कटकोटिकसम्भावनोपलक्षणं भविष्यन्निमित्तस्य कर्म्मणः प्रत्यूहार्हत्वात्। एवञ्च वृद्धिश्राद्धं यदर्थं कृतं तत्कर्म्म चेत् विघ्नात् तद्दिने न क्रियते तदा दिनान्तरे तत् कर्म्मणि क्रियमाणे तदङ्गत्वेन पुनर्वृद्धिश्राद्धं कर्त्तव्यमेव। "प्रधानस्याक्रिया यत्र साङ्गं तत् क्रियते पुनः। तदङ्गस्याक्रियायान्तु नावृत्तिर्न च तत् क्रिया"॥ इति छन्दोगपरिशिष्टेन साङ्गकरणाभिधानात् हेमाद्रिधृतम्। "पूर्णे संवत्सरे श्राद्धं षोड़शं परिकीर्त्तितम्। तेनैव च सपिण्डत्वं तेनैवाब्दिकमिष्यते"॥ अत्र पूर्णसंवत्सरक्रियमाणश्राद्धाद् यथोभयनिर्वाहस्तथापकृष्टश्राद्धादप्युभयनिर्वाहान्न पूर्णसंवत्सरे आब्दिकान्तरम्। एवञ्च पञ्चदशश्राद्धे कृतेऽप्युन्नेयम्। गोभिलेन पूर्णसंवत्सरे सपिण्डीकरणमभिधाय "अत ऊर्द्ध्वं संवत्सरे संवत्सरे प्रेतायान्नं दद्याद् यस्मिन्नहनि प्रेतः स्यात्" इति सूत्रेणाद्याब्दादूर्द्ध्वं सांवत्सरिकविधानाच्च।

यानितु "मुख्यं श्राद्धं मासि मासि अपर्य्याप्तावृतुं प्रति। द्वादशाहेन वा कुर्य्यादेकाहे द्वादशाथवा"॥ इति मरीचिवचनेन एकाहकर्त्तव्यतया द्वादशमासिकश्राद्धान्युक्तानि तानि शूद्रेणापि आद्यमासिकदिन एव कार्य्याणि नत्वाद्यमासिकं कृत्वा तत्परदिने एकादशमासिकानीति ज्ञेयम्। एवञ्च तेषामपकर्षे तन्मध्य तदन्तकालकर्त्तव्यतया षाण्मासिकद्वयसपिण्डीकरणापकर्षः सिद्ध्यतीति सुधीभिर्भाव्यम्।

सपिण्डीकरणेति कर्त्तव्यतायां ब्रह्मपुराणम्। "चतुर्थ्यश्राद्ध्यपात्रेभ्य एकं वामेन पाणिना। गृहीत्वा दक्षिणेनैव

पाणिना च तिलोदकम् ॥ सम्मार्जयित्वा पृथिवीं ये समाना इति स्मरन् । प्रेतविप्रस्य हस्ते तु चतुर्भागं जलं क्षिपेत् ॥ ततः पितामहादिभ्यस्तन्मन्त्रैश्च पृथक् पृथक् । ये समाना इति द्वाभ्यां तज्जलन्तु समर्पयेत् ॥ अर्घ्यन्तेनैव विधिना प्रेतपात्राच्च पूर्ववत् । तेभ्यश्चार्घ्यं निवेद्यैव पश्चाच्च स्वयमाचरेत्" ॥ एकं प्रेतपात्रं वामेनानन्तरं दक्षिणेन च गृहीत्वेति सम्बन्धः । ये समाना इति मन्त्रद्वयं पठन् प्रेतपात्रस्थमुत्सृष्टजलं कुशरेखात्रयेण चतुर्द्धा विभज्य भागमेकं प्रेतब्राह्मणहस्ते क्षिपेत् दद्यात् उत्सृष्टजलपिण्डयोः संविभागे मन्त्रस्य करणत्वं व्यक्तमाह शातातपः । "निरूप्य चतुरः पिण्डान् पिण्डदः प्रतिनामतः । ये समाना इति द्वाभ्यामाद्यन्तु विभजेत् त्रिधा । एष एव विधिः पूर्वमर्घ्यपात्रचतुष्टये" ॥ इति ततस्तदनन्तरं तन्मन्त्रैः पितामहादिभेदेन त्रिरावृत्तैर्यादिव्या इति मन्त्रैश्चकारात् पितामहाद्युत्सृष्टवाक्यैश्च तदुत्सृज्य ये समाना इति द्वाभ्यां मन्त्राभ्यामर्घ्यं तज्जलं प्रेतपात्रस्थजलन्तेनैव विधिना प्रत्येकेन पूर्ववच्चतुर्भागरूपं प्रेतपात्रात् समर्पयेत् पितामहादिपात्रेषु मिश्रयेत् । तेभ्यः पितामहादिभ्यस्त्रिभ्यस्तन्मिश्रितपुष्पतिलोदकरूपमर्घ्यं निवेद्य तत्तत् ब्राह्मणहस्ते प्रक्षिप्य पश्चादाचामेदित्यर्थः । तेन प्रेतब्राह्मणहस्ते उत्सृष्टदत्तस्यैवार्घ्यजलस्य तदवशिष्टजलस्य भागत्रयं पितामहाद्युत्सृष्टार्घ्यजलेषु मिश्रीकर्त्तव्यमिति प्रतीयते । अतएव दत्तस्यैव प्रेतपिण्डस्य मिश्रीभाव इति श्राद्धविवेकः । एवञ्च "चत्वारि पात्राणि सतिलगन्धोदकानि त्रीणि पितॄणामेकं प्रेतस्य प्रेतपात्रं पितृपात्रेष्वासिञ्चति" ये समाना इत्यादि गोभिलसूत्रे पाठक्रमदर्शनात् सर्वत्र छन्दोगानां सपिण्डीकरणे प्रेतकर्मकरणं पितृकर्मपूर्वकं किन्त्वर्घ्यदानमात्रे पाठक्रमाच्छाब्दक्रमस्य बलवत्वात्

ब्रह्मपुराणे प्रेतार्घ्यदानानन्तरं ततः पितामहादिभ्य इति श्राद्धक्रमस्याबाधेनार्घ्यपात्रेषु गन्धपुष्पदानपर्य्यन्तं पितृपूर्वकता उत्सर्गे तु प्रेतपूर्वकता। यथाचमने "अक्षिणी नासिके कर्णौ" इति गोभिलसूत्रस्थपाठक्रममुल्लङ्घ्य "अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम्। अङ्गुष्ठानामिकाभ्याञ्च चक्षुःश्रोत्रे पुनः पुनः" ॥ इति दक्षोक्तश्राद्धक्रमो गृह्यत इति अतएव छन्दोगपरिशिष्टेन सूत्रक्रमान्यथात्वं स्पष्टीकृतं यथा "त्रिः प्राश्यापो द्विरुन्मृज्य मुखमेतान्युपस्पृशेत्। आस्यनासाक्षिकर्णांश्च नाभिवक्षः शिरोऽंशकात्" ॥ एतेनानुत्सृष्टजलेन अनुत्सृष्टजलसमन्वयोत्तरोत्सर्गः पितृदयितायामुक्तो निरस्तः। ब्रह्मपुराणे ये समाना इति स्मरणानन्तरं जलप्रक्षेपमात्राभिधानेन पूर्वमुत्सर्गप्रतीतेः एवं संस्रवजलसमन्वयस्तु मैथिलोक्तोऽपि न युक्तः प्रागुक्तवचनेषु समन्वयोत्तरार्घ्यनिवेदनोक्तेः स्वयमाचमेदित्येव पाठः कल्पतरौ तथा दर्शनात् आचमनं कुर्य्यादिति वाचस्पतिमिश्रव्याख्यानाच्च। आचमेदिति ह्रस्वश्छान्दसः आचरेदिति तु लेखकप्रमादपाठः अत्र च शेषमन्नमनुज्ञाप्य सर्वमन्नमेकतोद्धृत्य उच्छिष्टसमीपे दर्भेषु मधुमध्विति अचन्नमीमदन्तेति जपित्वा त्रीं स्त्रीन् पिण्डान् दद्यात्" इति गोभिलसूत्रेण "सर्वस्मात् प्रकृतादन्नात् पिण्डान् मधुतिलान्वितान् द्रव्यशेषेण" इत्यनेन च श्राद्धद्रव्यशेषद्रव्येणैव पार्वणे पिण्डविधानात् तद्विकृतावपि सपिण्डीकरणे तन्नियमात् यद्यपि शेषाभावे पिण्डनिवृत्तिरायाति तथापि यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत्। "यवानामिव गोधूमा व्रीहीणामिव शालयः"। इति छन्दोगपरिशिष्टात् "मुख्यालाभे प्रतिनिधिः शास्त्रार्थः" इति न्यायाच्च मध्वाद्यभावे गुडादिग्रहणवत्। द्रव्यान्तरेणापि पिण्डदानं शेषद्रव्यनियमस्तु तत्सम्भवे द्रव्यान्तरत्यागाय अन्यथा तदङ्गाभावे कर्म्मवैगुण्यं स्यात् "सहपिण्डक्रियायाम्" इति मनूक्तेः पिण्डस्य प्रेतपिण्डेन सहमिश्रीकरणं यत्रेति सपिण्डीकरणसमाख्यासिद्ध्यर्थं सुतरां तत्र तथाचरणं प्रतिपत्तिरूपकर्म्माङ्ग एव प्रतिपाद्याभावे तन्निवृत्तिः "पशुयागे लोहितं निरस्यति शकृन्निरस्यति" इत्यादावुक्ता। अतएव

"यज्ञवास्तुरूपप्रतिपत्तियागेऽपि यज्ञो यस्मिन् वसतीति" यज्ञवास्तु समाख्यानुरोधेनास्तृतकुशविरहेऽपि कुशान्तरप्रतिनिधिर्भट्टनारायणेर्गोभिलभाष्ये उक्तः। "प्राक्स्विष्टिकृत आवाप इति गोभिलसूत्रस्य व्याख्यानेऽपि आउप्यत इत्यावापः प्रधानहोमः स तु स्विष्टिकृद्धोमात् प्राक् न पश्चादित्यर्थः" एवञ्च "मुख्यहोमे त्वकृते यदि चरुर्नष्टो दुष्टो वा भवति तदान्यः पाच्यः मुख्ये कृते चेन्नष्टदुष्टो तदाज्येनैव स्विष्टिकृद्धोम" इति सरला भाष्ये एतेन शेषनाशे पिण्डनिवृत्तिरिति वाचस्पतिमिश्रोक्तं हेयम्। अत्र भविष्यपुराणं "गन्धोदकतिलैर्युक्तं कुर्य्यात् पात्रचतुष्टयम्। अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत्॥ ये समाना इति द्वाभ्यामेतत् ज्ञेयं सपिण्डनम्। नित्येन तुल्यं शेषं स्यादेकोद्दिष्टं स्त्रिया अपि"॥ नित्येनेति नित्यपदमत्रावश्यकपरम्। तेन सपिण्डीकरणस्योभयात्मकत्वात्। शेषमङ्गजातं पार्वणांशे पार्वणतुल्यमेकोद्दिष्टांशे एकोद्दिष्टेन तुल्यं बोध्यम् एकोद्दिष्टमिति एकोद्दिष्टं तद्धर्मग्राहित्वात् सपिण्डीकरणञ्चेत्युभयपरम्। "एतत् सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि" इति याज्ञवल्क्यवचनैकवाक्यत्वात् तेन श्राद्धेषु मध्ये एतत् श्राद्धद्वयमेव स्त्रिया कर्त्तव्यं नत्वाभ्युदयिकश्राद्धादि अत्र च स्त्रिया इति कर्त्तरिकृत्य इति कर्त्तरि षष्ठीति कर्त्तृत्वनियमः। वृद्धिश्राद्धादौ स्त्रीणां भोजनदर्शनान्न भोक्तृत्व नियमः। अत्र च मातुःपत्या सह सपिण्डने श्वशुरार्य्यश्वशुरयोः पिण्डौ कुशेराच्छाद्यौ। तथा च गार्ग्यः। "पतिनैकेन कर्त्तव्यं सपिण्डीकरणं स्त्रियाः। सा गता हि मृतैकत्वं कुशैरन्तयन् पितॄन्॥ श्वशुरस्याग्रतो यस्माच्छिरः प्रच्छादन क्रिया। पुत्रैर्दर्भेण सा कार्य्या मातुरभ्युदयार्थिभिः"॥ अन्तरयन्तीत्यर्थेऽन्तरयन्निति लिङ्गव्यत्ययेन पुंस्त्वमिति हलायुधः। परवचनं गोभिलश्राद्धसूत्रभाष्यकृतापि लिखितम् अतएव प्रव्रजिते पतिते वा पितरि मृतेऽपि न पितामह्यादिभिः सह मातुः सपिण्डीकरणं किन्तु पितामह्यादिभिरेव "स्वेन भर्त्रा सहैवास्याः सपिण्डीकरणं स्त्रियाः। एकत्वं सा गता यस्माच्चरुमन्त्राहुतिव्रतैः। तस्मिन् सति सुताः कुर्य्युः पितामह्या सहैव तु" इति अत्र

तस्मिन् सतीति श्राद्धानर्हं भर्त्तुरुपलक्षणम्। अतएव "तस्यास्त्वेव तु जीवन्त्यां तस्याः श्वश्र्वेति निश्चयः इति लघुहारीतेन श्वश्रूजीवने तस्याः श्वश्र्वेत्युक्तं न तु श्वशुरेणेति क्वचिद्युक्तम् एवं पितामह्यादिभिर्मातुः सपिण्डीकरणे सामगेन "ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधा" इति मन्त्रो न पाठ्यः मन्त्रलिङ्गविरोधादतत्रवाभ्युदयिके मातृपक्षे श्रीदत्तादिभिर्मन्त्रान्तरं लिखितं न ये चात्र त्वेति वस्तुतस्तु आभ्युदयिके छन्दोगानां मातृपक्ष एव नास्तीत्युक्तम्। एवञ्च "अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत्। एतत् सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि" इति याज्ञवल्क्येन पार्वणैकोद्दिष्टविकृतीभूतपुंसपिण्डनातिदेशात्तद्विकृतीभूत श्वश्र्वादिभिः सह स्त्री सपिण्डनेऽपि ये समाना इति मन्त्रद्वयस्य पार्वणोक्त ये चात्र त्वामिति मन्त्राणां लिङ्गार्थासमवेतत्वेऽपि प्रकृत्यर्थसमवेतार्थत्वात् पाठः। एवञ्च "मातामहानामप्येवं श्राद्धं कुर्य्याद्विचक्षणः। मन्त्रोहेण यथा न्यायं शेषाणां मन्त्रवर्जितम्"॥ इत्यनेन शेषाणां यन्मन्त्रवर्जनमुक्तं तत् "शुन्धन्तां पितरः शुन्धन्तां पितामहाः"। इत्यादि प्रकृत्यूहयोग्यमन्त्रवर्जनपरं न तु लिङ्गोहयोग्यमन्त्रवर्जनपरम्। सर्व्वाभावे स्त्रियः कुर्य्युरित्यादिमार्कण्डेयपुराणीयञ्चैतदानुगुण्येन व्याख्यातं शुद्धितत्त्वे श्राद्धतत्त्वे च।

अथ विघ्नपतितमृताहाविदितश्राद्धकालः। लघुहारीतः। "श्राद्धविघ्ने समुत्पन्ने मृताहाविदिते तथा। एकादश्यां प्रकुर्वीत कृष्णपक्षे विशेषतः"॥ अत्र मृताहाज्ञाने यत् श्राद्धं तद्दिनकरणयोग्यं मासिकं सांवत्सरिकञ्च तदेव श्राद्धविघ्नमित्यत्राप्यन्वेति उपस्थितत्वात् न तु अमावास्यादिविहितम् एवञ्चेत् कथं मृताहेतरक्रियमाणानाम् आद्यषाण्मासिकद्वयश्राद्धानां ग्रहणमिति चेत्तदादितदन्तन्यायात्। "यथाक्रमेण पुत्रेण कार्य्या प्रेतक्रिया सदा। पतितापतितावापि एकोद्दिष्टविधानतः"॥ इति जावालवचनात्। "व्युत्क्रमात् प्रेतश्राद्धानि यो नरो धर्ममोहितः। ददाति नरकं याति पितृभिः सह शाश्वतम्"॥ इति देवलवचनाच्च। अन्यथा तेषामकरणे

तदन्तर्भूतश्राद्धानामकरणप्रसङ्गात् । एवञ्च पतितप्रेतश्राद्धं यदि कृष्णैकादश्यां न कृतं तदा परश्राद्धकाले कर्त्तव्यं न तु पतितश्राद्धगौणैकादशीकालानुरोधेन परश्राद्धमुख्यकालबाधः । एतन्न्यायमूलं हेमाद्रिधृत देवलवचनम् । "एकोद्दिष्टे तु सम्प्राप्ते यदि विघ्नः प्रजायते । मासेऽन्यस्मिंस्तिथौ तस्मिंस्तदा दद्यात् प्रयत्नतः" ॥ अत्र मृताहश्राद्धस्य विघ्नेऽपि देयत्वावधारणात् ऋष्यशृङ्गवचने देयमिति विशेषणं सार्थकं तद्यथा—"देये पितॄणां श्राद्धे तु अशौचं जायते यदि । तदशौचे व्यतीते तु तेषां श्राद्धं विधीयते ॥ शुचीभूतेन दातव्यं या तिथिः प्रतिपद्यते । सा तिथिस्तस्य कर्त्तव्या न त्वन्या वै कदाचन" ॥ देये विघ्नेऽप्यवश्यं देये अत्र कृष्णैकादशी प्रतीक्षणीया नवेत्यत्राशुचीभूतेनेत्यादि दातव्यमित्यत्र शयनीयवत् श्राद्धं दातुमर्हत्यस्मिन् काल इति कृत्य युटोऽन्यत्रापि चेत्यनेनार्हतावित्यधिकृत्य शकि च कृत्या इत्यनेन चार्हणाधिकरणे कृत्यप्रत्ययः । अन्यथा पूर्ववचनपरार्द्धेन पौनरुक्त्यापत्तेः । ततश्च दातव्यं श्राद्धपूज्यकाल मध्याह्नादिकं प्राप्य या तिथिः शुचीभूतेन प्राप्यते सा तिथिस्तस्य श्राद्धस्य कर्त्तव्या करणार्हा न त्वन्या कृष्णैकादशी अशौचविघ्ने प्रतीक्षणीया । ततः शुचीभूताव्यवहितदिवसीयश्राद्धप्रशस्तकाल प्राप्ततिथिखण्डनियमादप्रशस्तकालेऽपि तत्तिथिखण्ड एव श्राद्धं न शुक्लपक्षीय तद्द्वितीयखण्डे अनुपस्थितेः । एवञ्चाशौचान्ते सङ्कवाभ्यन्तरसमाप्य तिथौ न श्राद्धं किन्तु मध्याह्नादिप्राप्ततिथौ श्राद्धं प्रशस्तकालत्वात् । यथा खण्डतिथौ प्रशस्तकाललाभे तत्काल एव कर्म्म न तु युग्मादिना सामान्यकाललाभ इति । मध्याह्नेऽपि कुतपस्य पूर्वोत्तरभागयोरेकोद्दिष्टारम्भकालत्वेन तत्प्राप्तिरादरणीया यथा कालमाधवीयधृतो व्यासः । "कुतपप्रथमे भागे एकोद्दिष्टमुपक्रमेत् । आवर्त्तनसमीपे वा तत्रैव नियतात्मवान् ॥ आवर्त्तनं पश्चिमदिगवस्थितच्छायायाः पूर्वदिग्गमनारम्भकालः तत्समीपे कुतपशेषदण्डे । गौतमोऽपि "आरभ्य कुतपे श्राद्धं कुर्य्यादारौहिणं बुधः । विधिज्ञो विधिमास्थाय रौहिणन्तु

न लङ्घयेत्" ॥ एतद्वचनं भुजबलभीमे भोजदेवेन धृतम्। बौधायनः "यो यस्य विहितः कालः कर्मणस्तदुपक्रमे। तिथिर्याभिमता सा तु कार्य्या नोपक्रमोज्झिता" ॥ अतएव मदनपारिजाते लोकाक्षिः "गणितात् ज्ञायते कालो यत्र तिष्ठन्ति देवताः। वरमेकाहुतिः काले नाकाले लक्षकोटयः" ॥

अथैवं षोड़शश्राद्धानां यथाक्रमस्यावश्यकत्वे भ्रान्त्या एकस्याप्यकरणे तदादिश्राद्धानां पुनः करणप्रसङ्गः "प्रवृत्तमन्यथा कुर्य्याद् यदि मोहात् कथञ्चन। यतस्तदन्यथा भूतं तत एव समापयेत्" इति छन्दोगपरिशिष्टादिति चेन्न क्रमरूपाङ्गानुरोधेन हि प्रधानीभूतश्राद्धान्तराणामावृत्तेरयुक्तत्वात् किन्तु यत् पतितं तदेव कर्त्तव्यं तुल्यकक्षाणां षोड़शश्राद्धानामेकतरासिद्धौ षोड़शानामपूर्वाणामनुदये प्रधानापूर्वासिद्धेर्दर्शापूर्ववत्। न चाङ्गासिद्धावपि समानमेतदिति वाच्यं तेषां कथं स्यादित्याकाङ्क्षायां पूर्वमुत्पत्स्यमानतया प्रधानविषयोत्पत्तिवाक्यविषयत्वाभावात्। अतएव सर्वशक्त्यधिकरणेऽङ्गासिद्धावपि नित्ये क्वचित् प्रधानसिद्धिरिति सिद्धान्तः प्रधानैकतरासिद्धौ तु प्रधानापूर्वसिद्धिः सर्वतन्त्रविरुद्धैव अतएव छन्दोगपरिशिष्टम्। "समाप्ते यदि जानीयाम्मयैतद्यथा कृतम्। तावदेव पुनः कुर्य्यान्नावृत्तिः सर्वकर्मणः ॥ प्रधानस्याक्रिया यत्र साङ्गं तत्क्रियते पुनः। तदङ्गस्याक्रियायान्तु नावृत्तिर्न च तत्क्रिया" इति नावृत्तिर्न साङ्गप्रधानावृत्तिः। न चेति न च तावन्मात्रस्याङ्गस्य करणं किन्तु तद्वैगुण्यसमाधानार्थं विष्णुस्मरणमाह योगियाज्ञवल्क्यः। "अज्ञानाद् यदि वा मोहात् प्रच्यवेताध्वरेषु यत्। स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः" ॥ एवञ्च प्रवृत्तमिति प्रागुक्तवचनं प्रयोगमध्य एव सुकरत्वेन बोध्यम्। न च सपिण्डनानन्तरं पतितमासिककरणे पुनः सपिण्डीकरणप्रसङ्गः। "सपिण्डीकरणे वृत्ते पृथक्त्वं नोपपद्यते। पृथक्त्वे तु कृते पश्चात् पुनः कार्य्या सपिण्डता" इति लघुहारीतवचनादिति वाच्यम्। तद्वचनस्य प्राप्तपितृलोकप्रेतस्य शास्त्रोल्लङ्घनपूर्वक मासिकादिकरणपरत्वात्। तथा च "प्रेतानामिह सर्वेषां ये सम्बन्ध

नियोजिताः। कृतार्थास्ते हि संवृत्ताः सपिण्डीकरणे कृते॥ प्रेतत्वाच्चेह निस्तीर्णाः प्राप्ताः पितृगणान्तु ते। यः सपिण्डीकृतं प्रेतं पृथक् पिण्डे नियोजयेत्। विधिघ्नस्तेन भवति पितृहा चोपजायते"। इति शातातपवचने पितृत्वप्राप्त्यनन्तरं पृथक्करणं निषिद्धम्। अत्र तु षोडशश्राद्धासम्पत्त्या तदसिद्धौ पृथक्करणेऽपि न दोषः छन्दोगपरिशिष्टवचनाच्च तद् यथा "सपिण्डीकरणादूर्द्धं न दद्यात् प्रतिमासिकम्। एकोद्दिष्टविधानेन दद्यादित्याह शौनकः"॥ न दद्यात् प्रतिमासिकमेकोद्दिष्टविधानेनेति सम्बन्धात् दद्यादित्याह शौनक इत्यनेनैकोद्दिष्टस्यैवापकृष्टसपिण्डीकरणादूर्द्धं विकल्पो दर्शितः। स चाप्राप्तप्रेतभावविषय इति श्राद्धविवेकोक्तवत् भ्रमपतितमासिकविषयोऽपीति। प्रागुक्त लघुहारीतवचने विशेषत इत्यमावस्यापेक्षया तस्या अपि विघ्ने विधानात्। यथा हेमाद्रिधृतं षट्त्रिंशन्मतं "मासिके चाब्दिके त्वह्नि संप्राप्ते मृतसूतके। वदन्ति शुद्धौ तत्कार्य्यं दर्शे चापि विचक्षणाः"॥ राजमार्त्तण्डे "श्राद्धविघ्ने समुत्पन्ने अन्तरामृतसूतके। एकादश्यां प्रकुर्वीत कृष्णपक्षे विशेषतः॥ श्राद्धविघ्ने समुत्पन्ने मृतस्याविदिते दिने। अमावास्यां प्रकुर्वीत वदन्त्येके मनीषिणः"॥ अत्र मृतसूतकोपादानादृष्यशृङ्गवचनेऽशौचपदमेतत्परम्। यत्त्वन्तरामृतसूतकेऽपि एकादश्यां श्राद्धविधानं तन्न त्वन्या वै कदाचन इति ऋष्यशृङ्गवचनविरोधादशौचान्तदिने मलमासादिरूपविघ्नान्तरेण तदकरणे बोध्यम्। अतएव श्राद्धविवेके अपाटवाद्यशौचाभ्यामपि पतितमेकोद्दिष्टमेकादश्यामशौचान्ते च मलमासे न कर्त्तव्यं किन्तु मलमासाव्याप्तकृष्णैकादश्यामेवेत्युक्तम्। यत्तु "जातकर्मणि यत्श्राद्धं नव श्राद्धं तथैव च। प्रतिसंवत्सरं श्राद्धं मलमासेऽपि तत् स्मृतम्। प्रतिसंवत्सरं श्राद्धमशौचात् पतितञ्च यत्॥ मलमासेऽपि कर्त्तव्यमिति भागुरिभाषितम्"॥ इति ज्योतिर्वचनद्वयं तत्र पूर्ववचनशेषार्द्धस्य "असंक्रान्तेऽपि कर्त्तव्यमाब्दिकं प्रथमं द्विजैः" इति लघुहारीतवचनैकवाक्यतया अन्त्याधिमासविषयकत्वात् "मलमास मृतानाञ्च श्राद्धं यत्प्रतिवत्सरम्। मल-

मासेऽपि कर्त्तव्यं नान्येषान्तु कदाचन" इति कालमाधवीय-धृतपैठीनसिवचनैकवाक्यतया मलमासमृतविषयकत्वाच्च न दोषः परवचनेनापि तदुभयश्राद्धस्याशौचपतितस्य मलमासा-भ्यन्तरे कर्त्तव्यतोक्ता न तु तद्भिन्नस्यानुपस्थितस्य राजमार्त्त-ण्डेन एकादश्यां कर्त्तव्यतोक्तेः। प्रचेताः "अविज्ञाते मृते अमावास्यायां श्रवणदिवसे वा" इत्यत्रामावास्यायामपि मृता-हाविदितश्राद्धविधानेनैकादश्यां प्रकुर्वीत कृष्णपक्षे विशेषत इत्यमावस्यापेक्षयैवोपपत्तौ विशेषत इति श्रवणात् मैथिलोक्तं शुक्लैकादश्यां तत्करणं न युक्तं एकादशीमात्रे प्रकुर्वीत कृष्णपक्षे विशेषतः कुर्वीतेति वाक्यभेदापत्तेः। अस्मन्मते तु कृष्णपक्षे एकादश्याममावास्यापेक्षया विशेषतः कुर्वीतेत्येकं वाक्यं श्रवण दिवस इति मरणस्येति शेषः मृतशब्दोऽत्र मृताहपरोऽनिश्चित मृतस्यौर्द्ध्वदेहिकाभावादिति श्राद्धविवेकः। मृताहनीत्येव सूत्रे पाठो मैथिलपाश्चात्यदाक्षिणात्यानाम्। अत्रामावास्या-यामिति गमनमाससम्बन्धिन्यां "प्रवासवासरे ज्ञेयं तन्मासेन्दु-क्षयेऽथवा"। इति स्मरणादिति मिताक्षरा। एतच्च मृतदिन-मासयोरज्ञाने वक्ष्यमाणबृहस्पतिवचनात्। मृतमासे ज्ञाते मरणदिनाज्ञाने तु तदीयामावास्यायाम्। तथा च हेमाद्रि-कालादर्शनिर्णयामृत नव्यवर्द्धमानधृतानि वचनानि। "बृह-स्पतिः। न ज्ञायते मृताहश्चेत् प्रोषिते संस्थिते सति। मास-श्चेत् प्रतिविज्ञातस्तद्दर्शे स्यान्मृताहनि"॥ मृताहनीत्यत्र यत् कर्त्तव्यमिति शेषः प्रोषित इत्यज्ञानकारणोपलक्षणं मासाज्ञाने तिथिज्ञाने तु स एव "यदि मासो न विज्ञातो विज्ञातं दिनमेव हि। तदा मार्गशिरे मासि माघे वा तद्दिनं भवेत्"॥ काला-दर्श निर्णयामृतयोर्मार्गशिर इत्यत्र आषाढ़क इति पाठः। भविष्यपुराणम्। "दिनमेव तु जानाति मासं नैव तु यो नरः। मार्गशीर्षे तथा भाद्रे माघे वा तद्दिनं भवेत्"॥ एषु मृताहा-वधारणतान्निध्यान्मासविशेषो ग्राह्यः। मृतदिनमासयोरज्ञाने तु बृहस्पतिः "दिनमासौ न विज्ञातौ मरणस्य यदा पुनः। प्रस्थान दिनमासौ तु ग्राह्यौ पूर्वोक्तया दिशा" पूर्वोक्तया दिशेति यथा मरण दिनमासज्ञाने तद्ग्रहणं तयोरेकतराज्ञाने

यथा व्यवस्थापितं तथाव्याप्नोति तेन प्रस्थानदिनमासज्ञाने तद्ग्रहणं प्रस्थानमासमात्रज्ञाने तदीयामावास्या ग्राह्या। प्रस्थानतिथिमात्रज्ञाने तु मार्गशीर्षादौ तत्तत्तिथिर्ग्राह्येति। सन्देहे तु आह यमः। "गतस्य न भवेत् वार्त्ता यावत् द्वादश-वार्षिकी। प्रेतावधारणं तस्य कर्त्तव्यं सुतबान्धवैः। यन्मासि यदहर्यातस्तन्मासि तदहःक्रिया। दिनाज्ञाने कुहूस्तस्य आषाढ़स्याथवा कुहूः"। एवञ्च मरण प्रस्थानदिनमासाज्ञाने श्रवणदिवसस्य विषयः। प्रभासखण्डम्। "मृतस्याह्नो न जानाति मासं वापि कथञ्चन। तेन कार्य्यममावस्यां श्राद्धं माघेऽथ मार्गके" कथञ्चनेति मरणप्रस्थान दिनमास श्रवणादि रूपेण केनाप्यज्ञाने। अतएव एषां मृततिथ्यादीनां अज्ञा-नेऽपि यस्यान्तिथौ मृतिः श्रूयते तस्यामेव तत्तिथेरपि विस्मरणे तन्मासैकादश्याममावास्यायां वा एकोद्दिष्टं तथा श्रवणमास-स्यापि विस्मरणे न कार्य्यमेकोद्दिष्टं प्रमाणाभावादिति वाच-स्पतिमिश्रोक्तं हेयं श्रवणदिनविस्मरणे तन्मासीयैकादश्यमा-वास्ययोर्ग्रहणं यदुक्तं तदपि प्रमाणशून्यम्। इत्थञ्च सर्व्वत्र तन्मा-सीयकृष्णैकादश्यभाव एव अमावास्या ग्राह्या श्राद्धविन्न इति वचनात्। अन्यथा तद्वचनस्यमृताहाविदित इत्यस्य विषया-नुपपत्तेः। तस्याश्च प्राधान्यं तद्वचने विशेषत इत्यभि-धानात्।

ननु अशौचे तु व्यतीते वै इति श्रवणादशौचान्त इति प्रयोगे वक्तव्यमिति श्राद्धचिन्तामणिः। मैवं यथा मृताहनि तु कर्त्त-व्यमित्यादिना मृताहादेर्निमित्तत्वेऽपि तत्तत्तिथिविशेषस्यैव उल्लेखः न तु मृताहत्वेनैव उल्लेखः यथा वा तत्र श्राद्धे विघ्न-पतिते एकादश्यादिविधानात् एकादश्यादिरूपेणैव उल्लेखः। तथा तत्रापि शुचीभूतेन दातव्यमित्यादिना श्राद्धप्रशस्तकाल प्राप्ततिथिविशेषस्यैव उल्लेखः। न तु अशौचान्तस्यैव उल्लेखः।

अथ जन्मतिथिकृत्यम्। तच्च मलमासे न कर्त्तव्यं चान्द्र-मासीयत्वेन सावकाशत्वात्। न च तस्य सौरमासीयत्वं तथात्वे तन्मासे तत्तिथेः कदाचिदप्राप्तौ तद्वर्षे तत्कृत्यलोपापत्तेः नचे-ष्टापत्तिः प्रतिसंवत्सरं तद्विधानात् यथा ब्रह्मपुराणे गर्गश्च

"सर्वैश्च जन्मदिवसे स्नातैर्मङ्गलपाणिभिः। गुरुदेवाग्निविप्राश्च पूजनीयाः प्रयत्नतः॥ स्वनक्षत्रञ्च पितरौ तथा देवः प्रजापतिः प्रतिसंवत्सरञ्चैव कर्त्तव्यश्च महोत्सवः"। स्नातैस्तिलस्नातैः प्रजापतिर्ब्रह्मा। तथा च तत्तिथिमधिकृत्य "तिलोद्वर्त्ती तिलस्नायी तिलहोमी तिलप्रदः तिलभुक् तिलवापी च षट्तिली नावसीदति"। मङ्गलपाणिभिः अभिप्रेतार्थसिद्धिर्मङ्गलं तद्धेतुतया गोरोचनादिकमपि मङ्गलं तेन गुग्गुल्वादिपाणिभिरित्यर्थः। तथाच कृत्यचिन्तामणौ "गुड़दुग्धतिलानद्यात्जन्मग्रन्थेश्च बन्धनम्। गुग्गुलुं निम्बसिद्धार्थं दूर्वागोरोचनायुतम्। संपूज्य भानुविघ्नेशौ महर्षिं प्रार्थयेदिदम्। चिरजीवी यथा त्वं भो भविष्यामि तथा मुने!। रूपवान् वित्तवांश्चैव श्रिया-युक्तश्च सर्वदा। मार्कण्डेय! महाभाग! सप्तकल्पान्तजीवन! आयुरिष्टार्थ सिद्ध्यर्थमस्माकं वरदो भव"॥ स्वनक्षत्रमिति स्वनक्षत्रं अश्विन्याद्यन्तर्गत जन्मकालीननक्षत्रं नामकरणे तथा दर्शनात् वक्ष्यमाणब्रह्मपुराणोक्तप्रणवादिनमोऽन्तेन नाम्नैव पूजाविधानाच्च तदस्थाने स्वनक्षत्राय नम इत्युल्लेखम्। पूजायामर्घ्यानन्तरं पाद्यमाह मत्स्यपुराणम् "अर्घ्यपाद्यादिकन्तत्र मधुपर्कं प्रयोजयेत्"। पाद्यानन्तरमर्घ्यमाह नरसिंहपुराणम्। "पाद्यं चैव तृतीयया चतुर्थ्यार्घ्यं प्रदापयेत्"। तृतीयया पुरुषसूक्तीयतृतीयया ऋचा उभयक्रमदर्शनादिच्छाविकल्पः इति श्रीदत्तः श्रीपतिव्यवहारनिर्णये "नवाम्बरधरो भूत्वा पूजयेच्च चिरायुषम्"। तथा "द्विभुजं जटिलं सौम्यं सुवृद्धं चिरजीविनम्। मार्कण्डेयं नरो भक्त्या पूजयेत् प्रयतस्तथा॥ ततो दीर्घायुषं व्यासं रामं द्रौणिं कृपं बलिम्। प्रह्लादञ्च हनूमन्तं विभीषणमथार्च्चयेत्"॥ रामोऽत्र परशुरामः चिरजीवित्वाहचर्य्यात् द्रौणिरश्वत्थामा। तथा "स्वनक्षत्रं जन्मतिथिं प्राप्य सम्पूजयेन्नरः। षष्ठीञ्च दधिभक्तेन वर्षे वर्षे पुनः पुनः। योगियाज्ञवल्क्यः। "ध्यायेन्नारायणं नित्यं स्नानादिषु च कर्मसु तद्विष्णोरितिमन्त्रेण स्नायादप्सु पुनः पुनः। गायत्री वैष्णवीह्येषा विष्णोः संस्मरणाय वै"॥ ध्यायेत् स्मरेत्। स च मन्त्रः। "तद्विष्णोः परमं पदं सदा पश्यन्ति

सूरयः दिवीव चक्षुराततम्”। वामनपुराणम्। “सर्वमङ्गल-मङ्गल्यं वरेण्यं वरदं शुभम्। नारायणं नमस्कृत्य सर्वकर्माणि कारयेत्”॥

संकल्पाकरणे निन्दामाह भविष्यपुराणम्। “संकल्पेन विना राजन् यत्किञ्चित् कुरुते नरः। फलञ्चाल्पाल्पकं तस्य धर्मस्यार्द्धक्षयो भवेत्”॥ ब्रह्मपुराणं “प्रणवादिसमायुक्तं नमस्कारान्तकीर्त्तितम्। “स्वनाम सर्वसत्वानां मन्त्र इत्य-भिधीयते। अनेनैव विधानेन गन्धपुष्पं निवेदयेत्”॥ एकै-कस्य प्रकुर्वीत यथोद्दिष्टं क्रमेण तु। गन्धपुष्पमात्रं पञ्चोप-चाराद्यसम्भवे। यथा “मन्त्राच्छतगुणं प्रोक्तं भक्त्या लक्षगुणो-त्तरम्। भक्तिमन्त्रसमेतन्तु कोटिकोटिगुणोत्तरम्॥ सर्वत्र कर्मोपदेशकं दक्षिणादिभिरर्च्चयेत्। तथोपदेष्टारमपि पूज-येच्च ततो गुरुम्॥ न पूज्यते गुरुर्यत्र नरैस्तत्राफला क्रिया” इति मत्स्यपुराणवचनात्। ततः कर्मानन्तरं तिलहोमस्तु पूजितदेवतानामभिः कार्य्यः “एकैकां देवतां राम! समुद्दिश्य यथाविधि। चतुर्थ्यन्तेन धर्मज्ञ! नाम्ना च प्रणवादिना॥ होम-द्रव्यमथैकैकं शतसंख्यन्तु होमयेत्” इति विष्णुधर्मोत्तरदर्श-नात् एवं होमे स्वाहान्तता च मन्त्रस्य। “स्वाहावसाने जुहु-यात् ध्यायन् वै मन्त्रदेवताम्”॥ इति स्मृतेः अशक्तौ तु देवी-पुराणम्। “होमो ग्रहादिपूजायां शतमष्टोत्तरं भवेत्। अष्टा-विंशतिरष्टौ वा यथाशक्ति विधीयते”॥ स्कान्दे। “खण्डनं नखकेशानां मैथुनाध्वानमेव च। आमिषं कलहं हिंसां वर्ष-वृद्धौ विवर्जयेत्”॥ अध्वानम् अध्वगमनं कलहमित्यत्र सङ्गर-मिति क्वचित् पाठः। सङ्गरं युद्धम्। वर्षवृद्धौ जन्मदिने वृद्धमनुः। “मृते जन्मनि संक्रान्तौ श्राद्धे जन्मदिने तथा। अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा”॥ जन्मनि। पुत्रजन्मनि ज्योतिषे। “स्नात्वा जन्मदिने स्त्रियं परिहरन् प्राप्नोत्यभीष्टां श्रियम्। मत्स्यान्मोचयतो द्विजाय ददतोऽप्यायुश्चिरं वर्द्धते”। शक्तून् खादति यस्तु तस्य रिपवो नाशं प्रयान्ति ध्रुवं भुङ्क्ते यस्तु निरामिषं स हि भवेत् जन्मान्तरे पण्डितः। दीपिकायां “जन्मर्क्षयुक्ता यदि जन्ममासे यस्य ध्रुवं जन्मतिथिर्भवेच्च।

भवन्ति तद्दत्सरमेव यावन्नैरुज्यसम्मानसुखानि तस्य ॥ कृतान्त-कुजयोर्वारे यस्य जन्मदिनं भवेत् । धनृत्तयोगसम्प्राप्तौ विघ्नस्तस्य पदे पदे" ॥ कृतान्तकुजयोः शनिमङ्गलयोः । "तस्य सर्वौषधीस्नानं ग्रहविप्रसुरार्च्चनम् । ग्रहानुद्दिश्य होमो वा ग्रहाणां प्रीतिमिच्छता ॥ सौरारयोर्दिने मुक्ता देयानृचे तु काञ्चनम् । मुरामांसी वचा कुष्ठं शैलेयं रजनीद्वयम् ॥ शठीचम्पकमुस्तञ्च सर्वौषधिगणः स्मृतः" ॥ सौराययोः शनि-भौमयोः । रजनीद्वयं हरिद्रादारुहरिद्रे एषां पत्रादीनामपि ग्रहणं कषायावयवग्रहणमाह मत्स्यपुराणम् "एषां पत्राणि साराणि मूलानि कुसुमानि च । एवमादीनि चान्यानि कषायाख्योगणः स्मृतः" ॥ तत्र क्रमः । तिलोद्दर्त्तनं तिल-युक्तजलेन स्नानं नववस्त्रपरिधानं गुग्गुलुनिम्बश्वेतसर्षप-दूर्वागोरोचनात्मकं जन्मग्रन्थिं दक्षिणपाणौ बध्नीयात् । गुरु-देवाग्निविप्राः पूजनीयाः स्वनक्षत्रमपि पूजनीयम् । अत्र च हस्ता स्वातीश्रवणा अक्लीवे मृगशिरो नपुंसि स्यात् । पुंसि पुनर्वसुपुष्यौ मूलं त्वष्टौ स्त्रियः शेषा इत्यनेन लिङ्गनिर्णयः । जन्मनक्षत्रादीनां गोपनमाह विष्णुधर्मोत्तरे । "गोपयेज्जन्म-नक्षत्रं धनसारं गृहे मलम् । प्रभोरप्यवमानञ्च तस्य दुश्च-रितञ्च यत्" ॥ धनसारं धनश्रेष्ठं मलं छिद्रम् । पितरौ प्रजा-पतिः सूर्य्यो गणगतिर्मार्कण्डेयश्च पूजनीयः । "सतिलं गुड़-संयुक्तमञ्जल्यर्द्धमितं पयः । मार्कण्डेयवरं लब्ध्वा पिवाम्यायुष्य-हेतवे" इति गुड़तिलदुग्धपानमन्त्रः । ततः प्रार्थनामन्त्रौ । "चिरजीवी यथा त्वं भो भविष्यामि तथा मुने । रूपवान् वित्तवांश्चैव श्रियायुक्तश्च सर्वदा ॥ मार्कण्डेय महाभाग सप्त-कल्पान्त जीवन । आयुरिष्टार्थसिद्ध्यर्थमस्माकं वरदो भव" ॥ ततो व्यासपरशुरामाश्वत्थामकृपबलिप्रह्लादहनुमद्विभीषणाः पूजनीयाः । षष्ठ्यपि । "त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च । ब्रह्मविष्णुशिवैः सार्द्धं रक्षां कुर्वन्तु तानि मे" ॥ इति मत्स्यपुराणीयं रक्षार्थं पठेत् । पितृमातृपादग्रहणक्रमस्तु विष्णुपुराणादुन्नेयः यथा "कृष्णोऽपि वसुदेवस्य पादौ जग्राह सत्वरः । दैवक्याश्च महाबाहुर्बलदेवसहायवान्" ॥ एवञ्च

"सहस्रन्तु पितुर्माता गौरवेणातिरिच्यते" इति मनुवचने सहस्रं पितृनपेक्ष्य यद्गौरवमुक्तं तत्पोषणरक्षार्थम् अतएव मनुः। "मृते भर्त्तरि पुत्रस्तु वाच्यो मातुररक्षिता"। वाच्यो गर्हणीयः अत्र वैदिकेतरमन्त्रपाठे शूद्रादेरप्यधिकारः वेदमन्त्रवर्जं शूद्रस्य इति छन्दोगाह्निकाचारचिन्तामणिधृतस्मृतौ वेदेति विशेषणात्। एवञ्च पुराणमधिकृत्य "अध्येतव्यं न चान्येन ब्राह्मणं क्षत्रियं विना। श्रोतव्यमिह शूद्रेण नाध्येतव्यं कदाचन" इति भविष्यपुराणवचनं पुराणमन्त्रेतरपरम्। पञ्चयज्ञस्नानश्राद्धेषु पौराणिकमन्त्रोऽपि निषिद्धः। शूद्रमधिकृत्य "नमस्कारेण मन्त्रेण पञ्चयज्ञान् न हापयेत्" इति याज्ञवल्क्येन "ब्रह्मक्षत्रविशामेव मन्त्रवत् स्नानमिष्यते। तूष्णीमेव हि शूद्रस्य सनमस्कारकं मतम्" इति योगियाज्ञवल्क्येन श्राद्धमधिकृत्य "अयमेव विधिः प्रोक्तः शूद्राणां मन्त्रवर्जितः। अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते" इति वराहपुराणेन च नमस्कारेणेति तूष्णीमिति मन्त्रवर्जित इति चाभिधानादेतत्परं वैदिकपरञ्च शूद्राधिकारे गोतमवचनम् "अनुमतोऽस्य नमस्कारो मन्त्र" इति अनुपनीतस्यापि शूद्रसमत्वेन श्राद्धातिरिक्ते वेदपाठनिषेधमाह मनुः। "नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते। शूद्रेण हि समस्तावत् यावद्वेदे न जायते"॥ स्त्रीणामपि वैदिकमन्त्रनिषेधमाह नृसिंहतापनीयम्। "सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्रयोर्नेच्छन्ति सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्रो यदि जानीयात् समृतोऽधो गच्छति इति नेच्छन्तीति पर्य्यन्त' पराशरभाष्येऽपि लिखितम्। जन्मतिथेः प्रागुक्त ब्रह्मपुराणीयत्वात् पौर्णमास्यन्तमासादारः। गृह्यपरिशिष्टम्। "उपाकर्म तथोत्सर्गः प्रसवाहोऽष्टकादयः। मानवृद्धौ पराः कार्य्या वर्जयित्वा तु पैतृकम्"॥ अत्राष्टकासाहचर्य्याज्जन्माष्टम्यां तथा दर्शनाच्च प्रसवाहो जन्मदिनं द्वादशमासाः संवत्सरः क्वचित्त्रयोदशमासाः संवत्सर इति श्रुत्या वर्षे मासवृद्धिरूपा मानवृद्धिरुक्ता सैवात्र ग्राह्या न तु सौरे मासि तिथिद्वयलाभान्मानवृद्धिर्जीमूतवाहनोक्ता ग्राह्या तिथिद्वयलाभस्य मानवृद्धित्वे प्रमाणाभावात्।

मानवृद्धावित्यत्र मासवृद्धाविति हेमाद्रिणा धृतम् । पैतृकं सपिण्डीकरणं मलमासमृतस्य प्रत्याब्दिकञ्च तयोर्मलमासे विधानात् । ज्योतिः पराशरोऽपि । "उपाकर्म तथोत्सर्गः प्रसवाहोऽष्टकादयः । मासवृद्धौ पराः कार्य्या वर्जयित्वा तु पैतृकम्" ।

जन्मतिथेरुभयदिनलाभे तु देवीपुराणम् । "युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया । रवेरुदयमीच्यन्ते न तत्र तिथियुग्मता ॥ पक्षद्वये जन्मतिथिर्यदि स्यात् पूज्या तदा जन्मभसंयुतैव । असङ्गताभेन दिनद्वयेऽपि पूज्या परा या भवतीह यत्नात्" ॥ भं नक्षत्रं परवचनं वृहद्राजमार्त्तण्डेऽपि पूर्वाह्णे तिथि नक्षत्रलाभ एवेदं लक्ष्यते । "नक्षत्रे खण्डिते येन प्राप्तः कालस्तु कर्मणः । नक्षत्रकर्माण्यत्रैव तिथिकर्म तथैव च" इति वृहस्पतिवचनात् । खण्डिते खण्डद्वययुक्ते येन नक्षत्रखण्डेन विहितकालः प्राप्तः नक्षत्रद्वैधे तु वौधायनमार्कण्डेयौ । "तन्नक्षत्रमहोरात्रं यस्मिन्नस्तं गतो रविः । यस्मिन्नुदेति सविता तन्नक्षत्रं दिनं स्मृतम्" पूर्वार्द्धमहोरात्रसाध्योपवासनक्तैकभक्तेषु । तत्रैवोपवसेदृक्षे यन्निशीथादधो भवेत् । "उपवासे यदृक्षं स्यात् तद्धि नक्तैकभक्तयोः" इति स्कन्दपुराणात् निशीथादध इत्यनेन अर्द्धरात्रपूर्वकालत्वेन सूर्य्यास्तमयकालस्यापि लाभात् । "उपोषितव्यं नक्षत्रं येनास्तं याति भास्करः । यत्र वा युज्यते राम ! निशीथे शशिना सह" इति विष्णुधर्मोत्तराच्च उपवासवन्नक्तव्रतादीनामहोरात्रसाध्यता अहोरात्र-साध्यभोजनद्वयस्यैकतर-परित्यागसहितकालविशेषनियामकत्वात् । यस्मिन्नुदेतीति तु दिवसकर्त्तव्यस्नानदानादाविति बोध्यं पितृकार्य्येऽपि शुक्लकृष्णपक्षाभ्यां व्यवस्थामाह वौधायनः । "सा तिथिस्तच्च नक्षत्रं यस्मिन्नभ्युदितो रविः । वर्द्धमानस्य पक्षस्य हीने त्वस्तमयं प्रति" ॥ हीने चन्द्रस्य हीनत्वात् कृष्णपक्षे वर्द्धमानस्य चन्द्रस्य वर्द्धमानत्वेन शुक्लपक्षस्य कालमाधवीयोऽप्येवं भोजराजः "यो जन्ममासे क्षुरकर्म यात्रां कर्णस्य वेधं कुरुते च मोहात् । नूनं स रोगं धनपुत्रनाशं प्राप्नोति मूढो वधबन्धनानि । जातं दिनं दूषयते

वशिष्ठश्चाष्टौ च गर्गो यवनो दशाहम्। जन्माख्यमासं किल भागुरिश्च चूड़े विवाहे क्षुरकर्णवेधे" ॥ एतद्विषयभेदस्तु राजमार्त्तण्डे "उक्तानि प्रतिषिद्धानि पुनः सम्भावितानि च। सापेक्षनिरपेक्षाणि श्रुतिवाक्यानि कोविदैः" ॥ सापेक्षनिरपेक्षाणि समर्थासमर्थविषयकाणि। क्षुरेति क्षुरकर्म राजमार्त्तण्डे। "देवकार्य्ये पितृश्राद्धे रवेरंशपरिक्षये। क्षुरकर्म न कुर्वीत जन्ममासेऽथ जन्मभे" ॥ एवञ्च चूड़ इति चूडाकरणे अधिकदोषाय नार्य्यास्तु जन्ममासे विवाहमाह श्रीपतिव्यवहारसमुच्चये। "स्नानं दानं तपोविद्या सर्वमङ्गल्यवर्द्धनम्। उद्वाहश्च कुमारीणां जन्ममासे प्रशस्यते" ॥ एवं "जन्मोदये जन्मसु तारकासु मासेऽथ वा जन्मनि जन्मभे वा। व्रतेन विप्रो न बहुश्रुतोऽपि विद्याविशेषैः प्रथितः पृथिव्याम्" इति व्यासवचनेन जन्ममासे उपनयननिषेधात्तदङ्गशिखावपनेऽपि न दोषः। उदये लग्ने भे राशौ न बहुश्रुतोऽपि स्वल्पविद्योऽपि। अत्र जन्ममासकृत्याकृत्ये सौरादरो यात्रादिमाहचर्य्यात् व्यवहारोऽपि तथा। प्रतिमासे जन्मनक्षत्रकृत्यमाह विष्णुधर्मोत्तरम्। "जन्मनक्षत्रगे सोमे शिरःस्नानेन यत्नतः। पूजा सोमस्य कर्त्तव्या नक्षत्रस्य तथात्मनः ॥ श्राद्धं कुर्य्यात् प्रयत्नेन वह्निब्राह्मणपूजने। वाहनायुधरत्नाद्यं पूजनीयं प्रयत्नतः। सुराणामर्च्चनं कार्य्यं केशवस्य विशेषतः" ॥

अथ प्रतिपत्। सा च कृष्णा द्वितीयायुता ग्राह्या "प्रतिपत् सद्वितीया स्यात्" इत्यापस्तम्बीयात्। न चैतस्य शुक्लापरत्वं प्रतिपदाप्यमावस्येति शुक्लापरेण सङ्कोचात्। ततश्च शुक्लामावास्यायुता ग्राह्या "त्रिसन्ध्यव्यापित्वे तु सर्वत्र न युग्मादरः" तथा च पराशरः "त्रिसन्ध्यव्यापिनी या तु सैव पूज्या सदा तिथिः। न तत्र युग्मादरणमन्यत्र हरिवासरात्" ॥ कृष्णाप्युपवासे द्वितीयायुता न ग्राह्या। तथा च वृद्धवशिष्ठः। "द्वितीया पञ्चमी वेधाद्दशमी च त्रयोदशी। चतुर्दशीचोपवासे हन्युः पूर्वोत्तरे तिथी" द्वितीयावेधायोगात् प्रतिपत् तृतीये हन्तीत्यर्थः। एवमन्यत्र अत्रोपवासपरेण विशेषविधिनापस्तम्बीय सामान्यस्य सङ्कोचात्। कर्मादौ नवग्रहपूजा-

माह मत्स्यपुराणम्। "नवधान्यमसं कृत्वा ततः कर्म समारभेत्। अन्यथा फलदं पुंसां न काम्यं जायते क्वचित्" ॥ वामनपुराणे। कार्त्तिकशुक्लपक्षमधिकृत्य बलिं प्रति भगवद्वाक्यं "वीरप्रतिपदानाम तव भावी महोत्सवः। अत्र त्वां नरशार्दूल! हृष्टाः पुष्टाः स्वलंकृताः ॥ पुष्पदीपप्रदानेन पूजयिष्यन्ति मानवाः"। तत्र मन्त्रः। "बलिराज! नमस्तुभ्यं विरोचनसुत! प्रभो!। भविष्येन्द्रसुराराते! पूजेयं प्रतिगृह्यताम्" ॥ प्रतिपदा प्रतिपत्तिथ्या अत्र प्रतिपदि। ब्रह्मपुराणे बलिराजेति मन्त्रस्य पूर्वम्। "मन्त्रेणानेन राजेन्द्र! समन्त्री सपुरोहितः" इत्यहं पश्चादपि। "एवं पूजां नृपः कृत्वा रात्रौ जागरणं ततः" इत्युक्तमिति पुनर्ब्रह्मपुराणे। "शङ्करश्च पुरा द्यूतं ससर्ज सुमनोहरम्। कार्त्तिके शुक्लपक्षे तु प्रथमेऽहनि भूपते! ॥ जितश्च शङ्करस्तत्र जयं लेभे च पार्वती। अतोऽर्थाच्छङ्करो दुःखी गौरी नित्यं सुखोषिता॥ तस्माद्द्यूतं प्रकर्त्तव्यं प्रभाते तत्र मानवैः। तस्मिन् द्यूते जयो यस्य तस्य संवत्सरः शुभः ॥ पराजयो विरुद्धस्तु लब्धनाशकरो भवेत्" ॥ द्यूतञ्चाप्राणिभिः क्रीड़नं यथा मनुः। "अप्राणिभिर्यत् क्रियते तल्लोके द्यूतमुच्यते"। तत्तिथिमधिकृत्य भविष्योत्तरे। "यो यो यादृशभावेन तिष्ठत्यस्यां युधिष्ठिर!। हर्षदैन्यादिना तेन तस्य वर्षं प्रयाति हि" ॥ तथा "महापुण्यातिथिरियं बलिराज्यविवर्द्धिनी। स्नानं दानं शतगुणं कार्त्तिकेऽस्यां तिथौ भवेत्" ॥ भविष्ये "रोहिण्या प्रतिपद्युक्ता मार्गे मासि सितेतरा। गङ्गायां यदि लभ्येत सूर्यग्रहशतैः समा" ॥ कल्पतरौ। वामनपुराणं "नन्दासु नाभ्यङ्गमुपाचरेच्च क्षौरञ्च रिक्तासु जयासु मांसं पूर्णासु योषित् परिवर्जनीया भद्रासु सर्वाणि समाचरेच्च"। नन्दादिक्रममाह ज्योतिषे। नन्दा भद्रा जया रिक्ता पूर्णा च प्रतिपदः क्रमात्।

प्रतिपदादिपञ्चदशतिथिषु कुष्माण्डादिपञ्चदशद्रव्यभक्षणे क्रमेण दोषमाह स्मृतिः। "कुष्माण्डे चार्थहानिःस्याद्बृहत्यां न स्मरेद्धरिम्। बहुशत्रुः पटोले स्याद्धनहानिस्तु मूलके ॥ कलङ्की जायते बिल्वे तिर्य्यग्योनिश्च निम्बके। ताले शरीरनाशः स्यात् नारिकेले च मूर्खता। तुम्बी गोमांसतुल्या स्यात्

कलम्बी गोवधात्मिका॥ शिम्बी पापकरी प्रोक्ता पूतिका ब्रह्मघातिका। वार्त्ताकौ सुतहानिः स्यात् चिररोगी च माषके॥ महापापकरं मांसं प्रतिपदादिषु वर्जयेत्"॥ अत्र सप्तम्यामिव तालनिषेधादन्यत्रैतद्भक्षणं प्राप्तमतः "तालं श्वेताञ्च वार्त्ताकीं न खादेद्वैष्णवो नरः"। इत्यनेन तालमपि श्वेतं निषिद्धं साहचर्य्येण नपुंसकलिङ्गेन श्वेतानुषङ्गात्। एवं अलावं वर्त्तुलाकारां वार्त्ताकीं कुन्दसन्निभां इति यदपि "कुसुम्भं नालिकाशाकं वृन्ताकं पौतिकं तथा। भक्षयन् पतितस्तु स्यादपि वेदान्तगो द्विजः" इत्युशनसा सामान्यतोऽभिहितं तत्र नालिका श्वेतकलम्बीति कल्पतरुः। "पूतिका च द्वादश्यामधिकदोषाय शूद्रविषयिका वा वार्त्ताकी वर्त्तुलेति समुद्रकरभाष्यम् अत्रेदमक्षरसबीजं वर्त्तुलाकारामित्यस्यानुषङ्गकल्पनम्। व्याधितस्यौषधक्रियायामपवादमाह सुमन्तुः। "लशुनपलाण्डुगृञ्जनकुम्भीश्राद्धसूतिकान्नाभोज्यान्नमधुमांसमूत्ररेतोऽमेध्याभक्ष्यभक्षणे गायत्र्यष्टसहस्रेण मूर्ध्नि सम्पातानवनयेदुपवासश्च एतान्येव व्याधितस्य भिषक् क्रयायामप्रतिसिद्धानि भवन्ति यानि चान्यान्येवं प्रकाराणि तेष्वप्यदोषः" इति कुम्भीपाना इति ख्याता सम्पातानुदकविन्दून् शिरसि पातयेदिति प्रायश्चित्तविवेकः। प्रायश्चित्तं वचनान्तरैकवाक्यतया यथायोग्यमूहनीयं कल्पतरौ "नाभ्यङ्गमर्के न च भूमिपुत्रे क्षौरञ्च शुक्रेऽथ कुजे च मांसम्। बुधे च योषां न समाचरेच्च शेषेषु सर्वाणि सदैव कुर्य्यात्। चित्रा स्वहस्ताश्रवणासु तलं क्षौरं विशाखा प्रतिपत्सु वर्ज्यम्। मूले मृगे भाद्रपदासु मांसं योषिन्मघाकृत्तिकसोत्तरासु"॥ स्वं धनिष्ठा मृगे मृगशिरसि मघाकृत्तिकाभ्यां सहोत्तरास्तासु तृतीया समासः छान्दसः। स्मृतिः। "घृतञ्च सार्षपं तैलं यत्तैलं पुष्पवासितम्। अदुष्टं पक्वतैलञ्च स्नानाभ्यङ्गे च नित्यशः" प्रचेताः "तैलाभ्यङ्गनिषेधे तु तिलतैलं निषिध्यते"। वारे प्रतिप्रसवमाह स्मृतिः। रवौ पुष्पं गुरौ दूर्वां भूमिं भूमिजवासरे। भार्गवे गोमयं दद्यात् तैलदोषोपशान्तये। "दद्यात्तैल इति शेषः"।

अथ द्वितीया "सा च कृष्णा पूर्वयुता ग्राह्या प्रतिपत् सद्वितीया स्याद् द्वितीया प्रतिपत् युता" इत्यापस्तम्बवचनात्। तत्रोक्तयुक्तेः प्रतिपत् कृष्णा तस्याहचर्य्यात् द्वितीयापि तथेति शुक्ला तु परयुता ग्राह्या युग्मात् एवं वक्ष्यमाण उपवासविधायकयोः विरुद्धवचनयोः व्यवस्थोन्नेया यथा नारदः। "द्वितीयैकादशी षष्ठी तथा चैवाष्टमीतिथिः। वेधादधस्ताद्वन्द्युस्तः उपवासे तिथीस्त्विमाः"॥ अत्र द्वितीयाद्यास्तृतीयादियुताः नोपोष्या इत्यर्थः विष्णुरहस्यम् "एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी। त्रयोदश्याप्यमावास्या उपोष्याः स्युः परान्विताः" तस्मात् पूर्ववचनं कृष्णपक्षविषयं परवचनं शुक्लपक्षविषयं मनोरथद्वितीयायान्तु दिवा वासुदेवार्च्चनं रात्रौ चन्द्रोदयेऽर्घ्यं दानं नक्तं भोजनादिकम्। यथा विष्णुधर्मोत्तरे। 'देवमभ्यर्च्य पुष्पैश्च धूपदीपानुलेपनैः। उद्गच्छतश्च बालेन्दोर्दद्यादर्घ्यं समाहितः॥ नक्तं भुञ्जीत च नरो यावत्तिष्ठति चन्द्रमाः अस्तं गते न भुञ्जीत व्रतभङ्गभयान्नरः'॥ अस्तं गते चन्द्रे विष्णु पुराणे। "दिवारात्रौ व्रतं यच्च एवमेव तिथौ स्मृतम्। तस्यामुभययोगिन्यामाचरेत्तद् व्रतं व्रती"॥ एवमेव तिथौ दिवा रात्रिसम्बन्धितिथौ। स्मृतं मुनिभिः अतएव तस्यामित्यादि। स्कन्दपुराणे "आषाढ़स्य सिते पक्षे द्वितीया पुष्यसंयुता। तस्यां रथे समारोप्य रामं मां भद्रया सह। यात्रोत्सवं प्रवृत्त्याथ प्रीणयेच्च द्विजान् बहून्"॥ तथा "ऋक्षाभावे तिथौ कार्य्या सदा सा प्रीतये मम"। लिङ्गपुराणे "कार्त्तिके तु द्वितीयायां शुक्लायां भ्रातृपूजनं। या न कुर्य्याद्विनश्यन्ति भ्रातरः सप्तजन्मनि" तस्या इति शेषः। महाभारते "कार्त्तिके शुक्लपक्षस्य द्वितीयायां युधिष्ठिर!। यमो यमुनया पूर्वं भोजितः स्वगृहे स्वयम्॥ तस्यां निजगृहे पार्थ! न भोक्तव्यमतो बुधैः। यत्नेन भगिनी हस्ताद्भोक्तव्यं पुष्टिवर्द्धनम्॥ दानानि च प्रदेयानि भगिनीभ्यो विशेषतः"। तथा "यमञ्च चित्रगुप्तञ्च यमदूतांश्च पूजयेत्। अर्घ्यश्चात्र प्रदातव्यो यमाय सहजद्वयैः॥ सहजद्वयैर्भगिनीभ्रातृभिः। अर्घ्यमन्त्रः। "एह्येहि मार्त्तण्डज! पाशहस्त! यमान्तकालोकधरामरेश!। भ्रातृद्वितीयाकृतदेवपूजां गृहाण चार्घ्यं भगव-

अमस्ते" ॥ प्रणाममन्त्रस्तु "धर्मराज ! नमस्तुभ्यं नमस्ते यमुनाग्रज ! । पाहि मां किङ्करैः सार्द्धं सूर्य्यपुत्त्र ! नमोऽस्तु ते" ॥ यमुनाञ्च संपूज्य नमस्कुर्य्यात् । "यमस्वसर्नमस्तेऽस्तु यमुने ! लोकपूजिते ! । वरदा भव मे नित्यं सूर्य्यपुत्त्रि ! नमोऽस्तु ते" ॥ अन्नं दत्वा पठेत् "भ्रातस्तवानुजाताहं भुङ्क्ष्व भक्तमिदं शुभम् । प्रीतये यमराजस्य यमुनाया विशेषतः" । ज्येष्ठाचेत्तदा अग्रजाताहमिति वदेत् । अत्र भोक्तव्यं पुष्टिवर्द्धनमिति विधिसमभिव्याहृतफलश्रुत्या भोजननियमस्य प्राधान्यात्तस्य मुख्यकालोऽष्टधा विभक्तदिनपञ्चमांशो ग्राह्यः । यथा दक्षः । "पञ्चमे च तथा भागे संविभागो यथार्हतः । पितृदेवमनुष्याणां कीटानाञ्चोपदिश्यते ॥ संविभागं ततः कृत्वा गृहस्थः शेषभुग् भवेत् । इतिहासपुराणाद्यैः षष्ठञ्च सप्तमं नयेत्" ॥ संविभागो विभज्यान्न प्रतिपादनं देवोऽत्र वैश्वदेवकर्मसम्बन्धी पञ्चमांशालाभे तु । "न भुञ्जीतोद्धृतस्नेहं नातिसौहित्यमाचरेत् । नातिप्रगे नातिसायम्" ॥ इति मनूक्तपर्य्युदस्तसूर्य्योदयास्तेतरकालोऽपि ग्राह्यः । सौहित्यं तृप्तिः । अत्र भोजनस्य रागप्राप्तत्वेऽपि तत्कालस्य "मुनिभिर्द्दिरशनं प्रोक्तं विप्राणां मर्त्यवासिनां नित्यम् । अहनि च तथा तमस्विन्यां सार्द्धप्रहरयामान्तः" ॥ इति कात्यायनीयेन नियमितत्वाद्भोजनकालस्य वैधत्वेन शास्त्रीयत्वात् न सामान्यशास्त्रप्राप्तग्रपजीविपर्य्युदासासङ्गतिः । अत्रानध्ययनं भ्रान्तानां प्रेतपक्षोत्तरद्वितीयायां तन्निषेधात् तथा च राजमार्त्तण्डे । "प्रेक्तो चैचा द्वितीयास्ताः प्रेतपक्षे गते तु या । या तु कोजागरे याते चैत्रावल्याः परेऽपि च ॥ चातुर्मास्ये समाप्ते च द्वितीया या भवेत्तिथिः । परास्वेतास्वनध्यायः पुराणैः परिकीर्त्तितः" ॥ ज्योतिषे । तथा "यमद्वितीयायां यात्रायां मरणं भवेत्" ॥

अथ तृतीया । सा च चतुर्थीयुता रम्भाव्रतेतरदैवकर्मसु ग्राह्या । "रम्भाख्यां वर्जयित्वा तु तृतीयां मुनिसत्तम ! । अन्येषु सर्वकार्य्येषु गणयुक्ता प्रशस्यते" ॥ इति ब्रह्मवैवर्त्तात् गणोगणपतिस्तत्तिथिश्चतुर्थी ततश्च युग्मवाक्यं रम्भाव्रतमात्रपरं भविष्योत्तरे । "भद्रे ! कुरु प्रयत्नेन रम्भाख्यं व्रतमुत्तमम् ।

ज्यैष्ठ-शुक्ल-तृतीयायां स्नाता नियमतत्परा:" ॥ रम्भया कृत-मिति रम्भाव्रतं स्मृति: "वैशाखे मासि राजेन्द्र ! शुक्लपक्षे तृतीयिका। अक्षया सा तिथि: प्रोक्ता कृत्तिकारोहिणीयुता ॥ तस्यां दानादिकं पुण्यमक्षयं समुदाहृतम्" ॥ भविष्ये। "या शुक्ला कुरुशार्दूल ! वैशाखे मासि वै तिथि:। तृतीया साऽक्षया लोके गीर्वाणैरभिवन्दिता ॥ योऽस्यां ददाति करकान् वारि-वाजसमन्वितान्। स याति पुरुषो वीर ! लोकान् वै हेममा-लिन:" ॥ करकान् कुम्भान् वाजमन्नं हेममालिन: सूर्य्यस्य । ब्रह्मपुराणे। "य: पश्यति तृतीयायां कृष्णं चन्दनरूषितम्। वैशाखस्य सिते पक्षे स यात्यच्युतमन्दिरम्" ॥ रूषितं चर्चितं स्कन्दपुराणम्। "वैशाखस्य सिते पक्षे तृतीयाऽक्षयसंज्ञिता। तत्र मां लेपयेद्गन्धलेपनैरतिशोभितम्" ॥ ब्रह्मपुराणम्। "वैशाखे शुक्लपक्षे तु तृतीयायां जनार्दन:। यवानुत्पादया-मास युगञ्चारब्धवान् कृतम् ॥ ब्रह्मलोकात्त्रिपथगां पृथिव्या-मवतारयत्। तस्यां कार्य्यो यवैर्होमो यवैर्विष्णुं समर्चयेत् ॥ यवान् दद्यात् द्विजातिभ्य: प्रयत: प्राशयेद्यवान्। पूजयेत् शङ्करं गङ्गां कैलाशञ्च हिमालयम् ॥ भगीरथञ्च नृपतिं सागराणां सुखावहम्। स्नानं दानं तप: श्राद्धं जपहोमादि-कञ्च यत् ॥ श्रद्धया क्रियते तत्र तदानन्त्याय कल्प्यते" ॥ अत्रा-नन्त्यश्रुति: पूर्ववचने नक्षत्रयोग: फलातिशयार्थ:।

अथ चतुर्थी। सा च पञ्चमीयुता ग्राह्या युग्मात् 'एका-दश्यष्टमी षष्ठी अमावास्या चतुर्थिका। उपोष्या: परसंयुक्ता: परा: पूर्वेण संयुता:' इत्यग्निपुराणाच्च भविष्ये। "अमा वै सोमवारेण रविवारेण सप्तमी। चतुर्थी भौमवारेण अक्षयाद-पि चाक्षया"। यत्तु "चतुर्थीसंयुता कार्य्या तृतीया च चतुर्थिका। तृतीयया युता नैव पञ्चम्या कारयेत् क्वचित्" इति ब्रह्मवैवर्त्तवचनं पञ्चमीयुतानिषेधकं तद्विनायकव्रतपर-मिति गुरुचरणा:। तृतीयायुतानिषेधकत्वे क्वचिदित्यनुपपत्ते: सर्वत्रैव पञ्चमीयुताया ग्रहणात्। सारस्वत्यादिप्रदोषमाह स्मृति: "त्रयोदश्याश्चतुर्थ्याश्च सप्तम्या द्वादशीतिथे:। प्रदोषेऽध्ययनं धीमान् न कुर्वीत यथाक्रमम्। सारस्वतो गाणपत: सौरश्च

वैष्णवस्तथा" ॥ प्रदोषशब्दोऽत्र प्रथमप्रहर इति हेमाद्रिः। रात्रिपर इति निर्णयामृतकृद् भोजदेवः "शुक्लपक्षे चतुर्थ्यान्तु सिंहे चन्द्रस्य दर्शनम्। मिथ्याभिशापं कुरुते न पश्येत्तत्र तं ततः" चतुर्थ्यां दर्शननिषेधात्तत्रोदितस्य चन्द्रस्य पञ्चम्यां दर्शने तु न दोषः। अतः। "पञ्चाननगते भानौ पक्षयोरुभयोरपि। चतुर्थ्यामुदितश्चन्द्रो नेक्षितव्यः कदाचन" ॥ चतुर्थ्यां नेक्षितव्य इति मुनिभिरुदित उक्त इत्यर्थः। अथवा चतुर्थ्यामित्यस्य प्रधान-क्रियान्वयाभ्यर्हितत्वान्नेक्षितव्य इत्यनेनान्वयो न तु उदित इत्यनेन तथा च "अव्यक्तं प्रधानगामि" इति सूत्रे अव्यक्तस्य शब्दस्य प्रधानेन सह सम्बन्ध इति भट्टनारायणव्याख्यानम् इति उदितस्त्वत्रोदितव्यावृत्तिपरः सरूपाख्यानपरो वा। "ब्राह्मणो तु शुनादष्टा जम्बुकोष्ट्रेण वा गवा। उदितं सोम-नक्षत्रं दृष्ट्वा सद्यः शुचिर्भवेत्" इति पराशरोक्तोदित इतिवत् नन्वेकपदस्य कथमनेकार्थतेति चेन्न यावन्तोऽर्थास्तावन्ति पदानीति तथा चोक्तम्। "यावतामेव धातूनां लिङ्गं रूढिगतं भवेत्। अर्थश्चैवाभिधेयस्तु तावद्भिर्गुणविग्रहः" ॥ लिङ्गं सामर्थ्यं रूढिगतं प्रसिद्धं न त्वप्रसिद्धं हनहिंसागत्योरित्यादौ गमना-दिकम् अभिधेयो वाच्यः तावद्भिर्धातुभिर्गुणविग्रहो गुणैर्गण-नाभिर्विग्रहो ग्रहणं यत्रार्थे स तथा एतेन धातुसमसंख्यार्थत्वं पदस्य ब्रह्मपुराणे सिंहार्काधिकारे "नारायणोऽभिशप्तस्तु निशाकरमरीचिषु। स्थितश्चतुर्थ्यामद्यापि मनुष्याय पतेच्च सः ॥ अतश्चतुर्थ्यां चन्द्रन्तु प्रमादाद्वीक्ष्य मानवः। पठेद्धात्रे-यिकावाक्यं प्राङ्मुखो वाप्युदङ्मुखः" ॥ अभिशप्तः वरीवाद-विषयीभूतः सोऽभिशापः। धात्रेयिकावाक्य विष्णुपुराणे। 'सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः। सुकुमारक ! मा रोदीस्तव ह्येष स्यमन्तकः" ॥ अनेन मन्त्रेणाभिमन्त्रितं जलं पेयम् आचारात् स्यमन्तकोपाख्यानञ्च श्रोतव्यम्। माघे शुक्ल-चतुर्थ्यां गौरी पूज्या वक्ष्यमाणवचनात्।

अथ पञ्चमी। सा च चतुर्थीयुता ग्राह्या युग्मात् "पञ्चमी च प्रकर्त्तव्या चतुर्थीसहिता विभो" ! इति ब्रह्मपुराणाच्च। "अत्र पञ्चमी तु प्रकर्त्तव्या षष्ठ्यायुक्ता तु नारद" ! इति ब्रह्मवैवर्त्त-

वचनं तच्छुक्लापरं शुक्लपक्षे तिथिर्ग्राह्येत्येकवाक्यत्वात् इति केचित्तच्चिन्त्यम् "चतुर्थीसंयुता कार्य्या पञ्चमी परया न तु। दैवे कर्मणि पैत्रे च शुक्लपक्षे तथासिते" इति कालमाधवीयधृत-हारीतवचनात्। यद्यपि पैत्रे तन्निषेधो निरर्थकः युग्मवचनस्य दैवकृत्यमात्रपरत्वात् तथापि यथा आपराह्णिके पित्र्ये स्वतएव परविद्धा न ग्राह्या तथा दैवेऽपीति विवक्षया दैवपित्र्ययोः सहोपन्यासः"। ब्रह्मवैवर्त्तवचनन्तु स्कन्दोपवासविषयकमिति माधवाचार्य्यः। अत्र पञ्चम्यामुपवासः षष्ठ्यां स्कन्दोपासनाय षष्ठीसमेता कर्त्तव्या सप्तमी नाष्टमीयुता। पतङ्गोपासनायेह षष्ठ्यामाहुरुपोषणम्"॥ इति भविष्यपुराणोक्तवत्। पतङ्गः सूर्य्यः। तथा च वशिष्ठः "कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रि चतुर्दशी। एताः पूर्वयुताः कार्य्यास्तिथ्यन्ते पारणं भवेत्"॥ वस्तुतस्तु पञ्चमी परया न त्विति वचनान्तरैकवाक्यतया षष्ठ्याऽयुतेति पाठः। स्कन्दषष्ठी वक्ष्यते देवीपुराणे। "सुप्ते जनार्दने कृष्णे पञ्चम्यां भवनाङ्गने। पूजयेन्मनसादेवीं स्नुही-विटपसंस्थिताम्। पद्मनाभे गते शय्यां देवैः सर्वैरनन्तरम्। पञ्चम्यामसिते पक्षे समुत्तिष्ठति पन्नगी"॥ मनसादेवीं विषहरीं स्नुही सिज वृक्षः। देवैरिति सहार्थे तृतीया। "देवीं संपूज्य नत्वा च न सर्पभयमाप्नुयात्। पञ्चम्यां पूजयेन्नागाननन्ता-द्यान्महोरगान्। क्षीरं सर्पिस्तु नैवेद्यं देयं सर्पविषापहम्"। मनसाध्यानं यथा पद्मपुराणम् "देवीमम्बामहीनां शशधर-वदनां चारुकान्तिं वदान्याम्। हंसारूढामुदारामरुणित-वसनां सर्वदां सर्वदैव। स्मेरास्यां मण्डिताङ्गीं कनकमणि-गणैर्नागरत्नैरनेकैर्वन्देऽहं साष्टनागामुरुकुचयुगलां भोगिनीं कामरूपाम्। पुराणान्तरे। "अनन्तो वासुकिः पद्मो महा-पद्मोऽथ तक्षकः। कुलीरः कर्कटः शङ्खो ह्यष्टौ नागा प्रकी-र्त्तिताः॥ शेषः पद्मो महापद्मः कुलिकः शङ्खपालकः। वासु-किस्तक्षकश्चैव कालियो मणिभद्रकः॥ ऐरावतो धृतराष्ट्रः कर्कोटकधनञ्जयौ"। गारुडेऽपि तत्रैव "अनन्तं वासुकिं शङ्खं पद्मं कम्बलमेव च। तथा कर्कोटकं नागं धृतराष्ट्रञ्च शङ्खकम्॥ कालियं तक्षकञ्चापि पिङ्गलं मणिभद्रकम्। यजे-

त्तानसितान्नागान् दृष्टमुक्तो दिवं व्रजेत्" ॥ अत्र च "योऽसौ चानन्तरूपेण ब्रह्माण्डं सचराचरम्। पुष्पवद्धारयेन्मूर्द्ध्नि तस्मै नित्यं नमो नमः" ॥ इत्यनेन प्रणवपूर्व्वेण मत्स्यपुराणोक्तेनानन्तं पूजयेत्। रत्नाकरे "पिचुमर्द्दस्य पत्राणि स्थापयेद्भवनोदरे। स्वयञ्चापि तदश्नीयात् ब्राह्मणांश्चापि भोजयेत्" ॥ पिचुमर्द्दस्य निम्बस्य भविष्योत्तरे माघशुक्लपञ्चमधिकृत्य "चतुर्थी वरदा नाम तस्यां गौरो सुपूजिता। सौभाग्यमतुलं कुर्य्यात् पञ्चम्यां श्रीरपि श्रियम्" ॥ संवत्सरप्रदीपे "पञ्चम्यां पूजयेल्लक्ष्मीं पुष्पधूपान्नवारिभिः। मस्याधारं लेखनीञ्च पूजयेन्न लिखेत्ततः ॥ माघे मासि सिते पक्षे पञ्चमी या श्रियः प्रिया। तस्याः पूर्व्वाह्ण एवेह कार्य्यः सारस्वतोत्सवः" ॥ सारस्वत इत्युपादानात् श्रियः सरस्वत्याः तथा च व्याडिः। "लक्ष्मीसरस्वती धीत्रिवर्गसम्पद्विभूतिशोभासु। उपकरणवेशरचनाविधासु च श्रीरिति प्रथिता। तथा चोक्तं गां दद्यादित्यादौ नानाशब्दस्यापि प्रसिद्धार्थतैव व्यवहारः विपरीतार्थग्राहकवाक्यविशेषसत्त्वे तु अप्रसिद्धार्थत्वेन च व्यवह्रियते। सर्व्वदा नानार्थानां व्यवहारस्तु श्लेषकाव्यादाविति। "तरुणशकलमिन्दोर्विभ्रती शुभ्रकान्तिः कुचभरनमिताङ्गी सन्निसन्नासिताब्जे। निजकरकमलोद्यल्लेखनी पुस्तकश्रीः सकलविभवसिद्ध्यै पातु वाग्देवता नः" ॥ इति शारदोक्तं ध्यायेत् पाद्यादिभिः पूजयित्वा "भद्रकाल्यै नमो नित्यं सरस्वत्यै नमो नमः। वेदवेदान्तवेदाङ्गविद्यास्थानेभ्य एव च स्वाहा" इति ब्रह्मपुराणीयेन त्रिः पूजयेत्। मत्स्यसूक्ते। "बन्धुजीवञ्च द्रोणञ्च सरस्वत्यै न दापयेत्"। सरस्वतीं संपूज्य "यथा न देवी भगवान् ब्रह्मा लोकपितामहः। त्वां परित्यज्य सन्तिष्ठेत्तथा भव वरप्रदा ॥ वेदाः शास्त्राणि सर्व्वाणि नृत्यगीतादिकञ्च यत्। न विहीनं त्वया देवि ! तथा मे सन्तु सिद्धयः ॥ लक्ष्मीर्मेधाधरापुष्टिगौरीतुष्टिः प्रभाधृतिः। एताभिः पाहि तनुभिरष्टाभिर्मां सरस्वती" इति मत्स्यपुराणीयैः प्रार्थयेत्।

अथ षष्ठी। सा तु सप्तमीयुता ग्राह्या युग्मात् राजमार्त्तण्डे "जैष्ठे मासि सिते पक्षे षष्ठी चारण्यसंज्ञिता। व्यजनैककरा-

स्तस्या मटन्ति विपिने स्त्रियः॥ तां विन्ध्यवासिनीं वन्दे षष्ठी-मारावयन्ति च। कन्दमूलफलाहारा लभन्ते सन्ततिं शुभाम्॥ कन्दं सूरणादिमूलं तदितरत् भविष्ये "येयं मार्गशिरे मासि षष्ठी भरतसत्तम!। पुण्या पापहरा धन्या शिवा शान्ता गुह-प्रिया"॥ देवीपुराणे चैत्रमधिकृत्य "षष्ठ्यां स्कन्दस्य कर्त्तव्या पूजा सर्वोपचारिका। इहैव सुखसौभाग्यमन्ते विष्णुपदं व्रजेत्"॥ इयमेव स्कन्दषष्ठी पञ्चमी युतैवोपोष्या। "कृष्णा-ष्टमी स्कन्दषष्ठी शिवरात्रि चतुर्दशी। एताः पूर्वयुताः कार्य्या-स्तिथ्यन्ते पारणं भवेत्"॥ इति ब्रह्मवैवर्त्तवचनात् विष्णुधर्मो-त्तरे "अष्टमीञ्च तथा षष्ठीं नवमीञ्च चतुर्दशीम्। शिरोऽभ्यङ्गं न कुर्वीत पर्वसन्धौ तथैव च"॥

अथ सप्तमी। सा च षष्ठीयुता ग्राह्या युग्मात् पैठिनसि-वचनाच्च यथा "पञ्चमी सप्तमी चैव दशमी च त्रयोदशी। प्रतिपन्नवमी चैव कर्त्तव्या सम्मुखी तिथिः"॥ साम्मुख्यमुक्तं स्कान्दे "साम्मुख्यं नाम सायाह्नव्यापिनी दृश्यते यदा"। अतएव परदिने त्रिसन्ध्यकालाव्यापित्वे षष्ठीयुक्तपञ्चम्यामुप-वासमाह भविष्यपुराणं "षष्ठीसमिता कर्त्तव्या सप्तमी नाष्टमी युता। पतङ्गोपासनायेह षष्ठ्यामाहुरुपोषणम्"॥ यथा उपोषणे तथा कर्मान्तरे तथा "षष्ठ्यायुता सप्तमी च कर्त्तव्या सर्वदा तिथिः। षष्ठी च सप्तमी यत्र तत्र सन्निहितो हरिः"॥ इति स्कन्दपुराणात् तथा "शुक्लपक्षस्य पञ्चम्यां सूर्य्यवारो यदा भवेत्। सप्तमी विजया नाम तत्र दत्तं महाफलम्"॥ भविष्ये "शालितण्डुलप्रस्थस्य कुर्य्यादन्नं सुसंस्कृतम्। सूर्य्याय चरुकं दत्वा सप्तम्याञ्च विशेषतः॥ यावन्तस्तण्डुलास्तस्मिन्नैवेद्यपरि-संख्यया। तावद्वर्षसहस्राणि सूर्य्यलोके महीयते"॥ गोपथ-ब्राह्मणं "द्वात्रिंशत् पलिकं प्रस्थमुक्तं स्वयमथर्वणा"। ज्योतिषे पलन्तु लौकिकैर्मानैः साष्टरत्तिद्विमाषकम्। तोलकत्रितयं ज्ञेयं ज्योतिर्ज्ञैः स्मृतिसम्मतम्"॥ तेन चतुरत्तिकाधिकमाष-पञ्चाधिकषड्धिकशततोलकमिताः प्रस्थतण्डुला इति एव-ञ्चैतत् न्यूनाधिकयोः फलतारतम्यं बोध्यम्। एवं देवतान्तरे-ऽपि तत्तल्लोकमहितत्वफलेन कल्पयितुं युक्तम् अतएव शिवे-

ऽप्येवं वक्ष्यते। वराहपुराणे "अथापरं महाराज! व्रतमारोग्यसंज्ञितम्। कथयामि परं पुण्यं सर्वपापप्रणाशनम्॥ तस्यैव माघमासस्य सप्तम्यां समुपोषितम्। पूजयेद्भास्करं देवं विष्णुरूपं सनातनम्॥ आदित्य! भास्कर! रवे! भानो! सूर्य्य! दिवाकर!। प्रभाकरेति संपूज्यो देवः सर्वेश्वरो रविः॥ षष्ठ्यां चैककृताहारः सप्तम्यां समुपोषितः। अष्टम्यां चैव भुञ्जीत एष एव विधिः स्मृतः॥ अनेन वत्सरं पूर्णं विधिना योऽर्च्चयेद्रविम्। तस्यारोग्यं धनं धान्यमिह जन्मनि जायते॥ परत्र च शुभं स्थानं यद्गत्वा न निवर्त्तते"॥ सप्तम्यां समुपोषित इति आदिकर्मणि क्तः। तेन सप्तम्यां समुपवस्तुमारब्धवानित्यर्थः। ततश्च प्रातः सप्तम्यामेव उपवाससङ्कल्पः। रविश्च विष्णुरूपतया पूजाकाले ध्येयः अभिलापे तु तत्तिथावित्युक्त्वा आरभ्येति ऐहिकारोग्यधनधान्यपारलौकिकशुभस्थानलाभकामः। संवत्सरं यावदारोग्यव्रतमिति विशेषः। ततः प्रभृति सप्तम्यामुपवासं कुर्वन्। "आदित्य! भास्कर! रवे! भानो! सूर्य्य! दिवाकर! नमस्तुभ्यं" इति मन्त्रेण पूजयेत्। अत्र षष्ठ्यादिषु तत्तत्कर्मविधानात् षष्ठीसमेतेत्यस्य न विषयः कालिकापुराणे भक्तं प्रति सूर्य्यवाक्यम। "अदृष्ट्वा मां न भुञ्जीत विण्मूत्रं नैव दर्शयेत्"। तथा "मदर्च्चां घृतनिर्माल्यं शरीरे न तु धारयेत्"। अर्च्चा प्रतिमा।

अथ विधानसप्तमी कृत्यचिन्तामणौ "अर्काग्रं शुचिगोमयं सुमरिचं तोयं फलञ्चाश्नुते मूलं नक्तमुपोषणञ्च विधिवत् कृत्वैकभक्तं नरः। क्षीरं वायुशनं घृताशनमिति प्रोक्तान्यमूनि क्रमात्। कृत्वा द्वादशसप्तमीं दिनकृतः प्राप्नोत्यभीष्टं फलम्"॥ अत्राचार्काग्रादीतरभोजननिवृत्तिरवसीयते तपस्त्वात् तथा च मत्स्यपुराणं "तपोभिः प्राप्यतेऽभीष्टं नासाध्यं हि तपस्यतः। दुर्भगत्वं वृथा लोको वहते सति साधने"॥ तपसः क्लेशस्वभावत्वं तत्रैवोक्तम् "उमेति चपला पुत्रि न क्षमं तावकं वपुः। सोढुं क्लेशस्वभावस्य तपसः सौम्यदर्शने"॥ व्यक्तमुक्तं यथा "अर्कपत्राङ्कुरमात्रमन्तरीक्षगृहीतकं कपिलाविड्यवमात्रं मञ्जुलं मरीचं जलम्। कदलीफलमध्यन्तु कणामात्र-

सपक्वकम् । कुशमूलं यवमात्रं स्वच्छायाद्विगुणे क्षणे ॥ भक्ष्यं मितौदनं नक्तं शुद्धोपवसनं तथा । एकभक्तं मयूराण्डप्रमाणं भोजनं मतम् ॥ अर्द्धप्रसृतिमात्रन्तु कपिलादुग्धभक्षणम् । स्नात्वा संपूज्य मार्त्तण्डं प्राङ्मुखो वायुमाशयेत् ॥ घृतं स्वल्पं पौषमासे माघादब्दं समाचरेत् । ब्राह्मणान् भोजयेद्भक्त्या गुड़क्षीरनिरामिषैः ॥ विप्राय दक्षिणा देया विभवस्यानुरूपतः । अष्टम्यां पारणं कुर्य्यात् कटुम्लरहितेन च ॥ मुद्गमाषतिलादीनि घृतञ्चैव विवर्जयेत् । एकसिद्धं भक्ष्यमुक्तमकैतन्नानुसारतः ॥ एतद्व्रतस्य माघादिमासविशेषविहितकर्म्मत्वेन मलमासेतरकर्त्तव्यमाह । वशिष्ठलिङ्गपुराणम् । "प्रारब्धेतु व्रते पश्चात् सम्प्राप्ते त्वधिमासके । पूर्वमानेन तं त्यक्त्वा कार्य्यं द्वादशमासिकम्" ॥ पूर्वमानेन मलिम्लुच शून्यवत्सरमानेन तं मलमासं द्वादशमासिकं द्वादशमासेषु एव कार्य्यं न मलमास इत्यर्थः यत्तु "मासे मलिम्लुचेऽप्येवं यजेद्देवीं सशङ्कराम् । किन्तु नोद्यापनं कार्य्यमित्याह भगवान् शिवः" ॥ इति विष्णुरहस्यवचनं तन्मासविशेषानङ्कितमासमात्रकर्त्तव्यामावास्यादिव्रतकर्त्तव्यता परम् उद्यापनं प्रतिष्ठा एवमारम्भोऽपि निषिद्धः गार्ग्यः । "अस्तं गते गुरौ शुक्रे वाले वृद्धे मलिम्लुचे । उपायनमुपारम्भं व्रतानां नैव कारयेत्" ॥ उपायनं प्रतिष्ठा उपारम्भमारम्भम् एतच्च कालाशुद्धिमात्रपरं तत्तन्मात्रविधिकल्पने गौरवात् भविष्ये "भाद्रे मासि सिते पक्षे सप्तम्यां नियमेन या । स्नात्वा शिवं लेखयित्वा मण्डले च सहाम्बिकम् । पूजयेच्च तदा तस्यां दुष्प्रापं नैव विद्यते" ॥ इदं कुक्कुटीव्रतत्वेन ख्यातं भविष्ये "सूर्य्यग्रहणतुल्या हि शुक्लमाघस्य सप्तमी । अरुणोदयवेलायां तस्यां स्नानं महाफलम् ॥ माघे मासि सिते पक्षे सप्तमी कोटिभास्करा । दद्यात् स्नानार्घ्यदानाभ्यामायुरारोग्यसम्पदः ॥ अरुणोदयवेलायां शुक्ला माघस्य सप्तमी । गङ्गायां यदि लभ्येत सूर्य्यग्रहशतैः समा" ॥ कोटिभास्करा कोटिसप्तमीतुल्या सूर्य्यग्रहणफलं स्नानजं "सन्निहिते बुद्धिरन्तरङ्गा" इति न्यायात् । तेन बहुशतसूर्य्यग्रहणकालीनगङ्गास्नानजन्यफलसमफलप्राप्तिः फलमत्र ज्ञेयम् अत्र बहुतर-

शतसूर्य्यग्रहाणां प्रत्येकाधिकरणतासंसर्गेणान्वयात् कालानां स्नानानां तत्फलानामपि बहुशतत्वं लभ्यते अतो नाप्रसिद्धिः पूर्णसप्तम्यां पूर्वापरयोर्य्यत्रारुणोदयकाले सप्तमी तत्र पूर्व्वदिने तत्काले स्नानम् । "चतस्रो घटिका प्रातररुणोदय उच्यते । यतीनां स्नानकालोऽयं गङ्गाम्भः सदृशः स्मृतः ॥ त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम् । नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते" ॥ इति कालमाधवीयधृत ब्रह्मवैवर्त्तीयेन पूर्व्वस्य तत्कालस्य पूर्णतिथिसम्बन्धि दिनकर्त्तव्यकर्माङ्गत्वेन इतरस्य चेतराङ्गत्वेनाभिधानात् अतएव दक्षेण तत्कालमारभ्याह्निककृत्यमभिहितम् अत्रारुणोदयकाले मुहूर्त्तान्यूनतिथिलाभ एव स्नानं "व्रतोपवासस्नानादौ घटिकैका यदा भवेत् । उदये सा तिथिर्ग्राह्या श्राद्धादावस्तगामिनी" इति विष्णुधर्म्मोत्तरात् अत्र घटिका मुहूर्त्तं श्राद्धयोग्यकालानुरोधादिति वक्ष्यते ब्रह्मवैवर्त्तवचने घटिका दण्डरूपा परवचने नाडीनामाद्यन्तचतुष्टयमित्येकवाक्यत्वात् ये तु सूर्य्योदयात् प्रागपि प्रातःस्नानविधानात् तत्रैव माघसप्तम्याख्यगुणफलविधिलाघवादित्याहुः तच्चिन्त्यं "प्रकरणान्यत्वे प्रयोजनान्यत्वम्" इति जैमिनिसूत्रेण प्रकरणभेदे गुणविध्यसिद्धेः अतएव कल्पतरुरत्नाकरयोः । "य इच्छेद्विपुलान् भोगान् चन्द्रसूर्य्यग्रहोपमान् । प्रातःस्नायी भवेन्नित्यं द्वौ मासौ माघफाल्गुनौ" इति विष्णुस्मृतौ नित्यस्नानप्रकरणात् प्रकरणान्तराम्नानात् प्रकरणान्तराधिकरणन्यायेन काम्यस्नानान्तरमिदमप्युक्तं न तु गुणफलविधिः किन्तु काम्यकरणे प्रसङ्गान्नित्यसिद्धिरिति अत्र माघमासनिमित्तकमाघसप्तमीनिमित्तककाम्यस्नानयोः प्रातर्विधानात् नैमित्तकत्वेन प्रायश्चित्तवत् सकृदनुष्ठानम् । "प्रधानस्याक्रिया यत्र साङ्गं तत् क्रियते पुनः । तदङ्गस्याक्रियायान्तु नावृत्तिर्न च तत्क्रिया" ॥ इति कात्यायनवचनात् "न स्नानमाचरेद् भुक्त्वा नातुरो न महानिशि । न वासोभिः सहाजस्रं नाविज्ञाते जलाशये" ॥ इति मनुवचनैकदाजस्रस्नाननिषेधाच्च "धर्म्मविन्नाचरेत् स्नानमाह्निकञ्च पुनः पुनः" । इति मनुवचनाच्च अतएव नान्दीमुखप्रकरणशेषे प्रधानानामपि काम्यानां

ततद्दृश्यकालविहितानां तन्त्रेणैव सिद्धिरिति श्राद्धचिन्तामणिः निष्कामविष्णुप्रीतिकामयोः सुतरां सकृदनुष्ठानं "गुणतारतम्यात् फलतारतम्यम्" इति न्यायेन फलं बोध्यम्। तत्तु इक्षुक्षीरगुडादिमाधुर्य्यभेदवन्निर्द्देष्टुमशक्यं "पक्षान्तरेऽपि कन्यास्थे रवौ श्राद्धं प्रशस्यते। कन्यागते पञ्चमे तु विशेषेणैव कारयेत्"॥ इति हेमाद्रिधृतादित्यपुराणोक्तवत् एतद्वचनप्रागर्द्धं कार्त्तिकमलमासाब्दविषयं "देशकालाश्रमद्योत्रदातृद्रव्यमनो गुणाः। सकृदस्यापि दानस्य फलातिशयहेतवः"॥ इति ब्रह्मपुराणोक्तवच्च तीर्थभेदे त्वेकदापि नानास्नानम्। "विषुवद्दिवसे प्राप्ते पञ्चतीर्थीविधानतः" इति ब्रह्मपुराणादिवचनात् तीर्थभेदे तन्त्रप्रसङ्गयोरसम्भवाच्च। अतएव गङ्गावाक्यावलीतीर्थचिन्तामण्योः। यत्तु प्रयागे त्र्यहं स्नानक्रोड़ीकृतेऽपि माघसप्तमीस्नानादावसाधारणसङ्कल्पेन पुनस्तथैव प्रातःस्नानाचरणं तदयुक्तं तदा सकृत् स्नानस्यैव विहितत्वात्। अन्यथा तत् त्र्यहफलकामनायां तदानन्त्यापत्तेरित्युक्तम्। स्नाने परिपाटीमाह कृत्यकल्पलतायां विष्णुः "सप्त बदरपत्राणि सप्तार्कपत्राणि च शिरसि निधाय" "यद्यत् जन्मकृतं पापं मया सप्तसु जन्मसु। तन्मे रोगञ्च शोकञ्च माकरी हन्तु सप्तमी"॥ इत्युच्चार्य्य स्नायादिति शेषः। शोकं छिद्रं तिथिकृत्यस्य पौर्णमास्यन्तमासाङ्गत्वान्माकरोति पदं मकराकारव्यचान्द्रमासीय तिथिकृत्यपरम्। "तिथिकृत्ये च कृष्णादिं व्रते शुक्लादिमेव च। विवाहादौ च सौरादिं मासं कृत्ये विनिर्दिशेत्"॥ इति ब्रह्मपुराणान्मन्वन्तरादित्वेन तथा युक्तत्वाच्च यथा मत्स्यपुराणे। "यस्मान्मन्वन्तरादौ च रथमापुर्दिवाकराः। माघमासस्य सप्तम्यां तस्मात् सा रथसप्तमी। अरुणोदयवेलायां तस्यां स्नानं महाफलम्"॥ अतएव नारसिंहे रथाख्यायामित्युक्तं यथा "महानवम्यां द्वादश्यां भरण्यामपि चैव हि। तथाक्षयतृतीयायां शिष्यान्नाध्यापयेद् बुधः। माघमासे तु सप्तम्यां रथाख्यायाञ्च वर्जयेत्"॥ द्वादश्यां शयनोत्थानद्वादश्यां भरण्यां शक्रध्वजपातभरण्यामिति कल्पतरुः अत्र महानवम्यादिसाहचर्य्याच्च त्वत्वं प्रतीयते अतएव चतुर्दशमन्वन्तरादिगणने क्वापि

न राश्युल्लेखः। यथा भविष्यमत्स्ययोः। "अश्वयुक् शुक्लनवमी द्वादशी कार्त्तिकी तथा। तृतीया चैत्रमासस्य तथा भाद्रपदस्य च॥ फाल्गुनस्याप्यमावस्या पौषस्यैकादशी तथा। आषाढ़स्यापि दशमी तथा माघस्य सप्तमी॥ श्रावणस्याष्टमी कृष्णा तथाषाढ़स्य पूर्णिमा। कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी सिता। मन्वन्तरादयस्त्वेता दत्तस्याक्षयकारिकाः"॥ अत्र अमावस्याष्टमीव्यतिरिक्ताः शुक्लाः पुनः पुनस्तथा पदोपादानात्। उपक्रमोपसंहारयोः शुक्लत्वकीर्त्तनाच्च अत्र कामधेनौ तृतीया चैव माघस्येति कल्पतरौ तु तृतीया चैत्रमासस्येति लिखितम् अत्र पाठद्वैधे श्रीपतिरत्नमालायाम्। अश्वयुजि शुक्लनवमीद्वादश्यूर्जे मधौ तृतीया च इति पाठाच्चैत्रतृतीयैव ग्राह्या। श्रीदत्तोऽप्येवम्। माघसप्तम्याश्चान्द्रत्वं सौरागमेऽपि "अर्कपत्रैः सवदरैर्दूर्वाक्षत सचन्दनैः। अष्टाङ्गविधिना चार्घ्यं दद्यादादित्यतुष्टये॥ माघेऽथ फाल्गुने वापि भवेद्वै माघसप्तमी। माकरीति च यत् प्रोक्तं तत्प्रायो वृत्तिदर्शनात्॥ अष्टाङ्गविधिना योऽर्घ्यं भानोर्मूर्ध्नि निवेदयेत्। ताम्रपात्रार्घ्यदानेन पुण्यं दशगुणं स्मृतम्"॥ इति विष्णुपुराणीयेन आदित्यपुराणे "ऋक्षराशिविशेषेण यत् कर्म विहितन्नरैः। दैवं वाप्यथवा पैत्रं तदन्यत्रापि दृश्यते" अर्घ्यमन्त्रस्तु "जननी सर्वभूतानां सप्तमी सप्तसप्तिके। सप्तव्याहृतिके देवि! नमस्ते रविमण्डले"॥ प्रणाममन्त्रस्तु "सप्त सप्तिवहप्रीत सप्तलोकप्रदीपन। सप्तम्यां हि नमस्तुभ्यं नमोऽनन्ताय वेधसे"॥ सप्तिरश्वः।

अथाष्टमी। सा च शुक्ला नवमीयुता ग्राह्या युग्मात्। कृष्णा च सप्तमीयुता यथा निगमः "कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी। पूर्वविद्धैव कर्त्तव्या परविद्धा न कुत्रचित्॥ उपवासादि कार्य्येषु एष धर्मः सनातनः"। भविष्यपुराणे। "चतुर्दश्यां तथाष्टम्यां पक्षयोः शुक्लकृष्णयोः। योऽब्दमेकं न भुञ्जीत शिवार्चनपरो नरः॥ यत् पुण्यमक्षयं प्रोक्तं सततं सत्रयाजिनाम्। तत् पुण्यं सकलं तस्य शिवलोकञ्च गच्छति"॥ ततः सततसत्रयाज्यक्षयपुण्यसमपुण्यप्राप्तिः शिवलोकगतिश्च

फलम्। फाल्गुनशुक्लाष्टमी चतुर्दश्योरारभ्य वर्षं यावत् प्रत्यष्टमी प्रति चतुर्दश्युपवासव्रतम्। कालिकापुराणे। "यैषा ललितकान्याख्या देवी मङ्गलचण्डिका। वरदाभयहस्ता च द्विभुजा गौरदेहिका॥ रक्तपद्मासनस्था च मुकुटकुण्डलमण्डिता। रक्तकौषेयवस्त्रा तु स्मितवक्त्रा शुभानना॥ नवयौवनसम्पन्ना चार्वङ्गी ललितप्रभा। उमया भाषितं मन्त्रं यत्पूर्वं त्वेकमक्षरम्॥ मन्त्रमस्यास्तु तज्ज्ञेयं तेन देवीं प्रपूजयेत्"। एकमक्षरं शक्तिबीजरूपम् "तथाष्टम्यां नवम्याञ्च पूजा कार्य्या विवृद्धये। पटेषु प्रतिमायां वा घटे मङ्गलचण्डिकाम्॥ यः पूजयेद्भौमवारे शुभैर्दूर्वाक्षतैः शिवाम्। सततं साधकः सोऽपि काममिष्टमवाप्नुयात्"॥ ज्योतिषे। "शनैश्चरस्य वारेण वारेणाङ्गारकस्य च। कृष्णाष्टमी चतुर्दश्यौ पुण्यात् पुण्यतरे स्मृते"॥ तथा "सोमवारेऽप्यमावास्या आदित्या हेतु सप्तमी। चतुर्थ्यङ्गारवारे तु अष्टमी च बृहस्पतौ॥ अत्र यत् क्रियते पापमथवा धर्मसञ्चयः। षष्टिजन्मसहस्राणि प्रतिजन्म तदक्षयम्"॥ प्रणम्य जगतामीशं वसुदेवसुतं हरिम्। तज्जन्मतिथितत्त्वानि वक्ति श्रीरघुनन्दनः॥

अथ जन्माष्टमी। ब्रह्मपुराणे। "अथ भाद्रपदे मासि कृष्णाष्टम्यां कलौ युगे। अष्टाविंशतिमे जातः कृष्णोऽसौ देवकीसुतः। अष्टाविंशतिमे सावर्णिकमन्वन्तरप्रथमयुगापेक्षयेति शेषः॥ विष्णुपुराणे महामायां प्रति भगवद्वाक्यम्। "प्रावृट्काले च नभसि कृष्णाष्टम्यामहं निशि। उत्पत्स्यामि नवम्याञ्च प्रसूतिं त्वमवाप्स्यसि"॥ इत्यादिषु भाद्रपदनभःपदयोर्नविरुद्धार्थता तत्कालस्यैकश्रुतिमूलतया गौणचान्द्रेण भाद्रता मुख्यचान्द्रेण श्रावणतेति। अभिलापस्तु गौणचान्द्रेणैव तदर्थमेव भाद्रपदप्रयोगात् अन्यथा तदभिधानमनर्थकं स्यात् तिथिकृत्ये च कृष्णादिमिति वचनात्। यत्तु वशिष्ठसंहितायाम्। एकस्मिन् वचने श्रावणनभस्योपादानं तत् सौराभिप्रायेण। यथा "श्रावणे वा नभस्ये वा रोहिणी सहिताष्टमी। यदा कृष्णे नरैर्लब्धा सा जयन्तीति कीर्त्तिता"॥ कृष्णे कृष्णपक्षे अत्र वक्ष्यमाणवचनान्मध्यरात्रप्राप्तावेव जयन्तीत्वं न रोहिण्य-

ष्टम्योर्योगमात्रे यथा "सिंहार्के रोहिणीयुक्ता नराः कृष्णाष्टमी यदि । रात्र्यर्द्धपूर्वापरगा जयन्ती कलयापि च" ॥ इति वराहसंहिता । एतेन द्वादशमासेषु कृष्णाष्टमीष्वपि रोहिणीयोगपुरस्कारेण जयन्तीव्रतमिति द्वैतनिर्णयोक्तं निरस्तं उक्तवचनविरोधात् । "सूर्य्याचन्द्रमसोर्यः परः सन्निकर्षः सामावास्या" । इति गोभिलसूत्रेण ज्योतिःशास्त्रगणनया च चन्द्रसूर्य्ययोरमावस्यायामेकराश्यवस्थाननियमेन द्वादशसु मासेष्वष्टम्यां रोहिणीयोगस्य सर्वथैवा सम्भवाच्च । भविष्योत्तरे । "श्रावणे वहुले पक्षे कृष्णजन्माष्टमीव्रतम् । न करोति नरो यस्तु स भवेत् क्रूरराक्षसः ॥ वर्षे वर्षे तु या नारी कृष्णजन्माष्टमीव्रतम् । न करोति महाक्रूरा व्याली भवति कानने" ॥ भविष्ये । "सप्तमीसाहियामश्चेद्रोहिणीं वा न संस्पृशेत् । व्रतं संकल्पयेत्तत्र न च रात्रौ कदाचन" ॥ तत्र सप्तम्यां तद्दिने तस्या एव प्रातर्लाभात्तदानीं संकल्पमाह वृहस्पतिः । "प्रातःसन्ध्यां ततः कृत्वा संकल्पं बुध आचरेत् । प्रातःसंकल्पयेद्विद्वानुपवासव्रतादिकम्" ॥ ब्रह्मवैवर्त्तः । "मन्वादिदिवसे प्राप्ते यत्फलं स्नानपूजनैः । फलं भाद्रपदेऽष्टम्यां भवेत् कोटिगुणं द्विज !" ॥ तथा "अस्यां तिथौ वारिमात्रं यः पितॄणां प्रयच्छति । गयाश्राद्धं कृतं तेन शताब्दं नात्र संशयः" ॥ पूजा च मध्यरात्रे । "कृष्णाष्टम्यान्तु रोहिण्यामर्द्धरात्रेऽर्च्चनं हरेः" । इति गारुडाद्वक्ष्यमाणवचनजाताच्च । अन्यदाप्युक्ता भविष्ये । "त्रिकाले पूजयेद्देवं दिवारात्रौ विशेषतः । अर्द्धरात्रावपि तथा पुष्पैर्नानाविधैरपि" ॥ अत्र भविष्यपुराणभविष्योत्तराभ्यां संक्षिप्य पूजाविधिरभिधीयते । "पार्थ ! तद्दिवसे प्राप्ते दन्तधावनपूर्वकम् । उपवासस्य नियमं गृह्णीयाद्भक्तिभावतः ॥ वासुदेवं समुद्दिश्य सर्वपापप्रशान्तये । उपवासं करिष्यामि कृष्णाष्टम्यां नभस्यहम् ॥ अद्य कृष्णाष्टमीं देवीं नभश्चन्द्रसरोहिणीम् । अर्च्चयित्वोपवासेन भोक्ष्येऽहमपरेऽहनि ॥ एनसो मोक्षकामोऽस्मि यद्गोविन्द ! त्रियोनिजम् । तन्मे मुञ्चतु मां त्राहि पतितं शोकसागरे ॥ आजन्ममरणं यावद्यन्मया दुष्कृतं कृतम् । तत् प्रणाशय गोविन्द ! प्रसीद पुरुषोत्तम !" ॥ एतन्मन्त्रचतुष्टयं

संवत्सरप्रदीपधृतं तथा "एकेनैवोपवासेन कृतेन कुरुनन्दन!। सप्तजन्म कृतात् पापान्मुच्यते नात्र संशयः" ॥ गृहमुपक्रम्य तथा "तन्मध्ये प्रतिमा स्थाप्या काञ्चनादिविनिर्मिता। प्रतप्तकाञ्चनाभासा देवकी सुतपस्विनी ॥ माञ्चापि बालकं सुप्तं प्रसूता नीरदच्छविम्। वसुदेवोऽपि तत्रैव खड्गचर्मधरः स्थितः॥ यशोदा चापि तत्रैव प्रसूतवरकन्यका। बलभद्रस्तथा नन्दो दक्षो गर्गश्चतुर्मुखः ॥ एवं प्रपूजयेद्भक्त्या गन्धपुष्पाक्षतैः फलैः"। तथा "स्थण्डिले स्थापयेद्देवीं सचन्द्रां रोहिणीं तथा। देवकीं वसुदेवञ्च यशोदां नन्दमेव च॥ चण्डिकां बलदेवं संपूज्य पापैः प्रमुच्यते। अर्द्धरात्रे वसोर्धारां पातयेद्गुडसर्पिषा। ततो वर्द्धापनं षष्ठीं नामादेः करणं मम। कर्त्तव्यं तत्क्षणाद्रात्रौ प्रभाते नवमीदिने। यथा मम तथा कार्य्यो भगवत्या महोत्सवः॥ ब्राह्मणान् भोजयेद्भक्त्या तेभ्यो दद्याच्च दक्षिणाम्। सुवर्णं काञ्चनं गाश्च वासांसि कुसुमानि च॥ यद्यदिष्टतमं लोके कृष्णो मे प्रीयतामिति। यं देवं देवकी देवी वसुदेवादजीजनत्॥ भौमस्य ब्राह्मणो गुप्त्यै तस्मै ब्रह्मात्मने नमः। सुब्रह्म वासुदेवाय गोब्राह्मणहिताय च॥ शान्तिरस्तु शिवञ्चास्तु इत्युक्त्वा तान् विसर्जयेत्। एवं यः कुरुते देव्या देवक्याः सुमहोत्सवम्॥ वर्षे वर्षे भगवतो मद्भक्तो धर्मनन्दन!॥ नरो वा यदि वा नारी यथोक्तं फलमाप्नुयात्। पुत्रसन्तानमारोग्यं धनधान्यर्द्धिं मद्गृहम्"॥ तथा "सम्पर्केणापि यः कुर्य्यात् कश्चिज्जन्माष्टमीव्रतम्। विष्णुलोकमवाप्नोति सोऽपि नास्त्यत्र संशयः॥ जयन्त्यामुपवासश्च महापातकनाशकः। सर्वैः कार्य्यो महाभक्त्या पूजनीयश्च केशवः॥ तुष्ट्यर्थं देवकीसूनोर्जयन्तीसंज्ञकं व्रतम्। कर्त्तव्यं चिन्त्यमानेन भक्त्या भक्तजनैरिह॥ अकुर्वन् निरयं याति यावदिन्द्राश्चतुर्दश"। वर्द्धापनं नाड़ीच्छेदनम्। सुवर्णमत्राशीतिरक्तिकापरिमितं हेम काञ्चनं ततो न्यूनं काञ्चनमित्यत्र मेदिनीमिति क्वचित् पाठः। भौमस्य पृथिवीसम्बन्धिनः कृष्णो मे प्रीयता मित्युक्त्वा दद्यादित्यनेनान्वयः। तान् ब्राह्मणान् भक्तजनैरिति तैः सहेत्यर्थः अतएव विष्णुपुराणम्। "सदृश सन्निकर्षो हि क्षणार्द्ध-

मपि ग्रस्यति"। अत्र पूजोपवासयोः प्रधानत्वेनाकाङ्क्षा-
विरहादनन्वये अन्यतरस्य गुणत्वमवश्यं वाच्यम् एवञ्च पूजै-
वाङ्गम् उपवासस्तु प्रधानं उपवासस्य नियममित्युपक्रमे श्रव-
णात्तत्रैव विध्यन्वयात्। अङ्गस्य प्रधानविधिविधेयत्वेन पूजाया
विध्यन्तरानपेक्षणात् अतएवोपसंहारेऽपि जयन्त्यामित्यादिना
उपवासमभिधाय पूजनीयश्चेत्यभिहितम्। न चैवं पूजने
फलानुपपत्तिः "यस्य पर्व्वमयीर्जुहूर्भवति न स पापश्लोकं
शृणोति" इत्यादौ गुणेऽपि फलश्रवणात्। अतएव ब्रह्मवैवर्त्तः
नृणां विना व्रतेनापि भक्तानां वित्तवर्जिनाम्। कृते नैवोपवा-
सेन प्रीतो भवति माधवः॥ भक्त्या विनोपचारेण रात्रौ जाग-
रणेन च। फलं यच्छति दैत्यारिर्जयन्तीव्रतसम्भवम्॥
वित्तशाठ्यमकुर्वाणः सम्यक्फलमवाप्नुयात्। कुर्वाणो वित्त-
शाठ्यन्तु लभतेऽसदृशं फलम्"॥ विना व्रतेन पूजाद्यङ्गं विना।
एवञ्च करणे फलश्रुतेरकरणे प्रागुक्त श्रावणे बहुले पक्षे इत्या-
दिना दोषश्रुतेश्चास्य काम्यत्वं नित्यत्वञ्च। ननु काम्यत्वम-
नित्यत्वं असति कामे परित्यक्तुं शक्यत्वात् तथा सत्ये कस्य
कर्म्मणो नित्यत्वकाम्यत्वाभ्यां द्वैरूप्याङ्गीकारे नित्यानित्य-
संयोगविरोधः नैवं संयोगपृथक्त्वन्यायात्। स च न्यायो
यथा खादिरे पशुं बध्नाति खादिरं वीर्य्यकामस्य यूपं कुर्वी-
तेति श्रूयते। अत्र संशयः किं काम्यस्यैव खादिरता नित्येऽपि
स्यात् उत नेति अत्र फलार्थत्वेनानित्यतया नित्यप्रयोगाङ्गता
न युक्ता यत्तु नित्येऽपि खादिरत्वश्रवणं तत्काम्यस्यैव पशुबन्ध-
नाय यूपाश्रयज्ञापनार्थम् अतो न नित्ये खादिरतेति प्राप्ते
राद्धान्ताय चतुर्थाध्याय सूत्रम् एकस्य च उभयत्वे संयोग-
पृथक्त्वमिति अत्र संयोगः सम्बन्धमात्रम्। एकस्य खादिरस्य
क्रत्वर्थपुरुषार्थत्वरूपोभयात्मकत्वे वाक्यद्वये क्रतुशेषत्व फल-
शेषत्व लक्षणसंयोगभेदावगमात् न नित्यानित्यसंयोगविरोधः।
न च आश्रयज्ञापनार्थं नित्यवाक्यं सन्निधानादेवाश्रय लाभा-
दत उभयार्था खादिरतेति। "एवं दध्ना जुहोति दध्नेन्द्रिय
कामस्य" इत्यादावुभयार्थतैव दधित्वस्य द्वेधाश्रवणात्। गरुड़-
भविष्योत्तरवचनानि राजमार्त्तण्ड कृत्यचिन्तामणि धृतानि

यथा "तमेवोपवसेत् कालं रात्रौ कुर्य्याच्च जागरम्। एकाग्रेणेव भावेन विष्णोर्नामानुकीर्त्तयन्॥ अनघं वामनं शौरिं वैकुण्ठं पुरुषोत्तमम्। वासुदेवं हृषीकेशं माधवं मधुसूदनम्॥ वराहं पुण्डरीकाक्षं नृसिंहं दैत्यसूदनम्। दामोदरं पद्मनाभं केशवं गरुड़ध्वजम्॥ गोविन्दमच्युतं कृष्णमनन्तमपराजितम्। अधोक्षजं जगन्नाथं सर्गस्थित्यन्तकारिणम्॥ अनादि निधनं विष्णुं त्रिलोकेशं त्रिविक्रमम्। नारायणं चतुर्वाहुं शङ्खचक्रगदाधरम्॥ पीताम्बरधरं नित्यं वनमालाविभूषितम्। श्रीवत्साङ्कं जगत्सेतुं श्रीकृष्णं श्रीधरं हरिम्॥ प्रपद्येऽहं सदा देवं सर्वकामप्रसिद्धये। एवं पठित्वा वरदं कृष्णं वन्देत भक्तितः॥ प्रणमामि सदा देवं वासुदेवं जगत्पतिम्। नामान्येतानि संकीर्त्त्य गत्यर्थं प्रार्थयेन्नरः॥ त्राहि मां सर्वलोकेश! हरे! संसारसागरात्। त्राहि मां सर्वपापघ्न! दुःखशोकार्णवात् प्रभो!॥ सर्वलोकेश्वर! त्राहि पतितं मां भवार्णवे। देवकीनन्दन! श्रीश! हरे! संसारसागरात्॥ त्राहि मां सर्वदुःखघ्न! रोगशोकार्णवात् हरे!। दुर्गतां स्त्रायसे विष्णो! ये स्मरन्ति सकृत् सकृत्॥ सोऽहं देवातिदुर्वृत्तस्त्राहि मां शोकसागरात्। पुष्कराक्ष! निमग्नोऽहं मायाविज्ञानसागरे॥ त्राहि मां देवदेवेश! त्वत्तो नान्योऽस्ति रक्षिता"। ततश्चोपवास पूर्वदिने नियमं विधाय तद्दिने प्रातःस्नानादिकं विधाय "सूर्य्यः सोमोयमःकालःसन्ध्ये भूतान्यहःक्षपाः। पवनो दिक्पतिर्भूमिराकाशं खचराऽमराः॥ ब्राह्मं शासनमास्थाय कल्पध्वमिह सन्निधिम्" इति पठित्वा "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्"॥ इति मन्त्रेण नारायणं संस्मृत्य तत्सदित्युच्चार्य्य उदङ्मुखो दर्भत्रयफलपुष्पतिल जलादिपूर्णं यथा लाभोपपन्नं वा पात्रं गृहीत्वा श्रीकृष्णजन्माष्टमीव्रतम् अद्येत्यादिना संकल्पयेत् यद्युपवासदिने प्रातःसप्तमी तदा सप्तम्यां तिथावारभ्येति वक्तव्यं "धर्माय धर्मेश्वराय धर्मपतये धर्मसम्भवाय गोविन्दाय नमो नमः"। इत्युच्चार्य्य प्रागुक्तवासुदेवं समुद्दिश्येति मन्त्रचतुष्टयं पठेत्। अर्द्धरात्रे तु प्रणवादि नमोऽन्तैस्तत्तन्नामभिर्वासुदेव देवकी वसुदेव यशोदानन्द

रोहिणीचण्डिका बलदेवान् पूजयेत्। दक्षगर्गचतुर्मुखानपि तथा संवत्सर प्रदीपे भविष्योत्तरीयम्। बलभद्रस्तथा नन्दो दक्षोगर्गश्चतुर्मुखः। पूजनीयस्तथा भक्त्या गन्धपुष्पाक्षतैर्जलै" ॥ ततश्च "माञ्चापि बालकं सुप्तं पर्य्यङ्के स्तनपायिनम्। श्रीवत्स-वक्ष:पूर्णाङ्गं नीलोत्पलदलच्छविम्" ॥ इति भविष्योत्तरीय-ध्यानं कृत्वा गरुड़पुराणोक्तैर्मन्त्रैः विशेषे इतरत्र प्रणवादि नमोऽन्तेन श्रीकृष्णनाम्ना पूजनम्। अर्घ्ये तु। "यज्ञाय यज्ञेश्वराय यज्ञपतये यज्ञसम्भवाय गोविन्दाय नमो नमः"। इति स्नाने तु "योगाय योगेश्वराय योगपतये योगसम्भवाय गोविन्दाय नमो नमः" इति एवं नैवेद्ये एवं विश्वायेत्यादि घृततिलाभ्यां होमे धर्मायेत्यादि स्वाहान्तेन शयने विश्वा-येत्यादि ततो देवक्यादि पूजा कार्य्या "पादावमुञ्चयन्ती श्रीर्देवक्याश्चरणान्तिके। निषण्णा पङ्कजे पूज्या नमो देव्यै श्रियै" इति संवत्सर प्रदीपधृतवचनात् श्रीपूजापि ततो गुड़घृतैर्वसोर्धारां नाड़ीच्छेदनं षष्ठीपूजनं नामकरणादिकञ्च कुर्य्यात्। "पूजयेयुर्द्विजाः सर्वे स्त्रीशूद्राणाममन्त्रकम्। चन्द्रो-दये शशाङ्काय दद्यादर्घ्यं हरिं स्मरन्" ॥ तद्विधिश्च "शङ्खे तोयं समादाय सपुष्पकुशचन्दनम्। जानुभ्यां धरणीं गत्वा चन्द्रायार्घ्यं निवेदयेत्" ॥ अर्घ्यमन्त्रः "क्षीरोदार्णवसंभूत! अत्रिनेत्रसमुद्भव!। गृहाणार्घ्यं शशाङ्केदं रोहिण्या सहितो मम ॥ सोमाय सोमेश्वराय सोमपतये सोमसम्भवाय गोवि-न्दाय नमो नमः"। प्रणाममन्त्रो यथा "ज्योत्स्नायाः पतये तुभ्यं जोतिषां पतये नमः। नमस्ते रोहिणीकान्त! सुधावास! नमोऽस्तु ते ॥ नभोमण्डलदीपाय शिरोरत्नाय धूर्जटेः। कलाभिर्वर्द्धमानाय नमश्चन्द्राय चारवे" ॥ ततस्तानघं वामनमित्यादिना "प्रणमामि सदा देवं वासुदेवं जगत्पतिम्" इत्यन्तेन नामकीर्त्तन प्रणामौ त्राहि मामित्यादिना त्वत्तो नान्योऽस्ति रक्षितेत्यन्तेन "यद्बाल्ये यच्च कौमारे वार्द्धके यच्च यौवने। तत्पुण्यं वृद्धिमाप्नोतु पापं हर हलायुध!" इति शिव-रहस्यीयेन प्रार्थनं कुर्य्यात् "ततः स्तोत्रैः स्तुतिं कृत्वा वासुदेवं जनार्दनम्। गीतवादित्रनृत्यैश्च शेष कालं यथासुखम्" नये-

दिति शेषः । परदिने प्रातर्भगवन्तं यथाविधि संपूज्य दुर्गायाश्च महोत्सवः कार्य्यः ततो ब्राह्मणान् भोजयेत् तेभ्यो दक्षिणाञ्च स्वर्णादि यत्किञ्चिदिष्टतमं कृष्णो मे प्रीयतामित्युक्त्वा दद्यात् ततः यं देवमित्यादि शान्तिरस्तु शिवञ्चास्तु इति मन्त्रं पठित्वा ब्राह्मणान् विसर्जयेत् ततः पारणं कुर्य्यात् तन्मन्त्रः । "सर्वाय सर्वेश्वराय सर्वपतये सर्वसम्भवाय गोविन्दाय नमो नमः"। पारणानन्तरं समापनमन्त्रं भूताय इत्यादिकं पठेत् ।

अथ व्रतकालव्यवस्था । तत्रार्द्धरात्रे रोहिणीकृष्णाष्टम्यो-र्लाभे जन्माष्टमीव्रताय स एव कालः तस्य मुख्यत्वेनाभि-धानात् । तथा च वशिष्ठः "अष्टमीरोहिणीयुक्ता निशार्द्धे दृश्यते यदि । मुख्यः कालः स विज्ञेयस्तत्र जातो हरिः स्वयम्" ॥ भविष्यपुराणविष्णुधर्मोत्तरयोः । "अर्द्धरात्रे तु रोहिण्यां यदा कृष्णाष्टमी भवेत् । तस्यामभ्यर्च्चनं सौरेर्हन्ति पापं त्रिजन्मजम् ॥ सोपवासो हरेः पूजां कृत्वा तत्र न सीदति"। अयमेव जयन्त्याख्यो योगः । तथा च वराह-संहितायां "सिंहार्के रोहिणीयुक्ता नरा: कृष्णाष्टमी यदि । रात्र्यर्द्धपूर्वापरगा जयन्ती कलयापि च" इति विष्णुधर्मो-त्तरादिपुराणयोः । "रोहिणी सहिता कृष्णा मासि भाद्रपदे-ऽष्टमी । सप्तम्यामर्द्धरात्राधः कलयापि यदा भवेत् । तत्र जातो जगन्नाथः कौस्तुभी हरिरीश्वरः । तमेवोपवसेत् कालं तत्र कुर्य्याच्च जागरम्" ॥ इत्यत्र "अविद्धायाञ्च सर्क्षायां जातो देवकीनन्दनः"। इति सप्तम्यवेधे जन्म श्रवणं कल्प-भेदादविरुद्धं सप्तम्यामर्द्धरात्राध इत्यत्र अर्द्धरात्रादधश्चोर्द्धमिति भविष्यपुराण-वायुपुराणयोः पाठः । स्कान्दे "जयं पुण्यञ्च कुरुते जयन्तीमिति तां विदुः । रोहिणी सहिता कृष्णा मासे च श्रावणेऽष्टमी ॥ अर्द्धरात्रादधश्चोर्द्धं कलयापि यदा भवेत् । जयन्ती नाम सा प्रोक्ता सर्वपापप्रणाशिनी" ॥ अन्यत्रापि "अर्द्धरात्रादधश्चोर्द्धमेकार्द्धघटिकान्विता । रोहिणी चाष्टमी ग्राह्या उपवासव्रतादिषु" ॥ एकघटिकान्विता अर्द्धघटिका-न्विता वेत्यर्थः । अतेन यदा सूर्य्योदये स्वल्पाऽप्यष्टमी रोहिणी-युता त्वनन्तरं पूर्णा नवमी सोमवारेण बुधवारेण वा युता

स्यात्तदा सर्वापवादिका सैवोपोष्या इति। यदाह ब्रह्मवैवर्त्तः "उदये चाष्टमी किञ्चिन्नवमी सकला यदि। भवेत्तु बुधसंयुक्ता प्राजापत्यर्चसंयुता॥ अपि वर्षशतेनापि लभ्यते वा न वा विभो!"। पद्मपुराणेऽपि "प्रेतयोनिगतानान्तु प्रेतत्वं नाशितन्तु तैः। यैः कृता श्रावणे मासि अष्टमी रोहिणीयुता। किं पुनर्बुधवारेण सोमेनापि विशेषतः॥ किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा" इति निरस्तं गुणफलानुरोधेन जयन्त्याख्यमुख्यकालबाधायोगात्। स्कान्दे "न करोति यदा विष्णोर्जयन्तीसंज्ञकं व्रतम्। यमस्य वशमापन्नः सहते नारकीं व्यथाम्"॥ भविष्ये "तुष्ट्यर्थं देवकीसूनोर्जयन्तीसंज्ञकं व्रतम्। कर्त्तव्यं चित्तमानेन भक्त्या भक्तजनैरिह॥ अकुर्वन्निरयं याति यावदिन्द्राश्चतुर्दश"। इति जयन्तीलङ्घने प्रत्यवायश्रुतेश्च। बुधसोमलङ्घने प्रत्यवायाश्रवणात् गुणफलत्वमेव महार्णवेऽपि बुधसोमवारयोगो गुणफलायेत्युक्तम्। हेमाद्रिरपि यदा तु यद्दिवस एव रोहिण्यष्टमीयोगस्तदा तत्रैव बुधवारादियोगः फलातिशयः। अन्ये त्वेवमाहुः। यदा पूर्वदिनार्द्धरात्रे रोहिणीयुताष्टमी नोत्तरा तथाविधा सा चेद्बुधे सोमे च भवति तदोत्तरैवोपोष्या न पूर्वा उदये चाष्टमी किञ्चिदिति वचनात्तत्र। यद्यप्यर्द्धरात्रे तु रोहिण्यामित्यादिवाक्यं बुधसोमवारयुक्ताष्टमीव्यतिरिक्तविषयत्वेन सावकाशम्। बुधसोमवाक्यञ्च द्वितीयदिवस एव रोहिणीयोगे सावकाशं तथापि बुधसोमवाक्यस्य सङ्कोचे कर्मकालव्यापितिथिसम्भवादर्द्धरात्रवाक्यस्य सङ्कोचे तद्बाधप्रसङ्गात्। तथा च बुधसोमवाक्यस्यैव सङ्कोचो नार्द्धरात्रवाक्यस्येत्यन्तेनाह। माधवाचार्य्योऽप्येवम्। किन्त्वयं योगो बुधसोमवारे प्रातः किञ्चिदष्टमी अनन्तरं तद्दिने नवमी च उभयतिथ्योरेव रोहिणी स्यात् तदैव भवति। ब्रह्मवैवर्त्ते "उदये चाष्टमी किञ्चिन्नवमी सकला यदि" इत्यत्र सकलेति विशेष्याभिधानात् अतएव अपि वर्षशतेनापीत्युपपद्यते अस्य ग्राह्यता च जयन्त्यलाभ एव प्रागुक्तयुक्तेः ननु बुधसोमवारवदष्टम्यां रोहिणीयोगो गुणफलमस्तु मैवं तिथिद्वैधे रोहिण्या-नियामकत्वेनाभिधानात्। तथा हि स्मृतिः "प्राजापत्यर्च-

संयुक्ता कृष्णा नभसि चाष्टमी । मुहूर्त्तमपि लभ्येत सैवोपोष्या महाफला" ॥ वशिष्ठः "वासरे वा निशायां वा यदा युक्ता तु रोहिणी । विशेषेण नभो मासि सैवोपोष्या सदा तिथिः" ॥ अनयोरेवकारश्रुतेः । "एकादशीशताद्राजन्नधिकं रोहिणीव्रतम् । ततो हि दुर्लभं मत्वा तस्यां यत्नं समाचरेत्" ॥ इति ब्रह्माण्डपुराणे रोहिणीव्रतमिति श्रवणाच्च बुधादिवाक्यन्तु न नियामकं प्रमाणाभावात् प्रत्युत फलश्रुतेर्गुणफलबोधत्वमिति । एवञ्च तिथिविशेषनिर्यान्त्रितापवादविधावेवकारश्रुतेः षष्टिदण्डात्मिकामप्यष्टमीं रोहिणीरहितां परित्यज्य रोहिणीसहिता स्वल्पाप्यष्टमी उपोष्या यदा तु परदिनेऽपि रोहिणीरहिता तदा पूर्व्वैवोपोष्या । "षष्टिदण्डात्मिकायाश्च तिथेर्निष्क्रमणे परे । अकर्मण्यं तिथिमलं विद्यादेकादशीं विना" इत्यनपोदित सामान्यविषयत्वात् वक्ष्यमाणवचनजाताच्च । यदा तूभयदिने जयन्तीयोगस्तदा परेद्युरुपवासः सङ्कल्पकालमारभ्य तिथिव्याप्तिसम्भवात् अतएव बौधायनः "यो यस्य विहितः कालः कर्मणस्तदुपक्रमे । तिथिर्याभिमता सा तु कार्य्या नोपक्रमोज्झिता" ॥ सङ्कल्पकालः प्रातरेव प्रातःसङ्कल्पयेद्विद्वानित्यादि वराहपुराणात् "प्रातःसन्ध्यां ततः कृत्वा सङ्कल्पं बुध आचरेत्" इति संवत्सरप्रदीपवचनात् "उदये तूपवासस्य नक्तस्यास्तमये तिथिः । मध्याह्नव्यापिनी ग्राह्या एकभक्ते सदा तिथिः" इति बौधायनवचनेनोपवासे उदयगामि तिथेर्विधानात् नक्षत्रस्यास्तनिशीथसम्बन्धेन बलवत्त्वात् तिथेस्त्रिसन्ध्यव्यापित्वाच्च । तथा च भविष्यपुराणविष्णुधर्मोत्तरयोः "उपोषितव्यं नक्षत्रं येनास्तं याति भास्करः । यत्र वा युज्यते राम निशीथे शशिना सह" ॥ निशीथेऽर्द्धरात्रे । पराशरः । "त्रिसन्ध्यव्यापिनी या तु सैव पूज्या सदा तिथिः । न तत्र युग्मादरणमन्यत्र हरिवासरात्" ॥ किं पुनर्नवमीयुक्ता इति लिखिष्यमाणवचनाच्च । एतद्विषयं एव ब्रह्मवैवर्त्तवचनं "वर्जनीया प्रयत्नेन सप्तमी सहिताष्टमी । सा सर्क्षापि न कर्त्तव्या सप्तमी सहिताष्टमी । अविद्धायान्तु सर्क्षायां जातो देवकीनन्दनः" ॥ यत्तु विष्णुधर्मोत्तरे "जयन्ती

शिवरात्रिश्च कार्य्ये भद्रजयान्विते। कृत्वोपवासं तिथ्यन्ते तदा कुर्य्याच्च पारणम्”॥ गरुड़पुराणविष्णुधर्म्मोत्तरयोः “जयन्त्यां पूर्वविद्धायामुपवासं समाचरेत्। तिथ्यन्ते वोत्सवान्ते वा व्रती कुर्वीत पारणम्”॥ तत्पूर्वदिनमात्रे जयन्तीलाभे विद्धा प्रतिप्रसवाय बोध्यम्। यदा तु विना जयन्तीयोग-मुभयदिने रोहिणीयुताष्टमी लभ्यते तदापि परेद्युरुपवासः। तथा च कालमाधवीये स्कन्दपुराणब्रह्मवैवर्त्तयोः। सप्तमी सहिताष्टम्यां भूत्वा ऋक्षं द्विजोत्तम। प्राजापत्यं द्वितीयेऽह्नि मुहूर्त्तार्द्धं भवेद्यदि। तदाष्टयामिकं ज्ञेयं प्रोक्तं व्यासादिभिः पुरा। मुहूर्त्तेनापि संयुक्ता सा सम्पूर्णाष्टमी स्मृता। किं पुन-र्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा” मुहूर्त्तार्द्धमप्याष्टयामिकं सम्पूर्णदिनं तत्कार्य्यकारित्वात्। पद्मपुराणे “पूर्वविद्धाष्टमी या तु उदये नवमी दिने। मुहूर्त्तेनापि संयुक्ता सा सम्पूर्णा-ष्टमी भवेत्। कला काष्ठा मुहूर्त्तापि यदा कृष्णाष्टमी तिथिः। नवम्यां सैव ग्राह्या स्यात् सप्तमी संयुता न हि”। संयुता रोहिण्येति शेषः। रोहिणीरहितायान्तु तथाविधायां पूर्व-दिन एवोपवासस्य वक्ष्यमाणत्वात्। यत्तु सप्तमी रात्रिशेषे रोहिणीसहिताष्टमी परदिने च रोहिणी नास्तव्यापिनी तदा पूर्वेद्युरुपवासो बलवन्नक्षत्रसम्बन्धादित्युक्तं तच्चिन्त्यं बलवन्नक्षत्रसम्बन्धस्य सामान्यस्य प्रागुक्तब्रह्मवैवर्त्तस्कन्द-पुराणविशेषवचनैरप्रयोजकीकृतत्वात्। एवञ्च “व्रतोपवास-स्नानादौ घटिकैका यदा भवेत्। सा तिथिः सकला ज्ञेया पित्रर्थे चापराह्णिकी” इति देवलवचनस्याप्यत्र न विषयः कलाकाष्ठादिविशेषवचनात्। न च सप्तमीसहिताष्टम्या-मित्युपक्रमात् एवं सप्तमी सहिता न हीत्युपादानाच्च ब्रह्म-वैवर्त्तवचनाद्यविषयत्वे पूर्णाखण्डयोर्जयन्तीं विना रोहिणी-योगे परदिने कथमुपवास इति वाच्यं किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा इत्यनेन नवमीयोगस्य तत्रापि हेतुत्वेन कीर्त्तनात्तस्यात्रापि सत्त्वात्। तिथिद्वैधे उपवासनियामकस्य नक्षत्रस्योभयदिनलाभे प्रागुक्तेनोपोषितव्यमित्यादि भविष्य-पुराणविष्णुधर्म्मोत्तरीयेण परदिननियमितत्वाच्च। तिथिविवेके

प्येवम् एवञ्च नक्षत्रासम्बन्धे अष्टम्यां पूर्णायां नास्ति विप्रतिपत्तिः त्रिसन्ध्यव्यापित्वात्। खण्डायान्तु निशीथसम्बन्धिन्यामुपवासः। तथा च माधवाचार्य्यधृत पराशरवचनम्। "दिवा वा यदि वा रात्रौ नास्ति चेद्रोहिणीकला। रात्रियुक्तां प्रकुर्वीत विशेषेणेन्दुसंयुताम्"। नारदीयसंहितायामपि "उपोष्य जन्मचिह्नानि कुर्य्याज्जागरणन्तु यः। अर्द्धरात्रयुताष्टम्यां सोऽश्वमेधफलं लभेत्"॥ अत्र अर्द्धरात्रश्रुतेर्विशेषेणेन्दुसंयुतामित्यत्रापि तथा। एवञ्च पूर्वेद्युरेवाष्टम्यां निशीथयोगे तदैवोपवासः। "कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रि चतुर्दशी। एताः पूर्वयुताः कार्य्यास्तिथ्यन्ते पारणं भवेत्" इति वशिष्ठ ब्रह्मवैवर्त्तपैठीनसिवचनस्याप्येष एव विषयः। कृष्णाष्टमी कृष्णजन्माष्टमी स्कन्दषष्ठ्यादि साहचर्य्यात् तिथ्यन्ते पारणविधानाच्च। अत्रैव विषये तिथेरस्तगामित्वे विष्णुपुराणम्। "अलाभे रोहिणीभस्य कार्य्याष्टम्यस्तगामिनी। तत्रोपवासं कृत्वैव तिथ्यन्ते पारणं स्मृतम्"॥ एतादृग्वचनं भविष्येऽपि किन्तु तत्रोपवासः कर्त्तव्य इति तृतीयचरणे पाठः। न चैतद्वचनयोः पूर्वेद्युरेव निशीथप्राप्तौ परेद्युरस्तगामित्वमात्रेऽपि विषय इति वाच्यं विशेषेणेन्दुसंयुतामित्यस्यार्द्धरात्रयुताष्टम्यामित्यस्य च बाधापत्तेः तिथ्यन्ते पारणं भवेदित्यनुवादापत्तेश्च। त्रिसन्ध्यव्यापिनीत्यस्य कर्म्मोपक्रमकालीन तिथिनियामकस्य च तिथिसामान्यविषयकस्य विशेषेणेन्दुसंयुतामित्यनेन अर्द्धरात्रयुताष्टम्यामित्यनेन च जन्माष्टमीमात्रविषयकेण बाधितत्वात्। एवञ्च परदिनमात्रे उभयदिने वा निशीथसम्बन्धे उभयदिने वा तदसम्बन्धे परेद्युरेवोपवासः सङ्कल्पकालानुरोधात्तिथेस्त्रिसन्ध्यव्यापित्वाच्च। "विना ऋक्षेण कर्त्तव्या नवमीसंयुताष्टमी" इत्यादि पुराणाच्च। माधवाचार्य्यप्रभृतयोऽप्येवम्।

अथ पारणकालः। पारणकालश्च भविष्य विष्णुरहस्य ब्रह्मवैवर्त्तेषु। "अष्टम्यामथ रोहिण्यां न कुर्य्यात् पारणं क्वचित्। हन्यात् पुरा कृतं कर्म उपवासार्जितं फलम्। तिथिरष्टगुणं हन्ति नक्षत्रञ्च चतुर्गुणम्। तस्मात् प्रयत्नतः कुर्य्यात्तिथिभान्ते च पारणम्"॥ अत्र उभयवियोगे पारण-

मुक्तम्। यदा च सार्द्धप्रहरनिशाभ्यन्तरे एकस्य वियोग-स्तदैकतरवियोगेऽपि पारणम्। तथा च नारदीये "तिथि-नक्षत्रसंयोगे उपवासो यदा भवेत्। पारणन्तु न कर्त्तव्यं यावन्नैकस्य संक्षयः। सांयोगिके व्रते प्राप्ते यद्येकोऽपि वियु-ज्यते। तत्रैव पारणं कुर्य्यादेवं वेदविदो विदुः"॥ यद्येकस्यापि सार्द्धप्रहरनिशाभ्यन्तरे न वियोगस्तदा तयोरवियोगेऽपि प्रात-रुत्सवान्ते पारणं "तिथ्यन्ते चोत्सवान्ते वा व्रती कुर्वीत पारणम्" इत्युक्तवचनात्। निर्णयामृते तु प्रतिकुर्वीत पारण-मिति पाठः। न च भोजनस्य रागप्राप्तत्वेन विधित्वासम्भवात् तिथिनक्षत्रयोर्वियोगं विना न पारणं कुर्य्यादित्येवार्थं इति वाच्यम्। "उपवासेषु सर्वेषु पूर्वाह्णे पारणं भवेत्। अन्यथा तु फलस्यार्द्धं धर्ममेवोपसर्पति" इति देवलवचने पारणनिय-मात्। किञ्च यदि पारणमङ्गं न स्यात्तदा प्रतिनिधिविधानं नोपपद्येत। तथा च कात्यायनः "सन्ध्यादिकं भवेन्नित्यं पारणन्तु निमित्ततः। अद्भिस्तु पारयित्वा तु नैत्तिकान्ते भुजि-क्रिया" इति। अतएव हेमाद्रिप्रभृतिधृतवचनं "तिथ्यृक्षयो-र्यदाभेदो नक्षत्रस्यान्त एव वा। अर्द्धरात्रेऽथवा कुर्य्यात् पार-णन्त्वपरेऽहनि"॥ यदा रात्रेः सार्द्धप्रहरमतिक्रम्य तिथि-नक्षत्रयोर्विच्छेदः अथवा केवलस्य नक्षत्रस्यान्तस्तदाऽपरेऽहनि उपवासपरदिने पारणं कुर्य्यात् नक्षत्रस्येत्येकतरोपलक्षणम्। हेमाद्रिस्तु यदा परदिनेऽर्द्धरात्रादुपरिभान्तस्तिथ्यन्तो वा भवति तदा अर्द्धरात्रे पारणं कुर्य्यात् इत्याह। तन्न, वर्जयित्वा महा-निशामिति वक्ष्यमाणवचनविरोधात् अर्द्धरात्रादुपरिभान्तस्ति-थ्यन्तो वा भवतीत्यर्थे प्रमाणं नास्ति किन्त्वर्द्धरात्र एव तदधि-करणं सन्निधानात् तु कारणार्द्धरात्रं व्यवच्छिद्य उपवास-दिनात् परदिने पारणं विधीयते। जीमूतवाहनस्तु न हि तिथिभान्ते च पारणमिति पारणकर्त्तव्यतापरं येन तदन्त एव विधिः। किन्तु नक्षत्रे तिथौ च वर्त्तमाने न कुर्य्या-दिति तात्पर्य्यं तत्रैव दोषश्रुतेः रागप्राप्तभोजनानुवादेन तिथिनक्षत्रेतरकाले पारणं कुर्य्यादिति वा विधिः। स च रात्रिशेषे भोजनेऽप्यविरुद्धः तृतीय एवाहनि पारणं

भविष्यति ग्रहणेऽपरेऽहनीतिवन्नियमाभावादित्याह। तन्न, पारणविधेर्नियमरूपतयोक्तत्वात् रात्रिशेषे भोजनस्याविहितत्वात्। तथा च ब्रह्मवैवर्त्ते "त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम्। नाड़ीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते"॥ एतद्वचनबलात् महानिशा परकालस्य नाड़ीचतुष्टयस्य परदिनादित्वेन तदानीं पूर्वदिवसीय भोजनानुपपत्तेः तद्दिनकृत्यलोपापत्तेश्च। अतएव "मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा" इत्युक्तम्। कात्यायनोऽपि "मुनिभिर्द्दिरशनं प्रोक्तं विप्राणां मर्त्यवासिनां नित्यम्। अहनि च तथा तमस्विन्यां सार्द्धप्रहर यामान्तः"॥ इत्यनेन रात्रौ सार्द्धप्रहराभ्यन्तर एव भोजनं न तु तत्परत आह ग्रहणवदपरेऽहनि पारणेऽपि दत्तवचनाच्च केचित् तु तिथ्यृक्षयोरितिवचने अपरेऽहनि उपवासतृतीयदिवसे पारणं कुर्य्यात्। यथा वचनबलात् पारणे औत्सर्गिक पूर्वाह्णपरित्यागेऽपि न व्रतवैगुण्यं तथात्राप्यौत्सर्गिक द्वितीय दिनपरित्यागेऽपि न तथात्वमिति। यत्पुनरुभयसत्वे रात्रावेव तत्रैव दिवसे पारणविधायकं तिथ्यृक्षयोरिति वचनं तदसत् अपरेऽहनीत्यत्रापर इत्यस्य वैयर्थ्यापत्तेः। यथा श्रुतार्थपरतयैवोपपन्नस्य वचनस्य तिथिनक्षत्रसत्त्वे पारणनिषेधकानां वचनानां बाधने सामर्थ्याभावादित्याहुः। तन्न औत्सर्गिक द्वितीयदिन परित्यागे प्रमाणमेव नास्ति तिथ्यृक्षयोरिति वचनञ्चेदस्य तद्रूपार्थत्वे प्रमाणं नास्ति। न च अपर इत्यस्य वैयर्थ्यापत्त्या तथात्वमिति वाच्यं तथात्वे निःसन्देहार्थं न परेऽहनीत्येवं ब्रूयात्।

वस्तुतस्तु पारणन्त्वपरेऽहनीत्यनेन अवश्यवक्तव्योपोषित तिथ्यृक्षयोर्भेद इत्यत्रोपस्थितोपवासस्य परदिन इत्येव प्रतीयते न तु द्वितीयदिवसस्य परदिने अतएव "अद्य कृष्णाष्टमीं देवीं नभश्चन्द्रसरोहिणीम्। अर्च्चयित्वोपवासेन भोक्ष्येऽहमपरेऽहनि" इति मन्त्रलिङ्गमपि सङ्गच्छते। किञ्चात्रैव वचने नक्षत्रस्यान्त इत्यत्र भोजनार्हकाले एकतरवियोगेऽन्यस्य अर्द्धरात्रवियोगेऽपरेऽहनीत्यस्य सांयोगिक इत्यादि वचनैकवाक्यतया उपवासद्वितीयदिवसपरत्वस्यावश्यवक्तव्यत्वे न अर्द्धरात्रे

उभय वियोगेऽपि तथैव युक्तत्वात्। अन्यथा सांयोगिक इत्यस्य निर्विषयतापत्तेः। एवञ्च "सायमाद्यन्तयोरह्नाः सायं प्रातश्च मध्यमे। उपवासफलं प्रेप्सोर्वर्ज्यं भक्तचतुष्टयम्" इति महाभारतीयौत्सर्गिक द्वितीय दिनपारणस्याप्यवाधः। एतद्विषय एवोत्सवान्ते पारणमाह "तिथ्यन्ते वोत्सवान्ते वा व्रती कुर्वीत पारणम्" इति। न च अत्र तिथ्यन्ते तारकान्ते वेति पाठ इति वाच्यं पूर्वपाठस्य हेमाद्रिनिर्णयामृत माधवाचार्य्यधृतत्वात् व्याख्यातत्वाच्च एतद्विषये ब्रह्मवैवर्त्तः। "सर्वेष्वेवोपवासेषु दिवा पारणमिष्यते। अन्यथा फलहानिः स्याद्दृते धारण पारणम्"॥ धारणं नियमग्रहणं ततश्चागृहीत नक्तव्रतस्य रात्रिपारणनिषेधः। गरुड़ पुराणेऽपि "अन्यतिथ्यागमोरात्रौ तामसस्तेजसो दिवा। तामसे पारणं कुर्वं स्तामसीं गतिमाप्नुयात्"॥ न च यदि प्रथम निशायामेकतरवियोगस्तदापि ब्रह्मवैवर्त्तादि वचनाद्दिवा पारणमनन्तभट्ट माधवाचार्य्योक्तं युक्तमिति वाच्यं "न रात्रौ पारणं कुर्य्याद्दृते वै रोहिणीव्रतात्। निशायां पारणं कुर्य्यात् वर्जयित्वा महानिशां" इति संवत्सरप्रदीपधृतस्य "न रात्रौ पारणं कुर्य्याद्दृते वै रोहिणीव्रतात्। अत्र निश्यपि तत् कार्य्यं वर्जयित्वा महानिशां" इति ब्रह्माण्डोक्तस्य च निर्विषयतापत्तेः। स्त्रीणां यवान्नादि भोजनमप्याह ब्रह्मपुराणं "ततः प्रविश्य च गृहं यवान्नं भुञ्जते च ताः। युक्तमिन्नुविकारैश्च मध्वाज्यमरिचैः सह"॥

तदयं संक्षेपः। यत्रैकदिने जयन्तीलाभस्तत्रैवोपवासः। उभयदिने चेत्तदा परदिने। जयन्त्यलाभे च रोहिणीयुक्ताष्टम्याम्। उभयदिने रोहिणीयुक्ताष्टमीलाभे परदिने। रोहिण्यलाभे तु निशीथसम्बन्धिन्यामष्टम्याम्। उभयदिने निशीथसम्बन्धे तदसम्बन्धे वा परदिन इति। उपवास परदिने तिथिनक्षत्रयोरवसाने पारणम्। यदा तु महानिशायाः पूर्वमेक तरस्यावसान मन्यतरस्य महानिशायां तदनन्तरं वा तदेकतरावसाने पारणम्। यदा महानिशायामुभयस्थितिस्तदोत्सवान्ते प्रातःपारणमिति। इति वन्द्यघटीय श्रीरघुनन्दनभट्टाचार्य्यविरचितं श्रीकृष्णजन्माष्टमीतत्त्वं समाप्तम्।

अथ दूर्वाष्टमी। शुक्लापि पूर्वविद्धा ग्राह्या। "श्रावणी दौर्गनवमी दूर्वा चैव हुताशनी। पूर्वविद्धैव कर्त्तव्या शिवरात्रिर्बलेर्दिनम्" ॥ इति बृहस्पतिवचनात्। बलेर्दिनं द्युतप्रतिपत् हुताशनी रम्भाहृतीया भविष्योत्तरे "पक्षे भाद्रपदस्यैव शुक्लाष्टम्यां युधिष्ठिर। दूर्वाष्टमी व्रतं पुण्यं यः करोतीह मानवः ॥ न तस्य क्षयमाप्नोति सन्तानं साप्तपौरुषम्। नन्दते बर्द्धते नित्यं यथा दूर्वा तथा कुलम्" ॥ भौमपराक्रमे कार्त्तिकशुक्लपक्षमधिकृत्य "गोष्ठाष्टम्यां गवां पूजां गोग्रासं गोप्रदक्षिणम्। गवानुगमनं कुर्य्यात् सर्वपापविमुक्तये"।

आग्रहायण्या ऊर्द्धं तिसृषु कृष्णाष्टमीषु श्राद्धानि नित्यानि यथा गोभिलः "अष्टकायोर्द्धमाग्रहायण्यास्तमिस्राष्टमी" इति ब्रह्मपुराणे "पितृप्रदानाय मूले स्युरष्टकास्तिस्र एव च। कृष्णपक्षे वरिष्ठा हि पूर्वा चैन्द्री विभाव्यते ॥ प्राजापत्याद्वितीया स्यात् तृतीया वैश्वदेविकी। आद्यापूपैः सदा कार्य्या मांसैरन्या भवेत्तथा। शाकैः कार्य्या तृतीया स्यादेष द्रव्यगतो-विधिः" ॥ मूले प्रधानस्थाने अमावास्यायां अमावास्या हि श्राद्धस्य प्रधानकालस्तदर्द्धात यावत्। ऐन्द्रीसाम्नेरिन्द्रदेवताकयागसम्बन्धात्। एवं प्राजापत्या वैश्वदेविकी च मांसैः पशोः। तथाच गोभिलः "यद्युवाल्पतरसम्भारः स्यादपि पशुनैव कुर्य्यात्" इति यद्यु वेति निपातसमुदायो यद्यर्थे पशुरिति छाग एव "छागोऽनादेशे पशुः" इति गोतमात् न च "तस्या ऊर्द्धमष्टम्यां गौः" गोभिलसूत्रेण गवोपदेशात् कथमनुपदिष्टत्वमिति वाच्यं तदसम्भवे पशुरित्यनेन यः पशुरुपदिष्टस्तस्य विशेषतोऽनुपदिष्टत्वात् तैषी पौषी। वस्तुतस्तु हरिवंशे मृगोऽपि विहितः यथा "इक्ष्वाकुस्तु विकुक्षिं वै अष्टकायामथादिशत्। मांसमानय श्राद्धाय मृगं हत्वा महाबल" इति। स्त्रियावधाभावमाह स एव अवध्याश्च स्त्रियं प्राहुस्तिर्य्यग्योनिगतेष्वपि" ॥ एतदर्द्धं ब्रह्मपुराणेऽपि आरण्यानामगस्त्यप्रोक्षितत्वं वक्ष्यते पश्वभावे स्थालीपाकेन यथा गोभिलः "अपि वा स्थालीपाकं कुर्वीत" इति तद्विधानन्तु "स्थालीपाकं पशुस्थाने कुर्य्याद् यद्यानुकल्पितम्।

अपर्येत्तं सवत्सायास्तरुण्या गोः पयस्यनु" ॥ इति छन्दोगपरिशिष्टोक्तं ग्राह्यम् । अन्विति ओदनचरोः पश्चात् अतएव शातातपः "नवोदके नवान्ने च गृहप्रच्छादने सदा । पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च ॥ तस्माद्दद्यात् सदोद्युक्तो विद्वत्सु ब्राह्मणेषु च" ॥ तस्मादन्नं प्रधानं पूपादिकं तूपकरणत्वेन श्राद्धानामावश्यकमुभयत्र सदेति श्रवणात् । तथाच "नित्यं सदा यावदायुर्न कदाचिदतिक्रमेत् । उपेत्यातिक्रमे दोषश्रुतेरत्यागदर्शनात् । फलाश्रुतेर्वीप्सया च तन्नित्यमिति कीर्त्तितम्" ॥ नवोदके वर्षोपक्रमे आर्द्रागते रवाविति यावत् । "आर्द्रादितो विशाखान्तं रविचारेण वर्षति" इति नव्यवर्द्धमानधृतात् । "प्रावृट्काले समायाते रौद्रऋक्षगते रवौ । नाड़ीवेधसमायोगे जलयोगं वदाम्यहम्" ॥ इति रुद्रयामलाच्च । रौद्रमार्द्रानवोदकश्राद्धस्य सावकाशत्वात् त्रयोदश्यादिकनिषेधमाह दीपिकायाम् । "त्रयोदशीं जन्मदिनञ्च नन्दां जन्मर्क्षतारां सितवासरञ्च । त्यक्त्वा हरीज्येन्दुकरान्त्यमैत्र ध्रुवेषु च श्राद्धविधानमिष्टम्" ॥ सितवासरं शुक्रवारम् ऋक्षं राशिः हर्य्यादयः श्रवणपुष्य मृगशिरो हस्तारेवत्यनुराधा उत्तरत्रितयरोहिण्यः । कृष्णपक्षे चेन्नवोदकश्राद्धकालस्तदोभयोः श्राद्धयोस्तन्त्रात् सिद्धिः ।

ज्योतिषे "रजोयुक्च्चाम्बुवाचौ च रौद्राद्यपदगे रवौ । तस्यां पाठो वीजवापो नाह्निभोर्दुग्धपानतः ॥ मृगशिरसि निवृत्ते रौद्रपादेऽम्बुवाची ऋतुमति खलु पृथ्वी वर्जयेत्तौर्य्यहानि । यदि वपति कृषाणः क्षेत्रमासाद्य वीजं न भवति फलभागी शस्यचाण्डालपाकः" । रजोयुक्च्चा ऋतुमती पृथ्वी । मत्स्यसूक्ते "धरण्यामृतुमत्याञ्च भूमिकम्पे तथैव च । अन्तरागमने चैव विद्यां नैव पठेद्बुधः" ॥ ज्योतिषे "यस्मिन् वारे सहस्रांशुर्यत्काले मिथुनञ्चरेत् । अम्बुवाची भवेन्नित्यं पुनस्तत् कालवारयोः" ॥ इदन्तु प्रायिकं सावकाशश्राद्धमधिकृत्य महाभारते "नक्षत्रे न च कुर्वीत यस्मिन् जातो भवेन्नरः । न प्रौष्ठपदयोः कार्य्यं तथाग्नेये च भारत ॥ दारुणेषु च सर्वेषु प्रत्यरौ च विवर्जयेत् । ज्योतिषे यानि प्रोक्तानि तानि सर्वाणि

वर्जयेत्" ॥ प्रोष्ठपदा पूर्वभाद्रपदा द्विनक्षत्रत्वाद्विवचनम् आग्नेयं कृत्तिका दारुणमुक्तं ज्योतिषे। "दारुणञ्चोरग रौद्रमैन्द्रं नैर्ऋतमेव च"। उरगमश्लेषा रौद्रमार्द्रा ऐन्द्रं ज्येष्ठा नैर्ऋतं मूला। विष्णुधर्मोत्तरे च "नक्षत्राणि तथैवात्र दारुणोग्राणि वर्जयेत्"। तत्रोग्रनक्षत्राणि पूर्वात्रयमघाभरण्यः।

नवान्न श्राद्धकालस्य ज्योतिषे। "सूर्य्ये चैव विशाखगे स्मरतिथौ पापे त्रिजन्मान्विते नन्दामन्द महीजकार्य्यादिवसे पौषे मधौ कार्त्तिके। भेषूग्राहिशिवेषु विष्णुशयने कृष्णे शशिन्यष्टमे श्राद्धं भोजनकं नवान्नविहितं पुत्रार्थनाशप्रदम्। "ज्येष्ठाशेषार्द्रगे सूर्य्ये स्वगनेत्रा निशात्मके। नवान्नैर्भोजनं श्राद्धं जन्म चन्द्रे तिथौ न च" ॥ सूर्य्ये चैव विशाखगे मार्गशीर्षस्य विंशति दण्डाधिकप्रथमदिनत्रयावस्थिते स्मरतिथौ त्रयोदश्यां पापे पञ्चमताराक्रये। उग्रनक्षत्रं पूर्वात्रय मघाभरण्यः अहिरश्लेषा शिव आर्द्रा। भोजराजः "ब्रह्मा विष्णु वृहस्पतौ शशधरो मार्त्तण्ड पौष्णादितौ मैत्रे चित्रविशाखवायु धनभे मूलाश्वि वह्नौ तथा। शक्रे वारुण ऋक्षके शुभदिने श्राद्धं नवं शस्यते। नन्दाभार्गव भूमिजेषु न भवेत् श्राद्धं नवान्नोद्भवम्" ॥ ब्रह्मादयः रोहिणी श्रवणापुष्यमृगशिरोहस्ता रेवती पुनर्वस्वनुराधा चित्रा विशाखा स्वाति धनिष्ठा मूलाश्विनी कृत्तिका ज्येष्ठा शतभिषा। नवान्नश्राद्धे मूला कृत्तिका ज्येष्ठा विधानात्तच्छेषभक्षणप्राप्तेः "अश्लेषा कृत्तिका ज्येष्ठा मूलाजपदकेषु च। भृगुभौमदिने रिक्ते तिथौ नाद्यान्नवौदनं" इति श्राद्धशेषाभोजिमात्रपरम्। अजपदं पूर्वभाद्रपदा।

चन्द्रताराद्यशुद्धौ प्रतीकारमाह देवलः। "कर्म कुर्य्यात् फलावाप्त्यै चन्द्रादि शोभने बुधः। सुस्थकाले त्विदं सर्वं नार्त्तः कालमपेक्षते ॥ चन्द्रे च शङ्खं लवणञ्च तारे तिथावभद्रे सिततण्डुलांश्च। धान्यञ्च दद्यात् करणर्क्षवारे योगे तिलान् हेममणिञ्च लग्ने" ॥ तारे जन्मविपत् पापकष्टे। ऋक्षमर्कक्षितनक्षत्रम्। राजमार्त्तण्डे ताराभेदाल्लवणपरिमाणमाह "एकत्रि पञ्च सप्त द्विजाय दद्यात् पलानि लवणस्य क्रमशः जन्मविपत् प्रत्यरिमरणाख्य तारासु। पलन्तु लौकिकैर्मानैः

साष्टरत्तिर्हिमाषकम् । तोलकत्रितयं ज्ञेयं ज्योतिर्भिः स्मृति-सम्मतम्" वामनपुराणञ्च "विष्टयो व्यतिपातश्च येऽन्ये दुर्नीति-सम्भवाः । ते नाम स्मरणाद्विष्णोर्नाशं यान्ति महात्मनः" ॥ विष्णुधर्मोत्तरे "सर्वाशुभानां परिमोचकारि संपूजनं देववरस्य विष्णोः" इति ब्रह्मपुराणे "प्राश्नीयाद्दधिसंयुक्तं नवं विप्राभि-मन्त्रितम्"। अभिमन्त्रितं मन्त्रानादेशे गायत्रीति वचनात् गायत्रेति । स्मृतिः "गृहीत्वा ब्राह्मणानुज्ञां सदधि प्राशये-न्नवम्" ।

अथ भीष्माष्टमी । भविष्योत्तरे "शुक्लाष्टम्यान्तु माघस्य दद्याद्भीष्माय यो जलम् । संवत्सरकृतं पापं तत्क्षणादेव नश्यति" ॥ धवलधृतास्मृतिः । "अष्टम्यान्तु सिते पक्षे भीष्माय सतिलोदकम् । अवश्य विधिवद्दद्युः सर्वे वर्णा द्विजातयः" ॥ सर्वे वर्णा इत्युपादानात् ब्राह्मणशूद्रयोरप्यधिकारः । द्विजातय इति सम्बोधनम् । "ब्राह्मणस्त्वन्यवर्णानां यः करोत्यौर्द्ध्वदेहि-कम् । तद्वर्णत्वमसौ याति इहलोके परत्र च" इति मरीचि-वचनन्तु भीष्मकृत्येतरपरम् । तथा च स्मृतिः "ब्राह्मणाद्यास्तु ये वर्णा दद्युर्भीष्माय नो जलम् । संवत्सरकृतं तेषां पुण्यं नश्यति सत्तम" ॥ असवर्णजलदाननिषेधस्तु प्रकरणादपि भ्रात्रादि विषय इति श्रीदत्तः । अत्र तर्पणमन्त्रः "वैयाघ्र-पद्यगोत्राय सांकृति प्रवराय च । अपुत्राय ददाम्येतत् सलिलं भीष्मवर्मणे" इति "भीष्मः शान्तनवो वीरः सत्यवादी जिते-न्द्रियः । आभिरद्भिरवाप्नोतु पुत्रपौत्रोचितां क्रियां" इत्या-शंसा मन्त्रः । पुत्रपौत्रोचितामित्यभिधानात् पितृकर्मरीत्या ब्राह्मणः पितृतर्पणानन्तरं क्षत्रियादिकस्तु तत्पूर्वं तर्पयेत् इति संवत्सरप्रदीपादयः । अत्र वीजं वर्णज्येष्ठम् ।

अथ अशोकाष्टमी । स्कान्दे "मीने मधौ शुक्लपक्षे अशो-काख्यां तथाष्टमीम् । पिबेदशोककलिकाः स्नायाल्लौहित्य-वारिणि" ॥ अशोकाख्येत्युपादानात्तिथिमात्रेऽपि तत्पानं फलन्तु मन्त्रलिङ्गात् शोकरहितत्वमवगन्तव्यं लौहित्य-वारिणि ब्रह्मपुत्राख्य नदजले । पुनर्वसुयोगे तु फला-धिक्यमाह लिङ्गगरुड़पुराणयोः । "अशोककलिकाश्चाष्टौ

ये पिवन्ति पुनर्वसौ । चैत्रे मासि सिताष्टम्यां न ते शोकमवाप्नुयुः" ॥ पानमन्त्रस्तु । "त्वामशोक हराभीष्टमधुमाससमुद्भव । पिवामि शोकसन्तप्तो मामशोकं सदा कुरु" ॥ स्त्रीशूद्रकर्त्तृकपानेऽपि प्रागुक्तयुक्तेः स्वयं मन्त्रः पठनीयः । स्त्रीपक्षे ऊहोऽपि नास्ति विवृतमेकादशीतत्त्वे । अशोकपानन्तु पञ्चमार्द्धप्रहरव्यापिन्यामष्टम्यां भ्रातृद्वितीयोक्तवत् । "पुनर्वसौ बुधे लग्ने चैत्रे मासि सिताष्टमीम् । लौहित्यविरजे स्नायात् सर्वपापैः प्रमुच्यते ॥ पृथिव्यां यानि तीर्थानि सरितः सागरादयः । सर्वे लौहित्यमायान्ति चैत्रे मासि सिताष्टमीम् ॥ ब्रह्मपुत्र महाभाग शान्तनोः कुलनन्दन । अमोघागर्भसंभूत पापं लौहित्य मे हर" इति स्नानमन्त्रः ॥ कालिकापुराणे "चैत्रे मासि सिताष्टम्यां यो नरो नियतेन्द्रियः । स्नायाल्लौहित्यतोयेषु स याति ब्रह्मणः पदम् ॥ चैत्रन्तु सकलं मासं शुचिः प्रयतमानसः । लौहित्यतोये यः स्नायात् स कैवल्यमवाप्नुयात् ॥ लोहितात्सरसो जातो लौहित्याख्यस्ततोऽभवत्" । स्रोतोमात्रे विष्णुः "पुनर्वसु बुधोपेतां चैत्रे मासि सिताष्टमीम् । स्रोतःसु विधिवत् स्नात्वा वाजपेय फलं लभेत्" ॥

अथ नवमी । साचाष्टमीयुता ग्राह्या युग्मात् भविष्ये "मासैश्चतुर्भिर्यत्पुण्यं विधिना पूज्य चण्डिकाम् । तत् फलं लभते वीर ! नवम्यां कार्त्तिकस्य च" ॥ तथा "नवम्यां नववर्षाणि राजन् पिष्टाशनो भवेत् । तस्य तुष्टा भवेद्गौरी सर्वकामप्रदा शुभा" ॥ अद्येत्यादि नवम्यां तिथावारभ्य नववर्षाणि यावत् प्रति शुक्ल नवम्यां पिष्टेतर भोजन निवृत्ति व्रतमिति सङ्कल्पे विशेषः । सर्वकामप्रदा गौरीतोषः फलं भविष्ये "माघे मासि तु या शुक्ला नवमी लोकपूजिता । महानन्देति सा प्रोक्ता सदानन्दकरी नृणाम् ॥ स्नानं दानं तपोहोमोदेवार्चनमुपोषणम् । सर्वं तदक्षयं याति यदस्यां क्रियते नरैः" ॥

अथ श्रीरामनवमी । अगस्त्य संहितायाम् । चैत्रे मासि नवम्यान्तु जातो रामः स्वयं हरिः । पुनर्वस्वृक्षसंयुक्ता सा तिथिः सर्वकामदा ॥ पुनर्वस्वृक्ष संयोगः स्वल्पोऽपि यदि

लभ्यते। चैत्रशुक्ल नवम्यान्तु सा तिथिः सर्वकामदा ॥ श्रीराम-नवमी प्रोक्ता कोटिसूर्य्य ग्रहाधिका। तस्मिन् दिने महा-पुण्ये राममुद्दिश्य भक्तितः ॥ यत्किञ्चित् क्रियते कर्म तद्भ-वक्षयकारकम्। उपोषणं जागरणं पितॄनुद्दिश्य तर्पणम् ॥ तस्मिन् दिने तु कर्त्तव्यं ब्रह्मप्राप्तिमभीप्सुभिः"। चैत्रपदं चान्द्रपरम्। "मेषं पूषणि संप्राप्ते लग्ने च कर्कटाह्वये। आविरासीत् सकलया कौशल्यायां परः पुमान्" ॥ अत्र मेषस्थ सूर्य्ये चान्द्र चैत्रस्यैव सम्भवात्तिथिकृत्यत्वाच्च। तथा 'तस्मिन् दिने महापुण्ये राममुद्दिश्य भक्तितः। जपेदेकान्त आसीनो यावत् स्याद्दशमी दिनम् ॥ तेनैव स्यात् पुरश्चर्य्या दशम्यां भोजयेद्द्विजान्। भक्ष्यभोज्यैर्बहुविधैर्भक्त्या दद्याच्च दक्षिणाम् ॥ कृतकृत्यो भवेत्तेन सद्यो रामः प्रसीदति"। तथा "चैत्र शुक्ला तु नवमी पुनर्वसु युता यदि। सैव मध्याह्नयोगेन महापुण्य-तमा भवेत् ॥ नवमी चाष्टमी विद्धा त्याज्या विष्णुपरायणैः। उपोषणं नमम्यान्तु दशम्यामेव पारणम्" ॥ एतद्वचनद्वयं कालमाधवीयेऽपि किन्तु महापुण्ये त्यत्र महाफलेति पाठः। शुद्धेति श्रवणात् सर्वत्र शुद्धाया मुख्यादरो न विद्धायामिति अत-एवाष्टमीविद्धा नवमी सनक्षत्रापि नोपोष्येति माधवाचार्य्यः। सैव तादृश्येव न तु विद्धा। यदा तु परदिने एकादश्यां दशमी पारणयोग्या तदा दशमी युक्ता नवम्युपोष्या वैष्णवैर्विष्णुपरा-यणैरिति श्रवणात् अवैष्णवैस्तु अष्टमीविद्धैव ग्राह्या यदा तु पूर्वदिने अष्टमीविद्धा नवमी परत्र दशमी युता नवमी एका-दशी दिने च दशमी न पारणयोग्या तदा नक्षत्रयोगायोगे-ऽप्यष्टमीविद्धैव ग्राह्या परदिने दशम्यामेव पारणमिति निय-मात्। तथा च रामार्चनचन्द्रिकायां दशम्यादिषु वृद्धिश्चेत् त्याज्या विद्धैव वैष्णवैः। 'तदन्येषान्तु सर्वेषां व्रतं तत्रैव निश्चितम्। दशम्यामेव शब्देन दशमीं नैव लङ्घयेत् ॥ निश्चि-त्यैवं विचारेण नवमीव्रतमाचरेत्' इति कारिकाभ्यामगस्त्य संहिताव्याख्यानम्। वस्तुतस्तु दशमीपारणसत्वे सर्वैरेवाष्टमी विद्धा नोपोष्या विष्णुपरायणैरिति तु विष्णुपरायणत्वेन भवि-तव्यमित्युपदेश परं न तु कर्त्तृविशेषणम्। अगस्त्येनावैष्ण-

वस्य विद्धोपवासानुपदेशात् । कर्त्तृभेदे विधिद्वय कल्पनापत्तेश्च अतएव माधवाचार्य्येण सामान्यत एव विद्धा निषिद्धा ।

अगस्त्यसंहितायामस्य नित्यत्वमाह "प्राप्ते श्रीरामनवमी दिने मर्त्यो विमूढधीः । उपोषणं न कुरुते कुम्भीपाकेषु पच्यते ॥ यस्तु रामनवम्यान्तु भुङ्क्ते मोहाद्विमूढधीः । कुम्भीपाकेषु घोरेषु पच्यते नात्र संशयः" ॥ अत्र मर्त्य इत्युपादानात् नरमात्रस्याधिकारः । एवञ्च "कुर्य्याद्रामनवम्यां य उपोषणमतन्द्रितः । मातुर्गर्भमवाप्नोति नैव रामो भवेत् स्वयम् ॥ तस्मात् सर्वात्मना सर्वे कृत्वैवं नवमीव्रतम् । मुच्यन्ते पातकैः सर्वैर्यान्ति ब्रह्म सनातनम्" ॥ इति फलकीर्त्तनं प्रागुक्तसंयोगपृथक्त्वन्यायात् सिद्धम् । अगस्त्यसंहितायां "शालग्रामशिलायाञ्च तुलसीदलकल्पिता । पूजा श्रीरामचन्द्रस्य कोटिकोटिगुणाधिका" ॥ तत्रानुष्ठानमगस्त्यसंहितातः संक्षिप्य लिख्यते । कृतप्रातःस्नानादिः "उपोष्य नवमीन्त्वद्य यामेष्वष्टसु राघव ! । तेन प्रीतो भव त्वं भो ! संसारात्त्राहि मां हरे" ! ॥ इति निवेद्य । "कोमलाङ्गं विशालाक्षमिन्द्रनीलसमप्रभम् । दक्षिणांशे दशरथं पुत्रावेक्षणतत्परम् ॥ पृष्ठतो लक्ष्मणं देवं सच्छत्रं कनकप्रभं पार्श्वे भरतशत्रुघ्नौ तालवृन्तकरावुभौ । "अग्रे व्यग्रं हनूमन्तं रामानुग्रहकाङ्क्षिणम्" ॥ एवं ध्यात्वा श्रीरामं पूजयेत् । स्नानमन्त्रस्तु "इन्द्रोऽग्निश्च यमश्चैव नैरृतो वरुणोऽनिलः । कुवेर ईशो ब्रह्माऽहिर्दिक्पालाः स्नापयन्तु ते" ॥ अहिरनन्तः कौशल्यां पूजयेत् । मन्त्रस्तु "रामस्य जननी चासि राममयमिदं जगत् । अतस्त्वां पूजयिष्यामि लोकमातर्नमोऽस्तु ते" ॥ तथा "नमो दशरथायेति पूजयेत् पितरं ततः । ततोऽनुज्ञाप्य देवेशं परिवारान् समर्चयेत् । पूर्वषट्कोण कोणेषु हृदयादीनि च क्रमात्" ॥ हृदयादीनि यथा रां हृदयाय नमः रीं शिरसे स्वाहा रूं शिखायै वषट् रैं कवचाय हुं रौं नेत्राभ्यां वौषट् रः अस्त्रायफट् इति । तथा "हनूमन्तं ससुग्रीवं भरतं सविभीषणम् । लक्ष्मणाङ्गदशत्रुघ्नं जाम्बवन्तं दलादिषु ॥ धृष्टं जयन्तं विजयं सुराष्ट्रं राष्ट्रवर्द्धनम् अकोपं धूम्रपालाख्यं सुमन्त्रं दलमध्यतः । दलाग्रे लोकपालांश्च तद-

स्त्राणि तदग्रतः" ॥ लोकपाला इन्द्रादयो दश तदस्त्राणि वज्र-शक्ति दण्ड खड्गपाश अङ्कुशगदा शूल चक्र पद्मानि। मध्याङ्के जन्म भावयेत्। "उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यान्तिथौ लग्ने कर्कटके पुनर्वसुदिने मेषं गते पूषणि। निर्दग्धुं निखिलाः पलाशसमिधो मध्यादयोध्यारणेराविर्भूत मभूदपूर्व-विभवं यत्किञ्चिदेकं महः" ॥ पलाशा राक्षसाः "मन्त्रेव वादयेद्वाद्यानर्घ्यं दद्याज्जगत्पतेः। फलपुष्पाम्बुसम्पूर्णं गृहीत्वा शङ्खमुत्तमम्। अशोकरक्तकुसुमैर्युक्तञ्च तुलसीदलैः" ॥ मन्त्रस्तु "दशाननवधार्थाय धर्मसंस्थापनाय च। दानवानां विनाशाय दैत्यानां निधनाय च ॥ परित्राणाय साधूनां रामो जातः स्वयं हरिः। गृहाणार्घ्यं मया दत्तं भ्रातृभिः सहितो मम ॥ पुष्पाञ्जलिं पुनर्दत्त्वा यामयामेष्वतन्द्रितः। पूजयेद्विधिवद्भक्त्या दिवारात्रं नयेद्बुधः" ॥

तदयं संक्षेपः। शुद्धायां नक्षत्रयुक्तायां विवादाभावः विद्धा-यान्तु एकादशीदिने दशमीपारणयोग्या न चेत् तदा नक्षत्र-योगायोगेऽपि अष्टमीविद्धायां पारणयोग्या चेत् तदा अष्टमीं विद्धां त्यक्त्वा परेऽहनि उपवासः।

अथ दशमी। सा च शुक्ला एकादश्या कृष्णा तु नवम्या-युता ग्राह्या। यथा अङ्गिराः "सम्पूर्णा दशमी कार्य्या पूर्वया परयाथवा। युक्ता न दूषिता यस्मादिति सा सर्वतोमुखी" ॥ यथा सम्पूर्णा दोषरहिता तथा विद्धापीति विकल्पे व्यवस्था-पयति विष्णुधर्मोत्तरीयं "शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः। कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः" ॥ ब्रह्म-पुराणब्रह्मवैवर्त्तयोः। "ज्यैष्ठस्य शुक्लदशमी संवत्सरमुखी स्मृता। तस्यां स्नानं प्रकुर्वीत दानञ्चैव विशेषतः ॥ यां काञ्चित् सरितं प्राप्य दद्याद्दर्भैस्तिलोदकम्। मुच्यते दशभिः पापैः सुमहापातकोपमैः" ॥ अत्र केवलदशम्यां नदीमात्रे दर्भ-करणकतिलतर्पणाङ्गकस्नानाद्दशविधपापक्षयः फलम् एवं दानादपि वस्तुतस्तु वक्ष्यमाणभविष्ये जाह्नवीपदश्रवणात् हेतुमन्निगदस्वरसाच्च। ब्रह्मवैवर्त्तेऽपि सरित्पदं जाह्नवीपरम् अन्यथा नानाविधिः स्यात्। यां काञ्चिदिति तु जाह्नवी-

स्नायकम् अन्यथा कुल्यास्नानेऽपि दशविधपापक्षयः स्यात् मन्त्रलिङ्ग जाह्नवीपदश्रवणाच्च। गङ्गामधिकृत्य ब्राह्मे "शुक्लपक्षस्य दशमी ज्यैष्ठे मासि द्विजोत्तम। हरते दश पापानि तस्माद्दशहरा स्मृता"॥ अत्र केवलदशम्यां दशविधपापक्षयः फलम्। भविष्ये "ज्यैष्ठशुक्लदशम्यान्तु हस्तयोगेन जाह्नवी। हरते दशपापानि तस्माद्दशहरोच्यते"॥ दशपापानीति दशजन्मकृतपापानीति विशेषणीयमाह पराशरभाष्ये यमः। "ज्यैष्ठे मासि सिते पक्षे दशम्यां हस्तयोगतः। दशजन्माऽघहा गङ्गा दशपापहरा स्मृता"॥ अत्र दशजन्मकृतदशविधपापक्षयः फलम्। अत्र "प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः। अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः" इति न्यायेन हस्तानक्षत्र गङ्गारूपगुणद्वयविशिष्ट दशमी विधेयस्मिन्नहनि तल्लाभस्तत्र स्नानम् उभयदिने तु तल्लाभे परदिन एव अत्रापि पूर्वदिने वक्ष्यमाणकुजवारलाभे तथापि स्नानं वारस्योभयत्रालाभात्। ततश्च पूर्वदिने तथाविधस्नानं कृत्वा परदिने केवल दशम्यामपि दशविधपापक्षयकामेन स्नातव्यम्। शङ्खः "ज्यैष्ठे मासि क्षितिसुतदिने शुक्लपक्षे दशम्यां हस्ते शैलान्निरगमदियं जाह्नवी मर्त्यलोकम्। पापान्यस्यां हरति च तिथौ सा दशेत्याहुरार्य्याः पुण्यं दद्यादपि शतगुणं वाजिमेधायुतस्य"॥ भौम हस्तायुक्तदशम्यां गङ्गास्नानाद्दशविधपापक्षय शतगुण वाजिमेधायुतजन्य पुण्य समपुण्यं फलम्। राजमार्त्तण्डे वाल्मीकिः। "अदत्तानामुपादानं हिंसा चैवाविधानतः। परदारोपसेवा च कायिकं त्रिविधं स्मृतम्॥ पारुष्यमनृतञ्चैव पैशुन्यञ्चापि सर्वशः। असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम्॥ परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम्। वितथाभिनिवेशश्च त्रिविधं कर्म मानसम्॥ एतानि दश पापानि प्रशमं यान्तु जाह्नवि!। स्नातस्य मम ते देवि! जले विष्णुपदोद्भवे॥ विष्णुपादार्घ्यसम्भूते गङ्गे त्रिपथगामिनि। धर्मद्रवीति विख्याते पापं मे हर जाह्नवि!"॥ अत्र मन्त्रलिङ्गेन प्रणवपूर्वकाण्येतानि सामान्यस्नानमन्त्रान्ते मज्जनस्यादौ पाठ्यानि "आगन्तुकानामन्तेऽभिनिवेशः" इति न्यायात्

"मन्वान्ते कर्मसन्निपातः" इति न्यायात् "मन्वान्ते कर्मादीनि सन्निपातयेत्" इत्यापस्तम्बीयाच्च। हिंसापैशुन्यादि-भेदमाह कामधेनौ देवलः। "कायक्लेशं मनोदुःखं वधं वा प्राणिनां पुनः। यः प्रवर्त्तयति द्वेषात् सा हिंसेति समासतः। यज्ञार्थं ब्राह्मणैर्वध्याः प्रशस्ता मृगपक्षिणः। भृत्यानाञ्चैव वृत्त्यर्थमगस्त्यो ह्याचरत् पुरा"॥ तथा "परुषवचनमपवादः पैशुन्यमनृतं वृथालापो निष्ठुरवचनमिति वाङ्मयानि षट्। परेषां देश जाति कुल विद्याशिल्परूप वृत्ताचार परिच्छद शरीर कर्मजीविनां प्रत्यक्षदोषवचनं परुषम्॥ यच्चान्यत् क्रोधसन्तापत्राससंजननं वचः। परुषं तच्च विज्ञेयं यच्चान्यच्च तथाविधम्॥ चक्षुष्मन्निति लुप्ताक्षं चण्डालं ब्राह्मणेति च। प्रशंसानिन्दनं द्वेषात् परुषान्न विशिष्यते"॥ तेषामेव परुष-वचनानां परोक्ष मुदाहरणमपवादः। गुरुनृपतिबन्धुभ्रातृ-मित्रसकाशे अर्थोपघातार्थं दोषोपाख्यान पैशुन्यम्। अनृतं द्विविधमसत्यमसंवादश्चेति। "देशराष्ट्रप्रसङ्गाच्च परार्थे परि-कल्पनात्। नर्महासप्रसङ्गाच्च भाषणं व्यर्थभाषणम्॥ गुह्या-ङ्गाभिध्यसंज्ञानां वचनं निष्ठुरं विदुः। यदन्यद्वा वचो नीचं स्त्रीपुंसोर्मिथुनाश्रयम्॥ इत्येवं षट्विकल्पस्य दुष्टवाक्यस्य भाषणात्। इह वा मुत्र वा क्रूरमनर्थं प्रतिपद्यते"॥ प्रशंसा-निन्दन प्रशंसया निन्दनम् अत्र चतुर्विध षड्विधयोरविरोधः। समक्षत्वासमक्षत्वभेदानादरणेन पारुष्यापवादयोरैक्यात् नि-ष्ठुरस्य परुषान्तर्भावाच्च। असम्बन्धप्रलापव्यर्थभाषणयोः पर्य्या-यत्वात् नार्थान्तरत्वम्। अभिध्यानमपहरणार्थमिति शेषः। वितथे असत्यभूते वस्तुनि अभिनिवेशः पुनः सङ्कल्पः। स्मृति-तत्त्वे महादेवीं सृष्टिस्थित्यन्तकारिणीम्। नत्वा वदति तत्-पूजाकालं श्रीरघुनन्दनः।

अथ दुर्गोत्सवः। मार्कण्डेयपुराणे "शरत्काले महापूजा क्रियते या च वार्षिकी" इति यथा "मृताहनि तु कर्त्तव्यं प्रतिमासन्तु वत्सरम्। प्रतिसंवत्सरञ्चैव आद्यमेकादशेऽहनि" इति याज्ञवल्क्यवचने श्राद्धस्य प्रति संवत्सरकर्त्तव्यत्व श्रुतेः यथा वा "प्रति संवत्सरमाग्रहायणेष्टिं कुर्य्यात्" इति प्रति

संवत्सरकर्त्तव्यत्व श्रुतेः सांवत्सरिकं विशेषणं प्रतीयते तथात्रापीति वार्षिकीति श्रवणात् "प्रति संवत्सरं कुर्य्यात् स्थापनञ्च विसर्जनम्" इत्यत्र प्रतिसंवत्सर श्रुतेः प्रागुक्त शरत्काल इति श्रुतेश्च वर्षशरदोर्निमित्तत्वेन वार्षिकशरत्कालीनेति दुर्गापूजाया विशेषणं प्रतीयते। ततश्च वार्षिकशरत्कालीनदुर्गापूजा एकवचनान्तनिर्देशात्तत्तत्कल्पोक्त नानादिनसाध्याप्येकैव प्रतीयते। "शारदीया महापूजा चतुःकर्म्ममयी शुभा। तां तिथित्रयमासाद्य कुर्य्याद्भक्त्या विधानतः" इति लिङ्गपुराणीये चतुः कर्म्ममयीत्यनेन चतुरवयवकत्वेन अभिधानात् स्नपनपूजन बलिदान होमरूपा वक्ष्यमाणयुक्तेश्च। सा च प्रतिवर्षकर्त्तव्या दुर्गाया इत्युपक्रम्य "द्विशरीरे चरेचैव लग्ने केन्द्रगते रवौ। वर्षे वर्षे विधातव्यं स्थापनञ्च विसर्जनम्" इति देवीपुराणवचने वीप्साश्रुतेः अत्र द्विशरीरे कन्यायां चरे तुलायां केन्द्रगते लग्नगते रवौ अन्यद्विशरीरादेः पूर्वोक्तेऽसम्भवात् "संवत्सरव्यतीते तु पुनरागमनाय च" इति मन्त्रलिङ्गाच्च। सा पूजा नित्या वीप्साश्रुतेः अकरणे प्रत्यवायश्रुतेश्च। यथा शारदीया महापूजामधिकृत्य कालिकापुराणं "यो मोहादथवालस्याद्देवीं दुर्गां महोत्सवे। न पूजयति दम्भाद्वा द्वेषाद्वाप्यथ भैरव॥ क्रुद्धा भगवती तस्य कामानिष्टान्निहन्ति वै"। विधिसमभिव्याहृत फलश्रुतेः काम्या च। यथा तत्रैव "कृत्वैवं परमामापुर्निर्वृतिं त्रिदिवौकसः। एवमन्यैरपि सदा देव्याः कार्य्यं प्रपूजनम्॥ विभूति मतुलां लब्धुं चतुर्वर्गप्रदायिकाम्"। पूजये दित्यधिकृत्य भविष्योत्तरेऽपि "भवानीतुष्टये पार्थ संवत्सर सुखाय च। भूतप्रेत पिशाचानां नाशार्थञ्चोत्सवाय च"॥ देवीपुराणं "तुष्टायां नृपदुर्गायां निमिषार्द्धेन यत् फलम्। न तद्वक्तुं महेशोऽपि शक्तो वर्षशतैरपि"॥ एवञ्चातुल विभूत्यादिमिलितं वा भवानीप्रीतिर्वा तत्तत् कल्पोक्तं वा फलं निर्द्देश्यमिति। एवञ्च तत्तत्कल्पकरणे तत्तत्तिथि पूजायां द्रव्यदानादिषु यत्तदन्तर्गतं फलं तत्तत्श्राद्धीय द्रव्यदानवदानुषङ्गिकम् अतो न तत्र काम्याभिलाषापेक्षा बलिघाते तु "ततो देवीं समुद्दिश्य काममुद्दिश्यचात्मनः"। इति कालिका-

पुराणे उद्दिश्येत्यभिधानात् काम्याभिलाप इति। ततश्च संयोगपृथक्त्व न्यायादुभयरूपेयम्। ततश्च काम्यतया पूजने कृते प्रसङ्गान्नित्य पूजासिद्धिः। एवं बलिहोमाद्यङ्गेऽपि।

एवं कर्मकुर्वतां यत्तादृशं फलं न दृश्यते तत् कलिस्वभावात्। तथा च विष्णुपुराणं "यदा यदा सतां हानिर्वेदमार्गानुसारिणाम्। तदा तदा कलेर्वृद्धिरनुमेया विचक्षणैः॥ आरम्भास्त्वावसीदन्ति यदा धर्मभृतां नृणाम्। तदानुमेयं प्राधान्यं कलेर्मैत्रेय पण्डितैः"॥ मत्स्यपुराणञ्च "यत्राधर्मश्चतुष्पादः स्याद्धर्मः पादविग्रहः। कामिनस्तमसाक्रान्ता जायन्ते यत्र मानवाः॥ अहङ्कार गृहीताश्च प्रक्षीणस्नेहबान्धवाः। विप्राः शूद्रसमाचाराः सन्ति सर्वे कलौ युगे"॥ अत्र फलजनकापूर्वैक्यात्कर्मणोऽप्यैक्यं अन्यथा सङ्कल्पावाहनविसर्जनदक्षिणादिभेदः स्यात्। ततश्च श्वो यियक्षणा अधिवासदिनेऽङ्गाधिकाराय तद्बीजीभूतकाम्यप्रधानाधिकार सम्पादक कुशतिलजलत्यागसहितः काम्याभिलापपूर्वक प्रधानसङ्कल्पः कार्य्यः। इति द्वैतनिर्णयोक्त वदत्रापि काम्यत्वेन नित्यत्वेन वा करणे व्रतत्वात्तत्तत् कल्पारम्भदिने बोधनादिप्रागेव सङ्कल्पो न तु दिनान्तरे। शरत्काले महापूजा इत्यत्र एकवचनश्रुतेरेक प्रयोगसाध्यत्वे नैककर्मतापन्न क्रियाकलापजन्यस्य वाक्यार्थीभूतनियोगस्यैक्याद्दर्शवत् न तु प्रत्येकं तत्तत्कर्मणां संकल्पः कालिकापूर्वजनकत्वादैन्द्रदध्यादिहोमवत्। अतएव जिकनधनञ्जय संग्रहयोः। "आरभ्य तस्यां दशमीञ्च यावत् प्रपूजयेत् पर्वतराजपुत्रीं" इत्युक्तम्। अतएव "कन्यासंस्थे रवौ शक्र शुक्ला मारभ्य नन्दिकाम्" इत्युपक्रम्य "महानवम्यां पूजेयं सर्वकामप्रदायिनी" इत्यन्तेन देवीपुराणीयेन अपि षष्ठीतः प्रभृति नवमीपर्य्यन्तं पूजेयमित्येकत्वेनोक्तम्। तेन पञ्चम्यामेकभक्तं ततः षष्ठ्यां प्रातः संकल्प इति रत्नाकरः। न च नन्दिकाप्रतिपदिति दुर्गाभक्तितरङ्गिण्युक्तं युक्तमिति वाच्यं महानवमीसन्निकृष्ट षष्ठीपरित्यागे प्रमाणाभावात् प्रतिपदुक्तावपि प्रतिपदादि क्रमेणैकत्वसिद्धेः प्रकृतार्थ निर्वाहाच्च। एवञ्चानेकाहसाध्यत्वेन तिथ्युल्लेखानन्तरमारभ्य दशमीं यावत्

प्रत्यहमिति वार्षिक शरत्कालीन दुर्गामहापूजनमिति च यथास्थानं वाक्ये प्रयोज्यं अन्यथा संकल्पकालीन तिथेरन्यदिनेऽसम्भवात्तदन्वयानुपपत्तेरिति सुधीभिर्भाव्यम्।

एवञ्च तत्रैव वक्ष्यमाणतत्तद्वचनात् कृष्णनवम्यादि प्रतिपदादि षष्ठ्यादि सप्तम्यादि महाष्टम्यादि केवल महाष्टमी केवल महानवमी पूजारूपा: कल्पा ज्ञेया:। तदनन्तरमशौचमपि न प्रतिबन्धकम्। "व्रतयज्ञ विवाहेषु श्राद्धे होमेऽर्चने जपे। आरब्धे सूतकं न स्यादनारब्धे तु सूतकम्॥ आरम्भो वरणं यज्ञे संकल्पो व्रतजापयो:। नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिष्क्रिया निमन्त्रणन्तु वा श्राद्धे आरम्भ: स्यादिति श्रुति:" इति राघवभट्टधृतविष्णुवचनात् पाकपरिष्क्रियेति साग्नेदर्शश्राद्धविषयं तत्र तस्य तदुद्धरणस्य असाधारणाङ्गत्वात्। संकल्प उक्तो हारीतेन यथा "मनसा संकल्पयति वाचाभिलपति कर्मणा चोपपादयति" इति भविष्यपुराणेन च "सङ्कल्पेन विना राजन् यत्किञ्चित् कुरुते नर:। फलञ्चाल्पाल्पकं तस्य धर्मस्यार्द्धक्षयो भवेत्"॥ ब्रह्मपुराणेनापि "आशास्य च शुभं कार्य्यमुद्दिश्य च मनोगतम्"। इत्यगस्त्यपूजने उक्तं मनोगतं शुभं फलम् आशास्य मनसा सङ्कल्प्य उद्दिश्य वाचा अभिलप्य कार्य्यं कर्मणा उपपाद्यम्। भविष्ये "शुक्तिशङ्खाश्महस्तैश्च कांस्यरूप्यादिभिस्तथा। सङ्कल्पो नैव कर्त्तव्यो मृण्मयेन कदाचन॥ गृहीत्वौडुम्बरं पात्रं वारिपूर्णं गुणान्वितम्। दर्भत्रयं साग्रमूलं फलपुष्पतिलान्वितम्॥ जलाशयारामकूपे सङ्कल्पे पूर्वदिङ्मुख:। साधारणे चोत्तरास्य ऐशान्यां निक्षिपेज्जलम्"॥ अत्र केवलहस्तनिषेधस्तु पात्रान्तरसद्भावविषयशङ्खादिसाहचर्य्यादेकहस्तपरो वा। "गृहीत्वौडुम्बरं पात्रं वारिपूर्णमुदङ्मुख:। उपवासन्तु गृह्णीयाद् यद्वा वार्य्येव धारयेत्"॥ इति वराहपुराणदर्शनादिति। अस्य व्रतत्वञ्च शारदीयपूजामुपक्रम्य "महाव्रतं महापुण्यं शङ्कराद्यैरनुष्ठितम्। कर्त्तव्यं सुरराजेन्द्र देवीभक्तिसमन्वितै:"॥ इति देवीपुराणवचनात्। "व्रती प्रपूजयेद्देवीं सप्तम्यादिदिनत्रये" इति भविष्यपुराणाच्च। दुर्गापूजाया व्रतत्वं व्यक्तं श्रीभागवते

"चेतरहविष्यं भुञ्जाना: कात्यायन्यर्चनव्रतम्"। स्कान्दभविष्य-पुराणयोः "शारदी चण्डिकापूजा त्रिविधा परिगीयते। सात्त्विकी राजसी चैव तामसी चेति तां शृणु॥ सात्त्विकी जपयज्ञाद्यैर्नैवेद्यैश्च निरामिषैः। माहात्म्यं भगवत्याश्च पुराणादिषु कीर्त्तितम्॥ पाठस्तस्य जपः प्रोक्तः पठेद्देवीमनाः प्रिये। राजसी बलिदानेन नैवेद्यैः सामिषैस्तथा॥ सुरामांसाद्युपहारैर्जपयज्ञैर्विना तु या। विना मन्त्रैस्तामसी स्यात् किरातानाञ्च सम्मता"॥ शरत्कालीनदुर्गापूजाधिकारे भविष्योत्तरीयं "ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरन्यैश्च सेवकैः। एवं नानाम्लेच्छगणैः पूज्यते सर्वदस्युभिः"॥ देवीपुराणं "स्वयं वाप्यन्यतो वापि पूजयेत् पूजयेत वा"। पूजयेतेत्यात्मनेपदाद्धेतुनिजन्तता अत्र स्वयं करणासामर्थ्ये अन्यद्वारा तथाच दक्षः "स्वयं होमे फलं यत्तु तदन्येन न जायते। ऋत्विक् पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः। एभिरेव हुतं यत्तु तद्धुतं स्वयमेव हि"॥ विट्पतिर्जामाता एवञ्च ऋत्विगादीतरत्र फलन्यूनता। हयशीर्षपञ्चरात्रे "अर्चकस्य तपोयोगादर्चनस्यातिशायनात्। आभिरूप्याच्च विम्बानां देवः सान्निध्यमृच्छति"॥ विम्बानां प्रतिमानाम्। अत्राशौचादिशङ्कया बोधनादिनात् पूर्वं शुचि तत्कालजीविलरूपाधिकाराभावेऽपि यद्वरणादिकं क्रियते तत्कर्मकाले तस्य नारदोक्त स्वयं प्रवर्त्तनवत् प्रवर्त्तनाय न तु तदानीं प्रतिनिधीयते। अथवा "निक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजं तथा। प्रवसेत् कार्य्यवान् विप्रो वृथैव न चिरं क्वचित्"॥ इति छन्दोगपरिशिष्टोक्तवदत्रापि प्रतिनिधीयते एवञ्च वरणं विनापि यदि क्वचित् स्वयं प्रवर्त्तते तथापि तत्कर्मसिद्धिर्दक्षिणा च तस्मै शुचिकाले दातव्येति। तथाच विवादकल्पतरुरत्नाकरशान्तिदीपिकासु नारदः "ऋत्विक् च त्रिविधो दृष्टः पूर्वजुष्टः स्वयं कृतः। यदृच्छया च यः कुर्य्यादार्त्विज्यं प्रीतिपूर्वकम्"॥ यदृच्छया स्वेच्छया एतत् प्रपञ्चितं शुद्धितत्त्वे। अतएव शङ्खलिखितौ "राज्ञां पुरोहितोऽमात्यः शुद्धिस्तस्य तदाश्रया" नृपतीनामात्मप्रतिनिधीभूतः पुरोहितस्तेन नृपतेरशौचे पुरोहितस्याशौचाभावात् नृपतेः शान्तिक-

पौष्टिकं पुरोहितेन स्वीयशुद्धा कर्त्तव्यमिति हारलताप्रभृतयः। पूजादिकन्तु शुचिकाले तदर्थोपकल्पितद्रव्येण कर्त्तव्यं यथा यमः "पूर्वसङ्कल्पितार्थे वा तस्मिन्नाशौचमिष्यते"। कृत्यचिन्तामणौ। "विवाहोत्सवयज्ञेषु अन्तरामृतसूतके। पूर्वसङ्कल्पितं द्रव्यं दीयमानं न दूष्यति"॥ स्वयं प्रवर्त्तमानादृत्विगादेरनुज्ञया प्रवर्त्तनात् फलाधिक्यम्। तथा कूर्म्मपुराणम् "ऋत्विक्पुत्रोऽथवा पत्नी शिष्यो वापि सहोदरः। प्राप्यानुज्ञां विशेषेण जुहुयाद्वा यथाविधि"॥

एवं विशेषयति श्रुतिः "अन्यैः शतकृताद्धोमादेकः स्वकृतो वरः। एवैः शतकृताद्धोमादेको ह्यात्मकृतो वरः"॥ संवत्सरप्रदीपे "माहात्म्यं भगवत्याश्च पुराणादिषु कीर्त्तितम्। पठेच्च शृणुयाद्वापि सर्वकामसमृद्धये"॥ सर्वकामसमृद्धये तत्तदभिलषितसिद्धये। यत्र यद्यपि देवीमाहात्म्यपाठस्य "सकृत्कृते कृतः शास्त्रार्थः" इति न्यायात् सकृत्करणादेव तत्तत् फलसिद्धिर्ज्ञायते तथापि तत्फलबाहुल्याय पुनः पुनः पाठः वेदादौ तथादर्शनात् तथाच ब्रह्मवधप्रायश्चित्ते मनुः "पठेद्वा नियताहारस्त्रिर्वै वेदस्य संहिताम्। प्रायश्चित्तेऽवशिष्टेऽपि त्रिः पठेदघमर्षणम्" इति सरस्वतीस्तवेऽपि "पक्षद्वयेऽपि यो भक्त्या त्रयोदश्येकविंशतिम्। अविच्छेदं पठेद्धीमान् ध्यात्वा देवीं सरस्वतीम्"॥ नन्दिकेश्वरपुराणेऽन्द्राक्षीस्तवेऽपि "शतमावर्त्तयेद् यस्तु मुच्यते व्याधिबन्धनात्" इति जैमिनिरपि "फलस्य कर्म्मनिष्पत्तिस्तेषां लोकवत् परिमाणतः फलविशेषः स्यात्" इति यथा लौकिककर्षणादीनां बाहुल्येन फलाधिक्यं तथा वैदिकपाठादीनामपीत्यर्थः। "सङ्कल्पिते स्तोत्रपाठे संख्यां कृत्वा पठेत् सुधीः"। इति वाराहीतन्त्राच्च इन्द्राक्षीस्तवसरस्वतीस्तववत् चण्डीपाठस्यावृत्तौ फलभूमादिव्यक्तम्। वाराहीतन्त्रे "चण्डीपाठफलं देवि! शृणुष्व गदतो मम। एकावृत्त्यादिपाठानां यथावत् कथयामि ते॥ सङ्कल्पपूर्वं सम्पूज्य न्यस्याङ्गेषु मनून् सकृत्। पाठाञ्जलिप्रदानाच्च सिद्धिमाप्नोति मानवः॥ उपसर्गोपशान्त्यर्थं त्रिरावृत्तं पठेन्नरः। ग्रहोपशान्त्यै कर्त्तव्यं पञ्चावृत्तं वरानने!॥ महाभये समुत्पन्ने

सप्तावृत्तं समुच्चयेत् । नवावृत्ताद्भवेच्छान्तिर्वाजपेयफलं भवेत् ॥ राजवश्यायभूत्यै च रुद्रावृत्तमुदीरयेत् । अर्कावृत्तात् काम्यसिद्धिर्वैरिहानिश्च जायते ॥ मन्वावृत्त्या रिपुर्वश्यस्तथा स्त्रीवश्यतामियात् । सौख्यं पञ्चदशावृत्त्या श्रियमाप्नोति मानवः ॥ कलावृत्त्या पुत्रपौत्रधनधान्यागमं विदुः । राज्ञो भीतिविमोक्षाय रिपोरुच्चाटनाय च ॥ कुर्य्यात् सप्तदशावृत्तं तथाष्टादशकं प्रिये ! । महाव्रणविमोक्षाय विंशावृत्तं पठेत् सुधीः ॥ पञ्चविंशावर्त्तनात्तु भवेद्बन्धविमोचनम् । सङ्कटे समनुप्राप्ते दुश्चिकित्स्यामये तथा ॥ जातिध्वंसे कुलोच्छेदे आयुषो नाशमागते । वरिवृद्धौ व्याधिवृद्धौ धननाशे तथा क्षये ॥ तथैव त्रिविधोत्पाते तथा चैवातिपातके । कुर्य्याद् यत्नात् शतावृत्तं ततः सम्पद्यते शुभम् ॥ श्रियोवृद्धिः शतावृत्त्या राज्यवृद्धिस्तथापरा । मनसा चिन्तितं देवि ! सिद्ध्येदष्टोत्तराच्छतात् ॥ शताश्वमेधयज्ञानां फलमाप्नोति सुव्रते । सहस्रावर्त्तनाल्लक्ष्मीरावृणोति स्वयं स्थिरा ॥ भुक्त्वा मनोरथान् कामान् नरो मोक्षमवाप्नुयात् । यथाश्वमेधः क्रतुराट् देवानाञ्च यथा हरिः ॥ स्तवानामपि सर्वेषां तथा सप्तशती स्तवः । अथवा बहुनोक्तेन किमेतेन वरानने ! । चण्ड्याः शतावृत्तपाठात् सर्वाः सिद्ध्यन्ति सिद्धयः" ॥ पठनश्रवणवत् पाठनश्रावणेऽपि कार्य्ये "प्रयोजयिता अनुमन्ता कर्त्ता चेति सर्वे स्वर्गनरकफलभोक्तारो यो भूय आरभते तस्मिन् फले विशेषः" इत्यापस्तम्बेनापि प्रवृत्तप्रावर्त्तकलक्षणप्रयोजकस्यापि फलश्रुतेः । अत्र पाठयिष्ये श्रावयिष्ये इति प्रयोगः । एवं भारतादावपि अत्राविशेषात् सर्वेषामेवाधिकारः द्विजानां पाठश्रवणयोः शूद्रस्य श्रवणेऽधिकारः । अत्र काम्यत्वेऽपि स्मार्त्तकर्मत्वेन प्रतिनिधिसम्भवात् यथायथं पठिष्यामि श्रोष्यामि इति सङ्कल्प्य तैः प्रतिनिधीयते । तथाच अधिकरणमालाकृन्माधवाचार्य्यधृतपराशरभाष्ये शातातपः । "श्रौतं कर्म स्वयं कुर्य्यादन्योऽपि स्मार्त्तमाचरेत् । अशक्तौ श्रौतमप्यन्यः कुर्य्यादाचारमन्ततः" ॥ एतद्वचनं काम्येऽपि प्रतिनिधिविधायकं नित्यनैमित्तिकमात्रपरत्वे तु श्रौतस्मार्त्तभेदेनोपादानं व्यर्थं स्मार्त्तयोरविशेषादेव प्रतिनिधिलाभात् ।

अन्तत उपक्रमात् परतः। "काम्ये प्रतिनिधिर्नास्ति नित्य-नैमित्तिके हि सः। काम्येषूपक्रमादूर्द्धं केचिदिच्छन्ति सत्तमाः"॥ इत्येकवाक्यत्वात् ततश्च स्मार्त्तं काम्यं प्रतिनिधि-माप्यारभ्यते न तु श्रौतमिति स्थितम्।

माहात्म्यादिपाठे तु नारायणाय नमः नराय नमः नरोत्तमाय नमः देव्यै सरस्वत्यै नमः व्यासाय नमः इति नत्वा पाठ्यं "नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम्। देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्" इति विधेः भागवतीयसूतोक्तौ उदीरयेदित्यस्य स्वयं तथोदीरयन्त्याम् पौराणिकानुपशिक्षयतीति श्रीधरस्वामिव्याख्यान-मनुशासनविरुद्धञ्चैवेत्यत्र व्यासमिति भागवते पाठात्। चकारेण व्यासो लब्धः भागवते तु सरस्वतीञ्चैवेत्यत्र सरस्वतीं व्यासमिति साक्षाल्लिखितम्। जयपदार्थमाह ब्रह्मचारिकाण्डे भविष्यपुराणम् "अष्टादशपुराणानि रामस्य चरितं तथा। विष्णुधर्मादिशास्त्राणि शिवधर्माश्च भारत॥ कार्ष्णञ्च पञ्चमो वेदो यन्महाभारतं स्मृतम्"॥ कार्ष्णं कृष्णद्वैपायनप्रणीतं "सौराश्च धर्मा राजेन्द्र! मानवोक्ता महीपते। जयेति नाम एतेषां प्रवदन्ति मनीषिणः"॥ जयत्यनेन संसारमिति जय-स्तत्तद्ग्रन्थः। एवञ्चार्थानवलोकनादाचाराद्वाद्विविधः श्लोकः पठ्यते। मत्स्यसूक्ते वाराहीतन्त्रे च। "जप्ता च प्रणवञ्चादौ स्तोत्रं वा संहितां पठेत्। अन्ते च प्रणवं दद्यादित्युवाचादि-पूरुषः॥ सर्वत्र पाठे विज्ञेयोऽन्यथा विफलं भवेत्। शुद्धे-नानन्यचित्तेन पठितव्यं प्रयत्नतः॥ न कार्य्यासक्तमनसा कार्य्यं स्तोत्रस्य वाचनम्। आधारे स्थापयित्वा च पुस्तकं प्रजपेत् सुधीः॥ हस्तसंस्थापनादेव यस्मादल्पफलं लभेत्। स्वयञ्च लिखितं यच्च कृतिना लिखितं न यत्॥ अब्राह्मणेन लिखितं तच्चापि विफलं भवेत्। ऋषिच्छन्दादिकं न्यस्य पठेत् स्तोत्रं विचक्षणः॥ स्तोत्रे न दृश्यते यत्र प्रणवन्यासमाचरेत्। संक-ल्पिते स्तोत्रपाठे संख्यां कृत्वा पठेत् सुधीः॥ अध्यायं प्राप्य विरमेन्न तु मध्ये कदाचन। कृते विरामे मध्ये तु अध्यायादिं पठेन्नरः"॥

ततश्च मार्कण्डेयपुराणीयदेवीमाहात्म्यपाठस्यादौ ऋषिच्छन्दादिकं पठेत् तद्यथा प्रथमचरितस्य "ब्रह्मऋषिर्महाकालीदेवता गायत्री छन्दो नन्दाशक्ती रक्तदन्तिकावीजमग्निस्तत्त्वं महाकालीप्रीत्यर्थं जपे विनियोगः"। मध्यमचरितस्य। "विष्णुऋषिर्महालक्ष्मीर्देवता अनुष्टप्छन्दः शाकम्भरीशक्तिर्दुर्गावीजं सूर्यस्तत्त्वं महालक्ष्मीप्रीत्यर्थं जपे विनियोगः"। उत्तरचरितस्य "रुद्रऋषिः सरस्वतीदेवता उष्णिकछन्दोभीमाशक्तिर्भ्रामरीवीजं वायुस्तत्त्वं सरस्वतीप्रीत्यर्थं जपे विनियोगः" नैयतकालिककल्पतरौ भविष्यपुराणम् "इतिहासपुराणानि श्रुत्वा भक्त्या विशांपते। मुच्यते सर्वपापेभ्यो ब्रह्महत्यादिभिर्विभो॥ ब्राह्मणं वाचकं विद्यान्नान्यवर्णजमादरात्। श्रुत्वान्यवर्णजाद्राजन् वाचकान्नरकं व्रजेत्"॥ तथा "देवार्चामग्रतः कृत्वा ब्राह्मणानां विशेषतः। ग्रन्थिश्च शिथिलं कुर्य्याद्वाचकः कुरुनन्दन॥ पुनर्बध्नीत तत्सूत्रं न मुक्ता धारयेत् क्वचित्। हिरण्यं रजतं गाश्च तथा कांस्योपदोहनाः॥ दत्त्वा तु वाचकायेह श्रुतस्याप्नोति तत्फलम्"। कांस्योपदोहनाः कांस्यक्रोड़ाः "वाचकः पूजितो येन प्रसन्नास्तस्य देवताः"। तथा "ज्ञात्वा पर्वसमाप्तिञ्च पूजयेत् वाचकं बुधः। आत्मानमपि विक्रीय य इच्छेत् सफलं कृतम्"॥ तथा "विस्पष्टमद्रुतं शान्तं स्पष्टाक्षरपदं तथा। कलस्वरसमायुक्तं रसभावसमन्वितम्॥ वुध्यमानः सदा शुद्धो ग्रन्थार्थं कृत्स्नशो नृप। ब्राह्मणादिषु सर्वेषु ग्रन्थार्थं चार्पयेन्नृप॥ य एवं वाचयेद्ब्रह्मन् स विप्रो व्यास उच्यते"। तथा "सप्तस्वरसमायुक्तं कालेकाले विशांपते। प्रदर्शयन्रसान् सर्वान् वाचयेद्वाचको नृप"॥ देवीपुराणे "इषे मास्यसिते पक्षे कन्याराशिगते रवौ। नवम्यां वोधयेद्देवीं क्रीड़ाकौतुकमङ्गलैः॥ ज्येष्ठानक्षत्रयुक्तायां षष्ठ्यां विल्वाभिमन्त्रणम्। सप्तम्यां मूलयुक्तायां पत्रिकायाः प्रवेशनम्। पूर्वाषाढ़ायुताष्टम्यां पूजा होमाद्युपोषणम्॥ उत्तरेण नवम्यान्तु वलिभिः पूजयेच्छिवाम्। श्रवणेन दशम्यान्तु प्रणिपत्य विसर्जयेत्"॥ अत्र नवम्यादिकल्प उक्तः। तथा "यावद्भूर्वायुराकाशं जलं वह्नि शशिग्रहाः। तावच्च चण्डिका पूजा भवि-

ष्यति सदा भुवि॥ प्रावृट्काले विशेषेण आश्विने त्वष्टमीषु च। महाशब्दो नवम्यान्तु लोके ख्यातिं गमिष्यति"॥ अनेन महाष्टमी-महानवमीकल्पावुक्तौ। सङ्कल्पोऽपि तद्रूपेण। अत्र कन्याराशिगते रवावित्यस्याभिधानं फलाधिक्यार्थं प्रायिकाभिप्रायं वा न तु नियमार्थम्। तथात्वे सौराश्विने प्रतिवर्षं कृष्णनवमीमारभ्य शुक्लदशमीं यावत् पूजाक्रमस्यानुपपत्तेः। अत्र कृष्णादित्वादिषु इत्यपि गौण आश्विनपरम्। अतएव कालकौमुद्यादिधृतं "कर्किण्यर्के हरौ सुप्ते शक्रध्वजक्रियाश्विने। तुलायां बोधयेद्देवीं वृश्चिके तु जनार्दनम्"॥ इति बोधयेदिति षष्ठ्यामिति शेषः। अत्रापि नवमीबोधनं कन्यायामेव तथैव सम्भवात् तेन सिंहार्के कन्यार्के तुलार्केऽप्याश्विनत्वेन वाक्यरचना महाष्टमी-महानवम्योरपि मासपक्षोल्लेखः। मासपक्षतिथीनामिति वचनात् अमावास्यापौर्णमास्योः पक्षोल्लेखवत् एतेन वारुण्यादिवत् महाष्टम्यादावपि विशिष्टविधित्वान्न मासाद्युल्लेख इति निरस्तम्।

अत्र कालिकापुराणे नवम्यां बोधनमष्टादशभुजायाः षष्ठ्यां बोधनं दशभुजायाः विशेष्याभिधानात्तथैवेति वदन्ति तन्न कालिकापुराण एव कामाख्यापञ्चमूर्त्तिप्रकरणे "शरत्काले पुरा यस्मात् नवम्यां बोधिता सुरैः। शारदा सा समाख्याता पीठे लोके च नामतः"॥ इत्युपक्रम्य "रूपमस्याः पुरा प्रोक्तं सिंहस्थं दशबाहुभिः"। तथा "रूपन्त्वेवं दशभुजं पूर्वोक्तन्तु विचिन्तयेत्"। इति तथा "पञ्चाननं कासरञ्च दैत्यमग्रे प्रपूजयेत्"। इत्यनेन सिंहमहिषयुक्ताया दशभुजाया अपि नवम्यां बोधनमुक्तम्। अतएव तत्रैव "उग्रचण्डेति या मूर्त्तिर्भद्रकाली त्वहं पुनः। यया मूर्त्त्या त्वां हनिष्ये सा दुर्गेति प्रकीर्त्तिता॥ एतासु मूर्त्तिषु सदा पादलग्नो नृणां सदा। पूज्यो भविष्यसि त्वं वै देवानामपि रक्षसाम्"॥ इत्यनेन कात्यायन्या दुर्गायाः पादलग्नत्वेन महिषासुरस्य पूज्यत्वं पूर्वमुक्तम्। अतएवाष्टादशभुजायाः पादलग्नत्वं महिषासुरस्य न सम्भवतीति तस्माद्दशभुजाया नवम्यां षष्ठ्यां वा बोधनमिति।

अत्र शरत्कालबोधनीयत्वेन शारदापदव्युत्पत्तेस्तत्पदं तात्पर्यादिसारं ददातीति व्युत्पत्तिस्तु काल्पनिकी ।

एवं प्रतिवर्षकर्त्तव्यत्वादार्द्रादि नक्षत्रालाभेऽपि पूजा कार्य्या नक्षत्रयोगस्तु फलातिशयाय तथा च लिङ्गपुराणं "मूलाभावेऽपि सप्तम्यां केवलायां प्रवेशयेत् । तथा तिथ्यन्तरेष्वेव ऋक्षेषु तु फलोच्चयः" । देवलः "तिथिनक्षत्रयोर्योगे द्वयोरेवानुपालनम् । योगाभावे तिथिर्ग्राह्या देव्याः पूजनकर्मणि" । कृष्णनवम्यामार्द्रायोगोविधौ मन्त्रे च श्रूयते तथा च लिङ्गपुराणम् । "कन्यायां कृष्णपक्षे तु पूजयित्वार्द्रभे दिवा । नवम्यां बोधयेद्देवीं महाविभवविस्तरैः" । चतुर्थचरणे गीतवादित्रनिस्वनैः इति कालिकापुराणे पाठः । "इषे मास्यसिते पक्षे नवम्यामार्द्रयोगतः । श्रीवृक्षे बोधयामि त्वां यावत् पूजां करोम्यहम् । ऐं रावणस्य बधार्थाय रामस्यानुग्रहाय च । अकाले ब्रह्मणा बोधो देव्यास्त्वयि कृतः पुरा" इति मन्त्रलिङ्गञ्च । अकाल इति तु रात्रित्वेन दक्षिणायणस्य ॥ तथा च श्रुतिः । "तपस्तपस्यौ शिशिरावृतुः । मधुश्च माधवश्च वासन्तिकावृतुः । शुक्रश्च शुचिश्च ग्रैष्मावृतुः । अथैतदुत्तरायणं देवानां दिनं नभाश्च नभस्यश्च वार्षिकावृतुः इषश्च ऊर्जश्च शारदावृतुः । सहाश्च सहस्यश्च हैमन्तिकावृतुः । अथैतद्दक्षिणायणं देवानां रात्रिः" इति एवञ्च "रात्रावेव महामाया ब्रह्मणा बोधिता पुरा । तथैव च नराः कुर्य्युः प्रतिसंवत्सरं नृप" इति अस्याप्येतद्विषयम् । अतएव लिङ्गपुराणे दिवेत्युक्तम् । एवञ्च कालिकापुराणेऽपि बोधने रात्राविति-पदं देवता रात्रिपरम् । ततश्च पूर्वाह्णे नवम्यामार्द्रानक्षत्रयुक्तायां बोधनं पूर्वाह्णेतरकाले आर्द्रालाभे नवम्यामार्द्रभे दिवेत्यत्र दिवापदात्तत्रापि बोधनम् अन्यथा दिवापदं व्यर्थं स्यादिति । ज्योतिषार्णवे व्यक्तमुक्तं वराहेण "कन्यादिमीनपर्य्यन्तं यत्र संप्राप्यते शिवः । तत्र बोधः प्रकर्त्तव्यो देव्याराज्ञा शुभप्रदः" । शिव आर्द्रा एवञ्चोभयदिने पूर्वाह्णे नवमीलाभे परत्रार्द्रालाभे परत्र बोधनं न युग्मात् पूर्वत्र युग्मबाधक पूर्वाह्णस्य बाधकनक्षत्रानुरोधात् दिवानक्षत्रालाभे तु पूर्वाह्ण एव

नमस्याम् उभयत्र पूर्वाह्णलाभे तु पूर्वदिन एव युग्मात् अत्र केवलनवम्यां बोधनविधेर्नवत्वस्यापि गुणफलत्वाच्च। "माघे वा फाल्गुने वापि भवेद्दं माघसप्तमी। माकरीति च यत् प्रोक्तं तत् प्रायो वृत्तिदर्शनात्" इति सौरागमान्माकरीति च यत् आर्द्रायोग इत्यस्य प्रायिकत्वेनाभिधानं प्रतीयते। ततश्चार्दारहितबोधने मन्त्रान्तरानुपदेशात्तद्युक्तमन्त्रः प्रणवयुक्तत्वेन प्रयुज्यते। "यन्न्यूनञ्चातिरिक्तञ्च यच्छिद्रं यदयज्ञियम्। यदमेध्यमशुद्धञ्च यातयामञ्च यद्भवेत्। तदोङ्कारप्रयुक्तेन सर्वञ्चाविकलं भवेत्"। इति योगियाज्ञवल्क्यवचनात्।

षष्ठीबोधनेऽप्येवं नवम्यां बोधनासामर्थ्ये तु षष्ठ्यां सायं बोधनं यथा भविष्ये "षष्ठ्यां बिल्वतरौ बोधं सायं सन्ध्यासु कारयेत्" सन्ध्योक्ता वराहमिहिरेण। "अर्द्धास्तमयात् सन्ध्या व्यक्तीभूता न तारका यावत्"। षष्ठ्यां बोधने तु प्रागुक्त "ऐं रावणस्य बधार्थाय" इति "अहमप्याश्विने षष्ठ्यां सायाह्ने बोधयाम्यतः" इति च पठेत्।

अत्र बोधनामन्त्रणयोः पृथक्त्वं तत्प्रकाशकमन्त्रभेदात् अत्र बोधनमन्त्रावुक्तावेव आमन्त्रणमन्त्रौ तु "मेरुमन्दरकैलासहिमवच्छिखरे गिरौ"। इत्यादि प्रागुक्त देवीपुराणे नवमीषष्ठ्योर्बोधनामन्त्रणयोः पृथक्त्वाभिधानाच्च। ततश्च षष्ठ्यामुभयकरणेऽपि पत्रीप्रवेश पूर्वदिने सायं षष्ठीलाभे एकदैवोभयकरणम्। यदा तु पूर्वदिने सायं षष्ठीलाभः न परदिने सायं षष्ठीलाभः तदा पूर्वेद्युर्बोधनं परदिने सायमामन्त्रणम्। यदा तु उभयदिने सायं षष्ठ्यलाभस्तदा परदिने पूर्वाह्णे षष्ठ्यां बोधनं "बोधयेद्बिल्वशाखायां षष्ठ्यां देवीं फलेषु च। सप्तम्यां बिल्वशाखां तामाहृत्य प्रतिपूजयेत्॥ पुनः पूजां तथाष्टम्यां विशेषेण समाचरेत्। जागरञ्च स्वयं कुर्य्याद्बलिदानं महानिशि॥ प्रभूतबलिदानञ्च नवम्यां विधिवच्चरेत्। ध्यायेद्दशभुजां देवीं दुर्गामन्त्रेण पूजयेत्॥ विसर्जनं दशम्यान्तु कुर्य्याद्वै शावरोत्सवैः। धूलिकर्दमविक्षेपैः क्रीड़ाकौतुकमङ्गलैः भगलिङ्गाभिधानैश्च भगलिङ्गप्रगीतकैः"॥ इति कालिकापुराणात्। शवरो म्लेच्छः शाखां विशेषयति

लिङ्गपुराणम् । "युग्माभिन्नाश्च विल्वस्य फलाभ्यां शाखिकां तथा। तथाच मृण्मयीं देवीं स्नात्वा पूज्य प्रवेशयेत्" ॥ एतानि षष्ठ्यादिकल्पविधायकानि । षष्ठ्यां बोधने तु नक्षत्रानुपदेशान्न तदादरः । ज्येष्ठादरस्तु आमन्त्रण एव तत्रापि विशेषो वक्ष्यते । आमन्त्रणन्तु षष्ठीं विना सायमेव । "यज्ञीया देवताः सर्वाः श्वः कार्य्ये यत्र कर्म्मणि । सायमावाहयेद्विद्वान्नान्यत्रेति निमित्तकात् ॥ श्वो भाविनि जगन्निद्रे प्रवेशे विन्ध्यवासिनी । विल्वपादपमभ्येति पूजार्थं सायमम्बिका" ॥ इति हयशीर्षपञ्चरात्रीयदेवीकाण्डात् । "ज्येष्ठाप्यथवा षष्ठी सायं कालेन चेद्भवेत् । सायमेव तथापि स्यात् विल्वशाखाभिमन्त्रणम् ॥ पूर्वां षष्ठीं सनक्षत्रां सायं प्राप्तामपि त्यजेत् । यदा तु पत्रिका पूजा न परेद्युर्भविष्यति । सन्निकृष्टश्च यत्पूर्वं पत्रिका दिवसस्य तु । तद्दिने वरणं कृत्वा परे शाखां प्रवेशयेत्" ॥ इति स्मृति सागरधृत मत्स्यसूक्ताच्च ब्रह्माण्डनन्दिकेश्वरपुराणयोः "पत्रीप्रवेशात् पूर्वेद्युः सायाह्ने विन्ध्यवासिनीम् । चण्डीमामन्त्रयेद्विद्वान् नात्र षष्ठी पुरस्क्रिया"॥ विन्ध्यवासिनीमित्यत्र विल्ववासिनीमिति भविष्यपुराणे पाठः पठन्ति च । "सायं षष्ठ्यान्तु कर्त्तव्यं पार्वत्या अधिवासनम् । षष्ठ्यभावेऽपि कर्त्तव्यं सप्तम्यामपि मानद" ॥ इति । ये त्वेतानि वचनान्यनालोच्य पत्रीप्रवेशाव्यवहितपूर्वदिन एव षष्ठ्यामेव विल्वाभिमन्त्रणं ब्रुवते तेषां पूर्णषष्ठ्यनन्तरं षष्ठीलाभे घटिकान्यून षष्ठीलाभे वा तत्परदिने घटिका तदधिक सप्तमीलाभे वा तदनुपपत्तेः पूर्वदिवसीयायाः षष्ठ्याव्यवहितत्वात् परदिवसीयायाः कर्मानर्हत्वादिति ।

अथ सप्तमीपूजा । तत्र सप्तम्यां मूलयुक्तायां केवलायां वा पूर्वाह्णे पत्रीप्रवेशः । उभयत्र सप्तमीलाभे परत्र । "युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया । रवेरुदयमीचन्ते न तत्र तिथियुग्मता" ॥ इति देवीपुराणात् । ज्योतिषे "पूर्वाह्णे नवपत्रिका शुभकरी सर्वार्थसिद्धिप्रदा आरोग्यं धनदा करोति विजयं चण्डी प्रवेशे शुभा । मध्याह्ने जनपीड़नक्षयकरी संग्रामघोरावहा सायाह्ने वधबन्धनादिकलहं सर्पक्षतं सर्वदा ।

सप्तम्यामस्तगायां यदि विशति गृहं पत्रिका श्रीफलाद्या राज्ञः सप्ताङ्गराज्यं जनसुखमखिलं हन्ति मूलानुरोधात् ॥ तस्मात् सूर्य्योदयस्थां नरपतिशुभदां सप्तमीं प्राप्य देवीम् । भूपालो वेशयेत्तां सकलजनहितां राक्षसर्क्षं विहाय" ॥ राक्षसर्क्षं मूला "पत्रीप्रवेशनं रात्रौ विसर्गं वा करोति यः । तस्य राज्यविनाशः स्याद्राजा च विकलो भवेत्" ॥ देव्या गृहं दक्षिणायनेऽपि कर्त्तव्यं कल्पतरुधृतदेवीपुराणे प्रतिष्ठाविधानेन तद्विधानात् । तथाच "महिषासुरहन्त्र्याश्च प्रतिष्ठा-दक्षिणायने" । तत्रैव "यस्य देवस्य यः कालः प्रतिष्ठाध्वजरोपणे । गर्त्तापूरशिलान्यासे शुभदस्तस्य पूजितः" ॥ यस्य देवस्य प्रतिष्ठाध्वजरोपणे यः कालः शुभदस्तस्य गर्त्तापूरशिलान्यासे गृहारम्भे सकालः पूजित इत्यर्थः । तस्य प्रवेशेऽपि सकालः । "ज्येष्ठादितिथ्यां संयुक्तं गृहारम्भोदितञ्च यत् । तत्सर्वं योजयेद्वेश्मप्रवेशे देवचिन्तकः" ॥ इति ज्योतिर्वचनात् अदितिः पुनर्वसुः ।

पत्रिका तु "कदली दाड़िमो धान्यं हरिद्रा मानकं कचुः । विल्वोऽशोको जयन्ती च विज्ञेया नवपत्रिका" ॥ विल्वयुग्ममुपक्रम्य गवाक्षतन्त्रे । "वायव्यस्थं राक्षसस्थं न गृह्णीयात् कदाचन" । व्याहृतिभिरावाहनमाह मत्स्यपुराणं "विनायकं तथा दुर्गां वायुमाकाशमेव च । आवाहयेद्व्याहृतिभिस्तथैवाश्विकुमारकौ ॥ तस्मिन्नावाहयेद्देवान् पूर्ववत् पुष्पतण्डुलैः" ॥ तस्मिन् मण्डलादौ ।

प्राणप्रतिष्ठाविधिमाह कालिकापुराणे "प्रतिमायाः कपोलौ द्वौ स्पृष्ट्वा दक्षिणपाणिना । प्राणप्रतिष्ठां कुर्वीत तस्यां देवस्य वा हरेः ॥ अकृतायां प्रतिष्ठायां प्राणानां प्रतिमासु च । यथा पूर्वं तथा भावः स्वर्णादीनां न विष्णुता ॥ अन्येषामपि देवानां प्रतिमास्वपि पार्थिव । प्राणप्रतिष्ठा कर्त्तव्या तस्यां देवत्वसिद्धये ॥ वासुदेवस्य वीजेन तद्विष्णोरित्यनेन च । तथैवाङ्गाङ्गिमन्त्राभ्यां प्रतिष्ठामाचरेद्धरेः ॥ तथैव हृदयेऽङ्गुष्ठं दत्त्वा शश्वच्च मन्त्रवित् । एभिर्मन्त्रैः प्रतिष्ठान्तु हृदयेऽपि समाचरेत् ॥ अस्मै प्राणाः प्रतिष्ठन्तु अस्मै प्राणाः क्षरन्तु च ।

अस्मै देवत्वसंख्यायैः स्वाहेति यजुरीरयन्॥ अङ्गिमन्त्रैरङ्ग-मन्त्रैर्वैदिकैरित्यनेन च। प्राणप्रतिष्ठां सर्वत्र प्रतिमासु समाचरेत्"॥ तथा भावः स्वर्णादिमात्रम्। अङ्गमन्त्रैरङ्गन्यास-मन्त्रैः अङ्गिमन्त्रैर्मूलमन्त्रैर्वैदिकैः "मनोज्योतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमम्। तनो त्वरिष्टं यज्ञं समिमं दधातु विश्वेदेवा स इह मादयन्तामोम्प्रतिष्ठ"॥ इति मन्त्रैः एवञ्च दुर्गायाः प्राणप्रतिष्ठायां कपोलौ धृत्वा मूलमन्त्रं षड़ङ्गमन्त्रञ्च पठेत्। हृदयेऽङ्गुष्ठं दत्त्वा अस्यै इत्यत्र अस्मै इत्यूहं कृत्वा तदादिकं पठेत्। तथा "लिङ्गस्थां पूजयेद्देवीं मण्डलस्थां तथैव च। पुस्तकस्थां महादेवीं पावके प्रतिमासु च। चित्रे च विशिखे खड्गे जलस्थाञ्चापि पूजयेत्"॥ अत्र जलसेकाद्य-योग्ये स्नानं खड्गादावाह कालिकापुराणम्। "सद्यः स्निग्धे मृण्मये वा सर्पिः सिन्दूरजे तथा। श्रीचन्दनप्रतिष्ठे वा लेपजे प्रतिमा तनौ। अन्तिकस्थापिते खड्गे स्नापयेद्दर्पणेऽथवा"॥ इति खड्गे प्रतिबिम्बयोग्यलौहनिर्मिते।

पूजामधिकृत्य बौधायनः "प्रतिमास्थानेष्वप्स्वग्नौ आवा-हनविसर्जनवर्जम्" इति प्रतिमास्थानेषु स्थिरतरप्रतिष्ठितेषु इत्यर्थः। जमदग्निः "देवताप्रतिमां दृष्ट्वा यतिं दृष्ट्वाप्यद-ण्डिनम्। नमस्कारं न कुर्य्याद्यः प्रायश्चित्तीयते नरः"॥ प्राय-श्चित्तीसन् ईयते। कालिकापुराणम्। "दिग्विभागे तु कौवेरी दिक् शिवाप्रीतिदायिनी। तस्मात्तन्मुख आसीनः पूजये-च्चण्डिकां सदा"॥ कौवेरी उत्तरादिक् तन्मुख उत्तरामुखः। त्रिपुरासारसमुच्चये। "स्नात्वा यथाविधिविधौतकराननाङ्घ्रि-राचम्य सम्यगमलाम्बरयज्ञसूत्रः। प्रागाननो धनददिग्वदनो-ऽथ वापि बद्धासनो गणपतिञ्च गुरुञ्च नत्वा" इति वाक्यात् प्रागाननोऽपि देवीप्रतिमोपक्रमस्य मत्स्यपुराणम्। "सिन्दूरं लामचूर्णञ्च तासां शिरसि पातयेत्। स्मृतिः "मधुमुस्तं घृतं गन्धो गुग्गुल्वगुरुशैलजम्॥ सरलं सिह्लसिद्धार्थौ दशाङ्गो धूप इष्यते"॥ दशाङ्गो दशघटितः शैलजं स्वनामख्यातं सिद्धार्थः श्वेतसर्षपः। "तुरुष्कं ग्रन्थिकर्पूरनागरागुरुकुङ्कुमैः। मुरा-मांसीसितामिश्रं धूपं दद्यान्मधुप्लुतम्"॥ तुरुष्कं सिह्लकं

ग्रन्थिः गाँठीयानीति ख्याता । सिता शर्करा नागरः शुण्ठी । भविष्ये "वलिहीने तु दुर्भिक्षं गन्धहीने त्वभाग्यताम् । धूपहीने तथोद्वेगं वस्त्रहीने धनक्षयम्" ॥ प्राप्नुयादिति शेषः । कालिकापुराणे "लाङ्गलं क्रमुकं दत्त्वा रुचकं करमर्दकम् । सौभाग्यमतुलं प्राप्य देवीलोके महीयते । परमान्नं पिष्टकञ्च यावकं कृषरन्तथा ॥ मोदकं पृथुकादीनि कन्दुपक्वानि चोत्सृजेत् । हविः शाल्योदनं दिव्यमाज्ययुक्तं सशर्करम् ॥ निवेदयेन्महादेव्यै सर्वाणि व्यञ्जनानि च । क्षीरादीन्यथ गव्यानि महिषादीनि सर्वशः" ॥ लाङ्गलं नारिकेलं क्रमुकं गुवाकफलं रुचकं वीजपूरकं करमर्दकं पानीयामलकं कन्दुपक्वं जलोपसेकं विना केवलपात्रे यद्वह्निना पक्वं भ्रष्टतण्डुलादि ।

"कन्दुपक्वानि तैलेन पायसं दधिशक्तवः । द्विजैरेतानि भोज्यानि शूद्रगेहकृतान्यपि" ॥ इति कूर्मपुराणदर्शनात् शूद्रकर्त्तृककन्दुपक्वादीनि देयानि शूद्रेतरकृतान्यपि । "गोकुले कन्दुशालायां तैलयन्त्रेक्षुयन्त्रयोः । अमीमांस्यानि शौचानि स्त्रीषु वालातुरेषु च" इति शातातपवचने अमीमांस्यानि शौचाशौचभागितया न विचारणीयानि इति भवदेवरत्नाकरव्याख्यानदर्शनाच्च । एवञ्च गङ्गावाक्यावल्यां त्रैवर्णिकेन सिद्धान्नेन नैवेद्यं देयं शूद्रेण द्विजशुश्रूषारतेन च । तदुक्तं वराहपुराणे 'त्रिषु वर्णेषु कर्त्तव्यं पाकभोजनमेव च । शुश्रूषामभिपन्नानां शूद्राणाञ्च वरानने !" ॥ एतच्चातुर्वर्ण्यपाककरणं कलीतरपरम् । "ब्राह्मणादिषु शूद्रस्य पक्वतादिक्रियापि च" इत्यभिधाय । "एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः । निवर्त्तितानि कार्य्याणि व्यवस्थापूर्वकं बुधैः ॥ समयश्चापि साधूनां प्रमाणं वेदवद्भवेत्" ॥ इत्यधिकरणमालाकृन्माधवाचार्य्यधृतादित्यपुराणवचनात् । ततश्च शूद्रकर्त्तृकवृषोत्सर्गादौ ब्राह्मणकर्त्तृकचरुवत् ब्राह्मणद्वारा पक्वान्ननैवेद्यादि शूद्रोऽपि दातुमर्हति । एवञ्च "आमं शूद्रस्य पक्वान्नं पक्वमुच्छिष्टमुच्यते" इति स्वयं पाकविषयं योगिनीतन्त्रे । "शिवागारे झल्लकञ्च सूर्य्यागारे च शङ्खकम् । दुर्गागारे वंशिवाद्यं मधुरीञ्च न वादयेत्" ॥ झल्लकं कांस्यनिर्मितकरतालम् । मत्स्यपुराणे "गीतवादित्र-

निर्घोषं देवस्याग्रे च कारयेत्। विरिञ्चेश्च गृहे ढक्कां घण्टां लक्ष्मी गृहे त्यजेत्॥ घण्टा भवेदशक्तस्य सर्ववाद्यमयी यतः। विल्वपत्रञ्च माध्यञ्च तमालामलकीदलम्। कह्लारं तुलसी चैव पद्मञ्च मुनिपुष्पकम्। एतत् पर्य्युषितं न स्याद्यच्चान्यत् कलिकात्मकम्"॥ माध्यं कुन्दं मुनिपुष्पं वकपुष्पम्। पुण्य-बुद्ध्या परकीयधर्मकार्य्यं वेतनमगृह्णन् तत्कार्य्यं कुर्वन् फल-माप्नोति। "अभिरूपेण सम्पन्नान् घट्टयित्वा विना भृतिम्। धर्मकार्य्यमिति ज्ञात्वा न गृह्णाति कथञ्चन॥ योऽसौ सुवर्ण-कारश्च दरिद्रोऽप्यथ सत्त्ववान्। न मूल्यमादाद्वेश्यातः सभार्य्य ऋद्धिसंयुतः। सप्तद्वीपपतिर्जातः सूर्य्यायुतसमप्रभः"॥ इति मत्स्यपुराणे लीलावतीवेश्याया लवणाचलदाने हेमतरुघटकस्य तथाविधफलदर्शनात्। कालिकापुराणे "महिषन्तु ददद्देव्यै भैरव्यै भैरवाय च। अनेनैव तु मन्त्रेण तं वलिं परिपूजयेत्॥ यथावाहं भवान् द्वेष्टि यथा वहसि चण्डिकाम्। तथा मम रिपून् हिंस शुभं वह लुलापक"॥ वाहोऽश्वः। लुलापको महिषः। "यमस्य वाहनस्त्वं हि वररूपधराव्यय। आयु-र्वित्तं यशो देहि कासराय नमोऽस्तु ते"॥ कासरो महिषः। "प्रभूतवलिदाने तु द्वौ वा त्रीन् वाग्रतः कृतान्। पूजयेत् प्राङ्मुखान् कृत्वा सर्वांस्तन्त्रेण साधकः"॥

वलिदानप्रकारं तत्रैव। भगवानुवाच। "स्नापयित्वा वलिं तत्र पुष्पचन्दनवन्दनैः। पूजयेत् साधको देवीं मूल-मन्त्रैर्मुहुर्मुहुः॥ उत्तराभिमुखो भूत्वा वलिं पूर्वमुखं तथा। निरीक्ष्य साधकः पश्चादिमं मन्त्रमुदीरयेत्॥ नरत्वं वलि-रूपेण मम भाग्यादुपस्थितः। प्रणमामि ततः सर्वरूपिणं वलि-रूपिणम्॥ चण्डिकाप्रीतिदानेन दातुरापद्विनाशन। चामुण्डा-वलिरूपाय वले तुभ्यं नमोऽस्तु ते॥ यज्ञार्थे पशवः सृष्टाः स्वयमेव स्वयम्भुवा। अतस्त्वां घातयाम्यद्य तस्माद्यज्ञे वधो-ऽवधः॥ ऐं ह्रीं श्रीमिति मन्त्रेण तं वलिं मत्स्वरूपिणं चिन्त-यित्वा न्यसेत् पुष्पं मूर्द्ध्नि तस्य तु भैरव। ततो देवीं समुद्दिश्य काममुद्दिश्य चात्मनः। अभिषिच्य वलिं पश्चात् करवालन्तु पूजयेत्॥ रसना त्वं चण्डिकायाः सुरलोकप्रसाधकः। ह्रीं

श्रीं खड्गेति मन्त्रेण ध्यात्वा खड्गं प्रपूजयेत्" ॥ मत्स्वरूपिणं शिवस्वरूपिणम् अभिषिच्य घाताभिलापजलेनेति शेषः। ध्यानं तत्रैव । "कृष्णं पिनाकपाणिञ्च कालरात्रिस्वरूपिणम् । उग्रं रक्तास्यनयनं रक्तमाल्यानुलेपनम् ॥ रक्ताम्बरधरञ्चैव पाशहस्तं कुटुम्बिनम् । पिबमानञ्च रुधिरं भुञ्जानं क्रव्यसंहतिम् ॥ असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः। श्रीगर्भो विजयश्चैव धर्मपाल! नमोऽस्तु ते ॥ इत्यष्टौ तव नामानि स्वयमुक्तानि वेधसा। नक्षत्रं कृत्तिका तुभ्यं गुरुर्देवो महेश्वरः ॥ हिरण्यञ्च शरीरन्ते धाता देवो जनार्द्दनः। पिता पितामहश्चैव त्वं मां पालय सर्वदा ॥ नीलजीमूतसङ्काशस्तीक्ष्णदंष्ट्रः कृशोदरः। भावशुद्धोऽमर्षणश्च अतितेजस्तथैव च ॥ इयं येन धृता क्षोणी हतश्च महिषासुरः। तीक्ष्णधाराय शुद्धाय तस्मै खड्गाय ते नमः ॥ पूजयित्वा ततः खड्गम् आं ह्रीं फड़िति मन्त्रकैः। गृहीत्वा विमलं खड्गं छेदयेद्वलिमुत्तमम् ॥ ऐं ह्रीं श्रीं कौशिकि रुधिरेणाप्यायताम्" इति "स्थाने नियोजयेद्रक्तं शिरश्च सप्रदीपकम् । एवं दत्त्वा वलिं पूर्णं फलं प्राप्नोति साधकः ॥ हीनन्तु स्याद्धीनताया निष्फलं स्याद्विपर्य्ययात् । अन्येषां महिषादीनां वलीनामथ पूजनात् ॥ कार्य्योमिध्यत्वमाप्नोति रक्तं गृह्णाति वै शिवा। अन्येभ्योऽपि च देवेभ्यो यदा यद्यत् प्रदीयते ॥ तदर्च्चितं प्रदद्यात्तु पूजिताय सुराय वै। वलिदाने तु दुर्गायाः सर्वत्रायं विधिः स्मृतः" ॥ तथा "छेदयेत्तेन खड्गेन वलिं पूर्वमुखन्तु तम्। अथवोत्तरवक्त्रान्तं स्वयं पूर्वमुखस्तथा" ॥ अत्र सर्वत्रायं विधिः स्मृत इत्यतिदेशान्तरेत्यत्र छागादिरूह्यः। मन्त्रे घातयामीति श्रुतेः ॥ "पशुघातश्च कर्त्तव्यो गवलाजवधस्तथा" इति विधेश्च देव्यै घातयिष्ये इति प्रयोगः कार्य्यः अत्र स्वकर्त्तृकहननेऽपि घातिप्रयोगशूरादो हन्त्यर्थाश्चेति पाठात् । एवञ्च पश्चादपि रुधिरशीर्षवलिदानमुपपद्यते एतत्प्रकारकवलिदानादेव "महिषन्तु ददद्देव्यै" इत्युपपद्यते। वक्ष्यमाण भविष्यपुराणेऽपि वधानन्तरं मांसादिदानमुक्तम्। अतएव दुर्गाभक्तितर-

ङ्गिणीकृत्यमहार्णवधृतेन देवीपुराणेन पशुघातबलिदानयोः पृथक् फलमभिहितम्। यथा "देवीं ध्यात्वा पूजयित्वा अर्द्धरात्रेऽष्टमीषु च। घातयन्ति पशून् भक्त्या ते भवन्ति महाबलाः॥ बलिं ये च प्रयच्छन्ति सर्वभूतविनाशनम्। तेषान्तु तुष्यते देवी यावत् कल्पन्तु शाङ्करम्"। सर्वभूतानि विहितमहिषादीनि विनाश्यन्ते यस्मिन् बलौ चर्माणि द्वीपिनं हन्तीतिवत्। छागादौ पशुपदप्रयोगमाह यज्ञपार्श्वः। "उष्ट्रो वा यदि वा मेषश्छागो वा यदि वा हयः। पशुस्थाने नियुक्तानां पशुशब्दो विधीयते"॥ कालिकापुराणे "शोणितं मन्त्रपूतञ्च शीर्षं पीयूषमुच्यते। तस्माच्च पूजने दद्याद्बलेः शीर्षञ्च शोणितम्॥ सफलैस्तोयसंयुक्तैः शर्करामधुसंयुतैः। अभ्युक्ष्य रुधिरं दद्यात् कामबीजेन भैरव॥ ततो बलीनां रुधिरं तोयसैन्धवसत्फलैः। मधुभिः पुष्पगन्धैश्च अधिवास्य प्रयत्नतः"॥ इत्यादि वचनात् मधुसैन्धवयुतं कृत्वा दद्यात्। तथा "पूजासु नाम मांसानि दद्याद्वै साधकः क्वचित्। ऋते तु लोहितं शीर्षममृतं तत्तु जायते"॥ अत्र बहुपशुघातेऽपि मन्त्र एकवचनान्त एव प्रयोज्यो न बहुवचनोह्यः नरं पञ्चत्वमागतमित्यत्र नार्थ्यां लिङ्गोहाभाववत्। अतएव बहुपत्नीकयजमानप्रयोगेऽपि पत्नीं सन्नह्येति मन्त्र एकवचनान्त एवेत्युक्तमिति श्रीदत्तोपाध्यायेन दृष्टान्तीकृतम्।

ऊहं प्रकृत्य "नप्रकृतावपूर्वत्वात्" इति कात्यायनसूत्रेणोहप्रतिषेधात् विकृताविशेषो "अपूर्वोत्प्रेक्षणम् ऊह" इति लक्षणात्। न वा मन्त्रस्य बाधः वैभक्तिकार्थापेक्षया प्राथमिकत्वेन बलवतः प्रातिपदिकार्थस्य समवेतार्थत्वेन विनियोज्यत्वात्। अत्र पशुघातपूर्वक रक्तशीर्षयोर्बलित्वम्। पशुघातपूर्वक रुधिरशीर्षदानानन्तरं "एवं दत्त्वा बलिं पूर्णं फलं प्राप्नोति साधकः" इत्युक्तेः "नानापाशुकमज्जमांसरुधिरैः कृत्वा नवम्यां बलिम्" इति राजमार्त्तण्डाच्च। एवञ्च प्रकृतौ नररूपबहुपशौ बहुवचनोहाभावात् छागादौ विकृतीभूतेऽपि न बहुवचनोहः किन्तु एकवचनमात्रम् एवं प्रतिनिधिपुत्रादिना क्रियमाणे कर्मणि। तथा मम रिपून् हिंस

शुभं वह लुलापक" इत्याद्युक्त फलं यजमान एव अन्वेति। "यां वै काञ्चन यज्ञऋत्विज आशिषमाशासते यजमानस्यैव तामाशासते इति होवाच" इति श्रुतेः। "ऋत्विग्वादे नियुक्तश्च समौ संपरिकीर्त्तितौ। यज्ञे स्वाम्याप्नुयात् पुण्यं हानिं वादेऽथवा जयम्" इति बृहस्पतिवचनाच्च एवञ्च "आयान्तु नः पितरः" इति वदताप्यनूहः एवं वाक्ये तु काल्पनिके यजमाननामोल्लेख इति भविष्ये "अजानां महिषाणाञ्च मेषाणाञ्च तथावधात्। प्रीणयेद्विधिवद्दुर्गां मांसशोणित तर्पणैः॥ दुर्गाया दर्शनं पुण्यं दर्शनादभिवन्दनम्॥ वन्दनात् स्पर्शनं श्रेष्ठं स्पर्शनादभिपूजनम्। पूजनात् स्नपनं श्रेष्ठं स्नपनात्तर्पणं स्मृतं तर्पणान्मां सदानन्तु महिषाजनिपातनम्"॥ महिषोऽजो वा निपात्यते यस्मिन् वलौ चर्मणि द्वीपिनं हन्ति इति वत् तथा मांसम् आमं शीर्षं तदितरत् पक्कम् उक्तवचनात्। तथा "स्वमेकमेकं वरदा तृप्ता भवति चण्डिका। रुधिरेणोरणस्येह तर्पिता विधिवन्नृप। अजस्य दशवर्षाणि रुधिरेण सुतर्पिता। महिषेण शतं वीर तृप्ता भवति चण्डिका॥ सहस्रं तृप्तिमाप्नोति स्वदेहरुधिरेण च। तर्पिता विधिवद्दुर्गा भित्त्वा बाहूरुजङ्घकम्॥ नारेण शिरसा वीर पूजिता विधिवन्नृप। तृप्ता भवेद्ध्रुवं दुर्गा वर्षाणां लक्षमेव तु"॥ स्वमेकं संवत्सरं "स्वमेको वत्सरो श्व्यो मासः" इति श्रुतेः उरणस्य मेषस्य तथा "प्रदाने कृष्णसारस्य मन्त्रोऽयं परिकल्पितः। कृष्णसार ब्रह्ममूर्त्ते ब्रह्मतेजोविवर्द्धन॥ चतुर्वेदमय प्राज्ञ प्रज्ञां देहि यशो महः"। तथा "वैष्णवीतन्त्रकल्पोक्तक्रमः सर्वत्र सर्वदा। साधकैर्बलिदाने तु ग्राह्यः सर्वसुरस्य तु"॥ एवञ्च चामुण्डेत्यत्र षष्ठिकेत्यूह्यः ततश्च अभिमतस्तत् तत् फलकामो दुर्गाप्रीतिकामो वा पशुघातं कुर्य्यात् ततोऽमुकस्य दशवर्षावच्छिन्न देवी प्रीतिकामनया एष रुधिर बलिर्नम इत्युत्सृजेत्। ततः शिरसि ज्वलद्दशां दत्त्वाऽमुकस्य श्रीदुर्गाया दर्शनाभिवन्दन स्पर्शनाभिपूजनस्नपनतर्पणजनित पूर्व पूर्व पुण्याधिक पुण्यप्राप्तिकामनया एष स प्रदीपच्छागशीर्षबलिर्नम इति वत् सृजेत। "बलिदानप्रदानार्थं नमस्कारो यतः कृतः" इति

छन्दोगपरिशिष्टात् प्रदीयतेऽनेनेति प्रदानं मन्त्रः। कालिकापुराणे। "महामाये जगन्मातः सर्वकामप्रदायिनि। ददामि देहरुधिरं प्रसीद वरदा भव॥ इत्युक्त्वा मूलमन्त्रेण नतिपूर्वं विचक्षणः। स्वगात्ररुधिरं दद्यान्मानवः सिद्धसन्निभः"॥ तथा "स्त्रियं न दद्यात्तु बलिं दत्त्वा नरकमाप्नुयात्। न च त्रैमासिक न्यूनं पशुं दद्याच्छिवा बलिम्॥ न च त्रैपक्षिकन्यूनं प्रदद्याद्वै पतत्त्रिणम्। काणव्यङ्गादिदुष्टं वै न पशुं न पतत्त्रिणम्॥ छिन्नलाङ्गलकर्णादिं भग्नशृङ्गादिकं तथा। कुष्माण्डमिक्षुदण्डञ्च मद्यमासव एव च॥ एते बलिसमाः प्रोक्तास्तृप्तौ छागसमाः स्मृताः। चन्द्रहासेन कर्त्रारैच्छेदनं मुख्यमिष्यते॥ हस्तेन च्छेदयेद्यस्तु साधकः प्रोक्षितं पशुम्। पक्षिणं वापि राजेन्द्र ब्रह्महत्यामवाप्नुयात्"॥ मत्स्यसूक्ते "छेदयेत्तीक्ष्णखड्गेन प्रहारेण सकृद्बुधः"। याज्ञवल्क्यदीपकलिकायां ब्रह्मपुराणं "नराश्वमेधौ मद्यञ्च कलौ वर्ज्या द्विजातिभिः" निषेधं स्पष्टयत्युशनाः। "मद्यमपेयमदेयमनिग्राह्यम्" इति। अनिग्राह्यमस्वीकार्य्यमिति कल्पतरुः। कालिकापुराणेऽपि "स्वगात्ररुधिरं दत्त्वा आत्महत्यामवाप्नुयात्। मद्यं दत्त्वा ब्राह्मणस्तु ब्राह्मण्यादेव हीयते॥ न कृष्णसारमितरे बलिन्तु क्षत्रियादयः। ददतः कृष्णसारञ्च ब्रह्महत्यामवाप्नुयुः"। अतो मद्यप्रतिनिधि दानमप्ययुक्तम्।

अथ वैधहिंसाविचारः। "मा हिंस्यात् सर्वाभूतानि" इत्यत्र सर्वशब्दस्य व्यापकार्थपरतया एतद्विधिमनुल्लङ्घ्य। "वायव्यं श्वेतमालभेत"। इत्यादि विधेर्विषयाप्राप्तेरगत्या वैधातिरिक्त विषयत्वं सर्वाः सर्वाणि छन्दसिवेत्यनेन तत् पदं सिद्धम्। यदपि नानादर्शनटीकाकृद्भिर्वाचस्पतिमिश्रैः तत्त्वकौमुद्याम् अभिहितं न च "मा हिंस्यात् सर्वा भूतानि" इति सामान्यशास्त्रं विशेषशास्त्रेण "अग्नीषोमीयं पशुमालभेत" इत्यनेन बाध्येत इति वाच्यं विरोधाभावात् विरोधे हि बलीयसा दुर्बलं बाध्यते। न च अस्ति विरोधः भिन्नविषयत्वात्। तथा हि मा हिंस्यादिति निषेधेन हिंसाया अनर्थहेतुभावो ज्ञाप्यते न पुनरक्रत्वर्थत्वमपि। न च अनर्थहेतुत्व क्रतूपका-

रकत्वयोः कश्चिदस्ति विरोधः। हिंसा हि पुरुषस्य दोषमावक्ष्यति क्रतोश्चापकरिष्यतीत्यन्तेन तदपि सांख्यनये। मीमांसकमते तु विरोध एव तथा हि गुरुनये न खलु सर्वभूतहिंसाभावविषयकं कार्य्यम् इति निषेधविध्यर्थस्य वाधं विना अग्नीषामीयपशालम्भनविषयकं कार्य्यमिति भावविध्यर्थ उपपद्यते। भट्टनये तु अङ्गे यथा तथास्तु। न च मुख्यपशुयागे पुरुषार्थपशुहिंसनस्यार्थसाधनत्वमनर्थसाधनत्वञ्चोपपद्यते विरोधात्। वस्तुतस्तु अङ्गेऽपि विरोधोऽस्त्येव क्रुतो विधेरेष स्वभावो यः स्वविषयस्य साचात् परम्परया वा पुरुषार्थसाधनत्वमवगमयति अन्यथाऽङ्गानां प्रधानोपकारकत्वमपि नाङ्गीक्रियेत। अर्थसाधनत्वं बलवदनिष्टाननुबन्धीष्टसाधनत्वं अनर्थसाधनत्वं बलवदनिष्टसाधनत्वं न चानयोरेकत्र समावेश इति। अतएवोक्तं "तस्माद्यज्ञे बधोऽबधः" इति। ननु एवं "श्येनेनाभिचरन् यजेत्" इत्यत्र श्येनस्य शत्रुबधरूपेष्टसाधनत्वमवगतम् "अभिचारो मूलकर्म च" इति मनुना उपपातकगणमध्ये पाठादनिष्टसाधनत्वमवगतम्। तदेतत् कथमुपपद्यतामिति चेन्मैवं "आततायिनमायान्तं हन्यादेवाविचारयन्" इत्येकवाक्यतया आततायिस्थले इष्टसाधनत्वं अनाततायिस्थले तु उपपातकत्वेन बलवदनिष्टसाधनत्वमित्यविरोध इति गुरुचरणा अप्येवम्। देवीपुराणे "पूर्वाषाढ़ायुताष्टम्यां" इत्यत्र पूर्वाषाढ़ायामष्टाभिधानात्। "कन्यासंस्थे रवावीषे शुक्लाष्टम्यां प्रपूजयेत्। सोपवासो निशार्द्धे तु महाविभवविस्तरैः॥ पूजां समारभेद्देव्या नक्षत्रे वारुणेऽपि वा। पशुघातः प्रकर्त्तव्यो गवलाजबधस्तथा॥" इति पुनर्देवीपुराणवचने वारुणपदेन वरुणदैवतं जलं पुनरणप्रत्ययेन तद्दैवतपूर्वाषाढ़ोच्यते। न तु श्रीदत्तहरिनाथविद्यावाचस्पतिमिश्रोक्ता शतभिषा तदष्टम्यां तस्या अलाभात् तथात्वे तदनन्तरपौर्णमास्यां गोभिलोक्तसूर्य्याचन्द्रमसोः सप्तमराश्यवस्थानरूप नियमभङ्गापत्तेः। तथा च गोभिलः। "सूर्य्याचन्द्रमसोर्यः परो विप्रकर्षः सा पौर्णमासी" इति। कृत्यरत्नाकरे तु "नक्षत्रे वारुणेऽपि वा" इत्यत्र पुनर्देवीपुराणे "ऋक्षे वारिभेऽपि वा"

इति पाठः व्याख्यातञ्च रत्नार्चे मूलानक्षत्रे वारिभे पूर्वाषाढ़ा-नक्षत्रे इति सोपवासः प्रारब्धोपवासः। उक्तवचनेऽष्टम्यां पशुघातश्रुतेः "अष्टम्यां रुधिरैर्मांसैर्महामांसैः सुगन्धिभिः। पूजयेद्बहुजातीयैर्बलिभिर्भोजनैः शिवाम्"॥ इति कालिकापुराणाच्च। "अष्टम्यां बलिदानेन पुत्रनाशो भवेत् ध्रुवम्" इति देवीपुराणीयम्। सन्धिपूजाबलिदानपरम्। तत्पूजाया उभयतिथिकर्त्तव्यत्वेन तद्बलिदानस्य नवम्यां सावकाशत्वात्।

तत्पूजाविधायकन्तु कालिकापुराणवचनान्तरम्। "अष्टमीनवमीसन्धौ तृतीया खलु कथ्यते। तत्र पूज्या त्वहं पुत्र योगिनीगणसंयुता"॥ ज्योतिषे "अष्टम्यां सन्धियोगे सकलपरिजनैः पूजयेत् सत्वभावैः" कामरूपीयनिबन्धे कृतिसागरे च। "अष्टम्याः शेषदण्डश्च नवम्याः पूर्व एव च। अत्र या क्रियते पूजा विज्ञेया सा महाफला"॥ मत्स्यसूक्तेऽपि "अष्टमीनवमीयोगो रात्रिभागे विशिष्यते। अर्द्धरात्रे दशगुणं सन्ध्यायां त्रिगुणं भवेत्"॥ आश्विनाधिकारे। "अष्टमीनवमीयुक्ता नवमी चाष्टमीयुता। अर्द्धनारीश्वरप्राया उमामाहेश्वरी तिथिः"॥ इति विष्णुधर्मोत्तरीयमप्येतद्विषयं न तु महानवमीपूजापरम्। तस्या अष्टम्युपवासपरदिनविधानेन सप्तमीवद्युग्मानादरात्॥ तथा विष्णुधर्मोत्तरे। "भद्रकालीं पटे कृत्वा तत्र संपूयेद्द्विज। आश्विने शुक्लपक्षस्य चाष्टम्यां प्रयतस्ततः"॥ इत्याद्यभिधाय। "उपोषितो द्वितीयेऽह्नि पूजयेत् पुनरेव ताम्"। तत्र तदर्थकल्पितगृहे। पट इति पूजाधारोपलक्षणम्। कृत्यतत्त्वार्णवे राजमार्त्तण्डः। "मूलेन प्रतिपूजयेद्भगवतीं चण्डीं प्रचण्डाकृतिञ्चाष्टम्यामुपवाससंयतधिया भक्त्या समाराध्य च। नानापाशुकमज्जमांसरुधिरैः कृत्वा नवम्यां बलिं नक्षत्रं श्रवणं तिथिञ्च दशमीं संप्राप्य संप्रेषयेत्"॥ धियेत्यत्र तयेति कात्यायनीयः पाठः। दुर्गाभक्तितरङ्गिण्याम्। "मूलं प्राप्य प्रथमचरणेऽभ्यर्च्चनं चण्डिकायाः कृत्वाष्टम्यामशनरहितस्त्यक्तनिद्रश्च पूजाम्। प्रातःकाले पशुबलिविधिः स्नानदानं नवम्यां निर्माल्यञ्च श्रवणदशमीं स्वात्मकर्म्मेषु जह्यात्"॥ नन्दिकेश्वरपुराणे। "भग-

चैत्याः प्रवेशादिविसर्गान्ताश्च याः क्रियाः । तिथावुदयगामिन्यां सर्वास्ताः कारयेद्बुधः” ॥ तथा चक्रनारायण्यां क्रियायोगोपसंवादे च । “शरत्काले महापूजा क्रियते या च वार्षिकी । सा कार्य्योदयगामिन्यां न तत्र तिथियुग्मता” ॥ एतद्वचनं दुर्गाभक्तिप्रकाशे पुराणीयमिति कृत्वा लिखितम् । अत्रोदयकालीनघटिकामात्रतिथ्यादौ सम्यक् पूजनासामर्थ्ये कालिकापुराणम् । “सम्यक्कल्पोदितां पूजां यदि कर्त्तुं न शक्यते । उपचारांस्तथा दातुं पञ्चैतान् वितरेत्तदा ॥ गन्धपुष्पञ्च धूपञ्च दीपं नैवेद्यमेव च । अभावे पुष्पतोयाभ्यां तदभावे तु भक्तितः । संक्षेपपूजा कथिता तथा वस्त्रादिकं पुनः” । नवम्यां बलेरावश्यकत्वात् बलिर्दातव्यः । दाक्षिणात्यकालनिर्णयधृतभविष्योत्तरीयम् ॥ अष्टमीनवमीपूजा दिनभेदाय प्रातःप्रातरिति वीप्साश्रुतेः । यथा “प्रातरावाहयेद्देवीं प्रातरेव प्रवेशयत् । प्रातःप्रातश्च संपूज्य प्रातरेव विसर्जयेत्” ॥ एतानि सप्तम्यादिकल्पविधायकानि । अत्र प्रातःपदं पूर्वाह्णपरम् । “पूर्वाह्णे नवपत्रिका शुभकरी”इत्यादि प्रागुक्तैकवाक्यत्वात् अत एव व्यासः । “वेदार्थो यः स्वयं ज्ञातस्तत्राज्ञानं भवेद् यदि । ऋषिभिर्निश्चिते तत्र का शङ्का स्यान्मनीषिणाम्”॥ तिथिवृद्धिक्षयादेव क्वचिन्न तथा यथा भविष्ये । “व्रती प्रपूजयेद्देवीं सप्तम्यादिदिनत्रये । द्वाभ्यां चतुर्भिर्वा ह्रासवृद्धिवशात्तिथेः” ॥ न चास्य अष्टाहे विसृजेच्छक्रं तदर्द्धेन तु पार्वतीम् । न्यूनाधिकं न कर्त्तव्यं राज्ञो राष्ट्रधनक्षयात्” ॥ इति लिङ्गपुराणीयेन विरोध इति वाच्यम् । पूर्ववचने पूजयेदित्युक्तत्वात् पूजानुरोधेन न्यूनाधिकदिनावस्थितिप्रतिपादनात् परवचनस्य तु विसृजेदित्युक्तत्वात् विसर्जन एव त्र्यहपूजने कृतेऽपि नवमीयुत दशम्यां श्रवणानुरोधेन न्यूनत्वप्रसक्तौ यच्च वा नवमीषष्टिदण्डात्मिका तत्परदिने च नवमी तत्परदिने एकादश्यां दशमी तत्रोदयानुरोधादधिकत्वप्रसक्तौ च निषेधकत्वात् न तु सप्तम्याः षष्टिदण्डात्मिकायाः परदिने वृद्धावपि पूर्वदिने निषेधकत्वम् । “आदित्योदयवेलाया आरभ्य षष्टि नाड़िकाः । तिथिस्तु साहि शुद्धा स्यात् सार्वतिथ्यो ह्ययं विधिः” ॥ इति

काल माधवीयधृतनारदीयात्। सा हि शुद्धा सैव शुद्धा नान्येत्यर्थः। "अकर्म्मण्यं तिथिमलम्" इत्युक्तत्वाच्च। अतएव नक्षत्रानुरोधोऽपि नास्ति तस्य गुणफलत्वेन प्रधानाननुयायित्वात्। ततश्च सप्तमीपूजावन्महाष्टम्यादिकृत्यमपि षष्टिदण्डात्मिकायामेव न तु परदिवसीय खण्डतिथौ किन्तु पूर्वोक्तसन्ध्यनुरोधान्निशादाविव खण्डतिथावपि सन्धिपूजेति। एवञ्च यस्मिन् दिने महाष्टमीपूजा तस्मिन् दिन एव उपवासः। न तु सन्धिपूजादिने अष्टमीत्वेनोपवासविधिः पूर्वमुक्तत्वात् अत्रैव पुत्रवतो गृहस्थस्य निषेधः यथा कालिकापुराणम्। "उपवासं महाष्टम्यां पुत्रवान्न समाचरेत्"। अथेदं पूजाङ्गोपवासातिरिक्तपरम् अन्यथा प्रधानस्यानिर्वाहापत्तेः इति केचित् तच्चिन्त्यं "यथा तथैव पूतात्मा व्रती देवीं प्रपूजयेत्" इत्युत्तरार्द्धेन पुत्रवत एव उपवासेतरहविष्यादिना पूतात्मनः पूजाविधानात्। तथा च मत्स्यसूक्ते। "अथवाश्वयुजे शुक्लपक्षमासाद्य नन्दिकाम्। समारभ्य ततो दुर्गां हविष्याशी जितेन्द्रियः"॥ इति नन्दिका षष्ठी जितेन्द्रियो निवृत्तमैथुनादिः। अत्र पुत्रवतः पूजाङ्गमहाष्टमीनिमित्तकोपवासनिषेधान्नाष्टमीमात्र निमित्तकोपवासनिषेधः इति संवत्सराद्याचरणमपि साधु संगच्छते। एवञ्च पूर्णाष्टम्यामष्टमीपूजा तत् परदिने अष्टमीनवम्योः सन्धिपूजा तत्परदिने महानवमीपूजा प्रागुक्तनन्दिकेश्वरपुराणाद्युक्तोदयगामितिथ्यनुरोधात् तत्परदिने दशम्यां विसर्जनं पूजानुरोधेनाधिक दिनलाभात्।

महानवमीपूजाकल्पमाह भविष्यपुराणम्। "लब्धाभिषेका वरदा शुक्ले चाश्वयुजस्य च। तस्मात्सा तत्रसंपूज्या नवम्याचण्डिका बुधैः"॥ केवलाष्टमी केवलनवमीकल्पावाह कालिकापुराणम्। "यस्त्वेकस्यामथाष्टम्यां नवम्यां वाऽथ साधकः। पूजयेद्वरदां देवीं सर्वकामफलप्रदाम्"॥ इति सर्वत्र घटिकाव्यापिनी तिथिर्ग्राह्या। "व्रतोपवासस्नानादौ घटिकैका यदा भवेत्। तामेव तिथिमाश्रित्य कुर्य्यात् कर्माण्यनन्द्रितः"। इति व्यासोक्तनियमश्रुतेः। एवञ्च

घटिकोनदशम्यामपराजितापूजानङ्गत्वात् तत् पूजनं पूर्वदिने। अतएव तत्परमेवेदम्। "आश्विने शुक्लपक्षस्य दशम्यां पूजयेत् तथा। एकादश्यां न कुर्वीत पूजनञ्चापराजितम्॥ इति शिवरहस्योक्तैकादशीयुक्तदशमीनिषेधकवचनम्। ततश्च तत् पूर्वकृत्यं देवीविसर्जनमपि तदैव तदन्तापकर्ष न्यायात् वाचस्पतिमिश्रोऽप्येवम्। अत्र घटिकापदं मुहूर्त्तपरम्। "घटिकैकाऽप्यमावास्याप्रतिपत्सु नचेत् तदा। सर्वं तदासुरं दानं दैवे कर्मणि चोदितं मुहूर्त्तमप्यमावास्या प्रतिपत्सु यदा भवेत्। तद्दानमुत्तमं दैवं शेषं पूर्वं हि पूर्ववत्। इति राजमार्त्तण्डधृतजावालवचनयोर्घटिकामुहूर्त्तयोरेकार्थत्वात् शेषं तिथ्यन्तरं पूर्वं पूर्वोक्तं घटिकान्यूनं पूर्ववदासुरं घटिकाधिकञ्चोत्तमम्। एवञ्च यदा हि तिथिक्षयवशात् षष्ठीयुक्तसप्तम्यां पत्रौ प्रवेशनं नवमीयुक्तदशम्यां विसर्जनं तदा चरलग्नाप्राप्तौ पूर्वाह्ले नवपत्रिकेत्यादिभिर्विशेषतो विहितस्य दैवकर्मत्वेन श्रुत्युक्तस्य च पूर्वाह्नस्याबाधाय वृश्चिक एव चरनवांशे तदुभयं कार्य्यम्। "चरलग्ने चरांशे वा देव्या नियतमानसः। प्रतिसंवत्सरं कुर्य्यात् स्थापनञ्च विसर्जनम्"॥ इति देवीपुराणात्। "राज्ञो विनाशमिच्छेत्तु स्थिरलग्ने शिवार्च्चिता इति निन्दा तु चरांशेतरपरा चरलग्नसम्भवपरा वा। अत्राशक्त्याधनुरादौ कार्य्यं प्रागुक्तेन पत्रौ प्रवेशनमित्यनेन रात्रिपर्य्युदासात्तदितरत्वेन तस्यापि प्राप्तेः। "मध्याह्ने जन पीड़न क्षयकरौ" इति निन्दापि रात्रीतरत्वेन रोहिणपूर्वकुतपप्रभृतिषु आपराह्णिकश्राद्धसत्वेऽपि रौहिणन्तु न लङ्घयेदितिवदप्राशस्त्यपरा।

अष्टम्युपवासफलञ्च देवीपुराणम्। "एकादशी कोटिसहस्रतुल्या कृष्णाष्टमीपर्वतराजपुत्रयाः। ततोऽपि शुक्लागुणिता शतेन पराशरव्यासवशिष्ठमुख्यैः"॥ कालमाधवीये निगमः। "शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी। पूर्वविद्धा न कर्त्तव्या कर्त्तव्या परसंयुता॥ उपवासादिकार्य्येषु एष धर्मः सनातनः"। स्कान्दे "अष्टमी नवमीमिश्रा कर्त्तव्या भूतिमिच्छता"। अत्र भूतिमिति श्रवणात् पुत्रादेस्तदन्तःपातात्

पुत्रादिकामनयाप्युपवासस्य व्यवहारः। भविष्ये "शुक्लपक्षे तथाष्टम्यामुपवासपरायणः। मालतीकरवीरेण विल्वपत्रैश्च पूजयेत् ॥ दुर्गेति नाम जप्तव्यं पुरतोऽष्टशतं नृप !। सर्वमङ्गलनामेति जप्तव्यं किल भारत" !॥ ननु अष्टम्युपवासे मांसेन पारणविधानात् पितृमरणादावपि तत् प्रसज्येत। तथा देवीपुराणम्। "अष्टमीं समुपोष्यैव नवम्यामपरेऽहनि। मत्स्यमांसोपहारेण दद्यान्नैवेद्यमुत्तमम् ॥ तेनैव विधिनान्नन्तु स्वयं भुञ्जीत नान्यथा" ॥ स्त्रियास्तु "ये त्विह वै पुरुषाः पुरुषमेधेन यजन्ते याश्च स्त्रियो नृपशून् खादन्ति तांश्च ताश्च ते पशव इह निहता यमसदने यातयन्तो रक्षोगणाः सैनिका इव स्वधितिनावदायासृक् पिबन्ति" इति श्रीभागवतपञ्चमस्कन्धगद्येन पशुमांसभक्षणनिन्दया न तेन पारणं किन्तु मत्स्येन सैनिकाः प्राणिवधनियुक्ताः स्वधितिना परशुना।

तेषां पशूनां ग्राम्यारण्यभेदमाह पैठीनसिः। "ग्राम्यारण्याश्चतुर्दश गौरविरजोऽश्वोऽश्वतरो गर्दभो मनुष्याश्चेति सप्तग्राम्याः पशवः। महिषवानर ऋक्ष सरीसृपरुरुपृषत् मृगाश्चेति सप्तारण्याः"। अश्वायां गर्दभेन जातोऽश्वतरः। एवञ्च मनुष्यस्यापि पशुत्वादध्ययने गुरुशिष्ययोरन्तरागमनेप्यहोरात्रमनध्यायः। "पशुमण्डूकनकुलश्वाहिमार्जार मूषिकैः। कृतेऽन्तरेत्वहोरात्र शक्रपाते तथोच्छ्रये" इति याज्ञवल्क्यीयात् तथा अनध्यायः। उच्छ्रये शक्रध्वजस्यैव अनुज्ञया तु न दोषः "नाग्निब्राह्मणयोरन्तराव्यपेयात् न गुरुशिष्ययोरनुज्ञया तु व्यपेयात्" इति मदनपारिजातधृतवशिष्ठवचनात्।

उच्यते। "विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ॥ तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते" ॥ पाक्षिके रागतः पक्षतः प्राप्तौ रागाभावात् पक्षतोऽप्राप्तावेव तत्र प्राप्त्यर्थं नियमविधिः। न तु वैधनिषेधेन अप्राप्तेऽपि। प्रायश्चित्तविवेककर्तां मते तु "मत्स्यांस्तु कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत्" इति याज्ञवल्क्याद्युक्तप्रायश्चित्तश्रवणेन कामतो मांसभक्षणस्य निषिद्धस्य "प्राणात्यये तथा श्राद्धे प्रोक्षितं द्विजकाम्यया। देवान् पितॄन् समभ्यर्च्य खादन् मांसं न दोषभाक्"

इति तेनैव प्रतिप्रसूतस्य रविवारादौ निषेध इति सुतरामष्टम्युपवासपारणेऽपि रविवारादौ मांसनिषेधः। एवं मांसाशनत्यागकृतनियमेन नियोगादिष्वपि मांसं वर्जनीयमाह प्रायश्चित्तविवेके यमः। "भक्षयेत् प्रोक्षितं मांसं सकृत् ब्राह्मणकाम्यया। दैवे नियुक्तः श्राद्धे वा नियमे तु विवर्जयेत्"॥ पूर्वोक्तवचनस्य मत्स्यमांसोपहारेण नैवेद्यं दत्त्वैव भोजनं कार्य्यं नतु अदत्त्वेत्यर्थः अन्यथा मूलभूतश्रुतौ वाक्भेदः स्यात् नैवेद्यावशिष्टमांसादेरावृत्त्यापत्तेश्चेति। प्रोक्षितं यज्ञार्थं मन्त्रैः संस्कृतम् आरण्यानामिदानीन्तनप्रोक्षणाद्यपेक्षा नास्तीति। यथा महाभारते। "आरण्याः सर्वदैवत्याः प्रोक्षिताः सर्वशो मृगाः। अगस्त्येन पुरा राजन् मृगया येन पूज्यते"॥ अत्र प्रमाणान्तराप्राप्तत्वेन "पशुना यजेत" इत्यत्रैकत्ववद्विधेयविशेषणत्वेन अरण्यादेः पुंस्त्वं विवक्षितम् अतएव हरिवंशेऽपि "अवध्याञ्च स्त्रियं प्राहुस्तिर्य्यग्योनिगतेष्वपि"। ततश्च हरिण्यादीनामप्रोक्षितत्वेनाभक्ष्यत्वम्। यत्तु ब्रह्मपुराणे। "पशोस्तु भार्य्यमाणस्य न मांसं ग्राहयेत् क्वचित्। पृष्ठमांसं गर्भशय्यां शुष्कमांसमथापि वा" इति गर्भशय्या निषेधनं तत्पारस्त्या मेध्यायागे बोधं ततस्तु "नियुक्तस्तु यथा न्यायं यो मांसं नात्ति मानवः। स प्रेत्य पशुतां याति सम्भवानेकविंशतिम्"॥ इति मनुवचनं तत्कालीनानिषिद्धमांसभुग्विषयम्। प्रेत्येत्यव्ययं परलोके इत्यर्थः। तथा च अमरः "प्रेत्यामुत्र भवान्तरे" इति। तथा च महाभारते। "रोगार्त्तोऽभ्यर्थितो वापि यो मांसं नात्त्यलोलुपः। फलं प्राप्नोत्ययत्नेन सोऽश्वमेधशतस्य च"॥ मांसत्यागोपदेशेऽपि तत् फलमाह नन्दिकेश्वरपुराणे। "यश्चोपदेशं कुरुते परस्य तु महात्मनः। मांसस्य वर्जनफलं सो मांसादफलं लभेत्"। अतो रविवारादौ मत्स्यमांसाशनं विनापि अष्टम्युपवासपारणसिद्धिः। स्मृत्याश्लिष्टेज्यायामावाहनं विनैव।

रविवारे आमिषनिषेधो भविष्ये। "आमिषं रक्तशाकञ्च यो भुङ्क्ते च रवेर्दिने। सप्तजन्म भवेत् कुष्ठी दरिद्रश्चोपजायते॥ तस्मात् सर्वप्रयत्नेन एकभक्तं रवेर्दिने। कुर्य्यान्नक्तं हविष्यं वा रोगयुक्तोऽन्यथा भवेत्"॥ स्मृतिः। "माष-

मामिषमांसञ्च मसूरं निम्बमार्द्रकम्। भक्षयेद् यो रवेर्वारे स सजन्मन्यपुत्रकः" ॥

स्फ्यास्श्लिष्टेज्याधिकरणञ्च। स्फ्यस्य खड्गाकारकाष्ठस्य भक्तास्लेषनिमित्तकेज्यायामिष्टित्वेन प्रकृतिवद्विकृतिरित्यतिदेशेन दर्शात्मकप्रकृतिधर्माणां प्राप्तौ पूर्वदिनप्रातःकालीनं हवनीय देवतावाहनमपि प्राप्तं तच्च तदानीं न विधीयते नैमित्तिके निमित्तनिश्चयवतोऽधिकारितया प्रकृते श्वोभावि भक्तास्लेषरूपनिमित्तसंशयेन प्रधानानधिकारिणोऽङ्गानधिकारात् तदुत्तरदिने च निमित्तनिश्चये तदधिकारसिद्धावपि नावाहनानुष्ठानम् आवाहनस्य पूर्वदिनप्रातःकालनैहत्यादितीज्याया आवाहनं विनैवानुष्ठानमिति। अथ तत्र पूर्वदिनप्रातःकाल नैयत्यादस्तु तथा प्रकृते तु यद्यपि तथात्वाभावात्तद्वैषम्यं तथापि यथा तदङ्गवैगुण्यान्न कर्मवैगुण्यं तथात्रापि वचनान्तरनिषिद्धमांसभोजनपुरुषस्य तदङ्गवैगुण्यान्न तदङ्गिवैगुण्यमित्यवैषम्यम्।

अधिकरणञ्च"विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्। निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्"। विषयो विचारार्हं वाक्यम्। विशयोऽस्यायमर्थो नवेति संशयः। पूर्वपक्षः प्रकृतार्थविरोधितर्कोपन्यासः। उत्तरं सिद्धान्तानुकूल तर्कोपन्यासः। निर्णयः महावाक्यार्थतात्पर्य्ये निश्चयः। एवं क्रमेण विवेचनमत्राधिक्रियते इत्यधिकरणमिति। कालिकापुराणे "कन्यासंस्थे रवौ वीपे या शुक्ला तिथिरष्टमी। तस्यां रात्रौ पूजितव्या महाविभवविस्तरैः॥ नवम्यां बलिदानन्तु कर्त्तव्यं वै यथाविधि। जपं होमञ्च विधिवत् कुर्य्यात् तत्र विभूतये"। अत्र नवम्यां होमश्रुतेः "पूर्वाषाढ़ायुताष्टम्यां पूजाहोमाद्युपोषणम्" इति श्रुतेश्चोभयत्रैकतरस्मिन् वा होमः। अत्र होमे विहिते तदङ्गत्वात् पूर्णपात्रादिका पृथग्दक्षिणा षट्त्रिंशदुपचारान्तर्गतदाने दक्षिणादानवत्। तथा च मत्स्यपुराणं "देवे दत्त्वा तु दानानि देवे दत्त्वा च दक्षिणाम्। तत् सर्वं ब्राह्मणे दद्यादन्यथा निष्फलं भवेत्"॥ दत्त्वात्वित्यत्र देयानीति वाराहीतन्त्रे पाठः अतएव ब्रह्मपुराणे विष्णुत्थापनीय-

पूजने स्पष्टमुक्तं यथा । "सुरान् संपूजयेद्भक्त्या सुमनोभिश्च कुङ्कुमैः । दीपधूपैश्च नैवेद्यैः पायसेन च भूरिणा । मात्र-यान्नप्रदानैश्च होमैः पुष्पैः सदक्षिणैः" ।

पूजाजपहोममन्त्रस्तु देवीपुराणे "पूजयेत्तिलहोमैस्तु दधि-क्षीर घृतादिभिः" । कुर्य्याद्देव्यास्तु मन्त्रेण इत्यभिधाय "जयन्ती मङ्गलाकाली भद्रकाली कपालिनी । दुर्गा शिवा क्षमा धात्री स्वाहा स्वधा नमोऽस्तु ते ॥ अनेनैव तु मन्त्रेण जपहोमौ तु कारयेत्" एवं "पुरश्चरणकार्य्येषु बिल्वपत्रैर्युतै-स्तिलैः । साक्षतैः सघृतैर्वापि शिवामुद्दिश्य भक्तितः । जुहु-यादनलं ह्यद संस्कृतं कामवृद्धये" इति कालिकापुराणात् अत्रापि बिल्वपत्र घृतोपयोगितेति अत्र दुर्गाभक्तितरङ्गिण्यां स्वधा पूजानन्तरं स्वाहा पूजालिखनात् स्वाहान्तपाठ निर्णय इति तन्न मत्स्यसूक्त विरोधात् । तथा च "पञ्चोपचारैर्विधि-वज्जयन्त्याद्यास्ततः परम् । जयन्ती मङ्गलाकाली भद्रकाली कपालिनी ॥ दुर्गा क्षमा शिवा धात्री पूजनीयाः प्रयत्नतः । दक्षपार्श्वे ततोदेव्याः स्वाहाञ्चैव स्वधान्तथा" ॥ इति । न च अत्रापि तथा क्रमः । तथात्वे पञ्चमाक्षरस्य लघुत्वानुपपत्तेः । दुर्गामाहात्म्यान्तर्गतार्गलायां तथा पाठ दर्शनात् प्राचीन ग्रन्थे तथा दर्शनाच्च । पूजायां क्लीमिति चतुरक्षरमप्याह कालिकापुराणम् । "चतुरक्षरमन्त्रेण पाद्यादीनथ षोड़श । वितरेदुपचारांश्च पूर्वप्रोक्तांस्तु भैरव" । तदनन्तरं प्रणवादि-नमोन्त देवता नामोच्चारणमाहाग्निपुराणम् । "तल्लिङ्गैः पूजयेन्मन्त्रैः सर्वदेवान् समाहितः । ध्यात्वा प्रणवपूर्वन्तु तन्नाम्ना सुसमाहितः । नमस्कारेण पुष्पादिं विन्यसेत्तु पृथक् पृथक्" ॥ अत्र च "तत्राष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी । आविर्भूता महाघोरा योगिनीकोटिभिः सह । अतोऽत्र पूजनीया सा तस्मिन्नहनि मानवैः ॥ इति ब्रह्मपुराणात् "दक्षयज्ञविनाशिन्यै महाघोरायै योगिनीकोटिपरिवृतायै भद्रकाल्यै क्लीं दुर्गायै नमः" । इत्यनेनापि पूजां प्रचरति । पूजायां विशेषस्तु दुर्गापूजातत्त्वेऽनुसन्धेयः ।

हासादावङ्गुल मानादिग्रहणे छन्दोगपरिशिष्टम् ।

"मानक्रियायामुक्तायां मनुक्ते मानकर्त्तरि। मानकृद्यजमानः स्यादृत्विषामेष निर्णयः"॥ यजमानासन्निधाने तु साधारणाङ्गुलिमानग्रहणम्। यथा कपिलपञ्चरात्रम्। "अष्टभिस्तैर्भवेत ज्येष्ठं मध्यमं सप्तभिर्यवैः। कन्यसं षड्भिरुद्दिष्ट मङ्गुलं मुनिसत्तम"॥ तैः प्रक्रंस्यमानयवैः कन्यसं कनिष्ठम्। मानन्तु पार्श्वेन "षड्यवाः पार्श्वसम्मिताः" इति कात्यायनवचनात्। कालिकापुराणम्। "यवानां तण्डुलैरेक मङ्गुलं चाष्टभिर्भवेत्। अदीर्घं योजितैर्हस्तश्चतुर्विंशतिरङ्गुलैः॥ होमे ब्रह्मवरणं प्रथमतः। ज्योतिष्टोमे ब्रह्मोद्गातृहोतृध्वर्य्वित्यादि दर्शनेनान्यत्राप्याकाङ्क्षया दृष्टकल्पनाया न्याय्यत्वात्। सुगति सोपान प्रभृतयोऽप्येवम्। तत्तु यजमानकर्त्तृकम्। "दानवाचनान्वारम्भणवरणव्रतप्रमाणेषु यजमानं प्रतीयात्" इति कात्यायनोक्तेः ब्रह्मस्थापनन्तु होतृकर्त्तृकमेव "अग्निमुपसमाधाय दक्षिणतो ब्रह्मासनमास्तीर्य्य" इति कात्यायनेनैककर्त्तृत्वाभिधानात्।

तत्र छन्दोगानां ब्रह्मस्थापन प्रकारमाह गोभिलः। "अग्रेणाग्निं परिक्रम्य दक्षिणतोऽग्नेः प्रागग्रान् कुशानास्तीर्य्य तेषां पुरस्तात् प्रत्यङ्मुखस्तिष्ठन् सव्यपाने रङ्गुष्ठेनोपकनिष्ठया चाङ्गुल्या ब्रह्मासनात् तृणमभिसंगृह्य दक्षिणापरमष्टमं देशं निरस्यति निरस्तः परावसुः" इति "अप उपस्पृश्याथ ब्रह्मासने उपविशत्यावसोः सदने सीदामि" इति "अग्न्यभिमुखो वाग्यतः प्राञ्जलिरास्ते आकर्मणः पर्य्यवसानात्। भाषेत यज्ञसंसिद्धिं नायज्ञीयां वाचं वदेत् यद्ययज्ञीयां वाचं वदेद्वैष्णवीमृचं यजुर्वा जपेत् अपि वा नमो विष्णवे" इति ब्रूयात्। "यद्युवोभयं चिकीर्षेद्धोत्रं ब्रह्मत्वञ्च" इति तेन कल्पेन "छत्रं वोत्तरासङ्गं सोदकं कमण्डलुं दर्भवटुं वा ब्रह्मासने निधाय तेनैव प्रत्यावृत्त्यान्यच्चेष्टेत" इति। अग्रेण पूर्वया दिशा प्रदक्षिणेनाग्निं गत्वा अग्नेर्दक्षिणस्यां दिशि प्रागग्रान् कुशानास्तीर्य्यान्यच्चेष्टेतेति व्यवहिते न सम्बन्धः न तु निरस्यतीत्यनेन ब्रह्मेति कर्त्तृनिर्द्देशात्। न च ब्रह्मेत्यस्य आसनेन सम्बन्धः उपवेशनात् पूर्वं तत् सम्बन्धाभावात्। ततश्च

दर्भास्तरणान्तं याजमानिकं कर्म। ब्रह्मा तु तेषां पुरस्तादास्तृत कुशानां पूर्वदिग्भागे तिष्ठन् अनुपविष्ट एव सव्यस्य वामस्य उपकनिष्ठया अनामिकया आसनाद्यजमानास्तृतं कुशपत्रं गृहीत्वा दक्षिणापरं दक्षिण पश्चिममष्टमदेशम् उभयदिगष्टमभागं नैर्ऋतकोणमिति यावत् निरस्तः परावसुरित्यनेन क्षिपतीति। अप उपस्पृश्य दक्षिणपाणिना जलं स्पृष्ट्वाऽथानन्तरम् आसने ब्रह्मा ब्रह्मत्वेन उपकल्पित उपविशति। आवसोः सदने सीदामीति मन्त्रेणेति एव मेव भट्टनारायण प्रभृति व्याख्यानात्। एतेन तेषां पुरस्तादित्यादि आवसोः सदने सीदेत्यन्तं याजमानिकं कर्म यजमानकर्त्तृकं सीदामीति प्रतिवचनं ब्रह्म कर्त्तृकमिति भवदेव भट्टकल्पनमेव सोदेति सूत्रानुपात्तत्वात्। भाषेत यज्ञसंसिद्धिम् इति होत्रान्यथा क्रियमाणे कर्मणि तत्सिद्ध्यर्थमेतदेवं कुरु एतत् कृत्वैतत् कुर्वित्यादि भाषेत तत्राप्ययज्ञीयाम् असंस्कृतां यदि गिरं वदेत्तदा वैष्णवीऋक् इदं विष्णुरिति यजुर्विष्णोरराटमसीत्यादि नमो विष्णवे इत्यादि प्रकार त्रितयान्यतमप्रकारं प्रायश्चित्तमिति।

अत्र ऋगादि लक्षणमाह जैमिनिः। "तेषामृक् यत्रार्थवशेन पादव्यवस्थितिः" इति। तेषां मन्त्राणां मध्ये यत्रार्थवशेन एकान्वयित्वेनानुष्टुबादि पादस्थितिः सा ऋक्। यजुराह स एव। "शेषे वा यजुः शब्द" इति शेषे ऋक् साम भिन्ने मन्त्रजाते ततश्च यन्मन्त्रजातं प्रश्लिष्य पठितं गानादि विच्छेदरहितं तद्यजुरिति। सामाप्याह स एव "गीतेषु सामाख्या" इति गीयमानेषु मन्त्रेषु सामसंज्ञेत्यर्थः। यद्वा वेति अशक्तौ उत्तरासङ्गम् उत्तरीयं दर्भवटुःकुशब्राह्मणः।

अथ कुण्डविधिः। तत्र मत्स्यपुराणम्। "प्रागुदक्प्लवनां भूमिं कारयेद्यत्नतो नरः"। प्रागुदक्प्लवनां पूर्वनीचां उत्तरनीचां वा। तत्र वशिष्ठपञ्चरात्रे विज्ञानललितायाञ्च "सर्वाधिकारिकं कुण्डं चतुरस्रन्तु सर्वदम्"। चतुरस्रं चतुष्कोणम्। भविष्योत्तरे। सहस्रेऽथ होतव्ये कुर्य्यात् कुण्डं करात्मकम्। द्विहस्तमयुते तच्च लक्षहोमे चतुष्करम्"॥ द्विह-

स्तादिके मानमाह जामलः। "पूर्वं पूर्वस्य कुण्डस्य कोण-सूत्रेण निर्मितम्। उत्तरोत्तरकुण्डानां मानन्तत्परिकीर्त्तितम्" ॥ पूर्वं पूर्वस्य हस्त द्विहस्तादिमितस्य कोणसूत्रेण ईशान कोणान्निर्ऋति कोणदत्त सूत्रेण निर्मितं परिमितं यन्मानम् उत्तरोत्तर कुण्डानां तदेव पारिभाषिकं द्विहस्तादि मानं न तु प्रकृत हस्तद्विगुण्यादिमितम्। तथात्वे द्विहस्तादि मितस्य चतुर्हस्तादि परिमाणापत्तेः। क्षुत्रकपरिमाणवत्। वशिष्ठपञ्चरात्रे। "यावान् कुण्डस्य विस्तारः खननन्ताव-दिष्यते। हस्तैके मेखलास्तिस्रो वेदाग्नि नयनाङ्गुलाः ॥ कुण्डे द्विहस्ते ता ज्ञेया रसवेद गुणाङ्गुलाः। चतुर्हस्ते तु कुण्डे ता वसुतर्कयुगाङ्गुलाः"। मेखला ब्रह्मचारिमेखलावत्। कुण्ड-वेष्टिता मृद्घटिता स्ताश्च खातदेशाद्बाह्ये। एकाङ्गुलरूपं कण्ठं परित्यज्य उच्छ्रायेण विस्तारेण इत्यादि क्रमेण वेदा-द्यङ्गुलाः एतद्विपरीतास्तन्त्रान्तरोक्ता व्यवहारविरुद्धाः। वेदा-श्चत्वारः अग्नयस्त्रयः। नयने द्वे। रसाः षट्गुणास्त्रयः। वसुतर्क युगानि अष्टषट् चत्वारि। कालोत्तरे। "खाताद्बाह्ये-ऽङ्गुलः कण्ठः सर्वकुण्डेष्वयं विधिः"। पिङ्गलामते तु। "खातादेकाङ्गुलं त्यक्त्वा मेखलानां विधिर्भवेत्"। एककुण्डस्य पश्चिम दिक्कर्त्तव्यतामाह मन्त्रादर्शननिर्णये। "भुक्तौ मुक्तौ तथा पुष्टौ जीर्णोद्धारे तथैव च। सदा होमे तथा शान्ता-वेकं वारुणदिग्गतम्"। शारदातिलके "होतुरग्रे योनिरासा-मुपर्य्यश्वत्थपत्रवत्। मुष्ट्यरत्निकहस्तानां कुण्डानां योनि-रीरिता। षट्चतुर्द्व्यङ्गुलायाम विस्तारोन्नतिशालिनी। एकाङ्गुलन्तु योन्यग्रं कुर्य्यादीषदधोमुखम्। एकैकाङ्गुलितो-योनिं कुण्डेष्वन्येषु वर्द्धयेत्। यवद्वयक्रमेणैव योन्यग्रमपि वर्द्धयेत्। स्थलादारभ्य नालं स्यात् योन्यामध्ये सरन्ध्रकम्"। आसां मेखलानाम्। अश्वत्थपत्रवदित्यनेन चतुरङ्गुल विस्तृत-मूलादूयथोक्त क्रमेणैवाङ्गुल्यन्तः संकुचित विस्तारा। जामले "नालमेखलयोर्मध्ये परिधेः स्थापनाय च। रन्ध्रं कुर्य्यात् तथा विद्वान् द्वितीयमेखला परि" ॥ पुरश्चरणचन्द्रिकायान्तु एतद्वचनात् पूर्वं "स्थलादारभ्य नालं स्याद्योनिमूलस्य

धारणि"॥ इत्यहं लिखितं परिधींस्तद्विन्यासांश्चाह छन्दोगपरिशिष्टम्। "बाहुमात्राः परिधयः ऋजवः सत्वचोऽव्रणाः त्रयोभवन्त्यशीर्णाग्रा एतेषान्तु चतुर्द्दिशम्। प्रागग्रावभितः पश्चादुदगग्रमथापरम्। न्यसेत् परिधिमन्यश्चेदुदगग्रः सपूर्वतः"॥ अव्रणाश्छिद्ररहिताः अभितः अग्नेः पार्श्वद्वये दक्षिणतः उत्तरतश्च पश्चात् पश्चिमे उदगग्रमुत्तराग्रं त्रैलोक्यसारे। "कुम्भद्वयसमायुक्ता अश्वत्थदलवन्नता। अङ्गुष्ठमेखलायुक्ता मध्ये त्वाज्यस्थितिर्यथा"॥ कुम्भद्वयसमायुक्ता गजकुम्भाकारमूलदेशयुक्ता। नता नम्रा। अङ्गुष्ठमेखलायुक्ता अङ्गुष्ठमितमृद्घटितमेखलावेष्टनयुक्ता। तथात्वे हस्तगलिताज्यस्थित्या कुण्डे तत्पातो भवतीत्यर्थः। अतएव स्वायम्भुवे। "अङ्गुष्ठमानौष्ठकण्ठा कार्य्याश्वत्थदलाकृतिः"। अङ्गुष्ठमानौष्ठं कण्ठे यस्या योनेः सा तथा ओष्ठोऽत्राग्रं हयशीर्षपञ्चरात्रे "कल्पयेदन्तरे नाभिं कुण्डस्याम्बुजसन्निभम्। मुष्ट्यरत्न्यरत्निहस्तानां नाभिरुत्सेधविस्तृता॥ नेत्रवेदाङ्गुलोपेता कुण्डेष्वन्येषु वर्द्धयेत्। यवद्वयक्रमेणैव नाभिं पृथगुदारधीः॥ नाभिक्षेत्रं त्रिधा भित्त्वा मध्ये कुर्वीत कर्णिकाम्। बहिरंशद्वयेनाष्टौ पत्राणि परिकल्पयेत्"॥ खादिरादि स्रुवाभावे तु राघवभट्टधृतसंहितायाम्। "पलाशपत्रे निश्छिद्रे रुचिरे स्रुक् स्रुवौ स्मृतौ। विदध्याद्वाश्वत्थपत्रे संक्षिप्ते होमकर्मणि"॥ तत्र कुण्डदोषानाह विश्वकर्मा। "खाताधिके भवेद्रोगी खातहीने धनक्षयः। वक्रकुण्डे तु सन्तापो मरणं छिन्नमेखले। मेखलारहिते शोको ह्यधिके वित्तसंक्षयः। भार्य्याविनाशकं कुण्डं प्रोक्तं योन्या विना कृतम्। अपत्यध्वंसनं प्रोक्तं कुण्डं यत् कण्ठवर्जितम्"।

अतएव वशिष्ठसंहितायां "तस्मात् सम्यक् परीक्ष्यैवं कर्त्तव्यं शुभवेदिकम्। हस्तमात्रं स्थण्डिलं वा संक्षिप्ते होमकर्मणि"॥ क्रियासारेऽपि। "कुण्डमेवंविधं न स्यात् स्थण्डिलं वा समाश्रयेत्"॥ शारदातिलकेऽपि "नित्यनैमित्तिकं काम्यं स्थण्डिले वा समाचरेत्। हस्तमात्रन्तु तत्कुर्य्यात् चतुरस्रं समन्ततः"॥ महाकपिलपञ्चरात्रे। "संख्यानुक्तौ शतं साष्टं सहस्रं वा जपादिषु"।

होमे स्वाहान्ततामाह यज्ञपार्श्वः । "आदाय दक्षिणे पाणौ स्रवस्त्रिमधुरं हविः । प्राङ्मुखो वह्निजायान्ते जुहुयान्मृगजपाणिना" ॥ त्रिमधुरं घृतमधुशर्करात्मकम् । विष्णुधर्मोत्तरे । "दूर्वाहोमः परः प्रोक्तस्तेन स्वर्गे महीयते । तस्माद्दशगुणं पुण्यम् इक्षुभिः प्राप्नुयात् कृते । तस्माद्दशगुणं शस्यैर्व्रीहिभिर्द्विगुणं भवेत् ॥ यवैश्चतुर्गुणं प्रोक्तं तिलैर्दशगुणं स्मृतम् । विल्वैर्दशगुणं प्रोक्तं घृतेनाष्टगुणं ततः" ॥ इत्यनेन घृतस्य सर्वोत्कृष्टत्वं दर्शितम् । वह्निजाया स्वाहा । "मन्त्रेणोङ्कारपूतेन स्वाहान्तेन विचक्षणः । स्वाहावसाने जुहुयात् ध्यायन् वै मन्त्रदेवताम्" ॥ इति स्मृतेः । स्वाहान्तमन्त्रे स्वाहान्तरं निषेधयति मन्त्रतन्त्रप्रकाशः । "नमोऽन्तेन नमो दद्यात् स्वाहान्ते द्विठमेव च । पूजायामाहुतौ चापि सर्वत्रायं विधिः शिवे" ! ॥ अन्तशब्दोऽत्रावसानार्थः द्विठः स्वाहा ठकारेण लिपिमाम्याद्बिन्दुरुच्यते तस्य द्वित्वं तेन विसर्गः स च शक्तिरूपः तेन द्विठ शब्देनाग्निशक्तिः स्वाहोक्तेति राघवभट्टः तथा च द्विठः स्वाहानलप्रियेति वर्णाभिधानम् । अत्र तु स्वाहाशब्दः स्वीयद्रव्यत्यागार्थकः । यथा "उपरिष्ट होमाः स्वाहाकारप्रदाना जुहोतयः" । इति हरिशर्मधृतं स्वाहाकारेण स्वाहेति पदेन प्रदानं त्यागो यासु तास्तथा अतएव स्वाहाकारस्य प्रदानार्थकत्वाद्धविस्त्यागस्याम्नायसिद्धत्वेनैव कृतार्थत्वात् द्वितीयस्यां मानमनर्थकं स्यात् इति भट्टभाष्यम् । प्रदानार्थकत्वन्तु तत्रैव यत्र मन्त्रस्थनाम्नि चतुर्थ्यन्तता अतो जयन्तीत्यादौ नमः स्वाहयोर्यथायथं पुनर्दयतेतिन्युब्जपाणिनेति शाख्यन्तरीयम् ।

"उत्तानेनैव हस्तेन अङ्गुष्ठाग्रेण पीड़ितम् । संहताङ्गुलिपाणिस्तु वाग्यतो जुहुयाद्धविः ॥" इति महादाननिर्णयधृतगोभिलवचनात् एतद्वचनं परिशिष्टीयमिति माधवाचार्य्यः । भविष्येऽपि "आहुतिस्तु घृतादीनां स्रुवेणाधोमुखेन तु । हुनेत्तिलाज्याहुतिस्तु दैवेनोत्तानपाणिना" ॥ स्रुवस्तुपञ्चाङ्गुलं त्यक्त्वा शङ्खमुद्रया धार्य्यः । "पञ्चाङ्गुलान् वहिस्त्यक्त्वा

धारयेत् शङ्खमुद्रया"। इति वाचस्पतिमिश्रकृतमहादाननिर्णयधृतवचनात्।

अग्नेर्नामानि गोभिलपुत्रकृतगृह्यसंग्रहे। "लौकिके पावको ह्यग्निः प्रथमः परिकल्पितः। अग्निस्तु मारुतोनाम गर्भाधाने विधीयते॥ पुंसवने चन्द्रनामा शुङ्गाकर्मणि शोभनः। सीमन्ते मङ्गलो नाम प्रगल्भो जातकर्मणि॥ नाम्नि स्यात् पार्थिवो ह्यग्निः प्राशने च शुचिस्तथा। सत्यनामाथ चूड़ायां व्रतादेशे समुद्भवः॥ गोदाने सूर्य्यनामा च केशान्ते ह्यग्निरुच्यते। वैश्वानरो विसर्गे तु विवाहे योजकस्तथा"॥ गोदाने गोदानाख्यसंस्कारे। "चतुर्थ्यान्तु शिखीनाम धृतिरग्निस्तथापरं"। अपरे धृतिहोमादौ। "प्रायश्चित्ते विधुश्चैव पाकयज्ञे तु साहसः"। प्रायश्चित्तात्मकमहाव्याहृतिहोमादौ। पाकयज्ञे पाकाङ्गकवृषोत्सर्गगृहप्रतिष्ठाहोमादौ। "लक्षहोमे च वह्निः स्यात् कोटिहोमे हुताशनः। पूर्णाहुत्यां मृड़ोनाम शान्तिके वरदः सदा। पौष्टिके बलदश्चैव क्रोधोऽग्निश्चाभिचारके। कोष्ठे तु जठरो नाम क्रव्यादोमृतभक्षणे। "आहूय चैव होतव्य यत्र यो विहितोऽनलः"॥

तथा "शुभं पात्रन्तु कांस्यं स्यात्तेनाग्निं प्रोणयेद्बुधः। तस्याभावे शरावेन नवेनाभिमुखञ्च तत्। विशेषनामाज्ञाने गुणविष्णुधृता स्मृतिः "सर्वतः पाणिपादान्तः सर्वतोऽक्षि शिरोमुखः। विश्वरूपो महानग्निः प्रणीतः सर्वकर्मसु" अग्निप्रणयनानन्तरं सर्वत इत्यस्य पाठो युज्यते प्रणीत इति मन्त्रलिङ्गात्। अन्यथा स्थापनानन्तरमेतदभिधानं व्यर्थं स्यात्। गुणविष्णुना श्रुतिरिति कृत्वा सर्वतः पाणिपादान्त इति लिखितम्। एवञ्च दुर्गापूजनस्य पौष्टिककर्मत्वात्। तदङ्गहोमे बलदनामाग्निरिति।

ध्यानमादित्यपुराणे। "पिङ्गभ्रूः श्मश्रुकेशाक्षः पीताङ्गो जठरोऽरुणः। छागस्थः साक्षसूत्रोऽग्निः सप्तार्च्चिः शक्तिधारकः"॥ यत्तु प्रकृतकर्मवैगुण्यप्रशमनाय शाट्यायनहोमाभिधानं भवदेव भट्टसम्मतं तन्न प्रामाणिकं तस्मादपि महाप्रामाणिकैर्भट्टनारायणचरणैर्गोभिलभाष्ये तदप्रमाणीकृत-

त्वात्। छन्दोगपरिशिष्टेऽपि प्रायश्चित्तार्थं प्रकारत्रयमात्रमुक्तं यथा "यत्र व्याहृतिभिर्होमः प्रायश्चित्तात्मको भवेत्। चतस्र-स्तत्र विज्ञेया स्त्रीपाणिग्रहणे यथा।। अपि वा ज्ञातमित्येषा प्राजापत्यापि वा हुतिः। होतव्या त्रिविकल्पोऽयं प्रायश्चित्त-विधिः स्मृतः"॥ त्रिविकल्प इत्यनेन कल्पान्तरनिषेधाद्धोमे-ष्वौथकर्मणि शाट्यायनहोमो न युक्तः। किन्तु व्यस्त महा-व्याहृतिभिस्तस्तृभिः प्रायश्चित्त होमा युक्तः। विशारदप्रभृतयो-ऽप्येवम्। शाट्यायन होमस्य समूलत्वेऽपि शाख्यन्तरीयत्वम्।

अग्नेः शुभलक्षणमाह वायुपुराणम्। "अर्चिष्मान् पिण्डि-तशिखः सर्पिः काञ्चनसन्निभः। स्निग्धः प्रदक्षिणश्चैव वह्निः स्यात् कार्य्यसिद्धये"॥ ब्रह्मपुराणे। "क्षुत्तृट्क्रोधत्वरायुक्तो हीनमन्त्रं जुहोति यः। अप्रवृद्धे सधूमे वा सोऽन्धः स्यादन्यजन्मनि। अल्पे रूक्षे सस्फुलिङ्गे वामावर्त्ते भयानके। आर्द्रकाष्ठैश्च सम्पन्ने फुत्कारवति पावके॥ कृष्णार्चिषि सुदुर्गन्धे तथा लिहति मेदिनीम्। आहुतिं जुहुयाद्यस्तु तस्य नाशो भवेत् ध्रुवम्॥ आपस्तम्बः। "नाप्रोक्षितमिन्धनमग्नावादध्यात्" इति।

पूजामाह मार्कण्डेयपुराणम्। "संपूजयेत्ततो वह्निं दद्या-च्चैवाहुतिं क्रमात्। कर्कमतसंवादिनी स्मृतिः। "आदौ तु देवतोद्देशं तैत्तिरीय कठशाखिनोः। काण्वमाध्यन्दिनानाञ्च पश्चादुल्लेखयेत् सुरान्"॥ अन्येषां नास्त्येव देवतोद्देशः। स्मृत्यर्थ-सारमदनपारिजातयोः। "सन्निधौ यजमानः स्यादुद्देशत्याग-कारकः। असन्निधौ तु पत्नी स्यादुद्देशत्यागकारिका। अस-न्निधौ तु पत्न्याः स्यादध्वर्य्युस्तदनुज्ञया। उन्मादे प्रसवे चार्त्तौ कुर्वीतानुज्ञया विना"। अध्वर्य्युर्यजुर्वेदिहोमकर्त्ता।

पूर्णाहुतिस्तूत्थाय सर्वैर्दातव्या यथा अग्निपुराणम्। "मूर्द्धानन्दिवमन्त्रेण संस्रवेण च धारया। दद्यादुत्थाय पूर्णां वै नोपविश्य कदाचन"॥ परार्द्धं भविष्येऽपि। मूर्द्धानन्दि-वेति यजुर्वेदिनां मन्त्रः। सामगानान्तु पूर्णहोममित्यादि।

शान्तिदीपिकायां वशिष्ठः। "दद्यात्पाद्यादिकं वह्नेर्धृतेनाम्बु विना बुधः। पयसा शीतलीकुर्य्यात् ऐशान्यां भस्म चाह-रेत्॥ ऐशान्यामाहरेद्भस्म स्रुचावाथ स्रुवेण वा। वन्दनां

कारयेत्तेन शिर: कण्ठांसकेषु च ॥ कश्यपस्येति मन्त्रेण यथानुक्रमयोगत: । तत: शान्तिं प्रकुर्वीत अवधारणवाचनम् । दक्षिणा च प्रदातव्या ग्रहादीनां विसर्जनम्" ॥ शान्तिर्वामदेव्यगानादि: । "पर्य्युक्षणञ्च सर्वत्र कर्त्तव्यमदितेन्विति अन्ते च वामदेव्यस्य गानमित्यथवा त्रिधा" इति छन्दोगपरिशिष्टात् गानं कुर्य्यात् ऋचस्त्रिधेति वा पाठ: ।

अवधारणमच्छिद्रावधारणं दक्षिणानन्तरं कर्त्तव्यं न तु पाठक्रमादर: । "वृथा विप्रवचो यस्तु गृह्णाति मनुज: शुभे ! । अदत्त्वा दक्षिणां वापि स याति नरकं ध्रुवम्" इति नारदीयात् अतएव भवदेवभट्टेनापि वामदेव्यगानानन्तरं दक्षिणोक्ता तथा वशिष्ठेन दक्षिणानन्तरं विसर्जनाभिधानेन श्राद्धेऽपि तथादर्शनेन अनिर्दिष्टकालाङ्गस्य प्रधानकालकर्त्तव्यत्वेन च शारद्या: पूजाया नवम्यामेव दक्षिणा देया । व्यक्तं मत्स्यसूक्ते "नवम्यां पूर्ववत् पूजा कर्त्तव्या भूतिमिच्छता । दक्षिणां वस्त्रयुग्मञ्च आचार्य्याय निवेदयेत्" ॥ न तु देवीविसर्जनानन्तरं दक्षिणेति दुर्गाभक्तितरङ्गिण्युक्तं युक्तम् । "उत्तरेण नवम्यान्तु बलिभि: पूजयेत् शिवाम् । श्रवणेन दशम्यान्तु प्रणिपत्य विसर्जयेत्" इत्यनेन "आर्द्रायां बोधयेद्देवीं मूलेनैव प्रवेशयेत् । पूर्वोत्तराशयां संपूज्य श्रवणेन विसर्जयेत्" इत्यत्र क्त्वा निर्देशेन च नवम्युत्तराषाढ़यो: पूजान्तता प्रतीते: । "आश्विने मासि शुक्ले तु कर्त्तव्यं नवरात्रिकम् । प्रतिपदादिक्रमेणैव यावच्च नवमी भवेत् । त्रिरात्रं वापि कर्त्तव्यं सप्तम्यादि यथाक्रमम्" ॥ इति कृत्यकल्पलताधृतभविष्योत्तरवचने पूजनस्य नवम्यन्तता प्रतीतेश्च । कर्मान्ते छन्दोगपरिशिष्टेन दक्षिणाभिधानाच्च । यथा "ब्राह्मणे दक्षिणा देया यत्र या परिकीर्त्तिता । कर्मान्तेऽनुच्यमानायां पूर्णपात्रादिका भवेत्" ॥ ब्राह्मणे इति कर्मकारयितृपलक्षणम् । अत्र नवरात्रिकमित्यौत्सर्गिकं तिथिवृद्धिह्रासाभ्यामधिकन्यूनतासम्भवात् अतएव प्रतिपदादि तत्तत्तिथिषु कृत्यमाह भविष्ये "केशसंस्कारद्रव्याणि प्रदद्यात् प्रतिपद्दिने । पट्टडोरं द्वितीयायां केशसंयमहेतवे ॥ दर्पणञ्च तृतीयायां सिन्दूरालक्तकन्तथा । मधुपर्कञ्चतुर्थ्याञ्च

तिलकं नेत्रमण्डनम्॥ पञ्चम्यामङ्गरागांश्च शक्त्यालङ्करणानि च। षष्ठ्यां बिल्वतरौ बोधं सायं सन्ध्यासु कारयेत्॥ सप्तम्यां प्रातरानीय गृहमध्ये प्रपूजयेत्। उपोषणमथाष्टम्यामष्टशक्तेः प्रपूजनम्॥ नवम्यामुग्रचण्डायास्तद्वद्देवार्च्चनं दिवा। पूजा च बलिदानञ्च तद्वन्मातृः प्रपूजयेत्॥ कुमारी पूजनीया च भूषणीया च भूषणैः। संपूज्य प्रेषणं कुर्य्यात् दशम्यां शावरोत्सवैः॥ अनेन विधिना यस्तु देवीं प्रीणयते नरः। स्कन्दवत् पालयेत् तन्तु देवी सर्वापदि स्थितम्॥ पुत्रदारधनर्द्धीनां संख्या तस्य न विद्यते। भुक्त्वेह विपुलान् भोगान् प्रेत्य देवीगणो भवेत्"॥ अत्र कल्पे प्रतिपदि कलसस्थापनं यजमानस्नानार्थं दुर्गाभक्तितरङ्गिण्यां यदुक्तं तन्न युक्तम्। तस्य देवीपूजानङ्गत्वेन तत्र तद्विधानस्यायुक्तत्वात्। मत्स्यपुराणे ग्रहयाग एव तस्योक्तत्वाच्च। यद्यपि "अग्निर्ब्रह्मा भवानी च गजवक्त्रो-महोरगः। स्कन्दोभानुर्मातृगणो दिक्पालाश्च नवग्रहाः॥ एषां घटे तु प्रत्येकं पूजयित्वा यथाविधि। मूर्त्तिं पवित्रमेकैकं दद्यादेव समाहितः"॥ इति कालिकापुराणीयेन प्रतिपदि ब्रह्मपूजनमात्रमुक्तम्। तन्न युक्तं ब्रह्मपूजनवदग्न्यादिपूजनस्यापि तद्वचनोक्तत्वेन तदभिधानस्यापि युक्तत्वात् किन्तु तद्वचनं सामान्यतः पूजान्तरविधायकतया बोध्यम्। मत्स्ये। "अर्थहीनो दहे द्राष्ट्रं मन्त्रहीनस्तथर्त्विजम्। आत्मानं दक्षिणाहीनो नास्ति यज्ञसमो रिपुः"॥ अर्थो द्रव्यम्।

देवीयात्राकाले निर्मञ्छनविधिमाह पूजारत्नाकरे देवीपुराणम्। "भक्त्या पिष्टप्रदीपाद्यैश्चूताश्वत्थादिपल्लवैः। ओषधीभिश्च मेध्याभिः सर्ववीजैर्यवादिभिः। नवम्यां पर्वकाले तु यात्राकाले विशेषतः। यः कुर्य्यात् श्रद्धया वीर देव्या नीराजनं नरः। शङ्खभेर्य्यादिनिनदैर्जयशब्दैश्च पुष्कलैः। यावतो दिवसान् वीर देव्या नीराजनं कृतम्। तावत् कल्पसहस्राणि दुर्गालोके महीयते। यस्तु कुर्य्यात् प्रदीपेन सूर्य्यलोके महीयते"॥ पर्वकाले उत्सवकाले। देव्या इति स्त्रीत्वमविवक्षितम्। विष्ण्वादि प्रतिमायां तथाचारात्।

योगाधिकारे हरेः स्तुतिमाह मत्स्यपुराणम्। "प्रीयतां

पुण्डरीकाक्षः सर्व्वयज्ञेश्वरो हरिः। तस्मिं स्तुष्टे जगत्तुष्टं प्रीणिते प्रीणितं जगत्" ॥ कृत्य महार्णवधृत भविष्यशिवरहस्ययोः। "दशम्यां दीयते यत्र बलिदानन्तु मानवैः। तद्राष्ट्रं नाशमायाति मरकोपद्रवैः स्फुटम्" ॥ अतोऽत्रविरुद्धवचनानि भोजदेवजीमूतवाहन हलायुधरत्नाकर दुर्गाभक्तितरङ्गिणी वाचस्पतिमिश्र स्मृतिसागररायमुकुट कृत्य महार्णव प्रभृतिभिः अनादृतानि।

विजयादशमीमधिकृत्य। "दशमीं यः समुल्लङ्घ्य प्रस्थानं कुरुते नृपः। तस्य संवत्सरं राज्ञो न क्वापि विजयो भवेत्" ॥ अशक्तौ खड्गादियात्रामाह राजमार्त्तण्डः। "कार्य्यवशात् स्वयमगमे भूभर्त्तुः केचिदाहुराचार्य्याः। छत्रायुधाद्यमिष्टं वैजयिकं निर्गमे कुर्य्यात्"।

ज्योतिषे। "अस्तं गते तु मित्रे यया दिशा खञ्जनं नृपो यान्तं पश्येत्तया प्रयातस्य क्षिप्रमरातिर्वशमुपैति" ॥ मित्रे सूर्य्ये। तथा "कृत्वा नीराजनं राजा बलवृद्ध्यै यथाबलम्। शोभनं खञ्जनं पश्येत् जलगोगोष्ठसन्निधौ ॥ नील ग्रीव शुभग्रीव सर्व्वकामफलप्रद। पृथिव्यामवतीर्णोऽसि खञ्जरीट नमोऽस्तु ते" ॥ वसन्तराजे "दृष्टोदितेऽगस्त्यमुनौ सुदेशे सुचेष्टितं खञ्जनको विदध्यात्"। इत्युपक्रम्य "त्वं योगयुक्तो मुनिपुत्रकस्त्वमदृश्यतामेषि शिखोद्गमेन। संदृश्यसे प्रावृषि निर्गतायां त्वं खञ्जनाश्चर्य्यमयो नमस्ते"। एतद्वचनात् यदा शिरसि शिखोद्गमस्तदा खञ्जनो न दृश्यते अगस्त्योदयानन्तरं शिखाविगमात् पुनर्दृश्यते दर्शनफलं "अब्जेषु गोषु गजवाजिमहोरगेषु। राज्यप्रदः कुशलदः शुचि शाद्वलेषु। भस्मास्थिकेशनखलोमतुषेषु दृष्टो दुःखं ददाति बहुशः खलु खञ्जरीटः" ॥ वर्षकृत्ये "वित्तं ब्रह्मणि कार्य्यसिद्धिरतुला शक्रे हुताशे भयं याम्यामग्निभयं सुरद्विषि कलिर्लाभः समुद्रालये वायव्यां वरवस्त्रगन्धसलिलं दिव्याङ्गना चोत्तरे। ऐशान्यां मरणं ध्रुवं निगदितं दिग्लक्षणं खञ्जने। ज्येष्ठीरुते क्षुतेऽप्येवमूचुः केचिच्च कोविदाः"।

क्षुते तु मदनपारिजातधृतम्। "जीवेति क्षुवतो ब्रूयात्

जीवेत्युक्तस्त्वया सह । अशुभं खञ्जनं दृष्ट्वा देवब्राह्मणपूजनम् । दानं कुर्वीत कुर्य्याच्च स्नानं सर्वौषधीजलैः । चुतोत् पतन जृम्भासु जीवोत्तिष्ठाङ्गुलिध्वनिः । यतोरपि च कर्त्तव्य-मन्यथा ब्रह्महा भवेत्”। इति वन्द्यघटीय हरिहर-भट्टाचार्य्यात्मज श्रीरघुनन्दनभट्टाचार्य्यविरचितदुर्गापूजातत्त्वं समाप्तम् ।

अथ एकादशी । सा च परयुता ग्राह्या युग्मात् । आग्नेये “गृहस्थो ब्रह्मचारी च आहिताग्निस्तथैव च । एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि” ॥ कृष्णायां पुत्रवतो गृहस्थस्य निषेधमाह ब्रह्मपुराणम् । “आदित्येऽहनि संक्रान्त्यामसितै-कादशी दिने । व्यतीपाते कृते श्राद्धे पुत्री नोपवसेत् गृही” अस्यैव शयनबोधनमध्ये प्रतिप्रसवमाह ब्रह्मवैवर्त्तः । “शयनी बोधनीमध्ये या कृष्णैकादशी भवेत् । सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन” ॥ वैष्णवस्य तु यावत् कृष्णायामुप-वासमाह नारदः । “नित्यं भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः । पक्षेपक्षे च कर्त्तव्यमेकादश्यामुपोषणम् । सपुत्रश्च सभार्य्यश्च स्वजनैर्भक्तिसंयुतैः । एकादश्यामुपवसेत् पक्षयोरुभयोरपि” ॥

तत्त्वसागरे । “यथा शुक्ला तथा कृष्णा यथा कृष्णा तथे-तरा । तुल्येति मन्यते यस्तु स वै वैष्णव उच्यते” इति वैष्णव-लक्षणमप्युक्तम् । वैधोपवासे भोजन चतुष्टयनिवृत्तिमाह महाभारतम् । “सायमाद्यन्तयोरह्नोः सायं प्रातश्च मध्यमे । उपवासफलं प्रेप्सोर्वर्ज्यं भक्तचतुष्टयम्” ॥ पुत्रवतो ब्रह्मपुरा-णोक्त रविवाराद्युपवासनिषेधस्तु तन्मात्र निमित्तकोपवास-परः । “तन्निमित्तोपवासस्य निषेधोऽयमुदाहृतः । नानुषङ्ग-कृतो ग्राह्यो यतो नित्यमुपोषणम्” ॥ इति जैमिनिवचनात् । “भृगुभानुदिनोपेता सूर्य्यसंक्रान्ति संयुता । एकादशी सदो-पोष्या पुत्रपौत्र विवर्द्धिनी” इति विष्णुधर्मोत्तराच्च । तन्नि-मित्तोपवासमाह संवर्त्तः । “अमावास्या द्वादशी च संक्रान्तिश्च विशेषतः । एताःप्रशस्तास्तिथयो भानुवारस्तथैव च ॥ अत्र स्नानं जपो होमो देवतानाञ्च पूजनम् । उपवासस्तथादानमे-कैकं पावनं स्मृतम्” ॥ पितृवासरादौ तु वराहपुराणविष्णु-

धर्मोत्तरकात्यायना:। "उपवासो यदा नित्य: श्राद्धं नैमित्तिकं भवेत्। उपवासं तदा कुर्य्यादाघ्राय पितृसेवितम्॥ रविवारेऽर्कसंक्रान्त्यामेकादश्यां सितेतरे। पारणञ्चोपवासञ्च न कुर्य्यात् पुत्रवान् गृही" इति पारणनिषेधो रविवार संक्रान्तिमात्र प्राप्तोपवासनिषेधवत् रविसंक्रान्तिमात्र प्राप्तपारणपर:। तयोरेव पारणन्तु "सप्तवारानुपोष्यैव सप्तधा संयतेन्द्रिय:। सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति"॥ इति। संवत्सर प्रदीपधृतेन। "नित्यं द्वयोरयनयोर्नित्यं विषुवतोर्द्वयो:। चन्द्रार्कयोर्ग्रहणयोर्व्यतीपातेषु सर्वसु॥ अहोरात्रोषित: स्नानं दानं श्राद्धं तथा जपम्। य: करोति प्रसन्नात्मा तस्य स्यादक्षयञ्च तत्"॥ इति ब्रह्मपुराण वचनाभ्याञ्च। शनिवारोपवाससंक्रान्तिपूर्वदिनोपवासविधानेन प्राप्तमिति।

विधवायास्तु सर्वथा नित्यत्वमाह कात्यायन:। "विधवा या भवेन्नारी भुञ्जीतैकादशी दिने। तस्यास्तु सुकृतं नश्येत् भ्रूणहत्या दिने दिने"॥ स्मृति:। अष्टाब्दादधिकोमर्त्योह्यपूर्णाशीतिवत्सर:। भुङ्क्ते यो मानवो मोहात् एकादश्यां स पापकृत्"॥ एकादशी व्रतं नित्यं तदाह ब्रह्मवैवर्त्त:। "इति विज्ञाय कुर्वीतावश्यमेकादशी व्रतम्। विशेष नियमाशक्तोऽहोरात्रं भुक्तिवर्जित:"॥ भविष्ये "नित्यमेतत् व्रतं नाम कर्त्तव्यं सार्ववर्णिकम्। सर्वाश्रमाणां सामान्यं सर्वधर्मेष्वनुत्तमम्॥ एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि"। प्रचेता: "पूर्णाप्येकादशी त्याज्या द्वितयं वर्द्धते यदि। द्वादश्यां पारणालाभे पूर्णैव परिगृह्यते"।

एकादश्या: पूर्णत्वं विशेषयति सौरधर्म:। "आदित्योदयवेलाया: प्राङ्मुहूर्त्तद्वयान्विता। सैकादशी तु संपूर्णा विद्धान्या परिकीर्त्तिता"॥ द्वितयमेकादशी द्वादशी च वर्द्धते परदिनगामिनी। द्वादश्यां पारणाया अलाभे पूर्णापरिग्रहे अधिकारिभेदमाह स्कान्दे। "संपूर्णैकादशी यत्र प्रभाते पुनरेव सा। तत्रोत्तरां यति: कुर्य्यात् पूर्वामुपवसेत् गृही"॥ कौर्म्मे। "एकादशी प्रवृद्धा चेत् शुक्ले कृष्णे विशेषत:। उत्तरान्तु यति: कुर्य्यात् पूर्वामुपवसेत् गृही"। गारुड़े "पुन:

प्रभात समये घटिकैका यदा भवेत्। तत्रोपवासो विहितो वनस्थस्य यतेस्तथा। विधवायाश्च तत्रैव परतो द्वादशी नचेत्"॥ प्रवृद्धा एकादश्येव प्रकर्षेण वृद्धा न द्वादशीत्यर्थः। तत्रैवोत्तरामेव। यत्र तु पूर्वदिने दशमीविद्धा परदिने द्वादशी मिश्रा तत्र सर्वैरेव परदिने द्वादशीलाभे तदलाभेऽपि परोपोष्या। "एकादशी द्वादशी-मिश्रा परतोऽपि न वर्द्धते। गृहिभिर्यतिभिश्चैव सैवोपोष्या सदा तिथिः"॥ इति स्मृतेः। अपि भिन्नक्रमेन वर्द्धते द्वादशीत्यर्थः। एतत् द्विस्पृशि त्रिस्पृशि च सम्भवत्यविशेषात्।

अत्रैव त्रयोदश्यां पारणफलमाह। "एकादशी द्वादशी च रात्रिशेषे त्रयोदशी। तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणम्"। यत्तु "द्वादश द्वादशीर्हन्ति त्रयोदश्यान्तु पारणम्" इति तदुपवास परदिने "द्वादशीलाभे तां विहाय पारणं बोध्यम्। तथाह ब्रह्मपुराणम्। "एकादश्यामुपोष्यैव द्वादश्यां पारणं स्मृतम्। त्रयोदश्यां न कुर्य्यात्तु द्वादश द्वादशीक्षयात्"॥ कालविवेक संवत्सर प्रदीप प्रभृतिषु कूर्मपुराणम्। "एकादशीमुपवसेत् द्वादशीमथवा पुनः। विमिश्रां वा प्रकुर्वीत न दशम्या युतां क्वचित्॥ कुर्य्यादलाभे संयुतां नालाभेऽपि प्रवेशिनीम्। उपोष्या द्वादशी तत्र त्रयोदश्यान्तु पारणम्॥ उदयात् प्राक्दशम्यास्तु शेषः संयोग इष्यते। उपरिष्टात् प्रवेशस्तु तस्मात्तां परिवर्जयेत्"॥ द्वादश्यां कलार्द्धमात्रमप्येकादश्या अनिर्गमे यदि दशमी नोदयं स्पृशति उदयात् प्रागरुणोदयकाल एवावतिष्ठते तदा संयुक्तोच्यते सैवोपोष्या। अत्रैव विषये "एकादशी दशाविद्धा परतोऽपि न वर्द्धते। गृहिभिर्यतिभिश्चैव सैवोपोष्या सदा तिथिः"॥ इति भविष्यपुराणीयादिवचनानि दशमीविद्धाकर्त्तव्यताबोधकानि बोध्यानि। अत्र द्वादश्यामेकादश्यलाभ एव अरुणोदयविद्धायाः कर्त्तव्यतोपदेशात् द्वादश्यामेकादशीलाभे तादृश्विन्धां न कुर्य्यात् इत्यर्थतोऽवगतेस्तत्र परैकादश्युपोष्या इत्यवगम्यते। एतद्विषये "षष्टिदण्डात्मिकायाश्च तिथेर्निष्क्रमणे परे। अकर्मण्यं तिथिमलं विद्यादेकादशीं विना"॥ इति संगच्छते।

तथा कालमाधवीये गारुड़म्। "आदित्योदयवेलायामा-

रभ्य षष्टिनाडिकाः। सङ्कीर्णैकादशीनाम त्याज्या कर्मफलेप्सुभिः"॥ अत्रापि त्रयोदश्यां द्वादशी लाभ एव परोपोष्येत्यवधेयम्। नोचेत् तत्र पूर्वामुपोष्य परदिने द्वादश्याद्यपादं समुत्तीर्य्य पारणं कुर्य्यात् "विद्धाप्येकादशी ग्राह्या परतो द्वादशी नचेत्" इति "मुहूर्त्तं द्वादशी न स्यात् त्रयोदश्यां यदा मुने। उपोष्या दशमीविद्धा सर्वैरेकादशी तदा"॥ इति "त्रयोदश्यां यदा न स्यात् द्वादशी घटिकाद्वयम्। दशम्यैकादशीविद्धा सैवोपोष्या सदा तिथिः"॥ इति मत्स्यकूर्म नारदीयवचनेभ्यः अत्र मुहूर्त्तं घटिकेति पारणयोग्यकालोपलक्षणम्। "कलार्द्धां द्वादशीं दृष्ट्वा निशीथादूर्द्ध मेवहि। आमध्याह्नाः क्रियाः सर्वाः कर्त्तव्याः शम्भु शासनात्"॥ इति श्रीधरस्वामिधृतवचनात्।

अथोदयानन्तरवर्त्तिनी दशमी यद्येकादशीं स्पृशति तदा सा प्रवेशिनी पदवाच्या। तां विहाय द्वादशीमेवोपवसेत्। तदिदमुक्तं नालाभेऽपि प्रवेशिनीमिति। अलाभेऽपि परदिने एकादश्यलाभेऽपि। अतएव कण्वः। "उदयोपरिविद्धा तु दशम्येकादशी यदि। दानवेभ्यः प्रीणनार्थं दत्तवान् पाकशासनः"॥ स्कान्दे "दशम्यैकादशीविद्धा गान्धारी तामुपोषिता। तस्याः पुत्रशतं नष्टं तस्मात् तां परिवर्जयेत्। ये कारयन्ति कुर्वन्ति दशम्यैकादशीं युताम्। आलोक्य तन्मुखं ब्रह्मन् सूर्य्यदर्शनमाचरेत्"॥

अथारुणोदयविद्धा षष्टिदण्डैकादशी पूर्णैकादश्योर्व्यवस्थाया मविशेषः इति चेन्न "द्वादश्यां पारणालाभे पूर्णैव परिगृह्यते॥ इत्यविशेषात् अत्र वैष्णवेनापि पूर्णोपोष्या इति। अरुणोदयविद्धातु द्वादश्यां पारणस्यालाभेऽपि वैष्णवेनोपोष्या किन्तु खण्डैकादश्युपोष्येति। "दशमीशेष संयुक्तो यदि स्यादरुणोदयः। नैवोपोष्यं वैष्णवेन तद्दिनैकादशीव्रतम्"॥ इति गारुड़े वैष्णवेनेत्यभिधानात्। तत्रापि कृष्णपक्षे अरुणोदय विद्धैवोपोष्या शुक्लपक्षे तु न तथेति विशेषः। "एकादशीं दशाविद्धां वर्द्धमाने विवर्जयेत्। पक्षे ह्रासे स्थिते सोमे लङ्घयेद्दशमीयुताम्"॥ इति कालविवेककृत्य महार्णवधृत

भविष्यपुराणैकवाक्यत्वात्। अरुणोदय कालमाह स्कन्दपुराणम्। "उदयात् प्राक्चतस्रस्तु नाड़िका अरुणोदयः। तत्र स्नानं प्रशस्तं स्यात्तद्धि पुण्यतमं स्मृतम्"॥ नाड़िका दण्डः।

तदयं संक्षेपः। गृहस्थादीनामुभयपक्षे एकादश्यामुपवासाधिकारः। कृष्णपक्षैकादश्यां पुत्रवतो गृहस्थस्य नाधिकारः। हरिशयनाभ्यन्तरे तस्याप्यधिकारः। वैष्णवपुत्रवद्गृहस्थस्य सर्वं कृष्णायामप्यधिकारः। शुक्रवार रविवारादावप्येकादश्यामुपवासफलाधिक्यम्। विधावायास्तु सर्वत्राधिकारः। अत्र अष्टाब्दादधिकापूर्णाशीति वर्षमानवो नित्याधिकारी एकादशीव्रतं नित्यं पारणदिने द्वादशीलाभे सर्वएव पूर्णामेकादशीं त्यक्त्वा खण्डामुपवसेत्। तदलाभे गृही पूर्वां तदन्यः परां विधवापि। यदा तु पूर्वदिने दशम्यायुतैकादशी तदोत्तरामुपोष्या द्वादश्यां पारणं कुर्य्यात्। परदिने द्वादश्यनिर्गमे तु त्रयोदश्यामपि यदा तु सूर्य्योदयानन्तरं दशमीयुतैकादशी परदिने न निःसरति तदा तां विहाय द्वादशीमुपवसेत्। यदा तु सूर्य्योदयपूर्वकालीन दशमीविद्धैकादशी परदिने न निःसरति तदा तामुपवसेत्। यदा तु तथाविधा सती परदिने निःसरति तत्परदिने च द्वादशी तदा तां विहाय खण्डामुपोष्य द्वादश्यां पारयेत् यदा तु उभयदिने तद्विधैकादशी तत्परदिने च न द्वादशी तदा षष्टिदण्डात्मिकां विद्धामुपोष्य परदिने द्वादश्याद्यपादमुत्तीर्य्य पारयेत् वैष्णवस्तु तत्रापि शुक्लपक्षे तु परामुपोष्य त्रयोदश्यां पारयेत्। एकादश्युपवासः सूतकादावपि कार्य्यः। भविष्योत्तर पद्मपुराणयोः। "एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि। सूतके मृतके वापि अन्यस्मिन् वाप्यशौचके। सर्वथा न परित्याज्या इच्छता श्रियमात्मनः"। स्त्रियास्तु पुलस्त्यः। "एकादश्यां न भुञ्जीत नारी दृष्टे रजस्यपि"॥ अशक्तं प्रति नारदीयम्। "अनुकल्पो नृणां प्रोक्तः क्षीणानां वरवर्णिनि !"। वायुपुराणे "उपवास निषेधे तु किञ्चित् भक्ष्यं प्रकल्पयेत्। न दुष्येदुपवासेन उपवासफलं लभेत्"॥

उपवासनिषेधासामर्थ्ययोर्भक्ष्यप्रकारमाह नारदीये। "मूलं फलं पयस्तोयमुपभोग्यं भवेत् शुभम्। नत्वेवं भोजनं केश्चित एकादश्यां प्रकीर्त्तितम्"॥ एवमित्यनुकल्पातिरिक्तम्। पद्मपुराणे "नक्तं हविष्यान्नमनोदनं वा फलं तिलाः क्षीरमथाम्बुचाज्यम्। यत्पञ्चगव्यं यदिवाथ वायुः प्रशस्तमत्रोत्तरमुत्तरञ्च"॥ फलाहारादावपि तुलसीरहितत्वे दोषमाह गरुड़पुराणम्। "तुलसीं विना या क्रियते न पूजा स्नानं न तद्यत्तुलसीं विनाकृतम्। भुक्तं न तद्यत्तुलसीविवर्जितं पीतं न तद् यत्तुलसीविवर्जितम्"॥ अत्र श्रीभगवद्वाक्यम्। "मच्छयने मदुत्थाने मत्पार्श्वपरिवर्त्तने। फलमूलजलाहारी हृदि शल्यं ममार्पयेत्"॥

हविष्यान्नमाह स्मृतिः। हैमन्तिकं सितास्विन्नं धान्यं मुद्गा यवास्तिलाः। कलाया कङ्गुनीवारा वास्तूकं हिलमोचिका। षष्टिका कालशाकञ्च मूलकं केमुकेतरत्। लवणे सैन्धवसामुद्रे गव्ये च दधिसर्पिषी। पयोऽनुद्धृतसारञ्च पनसाम्रहरीतकी। तिन्तिड़ीजीरकञ्चैव नागरङ्गञ्च पिप्पली कदली लवली धात्री फलान्यगुडमैक्षवम्। अतैलपक्कं मुनयो हविष्यान्नं विदुर्बुधाः"॥ अत्रास्विन्नमित्युपादानादन्यत्र स्विन्न धान्यतण्डुले न दोषः। हैमन्तिकमित्यभिधायागस्त्य संहितायाम्। नारिकेलफलञ्चैव कदलीं लवलीन्तथा। आम्रमामलकञ्चैव पनसञ्च हरीतकीम्। व्रतान्तरप्रशस्तञ्च हविष्यं मन्यते बुधाः। अशक्तौ तु मनुः स्मृत्यपरिशिष्टञ्च "प्रभुः प्रथमकल्पस्य योऽनुकल्पे प्रवर्त्तते। न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम्"॥ इति। अनुकल्पेऽपि विष्णूपासनं पारणञ्च कर्त्तव्यम्। "एकभक्तेन नक्तेन तथैवायाचितेन च। उपवासेन दानेन नैवाद्वादशिको भवेत्"॥ इति मार्कण्डेयवचनात् दानेन ब्रह्मवैवर्त्तोक्तेन। यथा "उपवासासमर्थश्चेदेकं विप्रन्तु भोजयेत्। तावद्धनानि वा दद्यात् यद्भक्ताद्द्विगुणं भवेत्। सहस्रसम्मितां देवीं जपेद्वा प्राणसंयमान्। कुर्य्यात् द्वादशसंख्याकान् यथा शक्ति व्रते नरः"॥ देवीं गायत्रीम्। मात्स्ये। "दशम्यां नियताहारो मांसमैथुनवर्जितः। एका-

दश्यां न भुञ्जीत पक्षयोरुभयोरपि" ॥ सुविसन्तोषे "कांस्यं मांसं मसूरञ्च चनकं कोरदूषणम् । शाकं मधुपरान्नञ्च त्यजेदुपवसन् स्त्रियम्" ॥ चनकं छोलेतिख्यातं अत्रोपवसन्निति तद्दिने भोजनासम्भवात् सामीप्यात् पूर्वापरयोर्ग्रहणम् । स्मृतिः । "शाकं मांसं मसूरञ्च पुनर्भोजनमैथुने । द्यूतमत्यम्बुपानञ्च दशम्यां वैष्णवस्त्यजेत्" ॥

स्मृतिः । "प्रातःसन्ध्यां ततः कृत्वा सङ्कल्पं बुध आचरेत्" । वाराहे "गृहीत्वोडुम्बरं पात्रं वारिपूर्णमुदङ्मुखः । उपवासन्तु गृह्णीयात् यद्वा वार्य्येव धारयेत् । एकादश्यां निराहारो भूत्वा चैवापरेऽहनि । भोक्ष्येऽहं पुण्डरीकाक्ष ! शरणं मे भवाच्युत !" ॥ यद्वेति ताम्रपात्राभावे जलमात्रं गृहीत्वा सङ्कल्पयेदित्यर्थः । कालमाधवीयधृतस्कान्दे "उपवासन्तु सङ्कल्प्य मन्त्रपूतं जलं पिबेत्" ॥ मन्त्रमाह कात्यायनः । "अष्टाक्षरेण मन्त्रेण त्रिर्जपेनाभिमन्त्रितम् । उपवासफलं प्रेप्सुः पिबेत् पात्रगतं जलम्" । आचमनवन्नात्र दूषणम् । ततः प्रार्थयेत् । "इदं व्रतं मया देव ! गृहीतं पुरतस्तव । निर्विघ्नां सिद्धिमाप्नोतु त्वत्प्रसादाज्जनार्दन !" ॥ ब्रह्मपुराणम् । "एकादश्यामुभे पक्षे निराहारः समाहितः । संपूज्य विधिवद्विष्णुं श्रद्धया सुसमाहितः । याति विष्णोः परं स्थानं नरो नास्त्यत्र संशयः" ॥ नृसिंहपुराणम् । "उपवासो नरश्रेष्ठ ! एकादश्यां विधीयते । नरसिंहं समभ्यर्च्य सर्वपापैः प्रमुच्यते" ॥

द्वादशीमधिकृत्य कात्यायनः । "प्रातः स्नात्वा हरिं पूज्य उपवासं समर्पयेत् । अज्ञानतिमिरान्धस्य व्रतेनानेन केशव ! ॥ प्रसीद सुमुखो नाथ ! ज्ञानदृष्टिप्रदो भव । मन्त्रं जपित्वा हरये निवेद्योपोषणम् व्रती । द्वादश्यां पारणं कुर्य्यात् वर्जयित्वामुपोदकीम्" ॥ उपोदकी पूतिकाशाकम् । द्वादशीलङ्घने दोषमाह नारदीयम् । "महाहानिकरी ह्येषा द्वादशी लङ्घिता नृणाम् । कृष्ण ! कृष्ण ! कृपालुस्त्वमगतीनां गतिर्भव । संसारार्णवमग्नानां प्रसीद मधुसूदन !" ॥ इत्यनेनापि निवेदयेत् इति । विष्णुधर्मोत्तरे "द्वादश्याः प्रथमः पादो हरिवासरसंज्ञकः । तमतिक्रम्य कुर्वीत पारणं विष्णुतत्परः" ॥

स्मृतिः "कलार्द्धां द्वादशीं दृष्ट्वा निशीथादूर्द्ध्वमेव हि। आमध्याह्नाः क्रियाः सर्वाः कर्त्तव्याः शम्भुशासनात्" ॥ निशीथादूर्द्ध्वं सार्द्धप्रहरत्रयोपरि। अत्रासामर्थ्ये कात्यायनः। "सन्ध्यादिकं भवेन्नित्यं पारणन्तु निमित्ततः। अद्भिस्तु पारयित्वा तु नैत्यिकान्ते भुजिक्रियाः" ॥ ब्रह्माण्डपुराणम्। "कांस्यं मांसं सुरां चौद्रं लोभं वितथभाषणम्। व्यायामञ्च व्यवायञ्च दिवा स्वप्नं तथाञ्जनम्। शिलापिष्टं मसूरांश्च द्वादशैतानि वैष्णवः। द्वादश्यां वर्जयेन्नित्यं सर्वपापैः प्रमुच्यते" ॥

वामनपुराणे। "एकादश्यां जगत्स्वामि शयनं परिकल्पयेत्। शेषाहि भोगपर्य्यङ्कं कृत्वा संपूज्य केशवम्॥ अनुज्ञां ब्राह्मणेभ्यश्च द्वादश्यां प्रयतः शुचिः। लब्ध्वा पीताम्बरधरं देवं निद्रां समानयेत्" ॥ अनुज्ञां लब्ध्वा इति अन्वयः। एकादशीसमये दिवाशयनं परिकल्पयेत् रात्रौ द्वादशीचणे निद्रेति।

व्यक्तं वराहे। "आषाढ़ शुक्लद्वादश्यां पौर्णमास्यामथापि वा। चातुर्मास्यव्रतारम्भं कुर्य्यात् कर्कटसंक्रमे॥ अभावे तु तुलार्केऽपि मन्त्रेण नियमं व्रती। कार्त्तिके शुक्लद्वादश्यां विधिवत्तत् समापयेत्॥ चतुर्धापि हि तच्चीर्णं चातुर्मास्यं व्रतं नरः। कार्त्तिक्यां शुक्लपक्षे तु द्वादश्यां तत्समापयेत्" ॥ मात्स्ये। "चतुरो वार्षिकान् मासान् देवस्योत्थापनावधि। मधुस्वरो भवेन्नित्यं नरो गुडविवर्जनात्॥ तैलस्य वर्जनादेव सुन्दराङ्गः प्रजायते। कटुतैलपरित्यागात् शत्रुनाशः प्रजायते। लभते सन्ततिं दीर्घां स्थालीपाकमभक्षयन्॥ सदा मुनिः सदा योगी मधुमांसस्य वर्जनात्। निराधिर्नीरुगोजस्वी विष्णुभक्तश्च जायते॥ एकान्तरोपवासेन विष्णुलोकमवाप्नुयात्। धारणान्नखलोम्नाञ्च गङ्गास्नानं दिने दिने ताम्बूलवर्जनाद्भोगी रक्तकण्ठश्च जायते॥ घृतत्यागात् सुलावण्यं सर्वं स्निग्धं वपुर्भवेत्। फलत्यागात्तु मतिमान् बहुपुत्रश्च जायते"॥ "नमो नारायणायेति जप्तानशनजं फलम्। पादाभिवन्दनाद्विष्णोर्लभेद्गोदानजं फलम्। एवमादिव्रतैः पार्थ! तुष्टिमायाति केशवः" ॥ सनत्कुमारः "इदं व्रतं मया

देव ! गृहीतम् पुरतस्तव । निर्विघ्नां सिद्धिमाप्नोतु प्रसन्ने त्वयि केशव ! । गृहीतेऽस्मिन् व्रते देव ! यद्यपूर्णे त्वहं म्रिये । तन्मे भवतु संपूर्णं त्वत्प्रसादाज्जनार्दन !"॥ समाप्तौ च "इदं व्रतं मया देव ! कृतं प्रीत्यै तव प्रभो ! । न्यूनं संपूर्णतां यातु त्वत्प्रसादाज्जनार्दन !"॥ अत्रैव यतिमधिकृत्य काठकगृह्यम् "एकरात्रं वसेत् ग्रामे नगरे पञ्चरात्रकम् । वर्षाभ्योऽन्यत्र वर्षासु मासांश्च चतुरो वसेत्" ॥ एतदशक्तविषयम् । "ऊर्द्ध्वं वार्षिकाभ्यां मासाभ्यां नैकस्थानवासी" ॥ इति शङ्खोक्तेः ।

मात्स्ये । "शेते विष्णुः सदाषाढे भाद्रे च परिवर्त्तते । कार्त्तिके परिबुध्येत शुक्लपक्षे हरेर्दिने" । भविष्यनारदीययोः । "मैत्राद्यपादे स्वपितीह विष्णुर्वैष्णव्यमध्ये परिवर्त्तते च । पौष्णावसाने च सुरारिहन्ता प्रबुध्यते मासचतुष्टयेन" ॥ मैत्रमनुराधा । वैष्णव्यं श्रवणा पौष्णं रेवती । भविष्ये । "निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्त्तनम् । अन्यत्र पादयोगेऽपि द्वादश्यामेव कारयेत्" ॥ अन्यत्र स्वापादिविहितरात्र्यादीतरकाले दशमी प्रतिपदोश्च । "किन्तु मैत्राद्यपादेन दशम्यंशेन यो दिवा । पौष्णशेषेण किन्तेन प्रतिपदश्च यो निशि ॥ दशम्यंशेन दशम्या अंशो यत्र पादे तेन । यः पादो दिवाप्राप्तस्तेन वा किम् । अत्र दशमी प्रतिपदोर्वर्जनात् तदितरैकादश्यादि पञ्चतिथिषु मैत्रादिनक्षत्र पादविशेषलाभेऽपि द्वादशीं विनापि शयनादिरिति प्रतीयते । वचनान्तरं "रेवत्यन्तो यदा रात्रौ द्वादश्या च समायुतः । तदा विबुध्यते विष्णुर्दिनान्ते प्राप्य रेवतीम्" ॥ दिनान्ते त्रिधाविभक्तदिनतृतीयभागे दिवोत्थानमित्यनुरोधात् । विष्णुधर्मोत्तरे । "विष्णुर्दिवा न स्वपिति न च रात्रौ प्रबुध्यते । द्वादश्यामृक्ष संयोगे पादयोगो न कारणम् । अप्राप्ते द्वादशीमृक्षे उत्थानशयने हरेः । पादयोगेन कर्त्तव्ये नाहोरात्रं विचिन्तयेत्" ॥ वराहपुराणम् । "द्वादश्यां सन्धिसमये नक्षत्राणामसम्भवे । आभाकासितपक्षेषु शयनावर्त्तनादिकम्" ॥ आभाकानां आषाढभाद्रकार्त्तिकानाम् । ततश्च द्वादश्यां निशादौ नक्षत्रमात्रयोगात् द्वादश्यामृक्षाभावे तिथ्यन्तरे

निशाद्यनादरेण पादविशेषयोगात् तदभावे द्वादश्यां सन्ध्यायामेव शयनादिकं बोधनन्तु द्वादश्यां रात्रौ रेवत्यन्तपादयोगि दिनतृतीयभाग इति विशेषः। शयने मन्त्रमाह वराहपुराणम्। "नमो नारायणेत्युक्त्वा इमं मन्त्रमुदीरयेत्। मेघान्यपि मेघश्यामं त्वुपागतं सिच्यमानं महीमिमां निद्रां भगवान् गृह्णातु लोकनाथ वर्षास्विमं पश्यतु मेघवृन्दम्। ज्ञात्वा च पश्चैव च देवनाथ मासांश्चत्वारि वैकुण्ठस्य तु पद्मनाथ। ततश्च "सुप्ते त्वयि जगन्नाथे जगत्सुप्तं भवेदिदम्। विबुद्धे त्वयि बुध्येत जगत् सर्वं चराचरम्"॥ इत्यनेन पूजयेत्। पार्श्वपरिवर्त्तने तु। "वासुदेव! जगन्नाथ! प्राप्तेयं द्वादशी तव। पार्श्वेण परिवर्त्तस्व सुखं स्वपिहि माधव!"॥ इति पठेत्। "त्वयि सुप्ते जगन्नाथे जगत्सुप्तं भवेदिदम्। विबुद्धे त्वयि बुध्येत जगत्सर्वं चराचरम्"॥ इत्यनेन पूजयेत्। नैयतकालिककल्पतरौ ब्रह्मपुराणं कार्त्तिकशुक्लपक्षमधिकृत्य। "उपवासः प्रकर्त्तव्य एकादश्यां प्रजागरः। द्वादश्यां वासुदेवश्च पूजितव्यः प्रयत्नतः"। उत्थानमन्त्रस्तु "महेन्द्र रुद्रैरभिनूयमानो भवानृषिर्वन्दितवन्दनीयः। प्राप्ता तवेयं किल कौमुदाख्या जागृष्व जागृष्व च लोकनाथ!॥ मेघा गता निर्म्मलपूर्णचन्द्रः शारद्यपुष्पाणि च लोकनाथ!। अहं ददानीति च पुण्यहेतोर्जागृष्व जागृष्व च लोकनाथ!"॥ ततः "उत्तिष्ठोत्तिष्ठ गोविन्द त्यज निद्रां जगत्पते!। त्वया चोत्थीयमानेन उत्थितं भुवनत्रयम्"॥ इति पठित्वा पूजयेत्।

मत्स्यपुराणे भीमं प्रति भगवद्वाक्यं "यद्यष्टम्यां चतुर्दश्यां द्वादश्यामथ भारत!। अन्येष्वपि दिनर्क्षेषु न शक्तस्त्वमुपोषितुम्॥ ततः पुण्यामिमां भीमतिथिं पापप्रणाशिनीम्। उपोष्य विधिनानेन गच्छेद्विष्णोः परं पदम्"। भीमतिथिं भीमतिथित्वेन ख्यातामेकादशीम्। विस्तारस्त्वेकादशीतत्त्वेऽनुसन्धेयः। विष्णुधर्म्मे "मृगशीर्षे शशधरे माघे मासि प्रजापते। एकादश्यां सिते पक्षे सोपवासो जितेन्द्रियः। द्वादश्यां षट्तिलाचारं कृत्वा पापात् प्रमुच्यते। तिलस्नायी तिलोद्वर्त्ती तिलहोमी तिलोदकी। तिलस्य दाता भोक्ता च षट्तिली

नावसीदति। सक्तत्तु षट्तिली भूत्वा सर्व्वपापैः प्रमुच्यते। त्रिंशद्वर्षसहस्राणि स्वर्गलोके महीयते" ॥

अथ द्वादशी। सा च एकादशीयुता ग्राह्या युग्मात् नारदीये। "वैशाखशुक्लपक्षे तु द्वादशी वैष्णवी तिथिः। तस्यां शीतल तोयेन स्नापयेत् केशवं शुचिः" ॥ इयं पिपीतक द्वादशी अत्र "षष्ठीसमेता कर्त्तव्या सप्तमी नाष्टमीयुता। पतङ्गोपासनायेह षष्ठ्यामाहुरुपोषणम्। एकादश्यां प्रकुर्व्वन्ति उपवासं मनीषिणः। उपासनाय द्वादश्यां विष्णोर्यद्वदियं तथा" ॥ इति भविष्य पुराणेन एकादश्युपवासानन्तरं द्वादश्यां विष्णूपासनाया उक्तत्वादत्रापि तथा व्यवहरन्तीति नात्र युग्मादरः। द्वादशीक्षयेतूपवासानन्तर्य्यं विनापि पूजेति। इयं पूर्व्ववचनोक्तषष्ठीयुता सप्तमीवत् आषाढ़द्वादश्यादिषु शयनादिकं प्रागुक्तवचनात्।

भविष्योत्तरे। "द्वादशी श्रवणोपेता सर्व्वपापहरा तिथिः। बुधवारसमा युक्ता ततः शतगुणा भवेत्। तामुपोष्य समाप्नोति द्वादश द्वादशीफलम्"। उभयदिने तल्लाभे तु एकादशी युता ग्राह्या। "द्वादशी च प्रकर्त्तव्या एकादश्यायुता विभो!। सदा कार्य्या च विद्वद्भिर्व्विष्णुभक्तैश्च मानवैः" ॥ इति स्कान्दात्। यदात्वेकादश्यामेव श्रवणा तदा तामुपवसेत्। तथा च नारदः। "याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रयोगतः। तास्वेव तद्व्रतं कुर्य्यात् श्रवणद्वादशीं विना" ॥ भविष्योत्तरे। "एकादशी यदा तु स्यात् श्रवणेन समन्विता। विजया सा तदा प्रोक्ता भक्तानां विजयप्रदा। तिथिनक्षत्रसंयोगे उपवासो यदा भवेत्। तावदेव न भोक्तव्यं यावन्नैकस्य संक्षयः। विशेषेण महीपाल श्रवणं वर्द्धते यदि। तिथिक्षयेण भोक्तव्यं द्वादशीं नैव लङ्घयेत्"। तिथिक्षयेण एकादशीक्षयेण भोक्तव्यं द्वादश्यां पारयेदित्यर्थः। अत्र हेतुः द्वादशीमित्यादिः। यदात्वेकादश्युपवासदिने श्रवणं नास्ति परदिने द्वादश्यां तत् तदोपवासद्वयमाह ब्रह्मवैवर्त्तः। "एकादशीमुपोष्यैव द्वादशीं समुपोषयेत्। नचात्र विधिलोपः स्यादुभयोर्द्देवता हरिः" ॥ अत्र च "असमाप्ते व्रते पूर्व्वे

नैव कुर्य्यात् व्रतान्तरम्"॥ इति स्मृतेः पारणस्याकरणेन पूर्वोपवाससमाप्तावुपवासान्तरारम्भे विधिलोपो न भवेदित्यर्थः। हेतुमाह उभयोरित्यादिः। उभयोपवाससामर्थ्ये तु श्रवणद्वादशीव्रतोपोष्या तथा च स्मृतिः। "वरमेकादशीं भुक्त्वा द्वादशीं समुपोषयेत्। पूर्वोपवासजं पुण्यं सर्वं प्राप्नोत्यसंशयः"। तथा "उपोष्य द्वादशीं पुण्यां विष्णुऋक्षेण संयुताम्। एकादश्युद्भवं पुण्यं नरः प्राप्नोत्यसंशयः"॥ द्वादश्युपवासः काम्यः। तथाह मार्कण्डः। "द्वादश्यामुपवासेन सिद्धात्मा नृप! सर्वशः। चक्रवर्त्तित्वमतुलं संप्राप्नोत्यतुलां श्रियम्"॥

अत्र कालिकापुराणात् शक्रोत्थानविधिर्लिख्यते। "अथातः शृणु राजेन्द्र! शक्रोत्थानध्वजोत्सवम्। यत्कृत्वा नृपतिर्याति नो कदाचित्पराभवम्। अर्जुनोऽप्यश्वकर्णश्च प्रियकोधव एव च। औडुम्बरश्च पञ्चैते केत्वर्थे सत्तमाः स्मृताः। अन्ये च देवदार्वाद्याः शालाद्यास्तरवस्तथा। तञ्च वृक्षं तुदेद्रात्रौ स्पृष्ट्वा मन्त्रमिमं पठेत्"॥ तुदेत् च्छेदयेत्। "यानि वृक्षे तु भूतानि तेभ्यः स्वस्ति नमोऽस्तु वः। उपहारं गृहीत्वेमं क्रियतां वासवध्वजः॥ पार्थिवस्त्वां वरयते स्वस्ति तेऽस्तु नगोत्तम!। ध्वजार्थं देवराजस्य पूजेयं प्रतिगृह्यताम्॥ ततोऽपरेऽह्नि तं च्छित्वा मूलमष्टाङ्गुलं पुनः। जले क्षिपेत्तदग्रस्य च्छित्वैवं चतुरङ्गुलम्। ततो नीत्वा पुरद्वारं केतुं निर्माय तत्र वै। शुक्लाष्टम्यां भाद्रपदे केतुं वेदिं प्रवेशयेत्। द्वाविंशद्धस्तमानस्तु अधमः केतुरुच्यते। द्वात्रिंशत्तु ततोज्यायान् द्वाचत्वारिंशदेव तु। कुमार्य्यः पञ्च कर्त्तव्याः शक्रस्य नृपसत्तम!। शालमय्यस्तु ताः सर्वास्त्वपराः शक्रमातृकाः। केतोः पादप्रमाणेन कार्य्याः शक्रकुमारिकाः। मातृकार्द्धप्रमाणात्तु यन्त्रं हस्तद्वयं तथा। एवं कृत्वा कुमारीश्च मातृकां केतुमेव च। एकादश्यां सिते पक्षे यष्टीनामधिवासनम्। अधिवास्य ततो यष्टिं गन्धद्वारादिमन्त्रकैः। द्वादश्यां मण्डलं कृत्वा वासवं विस्तृतात्मकम्। अच्युतं पूजयित्वादौ शक्रं पश्चात् प्रपूजयेत्। शक्रस्य प्रतिमां कुर्य्यात् कानकीं दारवीं तथा"॥ कानकीं कनकमयीं "अन्यतैजसभूतां वा सर्वाभावे तु मृण्मयीम्। तां मण्डलस्य मध्ये

तु पूजयित्वा विशेषतः ॥ ततः शुभे मुहूर्त्ते तु केतुमुत्थापयेन्नृपः । वज्रहस्त ! सुरारिघ्न ! बहुनेत्र ! पुरन्दर ! । क्षेमार्थं सर्वलोकानां पूजेयं प्रतिगृह्यताम्। एह्येहि सर्वामरसिद्धसङ्घैरभिष्टुतो वज्रधरामरेश ! । समुत्थितस्त्वं श्रवणाद्यपादे गृहाण ! पूजां भगवन् नमस्ते। इति मन्त्रेण तन्त्रेण नानानैवेद्यवन्दनैः। घटेषु दश दिक्पालान् ग्रहांश्च परिपूजयेत। साध्यादीन् सकलान् देवान् मातृः सर्वास्त्वनुक्रमात्। ततः शुभे मुहूर्त्ते तु ज्ञानिवर्द्धकि संयुतः। केतूपत्थानभूमिन्तु यज्ञवेद्यास्तु पश्चिमे। विप्रैः पुरोहितैः सार्द्धं गच्छेद्राजा सुमङ्गलैः। रज्जुभिः पञ्चभिर्वद्ध यन्त्रश्लिष्टं समातृकम। कुमारीभिश्च संयुक्तं दिक्पालानाञ्च पट्टकैः। यथावर्णैर्यथादेशैर्योजितैर्वस्त्रवेष्टितैः। युतं तं किङ्किणीजालैर्बृहद् घण्टौघचामरैः। चित्रमाल्याम्बरैश्चापि चतुर्भिरपि तोरणैः। उत्थापयेन्महाकेतुं राजा मात्यैः शनैः शनैः। प्रतिमां तां नयेन्मूलं केतोः शक्रं विचिन्तयन्। यजेत्त पूर्ववत्तत्र शचीं मातलिमेव च। जयन्तं तनयं तस्य वज्रमैरावतं तथा। ग्रहांश्चाप्यथ दिक्पालान् सर्वांश्च गणदेवताः। पूजितानाञ्च देवानां शश्वद्धोमं समाचरेत्। होमान्ते तु बलिं दद्यात् वासवाय महात्मने। तिलं घृतं चाक्षतञ्च पुष्पं दूर्वां तथैव च। एतैस्तु जुहुयादेतान् स्वैः स्वैर्मन्त्रैर्नरोत्तमः। ततो होमावसाने तु ब्राह्मणानपि भोजयेत्। एवं प्रपूजयेन्नित्यं सप्तरात्रं दिने दिने। त्रातारमिति मन्त्रोऽयं वासवस्य परः प्रियः। एवं कृत्वा दिवाभागे शक्रोत्थापनमादितः। श्रवणर्क्षयुतायाञ्च द्वादश्यां पार्थिवः स्वयम्। अन्त्यपादे भरण्यास्तु निशि शक्रं विसर्जयेत्। सुप्तेषु सर्वलोकेषु यथा राजा न पश्यति। सार्द्धं सुरासुरगणैः पुरन्दर ! शतक्रतो ! । उपहारं गृहीत्वेमं महेन्द्रध्वज ! गम्यताम्। उत्पाते सप्तरात्राणि तथोपप्लवदर्शने। व्यतीत्य शनिभौमौ च अन्यर्क्षेऽपि विसर्जयेत्। यस्मिं स्तस्मिन् दिने चैव सूतकान्ते विसर्जयेत्। तथा रक्षेन्नृपः केतुं न पतेच्छकुनिर्यथा। शनैः शनैः पातयेत्तं यथोत्थापनमादितः। विसृष्टं शक्रकेतुं तं सालङ्कारं तथा निशि। क्षिपेदनेन मन्त्रेण अगाधे सलिले नृपः।

तिष्ठ केतो ! महाभाग ! यावत् संवत्सरं जले । भवार्थं सर्वलोकानाम् अन्तरायविनाशक ! । उत्थापयेत्तूर्य्यरवैः सर्वलोकस्य वै पुरः । एवं यः कुरुते पूजां वासवस्य महात्मनः । न तस्य राज्ये दुर्भिक्षं नेतयो नाप्यधर्मकृत्" ॥ ईतयश्च । "अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः । प्रत्यासन्नाश्च राजानः षड़ेते ईतयः स्मृताः" ॥ भविष्योत्तरे "इन्द्रध्वजसमुत्थानं प्रमादान्न कृतं यदि । तदा द्वादशमे वर्षे कर्त्तव्यं नान्तरापुनः" ॥ भैमीपर द्वादश्यां षट्तिलाचरणं प्रागुक्तवचनात् ।

"फाल्गुने शुक्लपक्षस्य पुष्यर्क्षे द्वादशी यदि गोविन्दद्वादशी नाम महापातकनाशिनी" ॥ अत्र गङ्गायां पद्मपुराणीयो मन्त्रः । "महापातकसंज्ञानि यानि पापानि सन्ति मे । गोविन्दद्वादशीं प्राप्य तानि मे हर जाह्नवि" ! ॥

अथ त्रयोदशी । सा च शुक्ला द्वादशीयुता ग्राह्या । "त्रयोदशी प्रकर्त्तव्या द्वादशीसहिता विभो" ! ॥ इति ब्रह्मवैवर्त्तात् । कृष्णा तु परयुताः । "षष्ठ्यष्टमीत्वमावास्या कृष्णा चैव त्रयोदशी । एताः पर युताः पूज्याः पराः पूर्वेण संयुताः" ॥ इति निगमवचनात् । पराः सप्तम्यादयः । एवञ्च पूर्ववचनं शुक्लाविषयं सामान्यविशेषन्यायात् ।

प्रौष्ठपद्यूर्द्ध्वं कृष्णात्रयोदश्यां मघायुक्तायामनिषिद्धं यत् किञ्चिद्द्रव्येण श्राद्धमावश्यकं शङ्खादिविधिवाक्ये नक्षत्रविशिष्टतिथेः श्रुतेः । ततश्च केवल त्रयोदशी केवल मघाश्राद्धार्थवादा अपि कृष्णविशिष्ट विधिप्राप्त कर्मणो नित्यत्वबोधका न तु केवल विध्यन्तर कल्पनागौरवात् । तथा च शङ्खः "प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम् । प्राप्य श्राद्धं हि कर्त्तव्यं मधुना पायसेन च" ॥ मनुः "यत्किञ्चित् मधुना मिश्रं प्रदद्यात्तु त्रयोदशीम् । तदप्यक्षयमेव स्यात् वर्षासु च मघासु च" ॥ विष्णुधर्मोत्तरम् । "प्रौष्ठपद्यामतीतायां तथा कृष्णा त्रयोदशी । एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः" ॥ शातातपः । "पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च । तस्माद्दद्यात् सदोद्युक्तो विद्वत्सु ब्राह्मणेषु च" ॥ अत्रान्नमात्र श्रुतेः मनुवचने यत्किञ्चिदिति श्रुतेश्च । शङ्खोक्त पायसः फला-

तिशयार्थः। गुणविशेषे फलविशेषः स्यादिति न्यायात्। व्यक्तं विष्णुधर्मोत्तरे। मघायुक्ता च तत्रापि शस्ता राजं स्त्रयोदशी। तत्राक्षय्यं भवेच्छ्राद्धं मधुना पायसेन च"॥ तत्रास्य शुक्लकृष्णपक्षे अत्र यत् श्राद्धं तन्मधु योगेन पायस-योगेन वाक्षयं भवेत्। एवं मनुवचने यत्किञ्चिन्मधुना मिश्रं इत्यनेन मधुमात्रयुक्तत्वमुक्तम्। अतोऽत्र सुतरां शूद्रस्याप्यधिकारः। अत्र गजच्छाया योगे फलातिशयः। तथा च कृत्यचिन्तामणौ स्मृतिः। "कृष्णपक्षे त्रयोदश्यां मघास्विन्दुः करे रविः। यदा तदा गजच्छाया श्राद्धे पुण्यैरवाप्यते"॥ करे हस्तानक्षत्रे कन्यादशमांशोपरिसपादत्रयोविंशांश इति यावत्। अविभक्तानामप्यत्र पृथक् श्राद्धमावश्यकम्। यथा श्राद्धचिन्तामणौ स्मृतिः। "विभक्ता अविभक्ता वा कुर्य्युः श्राद्धमदैविकम्। मघासु च तथान्यत्र नाधिकारः पृथग्विना"॥ अदैविकं प्रत्याब्दिकैकोद्दिष्टं अन्यत्र कृष्णपक्षादौ नाधिकारः न नित्याधिकारः। "सपिण्डीकरणान्तानि यानि श्राद्धानि षोडश। पृथक् नैव सुताः कुर्य्युः पृथग्द्रव्या अपि क्वचित् इत्यत्रापिना समुच्चितानाम् अपृथग्द्रव्याणां पुंसां सपिण्डीकरणान्तानीति विशेषणात् तदुत्तरश्राद्धानां पृथक्करणमपि प्रतीयते। मघात्रयोदशीनिमित्तक श्राद्धे पुत्रवता पिण्डा न देयाः "भौजङ्गीं तिथिमासाद्य यावच्चन्द्रार्कसङ्गमम्। तत्रापि महती पूजा कर्त्तव्या पितृदैवते। ऋक्षे पिण्डप्रदानन्तु ज्येष्ठपुत्रो विवर्जयेत्"॥ इति देवीपुराणात् भौजङ्गी पञ्चमी चन्द्रार्क सङ्गमम् अमावास्या पितृदैवते ऋक्षे मघायाम्। शातातपः। पिण्डनिर्वापरहितं यत्तु श्राद्धं विधीयते। स्वधा वाचनलोपोऽत्र विकिरस्तु न लुप्यते। अक्षय्यदक्षिणा स्वस्ति सौमनस्यं तथास्त्विति"॥

स्कन्दपुराणे "वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी। गङ्गायां यदि लभ्येत सूर्य्यग्रहशतैः समा"॥ वारुणं शतभिषा। "शनिवारसमायुक्ता सा महावारुणी स्मृता। गङ्गायां यदि लभ्येत कोटिसूर्य्यग्रहैः समा। शुभयोग समायुक्ता शनौ शतभिषा यदि। महामहेति विख्याता त्रिकोटि कुलमुद्ध-

रेत्" ॥ कुलं पुरुषमिति याज्ञवल्क्यदीपकलिका। तथा च मेदिन्यां "कुलं जनपदे गोत्रे सजातीयगणेऽपि च। भवने च तनौ क्लीवं कण्टकार्य्योषधौ कुली" ॥ अत्र संज्ञाविधेः सार्थकत्वाय निमित्तत्वेन मासपक्षतिथ्युल्लेखानन्तरं महावारुणी महामहावारुण्यावुल्लेखनीये श्राद्धे पार्वणादि संज्ञोल्लेखवत् पौर्णमास्यमावास्ययोः पक्षोल्लेखवच्च। "मासपक्षतिथीनाञ्च निमित्तानाञ्च सर्वशः। उल्लेखनमकुर्वाणो न तस्य फलभाग्भवेत्" ॥ इति वचनात्। तेन चैत्रे मासि कृष्णपक्षे त्रयोदश्यां तिथौ महावारुण्यां महामहावारुण्यां यथायथं प्रयोज्यम्। वारस्तु सूर्य्योदयादुदयान्तरं यावत् तथा च सूर्य्यसिद्धान्तः "सूतकादि परिच्छेदो दिनमासाब्दपास्तथा। मध्यमग्रहभुक्तिश्च सावनेन प्रकीर्त्तिताः। उदयादुदयाद्भानोर्भौम सावन वासराः" ॥ दिनाधिपस्य रव्यादेर्भोग्यं दिनं वाररूपं सावनगणनेनोक्तं भौमेति पित्रादिदिनव्यावृत्त्यर्थं भौमं पाद्मयोः "द्वौ तिथ्यन्तावेकवारे यत्र स्यात् स दिनक्षयः" ॥ वशिष्ठः। "एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा। तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम्" ॥ इत्येतयोर्वचनयोरेकवाक्यतयापि तथावगम्यते। रेखापूर्वापरयोरित्यादिकन्तु ज्योतिःशास्त्रोक्तं कालहोरादिज्ञानार्थमिति। अत्र "संक्रान्तिषु व्यतीपाते ग्रहणे चन्द्रसूर्य्ययोः। पुष्ये स्नात्वा च गङ्गायां कुलकोटीः समुद्धरेत्" ॥ इति ब्रह्माण्ड पुराणात् ग्रहणमात्रे त्रिकोटि कुलोद्धरणविधानात् ततोऽधिकेषु वारुण्यादिषूत्तरोत्तरगुरुषु महामहावारुण्यामपि यत् त्रिकोटि कुलोद्धरणमुक्तं तदुद्धरणगततारतम्येनाविरुद्धम्। "यं यं क्रतुमधीते च तस्य तस्याप्नुयात् फलम्" ॥ इति याज्ञवल्क्योक्ताध्ययनात् यथा तत्तद्यागकरणेऽधिक फलम् अतएव शिष्टानामादरोऽपि तथेति। न चात्र "स्नानं कुर्वन्ति या नार्य्यश्चन्द्रे शतभिषां गते। सप्तजन्म भवेयुस्ता दुर्भगा विधवा ध्रुवम्" ॥ इति। "त्रयोदश्यां तृतीयायां दशम्याञ्च विशेषतः। शूद्रविट् क्षत्रियाः स्नानं नाचरेयुः कथञ्चन" इति प्रचेतोजावालवचनाभ्यां स्त्रीणां शूद्रादीनाञ्च स्नाननिषेध

इति वाच्यम् । "भोगाय क्रियते यत्तु स्नानं याट्टच्छिकं नरैः । तन्निषिद्धं दशम्यादौ नित्यनैमित्तिके न तु" ॥ इति हेमाद्रिधृतवचनेन रागप्राप्तस्नान एव निषेधात् नक्तेऽपि तथा कल्पनात् । अत्र त्रयोदश्यां पूर्णायां पूर्वाह्नेतरकाले नक्षत्रादिसत्त्वे परदिने पूर्वाह्णे तिथिनक्षत्रलाभेऽपि पूर्वदिन एव स्नानम् । तथा च कालमाधवीये नारदीयम् । "आदित्योदयवेलाया आरभ्य षष्टि नाडिकाः । तिथिस्तु सा हि शुद्धा स्यात् सार्वतिथ्योह्ययं विधिः" ॥ अत्र पूर्वतिथेः शुद्धत्वाभिधानात् तत्परतिथेरशुद्धत्वाभिधानं प्रतीयते । रात्रावपि वारुण्यादिषु गङ्गायां स्नानम् । "दिवारात्रौ च सन्ध्यायां गङ्गायाञ्च प्रसङ्गतः । स्नात्वाश्वमेधजं पुण्यं गृहेऽप्युद्धृत तज्जलैः" ॥ इति । ब्रह्माण्डपुराणे गन्धर्ववाक्यञ्च । "अहोरात्रौ प्राप्नुवतो जलं ब्रह्मविदो जनाः । गर्हयन्ति जनान् सर्वान् वनस्थान नृपतीनपि" ॥ अत्रार्जुनं प्रति वचनम् । "समुद्रे हिमवत् पार्श्वे नद्यामस्याञ्च दुर्मते । रात्रावहनि सन्ध्यायां कस्य गुप्तः परिग्रहः । असम्बाधा देवनदी स्वर्गसम्पादिनी शुभा । कथमिच्छसि तां रोद्धुं नैष धर्मः सनातनः । अनिवार्य्यमसम्बाधं तव वाचा कथं वयम् । नस्पृशेम यथा कामं पुण्यं भागीरथीजलम् ॥" इति रात्रिस्नानाधिकारमुपक्रम्यादित्यपर्वणि "सर्व एव शुभकालः सर्वोदेशस्तथा शुभः । सर्वोजनस्तथा पात्रं स्नानादौ जाह्नवीजले" ॥ इति भविष्यपुराणे च सामान्यतः प्रतिप्रसवात् । पात्रमधिकारी । गृहस्थरत्नाकरे देवलः । "महानिशा तु विज्ञेया मध्यमं प्रहरद्वयम् । तस्यां स्नानं न कर्त्तव्यं काम्यनैमित्तिकादृते" ॥ अत्र महानिशायामपि काम्य नैमित्तिकं स्नानं प्रतीयते ।

भविष्ये "चैत्रे शुक्लत्रयोदश्यां दमनं मदनात्मकम् । कृत्वा संपूज्य विधिवद्वीजयेद्व्यजनेन तु । तत्र सम्भुचितः कामः पुत्रपौत्रविवर्द्धनः । कामदेवस्त्रयोदश्यां पूजनीयो यथाविधि । रतिप्रीतिसमायुक्तो ह्यशोकमणिभूषितः" ॥ दमनो दमनकवृक्षः सम्भुचितः पूजितः । कामदेवध्यानन्तु "चापेषुधृक् कामदेवो रूपवान् विश्वमोहनः" ॥ तत्र मन्त्रः । "पुष्पधन्वन् नमस्ते-

ऽस्तु नमस्ते मीनकेतन" मुनीनां लोकपालानां धैर्य्यच्युति-कृते नमः। माधवात्मजकन्दर्प सम्बरारे रतिप्रिय ॥ नम-स्तुभ्यं जिताशेषभुवनाय मनोभुवे। आधयो मम नश्यन्तु व्याधयश्च शरीरजाः ॥ सम्पद्यतामभीष्टं मे सम्पदः सन्तु मे स्थिराः। नमो माराय कामाय देवदेवस्य मूर्त्तये। ब्रह्मविष्णु-शिवेन्द्राणां मनः क्षोभकराय च। एवं यः कुरुते पूजामन-ङ्गस्य महात्मनः ॥ भवन्ति नापदस्तस्य तस्मिन्नब्दे कदाचन" ॥

अथ चतुर्दशी। सा च शुक्ला पूर्णिमायुता ग्राह्या युग्मात् कृष्णा पूर्वयुता। "कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी। पूर्वविद्धैव कर्त्तव्या परविद्धा न कुत्रचित् ॥ उपवासादि-कार्य्येषु एष धर्मः सनातनः" ॥ इति निगमवचनात्। अप-राह्णव्यापित्वे तु शुक्लचतुर्दश्यपि पूर्वविद्धा ग्राह्या "चतुर्दशी तु कर्त्तव्या त्रयोदश्या युता विभो। मम भक्तैर्महावाहो भवेद्‌या चापराह्णिकी। दर्शविद्धा न कर्त्तव्या राकाविद्धा तथा मुने" ॥ इति स्कान्दपुराणात्। मम भक्तैरिति ईश्वरोक्तेः शिवव्रतविषयम्। त्रयोदश्यां दिवातनमुहूर्त्तचतुर्दश्यलाभे तु पद्मपुराणम्। "एकादश्यष्टमीषष्ठी उभे पक्षे चतुर्दशी। अमावास्या तृतीया च उपोष्याः स्युः परान्विताः ॥" एतद्वि-षय एव "शिवाघोरा तथा प्रेता सावित्री च चतुर्दशी। कुहू-युक्तैव कर्त्तव्या कुह्वामेव हि पारणम् ॥ इति वचनं यमः "दत्त्वा जलाञ्जलीन् सप्त कृष्णपक्षे चतुर्दशीम्। धर्मराजं समुद्दिश्य सर्वपापैः प्रमुच्यते" ॥

लिङ्गपुराणे "उपवासश्चतुर्दश्यां महापातकनाशकः"। परा-शरः "मेषे वा वृषभे वापि सावित्रीं तां विनिर्दिशेत्"। तां चतुर्दशीं "ज्यैष्ठकृष्णचतुर्दश्यां सावित्रीमर्च्चयन्ति याः। वट-मूले सोपवासा न ता वैधव्यमाप्नुयुः" ॥ राजमार्त्तण्डकृत्यचि-न्तामणी। "ज्यैष्ठे मासि चतुर्दश्यां सावित्रीव्रतमुत्तमम्। अवैधव्याय कुर्वन्ति स्त्रियः श्रद्धासमन्विताः" ॥ व्रतमात्रे तु अनन्ततृतीयाव्रतोक्तमाचरन्ति दृष्टपरिकल्पनान्यायात् तदुक्तं मत्स्यपुराणे "गर्भिणीसूतिकानक्तं कुमारी च रजस्वला। यदा शुद्धा तदान्येन कारयेत् क्रियते सदा" ॥ उपवासाशक्तौ नक्तं

भोजनं कुर्य्यात् "उपवासे त्वशक्तानां नक्तं भोजनमिष्यते" इति तद्वतवचनान्तरात् अशुद्धा चेत् पूजां कारयेत्। कायिकञ्चोपवासादिकं सदा शुद्धया अशुद्धया च स्वयं क्रियते। एवं स्मृतिपारिभाषिकायां वर्द्धमानोपाध्यायाः। नारदः "दिवाभागे त्रयोदश्यां यदा चतुर्दशी भवेत्। तत्र पूज्या महासाध्वी देवी सत्यवता सह"॥ दिवाभागे दण्डद्वयमात्र सत्त्वेऽपि अतएव प्रदोषे व्रतमाचरन्ति। पूर्वाह्ने तद्विधत्वेऽपि पराह्ने त्रिसन्ध्यव्यापित्वे पराह्न एव त्रिसन्ध्यव्यापिनीति वचनात्। यदा तु पूर्वपरयोर्न तथाविधा तदापि पराह्न एव यथा ज्योतिषे "चतुर्दश्याममावास्या यदा भवति नारद!। उपोष्या पूजनीया सा चतुर्दश्यां विधानतः"॥ सा सावित्री। ततश्चामावास्यायां सावित्रीव्रतविधानं शिवाघोरेति वचनञ्च तत्परम्। पराशरः। "सावित्रीमर्च्चयित्वा तु फलाहारापरेऽहनि। ततश्चाविधवा नारी वित्तभोगान् लभेत सा"॥

भविष्योत्तरे "भाद्रे मास्यसिते पक्षे अघोराख्या चतुर्दशी। तामुपोष्य नरो याति शिवलोकमयत्नतः"॥ भविष्ये "अनन्तव्रतमेतद्धि सर्वपापहरं शुभम्। सर्वकामप्रदं नृणां स्त्रीणाञ्चैव युधिष्ठिर!॥ तथा शुक्लचतुर्दश्यां मासि भाद्रपदे भवेत्। तस्यानुष्ठानमात्रेण सर्वं पापं प्रणश्यति"॥ व्रतारम्भप्रतिष्ठयोर्वर्ज्यंकालमाह ज्योतिषे। "गुरोर्भृगोरस्तवाल्ये वार्द्धके सिंहके गुरौ। वक्रिजीवाष्टविंशेऽह्नि गुर्वादित्ये दशाहिके॥ पूर्वराशावनायातातिचारि गुरुवत्सरे। प्राग्राशिगन्तृजीवस्य चातिचारे त्रिपक्षके॥ कम्पाद्यद्भुतसप्ताहे नीचस्थेज्ये मलिम्लुचे। भानुलङ्घितके मासि क्षये राहुयुते गुरौ॥ पौषादिकचतुर्मासे चरणाङ्कितवर्षणे। एकेनाह्ना चैकदिने द्वितीयेन दिनत्रये॥ तृतीयेन तु सप्ताहे माङ्गल्यानि शुभान्विताः। विद्यारम्भं कर्णवेधौ चूड़ोपनयनोद्वहान्॥ तीर्थस्नानमनावृत्तं तथानादिसुरेक्षणम्। परीक्षा रामयन्त्रांश्च पुरश्चरणदीक्षणे॥ व्रतारम्भं प्रतिष्ठे च गृहारम्भप्रवेशने। प्रतिष्ठारम्भणे देवकूपादेर्वर्जयन्ति च॥ द्वात्रिंशद्दिवसाश्चास्ते जीवस्य भार्गवस्य तु। द्वासप्ततिर्महत्यस्ते पादास्ते द्वादशक्रमात्॥ अस्तात्

प्राक् परयोः पक्षं गुरोर्वार्द्धकवालते। पक्षं वृद्धो महास्ते तु भृगुर्वालोदशाहिकः। पादास्ते तु दशाहानि वृद्धो बालो दिनत्रयम्"॥ न च "मध्याह्ने भोज्यवेलायां समुत्तीर्य्य सरित्तटे। ददर्श शीला सा स्त्रीणां समूहं रक्तवाससाम्। चतुर्दश्यामर्च्चयन्तं भक्त्या देवं पृथक् पृथक्"॥ इति भविष्योत्तरीयान्मध्याह्नव्यापिनी तिथिर्ग्राह्येति वाच्यं पूर्वाह्णो वै देवानामिति श्रुत्यादिभिः पूर्वाह्णे देवकृत्यविधानात्। विध्यसमभिव्याहृतार्थवादेन तद्बाधायोगात्। किन्तु तस्यैव गौणकालबोधकं तत्। कालमाधवीयोऽप्येवम्। भविष्येऽपि पूजाविधायको मध्याह्नो नोक्तः यथा "कृत्वा दर्भमयानन्तं वारिधान्यां निवेश्य च। पूजयेद्गन्धपुष्पाद्यैर्नैवेद्यैर्विविधैरपि॥ चतुर्दशफलैर्मूलैर्जलजैः कुसुमैरपि। यवगोधूमशालीनां चूर्णैनैकतरस्य च॥ कृत्वा पूपं द्वयं तस्मै दद्यादेकं घृतान्वितम्। स्वयमेकन्तु भुञ्जीत करे बद्धा सुडोरकम्॥ चतुर्दशग्रन्थियुक्तं कुङ्कुमेन विलेपितम्। सुविन्यस्तं विष्णुनाम प्रतिग्रन्थिसमन्वितम्। चतुर्दशसूत्रमयं सूत्रं कार्पासमेव च"॥ पूजाडोरकबन्धनमन्त्रस्तु रत्नाकरे। "अनन्तसंसारमहासमुद्रे मग्नान् समभ्युद्धर वासुदेव!। अनन्तरूपिन्! विनियोजयस्व अनन्तरूपाय नमो नमस्ते"॥ इति मन्त्रमुक्त्वा"ऽनेन डोरकं बद्धा भोक्तव्यं सुस्थमानसैः" इत्यर्द्धं भविष्योत्तरीयं कालकौमुद्यां लिखितमिति तथा "पापोऽहं पापकर्माहं पापात्मा पापसम्भवः। त्राहि मां पुण्डरीकाक्ष! सर्वपापहरो भव॥ अद्य मे सफलं जन्म जीवितञ्च सुजीवितम्। यत्तवाङ्घ्रि युगाब्जाग्रे मूर्द्धा मे भ्रमरायते"॥ इत्याभ्यां नमस्कुर्य्यात्। अनन्तकथामप्यत्र शृण्वन्ति।

लैङ्गे "कार्त्तिके कृष्णपक्षे तु चतुर्द्दश्यां दिनोदये। अवश्यमेव कर्त्तव्यं स्नानं नरकभीरुभिः॥ अपामार्गपल्लवञ्च भ्रामयेच्छिरसोपरि। ततश्च तर्पणं कार्य्यं धर्मराजस्य नामभिः। नरकाय प्रदातव्यो दीपः संपूज्य देवताः"॥ नरकाय नरकनिवृत्तये। "अर्थोऽभिधेयरैवस्तु प्रयोजननिवृत्तिषु" इति निवृत्तावपि तादर्थ्ये इत्यनेन चतुर्थीविधानात्। अपामार्ग-

भ्रामणमन्त्रः "शीतलोष्णसमायुक्त सकण्टकदलान्वित। हर पापमपामार्ग ! भ्राम्यमाणः पुनः पुनः ॥ ततः प्रदोषसमये दीपान् दद्यात् प्रयत्नतः। ब्रह्मविष्णुशिवादीनां भवनेषु मठेषु च" ॥ भविष्ये "कार्त्तिके भौमवारे तु चित्रा कृष्णचतुर्दशी। तस्यामाराधितः स्थाणुर्नयेच्छिवपुरं ध्रुवम् ॥ यां काञ्चित् सरितं प्राप्य कृष्णपक्षे चतुर्दशीम्। यमुनायां विशेषेण नियतस्तर्पयेद् यमान् ॥ यमाय धर्मराजाय मृत्यवे चान्तकाय च। वैवस्वताय कालाय सर्वभूतक्षयाय च ॥ औडुम्बराय दध्नाय नीलाय परमेष्ठिने। वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥ एकैकस्य तिलैर्मिश्रां स्त्रीं स्त्रीन् दद्याज्जलाञ्जलीन्। संवत्सरकृतं पापं तत्क्षणादेव नश्यति" ॥ अत्राचारात् चतुर्दशशाकभक्षणञ्च कर्त्तव्यम् अत्र निर्णयामृतधृतं "ओलं केमुकवास्तूकं सर्षपं कालञ्च निम्बं जयाम्। शालिञ्चिं हिलमोचिकाञ्च पटुकं शौलफं गुडुचीं तथा ॥ भण्टाकीं सुनिषण्णकं शिवदिने खादन्ति ये मानवाः। प्रेतत्वं न च यान्ति कार्त्तिकदिने कृष्णे च भूते तिथौ" ॥ जयां जयन्तीं पटुकं पटोलम्। भविष्ये "वृश्चिके शुक्लपक्षे तु या पाषाणचतुर्दशी। तस्यामाराधयेद्गौरीं नक्तं पाषाणभोजनैः" ॥ पाषाणाकारपिष्टभोजनैः। यमः "माघे मास्यसिते पक्षे रटन्त्याख्या चतुर्दशी। तस्यामुदयवेलायां स्नातो नावेक्षते यमम्" ॥ उदयवेलायामरुणोदयवेलायाम्। "अनर्काभ्युदिते काले माघे कृष्णचतुर्दशी। सतारव्योमकाले तु तत्र स्नानं महाफलम्। स्नात्वा सन्तर्प्य तु यमान् सर्वपापैः प्रमुच्यते"। अत्र तिथिकृत्यत्वात् गौणचान्द्रादरः। अत्रारुणोदयकाल एव स्नानं पूर्वोक्तचतुर्दशयमतर्पणञ्च ॥ यत्तु उदयवेलायां सूर्य्योदयवेलायां अनर्काभ्युदित इतीषदर्थे नञिति व्याख्यानं तत् समुद्रकरभाष्यधृतसतारव्योमेत्युत्तरार्द्धानवलोकनेनेति।

अथ शिवरात्रिव्रतम्। कालमाधवीये स्कान्दे नागरखण्डे "माघमासस्य शेषे या प्रथमे फाल्गुनस्य च। कृष्णा चतुर्दशी सा तु शिवरात्रिः प्रकीर्त्तिता"। अत्रैकस्यास्तिथेर्माघीयत्वफाल्गुनीयत्वे मुख्यगौणवृत्तिभ्याम् अविरुद्धे ततस्तु

माघ्यनन्तरा चतुर्दशीशिवरात्रिः अस्यामुपवासः प्रधानं "न स्नानेन न वस्त्रेण न धूपेन न चार्च्चया। तुष्यामि न तथा पुष्पै-र्यथा तत्रोपवासतः"॥ इति शङ्करोक्तेः। स्कान्दे "ततो रात्रौ प्रकर्त्तव्यं शिवप्रीणन तत्परैः। प्रहरे प्रहरे स्नानं पूजा चैव विशेषतः"॥ अत्र वीप्सया प्रहरचतुष्टयसाध्यं व्रतं प्रतीयते। नरसिंहाचार्य्यधृतेश्वरसंहितायाम्। "शैवो वा वैष्णवो वापि यो वा स्यादन्यपूजकः। सर्वं पूजाफलं हन्ति शिवरात्रिबहिर्मुखः"। संवत्सरप्रदीपे "दुग्धेन प्रथमे स्नानं दध्ना चैव द्वितीयके। तृतीये च तथाज्येन चतुर्थे मधुना तथा"॥ ईशानसंहितायां "माघे कृष्णचतुर्दश्यां रविवारो यदा भवेत्। भौमो वापि भवेद्देवि! कर्त्तव्यं व्रतमुत्तमम्॥ शिवयोगस्य योगेन तद्भवेदुत्तमोत्तमम्। शिवरात्रिव्रतं नाम सर्व-पापप्रणाशनम्। आचाण्डालमनुष्याणां भुक्तिमुक्तिप्रदा-यकम्"॥ नागरखण्डे। "उपवासप्रभावेण बलादपि च जागरात्। शिवरात्रेस्तथा तस्य लिङ्गस्यापि प्रपूजया। अक्षयान् लभते लोकान् शिवसायुज्यमाप्नुयात्॥" पाद्मे "वर्षे वर्षे महादेवि! नरो नारी पतिव्रता। शिवरात्रौ महा-देवं कामं भक्त्या प्रपूजयेत"॥ ईशानसंहितायाम्। "एव-मेव व्रतं कुर्य्यात् प्रतिसंवत्सरं व्रती। द्वादशाब्दिकमेतद्धि चतुर्विंशाब्दिकं तथा॥ सर्वान् कामानवाप्नोति प्रेत्य चेह च मानवः" हेमाद्रिधृता स्मृतिः। "प्रदोषव्यापिनी ग्राह्या शिव-रात्रि चतुर्दशी"॥ प्रदोषमाह वत्सः। "प्रदोषोऽस्तमयादूर्द्धं घटिकाद्वयमिष्यते"। ऊर्द्धमनन्तरम्। वायुपुराणे। "त्रयो-दश्यस्तगे सूर्य्ये चतसृष्वपि नाड़िषु। भूतविद्धा तु या तत्र शिवरात्रि व्रतञ्चरेत्"॥ ईशानसंहितायाम्। "माघे कृष्ण-चतुर्दश्यामादिदेवो महानिशि। शिवलिङ्गतयोद्भूतः कोटि-सूर्य्यसमप्रभः॥ तत्कालव्यापिनी ग्राह्या शिवरात्रिव्रते तिथिः। अर्द्धरात्रादधश्चोर्द्ध्वं युक्ता यत्र चतुर्दशी। व्याप्ता सा दृश्यते यस्यां तस्यां कुर्य्यात् व्रतं नरः"॥ अत्र "महानिशा द्वे घटिके रात्रेर्मध्यमयामयोः"॥ इति देवलोक्ता महानिशा ग्राह्या। घटिका एकदण्डः। एवञ्च यद्दिने प्रदोषनिशीथोभयव्यापिनी-

चतुर्दशी तद्दिने व्रतम् उभयव्याप्त्यनुरोधात्। कालमाधवीयोऽप्येवम्। एतेन परदिने उभयव्यापित्वेऽपि पूर्वदिवसीयरात्रि द्वितीययामप्रभृतिचतुर्दशीसत्त्वे बहुप्रहरव्यापित्वेन पूर्वदिन एव व्रतमिति निरस्तम्। यदा तु पूर्वेद्युर्निशीथमात्रव्याप्तिः परेद्युः प्रदोषमात्र व्याप्तिस्तदा पूर्वेद्युर्व्रतं प्रधानकालव्याप्त्यनुरोधात्। "पूर्वेद्युरपरेद्युर्वा महानिशि चतुर्दशी। व्याप्ता सा दृश्यते यस्यां तस्यां कुर्यात् व्रतं नरः"॥ इति ईशानसंहितावचनाच्च। एतद्विषयएव भविष्यपुराणम् "अर्द्धरात्रात् पुरस्तात्तु जयायोगो भवेद् यदि। पूर्वविद्धैव कर्त्तव्या शिवरात्रिः शिवप्रियैः"॥ विष्णुधर्मोत्तरे "जयन्ती शिवरात्रिश्च कार्य्ये भद्रजयान्विते। कृत्वोपवासं तिथ्यन्ते तदा कुर्य्याच्च पारणम्"॥ तिथ्यन्ते पारणं जयन्तीमात्रपरम् अत्र चतुर्दश्यामेव तत्। "ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि सन्ति वै। पूजितानि भवन्तीह भूतायां पारणे कृते"॥ इति स्कान्दात्। "दिनमानप्रमाणेन या तु रात्रौ चतुर्दशी। शिवरात्रिस्तु सा ज्ञेया चतुर्दश्यान्तु पारणम्"॥ इति गौतमीयाच्च। यदा तु पूर्वदिनेन निशीथव्याप्तिः परदिने प्रदोषमात्रव्यापिनी तदा परा ग्राह्या प्रदोषव्यापिनीति प्रागुक्तत्वात् तिथेस्त्रिसन्ध्यव्यापित्वाच्च। एतद्विषय एव लिङ्गपुराणं "शिवरात्रिव्रते भूतां कामविद्धां विवर्जयेत्। एकेनैवोपवासेन ब्रह्महत्यां व्यपोहति" अत्रामावस्यायामेव पारणम्। "शिवाघोरा तथा प्रेता सावित्री च चतुर्दशी। कुह्वयुक्तैव कर्त्तव्या कुह्वामेव हि पारणम्"॥ इति वचनात्।

तदयं संक्षेपः। यद्दिने प्रदोषनिशीथोभयव्यापिनी चतुर्दशी तद्दिने व्रतम्। यदा तु पूर्वेद्युर्निशीथव्यापिनी परेद्युः प्रदोषमात्रव्यापिनी तदा पूर्वेद्युर्व्रतम्। यदा तु न पूर्वेद्युर्निशीथव्याप्तिः परदिने प्रदोषव्याप्तिः परदिने प्रदोषव्यापिनी तदा परदिने। पारणन्तु परदिने चतुर्दशीलाभे चतुर्दश्यां तदलाभे अमावास्यायाम्।

तत्र प्रयोगः। प्रातरुदङ्मुखः तत्सदित्युच्चार्य्य सूर्य्यः सोम इति पठित्वा जलादीन्यादाय सङ्कल्पयेत् "मन्त्रेणानेन

गृह्णीयान्नियमं भक्तिमान्नरः। शिवरात्रिव्रतं ह्येतत्करिष्येऽहं महाफलम्। निर्विघ्नमस्तु मे चात्र त्वत्प्रसादाज्जगत्पते!" ॥इति शिवरहस्यात् शिवरात्रि इत्यादिना नियम्य "चतुर्दश्यां निराहारो भूत्वा शम्भो! ऽपरेऽहनि। भोक्ष्येऽहं भुक्तिमुक्त्यर्थं शरणं मे भवेश्वर" ॥ इति गरुडपुराणीयं पठेत्। रात्रौ प्रथमप्रहरे प्रतिष्ठिते लिङ्गेऽप्रतिष्ठिते वा प्रतिष्ठां विधाय पूजां कुर्य्यात्। ह्रौं अस्त्राय फडिति पादघातत्रयेण विघ्नान्निःसार्य्य तेनैव तालत्रयेण करच्छोटिकया च दशदिग्बन्धनं कृत्वा भूतशुद्धिं विधाय ह्रां हृदयाय नम इत्यादिना षडङ्गानि न्यस्य ह्रौमिति मन्त्रेण प्राणायामं विधाय पूजयेत्। पार्थिवलिङ्गे चेत्तदा वक्ष्यमाण पूजाविधिना पूजयेत्। तत्रायं विशेषः। ह्रौं ईशानाय नम इति प्रथमप्रहरे दुग्धेन स्नापयित्वा पुनर्जलेन स्नापयित्वा। "शिवरात्रिव्रतं देव पूजाजपपरायणः। करोमि विधिवद्दत्तं गृहाणार्घ्यं महेश्वर!"॥ इत्यनेनार्घ्यं दत्त्वा गन्धादिभिः संपूज्य मूलमन्त्रं जपित्वा प्रणम्य गीतनृत्यादिभिस्तं प्रहरं नयेत्। "तद्ध्यानं तज्जपः स्नानं तत्कथाश्रवणादिकम्। उपवासकृतो ह्येते गुणाः प्रोक्ता मनीषिभिः" ॥ इति देवीपुराणे सामान्यतः श्रवणात् अत्रापि तथा। द्वितीयप्रहरे तु विशेषः। ह्रौं अघोराय नम इति दध्ना स्नानम्। अर्घ्यमन्त्रस्तु "नमः शिवाय शान्ताय सर्वपापहराय च। शिवरात्रौ ददाम्यर्घ्यं प्रसीद उमया सह" ॥ तृतीयप्रहरे तु ह्रौं वामदेवाय नम इति घृतेन स्नानम्। अर्घ्यमन्त्रस्तु "दुःखदारिद्र्यशोकेन दग्धोऽहं पार्वतीश्वर!। शिवरात्रौ ददाम्यर्घ्यमुमाकान्त! गृहाण मे"॥ चतुर्थे प्रहरे तु ह्रौं सद्योजाताय नम इति मधुना स्नानम्। अर्घ्यमन्त्रस्तु "मया कृतान्यनेकानि पापानि हर शङ्कर!। शिवरात्रौ ददाम्यर्घ्यं उमाकान्त! गृहाण मे"॥ ततो नमः शिवाय इति मूलमन्त्रं जपित्वा प्रभातेऽविघ्नेन इत्यादि वक्ष्यमाणमन्त्रान् पठेत्। तथाच गरुडपुराणं "मूलमन्त्रं ततो जप्त्वा प्रभाते तत्समापयेत्। अविघ्नेन व्रतं देव! त्वत्प्रसादात् समर्पितम्॥ क्षमस्व जगतां नाथ! त्रैलोक्याधिपते! हर!। यन्मयाद्य कृतं पुण्यं तद्रुद्रस्य निवेदितम्॥ त्वत्प्रसादान्मया

देव ! व्रतमद्य समर्पितम्। प्रसन्नोभव मे श्रीमन् ! मद्भूतिं प्रतिपद्यताम् ॥ तदालोकनमात्रेण पवित्रोऽस्मि न संशयः" । परदिने ब्राह्मणान् भोजयित्वा चतुर्द्दशीलाभे तत्र तदलाभे त्वमावास्यायां पारणं कुर्य्यात्। तत्र मन्त्रः "संसारक्लेशदग्धस्य व्रतेनानेन शङ्कर!। प्रसीद सुमुखो नाथ ! ज्ञानदृष्टिप्रदो भव"॥

अत्र पार्थिवशिवलिङ्गपूजाविधिः। तत्र शिववाक्यं स्कान्दे "विप्रस्य तु सदैवाहं शुचेरप्यशुचेरपि। गृह्णन् बलिं प्रयच्छामि प्रियाणामिव दर्शनात्" ॥ बलिं पूजाम्। तथा "शूद्रः कर्माणि यो नित्यं स्त्रीयानि कुरुते प्रिये !। तस्याहमर्च्चां गृह्णामि चन्द्रखण्डविभूषिते !" ।तथा "नमोन्तेन शिवे नैव स्त्रीणां पूजा विधीयते" ॥ एवकारेण प्रणवनिवृत्तिः। एवं शूद्रस्यापि तथा नृसिंहतापनीये। "सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्रयोर्नेच्छन्ति। सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्रो यदि जानीयात् स मृतोऽधो गच्छति" ॥ इति नेच्छन्ति पर्य्यन्तं पराशरभाष्येऽपि लिखितम्। गोविन्दभट्टधृतम्। "स्वाहा प्रणवसंयुक्तं शूद्रे मन्त्रं ददद्द्विजः। शूद्रो निरयमाप्नोति ब्राह्मणः शूद्रतामियात्" ॥ गौतमः। "रात्रावुदङ्मुखः कुर्य्याद्दैवकार्य्यं सदैव हि। शिवार्च्चनं सदाप्येवं शुचिः कुर्य्यादुदङ्मुखः"। सदा दिवारात्रौ। अत्र हेतुमाह रुद्रजामले। "न प्राचीमग्रतः शम्भोर्नोदीचीं शक्तिसंस्थिताम्। न प्रतीचीं यतः पृष्ठमतोदच्चं समाश्रयेत्" ॥ यजमानः शम्भोः प्राचीमवस्थितये न समाश्रयेत्। शम्भोर्जगत् संहारकस्याग्रतः सांमुख्यात् पञ्चवक्त्रपक्षे प्रधानं वक्त्रं प्राच्यवस्थितं एकवक्त्रपक्षे सुतरां तथा। तद्रूपमाह आदित्यपुराणं "सौम्यं मौलीन्दुभृत्स्वच्चं एकवक्त्रं चतुर्भुजं शूलपङ्कजहस्तञ्च वरदाभयपाणिकम्। आयताच्चं सुराराध्यं सर्व्वाभरणभूषितम् ॥ शिवरूपं गृहे कुर्य्यात् प्रासादे वाप्यनिन्दितम्"। अत्राग्रे पूजानिषेधात् "देवाग्रे स्वस्य चाप्यग्रे प्राची प्रोक्ता गुरुक्रमैः" इत्यस्य न विषयः। किन्त्वभिधानादिप्रसिद्धा प्राची ग्राह्या एतदनुसाराद्वच्यमाण पूर्व्वाद्याग्नेय्यान्ता पूजा। अतएव तन्त्रान्तरम्। "यत्रैव भानुस्तु वियत्युदेति प्राचीति तां वेदविदो वदन्ति। तथा पुरः पूजकपूज्ययोश्च

सदागमज्ञाः प्रवदन्ति तान्तु"। एवञ्च देवतान्तरपूजा पूर्वाह्ने प्राङ्मुखेन सायं पश्चिमाभिमुखेन रात्रावुदङ्मुखेन कार्य्या। प्राक्पश्चिमोदङ्मास्यश्च प्रातःसायं निशासु च" इति वचनात् इति वाचस्पतिमिश्राः। मैवं पूजारत्नाकरोक्त भविष्यपुराणीय-सप्ताचरसूर्य्यमन्त्र प्रस्ताव एव प्रागादिदिङ्नियमाभिधानात्। व्यवहारोऽपि अत्र न तथेति लिङ्गपुराणे। "विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया। पूजितोऽपि महादेवो न स्यात्तस्य फलप्रदः॥ तस्मान्मृदापि कर्त्तव्यं ललाटेऽपि त्रिपुण्ड्रकः। संवत्सरप्रदीपे "त्रिपुरस्य बधे काले रुद्रस्याक्ष्णोऽपतं स्तु ये। अश्रुणोविन्दवस्ते तु रुद्राक्षाऽभवन् भुवि"॥ यद्यप्येकादि-चतुर्दशमुखरुद्राक्षेषु मन्त्रफलविशेषाः सन्ति तथापि सुलभ-त्वात् पञ्चवक्त्रस्य फलमन्त्रावभिधीयते। यथा स्कान्दे "पञ्च-वक्त्रः स्वयं रुद्रः कालाग्निर्नामनामतः। अगम्यागमनाच्चैव अभक्ष्यस्य च भक्षणात्। मुच्यते सर्वपापेभ्यः पञ्चवक्त्रस्य धार-णात्"॥ ह्रूं नम इति प्रत्येकमष्टोत्तरशतं जप्त्वा शिवाम्भसा प्रक्षाल्य धारणीयं "विनामन्त्रेण यो धत्ते रुद्राक्षं भुवि मानवः। स याति नरकं घोरं यावदिन्द्राश्चतुर्दश:"॥ नन्दिपुराणे। "आयुष्मान् बलवान् श्रीमान् पुत्रवान् धनवान् सुखी। वर-मिष्टं लभेल्लिङ्गं पार्थिवं यः समर्च्चयेत्। तस्मात्तु पार्थिवं लिङ्गं ज्ञेयं सर्वार्थसाधकम्॥" भविष्ये। "शृङ्गस्मगो शक्रतपिण्डं ताम्रकांस्यमयं तथा। कृत्वा लिङ्गं सकृत् पूज्य वसेत् कल्पा-युतं दिवि। वार्क्षं वित्तप्रदं लिङ्गं स्फाटिकं सर्वकामदम्। नर्मदागिरिजं श्रेष्ठमन्यदपि हि लिङ्गवत्। कृत्वा पूजय राजेन्द्र! लप्स्यते चेप्सितं फलम्"॥ लिङ्गवत् लिङ्गाकारम्। कालकौ-मुद्याम्। "अक्षादल्पपरीमाणं न लिङ्गं कुत्रचिन्नरः। कुर्वी-ताङ्गुष्ठतो ह्रस्वं न कदाचित् समाचरेत्"॥ अक्षोऽशीतिरक्तिका तथाचामरः। "गुञ्जाः पञ्चाद्यमाषकः तेषोड़शाक्षः कर्षोऽस्त्री" इति। अङ्गुष्ठतः तद्वृहत्पर्वग्रन्थितः। "अङ्गुष्ठाङ्गुलिमानन्तु यत्र यत्रोपदिश्यते। तत्र तत्र वृहत् पर्वग्रन्थिभिर्मिनुयात् सदा"॥ इति छन्दोगपरिशिष्टात्। शिवधर्मे। "सहस्र-मर्च्चयेल्लिङ्गं निरयं स न गच्छति। रुद्रलोकमवाप्नोति भुक्त्वा

भोगाननुत्तमान्" ॥ तथा "वालुकानि च लिङ्गानि पार्थिवानि च कारयेत् । सहस्रपूजनात् सोऽपि लभते वाञ्छितं फलम्" ॥ ततश्चामुकतिथावारभ्यामुकलाभकामः सहस्रमितपार्थिवशिवलिङ्ग पूजनमिति च यथास्थाने वाक्यं देयमिति । ब्रह्मपुराणे । "यावन्न दीयते चार्घ्यं भास्कराय निवेदितम् । तावन्न पूजयेद्विष्णुं शङ्करं वा महेश्वरीम्" ॥ राघवभट्टधृतम् । "सर्व्वत्रैव प्रशस्तोऽजः शिवसूर्य्यार्च्चनं विना" ॥ अजः शङ्खः । अग्निपुराणे" तल्लिङ्गैः पूजयेन्मन्त्रैः सर्वदेवान् पृथक् पृथक् । ध्यात्वा प्रणवपूर्वन्तु तन्नाम्ना सुसमाहितः । नमस्कारेण मन्त्रेण पुष्पाणि विन्यसेत् पृथक्" ॥ देवीपुराणे । "मृदाहरणसंघट्ट प्रतिष्ठाह्वानमेव च । स्नपनं पूजनञ्चैव विसर्जनमतः परम् ॥ हरो महेश्वरश्चैव शूलपाणिः पिनाकधृक् । पशुपतिः शिवश्चैव महादेव इति क्रमात्" ॥ अत्र पूर्वोक्त सप्तकर्माणि परवचनोक्त सप्तनामभिः क्रियानुरूपविभक्तिमद्भिर्यथायथं कार्य्याणि । अदृष्टार्थयोरर्थक्रमासम्भवेन पाठक्रमादेवावाहनात् प्राक् प्रतिष्ठा श्राद्धे कुशासनदानवत् । तत्रानुष्ठानं हराय नम इति मृदाहरणं महेश्वराय नम इति संघटनं शूलपाणे इह सुप्रतिष्ठितो भवेति प्रतिष्ठा । ध्यायेन्नित्यं महेशमित्यादिना ध्यात्वा पिनाकधृक् इहा गच्छेत्यावाहनं पशुपतये नम इति स्नपनम् एतत्पाद्यं नमः शिवाय नमः एवमर्घ्यादिना पूजयेत् । विसर्जनात् पूर्वं भविष्यपुराणोक्तं स्वभावसिद्ध प्राच्यैशान्यादिदिक्षु वामावर्त्तेन पूजनम् । यथा सर्वाय क्षितिमूर्त्तये नमः भवाय जलमूर्त्तये नमः रुद्राय अग्निमूर्त्तये नमः । उग्राय वायु मूर्त्तये नमः भीमाय आकाशमूर्त्तये नमः पशुपतये यजमान मूर्त्तये नमः महादेवाय सोममूर्त्तये नमः ईशानाय सूर्य्यमूर्त्तये नमः । "मूर्त्तयोऽष्टौ शिवस्यैताः पूर्वादिक्रमयोगतः । आग्नेय्यन्ताः प्रपूज्यास्ता वेद्यां लिङ्गे शिवं यजेत्" ॥ ततो महादेव क्षमस्व इति संहारमुद्रया विसर्जयेत् । नन्दिपुराणे । "गोभूहिरण्यवस्त्रादिबलि पुष्पनिवेदने । श्रेयो नमः शिवायेति मन्त्रः सर्वार्थसाधकः । सर्वमन्त्राधिकश्चायमोङ्काराद्यः षडक्षरः । तस्य जापी तत्कर्म-

तस्तद्गतमानसः । निष्कामः पुरुषो राजन् ! स तद्रपदमश्नुते" ॥ भविष्ये पञ्चाक्षरमुपक्रम्य । "अपवित्रः पवित्रोवा सर्वावस्थां गतोऽपि वा । महापातकयुक्तो वा मन्त्रस्यास्य जपे यथा । अधिकारी भवेत् सर्वं इति देवोऽब्रवीच्छिवः" ॥ इति तथेत्यर्थः । पूर्वोक्त यथा पदानुरोधात् तेन यथाधिकारी भवेत् तथा अब्रवीदित्यर्थः । तथा "सर्वेषामेव पात्राणां परं पात्रं महेश्वरः । पतन्तं त्रायते यस्मात्तीव नरकार्णवात् । शिवमुद्दिश्य यद्दत्तं सर्वकारणकारणम् । तदनन्त फलं दातुर्भवतीह किमद्भुतम् । दत्त्वा नैवेद्य वस्त्रादि नाददीत कदाचन । त्यक्तव्यं शिव मुद्दिश्य तदा दानेन तत्फलम्" ॥ आदाने ग्रहणे । शिवधर्मे । "तस्मात् पुष्पैः फलैः पत्रैस्तोयैरपि च यत् फलम् । तदनन्तफलं ज्ञेयं भक्तिरेवात्र कारणम्" ॥ भविष्ये "लिङ्गानुलेपनं कार्य्यं दिव्यगन्धैः सुगन्धिभिः । वर्षकोटिशतं दिव्यं शिवलोके महीयते" ॥ शिवधर्मे । "तस्मात् पुष्प प्रदानेन लिङ्गेषु प्रतिमासु च । अशीतिवर्षकोटीनां दुर्गतिं न नरो व्रजेत्" ॥ स्कान्दे । "शुष्काण्यपि च पत्राणि श्रीवृक्षस्य सदैवहि" । दातव्यानीति शेषः । भविष्ये । "धुस्तूरकैश्च यो लिङ्गं सकृत् पूजयते नरः । स गो लक्षफलं प्राप्य शिवलोके महीयते । विल्वपत्रैरखण्डैश्च योलिङ्गं पूजयेत् सकृत् । सर्वपापैर्विनिर्मुक्तः शिवलोके महीयते" ॥ तथा "सर्वकाम प्रदं विल्वं दारिद्र्यस्य प्रणाशनम् । विल्वपत्रात् परं नास्ति येन तुष्यति शङ्करः" । तथा "केशकीटापविद्धानि निशिपर्य्युषितानि च । स्वयं पतित पुष्पाणित्यजेदुपहतान्यपि" ॥ तथा । "देवदारुसमेतञ्च सर्जश्रीवासकुन्दुरम् । श्रीफलं चाज्यमिश्रन्तु दत्त्वाप्नोति परां गतिम्" । सर्जः शालरसः श्रीवासः सरलद्रवः । कुन्दुरुः शैलेयम् । "एभ्यः सौगन्धिकं धूपं षट् सहस्रगुणोत्तरम् । अगुरुं शतसाहस्रं द्विगुणञ्चासितागुरुम् । गुग्गुलं घृतसंयुक्तं साक्षात् गृह्णाति शङ्करः" ॥ तथा "तैलेनापि हि योदद्याद्घृताभावेन मानवः । तेन दीपप्रदानेन शिववद्राजते भुवि" ॥ नन्दिकेश्वरे । "अथ भक्त्या शिवं पूज्य नैवेद्यमुपकल्पयेत् । यद्-

यदेवात्मनः श्रेयस्तत्तदीशाय कल्पयेत्। शालितण्डुल प्रस्थञ्च कुर्य्यादन्नं सुसंस्कृतम्। शिवाय तं चरुं दद्याच्चतुर्दश्यां विशेषतः"। प्रस्थमानं प्रागुक्तम्। शिवसर्वस्वे स्कान्दम्। "एकमाम्रफलं पक्कं यः शम्भोर्विनिवेदयेत्। वर्षाणामयुतं भोगैः क्रीड़ते स शिवेपुरे। एकं मोचाफलं पक्कं यः शिवाय निवेदयेत्। वर्षलक्षं तथा भोगैः शिवलोके महीयते"॥ शिवपुराणे। "नैवेद्यं घृतसंयुक्तं मधुपर्कं निवेदयेत्। अग्निष्टोमस्य यज्ञस्य फलमाप्नोति मानवः"॥ मोचाफल कदलीफलम्। शिवसर्वस्वे स्कान्दम् "परिपक्कं सुसंमृष्टाज्यसिक्तं सुसंस्कृतम्। शिवाय मांसं दत्त्वातु शृणु यत् फलमाप्नुयात्। अशेषफलदानेन यत्फलं परिकीर्त्तितम्। तत्फलं प्राप्नुयान्नित्यं सर्वं मांसनिवेदनात्"॥ शिवधर्मे। "लिङ्गवेदी भवेद्देवीलिङ्गं साक्षात् महेश्वरः। तयोः संपूजनात् स्यातां देवीदेवश्च पूजितौ"॥ देवीपुराणे। "सव्यं व्रजेत्ततोऽसव्यं प्रणालं नैव लङ्घयेत्। एकीभूतमना रुद्रे यः कुर्य्यात् त्रिः प्रदक्षिणम्॥ छिन्नस्तेन भवग्रन्थिर्न तस्य पुनरुद्भवः"। भविष्ये। "जानुभ्यां चैव पाणिभ्यां शिरसा च विचक्षणः। कृत्वा प्रणामं देवेशे सर्वान् कामानवाप्नुयात्"॥ लिङ्गपुराणे। "गन्धपुष्प नमस्कारैः मुखवाद्यैश्च सर्वशः। यो मामर्च्चयते तत्र तदा तुष्याम्यहं सदा"॥ महाभारते। "सर्वलक्षणहीनोऽपि युक्तो वा सर्वपातकैः। सर्वं तरति तत् पापं भावयन् शिवमात्मना"॥ राघवभट्टधृतम्। "अधोमुखे वामहस्ते ऊर्द्धास्यं दक्षहस्तकम्। क्षिप्ताङ्गुलीरङ्गुलीभिः संगृह्य परिवर्त्तयेत्। प्रोक्ता संहार मुद्रेय मर्पणे तु प्रशस्यते"॥ अर्पणे आत्मनीति शेषः। स्कान्दे "निर्माल्यं यो हि मद्भक्त्या शिरसा धारयिष्यति। अशुचिर्भिन्नमर्य्यादो नरः पापसमन्वितः॥ नरके पच्यते घोरे तिर्य्यग्योनौ च जायते। ब्रह्महापि शुचिर्भूत्वा निर्माल्यं यस्तु धारयेत्॥ तस्य पापं महच्छीघ्रं नाशयिष्ये महाव्रते"। शुचिः स्नानादिनेति शेषः। एवञ्च "स्पृष्ट्वा रुद्रस्य निर्माल्यं सवासा आप्लुतः शुचिः"। इति कालिकापुराणीयमशुचिविषयम्। अनुपनीतविषय इति श्रीदत्तः। वस्त्रञ्च गृह्यपरिशिष्टम्। "अग्राह्यं शिवनैवेद्यं

पत्रं पुष्पं फलं जलम्॥ शालग्राम शिलास्पर्शात् सर्वं याति पवित्रताम्। भोजदेवधृतम्। "चैत्रे कृष्ण चतुर्दश्यामङ्गारकदिनं भवेत्। पिशाचत्वं पुनर्न स्याद्गङ्गायां स्नानभोजनात्"॥ कालिकापुराणम्। "यो यद्देवार्च्चनरतः स तन्नैवेद्यभक्षकः। समानं त्वन्यनैवेद्यं भक्षयेदन्यदेवतः। केवलं सौरशैवेतु वैष्णवो नैव भक्षयेत्"॥ राजमार्त्तण्डे। "धवलितकलसे न्यस्तरक्तपताकासुहीभवने। चैत्रासितभूतदिने पापरुजं दूरतो धत्ते"॥ चैत्रे कृष्ण चतुर्दश्यां कठिन्यादिभिः शुक्लीकृते घटे रक्तपताका युक्तां स्नुहीशाखां विधाय गृहोपरि स्थापयेत्।

अथ मदनचतुर्दशी। स्कान्दपुराण सौरागमयोः। "मधुमासे तु संप्राप्ते शुक्लपक्षे चतुर्दशी। प्रोक्ता मदनभञ्जीति सर्व्वदा तु महोत्सवे॥ पूजयिष्यन्ति ये मर्त्त्यास्तदङ्गभवपल्लवैः। ते यान्ति परमं स्थानं मदनस्य प्रभावतः॥ चैत्रे मासि चतुर्दश्यां मदनस्य महोत्सवः। जुगुप्सितोक्तिभिस्तत्र गीतवाद्यादिभिर्नृणाम्॥ भगवांस्तुष्यते कामः पुत्रपौत्रविवर्द्धनः। न मानयन्ति ये पर्वमादनं मानवाधमाः तेषां पुण्यफलं दत्तं मया ते चैत्रमासिकम्"॥ देवलः "चैत्र शुक्लचतुर्दश्यां यः स्नायात् शिवसन्निधौ। पिशाचत्वं न तस्य स्याद्गङ्गायान्तु विशेषतः॥"

अथ पौर्णमासी। सा चतुर्दशीयुता ग्राह्या युग्मात्। यमः। "पश्चान्ते स्रोतसि स्नायात् तेन नायाति मत्पुरम्"॥ विष्णुः। "दृश्यते सहितौ यस्यां दिवि चन्द्रबृहस्पती। पौर्णमासीतु महती ज्ञेया संवत्सरे तु सा। तस्यां स्नानोपवासाभ्यामक्षयं परिकीर्त्तितम्"॥ सहितौ माससंज्ञानिमित्तकृत्तिकादिनक्षत्रगतौ महाकार्त्तिक्यादिदर्शनात्। तथा च राजमार्त्तण्डः। "माससंज्ञे यदा ऋक्षे चन्द्रः संपूर्णमण्डलः। गुरुणा याति संयोगं सा तिथिर्महती स्मृता"॥ स्कान्दमात्स्ययोः। "पौर्णमासीषु चैतासु माससंज्ञासहितासु च। एतासु स्नानदानाभ्यां फलं दशगुणं स्मृतम्"॥ वैशाखीमुपक्रम्य यमः। "गौरान् वा यदि वा कृष्णान् तिलान् क्षौद्रेण संयुतान्। प्रीयतां धर्मराजेति पितॄन् देवांश्च तर्पयेत्॥ यावज्जीवकृतं पापं तत्क्षणा-

रेव नश्यति। अब्दायुतञ्च तिष्ठेत्तु स्वर्गलोके न संशयः" ॥ ब्रह्मपुराणे। "महाज्यैष्ठ्यान्तु यः पश्येत् पुरुषः पुरुषोत्तमम्। विष्णुलोकमवाप्नोति मोत्त गङ्गाम्बुमज्जनात्॥ ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा। पूर्णिमा गुरुवारेण महाज्यैष्ठी प्रकीर्त्तिता" ॥ ऐन्द्रे ज्येष्ठायाम्। प्राजापत्ये रोहिण्याम्। विना गुरुवारेणापि। "ऐन्द्रे गुरुः शशी चैव प्रजापत्ये रविस्तथा। पूर्णिमाज्यैष्ठमासस्य महाज्यैष्ठी प्रकीर्त्तिता" ॥ अनुराधास्थगुरावपि। "ऐन्द्रे मैत्रे यदा जीवस्तत्पश्च दशके रविः। पूर्णिमा शक्रचन्द्रेण महाज्यैष्ठी प्रकीर्त्तिता" ॥ अनुराधास्थचन्द्रेऽपि व्याघ्रभूतिः। "ऐन्द्रर्क्षे त्वथवा मैत्रे गुरुचन्द्रौ यदास्थितौ। पूर्णिमा ज्यैष्ठमासस्य महाज्यैष्ठी प्रकीर्त्तिता" ॥ राजमार्त्तण्डः। "ज्यैष्ठे संवत्सरे चैव ज्यैष्ठमासस्य पूर्णिमा। ज्येष्ठाभेन समायुक्ता महाज्यैष्ठी प्रकीर्त्तिता" ॥ ज्यैष्ठसंवत्सरश्च "ज्येष्ठामूलोपगे जीवे वर्षं स्याच्छक्रदैवतम्" ॥ इति विष्णुधर्मोत्तरोक्तो ग्राह्यः। न तु संवत्सरादि पञ्चकान्तर्गत वर्षविशेषः ज्यैष्ठ इति वर्षविशेषणस्य वैयर्थ्यापत्तेः। संवत्सरे यदि स्यादितिपाठः काल्पनिकः प्रपञ्चस्तु मलमासतत्त्वेऽनुसन्धेयः। विष्णुधर्मोत्तरे ब्रह्मपुराणम्। "मासि ज्यैष्ठे तु संप्राप्ते नक्षत्रे शक्रदैवते। पौर्णमास्यां तदा स्नानं सर्वकामं हरेर्द्विजाः॥ तस्मिन् काले तु ये मर्त्याः पश्यन्ति पुरुषोत्तमम्। वलभद्रं सुभद्राञ्च ते यान्ति पदमव्ययम्" ॥ स्कन्दपुराणम्। "ज्यैष्ठ्यामहञ्चावतीर्णस्तत् पुण्यं जन्मवासरम्। तस्यां मे स्नपनं कुर्य्यात् महास्नानविधानतः। ज्यैष्ठ्यां प्रातस्तने काले ब्रह्मणा सहितञ्च माम्। रामं सुभद्रां संस्नाप्य मम लोकमवाप्नुयात्" ॥ विष्णुधर्मोत्तरे। "पौर्णमासी तथा माघी श्रावणी च नरोत्तम। प्रोष्ठपद्यामतीयायां तथा कृष्णत्रयोदशी। एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः" ॥ अत्र पूर्वदिने सङ्गवलाभे रोहिणीलाभे वा परदिने सङ्गवालाभे पूर्वदिने श्राद्धम्। "शुक्लपक्षस्य पूर्वाह्णे श्राद्धं कुर्य्यात् विचक्षणः। कृष्णपक्षापराह्णे तु रौहिणन्तु न लङ्घयेत्" इति। वायुपुराणात् उभयदिने तु तल्लाभे तु परदिने।

शुक्लपक्षे तिथिर्ग्राह्येति वचनात् एवमक्षय तृतीयादावपि। आषाढ़कार्त्तिकमाघपौर्णमासीषु दानमावश्यकम्। तथाचायोध्याकाण्डे भरतप्रपथे। "आषाढ़ी कार्त्तिकी माघी तिथयः पुण्यसम्भवाः। अप्रदानवतोयान्तु यस्यार्य्योनुमतो गतः" ॥ अप्रदानवतो दानरहितस्य एतास्तिथयोयान्तु आर्य्यः! श्रीरामचन्द्रोगतोयस्यानुगत इत्यर्थः। उत्तरवाक्ये यच्छब्दात् न तच्छब्दापेक्षा।

अथ कोजागरकृत्यम्। कल्पतरौ ब्रह्मपुराणम् "आश्वयुज्यां पौर्णमास्यां निकुम्भो वालुकार्णवात्। आयाति सेनया सार्द्धं कृत्वा युद्धं सुदारुणम्॥ तस्मात्तत्र नरैर्मार्गाः स्वगृहस्य समीपतः। शोधितव्याः प्रयत्नेन भूषितव्याश्च मण्डनैः॥ पुष्पाद्यं फलमूलान्नसर्षपप्रकरैस्तथा। वेश्मानि भूषितव्यानि नानावर्णैर्विशेषतः॥ सुस्नातैरनुलिप्तैश्च नरैर्भाव्यं सवान्धवैः। दिवा तत्र न भोक्तव्यं मनुष्यैश्च विवेकिभिः॥ स्त्रीबालमूर्खवृद्धैश्च भोक्तव्यं पूजितैः सुरैः" ॥ पूजितैः सुरैरिति विशेषणे तृतीया तेन पूजितसुरैरित्यर्थः "पूज्याश्च सफलैः पुष्पैस्तथा द्वारोर्द्धभित्तयः। द्वारोपान्ते सुदीप्तस्तु संपूज्यो हव्यवाहनः॥ यवाक्षतघृतोपेतैस्तण्डुलैश्च सुतर्पितः। संपूजितव्यः पूर्णेन्दुः पयसा पायसेन च॥ स्कन्दः सभार्य्यस्कन्दश्च तथा नन्दीश्वरो मुनिः। गोमद्भिः सुरभिः पूज्या छागवद्भिर्हुताशनः॥ उरभ्रवद्भिर्वरुणो गजवद्भिर्विनायकः। पूज्यः साश्वैश्च रेवन्तो यथा विभवविस्तरैः॥ ततः पूज्योनिकुम्भोऽपि समांसैस्तिलतण्डुलैः। सुगन्धिभिर्घृतोपेतैः कृषराद्यैश्च भूरिभिः॥ ब्राह्मणान् भोजयित्वा तु भोक्तव्यं मांसवर्जितम्। वह्निपार्श्वगतैर्नेया दृष्ट्वा क्रीड़ाः पृथग्विधाः" ॥ ततश्च द्वारोर्द्धभित्ति हव्यवाहन पूर्णेन्दु सभार्य्यरुद्र स्कन्द नन्दीश्वरमुनयः सर्वैः पूज्याः। द्वारोर्द्धभित्ति शब्दोऽत्र बहुवचनान्तः नन्दीश्वरो मुनिरेकः। गोमता सुरभिः छागवता हुताशनः मेषवता वरुणः हस्तिमता विनायकः। अश्ववता रेवन्तः सर्वैरेव निकुम्भः पूज्यः महार्णवे लिङ्गपुराणम्। "आश्विने पौर्णमास्यान्तु चरेज्जागरणं निशि। कौमुदी सा समाख्याता कार्य्या लोक विभूतये॥ कौमुद्यां पूजयेल्ल-

क्षीमिन्द्रमैरावते स्थितम्। सुगन्धिनिशि सद्वेशोऽक्षैर्जागरणं चरेत्"॥ तथा "निशीथे वरदा लक्ष्मीः कोजागर्त्तीति भाषिणी। तस्मै वित्तं प्रयच्छामि अक्षैः क्रीडां करोति यः। नारिकेलैश्चिपिटकैः पितॄन् देवान् समर्चयेत्। बन्धूंश्च प्रीणयेत्तेन स्वयं तदशनो भवेत्"॥ अत्र निशीति निशीथ इति चाभिधानात् रात्रिकृत्यमिदम्।

ततश्च "प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रते सदा। प्रदोषोऽस्तमयादूर्द्धं घटिकाद्वयमिष्यते"। इति वत्सवचनात्। यद्दिने प्रदोषनिशीथोभयव्यापिनी पौर्णमासी तद्दिने कोजागरकृत्यम्। उभयव्याप्त्यनुरोधात्। यदा तु पूर्वदिने निशीथव्याप्तिः परदिने प्रदोषव्याप्तिस्तदा परेद्युस्तत्कृत्यम्। प्रधान पूजाकालव्याप्त्यनुरोधात्। यदा तु पूर्वदिने निशीथव्याप्तिः परदिने न प्रदोषव्याप्तिस्तदा सुतरां पूर्वेद्युस्तत्कृत्यम्। "अहःसु तिथयः पुण्याः कर्मानुष्ठानतो दिवा। नक्तादिव्रतयोगे तु रात्रियोगो विशिष्यते"॥ इति वचनात्। विवर्जयेदित्यनुवृत्तौ मत्स्यसूक्ते। "महालक्ष्म्यास्तु तुलसीं भिण्टिकां काञ्चनन्तथा" लक्ष्मीध्यानमादित्यपुराणे। "पाशाक्ष मालिकाम्भोजसृणिभिर्याम्यसौम्ययोः। पद्मासनस्थां ध्यायेच्च श्रियं त्रैलोक्यमातरम्॥ गौरवर्णां सुरूपाञ्च सर्वालङ्कारभूषिताम्। रौक्मपद्मव्यग्रकरां वरदां दक्षिणेन तु"॥ पाशेति दक्षिणे पाशाक्ष मालाभ्यां वामे पद्माङ्कुशाभ्यां भूषितां वामकरे हेमपद्मं दक्षिणकरे वरं दधतीमित्यर्थः। ततः पाद्यादिभिः संपूज्य "नमस्ते सर्वदेवानां वरदासि हरिप्रिये। या गतिस्त्वत् प्रपन्नानां सा मे भूयात्त्वदर्चनात्॥ विश्वरूपस्य भार्य्यासि पद्मे पद्मालये शुभे। सर्वतः पाहि मां देवि! महालक्ष्मि नमोऽस्तु ते"॥ इत्यनेन नत्वा पूजयेत्। इन्द्रध्यानमादित्यपुराणे। "चतुर्दन्त गजारूढो वज्रपाणिः पुरन्दरः। शचीपतिश्च ध्यातव्यो नानाभरणभूषितः"॥ पाद्यादिभिः संपूज्य। "विचित्रैरावतस्थाय भास्वत् कुलिश पाणये। पौलोम्यालिङ्गिताङ्गाय सहस्राक्षाय ते नमः"। इत्यनेन पुष्पाञ्जलित्रयं दत्त्वा प्रणमेत्। ततः कुबेरः पूज्य इति रुद्रधरः। तं पाद्यादिभिः संपूज्य "धन-

टाय नमस्तुभ्यं निधिपद्माधिपाय च । भवन्तु त्वत् प्रसादान्मे धनधान्यादिसम्पदः" ॥ इति पुष्पाञ्जलित्रयं दत्त्वा प्रणमेत् । अत्र सर्वेषां प्रदोषे पूजेति रुद्रधरः । न च निकुम्भपर्य्यन्तानां पूर्वाह्न एव पूजनं निरपवादमिति वाच्यं दिवा तत्र न भोक्तव्यम् इत्युपक्रम्य पूज्याश्च सफलैः पत्रैरित्यादिना विशिष्य पूजामभिधाय भोक्तव्यमित्यभिधानाद्रात्रावेव पूजाभोजनेऽवगम्येते । अतएवाशक्तानामेव भोक्तव्यं पूजितैः सुरैः इत्यभिधानेन विशिष्य दिवापूजनभोजने विहिते । योगिनीतन्त्रे । "विरिञ्चेस्तु गृहे ढक्कां घण्टां लक्ष्मीगृहे त्यजेत् । सर्ववाद्यमयीं घण्टां वाद्याभावे प्रवादयेत्" ॥ लक्ष्मीवाक्यं "प्रकीर्णभाण्डामनवेक्ष्यकारिणीं सदा च भर्त्तुः प्रतिकूलवादिनीम् । परस्य वेश्माभिरता मलज्जामेवं विधां स्त्रीं परिवर्ज्जयामि" ॥ मार्कण्डेयः । "शिरः सपुष्पं चरणौ सुपूजितौ वराङ्गनासेवनमल्पभोजनम् । अनग्नशायित्वमपर्वमैथुनं चिरप्रनष्टां श्रियमानयन्ति षट् ॥ मानुषास्थि गृहे यत्र अहोरात्रन्तु तिष्ठति । तत्रालक्ष्मि तवावासस्तथान्येषान्तु रक्षसाम् । सूर्पदात्रादिकं यत्र पदाकर्षं तथासनम्" ॥ हरिवंशे । "यत्र ह्रीः श्रीः स्थिता तत्र यत्र श्रीस्तत्र सन्नतिः । सन्नतिर्ह्रीस्तथा श्रीश्च नित्यं कृष्णे महात्मनि" ॥ मत्स्यपुराणम् । "स्थिरोपायो हि पुरुषः स्थिरश्रीरेव जायते । रक्षितुं नैव शक्नोति चपलश्चपलां श्रियम् ॥ अवश्यमुद्योगवतां श्रीरपारा भवेत् सदा । ब्रह्मप्रोत्साहिता देवा ममन्थुः पुनरम्बुधिम्" ॥ कृत्यकौमुद्याम् । "नारिकेलोदकं पीत्वा अक्षैर्जागरणं निशि । तस्मै वित्तं प्रयच्छामि को जागर्त्ति महीतले" ॥

अथ चतुरङ्गम् । अक्षक्रीड़ायां व्यासयुधिष्ठिरसंवादः प्रचरति । युधिष्ठिर उवाच । "अष्टकोष्ठगाक्ष्य या क्रीड़ा तां मे ब्रूहि तपोधन । प्रकर्षेणैव मे नाथ चतूराजी यथा भवेत्" ॥ व्यास उवाच । "अष्टौ कोष्ठान् समालिख्य प्रदक्षिण क्रमेण तु । अरुणं पूर्वतः कृत्वा दक्षिणे हरितं बलम् ॥ पार्थ ! पश्चिमतः पीतमुत्तरे श्यामलं बलम् । राज्ञो वामे गजं कुर्य्यात् तस्मादश्वं ततस्तरिम् ॥ कुर्य्यात् कौन्तेय पुरतो युद्धे पत्तिचतु-

ष्टयम् । कोणे नौकाद्वितीयेऽश्व हतीये च गजोवसेत् ॥ तुरीये च वसेद्राजा वटिकाः पुरतः स्थिताः । पश्चकेन वटौराजा चतुष्कणैव कुञ्जरः ॥ त्रिकेणैव चलत्यश्वः पार्थ नौकाद्दयेन तु । कोष्ठमेकं विलङ्घ्याथ सर्वतो याति भूपतिः ॥ अग्र एव वटौयाति बलं हन्त्यग्रकोणगम् । यथेष्टं कुञ्जरो याति चतुर्दिक्षु महीपते । तिर्य्यक्तुरङ्गमो याति लङ्घयित्वा त्रिकोष्ठकम् ॥ कोणकोष्ठद्वयं लङ्घ्य व्रजेन्नौका युधिष्ठिर । सिंहासनं चतूराजो नृपाक्रष्टश्च षट्पदम् ॥ काककाष्ठं व्रजन्नौका नौकाक्रष्टप्रकारकम् । घाताघाते वटौनौका बलं हन्ति युधिष्ठिर ॥ राजा गजोहयश्चापि त्यक्काघातं निहन्ति च । अत्यन्तं स्वबलं रक्षेत् स्वराज बलमुत्तमम् ॥ अल्पस्य रक्षया पार्थ हन्तव्यं बलमुत्तमम्" ॥ नौकायाश्चत्वारि पदानि अश्वस्याष्टौ पदानि इत्याधिक्यमश्वस्य । "मतङ्गजस्य गर्वेण राजा क्रीडति निर्भरम् । तस्मात् सर्वबलं दत्त्वा रक्ष कौन्तेय कुञ्जरम् ॥ सिंहासनं चतूराजो यदवस्थानतो भवेत् । सर्वसैन्यैर्गजैर्वापि रक्षितव्यो महीपतिः ॥ अन्यद्राजपदं राजा यदा यातो युधिष्ठिर । तदा सिंहासनं तस्य भवति नृपसत्तम ॥ राजा च नृपतिं हत्वा कुर्य्यात् सिंहासनं यदा । द्विगुणं वाहयेत् पणमन्यथैकगुणं भवेत्" ॥ द्विगुणं पणं दातव्यत्वेन प्रापयेत् । "मित्र सिंहासनं पार्थ यदारोहति भूपतिः । तदा सिंहासनं नाम सर्वं नयति तद्बलम् ॥ यदा सिंहासनं कर्त्तुं राजा षष्ठपदाश्रितः । तदाघातेऽपि हन्तव्यो बलेनापि सुरक्षितः ॥ विद्यमाने नृपे यत्र स्वकीये च नृपत्रयम् । प्राप्नोति तु यदा तस्य चतूराजो तदा भवेत् ॥ नृपेणैव नृपं हत्वा चतूराजो यदा भवेत् । द्विगुणं वाहयेत् पणमन्यथैकगुणं भवेत् ॥ स्वपदस्थं यदा राजा राजानं हन्ति पार्थिव । चतुरङ्गे तदा भूप वाहयेच्च चतुर्गुणम् ॥ यदा सिंहासने काले चतूराजो समुत्थिता । चतूराजो भवत्येव न तु सिंहासनं नृप" ॥ अत्रेदं वीजं उभयथा अग्रेऽपि परसिंहासनाधिकारात् पर राजवधे शौर्य्याधिक्यनिष्कण्टकत्वदर्शनात् क्रीडायामपि तथा कल्प्यते । "राजद्वयं यदा हस्ते आत्मनो राज्ञि संस्थिते । परेण संह्रतश्चैको बलेनाप्य-

पश्चार्य्यते ॥ राजद्वयं यदा हस्ते न स्यादन्यकरे परः । तदा राजा हि राजानं घातेऽपि तं हनिष्यति ॥ नृपाकृष्टो यदा राजा गमिष्यति युधिष्ठिर । घाताघातेऽपि हन्तव्यो राजा तत्र न रक्षकः ॥ कोणं राजपदं त्यक्त्वा वटिकान्तं यदा व्रजेत् । वटौ च षट्पदं नाम तदा कोष्ठवलं नयेत् ॥ यदा तस्य भवेत् पार्थ चतूराजौ च षट्पदम् । तदापि च चतूराजौ भवत्येव न संशयः ॥ पदातिः षट्पदे विद्धे राज्ञा वा हस्तिना तथा । षट्पदं न भवेत्तस्य अवश्यं शृणु पार्थिव ॥ सप्तमे कोष्ठके यत् स्याद्वटिका दशमेन वै । तदान्योन्यञ्च हन्तव्यं सुखाय दुर्बलं बलम् ॥ त्रिवटीकस्य कौन्तेय पुरुषस्य कदाचन । षट्पदं न भवत्येव इति गोतमभाषितम् । नौकैका वटिका यस्य विद्यते खेलने यदि । गाढ़ावटीति विख्याता पदं तस्य न दुष्यति" ॥ पदं राजपदं कोणपदञ्च । "हस्ते रङ्गे बलं नास्ति काककाष्ठं तदा भवेत् । वदन्ति राक्षसाः सर्वे तस्य नष्टो जयाजयौ ॥ प्रोत्थिते पञ्चमे राज्ञि स्मृते वव्याञ्च षट्पदे । अशौचं स्यात्तदा हन्ति चलित्वा चालितं बलम् ॥ द्विराहृत्यागते तस्मात् हन्यात् परबलं जयी । पार्थ सिंहासने काले काककाष्ठं यदा भवेत् ॥ सिंहासनं भवत्येव काककाष्ठं न भण्यते । उपरिष्टञ्च यत् स्थानं तस्योपरि चतुष्टये ॥ नौकाचतुष्टयं यत्र क्रियते तस्य नौकया । नौकाचतुष्टयं तस्य वृहन्नौकेति भण्यते । न कुर्य्यादेकदा राजन् गजस्याभिमुखं गजम् ॥ यदि कुर्वीत धर्म्मज्ञः पापग्रस्तो भविष्यति । स्थानाभावे यदा पार्थ हस्तिसंमुखम् ॥ करिष्यति तदा राजन् इति गोतमभाषितम् । प्राप्ते गजद्वये राजन् हन्तव्यो वामतो गजः" ॥ इति चतुरङ्गक्रीड़नम् ।

वैष्णवामृते स्कन्दपुराणम् । "पौष्यान्तु समतीतायां यावत् भवति पूर्णिमा । माघमासस्य देवेन्द्र पूजा विष्णोर्विधीयते" ॥ इति पौर्णमास्यन्तमाघमुपक्रम्य "पितॄणां देवतानाञ्च मूलकं नैव दापयेत् । दत्त्वा नरकमाप्नोति भुञ्जीत ब्राह्मणो यदि । ब्राह्मणो मूलकं भुक्त्वा चरेच्चान्द्रायणं व्रतम् । अन्यथा नरकं याति क्षत्रविट्शूद्र एव च । वरं भुक्तमभक्ष्यन्तु पिबेद्दा-

गर्हितञ्च यत् । वर्ज्जनीयं प्रयत्नेन मूलकं मदिरा-सनम्" ॥

फाल्गुनपौर्णमास्यां दोलयात्रामाह कृत्यचिन्तामणौ ब्रह्मपुराणम् । "नरो दोलागतं दृष्ट्वा गोविन्दं पुरुषोत्तमम् । फाल्गुन्यां संयतो भूत्वा गोविन्दस्य पुरं व्रजेत्" ॥ स्कन्द-पुराणीय पुरुषोत्तममाहात्म्ये ऊनत्रिंशाध्याये । "फाल्गुन्यां क्रीड़नं कुर्य्याद्दोलायां मम भूमिप" ॥ विष्णुपुराणे । "चतु-र्द्दश्यष्टमीचैव अमावस्याथ पूर्णिमा पर्व्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च । स्त्रीतैल मांससम्भोगी पर्व्वस्वेतेषु वै पुमान् । विण्मूत्रभोजनं नाम प्रयाति नरकं मृतः" ॥

अथ रविसंक्रान्तिः । भविष्यमात्स्यज्योतिषेषु । "मृग-कर्कट संक्रान्ती द्वे तूदक् दक्षिणायणे । विषुवती तुलामेषे गोलमध्ये तथापराः" ॥ मृगो मकरः गोलो राशिचक्रम् । "धनुर्म्मिथुनकन्यासु मीने च षडशीतयः । वृष वृश्चिक सिंहेषु कुम्भे विष्णुपदी स्मृता" ॥ देवीपुराणम् । "यावद्विंशकला-भुक्ता तत्पुण्यं चोत्तरायणे । निरंशे भास्करे दृष्टे दिनान्तं दक्षिणायने ॥ अर्द्धरात्रे त्वसंपूर्णे दिवापुण्यमनागतम् । अर्द्ध-रात्रे व्यतीते तु विज्ञेयं चापरेऽहनि ॥ संपूर्णेचार्द्धरात्रे च उद-येस्तऽमयेऽपि वा । मानार्द्धं भास्करे पुण्यमपूर्णे शर्व्वरीदले ॥ संपूर्णे तूभयोर्ज्ञेयमतिरेके परेऽहनि । षड्शीतिमुखेऽतीते वृत्ते च विषुवद्द्वये ॥ भविष्यत्ययने पुण्यमतीते चोत्तरायणे । आदौ पुण्यं विजानीयात् यद्यभिन्ना तिथिर्भवेत्" ॥ विंश-कला विंशतितमी कला संक्रान्तिक्षणादूर्द्ध्वं यावत् भवति तावत् पुण्यम् । निरंशेऽशकशून्ये संक्रान्तिकाले हि भास्क-रोऽशकरहितो भवति तस्मिन् दृष्टे दिवेति यावत् दिनञ्च दिनकरकरसंस्कृता स्त्रिंशन्नाड़िका इति ज्योतिर्विदः । तदन्तं तत् समाप्तिं यावत् तावत् पुण्यम् । तथा च वृद्धवशिष्ठः "त्रिंशत् कर्कटे नाड्योमकरे विंशतिः स्मृताः"॥ नाड़ी दण्डः । "उत्पलाद्दिपलं षष्ट्या विपलात्तु पलं नयेत् । पलात् षष्ट्या नये-न्नाड़ीं तत् षष्ट्यातु रवेर्द्दिनम्"॥ इति सिद्धान्तसन्दर्भात् । ततश्च देवीपुराण वृद्धवशिष्ठयोरेकवाक्यतया कलानाड्योः पर्य्यायता ।

रात्रिसंक्रमणेत्याह अर्द्धरात्रे त्विति अर्द्धपूर्णे कलान्यूनार्द्ध-रात्रे। "कलान्यूनार्द्धरात्रे तु यदि संक्रमणं भवेत्। तदह: पुण्यमिच्छन्ति गार्ग्य गालवगौतमाः" ॥ इति कृत्यचिन्तामणि वर्षकृत्यधृतगर्गवचनात्। कालकौमुद्याञ्च। गालवेत्यत्र हारीत इति पाठः। ततश्च कलान्यूनार्द्धरात्राभ्यन्तरे द्वादशस्वेव संक्रा-न्तिषु अनागतं नागतं संक्रमणेन यत्र दिवा तदेव पुण्यं पुण्य-जनकं तत्तु पूर्वदिनं तदेव संक्रान्तेरनागतत्वसम्भवात् तेन संक्रमणकालादर्वागेव दिवा परार्द्धे स्नानादिकं कर्त्तव्य-मित्यर्थः। अर्द्धरात्रे व्यतीते कलाधिकार्द्धरात्रे व्यतीते। पूर्णेऽर्द्धरात्रे रात्रिमध्यकालयोः। कलान्यूनार्द्धरात्रे त्विति वचनानन्तरं भुजवलभीमे "अर्द्धरात्रे कलाधिक्ये यदा संक्र-मते रविः। तदोत्तरदिनं ग्राह्यं स्नानदानजपादिषु। अर्द्ध-रात्रे तु संपूर्णे यदा संक्रमते रविः। प्राहुर्दिनद्वयं पुण्यं त्यक्त्वा मकरकर्कटौ" इति वचनाभ्यां तथा प्रतीतिः। कालविवेके कालकौमुद्याञ्च शातातपजाबालौ "पूर्णे चेदर्द्धरात्रे तु रविसंक्र-मणं भवेत्। प्राहुर्दिनद्वयं पुण्यं त्यक्त्वा मकरकर्कटौ" ॥ एतयो-र्व्यवस्थामाह कालमाधवीये भविष्योत्तरम्। "मिथुनात् कर्किसंक्रान्तिर्यदि स्यादंशुमालिनः। प्रदोषे वा निशीथे वा कुर्य्यादहनि पूर्वतः ॥ कार्मुकञ्च परित्यज्य झषं संक्रमते रविः। प्रभाते वार्द्धरात्रे वा स्नानं कुर्य्यात् परेऽहनि" ॥ ततश्च रात्रि-मध्यदण्डद्वयात्मकार्द्धरात्रसंक्रान्तावुदयेऽस्तमयेऽपि वेत्यनेनो-दयोपक्रममस्तमयान्तञ्च मानार्द्धं पुण्यम्। एवञ्चोभयदिने पुण्यकाले पूर्वदिनाकरण एव परदिने "श्वःकार्य्यमद्य कर्त्तव्यं पूर्वाह्णे चापराह्णिकम्। न हि प्रतीक्षते मृत्युः कृतमस्य नवा कृतम्" ॥ इति लिङ्गपुराणात् मोक्षधर्माच्च। तत्रापि दक्षि-णायने पूर्वदिनार्द्धमात्रमिति विशेषः। उत्तरायणे परदिनार्द्ध-मात्रमिति विशेषः। मानार्द्धमिति भास्करे भास्करोपलक्षिते काले दिवेति यावत् तस्मिन् संक्रमणेऽपि मानार्द्धं पुण्यम् एतच्च विषुवषडशीति विषयम्। अयनकालयोः पूर्वमुक्तत्वात् विष्णुपद्याञ्चोभयतः षोडशकलानां पञ्चदशनाड़िकानां वा पुण्यत्वस्य शातातपादिवचनेन वक्ष्यमाणत्वात्। तेन दिवा

संक्रमण एवायनादित्वेन पुण्यकाले विशेषः। रात्रिसंक्रमणे तु अर्द्धरात्रीय मकरकर्कट संक्रमणव्यतिरिक्ते सर्वेषां तुल्यतेति। अपूर्णे शर्वरीदले कलान्यूनार्द्धरात्रे इत्यत्रापि मानार्द्धमित्यनुषज्यते। दिवापुण्यमिति यत्प्रागुक्तं अत्र तदेव मानार्द्धत्वेन विशेषितमित्यपुनरुक्तिः। एवमुदयास्तमये यन्मानार्द्धमुक्तं तत् किमेकदिने दिनयोर्वेति तत्राह संपूर्णेतूभयोरिति उभयोः पूर्वा परदिनयोर्मानार्द्धं पुण्यं तेन पूर्वदिनस्यास्तमयपर्य्यन्तं परदिनस्य उदयमारभ्य मानार्द्धं पुण्यमित्यर्थः। अतिरेके अर्द्धरात्रात् परतः संक्रमणे परेऽहनि मानार्द्धं पुण्यमित्यनुषज्यते। मानार्द्धन्तु प्रहरद्वयम् "अर्द्धरात्रादधस्तस्मिन् मध्याह्नस्योपरिक्रिया। ऊर्द्ध्वं संक्रमणे भानोरुदयात् प्रहरद्वयम्। पूर्णार्द्धरात्रसंक्रान्तौ द्वे दिनार्द्धे तु पुण्यदे"॥ इति संवत्सरप्रदीप गङ्गावाक्यावलीधृत वशिष्ठसौरधर्मवचनैकवाक्यत्वात् "अर्द्धरात्रादधस्तस्मिन् दिनार्द्धस्योपरिक्रिया। ऊर्द्ध्वं संक्रमणे भानोरुदयात् प्रहरद्वयम्"॥ इति भोजराज कृत्यचिन्तामणिधृतैकवाक्यत्वाच्च। अधः पूर्वम् ऊर्द्ध्वं परतः क्रिया स्नानादिका। एवञ्च गर्गवचनस्य तदह्नरिति यामद्वयपरम् अन्यथा मूलभूत श्रुत्यन्तरकल्पनापत्तेः। एवञ्च षड़शीतिमुखेऽतीते इत्यादि दिवा संक्रमणविषयम्। तेन दिवा षड़शीति संक्रमणे भूते भविष्यन्मानार्द्धं पुण्यम् एवं विषुवद्वयेऽपि। दिवोत्तरायणेऽपि भविष्यद्विंशतिदण्डानां पुण्यत्वम् अत्रोत्तरायणस्य पृथगभिधानात् अयन इति पदं दक्षिणायनपरं गोवलीवर्द्दन्यायात् तेन दिवा दक्षिणायने भविष्यति भूतत्रिंशद्दण्डानां पुण्यत्वम् एवञ्च षड़शीत्यादिष्वप्यवकाशमलभमानम् "अर्वाक् षोडश विज्ञेया नाड्यः पश्चाच्च षोड़श कालः पुण्योऽर्कसंक्रान्तेर्विद्वद्भिः परिकीर्त्तितः"॥ इति शातातपीयम्। "अतीतानागतोभोगोनाड्यः पञ्चदश स्मृताः। इति देवीपुराणीयञ्च वचनं दिवा विष्णुपदीविषयम्। अतएव जाबालि बृहद्वशिष्ठौ "पुण्यायां विष्णुपद्याञ्च प्राक् पश्चादपि षोड़श"॥ अर्द्धरात्रे विशेषमाह आदावित्यादि अर्द्धरात्रसंक्रान्तावादौ पूर्वदिन एव मानार्द्धं यद्यभिन्ना संक्रान्ति काले पूर्वदिने च

एकैव तिथिर्भवेत् तेन मध्यरात्रे संक्रमणे यदुभय दिनमात्रं पुण्यमुक्तं तद्भिन्नतिथिविषयम्। अतीते पुनरर्द्धरात्रे पूर्व्वणाक्का तिथ्यभेदेऽपि परस्यैव पूर्व्वार्द्धं पुण्यमिति तात्पर्य्यार्थः। एवञ्च रात्रिसंक्रान्तौ दिन एव पुण्यत्वाभिधानात्। "राहुदर्शनसंक्रान्ति विवाहात्ययवृद्धिषु। स्नानदानादिकं कुर्य्युर्निशि काम्यव्रतेषु च"॥ इति देवलेन दिन संक्रमणस्य रात्रिप्रविष्ट पुण्यकालांशे संक्रान्तिनिमित्तेन स्नानदानादि विधीयते इति। यत्तु "मन्दा मन्दाकिनी ध्वांक्षी घोराचैव महोदरी। राक्षसी मिश्रिता प्रोक्ता संक्रान्तिः सप्तधा नृप। मन्दा ध्रुवेषु विज्ञेया मृद्वी मन्दाकिनी तथा॥ क्षिप्रे ध्वांक्षी विजानीयादुग्रे घोरा प्रकीर्त्तिता। चरैर्महोदरी ज्ञेया क्रूरैः क्रूरैश्च राक्षसी। मिश्रिता चैव विज्ञेया मिश्रितक्षस्य संक्रमे"॥ इत्येत्यैर्द्वादशस्वेव संक्रान्तिषु ध्रुवादि नक्षत्रयोगान्मन्दादिरूपतया सप्तधा भिन्नासु। "त्रिचतुः पञ्चसप्ताष्ट नव द्वादश एव च। क्रमेण घटिकाह्येतास्तत् पुण्यं पारमार्थिकम्"॥ इति देवीपुराण एव त्रिचतुरादिघटिकानां पुण्यत्वमुक्तम् तद्दिवारात्रोस्तत्तत्कालोपदेशादवकाशमलभमानं सन्ध्याद्वयसंक्रान्ति विषयमिति समयप्रकाशः। ध्रुवादिगणस्तु दीपिकायाम् "उग्रः पूर्वं मघान्तका ध्रुवगण स्त्वीण्युत्तराणि स्वभूर्वातादित्यहरित्रयं चरगणः पुष्याश्विहस्तालघुः। चित्रामित्रमृगान्त्यभं मृदुगणस्तीक्ष्णोऽहि रुद्रेन्द्रयुक् मिश्रोऽग्निः स विशाखभः शुभफलाः सर्व्वस्वकृत्ये गणाः"॥ अन्तको भरणी स्वभू रोहिणी वातादित्यहरित्रयं स्वातीपुनर्वसु श्रवणा धनिष्ठा शतभिषा मित्र मृगान्त्यभम् अनुराधा मृगोशिरोरेवत्यः। अहिरुद्रेन्द्रयुक् अश्लेषा आर्द्रा ज्येष्ठा मूलाः अग्निः कृत्तिका। कल्पतरुस्तु क्रमेण यथासंख्येन एता घटिकास्तत् पुण्यं तस्य संक्रमणस्य पुण्यहेतुत्वात् पुण्यं पारमार्थिकं मुख्यं "त्रुटेः सहस्र भागोयः स कालो रविसंक्रमः"॥ इत्युक्तसूक्ष्म संक्रमकालीनानुष्ठानजन्य समपुण्य हेतव इत्याह। त्रुटिस्तु "लघ्वक्षर चतुर्भाग स्त्रुटिरित्यभिधीयते। त्रुटिद्वयं लवः प्रोक्तो निमेषस्तु लवद्वयम्"॥ इति स्मृत्युक्ता एतदेव

मतं युक्तम् अतएव देवलेन "या याः सन्निहिता नाड्य स्ता स्ताः पुण्यतमाः स्मृताः"॥ इत्युक्तम्। एवञ्चैता घटिकाः पुण्यतमाः स्नानादिकन्तु पुण्यमात्रमिति तस्मान्मन्देत्यादि न सन्ध्या-संक्रान्तिविषयकमिति सन्ध्यासक्रान्तिविषयत्वे पारमार्थिक-मित्यनुपपत्तेः पुण्यमित्यनेनैव सिद्धेः। पारमार्थिकमित्यत्र कल्पतरुव्याख्यानवलोकनाद्रविसंक्रम इति पाठकल्पनं कल्पन-मेव समयप्रकाशकृतापि तथा पठितत्वात्। जीमूतवाह-नोऽपि कालविवेके "अह्निसंक्रमणे पुण्यमहः कृत्स्नं प्रकीर्त्ति-तम्। रात्रौ संक्रमणे भानोर्दिनार्द्धं स्नानदानयोः"॥ इति वृहद्वशिष्ठादिवचन पर्य्यालोचनया दिवासंक्रान्तौ दिनमात्रं पुण्यं पुण्यतरास्तु विशेष विहितानाड्य इत्याह। अतएव तद्धृत जावालिवृहस्पतिशातातपवचनमपि संगच्छते। यथा "वर्त्तमाने तुला मेषे नाड्यस्तूभयतोदश:"। कालमाधवीयेऽपि षड्शीत्यभिधाय प्राशस्त्यतारतम्यमुक्तम्। एवञ्च दिवासंक्रान्तौ कृत्स्नं दिनं पुण्यं षडशीतिमुखेऽतीते इति वचनं पुण्यतर-परम्। ननु देवीपुराणे दिवारात्र्योः संक्रमणे विशिष्य काला-भिधानात् सन्ध्यासंक्रान्तेः कः काल इति चेत् "त्रिंशन्मुहूर्त्तं कथित महोरात्रन्तु यन्मया"॥ इति विष्णुपुराणेन सन्ध्ययोः पृथगनुपादानात् दिवारात्रि सम्बन्धित्वान्मुहूर्त्तैर्द्विन तयोरन्त-र्भावः। तथा च दक्षः "अहोरात्रस्य यः सन्धिः सूर्य्यनक्षत्र-वर्जितः। सा तु सन्ध्या समाख्याता मुनिभिस्तत्त्वदर्शिभिः"॥ योगियाज्ञवल्क्यः। "ह्रासवृद्धी च सततं दिनरात्र्योर्यथा-क्रमम्। सन्ध्यामुहूर्त्तमाख्याता ह्रासवृद्धौ समास्मृता"॥ वराहः "अर्द्धास्तमयात् सन्ध्या व्यक्तीभूता न तारका यावत्। तेजः परिहानिरूषा भानोरर्द्धोदयं यावत्"॥ अतएव केनापि मुनिना नानादेशीय संग्रहकारेण च सन्ध्यासंक्रान्तित्वेन विशेषो नाभिहितः।

तदयं संक्षेपः। दिनसंक्रमणे कृत्स्नं दिनं पुण्यं षडशीति मुखे इत्याद्युक्तं पुण्यतरं मन्दा मन्दाकिनीत्यादि रूपेण त्रिचतुरादि घटिकाः पुण्यतमाः। दिनवृत्तोत्तरायणादिवि-हित विंशति दण्डादीनां रात्रिप्रविष्टभागस्यापि पुण्यत्वं

रात्रिसंक्रमणे तु कल्यान्यून प्रथमार्द्धगते तद्दिवसीय शेषयामद्वयं पुण्यम्। कालाद्वयात्मक मध्यरात्रगते तद्दिवसीय तिथेरभेदे तद्दिवसीय शेषयामद्वयं पुण्यं भेदे तु तद्दिवसीय शेषयामद्वयं परदिवसीयाद्ययामद्वयञ्च पुण्यम् उभयदिने पुण्यकालेऽपि पूर्वदिनाकरण एव परदिने तद्विहितं कार्य्यम्। तिथिभेदाभेदयोर्दक्षिणायने तद्दिवसीय शेषयामद्वयम् उत्तरायणे तु परदिवसीयाद्य यामद्वयं पुण्यमिति मध्यरात्रीयकलोत्तरशेषार्द्धरात्रसंक्रमणमात्रे तु परदिनाद्य यामद्वयं पुण्यमिति सन्ध्यासंक्रमणे तु दिनदण्डे दिनस्य रात्रिदण्डे रात्रेर्व्यवस्थितिः।

ब्रह्मपुराणे। "शुक्लपक्षे तु सप्तम्यां यदा संक्रमते रविः। महाजया तदा प्रोक्ता सप्तमी भास्करप्रिया॥ स्नानं दानं तपो होमः पितृदेवाभिपूजनम्। सर्वं कोटिगुणं प्रोक्तं तपनेन महौजसा॥" अत्र "मासपक्षतिथीनाञ्च निमित्तानाञ्च सर्वशः" इत्यनेन प्राप्त तिथ्युल्लेखे तद्विशेषणत्वेन महाजयेत्युल्लेख्यं संज्ञा विधेरेतदेव प्रयोजनं यत्तयानिर्द्देश इत्युक्तत्वात् एवञ्च संक्रान्तिविशेषस्य निमित्तत्वेन प्राप्तौ विषुवाद्युल्लेखोऽपि। स्कान्दे "एकान्ततो मया प्रोक्ताः कालाः संक्रान्तिसंज्ञकाः। नैतेषु विद्यतेऽनिष्टं यतस्वाक्षयसंज्ञिताः॥ अश्रद्धयापि यद्दत्तं कुपात्रेभ्योऽपि मानवैः। अकालेऽपि हि तत्सर्वं सत्यमक्षयतां व्रजेत्"॥ मात्स्ये। "अयने कोटिगुणितं लक्षं विष्णुपदीषु च। षड़शीति सहस्रन्तु षड़शीत्यामुदाहृतम्॥ शतमिन्दुक्षये पुण्यं सहस्रन्तु दिनक्षये। विषुवे शतसाहस्र माकामावैष्वनन्तकम्"॥ आकामावैषु आषाढ़ी कार्त्तिकी माघी वैशाखी पूर्णिमासु। देवीपुराणे। "रविसंक्रमणे पुण्ये न स्नायाद्यस्तु मानवः। सप्तजन्मस्वसौ रोगी निर्धनश्चोपजायते"॥ दीपिकायाम्। "नाड़ीनक्षत्र दिवसे रविभौम शनैश्चराः। संक्रान्तिं यस्य कुर्वन्ति तस्य क्लेशोऽभिजायते॥ गोमूत्र सर्षपैः स्नानं सर्वौषधिजलेन च। विशुद्धं काञ्चनं दद्यान्नाड़ीदोषोपशान्तये"॥ नाड़ीनक्षत्राणिचाद्य दश षोड़शाष्टादश त्रयोविंशति पञ्चविंशतयः। रत्नमालायाम्।

"तारावलादिन्दुरथेन्दुवीर्य्याद्दिवाकरः संक्रममाण उक्तः। ग्रहाश्च सर्वे सवितुर्बलेन महीसुताद्याः क्रमशः प्रशस्ताः" ॥ संवत्सरप्रदीपे "धुस्तूरबीजसलिलैः स्नायात् संक्रान्तिशान्तये। तथा सर्वौषधीभिश्च विष्णुमन्त्रांश्च संजपेत्॥ यदाह्नि मेषसंक्रान्ति स्तुलासंक्रमणं निशि। तदा प्रजा विवर्द्धन्ते धनधान्यसमृद्धिभिः। कुजार्क शनिवारेण महासंक्रमणं यदा। तदा भवेत् प्रजानाशो दुर्भिक्षादिभयं महत्" ॥

ब्रह्मवैवर्त्ते। "अप्राप्ते भास्करे कन्यां शेषभूतैस्त्रिभिर्दिनैः। अर्घ्यं दद्युरगस्त्याय गौड़देशनिवासिनः" ॥ भौमपराक्रमे। "यस्तु भाद्रपदस्यान्ते उदिते कलसोद्भवे। अर्घ्यं दद्यादगस्त्याय सर्वान् कामान् लभेत सः" ॥ नारसिंहे। "शङ्खे तोयं विनिःक्षिप्य सितपुष्पाक्षतैर्युतम्। मन्त्रेणानेन वै दद्याद्दक्षिणाशामुखस्थितः ॥ काशपुष्पप्रतीकाश! अग्निमारुत सम्भव!। मित्रावरुणयोः पुत्र! कुम्भयोने! नमोऽस्तु ते"॥ प्रार्थनमन्त्रस्तु। "आतापिर्भक्षितो येन वातापिश्च महासुरः। समुद्रः शोषितो येन स मेऽगस्त्यः प्रसीदतु"॥ गन्धादिकन्तु अगस्त्याय नम इति दातव्यं विशेषानुपदेशेन सामान्यतः प्राप्तत्वात्। दक्षिणाशामुखस्थित इति गन्धादावपि। प्रयोगाङ्ग कर्त्तृधर्मत्वादिति रत्नाकरः। नारदीयं "न मात्स्यं भक्षयेन्मांसं न कौर्मं नान्यदेवहि। चण्डालो जायते राजन्! कार्त्तिके मांसभक्षणात्" ॥ महाभारते। "कौमुदन्तु विशेषेण शुक्लपक्षं नराधिप!। वर्जयेत् सर्वमांसानि धर्मोह्यत्र विधीयते" ॥ कौमुदं कार्त्तिकम्। कार्त्तिकमधिकृत्य ब्रह्मपुराणम् "एकादश्यादिषु तथा तासु पञ्चसु रात्रिषु। दिने दिने च स्नातव्य शीतलासु नदीषु च। वर्जितव्या तथा हिंसा मांसभक्षणमेव च" ॥ ततश्च मांसभक्षणनिषेधे कार्त्तिकमासतच्छुक्लपक्ष तदेकादश्यादिपञ्चदिनानि शक्ताशक्तभेदात् पापतारतम्याद्वा निषिद्धानि।

ब्रह्माण्डे "दामोदराय नभसि तुलायां लोलया सह। प्रदीपन्ते प्रयच्छामि नमोऽनन्ताय वेधसे" ॥ लोलया लक्ष्म्या "इति मन्त्रेण यो दद्यात् प्रदीपं सर्पिरादिना। आकाशे मण्डपे वापि सचाक्षयफलं लभेत् ॥ विष्णुवेश्मनि यो दद्यात्

कार्त्तिके मासि दीपकम् । अग्निष्टोम सहस्रस्य फलं प्राप्नोति मानवः" ॥ नारदीये । "निष्पावान्राजमाषांश्च सुप्ते देवे जनार्दने । यो भक्षयति राजेन्द्र ! चाण्डालादधिको हि सः ॥ कार्त्तिके तु विशेषेण राजमाषांश्च वर्जयेत् । निष्पावान्मुनिशार्दूल ! यावदाहूतनारकौ ॥ कदम्बानि पटोलानि वृन्ताकसहितानि च । न त्यजेत् कार्त्तिके मासि यावदाहूतनारकौ ॥ एतानि भक्षयेद्यस्तु सुप्ते देवे जनार्दने । शतजन्मार्जितं पुण्यं दहते नात्र संशयः" ॥ निष्पावः शिम्बीसदृशो दक्षिणापथे प्रसिद्ध इति कल्पतरुः । कदम्बादीनि फलानि नपुंसक निर्देशात् कदम्बानीत्यत्र कलम्बानीति केचित् पठन्ति कलम्बीत्वेन प्रसिद्धानीति व्याचक्षते च आहूतनारकौ आहूतानि क्ष्मादिपर्य्यन्तानि प्रलयावधीति यावत् तावत्कालं नारकीत्यर्थः । आहूत इत्यत्र भकारस्य हकारश्छान्दसः । काशीखण्डे । "ऊर्जे यवान्नमश्नीयादेकान्नमथवा पुनः । वृन्ताकं शूरणञ्चैव शूकशिम्बीञ्च वर्जयेत् । कार्त्तिके वर्जयेत् तैलं कार्त्तिके वर्जयेन्मधु । कार्त्तिके वर्जये कांस्यं कार्त्तिके मासि सन्धितम्"॥ ऊर्जे कार्त्तिके । शूरण मोलं सन्धितमासवादि । गारुडे । "गवामयुतदानेन यत्फलं लभते खग ! । तुलसीपत्रकैकेन तत्फलं कार्त्तिके स्मृतम्" ॥ भीमनाथधृतम् । "विहाय सर्वपुष्पाणि मुनिपुष्पेण केशवम् । कार्त्तिके योऽर्च्चयेद्भक्त्या वाजिमेधफलं लभेत्" ॥ पद्मपुराणम् । "तुलामकरमेषेषु प्रातः स्नानं विधीयते । हविष्यं ब्रह्मचर्य्यञ्च महापातकनाशनम्" ॥ पितामहः । "कार्त्तिकस्य तु यत् स्नानं माघे मासि विशेषतः । कृच्छ्रादि नियमानाञ्च चान्द्रमानप्रमाणतः" ॥ आभ्यां कार्त्तिकादिस्नाने सौरचान्द्रयोर्विकल्पेनानुष्ठानम् । मदनपारिजातधृतविष्णुवचनम् । "दर्शं वा वा पौर्णमासीं वा प्रारभ्य स्नानमाचरेत् । पुण्यान्यहानि त्रिंशत्तु मकरस्थे दिवाकरे" ॥ दर्शं पौर्णमासीमिति पूर्वदिनसङ्कल्पपरमिति नारायणोपाध्यायाः । वैष्णवामृते तु भविष्यपुराणवचनम् । "गवामर्द्धप्रसूतानां लक्षं दत्त्वा तु यत् फलम् । तत्फलम् लभते राजन् ! मेषे स्नात्वातु जाह्नवीम्" ॥ कार्त्तिके

मन्त्रस्तु "कार्त्तिकेऽहं करिष्यामि प्रातःस्नानं जनार्द्दन!। प्रीत्यर्थं तव देवेश! दामोदर! मया सह"। मया लक्ष्म्या। राजमार्त्तण्डे। "य इच्छेद्विपुलान् भोगान् चन्द्रसूर्य्य ग्रहोपमान्। कार्त्तिके सकले मासि प्रातःस्नायी भवेत् सदा"॥ पाद्मे। "स्वर्गलोके चिरं वासो येषां मनसि वर्त्तते। यत्र क्वापि जले तैस्तु स्नातव्यं मृग भास्करे"॥ मृगो मृगास्यत्वेन मकरस्तत्स्थे भास्करे। "आयुरारोग्यसम्पत्तौ रूपे सुभगतागुणे। येषां मनोरथास्ते तु न त्याज्यं माघमज्जनम्॥ दारिद्र्यपापदौर्भाग्यपङ्कप्रक्षालनाय वै। माघस्नानान्नचान्योऽस्ति उपायो नरसत्तम!॥ मकरस्थे रवौ यो हि न स्नात्यनुदिते रवौ। कथं पापैः प्रमुच्येत कथं स त्रिदिवं व्रजेत्॥ अकामो वा सकामो वा यत्र क्वापि वह्निर्जले"। इह चामुत्र दुःखानि माघस्नायी न पश्यति"॥ यत्तु "माघे मासि रटन्त्यापः किञ्चिदभ्युदिते रवौ। ब्रह्मघ्नमपि चाण्डालं कं पतन्तं पुनीमहे"॥ इति पद्मपुराणे किञ्चिदभ्युदिते रवावित्युक्तं तत्प्रातःस्नानकालोत्तरावधिरूपपरम्। प्रागुक्तार्द्धास्तमयात् सन्ध्येति वचनात्। अतएव "यो माघमास्युषसि सूर्य्यकराभिताम्रे स्नानं समाचरति चारुनदीप्रवाहे। उद्धृत्य सप्तपुरुषान् पितृमातृवंश्यान् स्वर्गं प्रयात्यमरदेहधरो नरोऽसौ"॥ इत्यत्र उषसीत्यभिधाय सूर्य्यकराभि ताम्र इत्युक्तं सूर्य्योदयात् प्रागपि तत्करसम्भवात् न तु सूर्य्याभिताम्र इत्युक्तम्। गारुडे। "गङ्गां येऽत्रावगाहन्ते माघे मासि नराधिप!। चतुर्युगसहस्रं ते न पतन्ति सुरालयात्। दिनेदिने सहस्रन्तु सुवर्णानां विशाम्पते!। तेन दत्तं हि गङ्गायां यो माघे स्नाति मानवः"॥

विधिमाह पाद्मे। "माघमासमिमं पुण्यं स्नास्यहं देव! माधव! तीर्थस्यास्य जले नित्यं प्रसीद भगवन् हरे!। दुःखदारिद्र्यनाशाय श्रीविष्णोस्तोषणाय च॥ प्रातःस्नानं करोम्यद्य माघे पापप्रणाशनम्। मकरस्थे रवौ माघे गोविन्दाच्युतमाधव!॥ स्नानेनानेन मे देव! यथोक्तफलदो भव। एतन्मन्त्रं समुच्चार्य्य स्नायान्मौनं समाश्रितः॥ वासुदेवं हरिं कृष्णं श्रीधरञ्च स्मरेत्ततः। दिवाकर! जगन्नाथ! प्रभाकर! नमोऽस्तु ते। परिपूर्णं

कुरुष्वेदं माघस्नानं महाव्रतम्" ॥ चान्द्र स्नाने तु मकरार्का-क्रान्तकाले मकरस्थे रवाविति मन्त्रस्तु न पाठः असमवेतार्थत्वात् आरब्ध कार्त्तिकादि स्नाने तु व्याध्यादिना सामर्थ्याभावे पुत्रादि प्रतिनिधिना कारयितव्य नानुकल्पविधिना नित्यस्नान एव तद्विधानादिति विद्याकरः। स्कन्दपुराणम्। संप्राप्ते मकरादित्ये पुण्ये पुण्यप्रदे सदा। कर्त्तव्यो नियमः कश्चित् व्रतरूपो नरोत्तमैः" ॥ षट्त्रिंशन्मतनिगमौ। "संक्रान्त्यां पञ्चदश्याञ्च द्वादश्यां श्राद्धवासरे। वस्त्रं न पीड़येत् तत्र न च क्षारेण योजयेत्। संक्रान्त्याञ्च त्रयोदश्यां पक्षान्ते नवमी-दिने। सप्तम्यां रविवारे च स्नान मामलकैस्त्यजेत्" ॥ शाता-तपः। "रविवारेऽर्क संक्रान्त्यां षष्ठ्यां वै सप्तमीतिथौ। आरो-ग्यकामस्तु नरो निम्बपत्रं न भक्षयेत्" ॥

कृत्यचिन्तामणौ गुणिसर्वस्वे च। "चैत्रे मासि च संपूज्यो घण्टाकर्णो घटात्मकः। आरोग्याय स्नुहीमूलं संक्रान्त्यां तत्र कारयेत्" ॥ पूजामन्त्रः। "घण्टाकर्ण! महावीर! सर्वव्याधि-विनाशन!। विस्फोटक भये प्राप्ते रक्ष रक्ष महाबल!"॥ शिव-पुराणे। "घण्टाकर्णोगणः श्रीमान् शिवस्यातीव वल्लभः" ॥ कृत्यचिन्तामणौ "मसूरं निम्बपत्रञ्च योऽत्ति मेषगते रवौ। अपि रोषान्वितस्तस्य तक्षकः किं करिष्यति" ॥ संवत्सर प्रदीपे तूत्तरार्द्ध "मेषस्थे च विधौ तस्य नास्त्यब्दं विषजं भयम् इति स्मृतिः। "मेषादौ शक्तवो देया वारिपूर्णा च गर्गरी" ॥ वारि-दाने मन्त्रः। "एष धर्मघटोदत्तो ब्रह्मविष्णुशिवात्मकः। अस्य-प्रदानात् सफला मम सन्तु मनोरथाः। वैशाखे यो घटं पूर्णं सभोज्यं वै द्विजन्मने। ददात्यभुक्त्वा राजेन्द्र! स याति परमां गतिम्" ॥ पूर्णं जलेनेति शेषः। महार्णवे। "यो ददाति हि मेषादौ शक्तूनम्बुघटान्वितान्। पितृनुद्दिश्य विप्रेभ्यः सर्व-पापैः प्रमुच्यते। विप्रेभ्यः पादुके छत्रं पितृभ्यो विषुवे शुभं" ॥ पितृभ्यः पितृनुद्दिश्य इत्यर्थः। अत्र विषुवस्य पुण्यविशेषजनक-त्वेन विवक्षितत्वात् मेषादाविति विषुवसंक्रान्तिपुण्यकाल-परम्। अन्यथा कालद्वयकल्पनापत्तेः। कर्मोपदेशिन्यां व्यासः। "संक्रान्त्यां पक्षयोरन्ते द्वादश्यां श्राद्धवासरे। सायं सन्ध्यां न

कुर्वीत कृते च पितृहा भवेत्" ॥ देवीपुराणे। "अतीतानागतो भोगो नाद्यः पञ्चदश स्मृताः। सान्निध्यन्तु भवेत् तत्र ग्रहाणां संक्रमे रवेः। पुण्य पाप विभागेन फलं देवी प्रयच्छति" ॥ भोगः पुण्यपापजननयोग्यकालः पुण्यपापविवेचने विश्वामित्रः। "यमार्य्याः क्रियमाणं हि संक्रान्त्यागमवेदिभिः। सधर्मोयं विगर्हन्ति तमधर्मं प्रचक्षते" ॥ आगमवेदिभिः क्रियमाणमिति सम्बन्धः। तान्त्रिकास्तु। "विहित क्रियया साध्योधर्मः पुंसोगुणो मतः। प्रतिषिद्धक्रियासाध्यः सगुणो धर्म उच्यते" ॥ अत्रैकस्मिन्नेव काले पुण्यपापफलदानदर्शनात्। संक्रमण पुण्यकाल एव स्नानादिवत्तैलादित्यागः। एवमेव गुरुचरणाः एकादशी प्रकरणोक्त संक्रान्त्युपवासस्य व्रतत्वेन भावरूपत्वाङ्गावघटितत्वाद्दोभयथापि तत्र पूज्ये विधेर्वृत्तिरित्यनेन पुण्यकालयुक्ताहोराचकर्त्तव्यता अष्टम्युपवासवत्। एकादशीतत्त्वे एतद्बहुधा विमृष्टम् एवञ्च रात्रिप्रागर्द्ध संक्रान्तौ दिवा शेषार्द्ध मात्रस्य तत्पुण्यकालत्वाद्रात्रिमुहूर्त्तार्द्ध साय सन्ध्योपासनं कार्य्यमेव। ब्रह्मपुराणे। "नित्यं द्वयोरयनयोर्नित्यं विषुवतोर्द्वयोः। चन्द्रार्कयोर्ग्रहणयोर्व्यतीपातेषु पर्वसु। अहोरात्रोषितः स्नानं श्राद्धं दानं तथा जपम्। यः करोति प्रसन्नात्मा तस्य स्यादक्षयञ्च तत्" ॥ अहोरात्रोषितः पूर्वदिने कृतोपवासः एतत् परमेव "अर्द्धरात्रे व्यतीते तु संक्रान्तिर्दृश्भवेत्। पूर्वं व्रतादिकं कुर्य्यात् परेद्युः स्नानदानयोः" इति भीमपराक्रमीयम्। स्नानदानयोरित्यत्र सप्तमीनिर्देशात् परदिवसीय स्नानदाननिमित्तकं पूर्वदिने उपवास संयम रूपं व्रतादिकं कुर्य्यादित्यर्थः।

अथ ग्रहणम्। ज्योतिषे "भत्रिपादान्तरे राहोः केतोर्वा संस्थितो रविः। चतुष्पादान्तरे चन्द्रस्तदा संभाव्यते ग्रहः" ॥ भत्रिपादान्तरे नक्षत्रस्य नक्षत्रयोर्वा त्रिपादाभ्यन्तरे। "यस्मिन्नृक्षे रविस्तस्माच्चतुर्दशगतः शशी। पूर्णिमा प्रतिपत्सन्धौ राहुणा ग्रस्यते शशी" ॥ एतदपि पूर्ववचनानुसारेण नक्षत्रचतुष्पादाभ्यन्तरे सति ज्ञेयं तस्मात्तमारभ्य तत् परतो वा इत्यर्थः। "कृष्णपक्षे तृतीयायां मासर्क्षं यदि जायते। ततस्त्रयोदशे

सूर्य्ये राहुणा ग्रस्यते रविः"॥ मासर्त्तं कार्त्तिकादौ कृत्तिकादि एतदपि भत्रिपादान्तरे सति ज्ञेयं राहोः पादभोगश्च मासद्वयेन। "रविभौमनवांशेतु निरभ्रं ग्रासमादिशेत्। बुधसौरिनवांशे तु मलिनं चुद्रवर्षणम्॥ गुरौ रंशकमासाद्य सवलाहकः। शशिशुक्रनवांशेतु प्रावृट्काले महज्जलम्॥ अन्यत्राव्यक्तभूतौ तौ दृश्येते छादिताम्बरौ"॥ अन्यत्र वर्षेतरकाले तौ चन्द्रार्कौ। कृत्यचिन्तामणौ वराहः। "श्वेते क्षेमसुभिक्षं ब्राह्मणपीडाञ्च निर्दिशेद्राहौ। अग्निभयमनलवर्णे पीड़ा च हुताशवृत्तीनाम्॥ हरिते रोगानुतापः शस्यानामीतिभिश्च विध्वंसः। कपिले शीघ्रगसत्त्वम्लेच्छध्वंसोऽथ दुर्भिक्षम्। अरुणकिरणानुरूपे दुर्भिक्षं वृष्टयो विहगपीडा धूम्राभे क्षेमसुभिक्षमादिशेन्मन्दवृष्टिञ्च कापोतारुण कपिले श्यामाभे च चुद्भयं विनिर्दिशेत्। कापोतः शूद्राणां व्याधिकरः कृष्णवर्णश्च विमलकमलपीताभो वैश्यध्वंसी भवेत्। सुभिक्षाय सार्चिष्यग्निभयं गैरिकरूपे च युद्धानि दूर्वाकाण्डश्यामे हारिद्रे चापि निर्दिशेन्मरकम्। अशनिभयसंप्रदायी पाटलिकुसुमोपमो राहुः"॥ राजमार्त्तण्डे। "सप्ताष्टजन्मशेषेषु चतुर्थे दशमे तथा। नवमे च तथा चन्द्रे न कुर्य्याद्राहुदर्शनम्"॥ श्रीपतिव्यवहारनिर्णये वशिष्ठः। "जन्मभे जन्मराशौ च षष्ठाष्टम गते तयोः। चतुर्थे द्वादशे चन्द्रे न कुर्य्याद्राहुदर्शनम्॥ ग्रासदर्शनमात्रेण चार्थहानिर्महद्भयम्। जायते नात्र सन्देहस्तस्मात्तत् परिवर्जयेत्"॥ जन्मनक्षत्रापेक्षया षष्ठे अर्थात् सप्तमतारायां निधनेऽपि चेत्येकवाक्यत्वात् जन्मराश्यपेक्षया अष्टमे चन्द्रे अत्राप्युपलक्षणञ्चैतदा नवमे चन्द्रेऽङ्कइत्येकवाक्यत्वात् वराहसंहितायाम्। "जन्मसप्ताष्टरिपुफाङ्कदशमस्थे निशाकरे। दृष्टोऽरिष्ट प्रदो राहुर्जन्मर्क्षे निधनेऽपि च"॥ रिपफं द्वादशराशिः। अङ्को नवमः। निधनं सप्तमतारा तथा "वैनाशिकऋक्षे दृष्टं ग्रहणं सुधांशुभास्करयोः। जनयति रोगं बहुधा क्लेशं वित्तक्षयं चाशु। जन्माष्टजायान्त्यवधर्मसंस्थे निशाकरे जन्मसु तारकासु। दृष्ट्वा तमश्चन्द्रमसं प्रयत्नादभ्यर्च्चय दद्यात् कनकं द्विजाय"॥ उपक्रमे सुधांशुभास्करयो रिति दर्शनात्

चन्द्रमसमिति सूर्य्यस्याप्युपलक्षणम्। वैनाशिकऋक्षे त्रयोविंशतिनक्षत्रे इति केचित्। वस्तुतस्तु वैनाशिकपदं निधनतारापरम्। निधनेऽपि चेत्येकवाक्यत्वात् वैनाशिकपदस्य शर्म्मणविपत्करादिसाहचर्य्यात् त्रयोविंशतिनक्षत्रस्य प्रत्यरिपदप्राप्तत्वादपि सप्तमतारायां पठितत्वाच्च। यथा "विपत्करप्रत्यरिसंगीतेषु वैनाशिकर्क्षेषु कृतं हि कर्म। सर्वं नृणां निष्फलमेव तस्मात् कृतेऽपि तत्रास्ति शुभं न किञ्चित्"॥ जायान्त्यखधर्मा सप्तमद्वादशदशमनवमराशयः। ननु ज्योतिःशास्त्राद्युक्त निषेधो हिंसावद्दृष्टाट्टच्छिकपरोस्तु न तु वैधपरःमैवं "राहुदर्शन संक्रान्ति विवाहात्ययवृद्धिषु। स्नानदानादिकं कुर्य्युर्निशि काम्यव्रतेषु च"। इति देवल वचने दर्शनपदश्रवणाद्दर्शने सति स्नानादेर्महाभ्युदयहेतुत्वाद्दर्शनमपि विधेयम्। तथा च संवत्सर प्रदीपे मार्कण्डेयः। "एकरात्रमुपोष्यैव राहुं दृष्ट्वाक्षयं नरः। पुण्यमाप्नोति कृत्वा च दानं श्राद्धं विधानतः"॥ ततश्च तस्यैव प्रकृतत्वेनोपस्थितस्य वैधदर्शनस्य पर्य्युदासो नतु रागप्राप्तदर्शनस्य निषेधोऽप्रकृतत्वेनानुपस्थितेः। एवञ्च पदार्थान्तर साकाङ्क्ष विशेष विधिमपहाय तदितरत्र सामान्यमन्वेतीति सर्वत्र पदाहवनीयादौ सामान्यस्य विशेषितरपरत्वे वीजम्। यथा अहरहर्दद्यात् दीक्षितो न ददातीति प्रतिषेधात् दीक्षितेतरपरं न रागप्राप्तनिषेधकम्। तदुक्तं "त्रिधैव ज्ञायते कर्त्ता विशेषेण प्रतिक्रियम्। योग्यत्वं प्रतिषिद्धत्वं विशेषेण पदान्वयैः"॥ यजमानः पठतीति श्रुत्या तद्योग्योविद्वान् दीक्षितो न ददातीति प्रतिषेधाद्दीक्षितेतरपरः "स्वर्गकामोऽग्निष्टोमेन यजेत" इत्यत्र विशेषणात् स्वर्गकामः कर्त्तेति तेन सप्तमचन्द्रादीतरो राहुं दृष्ट्वा स्नायादिति लभ्यते। एवं वैधदर्शनपर्य्युदासेऽपि निन्दाप्रायश्चित्तयोः श्रवणाद्रागप्राप्तदर्शनस्य प्रसज्यप्रतिषेधः ऋत्वभिगमननियमे पर्वणः पर्य्युदस्तत्वेऽपि तत्र रागप्राप्तगमनस्य प्रसज्य प्रतिषेधवदिति प्रपञ्चितं मलमासतत्त्वे। अतएव भोजराजः। "पौषे चैत्रे कृष्णपक्षे नवान्नं नाचरेद्बुधः। भवेज्जन्मान्तरे रोगी पितॄणां नोपतिष्ठते"॥ अत्र निन्दाश्रवणात्

प्रव्रज्यता नोपतिष्ठत इति श्रवणात् पर्य्युदासमतेति। देवल-वचने निशीति पर्य्युदस्तसमयमात्रपरमन्यथा सायाह्ने विवाहादि राहुदर्शन संक्रान्त्यादिनिमित्त स्नानादि च न स्यात्। अतएव "ग्रहणोद्वाह संक्रान्ति यात्रादौ प्रसवेषु च। दानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते" इति दानदर्पणधृत वृद्ध वशिष्ठवचने रात्रावपीत्यपिना प्रतिषिद्ध कालान्तरं समुच्चीयते। छन्दोगपरिशिष्टम्। "यव्यहस्यं श्रावणादि सर्वा नद्यो रजस्वला:। तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगा:। उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च। चन्द्रसूर्य्यग्रहे चैव रजो दोषो न विद्यते। स्वर्धुन्यम्भःसमानि स्युः सर्वाण्यम्भांसि भूतले। कूपस्थान्यपि सोमार्कग्रहणे नात्र संशय:"॥ यव्योमास:।

नदीलक्षणमाह। "धनु: सहस्राण्यष्टौ च गतिर्यासां न विद्यते। न ता नदीशब्दवहा गर्त्तास्ता: परिकीर्त्तिता:"। स्वर्धुनीगङ्गा यासामपाम्। धनु: प्रमाणमाह विष्णुधर्मोत्तरीय प्रथमकाण्डम्। "द्वादशाङ्गुलिक: शङ्कुस्तद्द्वयन्तु शय: स्मृत:। तच्चतुष्कं धनु: प्रोक्तं क्रोशोधनु: सहस्रिक:"॥ शयोहस्त:। अत्र विशेषो मदन पारिजाते निगम:। न दुष्येत्तीरवासिनामिति। अत्रैव व्याघ्रपाद:। "अभावे कूपवापीनाम् अन्येनापि समुद्धृते। रजोदुष्टेऽपि पयसि ग्रामभोगो न दुष्यति"॥ अन्येन कुम्भादिना। अतएव छन्दोगपरिशिष्टज्ञतापि तात्स्नित्यधिकरणेन निर्दिष्टम्। देवल:। 'गङ्गा च यमुनाचैव प्लक्षजाता सरस्वती। रजसा नाभिभूयन्ते ये चान्ये नदसंज्ञका:" कुरुक्षेत्रे या सरस्वती सा प्लक्षजाता। "शोणसिन्धु हिरण्याख्यकोकलोहित्यघर्घर:। शतद्रुश्च नदा: सप्त पावना: प्रक्ष्य: स्मृता:"॥ ग्रहणे कूपस्थप्रशंसया ग्रहणप्राक्कालोनोद्धृतव्यावृत्ति:। व्याघ्र:। "आदित्यकिरणै: पूतं पुन: पूतञ्च वह्निना। व्याध्यातुर: स्नायात् ग्रहणेऽप्युष्ण वारिणा"॥ एवम्भूतं जलं यतोऽत उष्णवारिणापि स्नायादित्यर्थ:। व्यास:। "सर्वं भूमिसमं दानं सर्वे व्याससमा द्विजा:। सर्वं गङ्गासमं तोयं ग्रहणे नात्र संशय:"॥ तथा "इन्दोर्लक्षगुणं प्रोक्तं रवेर्दशगु-

णञ्च तत्। गङ्गातीरे तु संप्राप्ते इन्दोः कोटीरवेदंश"। संयोगपृथक्त्वन्यायात् अत्र श्राद्धं नित्यं काम्यञ्च। तथा च ऋष्यशृङ्ग शातातपौ। "सर्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहुदर्शने। अकुर्वाणस्तु तच्छ्राद्धं पङ्के गौरिव सीदति। चन्द्रसूर्य्यग्रहे यस्तु श्राद्धं विधिवदाचरेत्। तेनैव सकला पृथ्वी दत्ता विप्रस्य वै करे"॥ अत्रामश्राद्धमाह प्रचेताः। "आपद्यनग्नौ तीर्थे च चन्द्रसूर्य्यग्रहे तथा। आमश्राद्धं द्विजैः कार्य्यं शूद्रेण तु सदैवहि"॥ वशिष्ठः "शस्यं क्षेत्रगतं प्रोक्तं सतुषं धान्यमुच्यते। आमं वितुषमित्युक्तं स्विन्नमन्नमुदाहृतम्"॥ योगिनीतन्त्रे। "अनग्ने रामश्राद्धे तु अन्नं न चालयेत् क्वचित्। वृद्धौ तु चालयेदन्नं संक्रमे ग्रहणेषु च"॥ ग्रहणनिमित्तश्राद्धादि मलमासेऽपि कार्य्यं "नित्य नैमित्तिके कुर्य्यात् प्रयतः सन् मलिम्लुचे। तीर्थ स्नानं गजच्छायां प्रेत श्राद्धं तथैव च"॥ इति वृहस्पतिवचनात्। श्राद्धविवेकेऽप्येवम्। "चन्द्रसूर्य्यग्रहे स्नानं श्राद्धदानजपादिकं। कार्य्याणि मलमासेऽपि नित्यनैमित्तिकं तथा"॥ इति कालमाधवीयधृतवचनाच्च। अपिना अन्येऽपि कालदोषाः समुच्चिताः। सारसंग्रहे "सत्तीर्थेऽर्कविधुग्रासे तन्तु दामन पर्व्वणोः। मन्त्रदीक्षां प्रकुर्वाणो मासर्क्षादीन्न शोधयेत्"॥ तन्तु पर्व्वपरमेश्वरोपवीतदानतिथिः श्रावणी दामन पर्व्व मदनभञ्जनतिथिश्चैत्रशुक्लचतुर्दशी। रामार्च्चनचन्द्रिकायां "चन्द्रसूर्य्यग्रहे तीर्थे सिद्धक्षेत्रे शिवालये। मन्त्रमात्रप्रकथनमुपदेशः स उच्यते"॥ गारुड़े। "सूर्य्यग्रहः सूर्य्यवारे सोमे सोमग्रहो भवेत् चूड़ामणिरयम् योगस्तत्रानन्तफलं स्मृतम्। अन्यस्मात् ग्रहणात् कोटिगुणमत्र फलं लभेत्"॥ देवीपुराणे। "यस्य राशौ ग्रहाः पञ्चाथवा सप्त सुराधिप!। ग्रहणं चन्द्रसूर्य्यस्य ग्रहैर्वाष्टमसंस्थितैः॥ बलिदानं प्रकर्त्तव्यं मातॄणां पूजनं हितम्। सूर्य्यस्याभ्यर्च्चनं कार्य्यं शिवस्याशुभनाशनम्"॥ न च देवल दर्शनेत्यत्र राहुर्दृश्यतेऽनेनेति व्युत्पत्त्या राहुदर्शनं ग्रहणं न तु तस्य दर्शनमिति वाच्यं "चन्द्रे वा यदि वा सूर्य्ये दृष्टे राहौ महाग्रहे। अक्षयं कथितं पुण्यं तत्राप्यर्के विशेषतः"॥ इतिमार्कण्डेय वचने राहौ दृष्ट इत्य-

भिधानात् राहुं दृष्ट्वाऽचयं नर इत्युक्तत्वात् यावद्दर्शनगोचर इति वचनाच्च तच्च दर्शनं चाक्षुषज्ञानं न ज्ञानमात्रं चन्द्रसूर्य्योपरागस्य स्नानादौ संक्रान्तिवत् ज्ञातस्यैव निमित्तत्वात् ज्ञाने प्राप्ते राहुदर्शन इति वचने चन्द्रसूर्य्योपरागे च यावद्दर्शनगोचर इति जावाल वचने च दर्शनपदाच्चाक्षुषज्ञानविषयस्यैव निमित्तता विधीयते तत्रैव दृशेर्मुख्यत्वात्। तथा च संवत्सरप्रदीपे। "चक्षुषा दर्शनं राहोर्यत्तद्ग्रहणमुच्यते। तत्र कर्माणि कुर्वीत गणनामात्रतो न तु" ॥ ग्रहणं ग्रहणनिमित्तक कर्मप्रयोजकं राहुदर्शनमप्याख्यातोपस्थापित स्नानादि कर्त्तुः सान्निध्यात्तन्निष्ठमेव लाघवात। अन्यथा "सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने। नान्दीमुखं पितृगणं पूजयेत् प्रयतो गृही" ॥ इति विष्णुपुराणेऽपि सपुत्रस्यान्यकर्तृक मुखदर्शने ज्ञातेऽपि श्राद्धं प्रसज्येत। पूर्वलिखित मार्कण्डेयवचने दृष्टेति क्त्वा श्रवणाच्च हेमाद्रिस्तु यावद्दर्शनगोचरस्तावत् पुण्यकालो यदास्तं गतः। न दृश्यते तदा न पुण्यकालः। तथा च ग्रस्तास्तमिते वशिष्ठः पूर्वमेव स्नानार्थं तिष्ठति नोर्द्धं। देवलोऽपि "यथा स्नानञ्च दानञ्च सूर्य्यस्य ग्रहणे दिवा। सोमस्यापि तथा रात्रौ स्नानं दानं विधीयते" ॥ निगमोऽपि "सूर्य्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहो भवेत्। तत्र स्नानं न कुर्वीत दद्यात् दानं न कुत्रचित्" ॥ इत्याह माधवाचार्य्योऽपि ग्रस्तास्तमयपर्य्यन्तं दर्शनयोग्यत्वात्तावान् पुण्यकालो भवतीत्याह। एतेनान्यकर्तृक दर्शने ग्रस्तास्तानन्तरञ्च यत् स्नानादिकमभिहितं नारायणोपाध्यायेन तद्धेयमिति।

एवञ्च ग्रस्तास्ते ग्रस्तोदये च पुरश्चरणं न सम्भवति स्पर्शादिमुक्तिपर्य्यन्तमित्यभिधानात्। यथा पुरश्चरणचन्द्रिकादिषु। "अथवान्य प्रकारेण पुरश्चरणमिष्यते। ग्रहणेऽर्कस्य चेन्दोर्वा शुचिः पूर्वमुपोषितः। नद्यां समुद्रगामिन्यां नाभिमात्रजले स्थितः। यद्वा पुण्योदके स्नात्वा शुचिः पूर्वमुपोषितः। ग्रहणादि विमोक्षान्तं जपेन्मन्त्रं समाहितः। अनन्तरं दशांशेन क्रमाद्धोमादिकञ्चरेत्। तदन्ते महतीं पूजां कुर्य्यात् ब्राह्मणतर्पणम्। ततो मन्त्रप्रसिद्धार्थं गुरुं संपूज्य तोषयेत्। एवञ्च

मन्त्रसिद्धिः स्याद्देवता च प्रसीदति। अथवान्य प्रकारोऽयं पौरश्चारणिको विधिः। चन्द्रसूर्य्योपरागे च स्नात्वा प्रयतमानसः। स्पर्शादि मोक्षपर्य्यन्त जपेन्मन्त्रं समाहितः। जपात् दशांशतो होमं तथा होमात् तर्पणम्। एवं कृत्वा तु मन्त्रस्य जायते सिद्धिरुत्तमा"॥ गोपालमन्त्र तर्पणे तु होमसमसंख्यत्वं यथा। "इह गोपाल मन्त्राणां तर्पणं होमसंख्यया। समं ज्ञेयन्तु सर्वेषामित्यागमविदोविदुः"॥ पुरस्क्रियाचर्य्यायाम्। "होमाशक्तौ जपं कुर्य्याद्धोमसंख्याचतुर्गुणम्। षड्गुणं चाष्टगुणितं यथासंख्यं द्विजातयः॥ तेषां स्त्रीणान्तु विज्ञेयस्तेषामेव समोजपः। यं वर्णमाश्रितः शूद्रस्तज्जपस्तस्य कीर्त्तितः"॥ तथा "मूलमन्त्रं समुच्चार्य्य तदन्ते देवताभिधाम्। द्वितीयान्तामहं पश्चात्तर्पयामि नमोऽन्तकः। तर्पणस्य दशांशेन मार्जनं कथितं किल। तच्चैवं देवतारूपं ध्यात्वात्मानं प्रपूज्य च। नमोऽन्तं मन्त्रमुच्चार्य्य तदन्ते देवताभिधाम्। द्वितीयान्तामहं पश्चादभिषिञ्चाम्यनेन तु। तोयैरञ्जलिना शुद्धैरभिषिञ्चेत् स्वमूर्द्धनि। मार्जनस्य दशांशेन ब्राह्मणानपि भोजयेत्। विप्राराधनमात्रेण व्यङ्गं साङ्गं भवेद्यतः। जपोऽञ्चापूर्वको होमस्तर्पणं चाभिषेचनम्। भूदेवपूजनं पञ्च प्रकारैश्च पुरस्क्रिया"॥

तत्र प्रयोगः। स्नात्वाचम्य तत्सदित्युच्चार्य्य अद्येत्यादि राहुग्रस्ते निशाकरे अमुकगोत्रः श्रीअमुक देवशर्मा अमुकदेवताया अमुकमन्त्रसिद्धिकामो ग्रासाद्विमुक्तिपर्य्यन्तं तज्जपमहं करिष्ये इत्यभिलाप्य तावत्कालं जपेत्। ततः प्रातः पूजयेत्। ततो जपदशांशहोमं कुर्य्यात् तदसम्भवे राहुग्रस्त निशाकरकालीनामुकमन्त्र जपदशांशहोमसमसंख्याचतुर्गुण जपमहं करिष्ये इति सङ्कल्प्य जपं कृत्वा समर्प्य राहुग्रस्त निशाकर कालीनामुकमन्त्र जपदशांशहोम तद्दशांश तर्पणमहङ्करिष्ये इति सङ्कल्प्य मन्त्र मुच्चार्य्यामुक देवतामहं तर्पयामि नम इत्यनेन तर्पयेत्। गोपाल मन्त्रे तु होमदशांश इत्यत्र होमसमसंख्येति निर्दिश्य ततस्तु राहुग्रस्त निशाकरकालीनामुकमन्त्रजपदशांशहोम तद्दशांश तर्पण तद्दशांशाभिषेक महं

करिष्ये इति सङ्कल्प्यात्मानं देवतारूपं ध्यात्वा नमोऽन्तं मन्त्रमुच्चार्य्यामुकमहमभिषिञ्चामीत्यनेन स्वमूर्द्धन्यञ्जलिनाभिषिञ्चेत्। गोपालमन्त्रे तु होमदशांशेत्यत्र होमसमसंख्येति निर्देश्यम्। ततो महतीं पूजां विधाय तदभिषेकदशांशब्राह्मणभोजनमहं कारयिष्ये इति सङ्कल्प्य ब्राह्मणान् भोजयेत्। गुरुं संपूज्य दक्षिणया तोषयेत्। सूर्य्यग्रहणे तु राहुग्रस्ते दिवाकर इति विशेषः। ग्रहणदर्शने स्नानमावश्यकम्। तथा च वृद्धवशिष्ठः। "संक्रमे ग्रहणे चैव न स्नायाद्यस्तु मानवः। सप्तजन्मसु कुष्ठी स्यात् दुःखभागी च सर्वदा"॥ अत्राशौचेऽपि साङ्गं स्नानं कर्त्तव्यं न श्राद्धादि। तथा च संवत्सरप्रदीपगङ्गावाक्यावल्योः स्मृतिः। "सूतके मृतके चैव न दोषो राहुदर्शने। स्नानमात्रन्तु कर्त्तव्यं दानश्राद्धविवर्जितम्"॥ भविष्ये "चन्द्र सूर्य्यग्रहे चैव मृतानां पिण्डकर्मणि महातीर्थे तु संप्राप्ते चतदोषो न विद्यते"॥ महातीर्थे गङ्गादौ संप्राप्ते तत्तत् क्षेत्रवासादिना सम्यक् प्राप्ते न तु प्रथम प्राप्तिमात्रे संशब्दानर्थक्यापत्तेः। पराशरवचने तीर्थपरस्य तत्तन्निमित्तक कर्मणि जनन मरणाशौचाभावोक्त्या सुतरां चतेऽपि तथा कल्पनायायुक्तत्वाच्च। यथा "दीक्षितेष्वभिषिक्तेषु व्रततीर्थपरेषु च। तपोदानप्रसक्तेषु नाशौचं मृतसूतके"॥ दीक्षितेष्विति यजमानानां सोमयागाङ्ग दीक्षणीयेष्टौ कृतायां दीक्षितत्वं भवति तेन दीक्षणीयेष्ट्युत्तरं कालं यजमानस्य यत् कर्त्तव्यं विहितं तत्राशौचं नास्ति अभिषिक्तेषु प्राप्तराजत्वाभिषेकक्षत्रियेषु तद्विशेष विहित व्यवहारदर्शनादि कर्मण्यशौचं नास्ति। व्रतपरो व्रतानुष्ठानप्रसक्तः तीर्थपरस्तत्तत् क्षेत्रवासादिना तन्निमित्तक कर्मानुष्ठानप्रसक्तः। एवं तपोदानप्रसक्तेष्वपि नाशौचं गर्गः। "यस्मिं स्त्रिजन्मनक्षत्रे ग्रस्येते शशिभास्करौ। तज्जातानां भवेत् पीडा ये नराः शान्तिवर्जिताः"॥ दीपिकायां "ग्रहण ग्रहपरिपीड़ित नाडीनक्षत्र दोषशमनाय सह शतपुष्पैः स्नायात् फलिनीफलचन्दनोशीरैः"॥ शतपुष्पा शुलुफा फलिनी प्रियङ्गुः फलं जातीफलं नाड़ी नक्षत्राणि च आद्यदशम षोड़शाष्टादश त्रयोविंश पञ्चविंशानि। ज्योतिषे

"ताम्रपात्रं तिलैः पूर्णं पूर्णं वा गव्यसर्पिषा। भास्करग्रहणे दद्यान्नाड़ीदोषोपपीड़ितः। घृतकुम्भोपरिनिहितं शङ्खं नवनीतपूरितं दद्यान्नाड्यादि दोषशान्त्यै द्विजाय दोषाकरग्रहणे। राशौ यत्र विधुन्तुदेन तरणिश्चन्द्रोऽथवा ग्रस्यते। तस्माद्वेदहुताश शङ्कररसाः कल्याणदा राशयः। मध्यस्थारविशायकाङ्कदशमाः सामान्यभोगप्रदा युग्मन्त्यौ तुरगाष्टमाः खलु नृणां यच्छन्ति नेष्टं फलम्"॥ वेदहुताश शङ्कररसाश्चतुस्त्र्येकादशषट् रविशायकाङ्क दशमाः द्वादश पञ्चनवमदशमाः युग्मन्त्यौ तुरगाष्टमाद्वैत्रक सप्तमाष्टमाः। कृत्यचिन्तामणौ। "अविकृत सलिलपातैः सप्ताहान्तः सुभिक्षमादेश्यम्। यच्चाशुभं ग्रहणजं तत् सर्वं नाशमुपयाति"॥ अविकृतेति करकादिरहितेत्यर्थः। यत्तु ग्रहणे भोजन विधिनिषेधौ दृष्टोपरागविषयावेव नपुंमात्रविषयौ मानाभावात्। मुक्तिं दृष्ट्वेत्यादिना तस्यैव प्रकृतत्वाच्चेत्याहुः। तन्न मनोरमम्। "चन्द्रस्य यदि वा भानोर्यस्मिन्नहनि भार्गव। ग्रहणन्तु भवेत् तत्र तत्पूर्वां भोजनक्रियाम्। नाचरेत् सग्रहे चैव तथैवास्त मुपागते। यावत् स्यान्नोदयस्तस्य नाश्नीयात्तावदेव तु। मुक्तिं दृष्ट्वा तु भुञ्जीत स्नानं कृत्वापरेऽहनि" इति विष्णुधर्मोत्तरवचनेन सामान्यतो निषेधात् तथैवेतिसग्रहत्वेनैवेत्यर्थः। चन्द्रसूर्य्यग्रहे भुक्त्वा प्राजापत्येन शुध्यति। तस्मिन्नेव दिने भुक्त्वा त्रिरात्राच्छुद्धिरिष्यते" इति देवलवचनेन सामान्यतः प्रायश्चित्तविधानाच्च। तस्मिन्नेव दिने तद्दिवसीय निषिद्ध कालाभ्यन्तरे। "आदित्येऽहनि संक्रान्तौ चन्द्रसूर्य्यग्रहे तथा। पारणञ्चोपवासञ्च न कुर्य्यात् पुत्रवान् गृही"॥ इति निषेधात् पुत्रिणो गृहस्थस्यापि ग्रस्तास्तेऽपि नोपवासः किन्तु ग्रहणानन्तरं पूर्वं वा निर्दोषकाले तेन किञ्चित् भच्यमिति संवत्सरप्रदीपः। ग्रहण पूर्वभोजन निषेधे विशेषमाह वृद्धगौतमः। "सूर्य्यग्रहे तु नाश्नीयात् पूर्वं यामचतुष्टयम्। चन्द्रग्रहे तु यामां स्त्रीन् बालवृद्धातुरैर्विना"॥ चन्द्रस्य ग्रस्तोदये विशेषमाह वृद्धवशिष्ठः। "ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेत्"॥ बालवृद्धातुरविषये वाचस्पतिमिश्रधृतं मार्कण्डेयवचनम्। "सायाह्ने

ग्रहणं चेत्स्यादपराह्ले न भोजनम्। अपराह्ले न मध्याह्ने मध्याह्ने चेन्नसङ्गवे । सङ्गवे ग्रहणं चेत्स्यात् न पूर्वं भोजनक्रिया "॥

अत्रानध्यायोऽपि न दृष्टापरागमात्रविषयः। "त्र्यहं न कीर्त्तयेद् ब्रह्म राज्ञोराहोश्च सूतके"॥ इति मनुवचने सामान्यतो निषेधात् एष त्र्यहानध्यायो ग्रस्तास्तविषय इति मिताक्षरा। अत्रानिष्टाधिक्यमपि। "ग्रस्तावुदितास्तमितौ शारदधान्यावनीश्वरक्षयदौ सर्वग्रस्तौ दुर्भिक्षमरकदौ पापसंदृष्टौ"॥ इति वचनात्। अन्यत्रत्वहोरात्रमनध्यायो याज्ञवल्क्यात् यथा "सन्ध्यागर्जित निर्घात भूकम्पोल्कानिपातने। समाप्य वेदं द्युनिशमारण्यकमधीत्य च॥ पञ्चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके। ऋतुसन्धिषु भुक्त्वा वा श्राद्धिकं प्रतिगृह्य च"॥ द्युनिशमहोरात्रम। पुष्पलिहिचञ्चरीकौ द्युरह्निवक्त्रावपापित्तमिति विश्वप्रकाशात्। ननु तदहोरात्रस्य पञ्चदशीप्रतिपत्घटितत्वात् अनध्यायप्राप्तौ राहुसूतके इत्यनेन पुनरनध्यायाभिधानेऽनुवादापत्तिरिति चेन्न चैत्रश्रावणमार्गशीर्षाणामादि प्रतिपदो नित्या इति ब्रह्मचारि काण्डधृत हारीतवचने एतासामनध्याये नित्यत्वाभिधानादन्यासां काम्यत्वात् आदिप्रतिपदः शुक्लप्रतिपदः। "साच यौधिष्ठिरी सेना गाङ्गेय शरताड़िता। प्रतिपत्पाठशीलानां विद्येव तनुतां गता"॥ इति व्यास वचनमपि तावन्मात्रपरं गाङ्गेयो भीष्मः। एवञ्च ऋतुसन्धिष्विति चतुरुर्वत्सराभिप्रायेण ततश्च राहुसूतक इत्यपि नित्यत्वाय अतएव गौतमोक्ताकालिकानध्यायोऽपि सङ्गच्छते। यथा आकालिकानिर्घात भूकम्पराहुदर्शनोल्काइत्याकालिका इति निमित्तकालमारभ्य परेद्युर्यावत् स एव कालस्तत्र भवा एते चोत् कटनिर्घातादिविषया मनुनोल्कायां तथा विधानात् यथा "विद्युत्स्तनितवर्षेषु महोल्कानां च संप्लवे। आकालिकमनध्यायमेतेषु मनुरब्रवीत्"॥ महोल्कानां संप्लवे इतस्ततोऽनेक महोल्कानां सन्निपाते अङ्गादिषु प्रतिप्रसवमाह मनुः। "वेदोपकरणे चैव स्वाध्याये चैव नित्यके। नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैवहि"॥ पराशरभाष्ये कूर्मपुराणञ्च। "अन-

ध्यायस्तु नाङ्गेषु नेतिहासपुराणयोः। न धर्मशास्त्रेष्वन्येषु पर्वस्वेतानि वर्जयेत्"॥ अङ्गान्याह शिक्षापद्यम्। "छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ कथ्यते। ज्योतिषामयनं नेत्रं निरुक्तं श्रोत्रमुच्यते॥ शिक्षा घ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतम्। तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते"॥ कल्पो-नाना शाखागतलिङ्गादिकल्पितः प्रत्यक्षवेदमूलकः स्वसंज्ञा-भिरनुष्ठानप्रतिपादको ग्रन्थ इति कल्पतरुः। ज्योतिषामयनं ज्योतिःशास्त्रं निरुक्तं वैदिकशब्दनिर्वचन ग्रन्थः। पर्वस्वित्य-नेन संक्रान्तिपरिग्रहेऽप्ययन विषुवयोरेव परिग्रहः। तथा च नारदः। "अयने विषुवे चैव शयने बोधने हरेः। अध्यायस्तु न कर्त्तव्यो मन्वादिषु युगादिषु"॥ सन्ध्यागर्जने तु शास्त्रमात्र-चिन्तानिन्दा माह कृत्यचिन्तामणौ दुर्वासाः। सन्ध्यायां गर्जिते मेघे शास्त्रचिन्तां करोति यः। चत्वारि तस्य नश्यन्ति आयु-र्विद्या यशोबलम्। प्रादुष्कृतेष्वग्निषु तु विद्युत्स्तनित निस्वने। सज्योतिः स्यादनध्याय इत्याह भगवान् मनुः इति मनु वचनं वर्षाविषयम्। अग्निषु तु आवसथ्यादिषु प्रादुष्कृतेषु होमार्थं प्रज्वलितेषु प्रातःसायं सन्ध्यायामित्यर्थः। तस्यां विद्युत् स्तनित-निस्वने सति सौरनाक्षत्रान्यतर ज्योतिषा सह वर्त्तते यः कालः सदिनमात्रं वा रात्रि मात्रमित्यर्थः। अष्टम्यादिषु विशेषमाह हेमाद्रि धृतापस्तम्बः। उदयेऽस्तमये वापि मुहूर्त्तत्रयगामि यत्। तद्दिनं तदहोरात्रमनध्यायविधौ विदुः"॥ केचिदाहुः क्वचिद्देशे यावत्तु दिननाडिकाः। तावदेव त्वनध्यायो न तन्मिश्रदिनान्तरे। तद्दिनं तां तिथिं प्राप्येत्यर्थः। दिनान्तरे तिथ्यन्तरे तत्र पूर्ववचनमुत्तरमीमांसाध्यायिभिः परिगृहीतं परवचनन्तु अन्य ग्रन्थपरं यत्तु निर्णयामृतधृतं "प्रतिपल्लेश-मात्रेण कलामात्रेण चाष्टमी। दिनं दूषयते सर्वं सुरा गव्य-घटं यथा"॥ इति। तत् दूषयत इत्यभिधानात् पूर्ववर्त्तिता-मात्रेण सर्वदिनदूषणाय। यच्चापरमुक्तं ग्रस्तास्तमयपक्षे तद्दिने उपवास एव "मुक्तिं दृष्ट्वा तु भुञ्जीत स्नानं कृत्वापरेऽहनि"॥ इत्यादेः पूर्वदिनभोजनव्यावर्त्तक तयैव सार्थकत्वादिति तदपि न सुन्दरम्। परेऽहनि दृष्ट्वैव स्नात्वा भुञ्जीत रोगादिना तद्दिने

तदकरणे तत्परदिने भोजने तु न दर्शनाद्यपेक्षेत्येतावतैव परे-
ऽहनि इत्यादेः सार्थकत्वात्। एवञ्च "अर्द्धरात्रे व्यतीते तु यदा
चन्द्रग्रहो भवेत्। सायन्तत्र न भुञ्जीत न तु प्रातरभोजनम्"॥
इति वृहन्नारदीय वचनस्याप्यसङ्कोचः स्यादत एव नारायणो-
पाध्यायेन "न स्नानमाचरेद्भुक्त्वा" इत्यादि मनुवचनमप्येत-
दितरविषयमिति ग्रस्तास्तमिते चन्द्रे प्रातर्भोजनस्याभ्यनुज्ञाना-
दिति चाभिहितम्। एष च दर्शननियमोन रागप्राप्तदर्शन
एव मेघादिना तु अदर्शने तु उदयकालमाकलय्यैव भुञ्जीत।
"मेघमालादिदोषेण यदि मुक्तिर्न दृश्यते। आकलय्य तु तं
कालं भुञ्जीत स्नानपूर्वकम्"॥ इति कृत्यतत्त्वार्णवधृतवचनात्।
नचेदमग्रस्तास्तमिति विषयं तावन्मात्रविषयत्वे प्रमाणा-
भावात्। प्रत्युत ग्रस्तास्तविषय एवेदं सार्थकमन्यत्र दर्शना-
पेक्षायां प्रमाणाभावात् तत्र मुक्ते शशिनि भुञ्जीत इत्येताव-
न्मात्रमुक्तम्। यत्तु "सूतके मृतके चैव सूतकं राहुदर्शने।
तावत्स्यादशुचिर्विप्रो यावन्मुक्तिर्न दृश्यते"॥ इति वचनं
तदपि मुक्त्यवधारणपरम्। तथा च ब्रह्मपुराणम्। "यदै-
वास्तं गतश्चन्द्रो राहोराननगोचरः। आकलय्य तु तं कालं
क्रिया कार्य्या विचक्षणैः"॥ अतएवान्येनापि उदयकालमा
कलय्य भुज्यत इति। तथा च संवत्सरप्रदीपे। "ग्रस्ते चास्तं
गतेत्विन्दौ ज्ञात्वा मुक्त्यवधारणम्। स्नात्वा पाकादिकं कार्य्यं
भुञ्जीतेन्दूदये पुनः"॥ कालमाधवीये भृगुः "ग्रस्तावेवास्तम-
नन्तु रवीन्दू प्राप्नुतो यदि। तयोः परेद्युरुदये स्नात्वाभ्यवह-
रेश्वरः"॥ अनयोरुदयमात्रापेक्षोक्ता तस्मान्मुक्तिं दृष्ट्वेति दर्श-
नापेक्षा निर्विरोधविषय एवेति अशौचातिदेशे तु राहुदर्श-
नस्य निमित्तता। सूतक इति प्रागुक्तवचने षट्त्रिंशन्मतवचने
च दर्शनश्रुतेः। तद्यथा "सर्वेषामेव वर्णानां सूतकं राहु-
दर्शने। स्नात्वा कर्माणि कुर्वीत शृतमन्नं विवर्जयेत्"॥ अत-
एव स्मृतिः। "प्रेतश्राद्धे यदुच्छिष्टं ग्रहे पर्युषितञ्च यत्।
दम्पत्योर्भुक्तशेषञ्च न भुञ्जीत कदाचन"॥ उच्छिष्टं पाक-
पात्रेऽवशिष्टम्। ग्रहे उपरागे पर्य्युषितं स्थितं दम्पत्योराश्रम-
स्वामिनोर्भोजनानन्तरं पाकस्थाल्यामवशिष्टमिति श्राद्धवि-

स्नामणिः। यत्तु देवल वचनम् "एकोद्दिष्टस्य शेषन्तु ब्राह्मणेभ्यः समुत्सृजेत्। पश्चात् स्वयञ्च भुञ्जीत पुनर्मङ्गल भोजनम्"॥ तस्य एकोद्दिष्टस्य शेषं ब्राह्मणेभ्यः समुत्सृजेत् नत्ववशेषयेत् पश्चात् स्वयं पुनर्मङ्गल भोजनं पाकान्तरकृतान्नं भुञ्जीत इत्यर्थः तस्यानाचरणात् शास्त्रान्तर विषयम्। ग्रहणादर्शनेनापि मुक्तौ स्नातव्यं मुक्तिमात्रस्यैव जननाशौचनिमित्तत्वात् यथा ब्रह्माण्ड पुराणम्। "ग्रहणे शावमाशौचं विमुक्तौ सौतकं स्मृतम्। तयोः सम्प्राप्तिमात्रेण उपस्पृश्य क्रियाक्रमः"॥ उपस्पृश्य स्नात्वा। संवत्सर प्रदीपे मुक्तौ स्नात्वा पठितव्यम्। "उत्तिष्ठ गम्यतां राहो! त्यज्यतां चन्द्रमण्डलम्। कर्मचाण्डालयोगोत्थं कुरु पापक्षयं मम"॥ इति। सूर्य्यग्रहणे तु सूर्य्यमण्डलम् इति विशेषः। अर्घोऽप्याचारवशाद्दातव्य इति। न च "नेक्षेतोद्यन्त मादित्यं नास्तं यान्तं कदाचन। नोपसृष्टं न वारिस्थं न मध्यं नभसोगतम्"॥ इति मनुवचनेन वैधदर्शन निषेधोऽस्तु जन्म सप्ताष्टेत्यादि निषेधवदिति वाच्यं तत्रोद्यदादित्यादिदर्शनस्य रागप्राप्तस्य साहचर्य्या द्राहुदर्शनस्यापि तथाभूतस्य निषेधः। अतएव "चन्द्रे वा यदि वा सूर्य्ये दृष्टे राहौ महाग्रहे। अक्षयं कथितं पुण्यं तत्राऽप्यर्के विशेषतः"॥ इति मार्कण्डेयवचनं वैधदर्शन परम्। एवञ्च "तैले जले तथावस्त्रमादर्शे च मलान्विते। न पश्येन्न तथा पश्येदुपरक्तं दिवाकरम्"॥ इति विष्णुधर्मोत्तरीयमपि वैधेतरनिषेधकम्। ईक्षितेत्यनुवृत्तौ याज्ञवल्क्यः। नाशुचौ राहुतारका इत्यत्राशुचेः पर्य्युदासाच्छुचेर्दर्शनमनुज्ञातम्। अत्राशुचिर्मूत्रपुरीषोत्सर्गाद्य शौचवान् न तु जननाद्यशौचवान् तत्र दक्षवचनात्। भोजराजः। "एकरात्रं परित्यज्य कुर्य्यात् पाणिग्रहं ग्रहे। प्रयाणे सप्तरात्रन्तु त्रिरात्रं व्रतबन्धने"॥ व्रतबन्धने उपनयने।

अथामावास्या। सा च प्रतिपद्युता ग्राह्या युग्मात्। वराहपुराणे चाण्डाल प्रपथे। "षष्ठ्यष्टम्यप्यमावास्या उभे पक्षे चतुर्द्दशी। अस्नातानां गतिं यास्ये यद्यहं नागमे पुनः"॥ अतोऽत्र स्नानमावश्यकम् अतोऽत्र जीवत्पितृकेणापि स्नातव्यम्। "अमास्नानं गयाश्राद्धं दक्षिणामुखभोजनम्। न

जीवत्पितृकः कुर्य्यात् क्षते च पितृहा भवेत्" ॥ इति वचनं रागप्राप्तस्नाननिषेधकम्। त्रयोदशीप्रकरणोक्त "भोगाय क्रियते यत्तु स्नानं याहच्छिकम् नरैः। इति वचनाच्च। पैठीनसिः। "न पर्वसु तैलं चौरं मांसमभ्युपेयान्नामावास्यायां हरितमपि छिन्द्यात्" इति। पुष्ये तु जन्मनक्षत्रे व्यतीपाते च वैधृतौ। अमायाञ्च नदीस्नानं पुनात्यासप्तमं कुलम्" ॥ अत्र दहत्या जन्म दुष्कृतमिति ज्योतिषे पाठः। व्यासः "अमावस्यां भवेद्वारो यदि भूमिसुतस्य च। गोसहस्रफलं दद्यात् स्नानमात्रेण जाह्नवी ॥ सिनीवाली कुहूर्वापि यदि सोमदिने भवेत्। गोसहस्रफलं दद्यात् स्नानं यन्मौनिना क्षतम्" ॥ सिनीवाली चतुर्दशीयुक्तामावास्या व्यस्तापि प्रशस्ता एवमन्यत्रापि वारविशिष्टविधौ न युग्मादरः निरवकाशत्वे न संशयायोगात्। एतच्च मौनमरुणोदयमारभ्य स्नानपर्य्यन्तं न तु स्नान कालमात्रे। तत्र "उच्चारे मैथुने चैव प्रस्रावे दन्तधावने। स्नाने भोजनकाले च षट्सु मौनं समाचरेत्" ॥ इति स्कान्देन तस्य तस्य सामान्यतः प्राप्तत्वात् उच्चारे पुरीषोत्सर्गे। स्मृतिः। "करतोयाजलं प्राप्य यदि सोमयुताकुहूः। अरुणोदयवेलायां सूर्य्यग्रहशतैः समा" ॥ स्नानमन्त्रः। "करतोये सदा नीरे सरित् श्रेष्ठे सुविश्रुते। पौण्ड्रान् प्लावयसे नित्यं पापं हर करोद्भवे"॥ पौण्ड्रान् देश विशेषान्। मरीचिः। "मासे नभस्यमावास्या तस्यां दर्भचयो मतः। अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः" ॥ अत्र "दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणा हविरग्नयः। अयातयामान्येतानि नियोज्यानि पुनः पुनः" ॥ इति गृह्यपरिशिष्टवचनेनैव सिद्धौ श्रावणामावास्याया उपादानं "वार्षिकांश्चतुरो मासान्नाहरेत् कुशमृत्तिकाः। आददीत त्वभावेऽपि सद्यो यस्योपयोजनम्" इति संवत्सरप्रदीपधृत शिवरहस्योयस्यापवादकमिति। विद्याकर धृतम्। "संग्रहाद्वत्सरं यावत् शुद्धिः स्यादिध्मवर्हिषाम्। ततः परं न गृह्णीयात् जपादौ यज्ञकर्म्मणि" ॥ संवत्सरप्रदीपे "अमावास्यान्तु कन्यार्के तीर्थप्राप्तौ तथा नृप। कृत्वा श्राद्धं विधानेन दद्यात् षोड़श पिण्डकम्" ॥ वायुपुराणीय तत्

प्रयोगो यथा। ऊनविंशति दासमानपिण्डस्थानानि यथा दक्षिणं भागचतुष्टयेन कृतानि तत्र दक्षिणाग्रान् कुशाना-स्तीर्य्य "अस्मत् कुले मृता ये च गतिर्येषां न विद्यते। आवा-हयिष्ये तान् सर्वान् दर्भपृष्ठे तिलोदकैः॥ मातामहकुले ये च गतिर्येषां न विद्यते। आवाहयिष्ये तान् सर्वान् दर्भपृष्ठे तिलोदकैः॥ बन्धुवर्गकुले ये च गतिर्येषां न विद्यते। आवा-हयिष्ये तान् सर्वान् दर्भपृष्ठे तिलोदकैः"॥ इत्येतैस्तिलोद-कैरावाह्य "आब्रह्मस्तम्भपर्य्यन्तं देवर्षिपितृमानवाः। तृप्यन्तु पितरः सर्वे मातृमातामहादयः। अतीतकुलकोटीनां सप्त-द्वीपनिवासिनाम्॥ आब्रह्मभुवनाल्लोकादिदमस्तु तिलो-दकम्"॥ इत्येताभ्यां तिलोदकाञ्जलीन् दद्यात् ततो मूला-दितः पितृतीर्थेन पिण्डान् दद्यात् तत्र क्रमः। "अस्मत्कुले मृता ये च गतिर्येषां न विद्यते। तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्॥ मातामहकुले ये च गतिर्येषां न विद्यते। तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्॥ बन्धुवर्गकुले ये च गतिर्येषां न विद्यते। तेषामुद्धरणार्थाय इमं पिण्डं ददा-म्यहम्॥ अजातदन्ता ये केचित् ये च गर्भे प्रपीड़िताः। तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्॥ अग्निदग्धाश्च ये केचिन्नाग्निदग्धास्तथा परे। विद्युच्चौरहता ये च तेभ्यः पिण्डं ददाम्यहम्॥ दावदाहे मृता ये च सिंहव्याघ्रहताश्च ये। दंष्ट्रिभिः शृङ्गिभिर्वापि तेभ्यः पिण्डं ददाम्यहम्॥ उद्बन्धन-मृता ये च विषशस्त्रहताश्च ये। आत्मोपघातिनो ये च तेभ्यः पिण्डं ददाम्यहम्॥ अरण्ये वर्त्मनि वने क्षुधया तृष्ण-या हताः। भूतप्रेतपिशाचाश्च तेभ्यः पिण्डं ददाम्यहम्"॥ वने जले। "रौरवे चान्धतामिस्रे कालसूत्रे च ये स्थिताः। तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्॥ अनेक यातना-संस्थाः प्रेतलोके च ये गताः। तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्॥ अनेक यातनासंस्था ये नीता यमकिङ्करैः। तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्॥ नरकेषु समस्तेषु यातनासु च ये स्थिताः। तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्॥ पशुयोनिगता ये च पक्षिकीट सरीसृपाः।

अथवा वृक्षयोनिस्था स्तेभ्यः पिण्डं ददाम्यहम्॥ जात्यन्तर सहस्रेषु भ्रमन्तः स्वेन कर्मणा। मानुष्यं दुर्लभं येषां तेभ्यः पिण्डं ददाम्यहम्॥ दिव्यान्तरीक्ष भूमिष्ठाः पितरो बान्धवादयः। मृता असंस्कृताये च तेभ्यः पिण्डं ददाम्यहम्॥ ये केचित् प्रेतरूपेण वर्त्तन्ते पितरो मम। ते सर्वे तृप्तिमायान्तु पिण्डदानेन सर्वदा॥ ये बान्धवा बान्धवा वा येऽन्य जन्मनि बान्धवाः। तेषां पिण्डो मया दत्तोऽक्षय्यमुपतिष्ठताम्॥ पितृवंशे मृताये च मातृवंशे च ये स्थिताः। गुरुश्वशुरबन्धूनां ये चान्ये बान्धवामृताः। ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः। क्रियालोपगता ये च जात्यन्धाः पङ्गवस्तथा। विरूपा आमगर्भाश्च ज्ञाताज्ञाताः कुले मम। तेषां पिण्डो मया दत्तोऽक्षय्यमुपतिष्ठताम्॥ अब्रह्मणा ये पितृवंश जाता मातुस्तथा वंशभवा मदीयाः। कुलद्वये ये मम दासभूताभृत्यास्तथैवाश्रितसेवकाश्च॥ मित्राणि सख्यः पशवश्च वृक्षा दृष्टाश्च दृष्टाश्च कृतोपकाराः। जन्मान्तरे ये मम दासभूतास्तेभ्यः स्वधा पिण्डमहं ददामि"॥ अत्रोनविंशति पिण्डे षोड़शपिण्डकं पारिभाषिकं पञ्चास्रवत्।

प्रौष्ठपद्यूर्द्ध्वमश्वयुक्कृष्णपक्षस्य प्रतिपदादिपञ्चदशक षष्ठ्यादि दशक एकादश्यादिपञ्चक त्रयोदश्यादित्रिक तिथिरूप कल्पचतुष्टयान्यतमेषु प्रतितिथिषु श्राद्धं कर्त्तव्यं पूर्वं पूर्वकल्पे फलभूयस्त्वं तथा च ब्रह्मपुराणम्। "अश्वयुक्कृष्णपक्षे तु श्राद्धं कुर्य्यात् दिने दिने। त्रिभागहीनं पक्षं वा त्रिभागं त्वर्द्धमेव वा"॥ अर्द्धमेववेति अर्द्धं कुर्य्यादेवेत्ययोगव्यवच्छेदपरं अर्द्धं तन्न्यूनव्यवच्छेदपरं वा उभयथापिऽर्द्धस्यावश्यकत्व तत्र त्रिभागस्यैवार्द्धत्वे सम्भवति न तु पक्षस्य तथात्वे त्रिभागकरणे अर्द्धमेवेति नियमानुपपत्तेः। अश्वयुगश्विनौ तद्युक्तपौर्णमासो सम्बन्धाल्लक्षणया मासेऽप्यश्वयुक्पदप्रयोगः। ततश्च निमन्त्रणादौ आश्विने मासि कृष्णपक्षे इत्येव स्वारसिकः प्रयोगः कर्त्तव्यः स्वारसिकवाक्ये दिने दिने तिथौ तिथौ। "तिथिरेके दिवसश्चान्द्रमाने प्रकीर्त्तितः"। इति विष्णुधर्मोत्तरीयानुसारेण गौणचान्द्राश्विनस्यापि चान्द्रत्वेनात्र दिनस्यापि तथैव युक्तत्वात् विष्णु-

धर्मोत्तरे। "उत्तरादयनात् श्राद्धे श्रेष्ठं स्याद्दक्षिणायनम्। चातुर्मास्यञ्च तत्रापि प्रसुप्ते केशवे हितम्॥ प्रौष्ठपद्याः परः पक्षस्तत्रापि च विशेषतः। पञ्चम्यूर्द्धञ्च तत्रापि दशम्यूर्द्धमतोप्यति। मघायुक्ता तु तत्रापि शस्ता राजं स्त्रयोदशी"॥ बृहद्राजमार्त्तण्डे। मत्स्यपुराणम्। "कन्यां गते सवितरि दिनानि दशपञ्च च। पार्वणेन विधानेन श्राद्धं तत्र विधीयते"। कार्ष्णाजिनिभविष्योत्तरीययोः। "नभस्य स्यापरे पक्षे श्राद्धं कुर्य्यात् दिने दिने। नैव नन्दादि वर्ज्यं स्यात् नैव वर्ज्या चतुर्दशी"॥ नभस्यस्येति मुख्यचान्द्रेण भाद्रस्य। अत्र प्रागुक्त देवीपुराणान्मघात्रयोदश्यां पुत्रवता पिण्डरहित श्राद्धे न कृते नैवाश्वयुक्कृत्यश्राद्धस्य निर्वाहो न त्वङ्गभूत पिण्डानुरोधेन श्राद्धान्तरं कर्त्तव्यम्। "प्रधानस्याक्रिया यत्र साङ्गं तत् क्रियते पुनः। तदङ्गस्या क्रियायान्तु नावृत्तिर्न च तत् क्रिया"॥ इति छन्दोगपरिशिष्टात्। एवं प्रेतपक्षादिमृतस्य पार्वणविधिना सांवत्सरिक श्राद्धे कृते मातामहादि श्राद्धाय न पुनः पार्वणारम्भः। "पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम्"। इति बृहस्पतिवचनेन "मातामहानामप्येवं श्राद्धं कुर्य्याद्विचक्षणः"॥ इत्यनेन च पितुः श्राद्धाधीनप्रवृत्तेः। एवमविभक्तसापत्न भ्रात्रीरेकेन पार्वणे कृतेऽपरेण मातामहश्राद्धाय पुनः पार्वणं न करणीयम्। अतएव द्वैत निर्णयेऽपि साग्निकौरसेन पितुः क्षयाहे पित्रादित्रिकस्य श्राद्धे कृते तत्र मातामहश्राद्धाय न पार्वणारम्भः वाजिनवत्तस्याप्रयोजकत्वादित्युक्तम्।

स्मृतिः। "तीर्थे तिथिविशेषे च गङ्गायां प्रेतपक्षके। निषिद्धेऽपि दिने कुर्य्यात्तर्पणं तिलमिश्रितम्"॥ गङ्गाव्यतिरिक्त तिलतर्पणस्य निषेधमाह "पित्रोः श्राद्धे रवौ शुक्रे संक्रान्त्यां निशिसन्ध्ययोः। सप्तम्यां वर्षवृद्धौ च न कुर्य्यात्तिलतर्पणम्"॥ प्रपञ्चस्तु मलमासतत्त्वेऽनुसन्धेयः। भविष्ये। "येयं दीपान्विता राजन्! ख्याता पञ्चदशी भुवि। तस्यां दद्यान्नचेद्दत्तं पितॄणां वै महालये"॥ महालये कन्यागतापरपक्षे नचेद्दत्तं मलमासादिना अमावास्यायामपि। मलमासे श्राद्धा-

भावमाह कौथुमिः । "संवत्सरातिरेको वै मासो यः स्यात्त्रयोदशः । तस्मिं स्त्रयोदशे श्राद्धं न कुर्य्यादिन्दुसंक्षये" ॥ संवत्सर प्रदीपे । "एकराशिस्थिते सूर्य्ये यदि दर्शद्वयं भवेत् । दर्शश्राद्धं तदादौ स्यात् न परत्र मलिम्लुचे" ॥ यत्तु "जातकर्म्मणि यच्छ्राद्धं दर्शश्राद्धं तथैव च । मलमासेऽपि तत्कार्य्यं व्यासस्य वचनं यथा" इति व्यासवचनं तत्पिण्डपितृयज्ञाख्यश्राद्धपरमिति मलमासतत्त्वे विवृतम् ।

अमावास्या श्राद्धकालमाह छन्दोगपरिशिष्टम् । "पिण्डान्वाहार्य्यकं श्राद्धं क्षीणे राजनि शस्यते । वासरस्य तृतीयांशे नातिसन्ध्यासमीपतः" ॥ पिण्डान्वाहार्य्यकमिति । "ततः प्रभृति पितरः पिण्डसंज्ञान्तु लेभिरे" ॥ इति मत्स्य पुराणात् पिण्डानां पितॄणां अन्वाहार्य्यं श्राद्धं मासैकतृप्तिजनकं यत्तथा तथा च मनुः । "पिण्डानां मासिकं श्राद्धमन्वाहार्य्यं विदुर्बुधाः" ॥ राजनि चन्द्रे । शस्यत इत्यनेन क्वचिच्चन्द्रक्षयाभावेऽप्यमावास्या श्राद्धं सूचितं एता दृग्व्युत्पत्तेः । साग्निनिरग्निसाधारणत्वाद्वक्ष्यमाण कात्यायनोक्तरीत्या क्षीणा स्तम्भितावर्द्धमानाभेदः साधारणः । यत्तु "पितृयज्ञन्तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान् । पिण्डान्वाहार्य्यकं श्राद्धं कुर्य्यान्मासानुमासिकम्" ॥ इति मनुवचनं तत्साग्निः पिण्डपितृयज्ञं निर्वर्त्य मासानुमासिकं प्रतिमासिकं श्राद्धं कुर्वीतेति क्रमविधायकम् अत्रानुशब्दस्य वीप्सार्थकत्वं तथा च "लक्षणवीप्सेत्थम्भूतेष्वभिभागेपरिप्रतौ । अनुरेषु सहार्थे च हीने उपश्च कथ्यते" ॥ चन्द्रक्षयेऽमावास्यायां न तु कात्यायनोक्त क्षये तथात्वे वर्द्धमानादौ प्रतिमासानुपपत्तेः । एवमेव श्राद्धविवेकः । अतएव तत्रैवामावास्याव्यतिरिक्त कृष्णपक्षविहित पार्वणश्राद्धे यथास्तमिति वचनाद्व्यवस्थेत्युक्तं तत्र साग्निकर्त्तव्यत्वाविशेषितामावास्याव्यतिरेकाभिधानात् क्षीणादिभेदेन व्यवस्था साग्निनिरग्नि साधारणीत्यवगम्यते । एवञ्चामावास्यायां मृताहनिमित्तकौरस क्षेत्रज पुत्र कर्त्तव्य पार्वणेन क्षीयमाणादिना न व्यवस्था किन्तु यथास्तमित्यनेन । एतद्विवृतं मलमासतत्त्वे । न तु दशम मुहूर्त्तकस्य मत्स्यपुराणोक्तापराह्णिकत्वेऽपि श्राद्धे

तस्य त्यागः। पिण्डपितृयज्ञार्थमेवेति वासर तृतीयांशाभिधानं साग्निकपरमेवेति परिशिष्टप्रकाशोक्तं तन्न युक्तं "पूर्वाह्णो वै देवानां मध्यं दिनं मनुष्याणाम् अपराह्णः पितृणाम्" ॥ इति श्रुत्या तन्मुहूर्त्तस्य मनुष्यकर्माङ्गत्वेन बोधनादेव श्राद्धे परित्यागः। एतत् श्रुतिमूलकमेव वासरस्य तृतीयांश इत्युक्तं वासरस्य तृतीयांशे त्रिधाविभक्तस्य दिनस्य तृतीयभागे नातिसन्ध्यासमीपत इति सन्ध्यासमीपैकमुहूर्त्तं आपद्यपि वर्जनीय इत्यर्थः। तेन "प्रातःकालो मुहूर्त्तां स्त्रीन् सङ्गवस्तावदेव तु। मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्णस्ततः परम् ॥ सायाह्नस्त्रिमुहूर्त्तः स्याच्छ्राद्धं तत्र न कारयेत्। राक्षसी नाम सा वेला गर्हिता सर्वकर्मसु"॥ इति मत्स्यपुराणे निषिद्धमुहूर्त्तत्रये आपदि मुहूर्त्तद्वयमभ्यनुज्ञातम् अतिशब्दस्वरसात्। "त्रिमुहूर्त्तापि पूर्वादर्शा च बहृचैः" ॥ इति हारीत वचनाच्च तेन पूर्वदिने मुहूर्त्तत्रयमात्रलाभे परदिने वासरतृतीयांशालाभे पूर्वदिन एव श्राद्धम् एतेन नातिसन्ध्यासमीपत इत्यनेन राक्षसी वेलामात्रं निषिध्यत इति मैथिलमतमपास्तं सर्वकर्मसु स्नानदानादिष्वपि अनापदीत्यर्थं इति श्राद्धविवेकः। तेनाशक्तौ तस्यामपि तत्करणम् अतएव पराशरः "दिवाकरकरैः पूतं दिवा स्नानं प्रशस्यते। अप्रशस्तं निशि स्नानं राहो रन्यत्र दर्शनात्" ॥

दर्शद्वैधे कुत्र श्राद्धमित्याह छन्दोगपरिशिष्टे कात्यायनः। "यदा चतुर्दशी यामं तुरीयमनुपूरयेत्। अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते" ॥ चतुर्दशीयाम चतुर्दशी सम्बन्धिदिनयाममिति तद्दिनस्यामावास्यासम्बन्धेऽपि चतुर्दशी निर्देशोऽधिकेन व्यपदेशा भवन्तीति न्यायात्। तेन यदा अमावास्याचतुर्दशीसम्बन्धि दिनस्य चतुर्थ प्रहरं कृत्स्नं किञ्चिन्न्यूनं वा अनुपूरयेत्। अत्रानुपूरयेदित्यभिधानात् तुरीययामस्य पादोन दण्डद्वयान्यून प्रथम मुहूर्त्तस्य बहुकालत्वं प्रतीयते। एतेन प्रहर त्रयाभ्यन्तरे किञ्चिदधिक प्रहरत्रये वा चतुर्दशी प्रतीयते। ततश्चोभयवासरीय तृतीयांशसम्बन्धि पञ्चधा विभक्तापराह्णमुहूर्त्तयोर्मुहूर्त्तान्यून दर्शलाभे द्वैधं तत्रैकदिनमात्रे

तल्लाभे । तत्र पूर्वोक्तेन वासरस्य तृतीयांश इत्यनेनैव द्वैधानुदयात् । अतो यद्दिने वासर तृतीयांशे तादृश दर्शलाभस्तत्रैव श्राद्धम् । मुहूर्त्तेन तिथेस्तु कर्मानर्हत्वान्न द्वैधावसरः । तथा च भविष्ये "व्रतोपवासनियमे घटिकैका यदा भवेत् । सा तिथिः सकलाज्ञेया पित्रर्थे चापराह्निकी ॥" इति । अत्र च प्रागुक्ता जावालिवचनोक्ता मुहूर्त्तात्मिका घटिका ग्राह्या योग्यत्वात् नत्वेकदण्डात्मिका वक्ष्यमाणरोहिणादिग्रहणे तथा दृष्टत्वाच्च । ततश्च पूर्वोक्तद्वैधे तद्दिवसीय चतुर्दश्यपेक्षया परदिने अमावास्या क्षीयमाणा न्यून कालव्यापिनी न तु पूर्वापर दिवसीय यावच्चतुर्दश्यपेक्षयाऽनुपपत्तेः । एवं स्तम्भितावर्द्धमानयोरपि तदैव पूर्वदर्श एव श्राद्धम् । स्मोक्तचन्द्रक्षयानुरोधात् । यदा त्रिंशद्दण्डात्मकदिवसे चतुर्दश्यधिक चतुर्थयामपूरणे मुख्यापराह्णीय किञ्चिन्न्यूनमुहूर्त्त लाभस्तदापि तदैवेत्यनेन चन्द्रक्षयानुरोधात् पूर्वदिने श्राद्धं नतु मुख्यापराह्णीयमुहूर्त्तलाभेऽपि परदिने अत्र चन्द्रक्षयश्चतुर्दश्यष्टमयामात् प्रभृति अमावास्यासप्तमयामपर्य्यन्तमिति वक्ष्यते । तदैवेत्येवकारश्रवणात्तिथिद्वैधे खण्ड विशेषो नियम्यते कर्मणि खण्डान्तरव्युदासाय । एवञ्च यत्र पूर्वापरदिने वासर तृतीयांशीयमुख्यापराह्णे मुहूर्त्तेनदर्शलाभस्तत्रापि पूर्वदिन एव श्राद्धं वासरतृतीयांश चन्द्रक्षयाति शब्दस्वरसात् । त्रिमुहूर्त्तापीत्यनुरोधाच्च । यत्र तु पूर्वदिने त्रिमुहूर्त्तमात्रव्यापिन्यमावास्यापरदिने तृतीयांशमुहूर्त्तव्यापिनी सती क्षीयमाणा तत्र परदिने चन्द्रक्षयाभावेऽपि मुख्यापराह्णलाभात् श्राद्धम् अन्यथा "यदा चतुर्दशीयामं तुरीयमनुपूरयेत्" ॥ इति विशेषाभिधानं व्यर्थं स्यात् । अथ यत्र पूर्वाह्णे श्राद्धं तत्र "यदहस्त्वेव चन्द्रमा न दृश्येत तामामावस्यां कुर्वीत" ॥ इति गोभिलविरोधः तथाविध चतुर्दशीयुक्तामावास्यायाः सिनीवालीत्वेन प्रातश्चन्द्रदर्शनात् । तत्राह स एव । "यदुक्तं यदहस्त्वेव दर्शनं नैति चन्द्रमाः । तत्क्षयापेक्षया ज्ञेयं क्षीणे राजनि चेत्यपि" ॥ यदहस्त्वेव चन्द्रमा न दृश्येतताममावास्यां कुर्वीत" । इति यत् गोभिलसूत्रं तच्चन्द्रक्षयाभिप्रायिकम्

१५

अन्यथा गोभिलीय तादृश सूत्रान्तरेण सह पौनरुक्त्यापत्तेः तस्मात् प्रथमसूत्रं कुहूपरं तच्च वर्द्धमानापक्षे नियतं क्षीणा-स्तम्भितयोस्तु यथायोग्यमनुसरणीयम् । एवञ्च "यदहस्त्वेव चन्द्रमा न दृश्येतताममावास्यां कुर्वीत" ॥ इति श्रुतिरेतत् समानार्थकं श्रुत्यन्तरं वा तदपि वर्द्धमानादि परं न तु कात्या-यन वचनात्तत्र क्षयलक्षणा कल्पतरु प्रभृतिभिरुक्ता युक्ता "श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी" ॥ इति विरोधात् । क्षीण इति कात्यायनेन मया यत् क्षीणे राजनीत्युक्तं तदपि क्षयाभिप्रायकम् । "यथैवं दृश्यमानेऽप्येकदा" ॥ इति यद्गो-भिलस्य सूत्रान्तरं तद्ग्रथं यदहस्त्वेवेत्यादि द्वितीयसूत्र प्राप्त-तिथेः सिनीवालीत्वेनैव चन्द्रदर्शन प्राप्तेरित्यत आह स एव । "यद्योक्तं दृश्यमानेऽपि तच्चतुर्दश्यपेक्षया । अमावास्यां प्रती-क्षेत तदन्ते वापि निर्वपेत्" ॥ दृश्यमानेऽप्येकदेति यदुक्तं तच्च-तुर्दश्यां श्राद्धाय पूर्वसूत्रममावास्यापदोपादानाच्चन्द्रक्षये मात अमावास्याविषयम् । इदं पुनरित्यम्भूतचतुर्दशीविषयमिति श्राद्धविवेकः । तत्किममावास्यावच्चतुर्दशीत्यत्राह अमावास्यां प्रतीक्षेत त उभय तिथिप्राप्तौ श्राद्धायामावास्या प्रतीक्षणीया यत्र पूर्वदिने दिवासार्द्ध मुहूर्त्तमात्रेऽमावास्या परदिने च सार्द्ध-दशम मुहूर्त्तमात्रे तत्रोभयदिने श्राद्ध योग्यामावास्या न प्राप्यते तत्र तदन्ते चतुर्दश्यन्ते निर्वपेत् दद्यात् । अत्रैवविषये साग्निनिरग्न्योर्विशेषमाह कालमाधवीये जावालिः । "अप-राह्नद्वयाव्यापी यदि दर्शस्तिथिक्षये । आहिताग्नेः सिनीवाली निरग्न्यादेः कुहूर्मता" ॥ आदिशब्दादनुपनीतशूद्रयोर्ग्रहणम् ।

क्षयमाह कात्यायनः । "अष्टमेऽंशे चतुर्दश्याः क्षीणो-भवति चन्द्रमाः । अमावास्याष्टमांशे च ततःकिल भवेदणुः"॥ चतुर्दश्यष्टमे यामे चन्द्रमाः क्षीणः चतुर्थं भागोनकलावशिष्टो-भवति । "अत्रेन्दुराद्य प्रहरेऽवतिष्ठते" ॥ इत्यादिस्वरसात् । अमावास्याष्टमे यामे चाणुर्भवति पुनरुत्पद्यते किलेत्यागमवा-र्त्तायां तेनामावास्यायाः सप्तमे यामे क्षत्क्षय इत्यवगम्यते । ततश्चान्त्य कलावयवनाशोत्पत्तिरेव क्षयः सा च सूक्ष्मतायां विनाशेऽप्यस्तीति श्राद्धविवेकः । उत्पत्तिराद्यक्षणसम्बन्धः तेन

विनाशस्यानन्तत्वेऽपि नातिव्याप्तिः। अत्रविशेषमाह स एव। "आषाढ्यायाममावास्या तथा ज्येष्ठस्य या भवेत्। विशेषमाभ्यां ब्रुवते चन्द्रचारविदोजनाः" ॥ आभ्यामिति ल्यप्लोपे पञ्चमी। इमे प्राप्येत्यर्थः चन्द्रचारविदो ज्योतिर्विदः। अत्र पौर्णमास्यन्त-मास इति परिशिष्टप्रकाशः। अत्र बीजं ब्रह्मपुराणीयतिथि-कृत्यम्। तथा च श्राद्धमधिकृत्य ब्रह्मपुराणम्। "पयोमूल-फलैः शाकैः कृष्णपक्षे च सर्वदा" ॥ अत्र कृष्णपक्षे चतुर्दशी-व्यतिरिक्तायां यस्यां कस्याञ्चित्तिथौ श्राद्धविधानादमावा-स्यापि लभ्यत इति कोविशेष इत्यत्राह स एव। "अत्रेन्दुराद्ये प्रहरेऽवतिष्ठते चतुर्थभागोनकलावशिष्टः। तदन्त एव क्षय-मेति कृत्स्नमेवं ज्योतिषचक्रविदो वदन्ति"। अत्र मासद्वयेऽ ऽमावास्यायां चतुर्थभागोनकलावशिष्टः चतुर्थभागोना या कला तयावशिष्टः कलाभागत्रयमात्रः सन्नाद्ये प्रहरेऽवतिष्ठते। अर्थात् चतुर्दश्यष्टमयामे क्षयारम्भ इति तदन्त एव अमावस्या-न्त्याम एव क्षयं कृत्स्नमेति। अन्यत्रामावास्यासप्तमयाम इति विशेषः। तेन मार्गशीर्ष ज्यैष्ठयोरुभयदिने चन्द्रक्षय-लाभे यद्यपि यदा चतुर्दशीयाममिति वचनात् पूर्वदिन एव श्राद्धं प्राप्नोति तथापि तद्वचनं चन्द्रक्षयानुरोधमूलमिति कृत्-स्नक्षयानुरोधात् क्षीणायामपि परत्रापराह्णलाभे श्राद्धम् अन्य-थैतद्विशेषाभिधानं व्यर्थं स्यात्। अत्रापि विशेषान्तरमाह स एव। "यस्मिन्नब्दे द्वादशैकश्च यश्यस्तस्मिंस्तृतीयया परि-दृश्यो नोपजायेत" यश्योमासः तृतीयया मात्रया चतुर्थभागोन-कलया परिदृश्यश्चन्द्रो न भवति किन्तु तदधिक न्युनकलयेति। तेन मलमासयुताब्दे अन्यमासवदनयोरपि चतुर्दश्यन्त्यामादि-दर्शसप्तमयामपर्यन्तं क्षय इति। मलमासयुताब्दस्तु एकस्मा-न्मलमासादब्दद्वयानन्तराब्द स्तृतीयेऽब्दे मलमासस्यावश्यम्भा-वादिति। चन्द्रक्षयानुरुद्धं क्षीणपक्षमुपसंहरति स एव। "एवं चारं चन्द्रमसो विदित्वा क्षीणे तस्मिन्नपराह्णे च दद्यात्"॥ एवं चारं गतिविशेषम्।

स्तिमितायां व्यवस्थामाह स एव। "सम्मिश्रया चतुर्दश्या अमावास्या भवेत् क्वचित्। खर्वितां तां विदुः केचिदुपेक्ष्य-

मिति चापरे"॥ क्षीणायाः पूर्वमुक्तत्वात् वर्द्धमानायाश्च वक्ष्यमाणत्वादस्य वचनस्य स्तम्भितापरत्वम्। खर्विताँ नौचाम्। पितृलोकप्रापणानर्हां केचित् यजुर्वेदिनः अपरे ऋग्वेदिनः तामेव उपेध्वमुपगच्छत श्राद्धायेति शेषः उपेध्वमित्यत्र गताध्वामिति पाठे गतः प्राप्तः पितृलोकप्रापणाय अध्वाऽनयेति गताध्वा प्रशस्तेत्यर्थः। तस्माच्छन्दोगा उभयानुरोधादिच्छात उभयादरं कुर्वन्ति इति कात्यायनस्वरसः। व्यक्तमाह लघुहारीतः "त्रिमुहूर्त्तापि कर्त्तव्या पूर्वादर्शा च बह्वृचैः। कुहुरध्वर्य्युभिः कार्य्या यथेष्टं सामगैतिभिः"॥ अत्र त्रिमुहूर्त्तेत्युपादानात् स्तम्भितायाः पूर्वदिने त्रिमुहूर्त्तमात्र लाभेऽपि बह्वृचानां श्राद्धं मुख्यापराह्णलाभादपि परदिने सामगानां तत्राप्यनियमः एतादृग्विषय एव उभयत्रापराह्णालाभेऽपीयं व्यवस्थेति श्राद्धविवेकः। मुख्यापराह्णस्य एकदिन मात्र लाभेऽप्युभयदिनालाभात।

वर्द्धमानायां व्यवस्थामाह कात्यायनः। "वर्द्धमानाममावास्यां लक्षयेदपरेऽहनि। यामां स्त्रीनधिकान् वापि पितृयज्ञस्ततो भवेत्"॥ यामां स्त्रीनिति पूर्वदिवसीय यामत्रयन्यून चतुर्द्दश्यपेक्षया अथैवं वासर तृतीयांशानुरोधेन श्राद्धविधानात् कथममावास्याश्राद्धे पर्य्युदस्तरात्रादौतरकालपरिग्रहः सत्यम्। तिथिद्वैधे क्षीणादिभेदेन खण्डविशेषपरिग्रहाय वासर तृतीयांशापेक्षा अन्यथोभयदिने वासर तृतीयांशाप्राप्तौ श्राद्धलोपापत्तेः प्रागुक्त निरम्न्यादेः कुह्वमतेत्यस्य निर्विषयतापत्तेश्च अतः पर्य्युदस्तेतरकालस्यापि परिग्रहः यदा तु पूर्वापरखण्डयोरन्यतरस्यैव परिग्रहस्तदा यथा योग्यं तत्रैव सायाह्न मुहूर्त्तद्वय पर्य्युदस्तेतरकाल कुतपादि मुहूर्त्तपञ्चक रौहिणादि मुहूर्त्तचतुष्टय वासर तृतीयांशीयापराह्णमुहूर्त्तद्वयकाला यथाक्रममापत् सामान्यप्रशस्त प्रशस्ततर प्रशस्ततमत्वेन ज्ञेयाः एवमखण्डतिथावपि नातिसन्ध्यासमीपत इति पूर्वोक्तत्वात्। "सायाह्ने त्रिमुहूर्त्तःस्याच्छ्राद्धं तत्र न कारयेत्" इति मत्स्यपुराणात् "रात्रौ श्राद्धं न कुर्वीत राक्षसी कीर्त्तिता हि सा। सन्ध्ययोरुभयोश्चैव सूर्य्ये चैवाचिरोदिते"

इति मनुवचनाभ्याम् "ऊर्द्धं मुहूर्त्तात् कुतपात् यन्मुहूर्त्तं चतुष्टयम्। मुहूर्त्तपञ्चकं वापि स्वधाभवनमिष्यते" इति मत्स्यपुराणात् मुहूर्त्तपञ्चकमित्यत्र कुतपादिति ल्यप्लोपे पञ्चमी कुतपमारभ्येत्यर्थः। ततस्तेनैव "अपराह्णे तु संप्राप्ते अभिजिद्रौहिणोदये। यदत्र दीयते जन्तोस्तदक्षयमुदाहृतम्"॥ इत्युक्तम्। "पूर्वाह्णो वै देवानां मध्यं दिनं मनुष्याणाम् अपराह्णः पितॄणाम्"॥ इति श्रुतेः। वासरस्य तृतीयांश इति कात्यायनवचनं सायाह्नस्त्रिमुहूर्त्तः स्याच्छ्राद्धं तत्र न कारयेदित्येषामेकवाक्यत्वाद्वासरतृतीयांशीयापराह्णमुहूर्त्तद्वयस्य लाभ इति। अत्र "दर्शश्राद्धन्तु यत् प्रोक्तं पार्वणं तत् प्रकीर्त्तितम्। अपराह्णः पितॄणान्तु तत्र दानं प्रशस्यते"॥ इति शातातपीय वचने प्रशस्यत इत्यभिधानात्"मासि मास्यपरपक्षस्यापराह्णः श्रेयान्"॥ इत्यापस्तम्बवचने श्रेयानित्यभिधानाच्च प्रशस्यतारतम्यं कल्प्यते न तु मुख्यकल्पानुकल्पत्वमिति। अपरपक्षस्य कृष्णपक्षमात्रस्य तथा च श्रुतिः "पूर्वः पक्षो देवानामपरःपक्षः पितॄणाम्" इति एवञ्चामावास्या न निमित्तान्तरं किन्तु कृष्णपक्षनिमित्तकश्राद्धस्य प्रशस्तकालपरा अतएव शक्तेस्तारतम्येन बहून् कल्पानाह गौतमः। "अथ श्राद्धममावास्यायां पितृभ्यो दद्यात् पञ्चमी प्रभृति वापरपक्षस्य यथा श्राद्धं सर्वस्मिन् वा द्रव्यदेशब्राह्मण सन्निधौ वा कालनियमः शक्तित इति"॥ योऽयममावास्यादि कालनियमः स शक्तस्य सद्रव्यस्यारोगिणोबोद्धव्य इति श्राद्धविवेकः। अतएवामावास्यायामति प्राशस्त्यमाह निगमः। "अपरपक्षे यदह्नः सम्पद्यते अमावास्यायान्तु विशेषेण"॥ तथा च मनुः। "कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम्। श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः"॥ अत्र चतुर्दशी वर्जनं तदन्ते वापि निर्वपेदित्युक्त विषयेतरविषयमन्यथा तद्वचनं व्यर्थं स्यात् नचेदं शस्त्रहत पितृमात्रविषयं तस्य प्रकरणभेदादनुपस्थितेः अमावास्यायाः प्रतीक्षायाः असम्भवे चतुर्दशी विधानाच्च। यत्तु "कार्य्यं श्राद्धममावास्यां मासिमास्युडुपक्षये"। इति मार्कण्डेयपुराणेऽभिहितं तन्मासि मासि यत् कार्य्यं श्राद्धं तच्चन्द्रक्षयेऽमावास्यां प्राप्यातिप्रशस्तं

गोतमादि वचनैकमूलत्वाच्चन्द्रक्षयाभावेऽपि वर्द्धमानादौ श्राद्धविधानेनामावास्याया अलाभेऽपि चतुर्दश्यन्तयामे श्राद्ध-विधानेन च विशिष्टविध्यनुपपत्तेश्च। यत्तु "अमावास्या-ष्टका कृष्णपक्षपञ्चदशीषु च"। इत्यभिधाय "एतच्चानुपनी-तोऽपि कुर्य्यात् सर्वेषु पर्वसु। श्राद्धं साधारणं नाम सर्वकाम-फलप्रदम्॥ भार्य्याविरहितोऽप्येतत् प्रवासस्थोऽपि नित्यशः। शूद्रोऽप्यमन्त्रवत् कुर्य्यादनेन विधिना बुधः"॥ इति मत्स्य पुरा-णम्। तत्र अनुपनीतोऽपीत्यपि शब्देनोपनीतः समुच्चीयते। तत्रानुपनीतस्य जात माताहिताग्नेरुपनीतस्य च साग्नेः सम्भवात्तयोः। "न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः" इति मनुना कृष्णपक्षीय श्राद्धस्यामावास्यायां विधानात्तदेक-वाक्यतया मत्स्य पुराणे नित्यश इत्यनेनामावास्याया यन्नि-त्यत्वाभिधानं तत्साग्निपरं कृष्णपक्षस्य यन्नित्यत्वाभिधानं तत्साग्निभिन्नस्य योग्यत्वात् एवमन्यानि वचनानि व्याख्ये-यानि। अत्र च वसुरुद्रादित्याकारेण पितृपितामहानां ध्यातव्यत्वं श्राद्धविवेकोक्तं व्यक्तमाह "वसुरुद्रादित्यरूपान् श्राद्धार्थे तर्पयेत् पितॄन्। नामगोत्रे समुच्चार्य्य तिलैस्तीर्थेषु संयतः"॥ इति स्मृत्यर्थसारमदनपारिजातधृत वचनमिति वस्वादीनां ध्यानमादित्यपुराणे "प्रसन्नवदनाः सौम्या वरदाः शक्तिपाणयः। पद्मासनस्था द्विभुजा वसवोऽष्टौ प्रकीर्त्तिताः॥ करे त्रिशूलिनो वामे दक्षिणे चाक्षमालिनः। एकादश प्रक-र्त्तव्या रुद्रास्त्वर्द्धेन्दुमौलयः॥ पद्मासनस्था द्विभुजाः पद्म-गर्भाङ्गकान्तयः। करादिस्कन्धपर्य्यन्तनालपङ्कजधारिणः॥ इन्द्राद्या द्वादशादित्यास्तेजोमण्डलमध्यगाः"। अत्र पितृ-दयिताप्रयोगान्न्यूनाधिकान्येतानि। "निधायाथ दर्भचय-मासनेषु समाहितः। प्रैष्यानुप्रैष्यसंयुक्तं विधानं प्रतिपाद-येत्"॥ इति वचनात् "ब्रह्मणानामसंपत्तौ कृत्वा दर्भमयान् द्विजान्। श्राद्धं कृत्वा विधानेन पश्चाद्विप्रेषु दापयेत्"॥ इति श्राद्धसूत्रभाष्यकार समुद्रकरधृत वचनाच्च यस्य प्रैषणस्य प्रत्युत्तरमबाधितं तद्युक्त कर्म्मणो विधानात् दर्भवटुरूप दर्भ-चयमादाय कर्म्मकरणे निमन्त्रितोऽस्मि छमाः स्म इति प्रत्यु-

न्तराभावान्निमन्त्रणदृष्टिप्रश्नाभाव: । कुरुष्वेत्यादि प्रत्युत्तरा-णान्तु अन्येनापि सम्भवादनुज्ञादीनां कर्त्तव्यतैव । अन्नोत्-सर्गानन्तरं भोजनात् पूर्वं भोजनकालेऽपि मधुवातेति पाठ-स्तथा च याज्ञवल्क्य: । "सव्याहृतिकां गायत्रीं मधुवाता इति त्र्यृचम् । जप्त्वा यथासुखं वाच्यं भुञ्जीरं स्तेपि वाग्-यता: ॥ अन्नमिष्टं हविष्यञ्च दद्यादक्रोधनोऽत्वर: । आतृ-प्तेश्च पवित्राणि जप्त्वा पूर्वजपं तथा" ॥ पूर्वजपमित्यनेन तत्-प्राप्ति: अत्र च भोजनात् पूर्वं मधुमध्विति जपानन्तरम् अन्न-हीनमित्यादिकं पाठ्यम् "अन्नहीनं क्रियाहीनं विधिहीनञ्च यद्भवेत् । तत् सर्वमच्छिद्रमस्त्वित्युक्त्वा यत्नेन भोजयेत्" ॥ इति यमवचनात् । एवञ्च "यश्चैनं श्रावयेत् श्राद्धे ब्राह्मणान् पादमन्तत: । अक्षय्यमन्नपानन्तत् पितुस्तस्योपतिष्ठते" ॥ इत्यादि पर्वणि श्राद्धे भारतीय श्लोक पादादि श्रावणोक्ते: संक्षेपेण भारतवंशद्वयनिरूपकत्वेन दुर्य्योधनो मन्युमयो युधिष्ठिरो धर्म्ममय इति श्लोकद्वयं पठनीयम् अपहृतगुरुगवी-मांसक्षत श्राद्धमहत्त्वप्रकाशक पितृगाथात्वेन सप्तव्याधा इति च पठनीयम् । अत्र मध्वसम्पत्तौ । "घृतं न लभ्यते यत्र शुष्कक्षीरञ्च होमयेत् । क्षीरस्य च दधि ज्ञेयं मधुनश्च गुड़ो भवेत्" ॥ इति मत्स्यसूक्तवचनेन "मधु यत्र न विद्येत तत्र जीर्णगुड़ो भवेत्" । इत्यायुर्वेदीयेनापि प्रतिनिहिते गुड़ेऽप्य-विकृत एव मधुवातादि मन्त्र: पठनीय: । "तैलं प्रतिनिधिं कुर्य्यात् यज्ञार्थं याज्ञिको यदि । प्रकृत्यैव तदा होता ब्रूयाद्-घृतवतीमिति" । इति यज्ञपार्श्व वचनदर्शनात् "शब्देऽवि-प्रतिपत्ति:" । इति श्रौतकात्यायनसूत्राच्च । प्रतिनिहित-द्रव्ये श्रुतशब्द: प्रयोज्य: श्रुतद्रव्यबुद्ध्या प्रतिनिध्युपादानाच्छ-ब्दान्तरप्रयोगे द्रव्यान्तरबुद्धिप्रसङ्गात् । एवं हस्तादावग्नौ करणेऽप्यग्नौ करिष्ये इति ।

वैदिकप्रयोगमात्रे प्रणवादित्वमाह योगियाज्ञवल्क्य: । "यन्न्यूनञ्चातिरिक्तञ्च यच्छिद्रं यदयज्ञियम् । यदमेध्यमशु-द्धञ्च यातयामञ्च यद्भवेत् । तदोङ्कारप्रयुक्तेन सर्वञ्चाविकलं भवेत्" ॥ तस्य पूर्वपाठमाह भगवद्गीतायाम् । "तस्मादो-

मित्युदाहृत्य यज्ञदानतपः क्रियाः। प्रवर्त्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्"॥ तथोदाहृतं ब्रह्मपुराणे। "तानग्नौ करिष्य इति प्रणतः प्रार्थयेद्द्विजान्। कुरुष्वेति स तैरुक्तो दक्षिणाग्निं समाहयेत्"॥ अत्र प्रश्ने तदनुपदेशात् उपदेशेऽधिकगुणत्वं प्रतीयते। इति प्रश्नेऽपि प्रणवादित्वं युक्तम् अतएव पितृदयिताकृत्यप्रदीपादिषु तथा लिखितम्। एवञ्च सर्वत्र वैधप्रश्नोत्तरादौ प्रणवादित्वे फलाधिक्यमेव तथा अग्निदग्धेत्यन्नविकरणानन्तरं हस्तद्वयप्रक्षालनाचमन हरिस्मरणं कृत्वा गायत्रीं मधुवातादित्रयं मधुत्रयञ्च जपेत्। तथा च ब्रह्मपुराणम्। "ततः प्रक्षाल्य हस्तौ च आचम्य च हरिं स्मरेत्। प्रेतभागं विसृज्याथ प्रायश्चित्तोपशान्तये॥ सव्याहृतिं सप्रणवां गायत्रीञ्च ततो जपेत्। पाठेन्मधुमतीः पुण्यास्तथा च मधुमध्विति"॥ प्रायश्चित्तोपशान्तये प्रायश्चित्तसाध्या या उपशान्तिस्तत् सिद्धये। गायत्रीजपविधिमाह योगियाज्ञवल्क्यः। "प्रणवं पूर्वमुच्चार्य्य भूर्भुवः स्वस्ततः परम्। गायत्रीप्रणवश्चान्ते जपेद्धेवमुदाहृता"॥ अत्रान्तेऽपि प्रणवश्रुतेः "तिष्ठेदोदयनात् पूर्वां मध्यमामपि शक्तितः। आसीतोडूगमाच्चान्त्यां सन्ध्यां पूर्वत्रिकं जपन्"॥ इति छन्दोगपरिशिष्टोक्तं पूर्वत्रिकं प्रणवव्याहृतिसावित्रीरूपमिति तत्प्रकाशकव्याख्यानञ्च प्रणवत्वेन द्वयोरैक्यादविरुद्धमिति श्राद्धाद्यवसाने पिण्डार्थंकुशास्तरणात् पश्चात् अवनेजनात् प्राक् देवताभ्य इति त्रिः पठनीयम्। "उपवेश्य जपेद्धोमान् गायत्रीं तदनुज्ञया। मन्त्रं वक्ष्याम्यहं तस्मादमृतं ब्रह्मनिर्म्मितम्॥ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च। नमः स्वधायै स्वाहायै नित्यमेव भवन्त्विति॥ आद्यावसाने श्राद्धस्य त्रिरावृत्त्या जपेत् सदा। पिण्डनिर्वपणे चैव जपेदेतत् समाहितः॥ पाठ्यमानमिमं श्रुत्वा श्राद्धकाल उपस्थिते। पितरः क्षिप्रमायान्ति राक्षसाः प्रद्रवन्ति च"॥ इति ब्रह्मपुराणात्।

गोत्रपदमेवोच्चार्य्यम्। "गोत्रं स्वरान्तं सर्वत्र गोत्रस्याक्षय्यकर्म्मणि। गोत्रस्तु तर्पणे प्रोक्तः कर्त्ता एवं न मुह्यति"॥ इति गोभिलेन विशेषतोऽभिधानात्। एवं "सर्वत्रैव पितः

प्रोक्तं पिता तर्पणकर्म्मणि। पितुरक्षय्यकाले तु अक्षयां तृप्तिमिच्छता" ॥ इति गोभिलवचनान्तरात् पितरित्येव वक्तव्यं ससम्बन्धिकशब्दानां पदिन्यायेन स्वसम्बन्धिपरत्वाच्च न त्वस्मत् पितरिति अन्यथा एतदस्मदन्नमित्याद्यभिलापापत्तेः एवं यजुर्वेदिनां पिण्डशब्दो नपुंसकलिङ्गेन प्रयुज्यते यथा वनितं पिण्डं दद्यादमावेतत्ते इति श्राद्धविवेकधृतपिण्डपितृयज्ञीयकात्यायनवचने पिण्डविशेषणत्वे नैतदिति नपुंसकनिर्देशात् "भाषेतैतच्च वै पिण्डं यत्नदत्तस्य पूरकम्"। इति ऋष्यशृङ्गवचनेऽपि तथा दर्शनाच्च पिण्डान् दत्त्वा करं सम्मार्ज्य प्रक्षाल्याचम्य हरिं स्मरेदित्याह ब्रह्मपुराणम्। "ततो दर्भेषु विधिवत् सम्मार्ज्य च करं ततः। प्रक्षाल्य च जलेनाथ त्रिराचम्य हरिं स्मरेत्" ॥ यद्यपि करसम्मार्जनादीनि पितृपक्षे उक्तानि तथापि पितृपार्वण एव "मातामहानामप्येवं दैव पूर्वं श्राद्धं कुर्वीत"। इति गोभिलसूत्रेण पितृपक्षधर्म्मातिदेशेन एकोद्दिष्टादि श्राद्धेऽपि आवाहनादि निषेधानुपपत्त्या पार्वणधर्म्मातिदेशात् सर्वत्र तानि प्राप्तानि किन्तु पार्वणे षट्पिण्डदानानन्तरं सामगेतराभ्युदयिकादौ नवपिण्डदानानन्तरञ्च तन्त्रेणैतानि कार्य्याणि लाघवात् आग्नेयादित्रयेषु प्रयाजादि तन्त्रतावत् तत्रापि पितृपक्षास्तृतदर्भेषु करसम्मार्जनं लेपभागिनो वृद्धप्रपितामहादीं स्त्रीनुद्दिश्य कर्त्तव्यं "न्युप्य पिण्डांस्ततस्तां स्त्रीन प्रयतो विधिपूर्वकम्। तेषु दर्भेषु तं हस्तं प्रमृज्याल्लेपभागिनाम् ॥ लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः। पिण्डदः सप्तमस्तेषां सापिण्डं साप्तपौरुषम्" ॥ इति यथाख्यानस्वमनुवचनाभ्यां सहैकवाक्यत्वात् इति तदपि दर्भाणां मूले "दक्षिणाग्रेषु दर्भेषु पुष्पधूपसमन्वितम्। स्वपित्रे प्रथमं पिण्डं दद्यादुच्छिष्टसन्निधौ ॥ पितामहाय चैवाथ तत्पित्रे च ततः परम्। दर्भमूले लेपभुजस्तर्पयेल्लेपघर्षणैः ॥ पिण्डैर्मातामहांस्तद्वत् गन्धमाल्यादिसंयुतैः। प्रीणयित्वा द्विजाग्र्याणां दद्यादाचमनं ततः" ॥ इति विष्णुपुराणात्। नचैतत् पाठक्रमान्मातामहपिण्डदानात् प्राक् लेपघर्षणमिति वाच्यं "सर्वेषु मधुमध्वित्यक्षन्नमो मदन्तीति

जपित्वा त्रीं स्त्रीन् पिण्डान् दद्यादवनिज्य" इति गोभिलसूत्रे "दर्भेषु त्रीं स्त्रीन् पिण्डान् अवनिज्य दद्यात्" इति कात्यायनसूत्रे च त्रीं स्त्रीनिति वीप्सा दर्शनात् षट्पिण्डदानमध्ये पिण्डदानेति कर्त्तव्यताव्यतिरिक्तानां निवृत्तिः प्रतीयते अतएव पितृदयिता श्राद्धकल्पतरुप्रभृतिभिः षट्पिण्डदानानन्तरमेव करघर्षणं लिखितम्। विष्णुपुराणन्तु दर्भमूलविधायकं न तु क्रमविधायकम् अन्यथा प्रत्यवनेजनदानादेः प्रागपि तदुक्त-ब्राह्मणाचमनापत्तेः। पुष्पधूपसमन्वितं पिण्डदानं शाखिभेदपरमिति। अतो मतामहपक्षे न करमार्जनमिति एकोद्दिष्टे तु लेपभुजामसम्भवेऽपि निवर्ह्येश्चकरमार्जनप्रक्षालनाचमनहरिस्मरणानि कार्य्याणि साधारणप्रवृत्तप्रागुक्त ब्रह्मपुराणात्।

अत्र श्राद्धचिन्तामणिः। त्रिःपिवेद्दीक्षितं तोयमित्यादिना तावदाचमनं विहितं तदत्र त्रिरावर्त्तते आचारप्रदीपोऽप्येवमिति तन्न "त्रिराचामेदपः पूर्वं द्विःप्रमृज्यात्ततोमुखम्"। इति मनुवचने उदगग्नेरुत्क्रम्य "प्रक्षाल्य पाणी पादौ चोपविश्य त्रिराचामेत्। द्विःपरिमृजीत पाणि पादावभ्युक्ष्य शिरोऽभ्युक्षयेदिन्द्रियाण्यद्भिः संस्पृशे दक्षिणौ नासिके कर्णौ"॥ इति गोभिलसूत्रे च त्रिः पिवेदित्यत्रैव त्रिराचामेदित्यत्राभिधानादत्रापि तथैव युक्तत्वात् मनौ गोभिलेऽपि तथार्थत्वे पूर्वापराङ्गाभिधानं व्यर्थं स्यात् तस्मात् ब्रह्मपुराणेऽपि त्रिराचामेत् त्रिः पिवेदित्यर्थः। श्रीदत्तोऽप्येवम्। पिण्डपूजानन्तरं वसन्तायेत्यस्य पाठः। तथाच ब्रह्मपुराणं "पूजयित्वा तु पिण्डस्थान् पितृंश्च प्रणमेदृतून्। वसन्ताय नमस्तुभ्यं ग्रीष्माय च नमोनमः॥ वर्षाभ्यश्च शरत् संज्ञ ऋतवे च नमः सदा। हेमन्ताय नमस्तुभ्यं नमस्ते शिशिराय च॥ माससंवत्सरेभ्यश्च दिवसेभ्यो नमो नमः"॥ इति ब्राह्मणनिमन्त्रणपक्षे यमः। "प्रार्थयेत्तु प्रदोषान्ते भुक्तान्नं शयितान् द्विजान्। सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः। भवितव्यं भवद्भिश्च श्वोभूते श्राद्धकर्म्मणि॥ ते तं तथेत्यविघ्नेन याति चेद्रजनो सुखम्"॥ प्रार्थयेत् निमन्त्रणपूर्वकं नियममर्थयेत्।

तन्नियममाह सर्वायासेत्यादि । ते ब्राह्मणास्तं निमन्त्रयितारं तथेत्यूचुरिति शेषः । एवञ्च ब्राह्मणनिमन्त्रणपक्षेऽपि प्रकृतावूहाभावात्र बहुवचनस्थाने एकवचनोहः नवावाधः वैभक्तिकार्थापेक्षया प्राथमिकत्वेन बलवतः प्रातिपादिकार्थस्य समवेतार्थत्वेन नियोज्यत्वात् किन्त्वविकृत एव मन्त्रः पाठ्यः । मत्स्यपुराणे । "त्वं मयात्र निमन्त्रित इत्युपक्रम्य बहुवचनान्त मन्त्रपाठाच्च तदुतथा,"दक्षिणं जानु आलभ्य त्वं मयात्र निमन्त्रितः । एवं निमन्त्र्य नियमान् श्रावयेत् पैतृकान् बुधः" ॥ तन्नियममाह "अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः । भवितव्यं भवद्भिश्च मया च श्राद्धकर्म्मणि" ॥ प्रकृतावेवं प्राप्तत्वात् एकोद्दिष्टेऽपि नोहः । एवं देवताभ्यः पितृभ्यश्चेत्यनूह एव पाठ्यः पितृपदस्याग्निष्वात्तादिपरत्वात् अत्र परदिननिमन्त्रणे सर्वायासेत्यस्य न पाठः श्वः पदानन्वयात् किन्त्वक्रोधनैरित्यस्य पाठः ।

स्मृतिः । "प्रातःकाले पितृश्राद्धे षष्ठ्याञ्च द्वादशीषु च । सुरापानसमं तैलं पितरं नरकं नयेत्" ॥ पुष्पवासितादौ प्रतिप्रसवमाह स्मृतिः । "घृतञ्च सार्षपं तैलं यत्तैलं पुष्पवासितम् । अदुष्टं पक्वतैलञ्च स्नानाभ्यङ्गे च नित्यशः" ॥ पित्र्ये कर्म्मणि दक्षिणामुखेन पादौ प्रक्षालनीयौ । "प्रथमं प्राङ्मुखः स्थित्वा पादौ प्रक्षालयेच्छनैः । उदङ्मुखो वा दैवत्ये पैतृके दक्षिणामुखः" ॥ इति देवलवचनात् । राघवभट्टधृतं वास्तुशास्त्रकृद्यमवचनम् । "श्राद्धाधिकरणे यत्र नार्च्चितो वास्तुदैवतः । तत्र शून्यं भवेत् सर्वं रक्षोविघ्नादिभिर्हृतम् । तस्माद्वास्त्वर्च्चनं कार्य्यं सम्यक् सम्पदमीप्सुभिः" ॥ अन्नपाके सपिण्डाधिकारमाह कल्पतरौ देवलः । "तथैवामन्त्रितो दाता प्रातः स्नातः सहाम्बरः । आरभेत नवैः पात्रैरन्वारम्भं सबान्धवः" ॥ श्राद्धचिन्तामणावप्येवम् । तथैवामन्त्रित इति पाठे सर्वायासविनिर्मुक्तत्वादिभिर्निमन्त्रित इत्यर्थः । सहाम्बर इति द्वितीयवस्त्रप्राप्त्यर्थम् एकवस्त्रस्य नग्नत्वप्रतिषेधेन प्राप्तत्वात् एतेन कुशरज्ज्वादिवस्त्रप्रतिनिधिर्नात्र भवतीति सूचितम् । एवमेव स्नाने ब्रह्मदत्तभाष्यकल्पतरवः । ब्रह्मपुराणे ।

"परकीय गृहे यस्तु स्वान् पितॄन् स्वर्पयेज्जडः। तद्भूमिस्वामिनस्तस्य हरन्ति पितरो बलात्। अग्रभागं ततस्तेभ्यो दद्यान्मूल्यञ्च जीवताम्" ॥ गृह इति भूमिमात्रपरं तद्भूस्वामिपितृहरणस्य हेतुत्वेनाभिधानात् मूल्यदानाग्रदानयोः प्रत्येकं हरणनिवर्त्तकत्वेन वैकल्पिकत्वं ततश्च श्राद्धविघातनिवर्त्तकत्वेन तदङ्गत्वात् पितृरीत्या भूस्वामिपितृभ्यः प्रथमतो देयम्। अतः पार्वणादौ प्राचीनावीतित्वादिना नान्दीमुखे उपवीतित्वादिनेति। अत्र पितृपदस्य प्राप्तपितृलोकमात्रपरत्वे प्रेतानां हरणासम्भवात्। सुतरां स्वधेति निर्देश्यम्। प्रमीतमात्रपरत्वेऽपि "न स्वधाञ्च प्रयुञ्जीत प्रेतपिण्डे दशाह्निके"। इति ऋष्यशृङ्गवचने दशाह्निकत्वश्रवणादन्यत्र स्वधा प्रयोगादत्रापि तथा। असवर्णोद्दिष्टे दैह्निकनिषेधस्य श्राद्धादिप्रकरणीयत्वादन्यभूमात्रे अग्रदानमिति भीष्मतर्पणेऽप्युक्तं श्रीदत्तोऽप्येवम्। लिङ्गपुराणे "शालग्रामशिलाग्रे तु तच्छ्राद्धं क्रियते नृभिः। तस्य ब्रह्मान्तिकं स्थानं तृप्ताश्च पितरो दिवि" ॥ विष्णुपुराणे "वित्तञ्च वित्तञ्च नृणां विशुद्धं प्रशस्त कालः कथितो विधिश्च। पात्रं यथोक्तं परमा च भक्तिर्नृणां प्रयच्छन्त्यभिवाञ्छितानि" ॥ ब्रह्मपुराणे। "यस्त्वासन्नमतिक्रम्य ब्राह्मणं पतितादृते। दूरस्थं भोजयेन्मूढो गुणाढ्यं नरकं व्रजेत् ॥ तस्मान्नातिक्रमेत् प्राज्ञो ब्राह्मणान् प्रातिवेश्यकान्। सम्बन्धिनः तथा सर्वान् दौहित्रं विट्पतिं तथा ॥ भागिनेयं विशेषेण तथा बन्धून् गृहाधिपान्। नातिक्रामेन्नरश्चैतान् सुमूर्खानपि गोपते। अतिक्रम्य महारौद्रं रौरवं नरकं व्रजेत्" ॥ ब्राह्मणोऽत्राल्पविद्यः। मूर्खब्राह्मणातिक्रमे दोषभावस्य व्यासादिभिर्नास्ति मूर्खे व्यतिक्रम इत्यनेनाभिधानात्। विट्पतिजामाता सुमूर्खानिति सम्बन्धि दौहित्रादि विशेषणमिति कल्पतरुरत्नाकरौ। मत्स्यसूक्तेः "शस्ताः समूला दर्भाश्च गुच्छेन चाधिककं फलम्" इति अग्नौ करणहोमे मत्स्यपुराणम्। "अग्न्यभावे तु विप्रस्य पाणावेव जलेऽपि वा"। यत्तु श्राद्धान्नपरिवेशनन्तु दक्षिणपाणिमात्रेणैव अङ्गानभिधानादिति मैथिलोक्तं तन्न "एकेन पाणिना दत्तं शूद्रदत्तं न भक्षयेत्"।

इत्यादि पुराणीयैनैकपाणिदत्तभक्षणनिषेधेन तन्मात्रपरिवेशनस्यापि निषिद्धत्वात् व्यक्तं मत्स्यपुराणीयपितृकल्पे "उभाभ्यामपि हस्ताभ्यामाहृत्य परिवेशयेत्"। पाणिभ्यामपि पात्रान्तरितं कृत्वा देयम्। "हस्तदत्तास्च ये स्नेहा लवणं व्यञ्जनानि च। दातारं नोपतिष्ठन्ते भोक्ता भुङ्क्ते च किल्विषम्॥ तस्मादन्तरितं देयं पर्णेनाथ तृणेन वा। प्रदद्यान्न तु हस्तेन नायसेन कदाचन"॥ इति वशिष्ठेन सामान्यतो विधानात् पितृभक्तितरङ्गिण्यामप्येवम्। बृहस्पतिः "यद्योक्तं भोजयेत् श्राद्धे स्वल्पत्वात् प्रकृतस्य च। स्तोकं स्तोकं समुद्धृत्य तेभ्योऽन्नं निवेदयेत्"॥ प्रकृतं श्राद्धोचितं द्रव्यं स्तोकं स्तोकं पात्रे समुद्धृत्य एकस्मिन्नेव पित्रादिभ्यो विभज्यान्नं निवेदयेत् संकल्पयेदित्यर्थः।

वृषकृष्णभूजातेनैव वैधकर्म्माचरणं तथा च हरिवंशे शत्रुं प्रति सुरभिवाक्यम्। "कर्षकान् पुङ्गवैर्वाह्यैर्मध्येन हविषा सुरान्। श्रियं शक्रत् प्रवृत्तेन तर्पयिष्यामहे वयम्"॥ अत्र पुङ्गवैरित्युपादानात् तेन च स्त्रो गवीवाहनस्यावैधत्वेन तज्जातद्रव्यस्यावैधत्वं प्रतीयते। श्राद्धीयपात्रनिषेधे पैठीनसिः। "सीमकायसपाषाणपात्राणि हीनपात्राणि भग्नपात्राणि चेति"। हारीतः। "हीनपात्रन्तु तत् प्रोक्तं न्यूनमष्टाङ्गुलात्तु यत्"। स्मृतिसारसागरे स्मृतिः। "नारिकेलजलं कांस्ये ताम्रपात्रे स्थितं मधु। गव्यञ्च ताम्रपात्रस्थं मद्यतुल्यं घृतं विना॥ ताम्रपात्रघृतं मांसं यच्च गव्यं घृतेतरत्। आमिषन्तु गवां मांसं दधिमद्यं पयोरजः॥ द्रव्यान्तरयुतं मांसं पयसा संयुतं दधि। पयोऽनुद्धृतसारञ्च ताम्रपात्रे न दुष्यति"॥ एतत् पराद्धानुसाराच्छारदातिलकोक्तम्। "ततश्च संस्कृते वह्नौ गोक्षीरेण चरुं पचेत्। अस्त्रेण क्षालिते पात्रे नवे ताम्रमयादिके"॥ अस्त्रेण अस्त्रमन्त्रेण। वृद्धशातातपः। पात्रे तु मृण्मये यस्तु श्राद्धे भोजयते पितॄन्। स वै दाता पुरोधाश्च भोक्ता च नरकं व्रजेत्॥ गुणांश्च सूपशाकाद्यान् पयोदधि घृतं मधु। विन्यसेत् प्रयतः सम्यक् भूमावेव समाहितः"॥ भूमौ न तु पात्रान्तरोपरि तत्तत् पात्राणि। मार्कण्डेय-

पुराणम्। "अभक्ष्यं यत् स्वरूपेण निषिद्धं स्नातकेषु च। वर्जनीयं प्रयत्नेन तद्द्रव्यं श्राद्धकर्म्मणि" ॥ विष्णुः। "कुष्माण्डालाबुवार्त्ताकी ग्राम्यमाहिषदुग्धकम्। पालङ्कीं राजिकां श्राद्धे द्विःस्विन्नञ्च विवर्जयेत्" ॥ द्विः स्विन्नञ्च तदेव यत् सूपकार शास्त्रोक्तापेक्षितपाकनिष्पत्त्यनन्तरं शैत्यादिनिवृत्तये पुनः पाकान्तरमुक्तं नत्वर्द्धपाकानन्तरतच्छास्त्रोक्तसम्भारणरूपपाकान्तरसिद्धं व्यञ्जनादि अतीतार्थक्तनिर्देशात् अतएव भृष्टानन्तरं गुड़ादिपक्वं मोदकादिकं शिष्टैर्दीयते भुज्यते च अन्यथा द्विः संस्कृतस्य तस्य भोज्यत्वं न स्यात् "पर्य्युषितं पुनः सिद्धमभोज्यमन्यत्र हिरण्योदकस्पर्शात्" इति सुमन्तूक्तेः शातातपोऽपि। "गोकुले कन्दुशालायां तैलयन्त्रेक्षुयन्त्रयोः। अमीमांस्यानि शौचानि स्त्रीषु बालातुरेषु च" ॥ बालोऽत्र पञ्चवर्षाभ्यन्तरवयस्कः अमीमांस्यानि शौचाशौचभागितया न विचारणीयानीति भवदेवभट्टरत्नाकरादयः। अतएव कूर्म्मपुराणम्। "कन्दुपक्वानि तैलेन पायसं दधि शक्तवः। द्विजैरेतानि भोज्यानि शूद्रगेहकृतान्यपि" ॥ कन्दुपक्वं जलोपसेकं विना केवलपात्रे यत् वह्निना पक्वं भृष्टतण्डुलादि। यमोऽपि। "अपूपाश्च करम्भाश्च धाना वटकशक्तवः। शाकं मांसमपूपञ्च सूपं कृषरमेव च ॥ यवागुं पायसञ्चैव यच्चान्यत् स्नेहसम्भवम्। सर्वं पर्य्युषितं भक्ष्यं सूक्तञ्च परिवर्जयेत्" ॥ घृतपक्वापक्वतया पूपापूपद्वैविध्यं सूक्तं यन्मधुरं कालवशादम्लतां गतमिति प्रायश्चित्तविवेकः। करम्भो दधिशक्तवः। मनुः "दधिभक्ष्यञ्च सूक्तेषु सर्वञ्च दधिसम्भवम्"। भक्ष्यमिति शेषः।

देवलः। "ये चात्र विश्वदेवार्थं विप्राः पूर्वं निमन्त्रिताः। प्राङ्मुखान्यासनान्येषां द्विदर्भोपहितानि च ॥ दक्षिणामुखयुक्तानि पितृणामासनानि च। दक्षिणाग्रेक दर्भाणि प्रोक्षितानि तिलोदकैः ॥ ब्रह्मपुराणे। "पृथक् पृथक् चासनेषु तिलतैलेन दीपकाः। अविच्छिन्नास्तथा देयास्ते तु रक्षन्ति वै द्विजान्" ॥ आसनेषु तत्सन्निधानेषु अविच्छिन्ना श्राद्धकालावधिस्थायिनः। विष्णुपुराणे पिण्डानुपक्रम्य "पूजयित्वा द्विजाग्र्याणां दद्यादाचमनं ततः। पैत्रेभ्यः प्रथमं भक्त्या

तन्मनस्को नराधिप। सुस्वधेत्याशिषा युक्तां दद्याच्छक्त्या च दक्षिणाम्। द्विजाग्र्याणां विश्वदेवादि पञ्चत्रय श्राद्धभोक्तृणाम्" ॥ पैत्रेभ्यः प्रथमं भक्त्या तेषां ब्राह्मणानां मध्ये पितृब्राह्मणेभ्यः प्रथमम् आचमनं दक्षिणाञ्च दद्यात् ततश्च दक्षिणाया दैवादित्वाभावः प्रतीयते। न च मातामह्यापेक्षया पितृकर्म्ममात्र एव प्राथम्यस्य प्रागुक्तत्वादनुवादापत्तेः सु स्वधेति शाख्यन्तरीयम् इदानीन्तनीया दक्षिणापि शाख्यन्तरीया। यजुः सामविदोस्तु न्युब्जोत्तानानन्तरम्। तथा च कात्यायनगोभिलौ। "उत्तानं पात्रं कृत्वा यथाशक्ति दक्षिणां दद्यात" इति। मत्स्यपुराणे। "दत्त्वा पिण्डान् पितृभ्यस्तु रजतं दक्षिणां दद्यात्। स्वस्तीत्युक्ते द्विजैस्तैस्तु सुरान् हेम्ना प्रतर्पयेत् वाजेवाजे इति जपन् कुशाग्रेण विसर्जयेत्। रतिशक्तिः स्त्रियः कान्ता भोज्यं भोजनशक्तिता ॥ दानशक्तिः सविभवारूपमारोग्य सम्पदः। श्राद्धपुष्पमिदं प्रोक्तं फलं ब्रह्मसमागमः"॥ पुष्पं तद्वदल्पं फलं तद्वत् महत्।

बृहस्पतिः। "वन्दिभ्यश्चैवमर्थिभ्योऽप्यन्नार्थिभ्योऽन्नमर्थितः। यदि तत्र न दद्याच्च विफलं शक्तितो भवेत्"॥ वन्दिनो वीर्य्यस्तोतारः। अर्थितः सन् यदि एभ्योऽन्नं शक्तितो न दद्यात् तदा श्राद्धं निष्फलं भवेदित्यर्थः। तत्र श्राद्धोत्तरकाले आशीर्ग्रहणञ्च "ततः स्वधावाचनिकं विश्वेदेवेषु चोदकम्। दत्त्वाशिषः प्रगृह्णीयात् द्विजेभ्यः प्राङ्मुखः पृथक्" इति मत्स्यपुराणवचनस्य "दक्षिणां दिशमाकांक्षन् याचेतेमान् वरान् पितॄन्" इति मनुवचनस्य च सामञ्जस्यादुपवीती प्राङ्मुखो दक्षिणां दिशं मनसा पश्यन् कुर्य्यादिति वाचस्पति मिश्राः तन्न "पिण्डपितृयज्ञवदुपचारः पित्र्य" इति गोभिलसूत्रेण वैश्वदेव कर्म्मातिरिक्ते दक्षिणामुखत्वप्रतीतेः। दक्षिणां दिशमाकांक्षन्निति मनुवचनस्य तथात्वे प्रमाणाभावाच्च। अतएव दक्षिणां दिशमाकांक्षन् वीक्ष्यमाण इति टीकाकारैर्व्याख्यातम्। मनुना च आकांक्षन्नित्यनन्तरं "दातारो नोऽभिवर्द्धन्ताम् अन्नञ्चैवेत्युदीरयन्। अभ्युदीरयन्" इत्येव पठितं न तु "अघोराः पितरः सन्तु" इति। मत्स्यपुराणवचनेऽपि अक्षय्योदकदानानन्तरं दत्त्वेति न

पठितं किन्तु "ततः स्वधा वाचनिकं विश्वेदेवेषु चोदकम्" इत्यनन्तरं दत्त्वाशीरित्यर्द्धं पठित्वा "अघोराः पितरः सन्तु सन्त्वित्युक्तः पुनर्द्विजैर्गोत्रं तथा वर्द्धतां नस्तथेत्युक्तः स तैः पुनः। दातारो नोऽभिवर्द्धन्तामन्नञ्चैवेत्युदीरयेत्" इति पठितं ततश्च शाखिविशेषे एतादृशक्रम कर्म्माणि प्राङ्मुखत्वं न तु गोभिलाद्युक्तकर्म्माणि अतएव पितृदयितादावाशीःप्रार्थने प्राङ्मुखत्वं नाभिहितम्।

कुशाग्रेण विसर्जनमाह मत्स्यपुराणं "वाजे वाजे इति जपन् कुशाग्रेण विसर्जयेत्"। तत्र श्राद्धोत्तरकाले देवलः। "निवृत्ते पितृमेधेतु दीपं प्रच्छाद्य पाणिना। आचम्य पाणी प्रक्षाल्य ज्ञातीन् शेषेण भोजयेत्॥ ततो ज्ञातिषु भुक्तेषु स्वान् भृत्यानपि भोजयेत्। पश्चात् स्वयञ्च पत्नी च श्राद्धशेषमुदाहरेत्"॥ निवृत्ते वामदेव्यगानान्ते प्रच्छाद्याच्छाद्येति पारिजातगणेश्वरौ। न तु निर्वापणम्। दीपनिर्वापणात् पुंसः कुष्माण्डच्छेदनात् स्त्रियाः। अचिरेणैव कालेन वंशनाशो भवेत् ध्रुवम्"॥ इति नव्यवर्द्धमानधृतात्। "दीपनिर्वापकोऽन्धः स्यात्" इति वचनाच्च। उदाहरेत् अभ्यवहरेत्। एष च रागप्राप्तत्वान्न विधिः किन्तु श्राद्धाङ्गत्वेन नियमविधिः। तथा च श्राद्धशेषमुपक्रम्यापस्तम्बः। "सर्व्वस्मात् ग्रासावरार्द्धमश्नीयात्" इति ग्रासावरार्द्धं ग्रास एव अवरार्द्धं निकृष्ट कोटिर्यस्य तत्तथा। अनियमत्वे सर्व्वस्मादिति श्राद्धशेषविशेषणं व्यर्थं स्यात्। व्यक्तं शिवरहस्ये। "श्राद्धं कृत्वा तु यः शेषं नान्नमश्नाति मन्दधीः। लोभान्मोहाद्भयाद्वापि तस्य तद्विफलं भवेत्"॥ लोभाद्द्रव्यान्तरस्येति शेषः। अत्र लोभादित्यभिधानात् वैधोपवासादौ न नियमः। एवञ्च "यत्किञ्चित् पच्यते गेहे भक्ष्यं भोज्यमथापिवा। अनिवेद्य न भुञ्जीत पिण्डमूले कथञ्चन"॥ इति शङ्खोक्तं न शेषेतरभोजनव्यावर्त्तकं किन्तु यत्किञ्चित् इति श्राद्धार्थत्वेन विशेषणीयम् अन्यथा श्राद्धप्रतिषिद्ध द्रव्याणां भक्ष्यत्वं न स्यात् तेन श्राद्धार्थपक्वं तत्र अदत्त्वा न भोक्तव्यमिति तस्यार्थः।

शातातपः। श्राद्धं कृत्वा परश्राद्धे भुञ्जते ये च जिह्वलाः।

पतन्ति नरके घोरे लुप्तपिण्डोदकक्रियाः"॥ जिह्वला लोलुपाः। विष्णुपुराणम्। "वर्ज्यानि कुर्वता श्राद्धं कोपोऽध्वगमनं त्वरा। भोक्तुरप्यत्र राजेन्द्र! त्रयमेतन्न शस्यते"॥ राजमार्त्तण्डे। "पुनर्भोजनमध्वानं द्यूताध्ययन मैथुनम्। दानं प्रतिग्रहं सन्ध्यां श्राद्धं कृत्वाष्ट वर्जयेत्"॥ मत्स्यवर्द्धमानधृता स्मृतिः। "पुनर्भोजन मध्वानं द्यूताध्ययनमैथुनम्। दानं सन्ध्यां पुनः स्नानं श्राद्धं कृत्वाष्ट वर्जयेत्"। अध्वानमध्वगमनं क्रोशात् परं न कार्य्यम्। "अध्वगमनमाक्रोशपूरणम्" इति हारीतवचनात्। मैथुनम् ऋतुकालीनमपि तथा च श्राद्धानन्तरं शङ्खलिखितौ। ऋतुस्नातां तदहोरात्रं परिहरेत्" इति। दानं याचितान्नाद्यतिरिक्तपरम्। वन्दिभ्यश्चेति प्रागुक्तत्वात्।

ज्योतिषे "तुलाराशिगते भानौ अमावास्यां नराधिप!॥ स्नात्वा देवान् पितॄन् भक्त्या संपूज्याथ प्रणम्य च॥ कृत्वा तु पार्वणश्राद्धं दधिक्षीरगुडादिभिः। ततोऽपराह्णसमये घोषयेन्नगरे नृपः॥ लक्ष्मीः सम्पूज्यतां लोका उल्काभिश्चापि वेष्ट्यताम्"॥ दर्शद्वैधे प्रदोषव्याप्त्या निर्णयः। "तुलासंस्थे सहस्रांशौ प्रदोषे भूतदर्शयोः। उल्काहस्ता नराः कुर्य्युः पितॄणां मार्गदर्शनम्"॥ इति ज्योतिषात्। उभयतः प्रदोषप्राप्तौ परदिन एव युग्मात्। "दण्डैको रजनीयोगो दर्शस्य स्यात् परेऽहनि। तदा विहाय पूर्वेद्युः परेऽह्नि सुखरात्रिका"॥ इति ज्योतिर्वचनाच्च। उभयत्र प्रदोषाप्राप्तावपि उल्कादानं परदिने पूर्वोक्तपार्वणानुरोधात्। "भूताहे ये प्रकुर्वन्ति उल्काग्रहमचेतसः। निराशाः पितरो यान्ति शापं दत्त्वा सुदारुणम्"। इति ज्योतिर्वचनाच्च। अत्रैव लक्ष्मीः पूर्वाह्णे रात्रौ पूज्या "अमावास्या यदा रात्रौ दिवाभागे चतुर्दशी। पूजनीया तदा लक्ष्मीर्विज्ञेया सुखरात्रिका"॥ इति ज्योतिर्वचनात् उल्काग्रहणादि पितृकृत्यत्वात् प्राचीनावीतिना दक्षिणामुखेन कर्त्तव्यम्। तथा च मनुः "प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा पित्र्यमानिधनात् कार्य्यं विधिवद्दर्भपाणिना"। इति तत्र ग्रहणमन्त्रः। "शस्त्राशस्त्रहतानाञ्च भूतानां भूतदर्शयोः।

उज्ज्वल ज्योतिषा देहं दहेय व्योमवह्निना" ॥ दानमन्त्रश्च । "अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम। उज्ज्वलज्योतिषा दग्धास्ते यान्तु परमां गतिम्"॥ इति विसर्जनमन्त्रः। "यमलोकं परित्यज्य आगता ये महालये। उज्ज्वलज्योतिषा वर्त्म प्रपश्यन्तो व्रजन्तु ते" ॥ इति ब्रह्मपुराणम्। "अमावास्यां यदा देवाः कार्त्तिके मासि केशवात्। अभयं प्राप्य सुप्ताश्च क्षीरोदार्णवसानुषु ॥ लक्ष्मीर्दैत्यभयान्मुक्ता सुखं सुप्ताम्बुजोदरे। चतुर्युगसहस्रान्ते ब्रह्मा स्वपिति पङ्कजे ॥ अतोऽत्र विधिवत् कार्य्या मनुष्यैः सुखसुप्तिका। दिवा तत्र न भोक्तव्यमृते बालातुराज्जनात् ॥ प्रदोषसमये लक्ष्मीं पूजयित्वा यथाक्रमम्। दीपवृक्षास्तथा कार्य्या भक्त्या देवगृहेष्वपि ॥ चतुष्पथश्मशानेषु नदीपर्वतसानुषु। वृक्षमूलेषु गोष्ठेषु चत्वरेषु गृहेषु च। वस्त्रैः पुष्पैः शोभितव्याः क्रयविक्रयभूमयः ॥ दीपमालापरिक्षिप्ते प्रदोषे तदनन्तरम्। ब्राह्मणान् भोजयित्वादौ विभज्य च वुभुक्षितान् ॥ अलङ्कृतेन भोक्तव्यं नववस्त्रोपशोभिना। स्निग्धैर्मुग्धैर्विदग्धैश्च वान्धवैर्भृतकैः सह" ॥ मुग्धैः सुन्दरैः। मुग्धःसुन्दरमूढयोरिति विश्वः।

अत्र लक्ष्मीपूजायां पुष्पदानकाले। "नमस्ते सर्वदेवानां वरदासि हरि प्रिये। या गतिस्त्वत् प्रपन्नानां सा मे भूयात् त्वदर्च्चनात्" ॥ लक्ष्म्यै नम इत्यनेन वारत्रयं पूजयेत्। "सुखरात्र्यां प्रदोषे तु कुवेरं पूजयन्ति ये। इति रुद्रधरधृतात् कुवेरमपि पूजयन्ति। धनदाय नमस्तुभ्यं निधिपद्माधिपाय च" ॥ भवन्तु त्वत् प्रसादान्मे धनधान्यादिसम्पदः। इति पठित्वा कुवेराय नम इति त्रिः पूजयेत्। ततो देवगृहादिषु दीपान् दद्यात्। तत्र मन्त्रः। "अग्निज्योतीरविज्योतिश्चन्द्रज्योतिस्तथैव च। उत्तमः सर्वज्योतीनां दीपोऽयं प्रतिगृह्यताम्" ॥ ततो ब्राह्मणान् बन्धूंश्च भोजयित्वा स्वयं भुक्त्वा सुखं सुप्त्वा प्रत्यूषे भविष्योक्तं कर्म्म कुर्य्यात्। यथा "सुखरात्रे रुषः काले प्रदीपोज्ज्वलितालये। बन्धुर्बन्धूनवन्धूंश्च वाचा कुशलयार्चयेत् ॥ प्रदीपवन्दनं कार्य्यं लक्ष्मीमङ्गलहेतवे। गोरोचनाक्षतश्चैव दद्यादङ्गेषु सर्वतः" ॥ लक्ष्मी-

पूजामन्त्रः। "विश्वरूपस्य भार्य्यासि पद्मे पद्मालये शुभे। महालक्ष्मि! नमस्तुभ्यं सुखरात्रिं कुरुष्व मे॥ वर्षाकाले महाघोरे यन्मया दुष्कृतं कृतम्। सुखरात्रिप्रभातेऽद्य तन्मे लक्ष्मीर्व्यपोहतु॥ या रात्रिः सर्वभूतानां या च देवेष्ववस्थिता। संवत्सरप्रिया या च सा ममास्तु सुमङ्गला॥ माता त्वं सर्वभूतानां देवानां सृष्टिसम्भवा। आख्याता भूतले देवि! सुखरात्रि नमोऽस्तु ते"॥ लक्ष्मैर नम इति त्रिः पूजयेत्।

अथ अर्द्धोदययोगः। स च रविवारव्यतीपातश्रवणनक्षत्रैर्युक्ता चेत् पौषमाघयोरमावास्या स्यात्तदा भवति। यथा पाश्चात्यनिर्णयामृते। "अमार्कपातश्रवणैर्युक्ता चेत् पौषमाघयोः। अर्द्धोदयः स विज्ञेयः कोटिसूर्य्यग्रहैः समः"॥ अत्र सूर्य्यपर्वशताधिक इति कृत्यचिन्तामणौ पाठः। तथा "दिवैव योगः शस्तोऽयं न तु रात्रौ कदाचन"। स्कन्दपुराणे। "अर्द्धोदये तु संप्राप्ते सर्वं गङ्गासमं जलम्। शुद्धात्मानो द्विजाः सर्वे भवेयुर्ब्रह्मसम्मिताः। यत्किञ्चित् क्रियते दानं तद्दानं सेतुसन्निभम्"। विष्णुशिवस्नानप्रशस्तकालोऽपि बृहन्नारदीयम्। "अर्द्धोदये च पुष्यार्के हस्तार्के रोहिणीबुधे" इति।

अथ युगाद्याः। तासु च "युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया। रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता"। इत्यनेन व्यवस्था। ब्रह्मपुराणे। "वैशाखे शुक्लपक्षे तु तृतीयायां कृतं युगम्। कार्त्तिके शुक्लपक्षे तु त्रेताऽथ नवमेऽहनि॥ अथ भाद्रपदे कृष्णा त्रयोदश्यान्तु द्वापरम्। माघे च पौर्णमास्यां वै घोरं कलियुगं स्मृतम्। युगारम्भास्तु तिथयो युगाद्यास्तेन विश्रुताः"॥ अत्र वैशाखादयः पौर्णमास्यन्ता एव। ब्रह्मपुराणे। तथैव तिथिकृत्याभिधानात्। मुख्यवाचित्वे कार्त्तिके नवमेऽहनीत्यनेनैव सिद्धौ शुक्लपक्ष इति व्यर्थं स्यात् तेन भाद्रकृष्णत्रयोदशी अश्वयुक् कृष्णपक्षीयेति मैथिलोक्तं निरस्तम्। आसां प्रशंसामाह विष्णुपुराणं "वैशाखमासस्य तु या तृतीया नवम्यसौ कार्त्तिकशुक्लपक्षे। नभस्य मासस्य तमिस्रपक्षे त्रयोदशी पञ्चदशी च माघे॥ एता युगाद्याः कथिताः पुराणे-

रनन्तपुण्यास्तिथयस्ततस्तः। उपप्लवे चन्द्रमसो रवेश्च त्रिष्टकास्वप्ययनद्वये च"॥ उपप्लवे ग्रहणे "पानीयमप्यत्र तिलैर्विमिश्रं दद्यात् पितृभ्यः प्रयतो मनुष्यः। श्राद्धं कृतं तेन समाः सहस्रं रहस्यमेतत् पितरो वदन्ति"॥ स्नानमधिकृत्य भविष्ये। "संवत्सरफलं तत्र नवम्यां कार्त्तिके तथा। मन्वादौ च युगादौ च मासत्रयफलं लभेत्"॥ विरुद्धं गुरुवाक्यस्य यदत्र भाषितं मया। तत्क्षन्तव्यं बुधैरेव स्मृतितत्त्वबुभुत्सया"॥ स्मृतितत्त्वे प्रमादाद् यद्विरुद्धं बहुभाषितम्। गुणलेशानुरागेण तच्छोध्यं धर्मदर्शिभिः।

इति वन्द्यघटीय श्रीहरिहरभट्टाचार्य्यात्मज-श्रीरघुनन्दन-भट्टाचार्य्यविरचिते स्मृतितत्त्वे तिथितत्त्वं समाप्तम्।

# श्राद्धतत्त्वम् ।

प्रणम्य सच्चिदानन्दं कृष्णं वेदान्तविस्तृतम् । पार्व्वणादि श्राद्धतत्त्वं वक्ति श्रीरघुनन्दनः । अथ पार्व्वणश्राद्धम् । तत्र गोभिलः । "अथ श्राद्धममावास्यायां पितृभ्यो दद्यात् पञ्चमी प्रभृति वाऽपरपक्षस्य यदहरुपपद्यते तदहर्ब्राह्मणानामन्त्र्य पूर्व्वेद्युर्वा अनिन्द्येनोपायमान्त्रितोनातिक्रामेदामन्त्रितो वा नान्यदन्नं प्रतिगृह्णीयादिति" । यत्गृह्ये "आन्वष्टक्यं स्थालीपाकेन" एतेन पिण्डपितृयज्ञो व्याख्यातः "अमावास्यायां तच्छ्राद्धमितरदन्वाहार्य्यं मासौनम्" इति सूत्रे गोभिलेनान्वष्टक्यस्थालीपाकधर्म्मातिदेशेन अमावास्यायां पिण्डपितृयज्ञमभिधाय तच्छ्राद्धमित्यनेन तस्य श्राद्धत्वमुक्त्वा इतरदन्वाहार्य्यमित्यनेन तस्यामेव श्राद्धान्तरमुक्तं मासौनमित्यनेन तयोर्मासि मासि कर्त्तव्यत्वमुक्तं "मासिमासिवोऽशनम्" इति श्रुतेः नत्वन्वाहार्य्यं श्राद्धस्य तदङ्गं इति कर्त्तव्यताविधानमुक्तम् इदानीं गोभिलेन ग्रन्थान्तरेऽथेत्यादिना तदभिधीयते । अथ शब्दः स्नानविधानानन्तर्य्यार्थः स्नानविधानमुक्त्वा एतत् सूत्राभिधानात् अथवा साग्नेर्गृह्योक्त पिण्डपितृयज्ञानन्तर्य्यार्थः तथा च मनुः पितृयज्ञन्तु निर्व्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान् । पिण्डान्वाहार्य्यकं श्राद्धं कुर्य्यान्मासानुमासिकम्" ॥ चन्द्रक्षये अमावास्यायां मासानुमासिकं प्रतिमासिकम् । मङ्गलार्थश्च यथा स्मृतिः । "प्रणवश्चाथ शब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ" ॥ श्राद्धमित्यभिधाय कर्म्मणो नामधेयं "श्रद्धान्वितः श्राद्धं कुर्व्वीत" इति गोभिलसूत्रात् "संस्कृतं व्यञ्जनाद्यञ्च पयोदधिघृतान्वितम् । श्रद्धया दीयते यस्मात् श्राद्धं तेन निगद्यते" ॥ इति पुलस्त्यवचनाच्च । श्रद्धा शास्त्रार्थे दृढप्रत्ययः । "प्रत्ययो धर्म्मकार्य्येषु तथा श्राद्धेत्युदाहृता । नास्ति ह्यश्रद्दधानस्य धर्म्मकृत्ये प्रयो-

जनम्" ॥ इति देवलवचनात् । एवञ्च श्रद्धयाऽन्नादेर्दानं तच्छ्राद्धमिति वैदिकप्रयोगाधीनयौगिकम् । तथाचापस्तम्बः । "अथैतन्मनुः श्राद्धशब्दं कर्म्म प्रोवाच" इति । श्राद्धशब्दं श्राद्धनामकं कर्म्म एवं पार्व्वणादीनामपि वैदिकप्रयोगाधीनयौगिकत्वं पितृभ्य इति यजमानस्य पित्रादित्रिकमातामहादित्रिकपरम् । "असावेतत्ते यजमानस्य पित्रे असावेतत्ते यजमानस्य पितामहाय असावेतत्ते यजमानस्य प्रपितामहाय" इति श्रुतेः । "पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम् । अविशेषेण कर्त्तव्यं विशेषान्नरकं व्रजेत्" ॥ इति वृद्धयाज्ञवल्क्यवचनाच्च । मातामहा इति तदादित्रिकपरम् इत्यादिबहुवचनान्ता गणस्य संसूचका इत्युक्तेः । व्यक्तमाह गोभिलः । "पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यः मातामहेभ्यः प्रमातामहेभ्यः वृद्धप्रमातामहेभ्यः स्वधोच्यतां" इति अत्र प्रागुक्तश्रुतौ यजमानस्य इति श्रुतेः पित्रादिपदं स्वजनकादिपरम् । न तु "वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः" इति याज्ञवल्क्यवचनाद्वस्वादिपरम् एतद्वचनन्तु तदाकारत्वेन भावनापरमिति श्राद्धविवेकप्रभृतयः । व्यक्तं स्मृत्यर्थसारमदनपारिजातयोः । "वसुरुद्रादित्यरूपान् श्राद्धार्थे तर्पयेत् पितॄन् । नामगोत्रे समुच्चार्य्य तिलैस्तीर्थेषु संयत" इति वस्वादीनां ध्यानमादित्यपुराणे । प्रसन्नवदनाः सौम्या वरदाः शक्तिपाणयः । पद्मासनस्था द्विभुजा वसवोऽष्टौ प्रकीर्त्तिताः ॥ करे त्रिशूलिनो कायदक्षिणे चाक्षमालिनः । एकादश प्रकर्त्तव्या रुद्रा स्वर्च्चेन्दुमौलयः ॥ पद्मासनस्था द्विभुजा पद्मगर्भाङ्ककान्तयः । करादिस्कन्धपर्य्यन्त नालपङ्कजधारिणः ॥ इन्द्राद्या द्वादशादित्यास्तेजोमण्डलमध्यगाः" ॥ उक्तश्रुत्यादिषु पित्रादीनां प्रत्येकनिर्देशात् अत्र पितरो देवता इत्यापस्तम्बसूत्रे देवता इति बहुवचननिर्देशात् न योषिद्भ्य इत्यादिवचनाच्च पित्रादीनां प्रत्येकेन पत्नीनिरपेक्षेण च देवतात्वं पितृभ्य इत्यत्र तु बहुवचनात् साहित्यप्रतीतिरभिधानक्रियापेक्षया गर्गाभोज्यन्तामितिवत् न तु दद्यादित्यनेनोक्तप्रधानक्रियापेक्षया स्मृत्यपेक्षया श्रुतेर्बलवत्त्वस्य जावालेनोक्तत्वात् । तथाच जावालः

"श्रुतिस्मृविरोधे तु श्रुतिरेव गरीयसी । अविरोधे सदा कार्य्यं स्मार्त्तं वैदिकवत् सदा" ॥ इति अपरपक्षस्य कृष्णपक्षस्य तथाच शुक्लप्रतिपदादिमासमधिकृत्य श्रुतिः । "पूर्वः पक्षो देवानामपरः पक्षः पितॄणाम्" इति । यदहरिति चतुर्दशीेतरकृष्णपक्षीयां यां काञ्चित्तिथिं प्राप्य शौचादिद्रव्यसम्पदुपपद्यते तस्मिन् श्राद्धं कुर्य्यात् । चतुर्दशीवर्जनमाह मरीचिः । "विषशस्त्रश्वापदा हि तिर्य्यग्ब्राह्मणघातिनाम् । चतुर्दश्यां क्रिया कार्य्या अन्येषान्तु विगर्हिता" ॥ विषादिसाहचर्य्यात् ब्राह्मणघातीति ब्राह्मणकृतघातोऽस्यास्तीति बोध्यम् । अत्र यदमावास्यापञ्चमीप्रभृति तत्पूर्वकृष्णप्रतिपदादितिथ्युपादानं तत्प्रतिपदाद्यपेक्षया परपरकालस्य श्राद्धे निरग्नेः प्राशस्त्यज्ञापनार्थं तथाच निगमः । "अपरपक्षे यदहः सम्पद्यते अमावास्यायान्तु विशेषेण" इति । अन्यतिथावपि श्राद्धमाह गोतमः । "तथा सर्वस्मिन् दिने द्रव्यदेशसन्निधौ कालनियमः शक्तितः" इति योऽयम् अमावास्यादिकालनियमः सद्रव्यस्य शक्तस्य अरोगिणो बोद्धव्य इति श्राद्धविवेकः । चतुर्दशीवर्जनमाह मनुः । "कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम् । श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतरा" इति । यत्तु अमावास्याष्टका कृष्णपक्षपञ्चदशीषु च" इत्यभिधाय । "एतच्चानुपनीतोऽपि कुर्य्यात् सर्वेषु पर्वसु । श्राद्धं साधारणं नाम सर्वकामफलप्रदम् ॥ भार्य्याविरहितोऽप्येतत् प्रवासस्थोऽपि नित्यशः । शूद्रोऽप्यमन्त्रवत् कुर्य्यादनेन विधिना बुध" इति मत्स्यपुराणे कृष्णपक्षपृक्तेनामावास्याया नित्यश इत्यनेन नित्यत्वाभिधानं तदनुपनीतस्य । "जाते कुमारेऽरणिं मथित्वा तस्मिन्नायुष्य होमान् जुहोति तस्मिन् चूड़ाकरणोपनयनव्रतादेशगोदानक्रियास्तस्मिन्नेवैनमुद्वाहयेयुः" इति वैजवपापोक्तजाताग्नेः "अपिशब्दसमुच्चितोपनीतस्य च साग्नेः कर्त्तव्यत्वपरं तयोरमावास्यातिरिक्तकृष्णपक्षनिमित्तकपार्वणनिषेधात् । तथाच मनुः "न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मन" इति अन्यथा वाक्यभेदापत्तेः ।

अत्रामावास्याकर्त्तव्यपर्वकर्त्तव्ययोः पार्वणत्वमाह भविष्य-

पुराणम् । "अमावास्यां यत्क्रियते तत्पार्वणमुदाहृतम् । क्रियते वा पर्वणि यत् तत्पार्वणमिति स्मृतिः" ॥ अत्र यदित्यादेरुभयत्राभिधानेन विकल्पार्थ वाशब्देन च पार्वणस्य लक्षणद्वितयमुक्तं पर्वणि यत्क्रियते इत्यनेनामावास्यायाः पर्वत्वात्तच्छ्राद्धस्य वैदिकप्रयोगाधीनयौगिकत्वेन पार्वणत्वप्राप्तौ अमावास्यायां यत् पृथगुपादानं तदमावास्याश्राद्धस्य रूढित्वार्थं तेन पार्वणेन विधानेन इत्यादौ यौगिकनामावयवशक्त्यपेक्षया एकस्या एव समुदायशक्तेर्लघुत्वात् अमावास्या पार्वणधर्म्मातिदेशो लभ्यते न तु पूपादिद्रव्याष्टकादिपार्वणधर्म्मातिदेशः । अतोऽमावास्यायामष्टम्यादिपर्वणि च तन्निमित्तक-श्राद्धे पार्वणश्राद्धम् अन्यत्र पार्वणविधिना श्राद्धमित्यभिलापे विशेषः ।

ब्राह्मणानामन्त्र्येति ब्राह्मणानामन्त्र्य निमन्त्र्य श्राद्धं कुर्य्यात् पूर्वेद्युर्वा पूर्वदिने वा निमन्त्रणं नत्वामन्त्रणं यत्र प्रत्याख्याने प्रत्यवायस्तन्निमन्त्रणं यत्र प्रत्याख्याने कामचारस्तदामन्त्रणमिति पाणिनिसूत्रभाष्ये भेदेनोपादानात् अतएव निमन्त्रणातिक्रमनिषेधमाह । "अनिन्द्ये नोपामन्त्रितो नातिक्रामेदिति" नात्र पूर्वापरदिननिमन्त्रणे इच्छाविकल्पः किन्तु पूर्वदिनासामर्थ्ये परदिने तथाच देवलः । "श्वः कर्त्तास्मीति निश्चित्य दाता विप्रान्निमन्त्रयेत् । निरामिषं सकृद्भुक्त्वा सर्वसुप्तजने गृहे । असम्भवे परेद्युर्वा ब्राह्मणांस्तान्निमन्त्रयेत्" ॥ अत्र निश्चित्येति पदान्निश्चये निरामिषसकृत् भोजनस्याङ्गत्वं यद्यपि निश्चयोऽत्र श्वोभावि कर्म्मणि प्रत्यूहसम्भवादशक्यस्तथापि शास्त्रप्रतिपादित श्वः कर्त्तव्यत्वज्ञानमात्रविवक्षितः । अतो यत्र तादृक् ज्ञानं नास्ति तत्र तदङ्गरहितै नापि श्राद्धं कर्त्तव्यम् । वराहपुराणम् । "वस्त्रशौचादिकर्त्तव्यं श्वः कर्त्तास्मीति जानता । स्नानोपलेपनञ्चैव कृत्वा विप्रान्निमन्त्रयेत् । दन्तकाष्ठञ्च विसृजेत् ब्रह्मचारी शुचिर्भवेत्" ॥ विसृजेत् श्राद्धीयब्राह्मणेभ्यो दद्यादिति श्राद्धचिन्तामणिः । एतच्च पार्वणप्रकृतिकत्वात् सर्वश्राद्धेऽप्यायाति आभ्युदयिके तु श्राद्धदिन एव निमन्त्रणं प्रातरामन्त्रितान् विप्रानिति छन्दोगपरिशिष्टात् । श्राद्धदिने योषित् प्रसङ्गीतरस्य निमन्त्रणमाह

मार्कण्डेयपुराणम्। "निमन्त्रयेच्च पूर्वेद्युः पूर्वोक्तान् द्विजसत्तमान्। अप्राप्तौ तद्दिने वापि हित्वा योषित् प्रसङ्गिनम्" ॥ अत्र प्रशब्दात् क्रियानिष्पत्तिरूपमैथुनकर्त्तृनिषेधः नतु स्मरणादिरूपमैथुनकर्त्तृनिषेधः। मैथुनं चाष्टविधं तथाच दक्षः। "स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम्। सङ्कल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च" ॥

श्राद्धदिने श्राद्धकर्त्ता दन्तकाष्ठमखादित्वा द्वादशजलगण्डूषेण मुखं परिशोध्य प्रातःस्नात्वा धौतवस्त्रे बिभृयात्। "श्राद्धे जन्मदिने चैव विवाहे जीर्णसम्भवे। व्रते चैवोपवासे च वर्जयेत् दन्तधावनम्" ॥ इति विष्णुपुराणात्। "अलाभे दन्तकाष्ठस्य प्रतिषिद्धदिने तथा। अपां द्वादशगण्डूषैर्मुखशुद्धिर्विधीयते। तथैवामन्त्रितो दाता प्रातःस्नातः सहाम्बरः" ॥ इति देवलवचनात्। तथैवामन्त्रितो तथैव पूर्वोक्तप्रकारेण आमन्त्रितो येन स तथा देवकृत्यमुदङ्मुखेन पितृकृत्यं दक्षिणामुखेन कर्त्तव्यमाह शातातपः। "उदङ्मुखस्तु देवानां पितॄणां दक्षिणामुखः। प्रदद्यात् पार्वणश्राद्धे देवपूर्वं विधानतः" ॥ द्विजसत्तमाभावे भविष्यपुराणम्। "यस्त्वासन्नमतिक्रम्य ब्राह्मणं पतितादृते। दूरस्थं भोजयेन्मूढो गुणाढ्यं नरकं व्रजेत् ॥ तस्मान्नातिक्रमेत् प्राज्ञो ब्राह्मणान् प्रातिवेशिकान्। सम्बन्धिनस्तथा सर्वान् दौहित्रं विट्पतिं तथा। भागिनेयं विशेषेण तथा बन्धून् गृहाधिपान् ॥ नातिक्रमेन्नरश्चैतान् सुमूर्खानपि गोपते। अतिक्रम्य महारौद्रं रौरवं नरकं व्रजेत्" ॥ ब्राह्मणोऽत्राल्पविद्यः मूर्खं ब्राह्मणातिक्रमे दोषाभावस्य व्यासादिभिर्नास्ति मूर्खे व्यतिक्रम इत्यनेन अभिधानात्। विट्पतिर्जामाता गृहाधिपान् गृहस्थान् सुमूर्खानिति सम्बन्धिदौहित्रादि विशेषणमिति। दानकल्पतरु-

रत्नाकरौ। यमः प्रार्थयेत प्रदोषान्ते भुक्त्वान्नं शयितान् द्विजान्। सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः ॥ भवितव्यं भवद्भिश्च श्वोभूते श्राद्धकर्म्मणि। ते तं तथेत्यविघ्नेन याति चेद्रजनौ सुखम्”॥ प्रार्थयेत निमन्त्रणपूर्व्वकं नियमं श्रावयेत्। तन्नियममाह सर्वायासेति ते ब्राह्मणास्तं निमन्त्रयितारं तथेत्यूचुरिति शेषः। अत्रैकब्राह्मणनिमन्त्रणपक्षेऽपि प्रकृतावूहाभावान्न बहुवचनस्थाने एकवचनोहः नवाबाधः वैभक्तिकार्थापेक्षया प्राथमिकत्वेन बलवतः प्रातिपादिकार्थस्य समवेतत्वेन नियोज्यत्वात् किन्तु अविकृत एव मन्त्रः पाठ्यः मत्स्यपुराणेऽपि त्वं मयात्र निमन्त्रित इत्युपक्रम्य बहुवचनान्त मन्त्रपाठाच्च तद्यथा। “दक्षिणं जानु चालभ्य त्वं मयात्र निमन्त्रितः। एवं निमन्त्र्य नियमान् श्रावयेत् पैतृकान् बुधः”॥ तन्नियममाह “अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः। भवितव्यं भवद्भिश्च मयात्र श्राद्धकर्म्मणि” ॥ प्रकृतावेवं प्राप्तत्वात् एकोद्दिष्टे अपि नोहः। एवं देवताभ्यः पितृभ्यश्च इत्यप्यनूह्य पाठ्यं पितृपदस्याग्निष्वात्तादिपरत्वात् अत्र परदिने निमन्त्रणे सर्वायासेत्यस्य न पाठः श्वः पदानन्वयात् किन्त्वक्रोधनैरित्यस्य पाठः अत्र निमन्त्रित इत्यस्यातीतमात्र प्रकाशकत्वात् श्राद्धं कर्त्तुं त्वां निमन्त्रये इति लडन्त एव प्रयोगो युक्तः अतएव विकृतावेकोद्दिष्टप्रयोगे विप्र त्वामहं निमन्त्रय इति वराहपुराणे लडन्त एव प्रयोग उक्त इति तत्त्वम्।

ब्राह्मणासम्पत्तौ कुशमयब्राह्मणे श्राद्धमुक्तं श्राद्धविवेके। “निधायाथ दर्भचयमासनेषु समाहितः। प्रैषानुप्रैषसंयुक्तं विधानं प्रतिपादयेत्” ॥ इति तद्धृतवचनात् “ब्राह्मणानामसम्पत्तौ कृत्वा दर्भमयान् द्विजान्। श्राद्धं कृत्वा विधानेन पश्चाद्विप्रेषु दापयेत्” ॥ इति श्राद्धसूत्रभाष्यकारसमुद्रकर-

द्भुतवचनाच्च। दर्भवटुलक्षणमाह रत्नाकरे गृह्यसंग्रहः। "ऊर्द्ध्वकेशो भवेत् ब्रह्मा लम्बकेशस्तु विष्टरः। दक्षिणावर्त्तको ब्रह्मा वामवर्त्तस्तु विष्टरः" ॥ इति यादृक् ब्रह्मा तादृक् क्रमेण ब्राह्मण इति भाव्यम्। शान्तिदीपिकायाञ्च आपस्तम्बः। "सप्तभिर्नवभिर्वापि सार्द्धद्वितयवेष्टितम्। प्रणवेनैव मन्त्रेण द्विजः कुर्य्यात् कुशद्विजम्" इति नवभिरित्यर्थः पञ्चभिरिति कर्म्मोपदेशिन्यां पाठः दर्भसंख्या विशेषाभिधानं छन्दोगेतरपरम्। "यज्ञवास्तुनि मुष्ट्याञ्च स्तम्बे दर्भवटौ तथा। दर्भसंख्या न विहिता विष्टरास्तरणेष्वपि" ॥ इति छन्दोगपरिशिष्टात् ब्राह्मणप्रतिनिधित्वेन गोभिलगृह्ये कमण्डलुं दर्भवटुं वा निधायेति दृष्टं प्रागुक्तवचनप्राप्तञ्च दर्भवटुरूप दर्भचयमादाय कर्म्मकरणे यस्य प्रैषस्य प्रश्नस्यानुप्रैषं प्रत्युत्तरमबाधितं तद्‌युक्तकर्म्मणोऽभिधानात् निमन्त्रितोऽस्मि तृप्ताःस्मः इति प्रत्युत्तराभावात् निमन्त्रणतृप्तिप्रश्नाभावः। न च दर्भब्राह्मणपक्षे होत्रैवावसोः सदने सीदामीत्यविकृतमेव वक्तव्यमिति भट्टभाष्यदर्शनादत्रापि निमन्त्रितोऽस्मीत्यनेन वक्तव्यमिति वाच्यं "यद्युवा उभयञ्चिकीर्षेत् होतृत्वं ब्रह्मत्वं च तेनैव कल्पेन छत्रमुत्तरासङ्गमुदक कमण्डलुं दर्भवटुं वा ब्रह्मासने निधाय" इति गोभिलसूत्रेण होतुर्ब्रह्मकर्म्मकर्त्तृत्वेन विधानात् तत्र सीदामीत्यस्य प्रतिनिधित्वारोपवेशनेन समवेतार्थत्वात् एतेनैवेत्येवकारेण सीदेत्यस्य कल्पनाया अयुक्तत्वाच्च अत्र तु निमन्त्रितोऽस्मीत्यस्य सर्वथैवासमवेतार्थत्वेनायुक्तत्वं कुरुष्वेत्यादि प्रत्युत्तराणान्त्वन्येनापि सम्भवादनुज्ञादीनां कर्त्तव्यता एव। एवञ्च दर्भवटौ श्राद्धस्य करणेऽपि "अविच्छिन्ने कथम्भावे यत् प्रधानस्य पठ्यते। अविज्ञातफलं कर्म्म तस्य प्रकरणाङ्गता" ॥ इति न्यायेन श्राद्धाङ्गत्वात् कर्त्तृसंस्कारकत्वाच्च निमन्त्रणाभावेऽपि सकृन्निरामिषभोजनमैथुनवर्जनयोः कर्त्तव्यतेति।

उपवेशनमाह गोभिलः। "स्नातान् शुचीनाचान्तान् प्राङ्मुखान् उपवेश्य दैवे युग्मान् यथाशक्ति अयुग्मान् पित्र्ये एकैकस्योदङ्मुखान् द्वौ दैवे त्रीन् पैत्रे एकैकमुभयत्र वा। मातामहानामप्येवं तन्त्रं वा वैश्वदैविकम्। देवपूर्वं श्राद्धं कुर्वीत" इति स्नातानवगाहितान् न तु मन्त्रस्नातान्। शुचीन् सूतकादिरहितान् एवं प्रयतत्वादियुक्तानां ब्राह्मणानां दर्भासने स्वागतप्रश्नपाद्यादिना आसनस्पर्शहस्तग्रहणपूर्वकम् उपवेशनानि कार्य्याणि एवं प्रयतोऽपराह्णे शुचिः शुक्लवासा दर्भेषु तिष्ठन् एवं स्वागतमिति ब्रूयात् "पाद्यार्घ्याचमनीयोदकानि दत्त्वा ब्राह्मणानुपसंगृह्य उपवेशयेदासनमालभ्य" इति शङ्खलिखितवचनात्। स्वयमपि सूतकादिरहितः स्नातः कृतदेवपूजान्तनित्यकृत्यः। अत्र श्राद्धदिने अङ्गेषु तैलं न ग्राह्यम्। तथा च स्मृतिः। "प्रातःस्नाने पितृश्राद्धे षष्ठ्याञ्च द्वादशीषु च। सुरास्नानसमं तैलं पितरं नरकं नयेत्॥ घृतञ्च सार्षपं तैलं यत्तैलं पुष्पवासितम्। अदुष्टं पक्वतैलञ्च तैलाभ्यङ्गे च नित्यशः"॥

ततश्च प्रथमं प्राङ्मुखः स्थित्वा पादौ प्रक्षालयेच्छनैः। उदङ्मुखो वा दैवत्ये पैतृके दक्षिणामुखः" इति देवलवचनात् दक्षिणामुखः सन् कृतपादशौचस्तत्रापि वामपादादिक्रमः। यथा गोभिलः "सव्यं पादमवने निजे" इति वामपादं प्रक्षालयति "दक्षिणं पादमवने निजे" इति दक्षिणं पादं प्रक्षालयति इति। कात्यायनगृह्येऽपि "सव्यं प्रक्षाल्य दक्षिणं प्रक्षालयतीति" तेन यजुर्वेदिनामपि प्रथमं वामपादप्रक्षालनं एवं शूद्रस्यापि ततो दक्षिणपाणौ पवित्रं वामे बहुतरकुशान् धारयेत् "सव्यः सोपग्रहः कार्य्यो दक्षिणः सपवित्रकः" इति छन्दोगपरिशिष्टात् ततः प्राङ्मुख उदङ्मुखो वा कृताचमनः

"शुचि देशं विविक्तञ्च गोमयेनोपलेपयेत्। दक्षिणाप्रवनञ्चैव प्रयत्नेनोपपादयेत्"॥ इति मनूक्त गोमयोपलिप्तदेशे उपविशेत् "आसीन ऊर्द्धः प्रह्वो वा नियमो यत्र नेदृशः। तदासीनेन कर्त्तव्यं न प्रह्वेन न तिष्ठता" इत्यादि छन्दोगपरिशिष्टात् आसीन उपविष्ट ऊर्द्धो दण्डवत् स्थितःप्रह्वोऽवनतपूर्वकायः। जानुपातं विशेषयति वशिष्ठः। दक्षिणं पातयेज्जानु देवानुपचरन् सदा। पातयेदितरज्जानु पितॄन् परिचरन्नपि", इतरद्वामम्।

अथ श्राद्धदेशाः। यमः। "रूक्षं क्रमियुतं क्लिन्नं सङ्कीर्णानिष्टगन्धिकम्। देशं त्वनिष्टशब्दञ्च वर्ज्जयेत् श्राद्धकर्म्मणि" रूक्षं धूलियुतं क्लिन्नं पङ्किलम् अनिष्टगन्धिकम् असुरभिगन्धम् अनिष्टशब्द प्रतिकूलशब्दम्। विष्णुः। "न म्लेच्छविषये श्राद्धं कुर्य्यान्नेच्छेत्तु तं तथा। चातुर्वर्ण्यव्यवस्थानं यस्मिन् देशे न विद्यते। तं म्लेच्छदेशं जानीयादार्य्यावर्त्तमतःपरम्"॥ शङ्खलिखितौ "नेष्टकाराचिते पितॄन् सन्तर्पयेत्" इति ब्रह्मपुराणं "पृथक् पृथक् चासनेषु तिलतैलेन दीपकाः। अविच्छिन्नास्तथा देयास्ते तु रक्षन्ति वै द्विजान्"॥ आसनेषु तत्सन्निधानेषु अविच्छिन्नाः प्रच्छादनावध्यवस्थायिनः। रक्षन्ति श्राद्धमितिशेषः। द्विजा इति सम्बोधनम्। ततो वास्तुपुरुषाय नम इति वास्त्वर्च्चां कुर्य्यात्। "श्राद्धाधिकरणे यत्र नार्च्चितो वास्तुदैवतः। तत्र शून्यं भवेत् सर्वं रक्षोविघ्नादिभिर्हृतम्॥ तस्माद्वास्त्वर्च्चनं कार्य्यं सम्यक् सम्पदमीप्सुभिः" इति राघवभट्टधृत-वास्तुशास्त्र-कद्यम-वचनात्। योगियाज्ञवल्क्यः। "ध्यायेन्नारायणं नित्यं स्नानादिषु च कर्म्मसु। प्रायश्चित्तेष्वपि सर्वस्माद्दुष्कृतान्मुच्यते पुमान्॥ प्रमादात् कुर्वतां कर्म्म प्रच्यवेताध्वरेषु यत्। स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति

श्रुतिः ॥ तद्विष्णोरिति मन्त्रेण मज्जेदप्सु पुनः पुनः । गायत्री वैष्णवी ह्येषा विष्णोः संस्मरणाय वै" ॥ ततश्च श्राद्धस्यादौ "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः दिवीव चक्षुराततम्" । इत्यनेन विष्णुं स्मरेत् । अग्निपुराणम् । "अर्च्चयित्वा जगन्नाथं शुभं कर्म्म समाचरेत् । दत्त्वाग्रं देवदेवाय तच्छेषाण्युपयुञ्जयेत्" ॥ उपयुञ्जयेत् कर्म्मणि योजयेत् । लिङ्गपुराणे "शालग्रामशिलाग्रे तु यच्छ्राद्धं क्रियते नृभिः । तस्य ब्रह्मान्तिकं स्थानं तृप्ताश्च पितरो दिवि" ॥ ततश्च शालग्रामे विष्णुं संपूज्य श्राद्धीयाग्रं दद्यात् ।

ब्रह्मपुराणे । "परकीय गृहे यस्तु स्वान् पितॄन् तर्पयेज्जडः । तद्भूमिस्वामिनस्तस्य हरन्ति पितरो बलात् । अग्रभागं ततोऽस्तेभ्यो दद्यात् मूल्यञ्च जीवताम्" ॥ गृह इति भूमात्रपरम् । यद्भूस्वामिपितृहरणस्य हेतुत्वेनाभिधानानात् मूल्यदानाग्रदानयोः प्रत्येकं हरणनिवर्त्तकत्वेन वैकल्पिकत्वं स्मृतिशास्त्रे विकल्पस्तु आकाङ्क्षापूरणे सति" इति भविष्यपुराणात् । ततश्च श्राद्धविघातनिवर्त्तकत्वेन तदङ्गत्वात् पितृरीत्या भूस्वामि पितृभ्यः प्रथमतो देयम् । ततः पार्वणादौ प्राचीनावीतित्वादिना नान्दीमुखे उपवीतित्वादिना इति । अत्र पितृपदस्य प्राप्तपितृलोकमात्रपरत्वे प्रेतानां हरणासम्भवात् सुतरां स्वधेति निर्देश्यं "स्वधाकारा परित्यागी सर्व्वेषु पितृकर्म्मसु" । इति श्राद्धकाण्डे विष्णुवचनात् प्रमीतमात्र परत्वे तु "न स्वधाञ्च प्रयुञ्जीत प्रेतपिण्डे दशाहिके" इति ऋष्यशृङ्गवचने दशाहिकग्रहणादन्यत्र स्वधाप्रयोगादत्रापि तथा । असवर्णौर्द्ध्वदैहिकनिषेधस्य भ्रात्रादि प्रकरणीयत्वादन्यभूमात्रेऽग्रदानमिति भीष्मतर्पणे उक्तम् । औदकोऽप्येवम् । एतच्च स्वभूमावस्वामिकायाञ्च भूमौ न दद्यात् अस्वामिका-

आह यमः। "अटव्यः पर्वताः पुण्या नद्यस्तीर्थानि यानि च। सर्वाण्य स्वामिकान्याहुर्न हि तेषु परिग्रहः"॥ पुण्या इति विशेषणादटव्यो नैमिषाद्याः पर्वता हिमालयाद्या नद्यो-गङ्गाद्यास्तीर्थानि पुरुषोत्तमादिक्षेत्राणि वाराणस्याद्यायत-नानि च। स्वाम्यभावे हेतुमाह न हितेष्विति। परिग्रहो यथेष्टदानविक्रयणादिविनियोगलक्षणः।

देवलः "श्राद्धस्य पूजितो देशो गया गङ्गा सरस्वती। कुरुक्षेत्रं प्रयागश्च नैमिषं पुष्कराणि च॥ नदीतटेषु तीर्थेषु शैलेषु पुलिनेषु च। विविक्तेषु च तुष्यन्ति दत्तेनेह पिता-महाः"॥ विविक्तं विजनं ततश्च तथाविधान् ब्राह्मणान् स्वागतादिना पूजयित्वोपवेशयेत्। श्राद्धार्थं यद्देश्यां प्रवेशयि-तव्यं तदुत्तरदिशा यन्निःसारयितव्यं तद्दक्षिणदिशा "उत्तरे-णाहरेद्देयां दक्षिणेन विसर्जयेत्" इति वायुपुराणात्। वेदिरत्र दक्षिणाप्लवनदेशः। याज्ञवल्क्यः। "अपराह्णे समभ्यर्च्य स्वागतेनागतांस्तु तान्। पवित्रपाणिराचान्तानासनेषूपवेश-येत्"॥ उभयत्रेति देवपक्षे पितृपक्षे चेत्यर्थः। एवं माता-महपक्षेऽपि पृथक् वैश्वदेवब्राह्मणं मातामहब्राह्मणञ्च तन्त्रं वा वैश्वदेविकमिति एवं पितृपक्ष मातामहपक्षार्थमेकं वैश्व-देवब्राह्मणोपवेशनम् एवं ब्राह्मणानामसम्पत्तौ पक्षत्रया-सनेषु दर्भवटुत्रयोपवेशनम्।

अथ श्राद्धदेवाः। तत्र श्राद्धभेदे देवताभेदमाह बृहस्पतिः। "इष्टिश्राद्धे क्रतुदक्षः सत्योनान्दीमुखे वसुः। नैमित्तिके कालकामौ काम्ये च धूरिलोचनौ॥ पुरूरवा माद्रवाश्च पार्वणे समुदाहृतौ"॥ इष्टिश्राद्धे इच्छाश्राद्धे नैमित्तिके एकोद्दिष्टे। "एकोद्दिष्टञ्च यच्छ्राद्धं तन्नैमित्तिकमुच्यते। तदप्यदैवं कर्त्तव्य-मयुग्मानाशयेद्द्विजान्"॥ इति भविष्यपुराणात्। एवञ्च

एकोद्दिष्टे विश्वदेवकरणाकरणयोः शाखिभेदेन व्यवस्था। तत्र सामगयजुर्विदोर्गृह्यानुसारात् विश्वदेवरहितत्वं साग्नेरृग्वेदिनोर्विश्वदेवसहितत्वं तद्गृह्यपरिशिष्टोक्तत्वात् यथा "यस्मिन्नवे पुराणे वा विश्वे देवा न लेभिरे। आसुरं तद्भवेच्छ्राद्धं वृषलं मन्त्रवर्जितम्"॥ इति। "काम्यं कामाय तु हितं काम्यमभिप्रेतार्थसिद्धये। पार्वणेन विधानेन तदप्युक्तं खगाधिप"इति भविष्यपुराणोक्तं काम्यश्राद्धे कामाय इत्यनेनैवाभिप्रेतार्थलाभे अभिप्रेतार्थसिद्धय इति यत् पुनरुपादानं तत् स्वगतपुत्रादिफलोद्देश्यकत्वेन तिथ्यादि श्राद्धानामेवात्र काम्यत्वार्थम् अतःसंक्रान्त्यादिश्राद्धादस्य भेदः। एवञ्च संक्रान्त्यादिश्राद्धे पितृतृप्तेः प्राधान्यं पुत्रादेः फलस्यानुषङ्गिकत्वं तिथ्यादिश्राद्धे तु पुत्रादेः फलस्य प्राधान्यं पितृतृप्तेरानुषङ्गिकफलत्वमिति देवविशेषवाचकस्य अपि पुरूरवस ऊकारमध्यता पितृदयिता-श्राद्धकाण्ड-कल्पतरुमैथिलग्रन्थप्राचीनश्राद्धविवेकेषु तथा लिखनात् रायमुकुटप्रभृतिभिरेव पुरोरूयन्त इति स्वकपोलरचित व्युत्पत्त्या ओकारयुक्तः पाठः कृतः। स तु राजविशेषवाचकः।

अथासनम्। तत्र विशेषमाह देवलः। "ये चात्र विश्वेदेवार्थं विप्राः पूर्वं निमन्त्रिताः। प्राङ्मुखान्यासनान्येषां द्विदर्भोपहितानि च॥ दक्षिणामुखयुक्तानि पितॄणामासनानि च। दक्षिणाग्रैकदर्भाणि प्रोक्षितानि तिलोदकैः"॥ प्राङ्मुखत्वं दक्षिणामुखत्वञ्चाग्रभागापेक्षया ज्ञेयम् एषां विश्वदेवब्राह्मणानां पितॄणां पितृब्राह्मणानामेतच्चासनं ब्राह्मणोपवेशनार्थं नतु विश्वदेवार्थं पित्राद्यर्थंवा तथा च यमः। "ततः सिद्धमिति प्रोच्य कल्पिते आसने तथा। आसध्वमिति तान् ब्रूयादासनं संस्पृशन्नपि" इत्यत्र कल्पितासनस्य ब्राह्मणोपवेशन एवोपयोगावगतेर्विश्वदेव-पित्राद्यर्थासनन्तु कुशत्रयात्मकमेव

पाणिप्रक्षालनं दत्त्वा विष्टरार्थं कुशानपि "आवाहयेदनुज्ञातो विश्वे देवा स इत्यृचा। तथा द्विगुणांस्तु कुशान् दत्त्वा उशन्तस्त्वेत्यृचा पितॄन्" इति याज्ञवल्क्योक्तेः प्रक्षाल्यतेऽनेन इति प्रक्षालनं जलं तेन तूष्णीं ब्राह्मणपाणौ जलं दत्त्वा विष्टरार्थमासनार्थमिति दीपकलिका। कुशान् ऋजून् दद्यात् द्विगुणानित्युक्तेः।

अथ दर्भाः। ब्रह्मपुराणे "सपिञ्जलाश्च हरिताः पुष्टाः स्निग्धाः समाहिताः। गोकर्णमात्राश्च कुशाः सकृच्छिन्नाः समूलकाः॥ पितृतीर्थेन देयाः स्युर्दूर्वाश्यामाक एव च। काशाः कुशा वल्वजाश्च तथान्ये तीक्ष्णरोमशाः॥ मौञ्जाश्च शाद्वलाश्चैव षड्दर्भाः परिकीर्त्तिताः"॥ तीक्ष्णरोमशा इति वल्वजानां विशेषणं तेन तेषामलाभ "शूकतृणशरशीर्य्ययुत-वल्वज उलपशुण्ठवर्जं सर्वतृणानीति" गोभिलेन तद्व्यतिरिक्त-वल्वजानां निषेधो बोद्धव्यः। सपिञ्जलाः साग्राः स्निग्धा अकर्कशाः पुष्टा न सूक्ष्माः समाहिता निर्दोषा शाद्वला इति मौञ्जस्य विशेषणं शूकानि फलपुष्पमञ्जर्य्यस्ता येषां तृणानां सन्ति तानि शूकतृणानीति भट्टनारायणचरणाः गोकर्णमात्रा विस्तृताङ्गुष्ठानामिका परिमिताः। विष्णुः। "कुशस्थाने काशं दूर्वां वा दद्यादिति" कृतमुष्टिहस्तपरिमिताः कुशाः प्रस्तरणार्थाः तथा च वायुपुराणम्। "रत्निप्रमाणाः शस्ता वै पितृतीर्थेन संस्कृताः। उपमूले तथा लूनाः प्रस्तारार्थे कुशोत्तराः"॥ वर्ज्यकुशानाह हारीतः "चितौ दर्भाः पथिदर्भा ये दर्भा यज्ञभूमिषु। स्तरणासनपिण्डेषु षड्दर्भान् परि-वर्जयेत्॥ पिण्डार्थं ये स्तृता दर्भा यैः कृतं पितृतर्पणम्। मूत्रोच्छिष्टप्रलेपे तु त्यागस्तेषां विधीयते"॥ छन्दोगपरि-शिष्टम्। "धृतैः कृते च विण्मूत्रे त्यागस्तेषां विधीयते।

नीवीमध्ये च ये दर्भा ब्रह्मसूत्रे च ये धृताः॥ पवित्रां स्तान् विजानीयाद्यथा कायस्तथा कुशाः। आचम्य प्रयतो नित्यं पवित्रेण द्विजोत्तमः। नोच्छिष्टन्तु भवेत्तत्र भुक्तशेषं विवर्ज-येत्"॥ इति वचनानुरोधात् पवित्रदानमेव सम्यक्।

अथानुज्ञा। पूर्वदिननिमन्त्रणे तदहर्निमन्त्रणे वा श्राद्धदिने निमन्त्रणानन्तरमनुज्ञाग्रहणमाह आपस्तम्बः। "पूर्वेद्युर्निवेदनं वेदनं परेद्युर्द्वितीयं तृतीयमामन्त्रणमिति" निवेदनं श्वो मया श्राद्धं कर्त्तव्यं तत्र भवन्तो निमन्त्रणीया इत्येवं रूपं निवेदनम्। द्वितीयं त्वामहं निमन्त्रये इत्यनेन निमन्त्रणम्। त्वयि श्राद्ध-महं करिष्ये इति तृतीयमनुज्ञाग्रहणरूपं तत्र दर्भवटुपक्षे निवेदननिमन्त्रणयोरभावः किन्त्वनुज्ञायां त्वयीति स्थाने दर्भमयब्राह्मणे इति वक्तव्यं साक्षात् ब्राह्मणपक्षे द्वितीयतृतीय-मिति बोधनापेक्ष्यं ब्रह्मपुराणम्। "उपवेश्य जपेद्धोमान् गायत्रीं तदनुज्ञया। मन्त्रं वक्ष्यामहं तस्मादमृतं ब्रह्म-निर्मितम्॥ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च। नमः स्वधायै स्वाहायै नित्यमेव भवन्त्विति॥ आद्यावसाने श्राद्धस्य त्रिरावृत्त्या जपेत् सदा। पिण्डनिर्वपणे चैव जपेदेतत् समाहितः॥ पाठ्यमानमिमं श्रुत्वा श्राद्धकाले उपस्थिते। पितरः क्षिप्रमायान्ति राक्षसाः प्रद्रवन्ति च"॥ उपवेश्य ब्राह्मणानुपवेश्य तदनुज्ञया तस्य श्राद्धस्यानुज्ञया ततश्च कुरु-ष्वेति प्रतिवचने लब्धे श्राद्धाङ्गत्वेन गायत्रीजपादिकं कुर्य्या-दित्यर्थः। तथा च ब्रह्माण्डपुराणम्। "श्राद्धं करिष्य इत्येवं पृच्छेद्विप्रान् समाहितः। कुरुष्वेति स तैरुक्तः कुर्य्याद्दर्भासनं तथा"॥ विप्रान् निमन्त्रितब्राह्मणान् तदसम्भवे ब्राह्मणान्त-रानपि कुरुष्वेति प्रत्युत्तरस्य उभयत्र सम्भवात्। अतएव पितृदयितायां श्राद्धानुज्ञानन्तरं गायत्रीजप उक्तः न च गायत्री-

जपार्थमनुज्ञाग्रहणानन्तरं वचनान्तरसिद्ध-श्राद्धानुज्ञापरत्व-सम्भवे अन्यपरत्व कल्पनानुपपत्तेः अत्र देवताभ्य इति मन्त्रे वेदिभेदेन मैथिलानां यत् पाठकल्पनं तत् कल्पनमेव। ब्रह्म-पुराणे एकधैव लिखितत्वात्। ततश्च स्वधायै स्वाहायै नित्यमेव भवन्त्विति इति सर्ववेदिनां बहुसम्मतः पाठः। अत्र अनुज्ञायाः सङ्कल्पकार्य्यकारित्वेन तत्तन्मासाद्युल्लेखमाचरन्ति। अत्र ब्रह्मपुराणे तत्तन्मासे कृष्णपक्षकृत्यमभिधाय शुक्लपक्षकृत्या-भिधानेन कृष्णपक्षनिमित्तकपार्वणश्राद्धस्यापि ब्रह्मपुराणीय-त्वात् पौर्णमास्यन्तमासेनोल्लेखः। तद्यथा "पयोमूलफलैः शाकैः कृष्णपक्षे च सर्वदा। पराधीनः प्रवासी च निर्धनो वापि मानवः। मनसा भावशुद्धेन श्राद्धं दद्यात्तिलोदकम्"॥ एवमश्वयुक कृष्ट-पक्षाष्टका मघात्रयोदशीषु च यत्र राश्युल्लेखः श्रूयते तत्र सौरेण एतदुभयसाधकासत्वे तु दर्शान्तेन वैशाखादिनोल्लेखः। श्राद्धे गोत्राद्युल्लेखमाहतुःपारस्करप्रचेतसौ। "गोत्रसम्बन्धनामानि पितॄणां परिकल्पयन्"। गोभिलोऽपि। "गोत्रं स्वरान्तं सर्वत्र गोत्रस्याक्षय्य कर्म्मणि। गोत्रस्तु तर्पणे प्रोक्तः कर्त्ता एवं न मुह्यति॥ सर्वत्रैव पितः प्रोक्तं पिता तर्पणकर्म्मणि। पितुरक्षय्यकाले तु अक्षयां तृप्तिमिच्छता॥ शर्म्मन्नर्घ्यादिके कार्य्ये शर्म्मा तर्पणकर्म्मणि। शर्म्मणोऽक्षय्यकाले तु पितॄणां दत्तमक्षयम्"॥ शर्म्मन्नित्यनेन गोत्रसम्बन्ध-नामानि इत्यनेन एकवाक्यतया शर्म्मान्तं नाम प्रतीयते। तथा च विष्णुपुराणम्। "ततश्च नाम कुर्वीत पितैव दशमेऽहनि। देवपूर्वं नराख्यं हि शर्म्मवर्म्मादिसंयुतम्"॥ देवपूर्वं देवात् पूर्वं नराख्यं नर नाम तच्च विशिष्टं शर्म्मयुतं एतच्च विप्रपरम्। "शर्म्मा देवश्च विप्रस्य वर्म्म त्राता च भूभुजः। भूतिर्गुप्तश्च वैश्यस्य दासः शूद्रस्य कारयेत्"॥ इति यमवचनात् अत्र चकारेण देव-

शर्म्मणो: समुच्चय: । तत्रापि शर्म्मवर्म्माद्यन्ततामाह शातातप: । "शर्म्मान्तं ब्राह्मणस्य स्याद्वर्म्मान्तं क्षत्रियस्य च । धनान्तञ्चैव वैश्यस्य दासान्तं चान्त्यजन्मन:" अत्र धनान्तमिति श्रुते: प्रागुक्तवचने भूतिपदश्रुतेश्च भूतिपदधनपदयोर्वैकल्पिकत्वम् । एवं शर्म्मन्नित्यनेन शर्म्मान्त नाम्ना विशेष्यस्य विशेषणत्वात् पितरिति विशेषणवत् गोत्रस्य विशेषणस्यापि सम्बुद्ध्यन्तत्वं स्वरान्तमित्यनेन भङ्ग्यन्तरेणाभिहितम् । एवं सम्बुद्ध्यन्तत्वादियुक्तं गोत्रपदम् । कर्त्ता उच्चारयिता न मुह्यतीत्यनेन श्राद्धादौ गोत्रपदमेवोच्चार्य्यं न तु पितृदयिताकल्पतरुश्राद्धविवेकोक्तं गोत्रपर्य्यायकर्मापि सगोत्रपदम् । एवं पितरित्यादिश्रुते: सम्बन्धिशब्दानां पदिन्यायेन स्वसम्बन्धिपरत्वात् लौकिकेऽपि तथैवाभिधानात् पितरित्यादिवक्तव्यं नत्वस्मत् पितरित्यादि अन्यथा अन्नोत्सर्गादावपि एतदस्मदन्नमित्यभिलापापत्ते: । एवमेव श्रीदत्तप्रभृतय: । मिश्रोऽपि कृत्यप्रदीपेऽप्येवमिति ।

पित्रादीनां नामाज्ञाने तु आश्वलायनसूत्रं "नामान्यविद्वांस्तत् पितृपितामह-प्रपितामहा इति" अत्र पित्रादीनां नामाज्ञाने गोत्रसम्बन्धान्तरं देवदत्तपितरित्यादि प्रयोज्यम् अस्मदित्यनभिधाय तदित्यनेन नामाविद्वत् कर्त्तृनामपरामर्शात् । अतएव श्राद्धविवेके नामाज्ञाने अमुकपितृपितामहप्रपितामहा इति कृत्वा दद्यादित्युक्तम् । एवञ्च शर्म्मन्नर्घ्यादिके कार्य्यमित्याद्यवाधायामुकपितृदेवशर्म्मन्नित्यादिकं प्रयोक्तव्यम् । न च नामघटकत्वेन शर्म्मेति पृथङ्न वक्तव्यमिति वाच्यं शर्म्मान्तं ब्राह्मणस्य स्यादित्यादौ शर्म्मादेर्नामभिन्नत्वेनोपपदत्वेन च प्रतीते: । अतएव सम्बन्धवाचकादस्य भेद: । एवं पितामहादौ मातामहादावप्यूहनीयम् ।

अभिलापप्रकारमाह ब्रह्मपुराणम् । "एतद्वोऽन्नमित्युक्त्वा

विश्वां देवांश्च संयजेत्। पितृभ्यश्च ततो दद्यादन्नमामन्त्रणेन तु॥ अमुकामुकगोत्रैतत्तुभ्यमन्नं स्वधा नमः”॥ एतद्व इति बहुवचनान्तोपादानेन सम्बोध्या विश्वे देवा अपि तथा प्रतीयन्ते तथा विश्वान् देवान् प्रति बृहस्पतिना च तत्तत् श्राद्धे क्रतु दक्षादिसंज्ञकद्वितयद्वितयोक्तत्वात् तत्तत् सार्थकत्वाय छर्वस्यपरस इति वत् पुरूरवो माद्रवसो विश्वे देवा एतद्वोऽन्नं नमः” इति द्विवचनबहुवचनाभ्यां वाक्यरचना पितृदयितादौ लिखिता गरुड़पुराणेऽप्येतादृशी वाक्यरचना। अतएव इच्छाश्राद्धे क्रतुदक्षादि नामान्युक्त्वा बृहस्पतिना तदज्ञाने आगच्छन्त्वित्यादि मन्त्रपाठ उक्तः यथा “उत्पत्तिं नामचैतेषां न विदुर्ये द्विजातयः। अयमुच्चारणीयस्तैः श्लोकः श्रद्धासमन्वितैः॥ आगच्छन्तु महाभागा विश्वे देवा वरप्रदाः। ये यत्र विहिता श्राद्धे सावधाना भवन्तु ते”॥ इति ततश्च नामज्ञाने सुतरां तस्यैवोच्चारणं प्रतीयते।

दैवे नम इत्यनेन त्यागमाह विष्णुः। “नमो विश्वेभ्यो देवेभ्यो इत्यन्नमादौ प्राङ्मुखयोर्निवेदयेदिति” अत्र नम इत्यनेन विश्वेभ्यो देवेभ्यो दद्यादित्यन्वयः। ततो दैवपक्षकर्मानन्तरं पित्रादित्रिकं मातामहादि त्रिकञ्च सम्बुद्ध्यन्तगोत्रसम्बन्धनाम्ना एतत्तुभ्यमन्नं स्वधेति सर्वशाखिगोचरपौराणिकत्वेन सम्बोधनेन नामान्तमुच्चार्य तत्तच्छाखोक्तप्रकारेण वाक्यरचना। अत्र “अर्घ्येऽक्षय्योदकेचैव पिण्डदानेऽवने जने। तन्त्रस्य विनिवृत्तिः स्यात् स्वधावचन एव च”॥ इति छन्दोगपरिशिष्टवचनाद्-सति बाधके लाघवमेव तन्त्रतान्याये युक्तिरित्युक्तत्वाच्च अर्घ्यादेरितरत्र “एतद्वः पितरो वासस्त्विति जल्पन् पृथक् पृथक्। अमुकामुकगोत्रैतत्तुभ्यं वासः पठेत्ततः। दद्यात् क्रमेण वासांसि श्वेतवस्त्रभवा दशाः”॥ इति ब्रह्मपुराणवचने वासो-

दानमन्त्रयोः पृथक्त्वाभिधानात् तदितरत्र च कुशासनगन्धा-द्यन्नोत्सर्गदक्षिणादाने तन्त्रेणैव वाक्यरचना अतएव तुभ्यमिति पदेन प्रकृतवाचिनां निरपेक्षाणामेव पित्रादीनां सम्बोधनपदेन उपनीतानां तन्त्रेणोद्देश्यत्वसम्भवात् तन्त्रेणैव स्वधा पदसम्बन्ध इति श्राद्धविवेकः। अत्र तु प्रकृतेत्यनेन सन्निधानात् प्रपिता-महमात्रस्य तुभ्यमित्यनेन नोपस्थितिः किन्तु सर्वनामत्वात् पित्रादित्रिकाणां निरपेक्षाणामित्यनेन साहित्यासत्त्वेन बहुवचनेनानुल्लेखात्तुभ्यमित्येक-वचनेनैवोल्लेख इति। एवञ्च गृह्योक्त एतत्त इत्यादौ ते इत्यस्य तुभ्यं पदस्थानीयत्वेन तथा-त्वमिति। एष ते पितृ इत्यनन्तरं मन्त्रे "ये चात्र त्वामनु-यांश्च त्वमनु तस्मै ते" इति ते पदस्य गोभिलेन पुनरुपादानात् सामगेन श्राद्धवाक्ये उभयं प्रयुज्यते तत्र प्रथमं ते इति तवे-त्यर्थं एवञ्च श्राद्धानुष्ठानान्तरं गायत्रीजप उक्तः तं विशेषयति योगियाज्ञवल्क्यः। "प्रणवं पूर्वमुच्चार्य्य भूर्भुवः स्वस्ततः परम्। गायत्रीप्रणवश्चान्ते जपे ह्येष उदाहृतः"। तदनन्तरं देवताभ्य इति त्रिः पठेत्। ततः पुण्डरीकाक्षं स्मरेत्। "शङ्खचक्रधरं विष्णुं द्विभुजं पीतवाससम्। प्रारम्भे कर्म्मणां विप्रः पुण्डरीकं स्मरेद्धरिम्"॥ इति वाक्यात् पुण्डरीकं पुण्डरीकाक्षम्। स्मरण-फलं गारुड़े। "अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा। यः स्मरेत् पुण्डरीकाक्षं सवाह्याभ्यन्तरः शुचिः"॥

श्राद्धीयद्रव्यप्रोक्षणमाह वायुपुराणे। "नाप्रोक्षितं स्पृशेत् किञ्चित् पैत्रे दैवेऽथ वा पुनः"॥ स्पृशेत् दद्यात् उपघातशङ्कायां मृज्जलप्रोक्षणं तत्रैव "श्वा चैव घ्नन्ति श्राद्धानि दर्शनादेव सर्वशः। श्वविट्शूकरसंस्पृष्टं दीर्घरोगिभिरेव च॥ पतितैः मलिनैश्चैव न स्प्रष्टव्यं कथञ्चन। अन्नं पश्येयुरेते यत्तन्न स्याद्ध-व्यकव्ययोः॥ उत्स्रष्टव्यं प्रदानार्थं संस्कारस्त्वापदि स्मृतः।

हविषा संस्कृतानान्तु पूर्वमेव हि मार्जनम्॥ मृत्स्ना युक्ता-भिरद्भिश्च प्रोक्षणन्तु विधीयते"॥ प्रदानार्थं श्राद्धार्थं उत्-सृष्टव्यं तदर्थं न नियोज्यमिति कल्पतरुः। देवलः "चण्डालेन शुनावापि दृष्टं हविरयज्ञियम्। विड़ालादिभिरुच्छिष्टं दुष्टमन्नं विवर्जयेत् अन्यत्र हिरण्योदकस्पर्शादिति" तदनन्तर रक्षार्थमुदकपात्रमेकदेशे स्थापयेत् इति पितृदयिता। तथा च वृद्धमनुः। "रक्षणाय तु यद्दत्तमुदकं श्राद्धकर्म्मणि। ताव-दश्नन्ति पितरो यावत्तिष्ठति सोदकम्" इति दत्तं स्थापितं श्राद्धकर्म्मणि श्राद्धे कर्त्तव्ये सोदकं पात्रमिति शेषः।

अथ पिण्डपितृयज्ञातिदेशः। तत्र गोभिलः "पिण्ड-पितृयज्ञवदुपचारः पित्र्ये इति" पित्र्ये पित्रादिषाट्पुरुषिक-श्राद्धे पिण्डपितृयज्ञवत् स्वगृह्योक्त पिण्डपितृयज्ञरीत्या प्राचीनावीतित्व दक्षिणामुखत्वं पातितवामजानुत्व सतिलत्व द्विगुणभुग्नकुशत्रयत्व ये चात्रत्वेति मन्त्रोच्चारणरूपतया उपचरणं कार्य्यमित्यर्थः। अत्र "अक्षय्योदकदानन्तु अर्घ्य-दानवदिष्यते। षष्ठ्यैव नित्यं तत् कुर्य्यान्न चतुर्थ्यां कदाचन" इति छन्दोगपरिशिष्टवचनेन षष्ठ्या एवेत्यनेन गोत्रसम्बन्ध-नाम्नां षष्ठ्यन्तता प्रतीतौ न चतुर्थ्येत्यनेन तत्र चतुर्थीनिषेधा-नुपपत्त्या पिण्डपितृयज्ञवदित्यतिदेशप्राप्त ये चात्रत्वेति मन्त्रस्य तस्मै ते इत्यस्य निषेधेऽन्वयानुपपत्त्या तद्युक्त मन्त्रनिषेधोऽपि लक्ष्यते। "एकोद्दिष्टस्य पिण्डे तु अनुशब्दो न युज्यते" इत्यति आश्वलायनगृह्यपरिशिष्टेऽनुशब्दनिषेधादनुयुक्त मन्त्र-निषेधवत् एतेन कुशासनाक्षोत्सर्गयोः ये चात्रत्वेत्यादिमन्त्र-स्यालिखनं मैथिलानां हेयम्।

अथ कुशासनम्। तत्र गोभिलः। "पित्र्ये द्विगुणांस्तु दर्भान् पवित्रपाणिर्दद्यादासीनः सर्वत्र प्रश्नेषु पङ्क्तिमूर्द्धन्यं

पृच्छति सर्वान् वा सवत्रासनेषु दर्भानास्तीर्य्येति" पितृत्र पितृर्थदाने तत्रादौ जलगण्डूषप्रक्षेपः। ततो द्विगुणभुग्न-कुशपत्र त्रयं पितृणाम् आसनार्थं दद्यात् एतच्च आदौ विश्वे देवपक्षे कृत्वा पितृपक्षे कर्त्तव्यं तथा च याज्ञवल्क्यः। "पाणि-प्रक्षालनं दत्त्वा विष्टरार्थं कुशानपि। आवाहयेदनुज्ञातो विश्वे देवा स इत्यृचा॥ द्विगुणांस्तु कुशान् दत्त्वा उषन्तस्त्वे-त्यृचा पितॄन्॥ प्रक्षाल्यतेऽनेनेति प्रक्षालनं जलं तेन तूष्णीं ब्राह्मणपाणौ जलं दत्त्वा विष्टरार्थम् आसनार्थमिति दीप-कलिका कुशान् ऋजून् दद्यात् व्यक्तमाह आश्वलायनः। "अपः प्रदाय दर्भान् द्विगुणभुग्नानासनं प्रदाय" इति आसनमित्यनेन उपवेशनीयत्वप्रतीतेर्हस्ते तद्दानं प्रतीयते। तथा च कार्ष्णाजिनिः "दर्भांश्चैवासने दद्यात् न तु पाणौ कदाचन। पितृदेवमनुष्याणाम् एवं तृप्तिर्हि शाश्वती"॥ अत्र पितृदेव-मनुष्योपादानात् पार्वणादिश्राद्धे विश्वेषां देवानां नित्यश्राद्धे सनकादि मनुष्याणामपि कुशासनदानं प्रतीयते। अत्र दैविकत्वेन कुशानां ऋजुत्वमिति विशेषः। देवपितृविप्रयोः दक्षिणवामयोः कुशासनस्थापनमाह श्राद्धसूत्रभाष्यधृतवच-नम्। "पितृणामासनं दद्याद्वामपार्श्वे कुशान् सुधीः। दक्षिणेचैव देवानां सर्वत्र श्राद्धकर्म्मसु"॥ सर्वत्र दैवे पित्रे च पवित्रपाणिः पवित्रयुक्त दक्षिणकरः आसीन उपविष्ट स्तथा च छन्दोगपरिशिष्टम्। "सव्यः सोपग्रहः कार्य्यो दक्षिणः सपवित्रकः" इति "आसीन ऊर्द्ध्वः प्रह्वो वा नियमो यत्र नेदृशः। तदासीनेन कर्त्तव्यं न प्रह्वेण न तिष्ठता"॥ इति सव्यो वामकरः उपग्रहो बहुलकुशः आसीन उपविष्टः ऊर्द्ध्वो दण्डवत् स्थितः प्रह्वः अवनतपूर्वकायः सवत्रेत्यनेन देवकार्य्ये पितृकार्य्ये च पवित्रपाणित्वमासीनत्वञ्च प्रश्नेषु श्राद्धं करिष्ये

पितॄनावाहयिष्ये इत्यादि प्रश्नेषु आसनेषु ब्राह्मणोपविष्टदर्भ-युक्तासनेषु दर्भानास्तीर्य्य विश्वे देवाद्यर्थोत्सृष्टदर्भानास्तीर्य्य वक्ष्यमाणमावाहनं कुर्य्यादित्यर्थः। यत्तु अनिरुद्धभट्टेन पाद-योरधः कुशासनदानमुक्तं तत्र प्रमाणं न विद्म इति पङ्क्ति-मूर्द्धन्यं पितृब्राह्मणं पृच्छेदिति रत्नाकर ... ज्वन्यत्।

अथ आवाहनम्। तत्र गोभिलः "यवानादाय प्रणवं कृत्वा विश्वान्देवानावाहयिष्ये इति पृच्छेत् आवाहयेत्यनुज्ञातः विश्वे देवाः आगत शृणुताम इमं हवम् एदं वर्हिर्निषीदत" इत्यावाह्य यवान् विकिरेत्। "विश्वे देवाः शृणुतेमं हवं मे येऽन्तरीक्षे उपद्यविष्टयेऽग्नि जिह्वा उतवो यजत्रा आसद्या-स्मिन् वर्हिषि मादयध्वं ओषधयः समवदन्त सोमेन सह राज्ञा यस्मै कृणोति ब्राह्मणस्तं राजन् पारयामसि" इति अत्र समवदन्तेति वकारयुक्तः पाठः वदस्थैर्य्ये इत्यस्मात् धातोरिति गुणविष्णुलिखनात् व्यक्तमपरम्। अत्रावाहनानन्तरं कृत्य-प्रदीपे यवविकरणे यवोऽसीति मन्त्रलिखनं प्रमाणशून्यं पितृ-दयिता श्राद्धकल्पादिषु तूष्णीमित्यभिधानात्। अत्र देवता-वाहने गृह्यादधिकं विप्राङ्गुष्ठग्रहणमाह ब्रह्मपुराणम् "देवाना-वाहयिष्येऽहं प्राहुरावाहयस्व च। विप्राङ्गुष्ठं गृहीत्वा तु विश्वान् देवान् समाह्वयेत्"। आवाहयस्वेति श्राद्धान्तरीयं गोभिलका-त्यायनाभ्यामावाहयेत्यभिधानात्। गोभिलः "पित्रेर तिलाना-दाय प्रणवं कृत्वा पितॄनावाहयिष्ये इति पृच्छति आवाहयेत्यनु-ज्ञातः एत पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्विणेभिर्द-त्तास्मभ्यं द्रविणेऽह भद्रं रयिञ्चनः सर्ववीरं नियच्छत। उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि उशन्नुशत आवह पितॄन् हविषे अत्तवे"। इत्यृचावाह्य "आयान्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः अस्मिन् यज्ञे स्वधया

मदन्तोऽधिब्रुवन्तु ते अवन्त्वस्मान्” इति जपित्वा अपहतेति तिलान् विकीर्य्य इति पूर्व्विणेभिरिति पूर्व्वैः कृतमित्यर्थे इनयौ चेति इन्प्रत्यय इति गुणविष्णुव्याख्यानादिनस्य तद्धितत्वेन पूर्व्वशब्दस्याकार लोपात् तत्पदं सिद्धम् अत्र मूलभूतगोभिल-ग्रन्थे तद्भाष्यद्वये पितृदयितायाञ्च एतपितर इत्यनन्तरम् उशन्तस्त्वेति लिखितेन मैथिलानामेतत् विपरीतलिखनं हेयम् आवाहनात् ब्राह्मणाचमनपर्य्यन्तं कर्त्ता विप्रैश्च विहितेतरशब्दोच्चारणं न कार्य्यम्। आवाहनात् वाग्यत आ उप-स्पर्शनादामन्त्रिताश्चैवं” इति कात्यायनवचनात्।

अथ अर्घ्यं तत्र गोभिलः। “अप उपस्पृश्य यज्ञिय-वृक्षचमसेषु पवित्रान्तर्हितेषु एकैकस्मिन् अप आसिञ्चति शन्नोदेवीति” अप उपस्पृश्य जलं स्पृष्ट्वा अत्र पितृमन्त्रोच्चारणं वीजं तथा छन्दोगपरिशिष्टे कात्यायनः। “पित्र्यमन्त्रानुद्रवणे आत्मालम्भेऽवेक्षणे। अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे॥ मार्जारमूषिकस्पर्शे आक्रुष्टे क्रोधसम्भवे। निमित्तेषु च सर्व्वेषु कर्म्म कुर्व्वन्नपः स्पृशेत्”॥ पितृयमन्त्रानुद्रवणे यज्ञादौ विहिते आत्मालम्भे हृदयस्पर्शे अवेक्षणे तस्यैव अधोवायुसमु-त्सर्गे नोद्गारे प्रहासे महति हास्ये न तु स्मिते आक्रुष्टे परुष-भाषणे क्रोधसम्भवे क्रोधोत्पत्तौ भाषणं विनाऽपि मनसा एषु निमित्तेषु सर्व्वत्र कर्म्मकरणकाले जलं स्पृशेत् नत्वाचामेत्। याज्ञवल्क्योऽपि “रौद्रपित्र्यसुरान् मन्त्रान् तथा वैराभि-चारिकान्। व्याहृत्यालभ्य चात्मानमपः स्पृष्ट्वान्यदाचरेत्”॥ चमसास्तु “तच्छाखाश्चमसादीर्घाः प्रादेशाश्चतुरङ्गुलाः। तथैव उत्सेधतो ज्ञेयाश्चतुरस्रास्तु इत्यपि”॥ तच्छाखा यज्ञिय-वृक्ष-शाखाश्चतुरङ्गुलाः चतुरङ्गुल-विस्तृता तथैव चतुरङ्गुल-परिमाणाः उत्सेधतः ऊर्द्ध्वतः। अत्र अर्घ्यपात्रस्थापनं

कुशोपरीत्याह वैजवापगृह्यं "प्राचीनावीति पात्राण्यप् पूर्णानि सदर्भाणि सतिलानि दक्षिणाग्रेषु कुशेषु निधाय" इति पवित्रान्तर्हितेषु मध्यार्पितपवित्रेषु एकैकस्मिन्निति वीप्सा देवपात्रेऽपि जलादिप्रक्षेपार्था। तथा च याज्ञवल्क्यः "यवैरन्ववकीर्य्याथ भाजने सपवित्रके। शन्नोदेव्यापयः क्षिप्ता यवोऽसीति यवां स्तथा। या दिव्या इति मन्त्रेण हस्ते-ष्वर्घ्यं निवेदयेत्"॥ गोभिलः। "एकैकस्मिन्नेव तिलानाव-पति तिलोऽसि सोमदैवत्यो गोसवो देवनिर्म्मितः। प्रत्नमद्भिः पृक्तः स्वधया पितॄन् लोकान् प्रीणाहि नः स्वाहा" इति सौवर्ण-राजतौडुम्बरखाङ्गमणिमयानां पात्राणामन्यतमेषु अप्रसिद्ध-पत्रपुटेषु वा यानि वा विद्यन्ते एकैकस्मिन्नेकैकेन ददाति सपवित्रेषु हस्तेषु "या दिव्या आपः पयसा सम्बभूवुर्या अन्त-रीक्षा उत्पार्थवीर्य्या हिरण्यवर्णा यज्ञिया स्तान आपः शिवाः शंस्योनाः सुहवा भवन्तु" इति पाठत्वा असावेतत्तेऽर्घ्यमिति अत्र एकैकस्मिन्निति पूर्वसूत्रप्रकृतत्वादेव प्रत्येकपात्रलाभे पुनर्यदेकैकस्मिन्निति नियमाभिधानं तन्मन्त्रे पितॄनिति बहुवचनदर्शनादावाहनादिमन्त्रपाठवत् सकृन्मन्त्रपाठः स्या-दिति तन्निषेधार्थं किन्तु प्रत्येकमेव तिलप्रक्षेपमन्त्रः बहु-वचनन्तु "एतद्वः पितरो वासः" इति वत्प्रयोगसाधुत्वेनोप-पन्नम्। अत्र तिलानावपतीत्यविशेषित गोभिल-दर्शनात् देवपक्षेऽपि तिलप्रक्षेपः। तथा च विश्वे देवा स आगत इत्यावाह्य विकरणमपि तिलानामिति कर्कोपाध्यायमतं यत् तन्न युक्तम्। आवाहयेत्यनुज्ञातो विश्वे देवा स इत्यृचा। यवैरनुविकीर्य्याथ भाजने सपवित्रके। शन्नोदेव्यापयः क्षिप्ता यवोऽसीति यवांस्तथा" इति याज्ञवल्क्यविरोधात्। यवतिल-प्रक्षेपानन्तरं गन्धपुष्पप्रक्षेपणमाह ब्रह्मपुराणम्। "अर्घ्याः

पुष्पैश्च गन्धैश्च ताः प्रपूज्याः स्वधास्त्वत:" अर्घ्यां आप इति शेषः स्वधास्त्वतः आत्मीयगन्धपुष्पप्रतिपादकात्। शाट्यायनोऽपि "गन्धपुष्पैरलङ्कृत्य या दिव्येति पठन् सृजेत्। सृजेत् उत्सृजेत् ततो देवब्राह्मणहस्ते प्रागग्रमर्घ्यपात्रीय पवित्रं जलान्तरञ्च प्रक्षिप्य पितृब्राह्मणहस्ते दक्षिणाग्रमर्घ्यपात्रीय पवित्रं जलान्तरञ्च प्रक्षिप्य वामहस्तेऽर्घ्यपात्रं धृत्वा या दिव्येति पठित्वा वाक्येन विप्रकरस्थपवित्रसहितमर्घ्यजलमुत्सृजेत् दद्यात्। तथा च वायुपुराणम्। "ततो वामहस्तेन गृहीत्वा चमसानक्रमात्। पितृतीर्थेन तत्तोयं दक्षिणेन च पाणिना। दत्तदर्भोदके हस्ते विप्रेभ्यश्च पृथक् पृथक्"॥ जलप्रक्षेपानन्तरं या दिव्येति पाठात् पूर्वं पुष्पान्तरेण शिरःप्रभृतिसर्वगात्रपूजनमाह समुद्रकरधृतगोतमः। "शिरसः पादतश्चैव सम्यगभ्यर्चयेत्ततः। पूर्ववत् पृथगेकैकमेकैकेनार्चयेत् क्रमात्"॥ औडुम्बरं ताम्रपात्रं खाङ्गं गण्डो शरोऽस्थिनिर्मितं पात्रं मणिमयानि स्फाटिकादीनि यानि वेति अप्रतिषिद्धानि कदलीदलत्वगादीनि अत्र चमसादीनां वैकल्पिकत्वात् अन्यतमेष्विति शब्दाच्चैकजातीयेनैव सर्वाण्यर्घ्यपात्राणि असाविति सम्बोधनान्तनामोपलक्षणम्। "असाविति नाम गृह्णातीति" कात्यायनदर्शनात् यद्यप्यसाविति असम्बुद्धि प्रथमान्तोऽपि सम्भवति तथापि ते इति युष्मत् पदप्रयोगात् सम्बुद्ध्यन्तता प्रतीयते। अतएव छन्दोगपरिशिष्टं "गोत्रनामभिरामन्त्र पितॄनर्घ्यं प्रदापयेत्"॥ प्रयोगविधायकगोभिलसूत्रे एतत्तेऽर्घ्यमित्यभिधानात् तद्गृह्योऽप्यर्घ्यमर्घ्यमित्यभिधानाच्च सामगानां सर्वत्राभिलापे नपुंसकलिङ्गेनैव प्रयोगः अभिलापेतरत्र एकोऽर्घ्यं इति गोभिलेन पुंस्त्वेन निर्दिष्टः अन्येषां सर्वत्र पुंलिङ्गेनैव प्रयोगः तत्रापि पाद्यार्घ्याभ्यां यदिति

पाणिनिसूत्रेण यद्द्वयद्विधानं तत्सामगप्रयोग एवान्यत्र निर्थकार एवार्थशब्दः। प्रागुक्त वै अवाग्पगद्यावचनेऽर्घ्यपात्रस्थापनीयकुशानां दक्षिणाग्रत्वदर्शनात् तत्पात्रोपरि पवित्रस्थापनेऽपि तद्वद्या यज्ञप्रोक्षणवत् तथैव व्यवहारात् आसनास्तरणीय कुशेषु तथादर्शनेन दक्षिणाग्रत्वव्यवहारात् ब्राह्मणहस्ते पवित्रदानेऽपि तथा प्रतीयते अतएव गोभिलीय श्राद्धकल्पभाष्यकृन्महा यशसाढुण्डुपद्धतौ गार्गीयपद्धतौ च पवित्राणां दक्षिणाग्रत्वं लिखितमिति नव्यवर्द्धमानपशुपत्यपि पाराशरायमुकुटपद्धतिष्वपि तथा लिखितम् अतएव "वशिष्ठोक्तो विधिः कृत्स्नोद्रष्टव्योऽत्र निरामिशः" इति छन्दोगपरिशिष्टेन वृद्धिश्राद्धे पार्वणधर्म्मातिदेशेऽपि अर्घ्ये "ज्येष्ठोत्तरकरान् युग्मान् कराग्राग्रपवित्रकान् कृत्वार्घ्यं सम्प्रदातव्यं नैकैकस्यात्र दीयते" इत्यनेन पवित्राणामुत्तराग्रत्वं विधीयते प्रत्येकहस्तेऽर्घ्यदानं निषिध्यते च अतः पार्वणे दक्षिणाग्रत्वं एकैकहस्तदानत्वं प्रतीयते। गोभिलः। "प्रथमे पात्रे संस्रवान् समवनीयपात्रं न्युब्जं कुर्य्यात् पितृभ्यः स्थानमसि" इति प्रथमे पात्रे पितृपात्रे संस्रवान् पितामहादिपत्राद्य्र्घ्यपात्रस्थशेष जलानि समवनीय पशुप्रोक्षणवत् क्रमेण स्थापयित्वा तत्पात्रस्य प्रपितामहपात्रेणाच्छादनमाह शौनकः। "प्रपितामहपात्रेण पिधाय प्रतिष्ठापयति" इति याज्ञवल्क्येन अपि तत्पात्रस्याधस्थत्वाभिधानात् पात्रान्तरेण पिधानमाक्षिप्तं तथा च याज्ञवल्क्यः। दत्तार्घ्यं संस्रवां स्तेषां पात्रे कृत्वा विधानतः। पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः" ॥ विधानतो यथापूर्वं स्थापितं तत्क्रमेण तेन प्रपितामहपात्रेणाधः कृतं पितृपात्रं ऊर्द्ध्वमुखावस्थितं न्युब्जं करोति नतु केवलं पितृपात्रं न्युब्जं करोति तदेवपात्रं पात्रान्तरेणाधः

करोति "पैतृकं प्रथमं पात्रं तस्मिन् पैतामहं न्यसेत् । प्रपितामहं तथान्यस्य नोद्धरेत् न च चालयेत्" इति यमवचनादिति मैथिलोक्तं युक्तं याज्ञवल्क्यवचने करोतीत्यनुषङ्गापत्तेर्वाक्यभेदापत्तेश्च शौनकोक्तपिधानानन्तरं न्युब्जीकरणानुपपत्तेश्च यमवचनेऽपि पितृपात्रस्य याज्ञवल्क्यीयाधस्त्वाय शौनकीय प्रपितामहपात्रमात्रपिधानवैकल्पिकं पितामहप्रपितामहपात्रद्वयपिधानभुक्त्वा वचनान्तराण्युब्जीकृतस्य तत्पात्रस्योद्धरणादिनिषेध उक्तः तथासत्त्व "पितृपात्रे निधायाथ न्युब्जमुत्तरतोन्यसेत्" इति मत्स्यपुराणवचने न्यसेदित्यत्राख्यातोपस्थापितकर्त्तुर्वामपार्श्वे कर्त्तव्यः "तस्माद्यस्य दक्षिणतो लक्ष्म भवति तं पुण्यलक्ष्मीकमित्याचक्षते उत्तरतः स्त्रियाः" इति उत्तरायणा हि स्त्रीति शतपथश्रुतेः "उत्तरे चास्य सौवर्णं लक्ष्मपार्श्वे भविष्यति" इति महाभारतवचनाच्च उत्तरशब्दस्य वामवचनता सिद्धा पितृकर्मणि प्राच्यादिश उत्तरादिक्त्वाच्च तथा च रायमुकुटधृतं पित्र्यमिष्टमुपक्रम्य "ब्राह्मणं या दक्षिणा सा प्राची या पूर्वा सोत्तरा" इति । एवञ्च भोक्तृब्राह्मणानामपि सोत्तरादिगेवेति कल्पतरूक्त्या सहैकवाक्यतापि सिद्धा इति । एवं कर्त्तुर्दक्षिणामुखस्य वामपार्श्वमुत्तरादिग्भवति इति ततश्च कल्पतरुश्राद्धविवेकाभ्याम् एकस्थानं भङ्क्त्वा हितयेनाभिहितं स च न्यासोदर्भस्तम्बोपरीत्यनिरुद्धभट्टः । अत्र गोभिलसूत्रे पितृपात्रे इत्यभिधानात् संस्रावानिति बहुवचनाच्च मन्त्रे पितृभ्य इति पितृत्वेन श्राद्धतास्तत्र तिष्ठन्ति पितरः शौनकोऽब्रवीदित्याश्वलायन गृह्यपरिशिष्टवचने पितृत्वेन षड्पास्थितेरावाहनवत् षट्पुरुषानुद्दिश्य सकृदेव न्युब्जीकरणं न तु मातामहादीनां मैथिलोक्तं पृथक् करणमिति ।

अथ गन्धादिदानम् । तत्र गोभिलः । "गन्धपुष्पधूपदीपाच्छादनानां सम्प्रदानमिति" । तत्र गन्धादिपञ्चानां द्वन्द्वनिर्देशाल्लाघवाच्च मिलितानां तन्त्रेणैकोत्सर्गः निवेदनन्तु प्रत्येकशः तथा च शाट्यायनः एष ते गन्ध एतत्ते पुष्पं एष ते धूप एष ते दीप एतत्ते आच्छादनम् इति अत्र बहुषु यवेषु सम्पन्नो यव इति जात्यपेक्षैकवचनं तद्वद्गन्धादीनां प्रत्येकं बहुत्वेऽप्येकवचनान्तत्वेन निर्देशः । "इदं वः पुष्पमित्युक्त्वा पुष्पाणि च निवेदयेत् । अमुकामुकगोत्रैतत्तुभ्यमन्नं स्वधा नमः" इति ब्रह्मपुराणादिष्वेकजातीयानेकद्रव्येऽपि एकवचनान्तप्रयोगात् अतएव नवमाध्यायेऽपि "सूर्य्यस्य चक्षुर्गमयतात्" इति मन्त्रे सूर्य्यस्य चक्षुर्बहुत्वेऽप्येकवचनान्तपदनिर्देशात् संसर्गिद्रव्याणामन्नतोयतेजसां प्रयोगे एकवचनान्तप्रयोग इति विचारितम् । अतएव आभ्युदयिके पात्रद्वयाऽन्नोत्सर्गवाक्य एतत्तेऽन्नम् इति सर्वैः पद्धतिकृद्भिर्लिखितम् एवञ्च पितृदत्तगन्धादीनां ब्राह्मणाय निवेदने शाट्यायनोक्त निवेदनवाक्ये ते इत्येकत्वेन निर्दिष्टम् एकब्राह्मणपक्षे ब्रह्मपुराणे व इति बहुवचनेन निर्दिष्टं तदनेकब्राह्मणपक्षे एकस्मिन्नपि गुरुत्वविवक्षया व इत्यविरोधः तत्र गन्धः । विष्णुः "चन्दनकुङ्कुमकर्पूरागुरुपद्मकाष्ठान्यनुलेपनार्थे" ।

अथ पुष्पम् । ब्रह्मपुराणे । "शुक्लाः सुमनसः श्रेष्ठाः तथा पद्मोत्पलानि च । गन्धरूपोपपन्नानि यानि चान्यानि कृत्स्नशः" निषेधमाह "जवादिकुसुमं भाण्डीरूपिका सकुरुण्टका । पुष्पाणि वर्जनीयानि श्राद्धकर्म्मणि नित्यशः" ॥ जवादीत्यादि शब्दा देवं विधं रक्तकुसुमं रूपिका अर्कपुष्पं कुरुण्टकः पीता झिण्टी "उग्रगन्धान्यगन्धीनि चैत्यवृक्षोद्भवानि च । पुष्पाणि वर्जनीयानि रक्तवर्णानि यानि च ॥

श्राद्धे जात्यः प्रशस्ताःस्युर्मल्लिकाकुन्दयूथिकाः" ॥ दद्यादित्युपक्रम्याह। "केतकीं करवीरञ्च वकुलं चम्पकं तथा। जातीदर्शनमात्रेण निराशाः पितरो गताः" ॥ जातीति रक्तजातिविषयम्।

अथ धूपाः। "ब्राह्मे चन्दनागुरुणी चोभे तथैवोशीरपद्मकं तुरुष्कं गुग्गुलुञ्चैव घृताक्तं युगपद्दहेत्"। उशीरं वीरणमूलं तुरुष्कं सिह्लकम्।

अथ दीपाः। तत्र शङ्खः। "घृतेन दीपो दातव्यस्तिलतैलेन वा पुनः। धूपार्थं गुग्गुलुं दद्यात घृतयुक्तं मधुप्लुतम्"।

अथाच्छादनम्। वायुपुराणे। "आच्छादनन्तु यो दद्यादाहतं श्राद्धकर्मणि। आयुः प्रकाममैश्वर्य्यं रूपञ्च लभते शुभम्" ॥ आहतमलपारिभाषिकमेव "ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम्। आहतं तद्विजानीयात् सर्वकर्मसु पावनम्" ॥ ब्रह्मपुराणम्। अनङ्गलग्नं यद्वस्त्रं विभवे तद्‌युगं शुभम्। वस्त्राभावे क्रिया नास्ति यज्ञदानतपांसि च ॥ तस्माद्वस्त्राणि देयानि श्राद्धकाले विशेषतः" ॥ अतो वस्त्रदानस्यावश्यकत्वं तद्विनाक्रियाभावश्रुतेः।

अथ यज्ञोपवीतानि। वायुपुराणे। "यज्ञोपवीतं यो दद्यात् श्राद्धकाले तु धर्म्मवित्। पावनं सर्वविप्राणां ब्रह्मदानस्य तत्फलम्" ॥ अतोऽस्य काम्यत्वं ब्रह्मपुराणे। "श्वेतचन्दनकर्पूरकुङ्कुमानि शुभानि च। विलेपनार्थं दद्यात्तु यच्चान्यत् पितृवल्लभम्" ॥ रजतादिजीवतां वा यदभिलषितमासीत् श्राद्धाप्रतिषिद्धं तद्देयमिति। वायुपुराणं "लोके श्रेष्ठतमं सर्वमात्मनश्चापि यत् प्रियम्। सर्वं पितृणां दातव्यं तदेवाक्षयमिच्छता"॥ गन्धाद्यभावे प्रतिनिधिमाह पैठीनसिः। "काष्ठ-

मूलपत्रपुष्पफलप्ररोहरसगन्धानां सादृश्येन प्रतिनिधिं कुर्य्यात् सर्वालाभे यवः प्रतिनिधिर्भवतीति” काण्डं नालं प्ररोहो-ऽङ्कुरः सर्वालाभे यव इति कल्पतरुः। अवयव इति नाराय-णोपाध्यायाः। तथा च वस्त्रयुग्माभावे खण्डवस्त्रं देयमिति।

अथ पात्रस्थानम्। ततो मण्डलं कृत्वा ताम्रादिपात्रं पातयेत् तत्र भृगुः“भस्मना वारिणावापि कारयेन्मण्डलं ततः”॥ मण्डलं चतुष्कोणम् अत्र दैवे ऐशानीमारभ्य दैवत्वात् दक्षि-णावर्त्तेन प्रागग्रान्तरेखया वायवीमारभ्य उदगग्रान्तरेखया वा मण्डलं कारयेत्। प्रागुदगग्रेति कात्यायनदर्शनात् पित्र्ये तु नैरृतिमारभ्य पितृत्वाद्वामावर्त्तेन दक्षिणाग्रान्त-रेखया मण्डलं विन्यस्य “पात्रे दक्षिणाग्रा” इति च कात्या-यनसूत्रात् नव्यवर्द्धमानोऽप्येवम्। मण्डलाकरणे दोषमाह स्मृतिः। “अनच्छ मण्डलैर्हीनं राक्षसैर्भुज्यते बलात्”।

अथ पात्राणि। तत्र हारीतः। “काञ्चनेन तु पात्रेण राजतोडुम्बरेण वा। दत्तमक्षयतां याति खड्गेनार्थ्यकृतेन च”॥ औडुम्बरेण ताम्रेण। खड्गेन गण्डकशिरोऽस्थि-निर्म्मितेन आर्थ्यकृतेन त्रैवर्णिककृतेन अन्यदपि पात्रमभिमत-मिति कल्पतरुः। एवं कदलीत्वगादीन्यपि ब्रह्मपुराणे “सौवर्णरौप्यताम्राश्म स्फाटिक्य शङ्खशुक्तयः। भिन्नान्यपि नियोज्यानि पात्राणि पितृकर्म्मणि”॥ कल्पतरौ। “राजतं रजताक्तं वा पितॄणां पात्रमुच्यते। रजतस्य तथा दानं दर्शनं नाम शस्यते”॥ दैवे तु तन्निषिद्धम्। “अथार्घ्यपिण्ड-भोज्येषु पितॄणां राजतं मतम्। अमङ्गल्यन्तु रजतं दैवकार्य्येषु वर्जयेत्”॥ इति वायुपुराणात्। याज्ञवल्क्यः। “हुतशेषं प्रदद्यात्तु भोजनेषु समाहितः। यथा लाभोपपन्नेषु रौप्येषु च विशेषतः”॥ शातातपः। “पात्रे तु मृण्मये यस्तु श्राद्धे

भोजयते पितॄन्। तत्र दाता पुरोधाश्च भोक्ता च नरकं व्रजेत्" ॥ श्राद्धीयपात्रनिषेधे पैठीनसिः "सीसकायस-पाषाणपात्राणि हीनपात्राणि भग्नपात्राणि चेति" न कार्य्याणीति शेषः अत्र पाषाणस्य निषिद्धत्वात् ब्रह्मपुराणे विहितत्वाच्च विहितनिषिद्धत्वमिति ततश्च पात्रान्तराभावे तदुपादेयतेति हीनपात्रलक्षणमाह हारीतः "हीनपात्रन्तु तत्प्रोक्तं न्यूनमष्टाङ्गुलात्तु यत्"। तत्र प्रतिप्रसवमाह ब्रह्मपुराणम्। "रूप्यपात्रेण पाद्यादि तस्मात् सूक्ष्मेण कारयेत्" तस्मात् अष्टाङ्गुलात्।

अथाग्नौकरणम्। तत्र गोभिलः। "उद्धृतघृताक्तमन्नं पृच्छति अग्नौ करिष्यामि कुरुष्वेत्यनुज्ञातः पिण्डपितृयज्ञवज्जुत्वाचेति" ॥ उद्धृत्य श्राद्धस्योपकरणाद्घृताक्तमन्नम् उद्धृत्य घृताक्तमित्यभिधानात् व्यञ्जनादिवर्जं प्रतीयते तथा च विष्णुपुराणम्। "जुहुयाद्व्यञ्जनक्षारवर्जमन्नं ततोऽनले"। अत्र अग्नौ करिष्यामीति निर्देशात् गोभिलगृह्ये अग्नौ करिष्यामीत्यामन्त्रणं होष्यत इति सूत्रे अग्नौ करिष्यामीति श्रुतेः अग्नौ करिष्यामि इति छन्दोगानां प्रश्नवाक्यं होष्यतः हवनं करिष्यतः पुरुषस्यान्येषान्तु तानग्नौ करिष्य इति "प्रणतः प्रार्थयेत् द्विजान् कुरुष्वेति च तैरुक्तो दक्षिणाग्निं समाह्वयेत्" इति कल्पतरुधृतब्रह्मपुराणवचनात् अग्नौ करिष्ये इति प्रश्नवाक्यम् अत्र कुरुष्वेति श्रुतेर्वैदिकप्रश्नोत्तरयोः प्रणवादित्वं प्रतीयते एवञ्च मुन्यन्तरवाक्ये प्रणवासत्त्वेऽपि प्रणवादित्वं कल्प्यते अग्नौ करिष्ये इति मन्त्रेण पृच्छतीति कर्कभाष्यकृताऽस्य मन्त्रत्वाभिधानात् सुतरां तथा अतएव पितृदयितादिष्वपि सर्वत्र प्रणवादित्वेनोल्लेखः। पिण्डपितृयज्ञवदित्यतिदेशेन स्वाहा सोमाय पितृमते स्वाहा अग्नये कव्यवाहनाय

इति पिण्डपितृयज्ञीयहोममन्त्रौ श्राद्धे प्रतीयते एवं पिण्डपितृयज्ञातिदेशात् द्विस्तूष्णीमिति बोध्यम्। अत्र स्वाहेत्यनेन हुत्वा सोमायेत्यादि पाठमाह छन्दोगपरिशिष्टं "स्वाहा कुर्य्यान्न मन्त्रान्ते न चैवं जुहुयाद्धविः। स्वाहाकारेण हुत्वाग्नौ पश्चान्मन्त्रं समापयेत्" ॥ अत्र सामगेनाग्नौकरणहोममन्त्रान्ते स्वाहा न प्रयोज्या स्वाहां विना होमश्च न कर्त्तव्य इति प्रतिषेधमुक्त्वा स्वाहाकारेणेत्यादि तेन करणप्रकारमाह "स्वाहाकारेण हुत्वा सोमायेति वदेत्"। अत्र होमे अत ऊर्द्धं प्राचीनावीतिना कृत्यमिति गृह्यसूत्रान्तरेऽग्नौकरणहोमानन्तरं प्राचीनावीतित्वाभिधानात् तत् पूर्वमुपवीतित्वप्राचीनावीतित्वयोरेकतरनियमाभावः सूचितः अतएव तद्व्यक्तं छन्दोगपरिशिष्टेन सहेतुकवचनद्वयेन व्यक्तीकृतम्। यथा "अग्नौकरणहोमश्च कर्त्तव्य उपवीतिना। प्राङ्मुखेनैव देवेभ्यो जुहोतीति श्रुतिः श्रुतेः॥ अपसव्येन वा कार्य्यो दक्षिणाभिमुखेन तु। निरूप्य हविरन्यस्मा अन्यस्मै न हि हूयते"॥ इत्यग्न्युद्धरणसत्त्वेऽभिहितं तदसत्त्वे मत्स्यपुराणम्। "अग्न्यभावे तु विप्रस्य पाणावेव जलेऽपि वा"॥ इति हस्तजलयोरप्यग्नौकरिष्यामीति वक्तव्यम्। "तैलं प्रतिनिधिं कुर्य्यात् यज्ञार्थे याज्ञिको यदि। प्रकृत्यैव तदा होता ब्रूयाद् घृतवतीमिति" यज्ञपार्श्ववचनदर्शनात् "शब्देऽविप्रतिपत्तिः" इति श्रौतकात्यायनसूत्राच्च ततश्च प्रतिनिहितद्रव्ये श्रुतशब्द एव प्रयोज्यः श्रुतद्रव्यबुद्ध्या प्रतिनिध्युपादानात् शब्दान्तरप्रयोगे द्रव्यान्तरबुद्धिप्रसङ्गाच्च एवं प्रतिनिहितगुड़ादावपि विप्रपाणावग्नौकरणपक्षे तत्पात्रे हुतशेषं न दद्यात् तथा च छन्दोगपरिशिष्टम्। "पित्र्ये यः पङ्क्तिमूर्द्धन्यस्तस्य पाणावनग्निमान्। हुत्वा मन्त्रवदन्येषां तूष्णीं पात्रेषु निःक्षिपेत्"॥

अन्येषामिति ग्रहणात् तत्पात्रे हुतशेषं न देयमिति श्राद्धविवेकः ।

अथ हुतशेषदानम् । तत्र गोभिलः । "हुतशेषं दत्त्वा पात्रमालभ्य जपति पृथिवी ते पात्रं द्यौःपिधानं ब्राह्मणस्य मुखेऽमृतेऽमृतं जुहोमि स्वाहा" । इत्यत्र पात्रमात्रश्रुतेर्विश्वदेवपात्रेऽपि हुतशेषदानं प्रतीयते । यत्तु यमवचनं "अग्नौकरणशेषन्तु पित्र्ये तु प्रतिपादयेत् । प्रतिपाद्य पितॄणान्तु न दद्याद्वैश्वदेविके" इति तत् पित्र्येत्विति तु रप्यर्थो न तु नियमार्थः अतएवोत्तरार्द्धेन पितृदानानन्तरं विश्वदेवदानं निषिध्यते न तु विश्वदेवदानानन्तरं पितृदानं निषिध्यते समुद्रकरधृतस्मृतावपि । "अनाहिताग्नेर्विप्रस्य यदग्नौकरणं हुतम् । विश्वदेवाय दातव्यं पश्चात् पित्र्ये निवेदयेत्" इति । हुतशेषं पात्रेषु दत्त्वा पिण्डार्थमवशेषमाह यमः । "हुतोच्छिष्टं ब्राह्मणेभ्यः प्रदाय पिण्डार्थमवशेषयेदिति" हारीतोऽपि "अग्नौकरणशेषन्तु पिण्डार्थमवशेषयेदिति" । एवञ्च हुतशेषमात्रप्रतिपादानात् गोभिलेन हुतशेषं दत्त्वेत्यत्र तथाभिधानात् पारस्करेण च हुतशेषं दत्त्वा पात्रमालभ्य जपति पृथिवी ते इत्यनेन तथैवाभिधानाच्च मन्त्रे चामृतमित्यनेन "अमृतं विघसो यज्ञशेषभोजनशेषयोः" इत्यमरसिंहोक्तात् यज्ञशेषमात्रप्रतीतेः तत् प्रक्षेपानन्तरमेव छन्दोगयजुर्विदोः पात्रालम्भनं तदनन्तरमन्नादिपरिवेशनम् एवमेव अनिरुद्धभट्टप्रभृतयः । यत्तु "हुतशेसं प्रदद्यात्तु भाजनेषु समाहितः । यथा लाभोपपन्नेषु रौप्येषु तु विशेषतः ॥ दत्त्वान्नं पृथिवीपात्रमिति पात्राभिमन्त्रणम् । कृत्वेदं विष्णुरित्यन्ने द्विजाङ्गुष्ठं निवेशयेत्" ॥ इति याज्ञवल्क्यवचनेन हुतशेषमन्नान्तरञ्च दत्त्वा पात्रालम्भनमुक्तं तच्छाख्यन्तरीयं मन्त्रलिङ्गविरोधात्

श्रुत्यन्तरकल्पनापत्तेश्च हुतशेषं दत्त्वा पात्राभिमन्त्रणं कृत्वा अन्नं प्रदद्यादिति योजना कार्य्या एतेनान्नादिदानानन्तरं पात्रालम्भनं मैथिलोक्तं निरस्तम्। अतएव पश्चादेवान्नादि-परिवेशनमाह मार्कण्डेयपुराणम्। "हुतावशेषं दद्याच्च भाज-नेषु द्विजन्मनाम्। भाजनालम्भनं कृत्वा दत्त्वा चान्नं यथा-विधि॥ यथा सुखं जुषध्वं भो इति वाच्यमनिष्ठुरम्" इति।

पात्रालम्भनं दैवेऽनुत्तानहस्ताभ्यां पित्र्ये उत्तानपाणिभ्यां कार्य्यम्। "दैवेऽनुत्तानपाणिभ्यामुत्तानाभ्याञ्च पैतृके" इति यमवचनात्। गोभिलः। "वैष्णव्यर्चा यजुषा वाऽङ्गुष्ठमन्ने निधायापहता" इति तिलान् विकीर्य्य उष्णमन्नं दद्यादिति वैष्णवी ऋक् इदं विष्णुरित्यादि पूर्वोक्त याज्ञवल्क्यवचनात्। यजुषा कृष्णकव्यमित्यादिना "पृथिवी ते पात्रमित्यन्नमस्तृतं चिन्तयेत् पठन्। कृष्ण कव्यमिदं रक्ष मदीयमिति कीर्त्तयेत्। एकैकस्याथ विप्रस्य गृहीत्वाङ्गुष्ठमादरात्" इति ब्रह्मपुराणात् कव्यमिति पितृपक्षे हव्यमिति देवपक्षे ऊहनीयं व्यक्तं ऋग्वे-दीयग्रन्थे "विष्णो हव्यञ्च कव्यञ्च ब्रूयाद्रक्षेति वैक्रमात्"। अत्र याज्ञवल्कीयब्रह्मपुराणयोः ऋग्यजुषोः प्रत्येकमन्त्रोक्तेः गोभिलसूत्रे वा शब्दो विकल्पार्थः समुच्चयार्थत्वे निःसन्देहार्थं द्वन्द्वादिकमेव निर्दिशेत् एवमेव अनिरुद्धभट्टप्रभृतयः। एतेन मैथिलोक्त समुच्चयार्थो हेयः।

ऋक्परिभाषमाह जैमिनिः। "तेषामृक् यथार्थवशेन पादव्यवस्थितिः" इति तेषां मन्त्राणां मध्ये यत्रार्थवशेन एका-न्वयत्वेनानुष्टुबादि पादस्थितिः सा ऋक् यजुः परिभाषामपि स एवाह "शेषे यजुः शब्द" इति शेषे ऋक्सामभिन्ने मन्त्रजाते सामपरिभाषामाह स एव "गीतिषु सामाख्या" इति गीतिषु

गीयमानेषु मन्त्रेषु सामसंज्ञेत्यर्थः । ततश्च यन्मन्त्रजातं प्रश्लिष्टपठितं गानपादविच्छेदरहितं तद्यजुरिति एवञ्च यजुष्ट्वात् छन्दो नास्ति इति यत् प्रमाणिकैरुक्तं तदेवैतादृक्मन्त्रपरं न तु यजुर्वेदोक्तमन्त्रमात्रपरं ततश्च भोक्तृब्राह्मणाङ्गुष्ठं गृहीत्वेदं विष्णुरिति कृष्ण कव्यमित्यन्यतरं पठित्वा इदं हविरित्युक्त्वा अन्ने निवेशयेत् "इदं हविरित्येवमङ्गुष्ठमन्नविधां ब्राह्मणेभ्यो दद्यात्" इति पैठीनसिवचनात् अङ्गुष्ठं निवेश्येति शेषः अन्नविधां अन्नप्रकारमिति कल्पतरुः। एषु वचनेषु अन्नेऽङ्गुष्ठनिवेशनमात्रश्रुतेर्जलादावङ्गुष्ठनिवेशनं हेयम्। अत्र "निरङ्गुष्ठञ्च यच्छ्राद्धं वहिर्जानु च यत्कृतम्। वहिर्जानु च यद्भुक्तं सर्वं भवति चासुरम्" ॥ इति यमवचने निरङ्गुष्ठश्राद्धे निन्दाश्रुतेर्ब्राह्मणाभावेऽपि तत् प्रतिनिधित्वेन श्राद्धकर्त्ताङ्गुष्ठं निवेशयेत् अतएव गोभिलेन सामान्यतोऽङ्गुष्ठं निधायेत्युक्तम्। ततोऽपहतेति मन्त्रेण तिलान् विकिरेत्। अत्रापहता इति मन्त्रपाठस्तु पितृपक्ष एव रक्षोघ्नत्वात्। देवानान्तु स्वतोरक्षोघ्नत्वात् न तत्रापहता इति मन्त्रापेक्षा अतएव पितृपक्षीयत्वादेव तिलविकरणमुक्तं न तु यवविकरणमिति एवमेव कर्कभाष्यम्। गुणविष्णुनाप्ययं मन्त्रस्तिलविकरणार्थत्वेन व्याख्यातस्ततश्चानिरुद्धभट्टेन यत् देवपक्षेऽपि समन्त्रकयवविकरणमुक्तं तत् गोभिलसूत्रानुपात्तत्वात् हेयम्। ततोऽन्ने मधु तदभावे गुड़ं वा प्रतिनिधिं दत्त्वा गायत्रीं मधुवातेति मन्त्रत्रयं मधुमधुमध्वित्यनेनान्नमभिमन्त्र्य प्रोच्य वामहस्तेन अन्नपात्रं धृत्वा ब्राह्मणे जलगण्डूषं दत्त्वा सोपकरणमन्नं प्रागुक्तगोत्रसम्बन्धाद्युल्लेखेन दद्यात्। "मधुमध्विति यस्तत्र त्रिर्जपोऽशितुमिच्छताम्। गायत्र्यनन्तरं गोत्रमधुमन्त्रविवर्जितः" इति छन्दोगपरिशिष्टवचने पार्वणे भोक्तुमिच्छतां

ब्राह्मणानां आव्यत्वेन मधुमध्विति त्रिर्जपो मधुवातेति मन्त्रसहितो गायत्रीजपानन्तरं क्रियते सोऽत्राभ्युदयिकश्राद्धे मधुवातेति मन्त्रवर्जित इति श्राद्धविवेककृद्व्याख्यानात्। "गायत्रीं त्रिःसकृद्वापि जपेद्व्याहृतिपूर्विकाम्। मधुवाता इति त्र्यृचं मध्वित्येतत् त्रिकं जपेत्"॥ इति मिताक्षराधृतपारस्करवचनात्। देवपूर्वं पितृभ्योऽन्न माज्यपूतं मधुप्लुतम्। मन्त्रितं पृथिवीत्येवं मधुवाते त्यृचं जगौ" इति ब्रह्मपुराणात्। "अन्नं मधुमयं कृत्वा मधुवाताभिमन्त्रितम्" इति यमवचनात्। "अङ्गिरभ्युक्ष्य दद्यादालभ्य" इति हारीतवचनात्। आलभ्य स्पृष्ट्वा "अतो मधुघृताक्तन्तु सोष्णमन्नं तिलान्वितम्। गृहीत्वा दक्षिणेनैव पाणिनैव तत् पुनः॥ एतद्धोत्यन्नमित्युक्ता विश्वान् देवांश्च संयजेत्। पितृभ्यश्च ततो दद्यादन्नमामन्त्रणेन तु। अमुकामुकगोत्रैतत्तुभ्यमन्नं स्वधा नमः"॥ इति ब्रह्मपुराणवचनाच्च। अत्र "सोष्णभागा हि पितरः" इति श्रुतिदर्शनात्। सोष्णमित्युक्तम् अतएव मनुः। "यावदुष्णं भवत्यन्नं यावदश्नन्ति वाग्यताः। तावदश्नन्ति पितरो यावन्नोक्ता हविर्गुणाः"॥ अत्र वाग्यतत्वाभिधानेनैव श्राद्धभोक्तॄणां हविर्गुणानभिधाने सिद्धे यावन्नोक्ता हविर्गुणा इति पुनर्वचनम् इङ्गितादिना गुणप्रतिपादननिषेधार्थम्। अत्र पृथुकादीनामुष्णत्वं नापेक्षितम्। आपस्तम्बेन पर्य्युषितस्यापि प्रतिप्रसूतत्वात्। तथा च प्रतिषिद्धमुपक्रम्य आपस्तम्बः। "कृतान्नं पर्य्युषितं पृथुकतण्डुलकरम्भशक्तुलाजपिष्टकक्षीरविकारौषधिवर्जम्" इति दैवे तिलान्वितमिति शाख्यन्तरीयम्। एषु वचनेषु मधुप्लुतं मधुमयं मधुघृताक्तमिति श्रुत्वा मध्वित्येतत् त्रिकं जपेत् इति पारस्करवचनाच्च मधुमध्वितित्रिर्जप इत्यस्य मधुद्रव्यसम्बन्धिमध्विति त्रिर्जप इति व्याख्येयं न तु मधुमध्वित्यस्य त्रिर्जपः

मधुवाताभिमन्त्रितमिति । मधुवातेति ऋक्त्रयेणाभिमन्त्रितम् । तिसृणामासामृचां युगनद्धवाहितयैव सर्वत्र प्रयोगदर्शनात् । अभिमन्त्रणमाभिमुख्येन मन्त्रपाठः । तच्च अभिमन्त्रणीयं स्पृष्टं विनैव वृषमभिमन्त्रयेदिति वदिति नवीनवर्द्धमानः । एतेन वाचस्पतिमिश्रोक्तमन्त्रस्पर्शपूर्वकमभिमन्त्रणं हेयम् । तेनैव वृषोत्सर्गे स्पर्शं विनैव वृषाभिमन्त्रणमित्युक्तम् ।

अथ विहिताविहितद्रव्याणि । वायुपुराणे । "कृष्णामाषास्तिलाश्चैव श्रेष्ठाःस्युर्यवशालयः" । शालिर्हैमन्तिकं धान्यं तत् प्रभवतण्डुलादि । अथ वृषकृष्टप्रभवधान्येन वैधकर्मकरणं तथा च हरिवंशे शक्रं प्रति सुरभिवाक्यम् । "कर्षकान् पुङ्गवैर्व्रीहीर्मध्येन हविषासुरान् । श्रियं शक्रात् प्रवृत्तेन तर्पयिष्यामहे वयम्" ॥ वायुपुराणं "विल्वामलमृद्वीकापनसाम्रातदाड़िमम् । भव्यं पारावताक्षोड़ं खर्जूराम्रफलानि च । कशेरुकोविदारश्च तालकन्दं तथा विषम्" ॥ मृद्वीका द्राक्षा भव्यं कामरङ्गं पारावतं करमर्दकम् आक्षोड़ं जम्बीराकारफलम् आक्षोड़ं काश्मीरादौ प्रसिद्धम् । कोविदारः श्वेतकाञ्चनसदृश इति श्राद्धविवेकः । तालकन्दं तालमूलीति प्रसिद्धम् विषं मृणालम् । मनुः । "तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा । दत्तेन मासं प्रीयन्ते विधिवत् पितरो नृणाम" ॥ व्रीहिः शरत्पक्वधान्यम् । याज्ञवल्क्यः । "हविष्यान्नेन वै मासं पायसेन च वत्सरम् । मात्स्यहारिणकौरभ्रशाकुनिच्छागपार्षतैः ॥ ऐणरौरववाराहशशैर्मांसैर्यथाक्रमम् । मासवृद्ध्याभितृप्यन्ति दत्तेनेह पितामहाः" ॥ हविष्यान्नेन शालिव्रीह्यन्नेन मात्स्येति मत्स्यादिमांसैः उरभ्रोमेषः शकुनिर्विहितलावकादिः पृषतश्चित्रमृगः एणः कृष्णमृगःरुरुर्बहुशृङ्गो

मृगः क्षत्रियव्रतोपयुक्तमृगचर्म्म इति दीपकलिका। अत्र "यक्षरक्षः पिशाचान्नं मद्यं मांसं सुरासवम्। तद्ब्राह्मणेन नात्तव्यं देवानामश्नताहविः" इति मनुवचनेन मद्यादि साहचर्य्यान्मांसम् आममांसमिति भट्टीकाङ्क्षिव्याख्यातं तद्दृष्ट्वा श्राद्धे आममांसं न देयमिति वदन्ति। तन्न "मुन्यन्नानि पयःसोमो मांसं यच्चानुपस्कृतम्। अक्षारलवणञ्चैव प्रकृत्या हविरुच्यते" इति मनुवचनविरोधात्। अत्रानुपस्कृतमित्यनेन पाकोपस्काररहितमांसमित्युक्तं तदपि हविः। न चानुपस्कृतमविकृतं पूतिगन्धादिरहितमिति कुल्लूकभट्टव्याख्यानं युक्तं शब्दानभिधेयत्वादिति। गौड़दाक्षिणात्याभ्यां तथा व्यवह्रियते मुन्यन्नानि नीवारादीनि वशिष्ठः "अन्नं पर्य्युषितं भावदुष्टं सहृल्लेखं पुनः सिद्धमाम् ऋजीषपक्वं काममन्तर्दध्ना घृतेन वाभिघारितमुपभुञ्जीतेति" आमतण्डुलादि पर्य्युषितादि ऋजीष पक्वान्तमन्नं निषिद्धमपि कामं दध्ना घृतेन वाभिघारितमुपभुञ्जीतेत्यनेन भोज्यान्तरासम्भवे एवं भुञ्जीतेति नैयतकालिककल्पतरुणा व्याख्यातं तत्रामं तण्डुलादि इति व्याख्यातं तद्बीजञ्च। "शस्यं क्षेत्रगतं प्राहुः सतुषं धान्यमुच्यते। आमं वितुषमित्युक्तं स्विन्नमन्नमुदाहृतम्"॥ इति वशिष्ठ-वचनेन स्विन्नास्विन्नतण्डुलयोर्यथा संख्यमन्नत्वेन आमत्वेन च परिभाषितत्वात् पूर्वसूत्रेऽपि अन्नामपदाभ्यास्तथैव प्रतीयते नत्वामपदेनार्द्रकादि प्रतीयत इति। ततश्च "अपाद्यनग्नौ तीर्थे च चन्द्रसूर्य्यग्रहे तथा। आमश्राद्धं द्विजैः कार्य्यं शूद्रेण तु सदैव हि" इति प्रचेतोवचनात् तण्डुलादेस्तदानीमभक्ष्यत्वेऽपि पश्चात् पाकेन भक्ष्यत्ववदाममांसस्य तदानीमभक्ष्यत्वेऽपि पश्चात् पाकेन भक्ष्यत्वात् श्राद्धे देयत्वं प्रतीयते। अतएव मनुनैव श्राद्धप्रकरणे "मुन्यन्नानि पयः

सोमो मांसं यच्चानुपस्कृतम्। अक्षारलवणञ्चैव प्रकृत्या हविरुच्यते" इति अनुपस्कृतम् इत्यनेन पाकोपस्काररहितं यत् मांसं तदपि हविरित्युक्तं न चानुपस्कृतमविकृतं पूतिगन्धादिरहितमिति कुल्लूकभट्टव्याख्यानं युक्तं शब्दानभिधेयत्वादिति गौडदाक्षिणाभ्यां तथा व्यवह्रियते। मुन्यन्नानि नीवारादीनि इत्यस्य तत् ब्राह्मणेन नात्तव्यम् इत्यामतादशायाम्। हारीतः। "कालशाकञ्च वास्तूकं मूलकं कृष्णनालिकाम्। वेत्राङ्कुरं कलायञ्च पटोलं सर्षपं तथा॥ सूर्य्यावर्त्तं सुनिषण्णं शाकान्याहुर्म्मनीषिणः" ॥ सूर्य्यावर्त्तं सुल्टिया इति ख्यातं सुनिषण्णं सुषुणीति प्रसिद्धं वायुपुराणे। "वैकङ्कतं नारिकेलं शृङ्गाटकपरूषकम्। पिप्पलीमरिचञ्चैव पटोलं बृहतीफलम्॥ एवमादीनि चान्यानि स्वादूनि मधुराणि च"॥ अन्यानि अनिषिद्धानि। "नागरञ्चात्र वैदेयं दीर्घमूलकमेव च"। नागरमार्द्रकं "कट्फलं किङ्किणी द्राक्षालकुचं मोचमेव च"। कट्फलं गाम्भारिफलं किङ्किणी अम्लरसा द्राक्षा इति रुद्रधरः अलजम्बुरिति हलायुधः। लकुचं डहुफलं मोचं कदलीफलम्। आदित्यपुराणे। "मधुकं रामठञ्चैव कर्पूरं मरिचं गुड़म्। श्राद्धकर्म्मणि शस्तानि सैन्धवं त्रपुषन्तथा" ॥ रामठं हिङ्गु। त्रपुषं सुखाशिका। शङ्खः "पिप्पलीं मरिचञ्चैव तथा वै पिण्डमूलकम्। कृतकं लवणं सर्वं वंशाग्रञ्च विवर्जयेत्" ॥ कृतकं लवणं क्षारमृत्तिकादिभिः कृत्रिमं लवणम् अतएव मनुनापि हविष्यान्ने अक्षारलवणं विहितम्। अत्र हिङ्गुमरिचशुण्ठीपिप्पलीनां स्वरूपेणादेयता द्रव्यान्तरसंस्कारकत्वेन देयता पूर्ववचनसिद्धा। विष्णुः "कुष्माण्डालावुवार्त्ताकी शाम्यमाहिषदुग्धकम्। पालङ्कीं राजिकां श्राद्धे हिःस्विन्नञ्च विवर्जयेत्" ॥ हिःस्विन्नञ्च तदेव यत् सूपकारशास्त्रोक्तापेक्षित-

पाकनिष्पत्त्यनन्तरं शैत्यादिनिवृत्तये पुनः पाकान्तरमुक्तं नत्व-द्विपाकानन्तरं तच्छास्त्रोक्त सम्भारणरूपपाकान्तरसिद्धं व्यञ्जनादि अतीतार्थे क्तनिर्देशात्। अतएव तिलादिभृष्टानन्तरं मोदकं गुड़ादिपक्वमोदकादि शिष्टैर्दीयते भुज्यते च। अन्यथा हिः संस्कृतस्य भोज्यत्वं न स्यात्। "पर्य्युषितं पुनः सिद्धमभोज्य-मन्यत्र हिरण्योदकस्पर्शादिति" सुमन्तूक्तेः। यमः। "यच्च भुक्त्वा पुनर्भुङ्क्ते यत्तु तैलाभिघारितम्। रजस्वलाभिर्यद्दृष्टं तद्वै रक्षांसि गच्छति"॥ तैलाभिघारितमिति घृतसम्भवे तदसम्भवे तैलपक्वमित्यापस्तम्बेन तैलेन पाकविधानात्। "तिलैः श्राद्धं पुष्टिकामः कुर्य्यात् पूपैः ऋद्धिकामो घृतगुड़-तैलपक्वैस्तेजस्कामः सौभाग्यारोग्यकामो वा परमान्नकृशर-दधिमांसयवागूभिः सर्वकामः" इति हारीतेन फलकथनाच्च। एवञ्चैतेषां काम्याभिलापं विनापि पितृतृप्त्यतिशयसम्पादक-त्वेन फलविशेषजनकत्वम्। शातातपः। "गोकुले कन्दु-शालायां तैलयन्त्रेक्षुयन्त्रयोः। अमीमांस्यानि शौचानि स्त्रीषु बालातुरेषु च"॥ बालः पञ्चवर्षाभ्यन्तरवयस्कः। अमीमांस्यानि शौचाशौचभागितया न विचारणीयानीति भवदेवभट्टरत्नाकरादयः। अतएव कूर्म्मपुराणम्। "कन्दु-पक्वानि तैलेन पायसं दधिशक्तवः। द्विजैरेतानि भोज्यानि शूद्रगेहकृतान्यपि"॥ कन्दुपक्वं जलोपसेकं विना केवलपात्रेण यत् वह्निना पक्वं भृष्टतण्डुलादि। पायसं पाकसंस्कृतं दुग्धं परमान्नपरत्वे पुंलिङ्गनिर्देशापत्तेः। "परमान्नन्तु पायसः" इत्यमरात्। वयुपुराणे। "शर्कराक्षीरसंयुक्ताः पृथुका नित्य-मक्षयाः। शक्तून् लाजान् तथा पूपान् कुल्माषान् व्यञ्जनैः सह। सर्पिः स्निग्धानि सर्वाणि दध्ना सत्कृत्य भोजयेत्। श्राद्धेष्वेतानि यो दद्यात् पितरः प्रीणयन्ति तम्"॥ अतान्नपाके

सपिण्डाधिकारमाह देवलः। "तथैवामन्त्रितो दाता प्रातः स्नातः सहाम्बरः। आरभेत नवैः पात्रैरन्वारम्भं सबान्धवः"॥ तथैवामन्त्रितः सर्वायासविनिर्मुक्तैरित्यादिभिर्निमन्त्रितो येन। सहाम्बर इति द्वितीय वस्त्रप्रतिपत्त्यर्थम् एकवस्त्रस्य नग्नत्व-प्रतिषेधेन प्राप्तत्वात् एतेन कुशरज्ज्वादिर्वस्त्रप्रतिनिधिर्न भव-तीति सूचितम्। एवमेव स्नाने ब्रह्मदत्तभाष्यकल्पतरुप्रभृतयः। श्राद्धपाकार्थतण्डुलस्य सकृत् प्रक्षालनमाह गोभिलः। "त्रिफ-लीकृतांस्तण्डुलान् त्रिर्देवेभ्यः प्रक्षालयेत् द्विर्मनुष्येभ्यः सकृत् पितृभ्यः" इति।

आमश्राद्धे योगिनीतन्त्रम्। "निरग्नेरामश्राद्धे तु अन्नं न चालयेत् क्वचित्। वृद्धौ तु चालयेदन्नं संक्रामे ग्रहणेषु च"॥ मार्कण्डेयपुराणम्। "यत् सर्वाय च नोत्सृष्टं यच्चाभोज्यनिपानजम्। तद्वर्ज्यं सलिलन्तात सदैव पितृ-कर्म्मणि"॥ "स्मृतिः। पादेन घटमुत्थाप्य भाजने पूरयेज्जलम्। तज्जलं मदिरातुल्यं भाण्डस्थं सुरया समम्"॥ मदिरा सुरेत-ररूपा सुरा पैष्टी। वराहपुराणे। "अकृताग्रयणञ्चैव धान्य-जातं द्विजोत्तम। राजमाषानणूंश्चैव मसूरांश्च विवर्जयेत्"॥ अकृताग्रयणमकृतनवशस्येष्टिश्राद्धं यथा योग्यं साग्निनिरग्नि परम्। ब्रह्मपुराणे। "द्विः स्विन्नं परिदग्धञ्च तथैवाग्रा वलेहितम्। शर्करा कीटपाषाणैः केशैर्यच्चाप्युपद्रुतम्॥ पिण्याकं मथितञ्चैव तथातिलवणञ्च यत्। सिद्धाः कृताश्च ये भक्ताः प्रत्यक्षलवणीकृताः। वाग्भावदुष्टाश्च तथा दुष्टैश्चो-पहृता स्तथा॥ वाससा चावधूतानि वर्ज्यानि श्राद्धकर्म्मणि"॥ अग्रावलेहितं श्राद्धार्थोपकल्पितं सदुपभुक्ताग्रभागं सिद्धाः कृताः सिद्धेषूत्तरकालं प्रत्यक्षलवणप्रक्षेपकृताः विष्णुपुराणे। "अलावुं गृञ्जनञ्चैव पलाण्डुं पिण्डमूलकम्। गान्धारकं

करम्भाणि लवणान्यौषधानि च॥ आरक्तांश्चैव निर्यासाः प्रत्यक्षलवणानि च। वर्ज्यान्येतानि वै श्राद्धे यच्च वाचा न शस्यते॥ नक्ताहृतमनुत्सृष्टं तृप्यते न च यत्र गौः। दुर्गन्धिफेणिलञ्चाम्बु श्राद्धयोग्यं न पार्थिव॥ क्षीरमेकशफानां यदौष्ट्रमाविकमेव च। मार्गञ्च माहिषञ्चैव वर्जयेत् श्राद्धकर्म्मणि" इति निषेधवचनानि।

अथ परिवेशनम्। मनुः। "पाणिभ्यां तूपसंगृह्य स्वयमन्नस्य वर्द्धितम्। विप्रान्तिके पितॄन्ध्यायन् शनकैरुपनिक्षिपेत्"॥ अन्नस्येति षष्ठी तृतीयार्थे वर्द्धितं पूरितं पात्रमिति शेषः। उपनिक्षिपेत् परिवेशनार्थं समीपे धारयेत् तथा च पाकस्थाल्या आकृष्य प्रथमं भोजनपात्रे न देयं किन्तु स्थाल्यादिकं पाणिभ्यां पात्रसमीपे भूमौ संस्थाप्य पश्चादुभाभ्यां पाणिभ्यां पात्रान्तरिताभ्यां श्राद्धे परिवेशनं कुर्य्यात्। "उभाभ्यामपि पाणिभ्यामाहृत्य परिवेशयेत्" इति मत्स्यपुराणात्। यत्तु। श्राद्धे परिवेशनञ्च दक्षिणपाणिमात्रेणैवाङ्गानभिधानादिति मैथिलोक्तं तन्न। "एकेन पाणिना दत्तं शूद्रदत्तं न भक्षयेत्" इत्यादि पुराणीयेनैकपाणिदत्त शूद्रदत्त भक्षणनिषेधेन तन्मात्रपरिवेशनस्यापि निषिद्धत्वात्। पाणिभ्यामपि पात्रान्तरितं कृत्वा देयम्। "हस्तदत्तास्तु ये स्नेहा लवणं व्यञ्जनानि च। दातारं नोपतिष्ठन्ते भोक्ता भुङ्क्ते तु किल्बिषम्॥ तस्मादन्तरितं देयं पर्णेनाथ तृणेन वा। प्रदद्यात् न तु हस्तेन नायसेन कदाचन"॥ इति वशिष्ठेन सामान्यतोऽभिधानात् पितृभक्तितरङ्गिण्यामप्येवम्। मनुः। "गुणांश्च सूपशाकाद्यान् पयोदधिघृतं मधु। विन्यसेत् यत्नतः सम्यक् भूमावेव समाहितः॥ भक्ष्यं भोज्यञ्च विविधं मूलानि च फलानि च। हृद्यानि चैव मांसानि पानानि सुरभीणि

च॥ उपनीय तु तत्सर्वं शनकैः सुसमाहितः। आमिषं पानपात्रञ्च भोक्तुर्दक्षिणतो न्यसेत्॥ परिवेशयेच्च प्रयतो गुणान् सर्वान् प्रचोदयन्"॥ गुणान् उपकरणानि। भूमावेव न तु व्यञ्जनादि पात्रादन्नपात्रोपरि निक्षिपेत् पात्रान्तरासत्त्वे भोजनपात्रेऽपि।

अथान्नोत्सर्गानन्तरकृत्यम्। तत्र गोभिलः। "सकृत् सकृदपो दत्त्वा गायत्रीं मधुवाताञ्च पठित्वा अश्नत्सु जपेत् व्याहृतिपूर्विकां सावित्रीं सप्रणवामिति"॥ एतच्च ब्राह्मणहस्ते सकृत् सकृज्जलम् इच्छातो जुषध्वमित्युक्त्वा भवन्तः प्राशयन्त्विति मन्त्रेणापोशानार्थं दद्यात् "दत्वा जुषध्वमिच्छातो वाच्यमेतदनिष्ठुरम्" इति विष्णुपुराणात्। "दत्त्वापोशानमासीनः सावित्रीं त्रिर्जपेदथ। मधुवाता इति त्र्यृचं मध्वित्यन्तेन भोजयेत्" इति समुद्रकरधृतेन तेभ्यो दद्यादापोशानं भवन्तः प्राशयन्त्विति ब्रह्मपुराणीयेन चैकवाक्यत्वात्। ततो गायत्रीं मधुवातेति त्र्यृचञ्च जपित्वाऽन्नहीनमिति पठेत्। तथा च यमः। "अन्नहीनं क्रियाहीनं विधिहीनञ्च यद्भवेत्। तत्सर्वमच्छिद्रमस्त्वित्युक्त्वा यत्नेन भोजयेत्"॥ ततो भुञ्जानेषु ब्राह्मणेषु सप्रणवां सव्याहृतिकां गायत्रीं जपेत् एतदनन्तरं मधुवातेति ऋक्त्रयं मधुमधुमध्विति च जपेत् तथा च याज्ञवल्क्यः। "सव्याहृतिकां गायत्रीं मधुवाता इति त्र्यृचं जप्त्वा यथासुखं वाच्यं भुञ्जीरं स्तेऽपि वाग्यताः। अन्नमिष्टं हविष्यञ्च दद्यादक्रोधनोऽत्वरः। आतृप्तेस्तु पवित्राणि जप्त्वा पूर्वजपन्तथा"॥ अन्नमिष्टमित्यनेन उत्सर्गानन्तरमपि पितृतृप्त्यर्थमन्नान्तरादिकं देयम्। पवित्राणीत्यनेन विष्णुपुराणाद्युक्तानि सूचितानि। अत्र रक्षोघ्नमन्त्रपाठमाह विष्णुपुराणम्। "यज्ञेश्वरो हव्यसमस्तकव्य भोक्ताव्ययात्मा हरि-

शोऽधरोऽत्र। तत् सन्निधानादपयान्तु सद्यो रक्षांस्यशेषाण्य-सुराश्च सर्वे"॥ याज्ञवल्क्यः। "श्लोकत्रयमपि ह्यस्माद् यः श्राद्धे श्रावयिष्यति। पितॄणां तस्य तृप्तिः स्यादक्षया नात्र संशयः"॥ अस्मान्मदीयग्रन्थात्। एवञ्च "यश्चैनं श्रावयेत् श्राद्धे ब्राह्मणान् पादमन्ततः। अक्षय्यमन्नपानं वै पितृभ्य-श्चोपतिष्ठते" इत्यादि पर्वणि श्राद्धे महाभारतीयश्लोकपादादि-श्रवणोक्तेः संक्षेपेण भारतवंशद्वयनिरूपत्वेन दुर्य्योधनो मन्यु-मय इति युधिष्ठिरो धर्म्ममय इति श्लोकद्वयम्। अपहृत-गुरुगवीमांसकृतश्राद्धमङ्गलप्रकाशकपितृगाथात्वेन सप्तव्याधा इति च पठ्यते। कल्पतरौ मत्स्यपुराणम्। "ब्रह्म-विष्णर्करुद्राणां स्तोत्राणि विविधानि च। विप्राणामात्मन-श्चैव तत् सर्वं समुदीरयेत्"॥ विप्राणामात्मनश्चेति। आव्यत्वेन इति शेषः। एवञ्चात्मनः आव्यत्वेन रक्षोघ्नत्वेन पितृतृप्तिकार-कत्वेन च दर्भब्राह्मणपक्षेऽपि जपः कार्य्यः। तथा रक्षो-घ्नत्वेन पितृतृप्त्यर्थत्वेन च पितृकार्य्यत्वात् प्राचीनावीतिना जपः कार्य्यः। प्राचीनावीति पितॄणामिति श्रुतेः "प्राची-नावीतिना सम्यगपसव्यमतन्द्रिणा पित्र्यमानिधनात् कार्य्यं विधिवद्दर्भपाणिना इति मनूक्तेः। भट्टभाष्येऽप्येवम्। पितृ-दयितायामप्येवम्।

अथाग्निदग्धादिनान्नविकरणम्। गोभिलः। "तृप्तिं ज्ञात्वा सतिलमन्नं प्रविकीर्य्य अग्निदग्धाश्च ये जीवा येऽप्य-दग्धाः कुले मम। भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु पराङ्गति-मिति"॥ तृप्तिं ब्राह्मणानामिति शेषः। तज्ज्ञानप्रकार-माह स्मृतिः। दीयमानं न गृह्णन्ति अन्नञ्च बहु विद्यते। ज्ञात्वा तृप्तिं तदा देयो दर्भेषु विकिरश्च यः"॥ अन्नं विशि-षयति ब्रह्मपुराणम्। "उच्छिष्टे सतिलान् दर्भान् दक्षिणा-

श्राग्निधापयेत्। यद्दयन्निवेदितं किञ्चित् पितृभ्यश्चाथ तत्र च ॥ तस्मात्तस्माच्च भागन्तु गृहीत्वा चमसे शुभे। दत्त्वा मृताभिधानान्तु विप्रेभ्यश्च सकृत् सकृत्" ॥ उच्छिष्टे तत् समीपे उच्छिष्टाग्रत इति वक्ष्यमाणात्। प्रविकीर्य्याग्नि-दग्धाश्चेति मन्त्राभ्यां सकुश भूमेरभ्युक्षणमाह विष्णुः। "भुक्त-वत्सु च विप्रेषु भूमिं सकुशामभ्युक्ष्यान्नविकरणमुच्छिष्टाग्रत इति"। अत्र पराङ्गतिमित्यनन्तरं सूत्रस्थेतिकारेण येषां न माता न पिता इति मन्त्रान्तरमुक्तमित्यादि बहुवचनान्ता गणस्य संसूचका इत्युक्तेः। तथा च मत्स्यपुराणम्। "सार्व-वर्णिकमन्नाद्यं सन्नीयाप्लाव्य वारिणा। समुत्सृजेत् भुक्तवता-मग्रतो विकरन् भुवि ॥ अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम। भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम्। येषां न माता न पिता न बन्धुर्नैवान्नसिद्धिर्न तथान्नमस्ति ॥ तत् तृप्तयेऽन्नं भुवि दत्तमेतत् प्रयान्तु लोकाय सुखाय तद्वत्। असंस्कृतप्रमीतानां योगिनां कुलयोषिताम् ॥ उच्छिष्टं भागधेयं स्यात् दर्भेषु विकिरश्च यः" ॥ सार्ववर्णिकं सर्व-प्रकारं सन्नीय मिश्रयित्वा ततश्च मन्त्राभ्यां तदुक्तफलमुद्दिश्य कुशोपरि दद्यात्। एतदेवासंस्कृतेत्यादिनोपसंहृतम्। ततो हस्तौ प्रक्षाल्याचम्य हरिं स्मरेत्। "ततः प्रक्षाल्य हस्तौ च तथाचम्य हरिं स्मरेत्। प्रेतभागं विसृज्याथ प्रायश्चित्तोप-शान्तये" ॥ इति ब्रह्मपुराणात् गोभिलः। सकृत् सकृदपो दत्त्वा पुनर्मधुवातां मधु च त्रिर्जप्त्वा तृप्ताःस्थ इति पृच्छति तृप्ताःस्म इत्युक्ते शेषमन्नमनुज्ञाप्येति" अत्र सकृत् सकृदिति श्रुतेः। प्रतिपत्ते प्रत्यापोशानजलं दद्यात्। "दत्त्वा मृता-पिधानन्तु विप्रेभ्यश्च सकृत् सकृत्" इति ब्रह्मपुराणात् एतच्च प्रत्यापोशानजलपानं हस्तं प्रक्षाल्य न कर्त्तव्यम्। तथा च,

शातातपः। "हस्तं प्रक्षाल्य यस्त्वापः पिबेद्भुक्त्वा द्विजाधमः। तदन्नमसुरैर्भुक्तं निराशाः पितरो गताः॥ इत्यत्र मत्स्यं भुञ्जानस्य हस्तप्रक्षालनानन्तरमेवापोशानस्य वैधत्वात्तेन हस्तं प्रक्षाल्य निरामिषमन्नादिकं भुक्त्वापोशानं कर्त्तव्यं व्यक्तीकृतमेतदाह्निकतत्त्वे। गोभिलेन मन्त्ररहितजलदानाभिधानात् दर्भब्राह्मणेऽपि जलदानाचारः। पुनर्मधुवातेत्यत्र पुनरित्यभिधानं पुनर्गायत्र्यनन्तरमधुवाता प्रतिपत्त्यर्थं तथा च ब्रह्मपुराणम्। "सव्याहृतिं सप्रणवां गायत्रीञ्च ततो जपेत्। पाठेन्मधुमतीः पुण्यास्तथा च मधुमध्विति"॥ प्रत्यापोशानात् परतः। कात्यायनोऽपि तृप्तिं ज्ञात्वा अन्नं प्रकीर्य्य सकृत् सकृदपोदत्वा पूर्ववत् गायत्रीं जपित्वा मधुमतीमधुमधुमध्विति च जपेत्। तृप्ताःस्थ इति पृच्छति शेषमन्नमनुज्ञाप्येति तृप्तिं ज्ञात्वा सर्वेषां तृप्तिमनुमाय तृप्ताःस्थ इति बहुवचननिर्देशात्। सकृदभिधानं तृप्ताःस्म इति तेषामपि सकृत् प्रतिवचनम्। एतच्च कुशब्राह्मणे नास्ति अयोग्यत्वात् अनुज्ञाप्य शेषमन्नं क्व देयमिति ब्राह्मणेभ्यो निवेद्य इष्टेभ्यो दीयतामिति प्रत्युत्तरं गृह्णीयादिति शेषः। तथा च ब्रह्मपुराणम्। "सतानाह पुनः शेषं क्व देयञ्चान्नमित्यपि। इष्टेभ्यो दीयतामेतदिति सम्प्रवदन्ति ते"॥

अथ पिण्डदानम्। तत्र गोभिलः। "सर्वमन्नमेकत्रीकृत्य उच्छिष्टसमीपे दर्भेषु मधुमधुमधु इत्यन्नमीमदन्तेति च जपित्वा त्रीं स्त्रीन् पिण्डान् दद्यादवने निज्येति"। अत्रेतिकर्त्तव्यता पिण्डपितृयज्ञवदुपचार इति पित्रेऽति पूर्वोक्तसूत्रेणातिदिष्टा प्रत्येतव्या। तत्र देशमाह देवलः। "पुरस्तादुपविश्येषां पिण्डावापं निवेदयेत्। ततस्तैरभ्यनुज्ञातो दक्षिणां दिशमेत्य सः॥ उपलिप्ते शुचौ देशे स्थानं कुर्वीत

सैकतम् । मण्डलं चतुरस्रं वा दक्षिणावनतं महत् ॥ पवित्र-पाणिश्च जपेन्मन्त्रं रक्षोघ्नमुत्तमम् । निहन्मि सर्वं यदमेध्यवद्भवेद्धताश्च सर्वेऽसुरदानवा मया ॥ रक्षांसि यक्षाः सपिशाचसङ्घा हता मया यातुधानाश्च सर्वे" ॥ इति दक्षिणादिक् श्राद्धकर्त्रपेक्षयेति कल्पतरुः गोभिलसूत्रेऽपि उच्छिष्टसमीप इत्युक्तम् अतएव ब्रह्मपुराणोक्तदिगन्तराभिधानं शाखान्तरीयम् । अत्र मण्डलमुपक्रम्याभिहितेन "निहन्मि सर्वमित्यादिर्यस्मिन् देशे च पठ्यते । एष मन्त्रस्तु तं देशं राक्षसा वर्जयन्ति हि" इति ब्रह्मपुराणे निहन्मीत्यनेन मण्डलकरणं प्रतीयते । अनिरुद्धभट्टप्रभृतिभिरपि तथा लिखितम् । पिण्डपितृयज्ञातिदेशेन तत्प्रकृतिभूतान्वष्टका पिण्डोक्तरेखां मण्डलमध्ये कुर्य्यात् । सव्येन पाणिना दर्भपिञ्जलिं गृहीत्वा रेखामुल्लिखेत् । अपहतेति अन्वष्टकायां गोभिलगृह्यात् । अत्र वामेन दर्भपिञ्जल्याग्रहणमात्रं रेखान्तु वामान्वारब्धेन दक्षिणहस्तेन कुर्य्यात् । "सव्येन पाणिनेत्येवं यदत्रासकृदीरितम् । परिग्रहणमात्रन्तु सव्यस्यादिशति ध्रुवम् ॥ पिञ्जल्याद्यभिसंगृह्य दक्षिणेनेतरात् करात् । अन्वारभ्य च सव्येन कुर्य्यादुल्लेखनादिकम्" इति छन्दोगपरिशिष्टात् । अत्र दर्भपिञ्जल्यवनेजनार्थोदकपात्रवासः सूत्रादिग्रहणे यत् सव्येनेति वारं वारं गोभिलगृह्योक्तं तत्र सव्यस्योपदेशो दर्भपिञ्जल्यादिग्रहणार्थः । उल्लेखनादिकन्तु वामकराद्दक्षिणकरेण दर्भपिञ्जल्यादिकं नीत्वा वामान्वारब्ध दक्षिणेन रेखादिकं कुर्य्यादित्यर्थः । पिञ्जलोपवित्रम् । "अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च । प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् । एतदेव हि पिञ्जल्यालक्षणं समुदाहृतम्" इति छन्दोगपरिशिष्टात् । अत्र गृह्ये रेखाकरणे अपहता इत्यत्र इति कारि-

णाद्यर्थके नापहता इति समुदायमन्त्रो निहन्मीत्यादि समुदायमन्त्रोऽप्युक्तः। निहन्मि सर्वमित्युक्ता। "अनेन मन्त्रेण सुसंयतात्मा वेदौञ्च सर्वां सकृदुल्लिखेच्च। शिवाञ्च वृद्धिं ध्रुवमिच्छमानः क्षिपेत् द्विजातिर्दिशमुत्तराञ्च"॥ इति वायुपुराणैकवाक्यत्वात् निहन्मीत्यादिमन्त्रद्वयं ब्रह्मपुराणेऽपि किन्तु द्विजातिरित्यादौ कुशांस्त एव दक्षिणाग्रानिति पाठे विशेषः। ततश्च वायुपुराणात् तत्पवित्रमुत्तरस्यां दिशि क्षिपेत्। ब्रह्मपुराणपाठात्तु रेखोपरि दक्षिणाग्रान् कुशाना-स्तरेदित्यर्थः। अतएव अनिरुद्धभट्टेन यन्निहन्मीत्यनेन रेखा-करणमुक्तं तदशुद्धं एवञ्चैक दर्भेण तन्मध्यमुल्लिख्याभ्युक्ष्य तं त्यजेदिति देवलवचनम्। सव्योत्तराभ्यां पाणिभ्यां कुर्य्या-दुल्लिखनादिकम्" इति यमवचनञ्च गोभिलगृह्यतत्परिशिष्ट-विरोधाच्छाख्यन्तरीयम्। ततश्चोक्त गोभिलसूत्रे दर्भेषु पिण्डदानाभिधानाद्रेखोपरि दर्भानास्तीर्य्य प्रागुक्तब्रह्म-पुराणवचनेन देवताभ्य इति त्रिः पठेत् पिण्डान् दद्यादवने-निज्येत्यनेनावने जने पिण्डदानकरणमुक्तं तत्प्रकारन्तु अन्वष्ट-कोक्तो ग्राह्यः। तथा च गोभिलगृह्यम्। "अत्र पितृना-वाहयति एत पितरः सौम्यास इति तथा अथोदकपात्रं गृहीत्वा अपसव्यविपूर्वस्यां कर्ष्वां दर्भेषु निनयेत् पितुर्नाम गृहीत्वा असाववनेनिक्ष्व ये चात्रत्वामित्यादि अप उपस्पृश्य एवमेवेतरयोस्तथाऽपसव्यविदर्भेषु निदध्यात् पितुर्नाम गृहीत्वा-ऽसावेव ते पिण्डो ये चात्रत्वामनु यांश्च त्वमनु तस्मै ते स्वधेति मन्त्रेण अप उपस्पृश्य एवमेवेतरयोस्तथा निधाय जपति अत्र पितरो मादयध्वं यथा भागमावृषायध्वमिति अपपर्य्यावृत्य पुरोच्छासादभिपर्य्यावर्त्तमानो जपेत् अमीम-दन्त पितरो यथा भागमावृषायिषत इति अथाञ्जलिकृते

जपति नमो वः पितरः पितरो नमो वः इति गृहानवेक्षते गृहान्नः पितरो दत्तेति पिण्डानवेक्षते सदो वः पितरो देष्म इति सव्येनैव पाणिना सूत्रतन्तुं गृहीत्वा अपसलविपूर्वस्यां कर्ष्वां पिण्डे निदध्यात् पितुर्नाम गृहीत्वा असावेतत्ते वासो ये चात्र त्वामनुयांश्च त्वमनु तस्मै ते स्वधेति। अथ उपस्पृश्य एवमेवेतरयोः सव्येनैव पाणिना उदकपात्रं गृहीत्वा अपसलवि पिण्डानामुपरि सिञ्चेत्। ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधास्तु तर्पयत मे पितॄन्। मध्यमं पिण्डं पत्नीपुत्रकामाम्नीयादाधत्त पितरो गर्भम् इति अप्सु पिण्डानासादयेत् प्रणीते वा अग्नौ ब्राह्मणान् भोजयेद्वा गवे वा दद्यादिति"। एषामर्थः यद्यप्यन्वष्टकायां पितॄनिति पित्रादित्रिकमत्र परं तथाऽप्यत्र त्रीं स्त्रीन् पिण्डान् दद्यात् इत्यनेन षट्पुरुष पिण्डदानानुरोधेन पितॄनिति षट्पुरुषपरं पूर्वोक्तावाहनानन्तरं तिल-विकरण-श्रुतेरत्राप्यावाहनानन्तरं तिलविकरणम् उदकपात्रं तिलयुक्तं "प्रागग्रेष्वथ दर्भेषु आद्यमामन्त्र्य पूर्ववत्। अपः क्षिपेन्मूलदेशेऽवने निक्ष्वेति निस्तिलाः द्वितीयश्च तृतीयश्च मध्यदेशाग्रदेशयोः"॥ इत्याभ्युदयिकप्रकरणीयछन्दोगपरिशिष्टवचनेन आभ्युदयिके निस्तिलत्वाभिधानेनान्यत्र सतिलत्वप्रतीतेः पुष्पयुक्तत्वञ्च। सपुष्पं जलमादाय तेषां पृष्ठे पृथक् पृथक्। अप्रदक्षिणं नेनिज्यान्नीते नामानुमन्त्रितम्" इति ब्रह्मपुराणवचनात् अपसलवि पितृतीर्थेन प्रदेशिन्यङ्गुष्ठयोरन्तरा अपसलवि अपसव्यं वा तेन पितृभ्योनिदधातीति भट्टभाष्यधृतगृह्यान्तरात् अपसव्यशब्देन पितृतीर्थमुच्यते अस्मादेववचनात् तथा च मनुः "प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा" इत्यादि कर्ष्वामित्यन्वष्टकापरं तत्र तु मण्डलोपरि असाविति, सम्बोधनविभक्त्या

सर्वत्र नामनिर्देश इति भट्टभाष्यम् अतएव प्रागुक्त छन्दोगपरिशिष्टे आद्यमामन्त्रपूर्वंवदित्युक्तम् आद्यं पितरं पूर्ववत् गोत्रनामभिरामन्त्र्य पितॄनर्घ्यं प्रदापयेदिति वत् पितुरवनेजनं मूलदेशे पितामह प्रपितामहयोस्तु अवनेजनं मध्यदेशाग्रदेशयोः। "द्वितीयञ्च तृतीयञ्च मध्यदेशाग्रदेशयोः" इति छन्दोगपरिशिष्टात्। मातामहादीनामप्येवम्। "मातामह प्रभृतीं स्तु एतेषामेव वामतः" इति छन्दोगपरिशिष्टात्। एतेषां पितॄणां वामत इत्याभ्युदयिक परम्। अन्यत्र तु दक्षिणतः कर्त्तुर्वामोपचारत्वात्। अतएव पार्वणे प्रागुक्तब्रह्मपुराणेऽप्रदक्षिणं नेनिज्यादित्युक्तम्। तेन सतिलपुष्पोदकपात्रं वामहस्ताद्दक्षिणहस्तेन वामान्वारब्धेन गृहीत्वा "अमुक गोत्र पितरमुक देवशर्म्मन्नवनेनिक्ष्व येचात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधा" इति पितृतीर्थेनावनेजयेत्। अप उपस्पृश्य जलं स्पृष्ट्वा एवं पूर्वोक्तरीत्या पितामहाय प्रपितामहाय पिण्डदानसूत्रं जलस्पर्शनसूत्रञ्च पूर्ववत् व्याख्येयम्। अत्र च गृह्यानुक्तं श्राद्ध सूत्रोक्तं सर्वमग्नौकरणशेषं श्राद्धशेषञ्च तथाच छन्दोगपरिशिष्टम्। "यावदन्नमुपादाय हविषोऽर्भकमर्भकम्। चरुणा सह सन्नीय पिण्डदानमुपक्रमेत्"। श्राद्धार्थाद्धविषोऽन्नादेः सकाशात् यावत् भक्ष्यमोदनव्यञ्जनादि ततोऽल्पाल्पं गृहीत्वा अग्नौकरण चरुशेषेण सह मिश्रीकृत्य पिण्डदानमारभेदित्यर्थः। एकस्मिन् पात्रेऽन्नं मध्वादि द्रव्येण मिश्रयेत्। "मध्वाज्यतिलसंयुक्तं सर्वव्यञ्जनसंयुतम्। उष्णमादाय पिण्डन्तु कृत्वा विल्वफलोपमम्। दद्यात् पितामहादिभ्यो दर्भमूलात् यथाक्रमम्" इति ब्रह्मपुराणवचनात् अत्र पितामहपदं पितृपरं वचनान्तरैकवाक्यत्वात्। अत्र पिण्डमात्रस्य विल्वफलोपमत्वश्रुतेः छन्दोगपरिशिष्टे च पित्रादीन्

मातामहादीनुपक्रम्य अवनेजनवत् पिण्डान् कृत्वा बिल्व-प्रमाणकानिति श्रुतेश्च सामगयजुर्वेदिनोर्बिल्वप्रमाणकत्वम्। "पृथङ्मातामहानाञ्च केचिदिच्छन्ति सत्तमाः। त्रीन् पिण्डानानुपूर्व्वेण साङ्गुष्ठमुष्टिवन्धनान्" इति वायुपुराणीयं शाख्यन्तरीयम्। ततः षट् पिण्डान्मधु घृताभ्यां सेचयेत्। 'अभ्यज्य मधुसर्पिर्भ्यां तान् वपेत् कुशसञ्चय" इति देवलवचनात्। वपेन्निर्वपेदुत्सृजेदिति यावत् तान् पिण्डान् ततोमधुमध्विति सूत्रोक्तेन मधुसम्बन्धि मधु प्रकाशकं सन्नियोग शिष्ट प्राप्तं मधुवातेति ऋकत्रयं मधुमधुमधु च जपित्वा पितुर्नाम गृहीत्वा सगृह्योक्तविधिना पिण्डं दद्यात्। एवमेव प्रत्येकं जलस्पर्शपूर्व्वकं पितामहादिपञ्चभ्यस्तत्तदवनेजनस्थाने पिण्डान् दद्यात्। "मूलमध्याग्रदेशेषु ईषत् शक्तांश्च निर्व्वपेत्" इति छन्दोगपरिशिष्टात् ईषत् शक्तान् पिण्डानित्यर्थः।

ततो दर्भेषु करं संमार्ज्य प्रक्षाल्याचम्य हरिं स्मृत्वा पुनरवनेनिज्य अत्र पितर इति जपेदित्याह ब्रह्मपुराणम्। "ततो दर्भेषु विधिवत् सम्मार्ज्य च करन्ततः। प्रक्षाल्य च जलेनाथ त्रिराचम्य हरिं स्मरेत्। तेभ्यः संस्रवपात्रेभ्यो जलेनैवावनेजनम्। दत्त्वात्र पितरश्चेति पठेच्चोदङ्मुखस्थितः। चिन्तयंश्च पितॄं स्तुष्टान् सर्वान् भास्वरमूर्त्तिकान्। अमीमदन्त पितरस्त्विति पश्यन् धिया पठेत्"। पश्यन् प्राग्दत्तान् पिण्डानिति शेषः। यद्यपि करमार्जनादीनि पितृपक्षे उक्तानि तथापि पितृपार्व्वण एव "मातामहानामप्येवं देवपूर्वं श्राद्धं कुर्वीतेति" गोभिलसूत्रेण पितृपक्षधर्मातिदेशादेकोद्दिष्टादि श्राद्धेऽपि आवाहनादि निषेधानुपपत्त्या पार्व्वणधर्मातिदेशात् सर्व्वत्र तानि कार्य्याणि एवञ्च पार्व्वणे षट् पिण्डदानानन्तरं सामगेतराभ्युदयिकादौ नवपिण्डदानानन्तरञ्च

तन्त्रेणैव तानि कुर्य्यात् लाघवात् आग्नेयादित्रितयेषु प्रयाजादि तन्त्रतावत् किन्तु पितृपक्षास्तृतदर्भेषु करमार्जनं लेपभागिनो वृद्ध प्रपितामहादीं स्त्रीनुद्दिश्य कर्त्तव्यम्। "न्युप्य पिण्डां स्ततस्तांस्तु प्रयतो विधिपूर्वकम्। तेषु दर्भेषु तं हस्तं निमृज्याल्लेपभागिनाम्" इति। "लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः। पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम्" ॥ इति स्थानद्वयस्थ मनुवचनाभ्यां सहैकवाक्यत्वात्। तदपि दर्भाणां मूले। "दक्षिणाग्रेषु दर्भेषु पुष्पधूपसमन्वितम्। स्वपित्रे प्रथमं पिण्डं दद्यादुच्छिष्टसन्निधौ। पितामहाय चैवाथ तत्पित्रे च ततः परम्। दर्भमूले लेपभुजस्तर्पयेल्लेपघर्षणैः। पिण्डैर्मातामहां स्तद्वत्गन्धमाल्यादिसंयुतैः। प्रीणयित्वा द्विजाग्र्याणां दद्यादाचमनन्ततः"। इति विष्णुपुराणात् नचैतत् पाठक्रमान्मातामहपिण्डदानात् पूर्वं लेपघर्षणमिति वाच्यम्। "दर्भेषु मधुमध्वित्यत्त्वन्नमीमदन्तेति जपित्वा त्रीं स्त्रीन् पिण्डान् दद्यादवनेनिज्येति" गोभिलसूत्रे "दर्भेषु त्रीं स्त्रीन् पिण्डानवनेनिज्य दद्यात्" इति कात्यायन गृह्ये च त्रीं स्त्रीनिति वीप्सादर्शनात् षट् पिण्डदानमध्ये पिण्डदानेति कर्त्तव्यता व्यतिरिक्तानां निवृत्तिः प्रतीयते। अतएव पितृदयिता श्राद्ध कल्पतरुप्रभृतिषु षट् पिण्डदानामन्तरमेव करघर्षणं लिखितम्। विष्णुपुराणन्तु दर्भमूलविधायकं न तु मातामहादिपिण्डदानपूर्वकं करघर्षणक्रमविधायकम् अन्यथा प्रत्यवनेजनदानादेः प्रागपि तदुक्त ब्राह्मणाचमनापत्तेः। पुष्पधूप समन्वितपिण्डदानं शाखिभेदपरमिति। अतो मातामहपक्षे न करमार्जनम्। एकोद्दिष्टे तु लेपभुजामसम्भवेऽपि निरुद्देश्य करमार्जनाचमनहरिस्मरणानि कार्य्याणि साधारण प्रवृत्त प्रागुक्त ब्रह्मपुराण-

वचनात्। त्रिराचम्येति अत्र श्राद्धचिन्तामणिः त्रिः पिबे-दित्यदिना विहितमाचमनं तदत्र त्रिरावर्त्तते आचार प्रदोपो-ऽप्येवमिति तन्न "त्रिराचामेदपः पूर्वं द्विः प्रमृज्यात्ततोमुखम्" इति मनुवचनेन सह त्रिराचामेद्विः परिमृजीतेति गोभिलैक-वाक्यत्वात् किन्तु सकृदेव। तेभ्यः संस्रवपात्रेभ्यः पूर्वदत्ता-वनेजनसंस्रवपात्रेभ्यः। एतच्च छन्दोगेतर परम्। छन्दो-गानान्तु पिण्डपात्रप्रक्षालनेन पूर्ववदवनेजयेत्। यथा छन्दोगपरिशिष्टम्। "तत् पात्रक्षालनेनाथ पुनरप्यवनेजयेत्" अत्राप्यवनेजयेदिति श्रुतेर्द्वितीयावनेजनेति अवनेनिक्ष्वेति वक्तव्यं न तु प्रत्यवनेनिक्ष्वेति ब्रह्मपुराणे अवनेजनं दत्त्वात्र पितरश्चेति क्रमदर्शनात् गोभिल गृह्येपि निधाय जपतीत्यत्र निधायेत्यनेन पुनरवनेजनानन्तरम् अत्र पितर इत्यस्य जपो बोध्यः।

तज्जपानन्तरं कर्त्तव्यमाह गृह्ये अपपर्य्यावृत्येति अत्रा-पीत्यनेनाप्रादक्षिण्यावर्त्तेन पर्य्यावृत्य गत्वा उदगन्तं दक्षिणान्तं वा तथा च छन्दोगपरिशिष्टं "वाममावर्त्तनं केचिदुदगन्तं प्रचक्षते। सव्यं गोतम शाण्डिल्यौ शाण्डिल्यायन एव च"। गोभिल गृह्ये वामावर्त्तेन यद्गमनमुक्तं तदुत्तरादिक पर्य्यन्तं केचिद्वदन्ति गोतमादयः सव्यं दक्षिणम् अत्रापि उदगन्त-मिति वह्निदक्षिणाभिमुखान्तमित्याहुः। यद्यप्यत्र विकल्प उक्तस्तथापि बहुवादिसम्मतत्वात् प्रागुक्तत्वाच्च उदङ्मुखीभूय यथाशक्ति श्वासं विधृत्य तेनैव पथा परावर्त्तमानः पितॄन् भास्वरमूर्त्तिकान् परितुष्टान् ध्यायन् विधृतप्राणत्वेन व्यक्तज-पस्याशक्तत्वादुपांशुरूपेण अमीमदन्त इति जप्त्वा श्वासं त्यजेत्। एतदङ्गीकृतं छन्दोगपरिशिष्टेन "आवृत्तप्राणाना-यम्य पितॄन् ध्यायन् यथार्हतः। जपं स्तेनैव चावृत्य ततः

प्राणान् विमोचयेत्”। अञ्जलिकृत इति कृताञ्जलिरित्यर्थः। “गृहान् पत्नीं गृहान्नः पत्नी” इति गृह्यान्तरात् गृहान्न इति मन्त्रेण पत्नीं पश्येदित्यर्थः। पिण्डान् दत्तपिण्डान्। पूर्वस्यां कर्ष्वाम् इत्यन्वष्टकापरम्। पिण्डोपरि सूत्रदाने मन्त्रवाक्य-पूर्वकतामाह ब्रह्मपुराणम्। “एतद्वः पितरो वास इति जल्पन् पृथक् पृथक्। अमुकामुकगोत्रैतत्तुभ्यं वासः पठेत्ततः। दद्यात् क्रमेण वासांसि श्वेतवस्त्रभवा दशाः”॥ तेन वाम-हस्तोद्धृतसूत्रतन्तुं दक्षिणहस्तेन गृहीत्वा वामान्वारब्धेन एतद्वः पितरो वास इति पठित्वा गोत्राद्यभिलापपूर्वकमुत्सृज्य पिण्डे दद्यात्।

वासोदानानन्तरं पिण्डपूजादिकमाह ब्रह्मपुराणम्। “पूज-यित्वा तु पिण्डस्थान् पितॄंश्च प्रणमेदृतून्। वसन्ताय नम-स्तुभ्यं ग्रीष्माय च नमो नमः॥ वर्षाभ्यश्च शरत्संज्ञऋतवे च नमः सदा। हेमन्ताय नमस्तुभ्यं नमस्ते शिशिराय च। माससंवत्सरेभ्यश्च दिवसेभ्यो नमो नमः”॥ इति एवञ्च पिण्ड-पूजानन्तरं वसन्तायेत्यादिपाठदर्शनादनिरुद्धभट्टोक्तम् अत्र पितर इति पाठानन्तरं वसन्तायेत्यभिधानं प्रमाणशून्यम्। न च “आचम्योदक् परावृत्य त्रिरायम्य शनैरसून्। षड्तूंश्च नमस्कुर्य्यात् पितॄनेव च मन्त्रवत्”॥ इति मनुवचनं प्रमाणम् उदङ्मुखो भूत्वा यथाशक्ति प्राणायामत्रयं कृत्वा वसन्तायेत्या-दिना षड्तून् नमस्कुर्य्यादिति कुल्लूकभट्टेन तद्व्याख्यातत्वादिति वाच्यम् उदक् परावृत्य मन्त्रवदित्यनेन याजुर्वेदिक “नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे” इति मन्त्रस्थरसशोषजीवस्वधाघोरमन्यु-शब्दाभिधेयान् वसन्त-ग्रीष्म-वर्षा-शरद्धेमन्तशिशिररूपान्

ब्राह्मणसर्वस्वे हलायुधेन व्याख्यातान् षड्ऋतून् पितृरूपानेव नमस्कुर्य्यादित्येकस्मिन्नेवान्वये मनुवचनस्य सामगेतरपरत्वात्। गोभिलगृह्ये अत्र पितरो अमीमदन्तेति मन्त्रयोर्मध्ये ऋतु-नमस्कारस्याश्रुतत्वात् तत्परिशिष्टेऽपि प्रागुक्तवाममावर्त्तन-मिति आवृत्य प्राणानायम्येति वचनाभ्यामप्यावर्त्तने विशेष उक्तः न तु वसन्तायेत्यस्य पाठ इति ततश्च छन्दोगानां क्वापि ऋतुनमस्कारस्यानुपदेशात् पिण्डपूजानन्तरस्यानियतस्य पौराणिकस्य वसन्तायेत्यस्य पाठो मैथिलाद्युक्तो ग्राह्यः। अस्मात् क्रमपक्षेऽपि तद्विरुद्धक्रमानभिधानात् मनुवचनस्यावि-रोधाच्च।

पूजने तूष्णीं गन्धादिनिक्षेपमाह छन्दोगपरिशिष्टं "गन्धादि-निक्षिपेत्तूष्णीं तत आचामयेत् द्विजान्"। अत्राचमनं पित्रादिब्राह्मणानां प्रथमतः पश्चाद्वैश्वदेवब्राह्मणानां कारयि-तव्यम्। तथाच विष्णुधर्मोत्तरे। "वैश्वदेवोपरिष्टानां चरमं हस्तधावनम्। विसर्ज्जनञ्च निर्दिष्टं तेषु रक्षा यतः स्मृता"॥ अत्र हस्तधावनम् आचमनम् उदङ्मुखेष्वाचमनं दत्त्वा प्राङ्मु-खेषु दद्यादिति देवलवचनैकवाक्यत्वात्। एतच्च न कुशमय-ब्राह्मणपक्षे अयोग्यत्वात् अत्र ब्रह्मपुराणेन पिण्डस्थपितृपूजा-नन्तरं वसन्तायेति पाठ उक्तः छन्दोगपरिशिष्टेन तु पिण्डस्थ-पितृपूजानन्तरं ब्राह्मणायाचमनदानमुक्तं यद्यप्यनयोः पौर्वा-पर्य्यं साक्षात् केनापि नोक्तं तथापि आचान्तेषूदकपुष्पा क्षता-क्षय्योदकञ्च दद्यात्" इति गोभिलकात्यायनसूत्रोक्ताचमना-नन्तरजलादिदानाव्यवधानाय वसन्तायेत्यादिपाठानन्तरमाच-मनं प्रतीयते। अत्रोदकादिदाने विशेषमाह छन्दोगपरि-शिष्टम् "अथाग्रभूमिमासिञ्चेत् सुसम्प्रोक्षितमस्त्विति। शिवा आपः सन्त्विति च युग्मानेवोदकेन च॥ सौमनस्यमस्त्विति

च पुष्पदानमनन्तरम्। अक्षतञ्चारिष्टञ्चास्त्वित्यक्षतान्यपि दापयेत्॥ अक्षय्योदकदानन्तु अर्घ्यदानवदिष्यते। षष्ठ्यैव नित्यं तत् कुर्य्यान्न चतुर्थ्यां कदाचन"॥ अग्रभूमिं ब्राह्मणस्य तत आचामयेत् द्विजान् इत्यनेनोपस्थितत्वात् एतच्च भूमि-सेचनं सकृदेव कर्त्तव्यं शिवा आप इत्यादिना जलादिदानन्तु दैवपूर्वं ब्राह्मणेषु कर्त्तव्यं ब्राह्मणसम्बन्धिप्राप्तानां कर्म्मणां वैश्वदेवपूर्वं कर्त्तव्यत्वाभिधानात्। तथाच देवलः "यत्र यत् क्रियते कर्म्म पैतृके ब्राह्मणान् प्रति। तत्सर्वं तत्र कर्त्तव्यं वैश्वदैवत्यपूर्वकम्"॥ युग्मानैवेत्याभ्युदयिके अन्यत्र ब्राह्मण-मात्रमासिञ्चेदिति अक्षता यवाः। "अक्षतास्तु यवाः प्रोक्ता भृष्टाधाना भवन्ति ते"॥ इति भट्टभाष्यधृतवचनात्। अर्घ्य-वदित्यतिदेश आभ्युदयिके ज्येष्ठोत्तरकरत्वप्राप्त्यर्थो न तु तन्त्रतानिवृत्त्यर्थः। "अर्घ्येऽक्षय्योदके चैव पिण्डदानेऽवने-जने। तन्त्रस्य विनिवृत्तिः स्यात् स्वधावाचन एव च"॥ इति वचनात्। एवञ्च षष्ठ्यैवेत्यनेन "गोत्रनामभिरामन्त्र्य पितॄ-नर्घ्यं प्रदापयेत्" इत्यनेन गोत्रादौ प्राप्तायाः सम्बुद्धेर्नान्दी-मुखेभ्यस्वाक्षय्यमिदमस्त्विति संजपन् इति ब्रह्मपुराणोक्त-प्राप्यन्तरीयचतुर्थ्याश्च परास्तता। एतच्च "गोत्रं स्वरान्तं सर्वत्र गोत्रस्याक्षय्यकर्म्मणि" इत्यादि प्रागुक्तगोभिलवचनत्रये चाक्षय्य-कर्म्मणि गोत्रस्येति पितुरिति धर्म्मेण इत्यभिधानात् व्यक्तं ततश्च न चतुर्थ्यां कदाचनेति पिण्डपितृयज्ञवदुपचार इत्यति-देशेन प्राप्तस्य "ये चात्र त्वामनुयांश्च त्वमनु तस्मै ते स्वधा" इति चतुर्थीयुक्तस्य मन्त्रस्य निषेधः। गोभिलः। "अघोराः पितरः सन्तु सन्त्वित्युक्ते गोत्रं नो वर्द्धतां वर्द्धतामित्युक्ते स्वधानिनय-नीयान् दर्भान् सपवित्रानास्तीर्य्य स्वधां वाचयिष्ये इति पृच्छति वाच्यतामित्यनुज्ञातः पितृभ्यः स्वधोच्यतां पितामहेभ्यः

प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च स्वधोच्यताम् इति "अस्तु स्वधेत्युक्ते स्वधानिनयनीयान् वारिधारां दद्यात् ऊर्जं वहन्तीरित्यपो निषिञ्चतीति"। न च सव्येनाघोराः पितरः सन्त्विति दक्षिणां दिशं मनसाकाङ्क्षन् पूर्वाभिमुखः पठेदिति कृत्यप्रदीपः। "दत्त्वाशीः प्रतिगृह्णीयात् द्विजेभ्यः प्राङ्मुखो बुधः। अघोराः पितरः सन्तु सन्त्वित्युक्ताः स तैः पुनः"॥ इति मत्स्यपुराणवचनेन "दक्षिणां दिशमाकाङ्क्षन् याचेतेमान् वरान् पितॄन्" इत्यादि मनुवचनैकवाक्यत्वं तत्र प्रमाणमिति वाच्यम्। "पिण्डपितृयज्ञवदुपचारः इति गोभिलसूत्रेण वैश्वदेवकर्मातिरिक्ते दक्षिणामुखत्वप्रतीतेः। "दक्षिणां दिशमाकाङ्क्षन्" इति मनुवचनस्य तथार्थत्वे प्रमाणाभावाच्च। अतएव दक्षिणां दिशमाकाङ्क्षन्निति वीक्ष्यमाण इति टीकाकारैर्व्याख्यातम्। मनुना आकाङ्क्षन् इत्यनन्तरं दातार इति पठितं न तु अघोराः पितरः सन्त्विति। मत्स्यपुराणेऽपि अक्षय्योदकदानानन्तरं दत्त्वेति न पठितम्। किन्तु "ततः स्वधा वाचनिकं वैश्वदेवेषु चोदकम्" इत्यनन्तरं दत्त्वाशीरित्यर्द्धं पठित्वा "अघोराः पितरः सन्तु सन्त्वित्युक्ताः पुनर्द्विजैः। गोत्रञ्चो वर्द्धतामस्तु तथेत्युक्ताः स तैः पुनः। दातारो नोऽभिवर्द्धन्तामन्नञ्चैवेत्युदीरयेत्"॥ इत्येव पठितं ततः शाखिविशेषे तादृक् क्रमकर्म्मणि प्राङ्मुखत्वं न तु गोभिलाद्युक्तकर्म्मणि। अतएव पितृदयितादावाशीः प्रार्थने प्राङ्मुखत्वं नाभिहितम्। स्वधानिनयनीयान् स्वधावाचनमात्रार्थान् न तु कृतप्रयोजनान्तरान्। ततश्च नारायणोपाध्यायशूलपाणिप्रभृतिभिर्यदर्घ्यसम्बन्धि पवित्रमात्रास्तरणमुक्तं तत् प्रमाणशून्यम्। कुशान्तरास्तरणरहितत्वेन सूत्रविरुद्धञ्च अन्यथा पिण्डरेखापि अर्घ्यसम्बन्धिपवित्रेण कथं न स्यादिति।

अतएव भट्टनारायणानिरुद्धभट्टकुल्लूकभट्टकर्कहरिशर्म्मप्रभृतिभिर्मैथिलैश्च सपवित्रकुशास्तरास्तरणमुक्तं तत्वप्य सम्बन्धिपवित्रमात्रास्तरणमिति । स्वधानिनयने स्वधावाचने कृत इति शेष इति एतच्च प्रागुक्तसव्येन पाणिना उदकपात्रं गृहीत्वेति गृहीतवारिधारादानस्य स्वधावाचनानन्तरत्वविधायकं लाघवात् न तु वारिधारादानानन्तरविधायकं गौरवात् एतद्व्यक्तीकृतं छन्दोगपरिशिष्टे । "प्रार्थनासु प्रतिप्रोक्ते सर्वास्वेव द्विजोत्तमैः । पवित्रान्तर्हितान् पिण्डान् सिञ्चेदुत्तानपात्रकृत्" ॥ इति भट्टनारायणचरणैरपि सव्येनैव पाणिनोदकपात्रं गृहीत्वेति सूत्रस्य व्याख्याने एतच्च परिषेचनमाचम्य ब्राह्मणेष्वाचान्तोदकेषु अग्रभूमिमासिञ्चेत् सुप्रोक्षितमस्त्वित्येवं स्वधावाचनं कृत्वोत्तानं पितृपात्रं कृत्वा पवित्राणि च पिण्डानामुपरि दत्त्वा कुर्य्यात् तथाच प्रार्थनासु प्रतिप्रोक्ते इति व्याख्यानं कृत्वा मैथिलैरप्येवं लिखितम् । एवञ्च वासोदानानन्तरं यथा श्रुतगोभिलगृह्यदर्शनात् पितृदयितायां यत् परिषेचनमुक्तं तदेयम् । एवं छन्दोगपरिशिष्टेन अस्तु स्वधेत्यनन्तरकर्त्तव्यत्वाभिधानात् तदनन्तरं गृह्योक्तं पत्नैर भक्षणार्थं पिण्डदानं न तु स्वधावाचनस्य प्राक् तथा सति पितामहपिण्डे स्वधावाचनं न स्यादिति बोध्यं तत्र विशेषयतः शङ्खलिखितौ "पत्नी वा मध्यमं पिण्डमश्नीयादार्त्तवस्नातेति" यमः "पत्नी वा मध्यमं पिण्डं ततः प्राश्नीत वाग्यता" । मत्स्यपुराणे "पत्नीन्तु मध्यमं पिण्डमाशयेद्विनयान्विताम् । आधत्त पितरो गर्भं मन्त्रः सन्तानवर्द्धनम्" ॥ एषमन्त्रः पौराणिकत्वात् साधारणः । अत्रोत्तानपात्रकृदिति यथाश्रुतदर्शनात् परिषेचनकर्त्तृविशेषणतया भट्टेन यद्व्याख्यातं तद्गोभिलश्राद्धसूत्रादर्शनात् तथाच प्रागुक्तपरिषेचनसूत्रानन्तरं गोभिलः । "उत्तानं पात्रं

कृत्वा यथाशक्ति दक्षिणान्दद्यादिति" एवमेवाभिरुद्धभट्टप्रभृतिभिर्लिखितम् ।

दक्षिणायां पितृपूर्वकतामाह विष्णुपुराणम् । पितॄन् मातामहानुपक्रम्य "पिण्डैर्मातामहांस्तद्वद्गन्धमाल्यादिसंयुतैः । पूजयित्वा द्विजाग्र्याणां दद्यादाचमनन्ततः ॥ पितृभ्यः प्रथमं भक्त्या तन्मनस्को नरेश्वर । सुस्वधेत्याशिषा युक्तां दद्याच्छक्त्या च दक्षिणाम्" ॥ द्विजाग्र्याणां विश्वदेवपितृमातामहपक्षत्रयश्राद्धभोक्तॄनां ब्राह्मणानां मध्ये पितृभ्यः पितृपक्षब्राह्मणेभ्यः प्रथममाचमनं दक्षिणाञ्च दद्यात् अतएव वैश्वदेवोपरिष्टानां चरमं हस्तधावनम् इत्युक्तम् । तथा "ब्राह्मणे दक्षिणा देया यत्र या परिकीर्त्तिता । कर्मान्तेऽनुच्यमानायां पूर्णपात्रादिका भवेत्" ॥ इति छन्दोगपरिशिष्टवचनेन दक्षिणादानस्य कर्मान्तताविधानात् श्राद्धमुपक्रम्य "दैवाद्यन्तं तदीहेत पित्राद्यन्तं न तद्भवेत् । पित्राद्यन्तन्त्वीहमानः क्षिप्रं नश्यति सान्वयः" ॥ इति मत्स्यपुराणेऽपि श्राद्धकर्मणोप्यन्तकर्मत्वेन प्राप्तस्य दक्षिणादानस्य दैवान्ततानुरोधेन पित्रादित्वमुक्तं श्राद्धविवेकोऽप्येवं सुस्वधेति शाख्यन्तरीयम् । अत्र दक्षिणाया नाचमनाव्यवहितोत्तरत्वं किन्तु आचमनानन्तरं न्युब्जोत्तानान्तं कर्म विधाय कर्त्तव्यत्वं प्रागुक्तोत्तानपात्रं कृत्वेत्यादि गोभिलसूत्रात् । एतेन दक्षिणाया दैवपूर्वकत्वं मैथिलोक्तं हेयम् ।

आशीःप्रार्थनामाह गोभिलः । "विश्वेदेवाः प्रीयन्तामिति दैवे वाचयित्वा दातारो नोऽभिवर्द्धन्तां वेदः सन्ततिरेव च । श्रद्धा च नो माव्यगमद्बहुदेयञ्च नोऽस्त्विति । अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि याचितारश्च नः सन्तु मा च याचिष्म कञ्चन । अन्नं प्रवर्द्धतां नित्यं दाता शतं जीवतु येभ्यः सङ्कल्पिता द्विजा स्तेषामक्षया तृप्तिरस्तु एताः सत्या आशिषः

सन्त्विति वाजे वाजे वत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञा अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देव यानैः इत्येतया विसृज्य "आमावाजस्य प्रसवो जगम्यादेमे द्यावा पृथिवी विश्वरूपे आमागन्तु पितरा मातरा युवमामा सोमोऽमृतत्वाय गम्यात्" इत्येतयानुव्रज्य प्रदक्षिणीकृत्याभिवाद्य वामदेव्यं गीत्वा प्रविशतीति दैवे देवपक्षेऽर्थात् उदङ्मुखः विश्वे देवाः प्रीयन्तामिति वाचयित्वा प्रीयन्तामिति प्रतिवचनं गृहीत्वा दातार इत्यादिना एताः सत्या आशिषः सन्त्वित्यन्तेन आशिषः प्रार्थयेत्। वेदस्याध्ययनाध्यापन-तदर्थावबोध रूपतदर्थानुष्ठानैर्वृद्धिमेतु। इति याज्ञवल्कीयदीपकलिकायां व्याख्यानाद्वेद इत्येव पाठो न तु वेदा इति ततः सन्त्विति प्रतिवचनादाशिषः प्रतिगृह्य देवताभ्य इत्यस्यान्ते पठनीयत्वेन विसर्जनात् पूर्वं त्रिःपठेत् पितृदयितायामप्येवं ततो वाजे वाज इत्यनेन कुशाग्रेण विसर्जयेत्। "ततस्तानग्रतः कृत्वा प्रतिगृह्योदपात्रिकां वाजे वाज इति जपन् कुशाग्रेण विसर्जयेत्। वहिः प्रदक्षिणीकृत्य पादानष्टावनुव्रजेत्"॥ इति मत्स्यपुराणात् एतच्च विसर्जनं ब्राह्मणस्य पितॄणां मन्त्रलिङ्गात्। येषामावाहनन्तेषामेव विसर्जनस्य युक्तत्वाच्च। अतएवामावेत्यनेन प्रदक्षिणीकरणाभिवादनमपि ब्राह्मणस्य पितॄणामिति एतेनापार्वणश्राद्धे विसर्जनाद्यभावो मित्राद्युक्तो हेयः। तत आमावेत्यनेनानुव्रज्य प्रदक्षिणी-कृत्याभिवादयेत्। दर्भमयब्राह्मणमादाय श्राद्धे श्राद्धीयद्रव्यं ब्राह्मणाय प्रतिपादयेत्। तदभावेऽग्नौ जले वा क्षिपेत्। "यद्येकं भोजयेत् श्राद्धे दैवं तत्र कथं भवेत्। स्तोकं स्तोकं समुद्धृत्य सर्वस्य प्रकृतस्य च॥ देवतायतने कृत्वा ततः श्राद्धं प्रवर्त्तयेत्। तदन्नं प्रक्षिपेदग्नौ दद्याद्वा ब्रह्मचारिणे"॥ इति वशिष्ठोक्तेः "ब्राह्मणस्य च

यद्देयं सान्वयस्य न चास्ति सः । सकुल्ये तस्य निनयेत् तदभावेऽस्य बन्धुषु ॥ यदा तु न सकुल्यः स्यान्न च सम्बन्धि बान्धवाः । यद्यात् सजातिशिष्येभ्यस्तदभावेऽप्सु निक्षिपेत्"॥ इति दानकाण्डकल्पतरुधृतनारदवचनेन ब्राह्मणदेयस्य ब्राह्मणाभावे जलप्रक्षेपोक्तत्वाच्च वामदेव्यं गीत्वा गानाशक्तौ कयान इत्यानि त्रिः पठेत् । ततः कर्म्ममात्र प्रामाच्छिद्रावधारणं कुर्य्यात् । तथा च शातातपपराशरौ । "आच्छिद्रमिति यद्वाक्यं वदन्ति क्षितिदेवताः । प्रणम्य शिरसा ग्राह्यमग्निष्टोमफलैः समम्" ॥ क्षितिदेवता विप्राः । अग्निष्टोमफलैः सममिति स्तुतिः । विष्णुः । यद्ब्राह्मणास्तुष्टतमा वदन्ति तद्देवताः कर्मभिराचरन्ति । तुष्टेषु तुष्टाः सततं भवन्ति प्रत्यक्षदेवेषु परोक्षदेवाः" ॥ ततः साङ्गतार्थं विष्णुं स्मरेत् । "प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादि श्रुतिः ॥ तद्विष्णोरिति मन्त्रेण मज्जेदप्सु पुनः पुनः । गायत्री वैष्णवी ह्येषा विष्णोः संस्मरणाय वै" ॥

तदनन्तरं दक्षिणपाणिना दीपप्रच्छादनमाह देवलः । "निवृत्ते पितृमेधे तु दीपं प्रच्छाद्य पाणिना । आचम्य पाणी प्रक्षाल्य ज्ञातीन् शेषेण भोजयेत्" ॥ पाणीप्रक्षाल्याचम्य इत्यन्वयः । "ततो ज्ञातिषु भुक्तेषु स्वान् भृत्यानपि भोजयेत् । पश्चात् स्वयञ्च पत्नी च श्राद्धशेषमुदाहरेत्" ॥ निवृत्ते वामदेव्यगानान्ते प्रच्छाद्य आच्छाद्येति पारिजातकल्पतरौ । न निर्वापयेत् दर्शनात् "दीपनिर्वापणात् पुंसः कुष्माण्डच्छेदनात् स्त्रियाः । अचिरेणैव कालेन वंशनाशो भवेत् ध्रुवम्" ॥ इति नव्यवर्द्धमानधृतात् । "दीपनिर्वापकोऽन्धः स्यात्" इति मनुवचनाच्च उदाहरेत् अभ्यवहरेत् एष रागप्राप्तत्वान्न विधिः

किन्तु नियमः। तथा च श्राद्धशेषमुपक्रम्यापस्तम्बः। सर्व्वस्मादन्नाग्रासावरार्द्धमश्नीयादिति" ग्रासावरार्द्धं ग्रास एव अवरो निकृष्टकोटिर्यस्य स तथा अनियमत्वे सर्व्वस्मादिति श्राद्धशेषविशेषणं व्यर्थं स्यात्। व्यक्तं शिवरहस्ये। श्राद्धं कृत्वा तु यः शेषं नान्नमश्नाति मन्दधीः। लोभान्मोहाद्भयाद्वापि तस्य तन्निष्फलं भवेत्"॥ लोभात् द्रव्यान्तरस्येति शेषः। अत्र लोभादित्यभिधानादेवोपवासादौ न नियमः। तत्र प्रमाणमाहुः वराहपुराणविष्णुधर्मोत्तरकात्यायनाः। "उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत्। उपवासं तदा कुर्य्यादाघ्राय पितृसेवितम्"॥ एवञ्च "यत्किञ्चित् पच्यते गेहे भक्ष्यं भोज्यमथापि वा। अनिवेद्य न भुञ्जीत पिण्डमूले कथञ्चन"॥ इति शङ्खोक्तं न तच्छ्राद्धशेषेतरभोजनव्यावर्त्तकम्। किन्तु यत् किञ्चिदिति श्राद्धार्थत्वेन विशेषणीयमन्यथा श्राद्धे प्रतिषिद्धद्रव्याणां भक्ष्यत्वं न स्यात् तेन श्राद्धार्थं पक्वं तच्च न दत्त्वा न भक्ष्यमिति तस्यार्थः। शातातपः। "श्राद्धं कृत्वा परश्राद्धे भुञ्जते ये च विह्वलाः। पतन्ति नरके घोरे लुप्तपिण्डोदकक्रियाः"॥ विह्वला लोलुपाः। विष्णुपुराणम्। "वर्ज्यानि कुर्व्वता श्राद्धं कोपोऽध्वगमनं त्वरा। भोक्तुरप्यत्र राजेन्द्र एव मेतत् न शस्यते"॥ स्मृतिः। "द्यूतञ्च कलहञ्चैव सायं सन्ध्यां दिवा शयम्। श्राद्धकर्त्ता च भोक्ता च पुनर्भुक्तञ्च वर्जयेत्"॥ राजमार्त्तण्डे "पुनर्भोजनमध्वानं द्यूताध्ययनमैथुनम्। दानं प्रतिग्रहं सन्ध्यां श्राद्धं कृत्वाष्ट वर्जयेत्"॥ नव्यवर्द्धमानधृता स्मृतिः। "पुनर्भोजनमध्वानं भाराध्ययनमैथुनम्। दानं सन्ध्यां पुनः स्नानं श्राद्धं कृत्वाष्ट वर्जयेत्"॥ अध्वानं अध्वगमनं क्रोशात् परं न कार्य्यम् "अध्वगमनमाक्रोशपूरणमिति" हारीतवचनात् मैथुनम् ऋतुकालीनमपि

न कार्य्यम् । तथा च श्राद्धानन्तरं शङ्खलिखितौ । "ऋतुस्नातां दद्यहोरात्रं परिहरेदिति" दानं याचितान्नाद्यतिरिक्तस्य "वन्दिभ्यश्चैव मर्थिभ्योऽन्नार्थिभ्योऽन्नमर्थितः । यदि तत्र न दद्यात्तु विफलं शक्तितो भवेत्" ॥ वन्दिनो वीर्य्यस्तोतारः अर्थिनः सन् यदि एभ्योऽन्नं न दद्यात् तदा श्राद्धं विफलं भवेदित्यर्थः । सूताः पौराणिकाः प्रोक्ताः मागधा वंशशंसकाः । वन्दिनस्त्वमलप्रज्ञाः प्रस्तावसदृशोक्तयः" ॥ इत्युक्तेः । इत्यस्य श्राद्धोत्तरदाननिषेधात् श्राद्धे वन्दिप्रभृतिभ्यो दानाकरणे निन्दाश्रवणाच्च श्राद्धात् पूर्वं तदर्थं भोज्यादिकमुत्सृजेत् । वायुपुराणे । "अध्वनीनो भवेदश्वः पुनर्भोजी च वायसः । होमकृन्नेत्ररोगी स्यात् पाठादायुः प्रहीयते । दानं निष्फलतामेति प्रतिग्राही दरिद्रताम् । कर्मकृज्जायते दासो मैथुनी शूकरो भवेत्" ॥ कर्माच भारोद्वहनादिकम् । मत्स्यपुराणम् । "रतिशक्तिः स्त्रियः कान्ता भोज्यं भोजनशक्तिता । दानशक्तिः सविभवा रूपमारोग्यसम्पदः । श्राद्धपुष्पमिदं प्रोक्तं फलं ब्रह्मसमागमः" ॥ पुष्पं तद्दल्पं फलं तद्वन्महत् ।

श्राद्धानन्तरं बलिवैश्वदेवावाह भविष्यपुराणम् । "कृत्वा श्राद्धं महाबाहो ब्राह्मणांश्च विसृज्य च । वैश्वदेवादिकं कर्म्म ततः कुर्य्यान्नराधिप" ॥ पार्वणानन्तरं नित्यश्राद्धे विकल्प उक्तो मार्कण्डेयपुराणे "नित्यक्रियां पितॄणान्तु केचिदिच्छन्ति सत्तमाः । न पितॄणां तथैवान्ये शेषं पूर्ववदाचरेत्" ॥ न पितॄणामित्यावश्यकत्वनिषेधपरमिति व्यवस्था नित्यश्राद्धप्रमाणप्रयोगावाह्निकतत्त्वेऽनुसन्धेयाविति ।

अथ जीवत्पितृकश्राद्धम् । पारस्करः । "पित्रादित्रिषु जीवत्सु श्राद्धं न कर्त्तव्यं अत्र षसां पुरुषाणां मध्ये यो यो जीवति तं विहाय पुरुषान्तरमादाय श्राद्धं कर्त्तव्यम् । मातामहादित्रिषु

जीवत्सु पितादित्रिकमातृश्राद्धं कर्त्तव्यम्"। तथाच विष्णुः। "पितरि जीवति यः श्राद्धं कुर्य्यात् पिता येषां कुर्य्यात् तेषां कुर्य्यात् पितरि पितामहे च जीवति पितामहो येषां कुर्य्यात् तेषां कुर्य्यात् पितरि पितामहे प्रपितामहे च जीवति नैव कुर्य्यात्। यस्य पिता प्रेतः स्यात् सपित्रे पिण्डं निधाय प्रपितामहात् परं द्वाभ्यां दद्यात्। यस्य पिता पितामहश्च प्रेतौ स्यातां स ताभ्यां पिण्डौ दत्त्वा पितामहपितामहाय दद्यात् यस्य पितामहः प्रेतः स्यात् स तस्मै पिण्डं निधाय प्रपितामहात् परं द्वाभ्यां दद्यात्। यस्य पिता प्रपितामहश्च प्रेतौ स्यातां स पित्रे पिण्डं निधाय पितामहात् परं द्वाभ्यां दद्यात्। मातामहानामप्येवं श्राद्धं कुर्य्यात् विचक्षणः"। इति विष्णु पितृपितामहप्रपितामहेषु यस्य पिता प्रेत इति सावधारणोऽयं निर्देशः। तेन त्रयाणां मध्ये पितैव मृतो न तु पितामहप्रपितामहौ। द्वाभ्यां वृद्धप्रपितामहातिवृद्धप्रपितामहाभ्यां पितामहपितामहायेति कर्त्तुर्वृद्धप्रपितामहायेत्यर्थः; पितामहः प्रेतः स्यादिति साधारणो निर्देशः। अर्थात् पितृप्रपितामहौ न मृतौ द्वाभ्यां वृद्धप्रपितामहातिवृद्धप्रपितामहाभ्यां एतत् पक्षस्येदानीं पार्व्वणे तथा नाचरणादाभ्युदयिकादौ तथा व्यवहारः पिता प्रपितामहश्च प्रेतावित्यनेन पितामहो जीवतीत्यवगम्यते। द्वाभ्यां प्रपितामहवृद्धप्रपितामहाभ्याम् एवं मातामहपक्षेऽपि विशेषस्तु पितरि मृते मातामहादित्रयाणामन्यतममरणेऽपि पार्व्वणाचारः।

अथ पार्व्वणस्य प्रतिमासकर्त्तव्यत्वम्। अत्र मार्कण्डेयपुराणम्। "कार्य्यं श्राद्धममावास्यां मासि मास्युडुपक्षये"। यन्मासि मासि कार्य्यम्। पितॄनुपक्रम्य "मासि मासि वोऽशनम्" इति श्रुतेः। एतच्च श्राद्धं चन्द्रक्षयेऽमावास्यां प्राप्यातिशस्तम्।

अपरपक्षे "यद्दहः सम्पद्यतेऽमावास्यान्तु विशेषण" इति निगमवचनैकवाक्यत्वात्। अन्यतिथावपि श्राद्धमाह गोभिलः। "अथ श्राद्धममावास्यायां पितृभ्यो दद्यात् पञ्चमीप्रभृति वा परपक्षस्य यथा श्राद्धं सर्वस्मिन् वा द्रव्यदेशब्राह्मणसन्निधौ वा कालनियमः शक्तित इति"। योऽयममावास्यादिकालनियमः सशक्तस्य सद्रव्यस्यारोगिणो बोध्यव्य इति श्राद्धविवेकः। तत्र चतुर्दशीवर्जनमाह मनुः। "कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम्। श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः"॥ यत्तु "अमावास्याष्टकाकृष्णपक्षपञ्चदशीषु च" इत्यभिधाय "एतच्चानुपनीतोऽपि कुर्य्यात् सर्वेषु पर्वसु। श्राद्धं साधारणं नाम सर्वकामफलप्रदम्। भार्य्याविरहितोऽप्येतत् प्रवासस्थोऽपि नित्यशः। शूद्रोऽप्यमन्त्रवत् कुर्य्यात् अनेन विधिना बुध"॥ इति मत्स्यपुराणम्। तत्रानुपनीतोऽपीत्यपि शब्देनोपनीतः समुच्चीयते। तत्रानुपनीतस्य अजाताग्नेरुपनीतस्य च साग्नेः सम्भवात्तयोः "न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः" इति मनुवचनात् कृष्णपक्षीयश्राद्धस्यामावास्यायामेव विधानात्तदेकवाक्यतया मत्स्यपुराणे नित्यश इत्यनेनामावास्यायान्नित्यत्वाभिधानं तत् साग्निपरम्। कृष्णपक्षस्य नित्यत्वाभिधानन्तु साग्निभिन्नस्य योग्यत्वात् तत् प्रागेव व्याख्यातम् एवमन्यानि वचनानि व्याख्येयानि।

अथ मलमासे सपिण्डनोत्तरश्राद्धनिषेधः। तत्र लघुहारीतः। "सपिण्डीकरणादूर्द्धं यत् किञ्चित् श्राद्धिकं भवेत्। इष्टं वाप्यथवा पूर्त्तं तन्न कुर्य्यान्मलिम्लुचे"। श्राद्धमेव श्राद्धिकं स्वार्थे ठक् इति श्राद्धविवेकः। इष्टं यागादिपूर्त्तं खातादि। ज्योतिषे। "रविणा लङ्घितो मासश्चान्द्रः ख्यातो मलिम्लुचः। तत्र यद्विहितं कर्म्म उत्तरे मासि कारयेत्" इति। चान्द्रः

शुक्लप्रतिपदादिदर्शान्तः "चान्द्रः शुक्लादिदर्शान्तः सावनस्त्रिंशतादिनैः । एकराशौ रविर्यावत् कालं मासः सभास्करः" ॥ इति वचनात् स मासो रविणा लङ्घितस्तत्र राश्यन्तरसंयोगाभावे नातिक्रान्तो मलिम्लुचो भवति । तथा "असंक्रान्तमासोऽधिमासः स्फुटः स्याद्विसंक्रान्तमासः क्षयाख्यः कदाचित्" इति असंक्रान्तमासो मलमासः तत्र तस्य वैशाखादित्वेन यद्विहितं कर्त्तुमुचितं तत् प्रकृतवैशाखादौ कर्त्तव्यम् । अत्र सपिण्डीकरणान्तस्य कर्त्तव्यत्वमाह लघुहारीतः । "असंक्रान्तेऽपि कर्त्तव्यमाब्दिकं प्रथमं द्विजैः । तत्रैव मासिकं पूर्वं सपिण्डीकरणान्तथा" ॥ आब्दिकं सपिण्डीकरणम् । तत्रैव असंक्रान्त एव रवौ । सपिण्डीकरणात् पूर्वं मासिकं कर्त्तव्यं तथाच सपिण्डीकरणमिति पञ्चम्यर्थे प्रथमा । पूर्वपदं सपिण्डनोत्तरपार्वणाख्यमासिकश्राद्धनिषेधार्थम् । यत्तु "जातकर्म्मणि यत् श्राद्धं दर्शश्राद्धं तथैव च । मलमासेऽपि तत् कार्य्यं व्यासस्य वचनन्तथा" ॥ इति तत् पिण्डपितृयज्ञाख्यश्राद्धपरम् । "इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः । अग्नीसोमौ स्मृतौ मध्ये समासौ पितृसोमकौ ॥ तमतिक्रम्य तु रविर्यदागच्छेत् कथञ्चन । आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्रकृतः स्मृतः" ॥ इति लघुहारीतवचनाभ्यामेकवाक्यत्वात् । तथाहि शुक्लप्रतिपदि इन्द्राग्नीयागः । कृष्णप्रतिपदि अग्नीसोमयागः । एतौ दर्शपौर्णमासान्तर्गतौ पितृविशिष्टसोमदेवताकोऽग्नौ करणहोमः पिण्डपितृयज्ञाङ्गभूतो दर्शे विहितः । मासादिसमाप्तिकीर्त्तनात् शुक्लप्रतिपदादिदर्शान्तो मासशब्दार्थः तं पिण्डपितृयज्ञाख्यश्राद्धयुक्तं मासमतिक्रम्य रविर्यदा गच्छेद्राश्यन्तरसंयोगमियात् तदाद्यो मलिम्लुचः । द्वितीयः प्रकृतः शुद्धः कर्म्मार्हः इति यावत् । ततश्च एकवाक्यत्वानु-

रौधेन मलमासेऽपि लघुहारीतवचनबोधितपिण्डपितृयज्ञाख्य-श्राद्धमात्रविधायकं व्यासवचनं नत्वन्वाहार्य्याख्यश्राद्धविधायकं तस्य प्रागुक्तेन वक्ष्यमाणवचनाभ्याञ्च निषेधात् प्रपञ्चितमेतन्मलमासतत्त्वे तथाच समयप्रकाशे कुथुमिः । “संवत्सरातिरिक्तो वै मासो यः स्यात् त्रयोदश । तस्मिंस्त्रयोदशे श्राद्धं न कुर्य्यादिन्दुसंक्षये” ॥ संवत्सरप्रदीपे । “एकराशिस्थिते सूर्य्ये यदि दर्शद्वयं भवेत् । दर्शश्राद्धं तदादौ स्यात् न परत्र मलिम्लुचे” ॥

अथ प्रतिमासपार्वणाशक्तस्य कर्त्तव्यत्वमाह मत्स्यपुराणम् । “अनेन विधिना श्राद्धं त्रिरब्दस्येह निर्वपेत् । कन्याकुम्भवृषस्थेऽर्के कृष्णपक्षेषु सर्वदा” ॥ अत्र सौरेण वाक्यम् । राश्युल्लेखेन विहितत्वात् । श्राद्धत्रयाशक्तस्य कन्यास्थरवौ श्राद्धं कर्त्तव्यं तथाच भविष्यपुराणम् । “हंसे वर्षासु कन्यास्थे शाकेनापि गृहे वसन् । पञ्चम्या उत्तरे दद्यादुभयोर्वंशयोर्ऋणम् ॥ सूर्य्ये कन्यास्थिते श्राद्धं यो न कुर्य्याद् गृहाश्रमी । कुतस्तस्य धनं पुत्राः पितृनिश्वासपीड़नात्” ॥ हंसे सूर्य्ये । ऋणमिव ऋणं पितृमातृकुलस्येदमवश्यं परिशोध्यमित्यर्थः । अत्राप्यशक्तौ तुलार्के । यथा ब्रह्मपुराणम् । “यावच्च कन्यातुलयोः क्रमादास्ते दिवाकरः । तावच्छ्राद्धस्य कालः स्यात् शून्यं प्रेतपुरं तदा” ॥ यावच्च कन्यातुलयो रविरास्ते तावच्च क्रमाच्छ्राद्धस्य कालः कन्यास्थार्काकरणे तुलार्के कर्त्तव्यम् । अन्यथा रविस्थितिक्रमस्य प्राप्तत्वेनानुवादापत्तेः । तुलार्केऽप्यमावास्यायामतिप्राशस्त्यमाह भविष्यपुराणम् । “येयं दीपान्विता राजन् ख्याता पञ्चदशी भुवि । तस्यां दद्यान्न चेद्दत्तं पितॄणां वै महालये” ॥ पञ्चदशी अमावास्या । अमावास्यामधिकृत्य “दीपमालाश्च कर्त्तव्याः शक्त्या देवगृहेषु च । रथ्यापण्यश्मशानेषु नदीपर्वतसानुषु” ॥ इति ब्रह्मपुराणोक्त-

गानाश्थानदीपदानेन दीपान्विता ख्यातायेति विशेषणाच्च। अतएव "एकोऽथवा दीपवरः प्रदेयः" इत्यादिनोक्तविष्णुसम्प्रदानकदीपदानविहिता पौर्णमासी न ग्राह्या। अथाश्वयुक् कृष्णपक्षे ब्रह्मपुराणम् "अश्वयुक् कृष्णपक्षे तु श्राद्धं कुर्य्याद्दिने दिने। त्रिभागहीनं पक्षं वा त्रिभागन्त्वर्द्धमेव वा॥ न सन्ति पितरश्चेति कृत्वा मनसि यो नरः। श्राद्धं न कुरुते तत्र तस्य रक्तं पिबन्ति ते"॥ अश्वयुक् कृष्णपक्षे प्रोष्ठपद्यूर्द्धं कृष्णपक्षे अत्राश्वयुगश्विनीतद्युक्तपौर्णमासीसम्बन्धाल्लक्षणया मासेऽप्यश्वयुक् पदप्रयोगः ततश्च निर्मन्थनादौ आश्विने मासि कृष्णेपक्षे इत्येव स्वारसिकप्रयोगः कर्त्तव्य इति। दिने दिने तिथौ तिथौ "तिथिनैकेन दिवसश्चान्द्रमाने प्रकीर्त्तितः" इति। विष्णुधर्मोत्तरानुसारेण मासस्य चान्द्रत्वेन दिनस्यापि तथैव युक्तत्वात् अत्र यदि सङ्कल्करणमात्रं विधेयं तदाश्वयुक् कृष्णपक्षे इत्येवं ब्रूयात्। ततश्च दिन इत्यभिधानेनाश्वयुक् कृष्णापक्षीयतिथेर्निमित्तत्वे विनिगमनाविरहेण एकदिनपदेनैव प्रतितिथिनिमित्तत्वप्राप्तौ पुनर्दिनपदं कृष्णपक्षश्राद्धप्रतिषिद्धचतुर्दशीग्रहणार्थं वीप्सया यावत्तिथिलाभात्। अतएव पाश्चात्यनिर्णयामृतकालमाधवीययोः कार्ष्णाजिनिः। "नभस्यस्यापरे पक्षे श्राद्धं कुर्य्यात् दिने दिने। नैव नन्दादिवर्ज्यं स्यात् नैव वर्ज्या चतुर्दशी"॥ नभस्यस्य मुख्यचान्द्रेण भाद्रस्य श्राद्धविवेकेऽपि दिने दिने इति वीप्सापक्षदशश्राद्धार्थेत्युक्तम्। त्रिभागहीनं पञ्चम्यादित्रिभागमेकादश्यादित्युक्तं विष्णुधर्मोत्तरे। "उत्तरादयनात् श्राद्धे श्रेष्ठं स्याद्दक्षिणायनम्। चातुर्मास्यञ्च तत्रापि प्रसुप्ते केशवे हितम्"॥ प्रोष्ठपद्याः परः पक्षस्तत्रापि च विशेषतः। पञ्चम्यूर्द्धञ्च तत्रापि दशम्यूर्द्धमतोऽप्यति। मघायुक्ता च तत्रापि शस्ता राजंस्त्रयोदशी"॥

अर्द्धं त्रिभागस्यार्द्धं त्रयोदश्यादि। न तु पक्षस्यार्द्धं अष्टम्यादि। तथात्वे त्रिभागकरणेनार्द्धमेव वेति नियमानुपपत्तेः। उत्तरोत्तरलघुकालोपदेशात् सान्निध्याच्च यत्तु "आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे। यो वै श्राद्धं नरः कुर्य्यादेकस्मिन्नपि वासरे। तस्य संवत्सरं यावत् तृप्ताः स्युः पितरो ध्रुवम् ॥ नभो वाथ नभस्यो वा मलमासो यदा भवेत्। सप्तमः पितृपक्षः स्यादन्यत्रैव तु पञ्चमः" ॥ इति नागरखण्डे एकं श्राद्धमुक्तम्। तत् कन्यास्थरविनिमित्तकश्राद्धपरं प्रागुक्तहंसे वर्षास्वित्यादिवचनैकवाक्यत्वात्। नत्वश्वयुक् कृष्णपक्षीयश्राद्धस्य सकृद्विधायकम् अर्द्धमेव वेति नियमभङ्गापत्तेः। आषाढ्याः पञ्चमे पक्ष इति न तत्र सकृच्छ्राद्धविधायकं किन्तु कन्यास्थश्राद्धस्यैव तत्सम्बन्धे वर्षतृप्तिविधायकम् एवञ्च मलमासभाद्रकृष्णपक्षस्य पितृपक्षत्वाभावात्तत्र मृतस्य वर्षान्तरे तत् श्राद्धस्याश्वयुक् कृष्णपक्षपातित्वेऽपि न पार्वणविधिना कर्त्तव्यत्वम्। अमावास्याप्रेतपक्षान्यतरमृतस्यैव "अमावास्यां क्षयो यस्य प्रेतपक्षेऽथवा पुनः। सपिण्डीकरणादूर्द्ध्वं तस्योक्तः पार्वणो विधिः"। इति शङ्खवचनेन पार्वणविधानात्। एवं प्रेतपक्षादिमृतस्य पार्वणविधिना सांवत्सरिकश्राद्धे कृते न मातामहादिश्राद्धाय पुनः पार्वणारम्भः। "पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम्" इति बृहस्पतिवचनेन "मातामहानामप्येवं श्राद्धं कुर्य्याद्विचक्षणः" ॥ इत्यनेन च पितृश्राद्धाधीनप्रवृत्तेः। एवमविभक्तसापत्नभ्रात्रोरेकेन पार्वणे कृतेऽपरेण मातामहश्राद्धाय न पुनः पार्वणं करणीयम्। अतएव द्वैतनिर्णयेऽपि साग्निकौरसेन पितुः क्षयाहे पित्रादित्रिकस्य श्राद्धे कृते तत्र मातामहानां श्राद्धाय न पार्वणारम्भः। वाजिनवत्तस्याप्रयोजकत्वादित्युक्तम्। एवमेव मघात्रयोदश्यां

पुत्रवता पिण्डरहितश्राद्धे कृते न पिण्डानुरोधादश्वयुक् कृष्ण-पञ्चमीयश्राद्धान्तरकरणीयम्। अङ्गभूतपिण्डानुरोधेन श्राद्धा-न्तरं न कार्य्यं "प्रधानस्याक्रिया यत्र साङ्गं तत् क्रियते पुनः। तदङ्गस्याक्रियायान्तु नावृत्तिर्न च तत्क्रिया"॥ इति छन्दोग-परिशिष्टवचनात् तेनैव प्रधाननिर्वाहात्।

अथ मघात्रयोदशीश्राद्धम्। अत्र प्रौष्ठपद्यूर्द्ध्वं कृष्णत्रयो-दश्यां मघायुक्तायामनिषिद्धद्रव्येण श्राद्धमावश्यकं शङ्खादि-वचने नक्षत्रयुक्ततिथिश्रुतेः। ततश्च केवलत्रयोदशीकेवलमघा-श्राद्धानुवादा अपि कृप्तविशिष्टविधिप्रापककर्म्मणो नित्यत्व-बोधका न तु केवलविध्यन्तरकल्पनं गौरवात्। तथाच शङ्खः। "प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम्। प्राप्य श्राद्धं हि कर्त्तव्यं मधुना पायसेन च"॥ अस्य नित्यत्वमाह विष्णु-धर्म्मोत्तरम्। "प्रौष्ठपद्यामतीतायां तथा कृष्णा त्रयोदशी। एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः"॥ शातातपः। "पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च। तस्मात् दद्यात् सदोद्युक्तो विद्वत्सु ब्राह्मणेषु च"॥ अत्र सदेति श्रुतेर्नित्यत्वं प्रतीयते। अत्रान्नमात्रश्रुतेः शङ्खोक्तः पायसः फलातिशयार्थः। तथाच विष्णुधर्म्मोत्तरम्। "मघायुक्ता च तत्रापि शस्ता राजंस्त्रयोदशी। तत्राक्षयं भवेत् श्राद्धं मधुना पायसेन च"॥ एवञ्च शूद्रस्याप्यत्राधिकारः तत्र पुत्रवतः पिण्डनिषेधमाह देवीपुराणम्। "भौजङ्गीं तिथिमासाद्य यावच्चन्द्रार्कसङ्गमः। तत्रापि महती पूजा कर्त्तव्या पितृदेवते॥ ऋचे पिण्डप्रदा-नन्तु ज्येष्ठपुत्री विवर्जयेत्"॥ भौजङ्गीं पञ्चमीं चन्द्रार्कसङ्गमो-ऽमावास्या पितृदैवते ऋचे मघायां "मघायां पिण्डदानेन ज्येष्ठपुत्री विनश्यति" इति वचनान्तरात् पिण्डानिषेधे विशेष-माह शातातपः। "पिण्डनिर्वापरहितं यत्तु श्राद्धं विधीयते।

स्वधावाचनलोपोऽत्र विकिरस्तु न लुप्यते। अच्चय्यदच्चिणा स्वस्ति सौमनस्यमथास्त्विति"॥ अत्राविभक्तानामपि पृथक् श्राद्धमाह श्राद्धचिन्तामणौ स्मृतिः। "विभक्ता अविभक्ता वा कुर्य्युः श्राद्धमदैविकम्। मघासु च तथान्यत्र नाधिकारः पृथग्विना"॥ अदैविकं प्रत्याब्दिकमेकोद्दिष्टम्। अन्यत्र कृष्णपक्षश्राद्धादौ नाधिकारो न नित्याधिकारः। "सपिण्डीकरणान्तानि यानि श्राद्धानि षोड़श। पृथङ् नैव सुताः कुर्य्युः पृथग्द्रव्या अपि क्वचित्"॥ इत्यत्रापिना समुच्चितस्यापृथग्द्रव्यस्य पुंसः सपिण्डीकरणान्तानीति विशेषणात्तदुत्तरश्राद्धानां फलातिशयार्थत्वेन पृथक्त्वमपि प्रतीयते। अत्र मत्तच्छायायोगः फलातिशयार्थः। "नभस्यस्यापरे पक्षे मघास्विन्दुः करे रविः। यदा तदा गजच्छाया श्राद्धे पुण्यैरवाप्यते"। इति स्मृतेः करे हस्तानक्षत्रे कन्यादशमांशोपरि सपादत्रयोविंशतिदिनं यावत् अत्र दशमदिवसे मघायुक्तत्रयोदशीसत्त्वे परदिवसे मघासत्त्वेऽपि न कुञ्जरच्छायायोगः "योगो मघात्रयोदश्यां कुञ्जरच्छायसंज्ञितः। भवेन्मघासंस्थे च शशिन्यर्के करे स्थिते" इत्यत्र मघापदद्वयवैयर्थ्यापत्तेर्मघात्रयोदशीनिमित्तकश्राद्ध एव कुञ्जरच्छायस्य गुणफलत्वविधानात्। एते न पूर्वदिने मघात्रयोदशीश्राद्धं कृत्वा परदिने कुञ्जरच्छाये श्राद्धं कार्य्यमिति मिश्रोक्तं हेयम्। अत्र कुञ्जरच्छायगजच्छाययोः पर्य्यायत्वात् मलमासे गजच्छायाप्रतिप्रसूतश्राद्धस्य विषयत्वमिति मतं चिन्त्यं वस्तुतोऽसम्भवान्न तथात्वमिति ध्येयम्।

अथ तीर्थश्राद्धम्। अत्र शुचेः प्रागुक्तरविहितप्रथमदिन एव श्राद्धं तेन पूर्वदिने राक्षसीवेलादावागमनेऽपि परदिने श्राद्धमविरुद्धम्। तथाच हलायुधः। "गत्वैव तीर्थं कर्त्तव्यं

श्राद्धं तत् प्राप्तिहेतुकम्। पूर्वाह्णेऽप्यथवा प्रातर्दर्भे स्यात् पूर्वदक्षिणे"॥ तत्तत्प्राप्तैरवमिति कर्त्तव्यवचनेन तीर्थप्राप्ति-निमित्तक-श्राद्धाभिधानेनोक्तस्याबाधात्। अतस्तीर्थप्राप्ति-निमित्तकश्राद्ध एव तन्निवृत्तेरिति तत्त्वम्। गङ्गावाक्यावल्याम्। "संवत्सरं द्विमासोनं पुनस्तीर्थं व्रजेद् यदि। मुण्डनञ्चोपवा-सञ्च ततो यत्नेन कारयेत्"॥ एतेन दशमासाभ्यन्तरे पुनर्गमने मुण्डनोपवासौ न कार्य्याविति सूचितम्।

अथाष्टकाश्राद्धम्। वायुपुराणम्। "पितृप्रदानाय मूले स्युरष्टकास्तिस्र एव च। कृष्णपक्षे वरिष्ठा हि पूर्वा चैन्द्री विभाव्यते॥ प्राजापत्या द्वितीया स्यात् तृतीया वैश्वदेविकी। आद्या पूपैः सदा कार्य्या मांसैरन्या भवेत्तथा॥ शाकैः कार्य्या तृतीया स्यादेष द्रव्यगतो विधिः"॥ मूले प्रधानस्थाने अमा-वस्या हि श्राद्धस्य प्रधानकालः तद्वदिति यावत्। ऐन्द्री साग्नेः इन्द्रदेवताकयागसम्बन्धात्। एवं प्रजापत्या वैश्वदेविकी च मांसैः पशोः। तथाच गोभिलः। "यद्युवाल्पतरसम्भारः स्यादिति पशुनैव कुर्य्यादिति" यद्युवेति निपातसमुदायो यद्यप्यर्थे पशुरपि छाग एव "छागोऽनादेशे पशुः" इति गोत-मात्। न च "तैष्या ऊर्द्ध्वमष्टम्यां गोः" इति गोभिलसूत्रेण गवोपदेशात् कथमनुपदिष्टत्वमिति वाच्यं तदसम्भवे पशु-रित्यनेन यः पशुरुपदिष्टः तस्य विशेषतोऽनुपदिष्टत्वात् वस्तुतो हरिवंशे मृगोऽपि विहितः। "इक्ष्वाकुस्तु विकुक्षिं वै अष्टकायामथादिशत्। मांसमानय श्राद्धाय मृगं हत्वा महाबल"॥ इत्यादिना मृगमांसबोधनात्। पश्वभावे स्थाली-पाकेन यथा गोभिलः। अपि वा स्थालीपाकं कुर्वीतेति" एतद्विधानन्तु "स्थालीपाकं पशुस्थाने कुर्य्यात् यद्यानुकल्पि-कम्। अपयेत्तं सवत्सायास्तरुण्या गोः पयस्तु" इति।

छन्दोगपरिशिष्टीयं ग्राह्यम्। अन्विति ओदनचरोः पश्चात् अतएव "पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च। तस्माद्दद्यात् सदोद्युक्तो विद्वत्सु ब्राह्मणेषु च॥ इति शातातपेनोक्तम्। तस्मादन्नं प्रधानं पूजादिकन्तूपकरणत्वेन शक्तानामावश्यकं सदेति श्रवणात्।

अथ नवान्नश्राद्धम्। शातातपः "नवोदके नवान्ने च गृहप्रच्छादने तथा। पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च"॥ नवोदके वर्षोपक्रमे। आर्द्रास्थरवाविति यावत् "आर्द्रादितो विशाखान्तं रविचारेण वर्षति" इति ज्योतिर्वचनात् रविचारेण रविगत्या। "प्रावृट्काले समायाते रौद्र ऋक्षगते रवौ। नाडीवेधसमायोगे जलयोगं वदाम्यहम्"॥ इति रुद्रयामलाच्च। रौद्रमार्द्रा। नवान्ने नवान्नागमे अत्र "नक्षत्रग्रहपीड़ासु दुष्टस्वप्नावलोकने। इच्छाश्राद्धानि कुर्वीत नवशस्यागमे तथा"॥ इति विष्णुपुराणादिच्छमाणबहुतरवचनेषु नवान्नश्रुतेर्नवान्नागमत्वेनैव निमित्तत्वं लाघवात्। "अमावास्यास्तिस्रोऽष्टका माघीप्रौष्ठपद्यूर्द्ध्वं कृष्णत्रयोदशी व्रीहियवपाकौ च एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः। श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते"॥ इति विष्णुवचनं नवान्नागमश्राद्धस्यैव व्रीहियवोभयप्राप्तिविषयकत्वेन विधायकं ग्रैष्मादिधान्यव्युदासाय शालिधान्यस्य तु प्राप्तिः। "शरद्वसन्तयोः केचिन्नवयज्ञं प्रचक्षते। धान्यपाकवशादन्ये श्यामाको वनिनः स्मृतः"॥ इति छन्दोगपरिशिष्टे व्रीह्यप्राप्त्या नवशस्येष्टौ शालिविधानाद् यज्ञतुल्यन्यायात् श्राद्धेति तथा कल्पनात्। "वृश्चिके शुक्लपक्षे तु नवान्नं शस्यते बुधैः। अपरे क्रियमाणं हि धनुष्येव कृतं भवेत्॥ धनुषि यत् कृतं श्राद्धं मृगनेत्रासु रात्रिषु। पितरस्तत्र गृह्णन्ति नवान्नामिषकाङ्क्षिणः"॥ इति वराह-

वचनाच्च । श्यामाको व्रीहिविशेषः । वनी वानप्रस्थः । अपरे कृष्णपक्षे धनुषि धनुःस्थार्के । "पौषे चैत्रे कृष्ण-पक्षे नवान्नं नाचरेद् बुधः । भवेज्जन्मान्तरे रोगी पितृणां नोपतिष्ठते" ॥ इति भोजराजवचनैकवाक्यत्वात् । एवञ्च सौरपौषवत् चैत्रोऽपि सौर एव साहचर्य्यात् । अत्र धनु-र्मीनपर्य्युदासात् यवश्राद्धमुख्यकालपर्य्यन्तं माघफाल्गुनवैशा-खेष्वपि नवान्नश्राद्धं कार्य्यं "एवमागामियागौयमुख्यकाला-दधस्तनः । स्वकालादुत्तरो गौणः कालः पूर्वस्य कर्म्मणः ॥ यद्वागामिक्रियामुख्यकालस्याप्यन्तरालवत् । गौणकालत्व-मिच्छन्ति केचित् प्राक्तनकर्म्मणि" ॥ हरिहरपद्धतौ तथा दर्शनात् अधस्तनः पूर्वतनः ह्यस्तवच्छास्त्रे व्यवहारः । अन्त-रालवत् मध्यकालस्येव । वस्तुतस्तु उत्तरक्रियामुख्यकालं विना उत्तरक्रियाकरणपूर्वकाल एव पूर्वक्रिया कर्त्तव्या । "संस्कारा अतिपत्येरन् स्वकालाच्चेत् कथञ्चन । हुत्वैतदेव कुर्वीत येतूपनयनादधः" ॥ इति छन्दोगपरिशिष्टात् संस्कारपाते तथा व्यवहारात् अतएव श्राद्धविवेकेऽपि धनुषः पर्य्युदासा-न्माघादाविति सामान्यत उक्तम् । एवं यवश्राद्धमपि हरि-शयनात् पूर्वं कर्त्तव्यम् । "नवान्नं नैव नन्दायां न च सुप्ते जनार्द्दने । न कृष्णपक्षे धनुषि तुलायां नैव कारयेत्" ॥ इति ज्योतिर्वचनात् न च सुप्ते जनार्द्दन इति आश्विनशुक्लपक्षेतर-परम् । आश्विनाधिकारे "शुक्लपक्षे नवं धान्यं पक्वं ज्ञात्वा सुशोभनम् । गच्छेत् चैत्रे विधानेन गीतवाद्यपुरःसरः" ॥ इत्यभिधाय "तेन देवान् पितृंश्चैव तर्पयेदर्च्चयेत्तथा" इति ब्रह्मपुराणात् मृगोनेताप्रापकोयासां रात्रीणामिति व्युत्पत्त्या नक्षत्रान्नेतुरित्यनेनात् विधानात् तत्पदं सिद्धम् । ततश्च मृगशिरः पूर्वार्द्धेन वृश्चिकशेषे रात्र्यारम्भात् चत्वारिंशद्दण्डा-

धिकावशिष्टपञ्चांशयो मृगनेत्रा इति। तथोक्तं ज्योतिषे। "ज्येष्ठाशेषार्द्धगे सूर्य्ये मृगनेत्रानिशात्मके। नवान्नैर्भोजनं श्राद्धं जन्मचन्द्रे तिथौ न च"॥ अत्र जन्मतिथिनिषेधात् तथा जन्मर्चतारं सितवासरमिति जन्मर्चं निषेधाच्च "नन्दायां भार्गवदिने त्रयोदश्यां त्रिजन्मनि" इत्यत्र त्रिजन्मपदं जन्मतिथिनक्षत्रत्रिकपरं परवचने त्रिजन्मान्वित इत्यत्रापि तथा। "सूर्य्ये चैव विशाखगे स्मरतिथौ पापे त्रिजन्मान्विते। नन्दामन्दमहीजकाव्यदिवसे पौषे मघौ कार्त्तिके॥ भेष्वग्राह्वि शिवेषु विष्णुशयने कृष्णे शशिन्यष्टमे। श्राद्धं भोजनकं नवान्नविहितं पुत्रार्थनाशप्रदम्"॥ सूर्य्ये चैव विशाखगे मार्गशीर्षस्य विंशतिदण्डाधिक प्रथमदिनत्रयावस्थिते सूर्य्ये। स्मरतिथौ त्रयोदश्यां पापे पञ्चमताराविये नन्दा प्रतिपत् षष्ठी एकादशी मन्दः शनिः महीजो मङ्गलः काव्यः शुक्रः उग्रगणः पूर्वात्रयमघा भरण्यः अहिरश्लेषा शिव आर्द्रा। भोजराजः। "ब्रह्मा विष्णुहरस्वतो शशधरो मार्त्तण्डपौष्णादितौ। मैत्रे चित्रविशाखवायुधनभे मूलाश्विवह्नौ तथा॥ शक्रे वारुण ऋचके शुभदिने श्राद्धं नवं शस्यते। नन्दा भार्गव भूमिजेषु न भवेत् श्राद्धं नवान्नोद्भवम्"॥ ब्रह्मादयः रोहिणी श्रवणा पुष्य मृगशिरो हस्त रेवती पुनर्वसु अनुराधा चित्रा विशाखा स्वाती धनिष्ठा मूलाश्विनी कृत्तिका ज्येष्ठा शतभिषाः। नवान्नश्राद्धे मूला कृत्तिका ज्येष्ठा विधानात्तच्छेषभक्षण-प्राप्ते "अश्लेषा कृत्तिका ज्येष्ठा मूला अजपदकेषु च। भृगु भौमदिने रिक्ततिथौ नाद्यान्नवौदनम्"॥ इति श्राद्धशेषाभोजिमात्रपरम् अजपदं पूर्वभाद्रपदाः।

चन्द्रताराद्यशुद्धौ प्रतीकारमाह देवलः। "कर्म्म कुर्य्यात् फलावाप्त्यै चन्द्रादिशोभने बुधः। सुस्थकालेत्विदं नवं नार्त्तः

कालमपेक्षते ॥ चन्द्रे च शङ्खं लवणञ्च तारे तिथावभद्रे सिततण्डुलांश्च । धान्यञ्च दद्यात् करणर्क्षवारे योगे तिलान् हेममणिञ्च लग्ने" ॥ ऋक्षमविहितमत्र राजमार्त्तण्डे ताराभेदात् लवणपरिमाणमाह "एकत्रिपञ्चसप्तद्विजाय दद्यात् पलानि लवणस्य । क्रमशो जन्मानि विपदि प्रत्यरिमरणाख्य-तारकासु ॥ पलन्तु लौकिकैर्मानैः साष्टरक्तिद्विमासकम् । तोलकत्रितयं ज्ञेयं ज्योतिर्ज्ञैः स्मृतिसम्मतम्" ॥ वामनपुराणञ्च "विष्टयोव्यतिपाताश्च येऽन्येदुर्नीतिसम्भवाः । ते नाम स्मरणाद्विष्णोर्नाशं यान्ति महात्मनः" ॥ विष्णुधर्म्मोत्तरे । "सर्वाशुभानां परिमोक्षकारि संपूजनं देववरस्य विष्णोः" इति । ब्रह्मपुराणे । "प्राश्नीयात् दधिसंयुक्तं नवं विप्राभिमन्त्रितम्" । अभिमन्त्रितं "मन्त्रदेनाशे गायत्री" इति वचनाद्गायत्र्या इति । स्मृतिः । "गृहीत्वा ब्राह्मणानुज्ञां सदधि प्राशयेन्नवम्" । अत्र व्रीह्यभावे शालिना नूतनाभावे पुरातनेन अपि श्राद्धादिकमाह भट्टभाष्ये स्मृतिः । "गृहमेधी व्रीहि-यवाभ्यां शरद्वसन्तयोर्यजेत् । श्यामाकैर्वनी वर्षासु आपत्कल्पे अन्येन पुरातनैर्वेति"॥ गृहमेधीति मेधृमेधाहिंसयोः मेधृ-सङ्गमे चेत्यत्र चकारेण पूर्वगणस्य मेधाहिंसयोरनुवृत्तेः तेन मेधृहिंसार्थः तेन गृहनिमित्तेन जातायाः "पञ्चसूना गृहस्थस्य चुल्लीपेषण्युपस्करः । कण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन्" ॥ इति मनूक्तायाः पञ्चसूनारूपहिंसायाः कारी गृहमेधी गृहस्थ इत्यर्थः । सूदयन्ति प्राणैर्वियोजयन्तीति सूना प्राणिवध-स्थानानि चुल्लीपाकस्थानं पेषणी दृषदुपलादिः उपस्करः गृह-सम्मार्जन्यादि कण्डनी मूषलोदूखलादि यास्तु एताः सूना वाहयन् स्व स्व कार्य्ये योजयन् बध्यते पापेन सम्बध्यते इत्यर्थः । श्राद्धचिन्तामणावप्येवम् । प्रेतमातापितृकस्य पुरातनधान्या-

लाभे नवेनैव वैश्वदेवं कृत्वा नवञ्च ब्राह्मणेभ्यो दत्त्वा ब्राह्मणानुज्ञां गृहीत्वा भोजनादिकं कर्त्तव्यमाह रेणुकाचार्य्येनव्यवहृतमानधृता स्मृतिः । "दत्त्वैवं ब्राह्मणेभ्यश्च हुत्वा वा वैश्वदेविकम् । अन्योनवान्नमश्नीयादिति बौधायनोऽब्रवीत्" ॥ अन्यः श्राद्धकरणासमर्थः श्राद्धानधिकारी च अतएव विधवया नवमेकोद्दिष्टे दीयते भुज्यते चेति ।

अथ पौर्णमासीश्राद्धम् । "विष्णुधर्म्मोत्तरे पौर्णमासी तथा माघी श्रावणी च नरोत्तम । प्रौष्ठपद्यामतीतायां तथा कृष्णा त्रयोदशी ॥ एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः"॥ प्रौष्ठपद्यूर्द्ध्वं कृष्णा त्रयोदशी मघायुक्तैव पूर्वोक्तवचनात् । अन्यथा विध्यन्तरकल्पनापत्तेः ।

अथ श्राद्धवेला । ब्रह्मपुराणम् । "पूर्वाह्णे मातृकं श्राद्धमपराह्णे तु पैतृकम् । एकोद्दिष्टन्तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्" ॥ मातृकमन्वष्टकाश्राद्धं यथा शङ्खः । "पित्रादित्रिकपत्नीषु भोज्यामातृः प्रति द्विजाः । स्त्रीणामेव तु तद् यस्मान्मातृश्राद्धमिहोच्यते" ॥ एतच्चान्वष्टकाश्राद्धं साग्निमात्रेण कर्त्तव्यं तथा च विष्णुः । अन्वष्टकास्वष्टकावदग्नौ हुत्वा मात्रे पितामह्यै प्रपितामह्यै पूर्ववत् ब्राह्मणान् भोजयित्वेति" । अत्र होमत्वादेवाग्निप्राप्तेरग्निग्रहणं तन्नियमार्थम् । न चाग्नौ करणहोमे विप्रपाण्यादेर्विधानादत्रापि तथेति वाच्यं प्रकृतीभूतश्राद्धविध्युक्तस्याधारान्तरस्य विकृतीभूतश्राद्धे विशेषविहिताधारेण बाधात् शरमयवर्हिषा कुशमयवर्हिर्बाधवत् । न वा लौकिकाग्नौ होमः । "न पैतृयज्ञियो होमो लौकिकाग्नौ विधीयते" इति मनुवचनेन निषेधात् । श्राद्धचिन्तामणावप्येवम् । "अपराह्णे तु पैतृकम्" इति अन्वष्टका शुक्लपक्षविहितपार्वणेतरपार्वणसपिण्डीकरणपरम् । शुक्लपक्षस्य पूर्वाह्णे

श्राद्धं कुर्य्याद्विचक्षणः। कृष्णपक्षापराह्णे तु रौहिणन्तु न लङ्घयेत्" ॥ इति वायुपुराणात्। अत्र शुक्लपक्षस्येति अङ्गाङ्गि-भावबोधकषष्ठीनिर्देशात् शुक्लपक्षत्वमात्रेण यद्विहितं माघ-पौर्णमास्यादिपार्वणश्राद्धं तदेव पूर्वाह्णे कर्त्तव्यम्। अतएव कृष्णपक्षत्वेन विहिताविहितपार्वणयोरविशेषेणापराह्णे कर्त्तव्य-त्वात्। कृष्णपक्षे षष्ठीनिर्देशो न कृतः। अतो मृताहविहित-पार्वणमपिण्डीकरणश्राद्धयोः शुक्लपक्षकृष्णपक्षयोरविशेषेणैवा-पराह्णकर्त्तव्यता। अत्र पूर्वाह्णपदं सङ्गवपरम्। "प्रातःकालो मुहूर्त्तांस्त्रीन् सङ्गवस्तावदेव तु। मध्याह्नस्त्रिमुहूर्त्तः स्यादप-राह्णस्ततः परम्॥ सायाह्नः स्त्रिमुहूर्त्तः स्याच्छ्राद्धं तत्र न कार-येत्। राक्षसी नाम सा वेला गर्हिता सर्वकर्म्मसु" ॥ इति मत्स्य-पुराणवचने मध्याह्नापेक्षया परकालस्यापराह्णत्ववत् तत् पूर्व-कालस्यैव सङ्गवापरनाम्नः पूर्वाह्णत्वप्रतीतेः अतएव ब्रह्मपुराणेन मत्स्यविष्णुपुराणोक्तप्रातःकालादिभेदेन वृद्ध्यादिश्राद्धमुक्तम् अत्रापि सङ्गवमनभिधाय यत् पूर्वाह्ण इत्युक्तं तत् सङ्गवपरम् अत्र पूर्वाह्णे श्राद्धमभिधाय रौहिणन्तु न लङ्घयेदित्यभिधानेन पूर्वाह्णश्राद्धस्य सङ्गवात् परो रौहिणपर्य्यन्तगौणपूर्वाह्णकालः प्रतीयते। तेन रौहिणः पूर्वाह्णश्राद्धस्य गौणकालत्वेनोत्तरा-वधिः अपराह्णश्राद्धस्य पूर्व्वावधिरित्यवगम्यते। ततश्च पूर्वदिने सङ्गवात् परं रौहिणपर्य्यन्तं तिथेर्लाभे परदिने मुहूर्त्तत्रयमात्रे तत्तिथिलाभे पूर्वदिने श्राद्धं रौहिणान्तरूपगौणपूर्वाह्णलाभात् न परदिने तथात्वाभावात्। उभयदिने सङ्गवलाभे परदिने शुक्लपक्षे तिथिर्ग्राह्येति वचनात्। रौहिणन्तु दिवसस्य नवम-मुहूर्त्तस्तस्य ज्योतिषोक्तरोहिणीदैवतत्वात् रौहिणत्वमिति। एवञ्च "ऊर्द्ध्वं मुहूर्त्तात् कुतपात् यन्मुहूर्त्तचतुष्टयम्। मुहूर्त्त-पञ्चकं वापि स्वधाभवनमिष्यते" ॥ इति मत्स्यपुराणे आप-

आपराह्णिकश्राद्धे "अष्टौ मुहूर्त्ता विख्याता दशपञ्च च सर्वदा। तत्राष्टमो मुहूर्त्तो यः स कालः कुतपः स्मृतः" ॥ इति तद्वचनान्तरोक्तकुतपस्य पञ्चमत्वेनाभिधानं तद्रौहिणादपि गौणापराह्णकालपरम्। न च ऊर्द्ध्वं मुहूर्त्तात् कुतपान्मुहूर्त्तपञ्चकमिति त्रयोदशमुहूर्त्तात्मकं नारायणोपाध्यायोक्तं युक्तमिति वाच्यम्। "अपराह्णे तु संप्राप्ते अभिजिद्रौहिणोदये। यदत्र दीयते जन्तोस्तदक्षयमुदाहृतम्" ॥ इति मत्स्यपुराणविरोधात् तस्मान्मुहूर्त्तपञ्चकमित्यत्र कुतपादिति ल्यब्लोपे पञ्चमी तेन कुतपमारभ्येत्यर्थः। अपराह्णे तु संप्राप्ते इत्यत्र अभिजिद्रौहिणोदये अष्टमनवममुहूर्त्तयोरुदयाचलसम्बन्धे गौणापराह्णकालरूपे यद्दीयते तदक्षयमित्यर्थः एतत् प्रशंसनं "रात्रौ श्राद्धं न कुर्वीत राक्षसी कीर्त्तिता हि सा। सन्ध्ययोरुभयोश्चैव सूर्य्ये चैवाचिरोदिते" इति मनूक्तपर्य्युदस्तेतरकालापेक्षया न तु मुख्यापराह्णापेक्षया मुहूर्त्तचतुष्टयं मुहूर्त्तपञ्चकं चेत्यत्र वाशब्देनानयोर्गौणकालत्वाभिधानात्। ततश्च रात्र्यादिपर्य्युदस्तेतरकालकुतपादिमुहूर्त्तपञ्चकरौहिणादि-मुहूर्त्तचतुष्टय-दशमादमुहूर्त्तत्रयरूपकालचतुष्टयमापराह्णिकश्राद्धे विहितप्रशस्त-प्रशस्ततर-प्रशस्ततमत्वेन बोध्यम्। अक्षयादिफलश्रुतेः। एवमन्यस्मिन् पूर्वाह्णादिविहिते श्राद्धे यथायथं बोध्यम्। अत्र च तिथिविशेषविहितश्राद्धानामुभयदिवसीयमुख्यकाले तत्तत्तिथिलाभे आपराह्णिकश्राद्धस्य पूर्वतिथौ कर्त्तव्यता "यथास्तं सविता याति पितरस्तामुपासते। तिथिन्तेभ्योऽपराह्णो हि स्वयं दत्तः स्वयम्भुवा" ॥ इति गृह्यपरिशिष्टवचने अपराह्णो दत्त इति हेतुवाक्यपदेनास्तगामितिथित्वेन पितृणामुपास्यत्वाभिधानात्। उभयदिनमुख्यकालालाभे तु परदिने गौणापराह्णलाभात् तत्रैव श्राद्धं आपराह्णिकेतरश्राद्धे तूभयदिने

प्राप्त्यप्राप्त्योः शुक्लपक्षकृष्णपक्षभेदेन व्यवस्था । "शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः । कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः" । इति विष्णुधर्म्मोत्तरात् । "द्वितीयादिकयुग्मानां पूज्यता नियमादिषु । एकोद्दिष्टादिवृद्ध्यादौ ह्रासवृद्ध्यादिचोदना" ॥ इति व्यासनिगमवचनाच्च नियमादिषु व्रतादिदैवकृत्येषु एकोद्दिष्टादिवृद्ध्यादौ एकोद्दिष्टादिश्राद्धनिमित्तीभूततिथिविशेषस्य वृद्ध्यादौ वृद्ध्यादावित्यादिशब्दात् चयस्तमितत्वे ग्राह्ये तथात्वे च श्राद्धकरणस्य सन्देहे पूर्व्वोक्तानुसारेण ह्रासवृद्ध्यादिचोदना ह्रासवृद्ध्यादिर्विधायको नियामक इति यावत् अत ह्रासवृद्धौ चन्द्रस्य ताभ्यां शुक्लकृष्णपक्षौ लक्ष्येते शुक्लपक्षे तिथिर्ग्राह्येत्यादि पूर्व्ववचनैकवाक्यत्वात् आदिशब्देन ययास्तमित्युक्तासूर्य्यास्तसम्बन्धितिथिरिति । एवञ्च "दग्धन्तु व्यापिनी चेत् स्यान्मृताहस्य तु या तिथिः । पूर्व्वस्यां निर्व्वपेत् पिण्डमित्याङ्गिरसभाषितम् इति । सुमन्तुवचने मृततिथेरुभयदिने श्राद्धकालव्यापित्वे पक्षभेदमनादृत्य यत् पूर्व्वदिने श्राद्धविधानं तन्मृताहविहितपार्व्वणसपिण्डीकरणोभयश्राद्धपरं ययास्तमित्येकवाक्यत्वात् नत्वेकोद्दिष्टविषयम् । एकोद्दिष्टादिवृद्ध्यादावित्युक्तवचनविरोधात् "एकोद्दिष्टन्तु मध्याह्ने" इति प्रागुक्तवचनविरोधाच्च ।

मध्याह्ने तु विशेषमाह कालमाधवीये व्यासः । "कुतपप्रथमभागे एकोद्दिष्टमुपक्रमेत् । आवर्त्तनसमीपे वा तत्रैव नियतात्मवान्" ॥ आवर्त्तनं पश्चिमदिगवस्थितच्छायायाः पूर्व्वदिग्गमनारम्भकालः तत्समीपे कुतपशेषदण्डे गौतमः । "आरभ्य कुतपे श्राद्धं कुर्य्यादारौहिणं बुधः । विधिज्ञो विधिमास्थाय रौहिणन्तु न लङ्घयेत्" इति ॥ एतद्वचनद्वयं भुजवलभीमे भोजदेवेन धृतम् । तेन पूर्व्वदिवसीयकुतपरौहिणयोस्तत्त-

त्तिथेर्लाभे परत्र कुतपमात्रलाभे शुक्लपक्षेऽपि पूर्वदिने एकोद्दिष्टम् उभयप्राप्त्यनुरोधात्। पूर्वदिने कुतपालाभे परत्र तल्लाभे कृष्णपक्षेऽपि परदिन एव समाप्तिकालादारम्भकालस्य बलवत्त्वात्। तथाच बौधायनः। "यो यस्य विहितः कालः कर्म्मणस्तदुपक्रमे। तिथिर्याभिमता सा तु कार्य्यानोपक्रमोज्झिता"॥ अतएव मदनपारिजाते लोकाक्षिः। "गणिताज्जायते कालो यत्र तिष्ठन्ति देवताः। वरमेकाहुतिः काले नाकाले लक्षकोटयः"॥ उभयत्र कुतपमात्रालाभे शुक्लपक्षेऽपि पूर्वदिने समाप्तिकालानुरोधात् पूर्वदिने रौहिणालाभे परत्र सप्तममुहूर्त्तलाभे कृष्णपक्षेऽपि परदिने मध्याह्नानुरोधात्। ग्रहणादौ रात्रावपि स्नानश्राद्धादिकमाह देवलः। "राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु। स्नानदानादिकं कुर्य्युर्निशि काम्यव्रतेषु च"॥ आदिशब्दः श्राद्धादिपरः "स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने। आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्जयेत्"॥ इति यमवचने तथा समभिव्याहारात्।

अथामावास्याश्राद्धकालः। तत्र छन्दोगपरिशिष्टम् पिण्डान्वाहार्य्यकं श्राद्धं क्षीणे राजनि शस्यते। वासरस्य तृतीयांशे नातिसन्ध्यासमीपतः"॥ पिण्डान्वाहार्य्यकमिति "ततः प्रभृति पितरः पिण्डसंज्ञान्तु लेभिरे" इति मत्स्यपुराणात् पिण्डानां पितॄणाम् अन्वाहार्य्यं मासैकतृप्तिजनकं यत्तथा। तथाच मनुः। "पिण्डानां मासिकं श्राद्धमन्वाहार्य्यं विदुर्बुधाः"। राजनि चन्द्रे शस्यत इत्यनेन क्वचिच्चन्द्रक्षयाभावेऽपि श्राद्धं सूचितम् एतादृग् व्युत्पत्तेः साग्निनिरग्निसाधारणत्वेन वक्ष्यमाणकात्यायनोक्तरीत्या क्षीणा स्तम्भिता वर्द्धमानाभेदः साधारणः वासरस्य तृतीयांशे त्रिधाविभक्तस्य दिनस्य तृतीयभागे नातिसन्ध्यासमीपत इति सन्ध्यासमीपमुहूर्त्तं आपद्यपि वर्ज-

नीय इत्यर्थः। तेन राक्षसीवेलायामपि मुहूर्त्तद्वयमनुज्ञातम् अतिशब्दस्वरसात् अतएव हारीतः "त्रिमुहूर्त्तापि कर्त्तव्या पूर्वा दर्शा च यह्नृचैः" इति तेन पूर्वदिने मुहूर्त्तत्रयमात्रलाभे परदिने वासरतृतीयांशालाभे पूर्वदिन एव श्राद्धम्।

दर्शद्वैधे कुत्र श्राद्धं तत्राह छन्दोगपरिशिष्टे कात्यायनः। "यदा चतुर्दशीयामं तुरीयमनुपूरयेत्। अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते"॥ चतुर्दशीयाममिति चतुर्दशीसम्बन्धि-दिनयामं तद्दिनस्यामावास्यासम्बन्धेऽपि चतुदशीनिर्देशोऽधि-केन व्यपदेशा भवन्तीति न्यायात् तेन चतुर्दशीसम्बन्धिदिनस्य चतुर्थप्रहरं कृत्स्नं किञ्चिन्न्यूनं वा अमावास्यानुपूरयेत् व्याप्नोति प्रहरत्रयव्यापिनीकिञ्चिदधिकप्रहरत्रयव्यापिनी वा चतुर्दशी-त्यवगम्यते। ततश्चोभयवासरीयतृतीयांशसम्बन्धिपञ्चधा विभ-क्तापराह्णीयैकादशद्वादशमुहूर्त्तयोः "व्रतोपवासनियमे घटि-कैका यदा भवेत्। सा तिथिः सकला ज्ञेया पित्रर्थे चाप-राह्णिकी"॥ इति भविष्यपुराणात् मुहूर्त्तान्यूनदर्शलाभे द्वैधं नत्वेकदिनमात्रे तल्लाभे। अत्र वासरस्य तृतीयांश इत्यनेनैव द्वैधानुदयात् एवं द्वैधे पूर्वदिनचतुर्दश्यपेक्षया परदिने अमा-वास्या क्षीयमाणा न्यूनकालव्यापिनी न तु पूर्वापरदिवसीय-यावच्चतुर्दश्यपेक्षयाऽनुपस्थितेः। एवं स्तम्भिता वर्द्धमानयो-रपि तदैव पूर्वदिन एव अत्र चन्द्रक्षयश्चतुर्दश्यष्टमयामात् प्रभृत्यमावास्यासप्तमयामपर्य्यन्तमिति वक्ष्यते। ततश्चन्द्रक्षयानु-रोधात् पूर्वदिने श्राद्धं तदैवेत्येवकारेण तिथिद्वैधे खण्डविशेषो नियम्यते कर्म्मणि खण्डान्तरव्युदासाय एवञ्च यत्र पूर्वापरदिने वासरतृतीयांशीयमुख्यापराह्णे मुहूर्त्तो न दर्शलाभस्तत्रापि पूर्वदिने श्राद्धं वासरतृतीयांशचन्द्रक्षयातिशब्दस्वरसात् त्रिमुहू-र्त्तापीत्यनुरोधाच्च। यत्र तु पूर्वदिने त्रिमुहूर्त्तमात्रव्यापिन्यमा-

वास्या परदिने च वासरतृतीयांशमुहूर्त्तव्यापिनी सती चीय-माणा तत्र परदिने चन्द्रक्षयाभावेऽपि मुख्यापराह्णलाभात् श्राद्धम् अन्यथा "यदा चतुर्दशीयामं तुरीयमनुपूरयेत्" इति विशेषाभिधानं व्यर्थं स्यात् अथ यत्र पूर्वाह्णे श्राद्धं तत्र "यदहस्त्वेव चन्द्रमा न दृश्येतताममावास्यां कुर्वीत" इति गोभिलविरोधः। तथाविधचतुर्दशीयुक्तामावास्यायाः सिनी-वालीत्वेन प्रातश्चन्द्रदर्शनात्। तत्राह स एव "यदुक्तं यदह-स्त्वेव दर्शनं नैति चन्द्रमाः। तत्क्षयापेक्षया ज्ञेयं चीणे राजनि चेत्यपि। यदहस्त्वेव चन्द्रमा न दृश्येत ताममावास्यां कुर्वीत" इति यद्गोभिलसूत्रं तच्चन्द्रक्षयाभिप्रायकम् अन्यथा गोभिलीय तादृशसूत्रान्तरेण सह पौनरुक्त्यापत्तेः तस्मात् प्रथमसूत्रं कुहूपरं तच्च वर्द्धमानापक्षे नियतं चीणास्तम्भि-तयोस्तु यथायोग्यमनुसरणीयम् एवञ्च "यदहस्त्वेव चन्द्रमा न दृश्येत ताममावास्यां कुर्वीत" इति श्रुतिरेतत् समानार्थकं श्रुत्यन्तरं वा तदपि वर्द्धमानादिपरं न तु कात्यायनवचनात्तत्र क्षयलक्षणा कल्पतरुप्रभृतिभिरुक्ता युक्ता। "श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी" इति विरोधात्। चीण इति कात्या-यनेन मया यत् चीणे राजनीत्युक्तं तदपि चन्द्रक्षयाभिप्रायम् "अथैवं दृश्यमानेऽप्येकदा" इति गोभिलसूत्रान्तरं व्यर्थं यदह-स्त्वेवेत्यादिद्वितीयसूत्रप्राप्ततिथेः सिनीवालीत्वेनैव चन्द्रदर्शन-प्राप्तिरित्यत आह स एव "यच्चोक्तं दृश्यमानेऽपि तच्चतुर्दश्य-पेक्षया। अमावास्यां प्रतीक्ष्येत तदन्ते वापि निर्वपेत्"॥ दृश्यमानेऽप्येकदेति यदुक्तं तच्चतुर्दश्यां श्राद्धाय पूर्वसूत्रममा-वास्यापदोपादानाच्चन्द्रक्षये सत्यमावास्याविषयम्। इदं पुन-रित्थम्भूतचतुर्दशीविषयमिति श्राद्धविवेकः तत् किममावास्या-वत् चतुर्दशीत्यत आह। अमावास्यां प्रतीक्ष्येतेति उभय-

तिथिप्राप्तौ श्राद्धायामावास्या प्रतीक्षणीया यत्र पूर्वदिने दिवा सार्द्धमुहूर्त्तमात्रेऽमावास्या परदिने च सार्द्धदशममुहूर्त्तमात्रे अमावास्या अत्र चोभयदिने श्राद्धयोग्यामावास्या न प्राप्यते तत्र चतुर्दश्यान्ते निर्वपेत् दद्यात् अत्रैव विषये साग्निनिरग्न्यो-र्विशेषमाह कालमाधवीये जावालिः। "अपराह्णद्वयाव्यापी यदि दर्शस्तिथिक्षये। आहिताग्नेः सिनीवाली निरग्न्यादेः कुहूर्मता"। आदिपदादनुपनीतशूद्रयोर्ग्रहणम्। क्षयकाल-माह कात्यायनः। "अष्टमेंऽशे चतुर्दश्याः क्षीणो भवति चन्द्रमाः। अमावास्याष्टमांशे च ततः किल भवेदणुः"॥ चतु-र्दश्यष्टमे यामे चन्द्रमाः क्षीणश्चतुर्थभागोनकलावशिष्टो भवति अत्रेन्दुराद्ये प्रहरेऽवतिष्ठते इत्यादिस्वरसात् अमावास्य-ष्टमे यामे चाणुर्भवति पुनरुत्पद्यते किलेत्यागमवार्त्तायां तेना-मावास्यासप्तमयामे कृत्स्नक्षय इत्यवगम्यते ततश्चान्त्यकला-वयवनाशोत्पत्तिरेव क्षयः सा च सूक्ष्मतायां विनाशेऽप्यस्तीति श्राद्धविवेकः। उत्पत्तिराद्यक्षणसम्बन्धः तेन विनाशस्यान-न्तत्वेपि नातिव्याप्तिः। अत्र विशेषमाह स एव "आग्रहा-यण्यमावास्या तथा ज्यैष्ठस्य या भवेत्। विशेषमाभ्यां ब्रुवते चन्द्रचारविदो जनाः"। आभ्यामिति ल्यब्लोपे पञ्चमी इमे प्राप्येत्यर्थः। चन्द्रचारविदो ज्योतिर्विदः। अत्र पौर्णमास्य-न्तमास इति परिशिष्टप्रकाशः। अत्र वीजं ब्रह्मपुराणीय-तिथिकृत्यत्वं तथा च श्राद्धमधिकृत्य ब्रह्मपुराणम्। "पयो-मूलफलैः शाकैः कृष्णपक्षे च सर्वदा"। तत्र कृष्णपक्षे चतु-र्दशीव्यतिरिक्तायां यस्यां कस्याञ्चित्तिथौ श्राद्धविधानादमा-वास्यापि लभ्यत इत्यत्र कोविशेष इत्यत्राह स एव "अत्रेन्दु-राद्ये प्रहरेऽवतिष्ठते चतुर्थभागोनकलावशिष्टः। तदन्त एव क्षयमेति कृत्स्नमेवं ज्योतिश्चक्रविदो वदन्ति"॥ अत्र मास-

द्वये चतुर्थभागोनकलावशिष्टः चतुर्थभागोना या कला तया- वशिष्टः कलाभागत्रयमात्रः सप्ताद्यप्रहरे इन्दुरवतिष्ठते अर्था- च्चतुर्द्दश्यष्टमयामे न क्षयारम्भ इति तदन्त एवामावास्यान्तयाम एव कृत्स्नं क्षयमेति अन्यत्रामावास्या सप्तमयाम इति विशेषः तेन मार्गशीर्षं ज्यैष्ठयोरुभयदिने चन्द्रक्षयलाभे यद्यपि यदा चतुर्द्दशीयामर्मिति वचनात् पूर्वदिन एव प्राप्नोति तथापि तद्वचनं चन्द्रक्षयानुरोधमूलमिति कृत्स्नक्षयानुरोधात् क्षीणा- यामपि परत्रापराह्णलाभे श्राद्धं अन्यथैतद्विशेषाभिधानं व्यर्थं स्यात्। तत्रापि विशेषान्तरमाह स एव "यस्मिन्नब्दे द्वादशैकश्च यव्यस्तस्मिन् तृतीयया परिदृश्योनोपजायेत"॥ यव्यो मासः। तृतीयया मात्रया चतुर्थभागोनकलया परि- दृश्यश्चन्द्रो न भवति किन्तु तदधिक न्यूनकलयेति तेन मल- माससंयुताब्दे अन्यमासवदनयोरपि चतुर्दश्यन्त्यामादिदर्श- सप्तमयामपर्य्यन्तं क्षय इति मलमासयुताब्दस्तु एकस्मान्मल- मासादब्दद्वयानन्तर तृतीयाब्दे मलमासस्यावश्यम्भावादिति चन्द्रक्षयानुरुद्धम्। क्षीणापक्षमुपसंहरति स एव "एवं चारं चन्द्रमसो विदित्वा क्षीणे तस्मिन्नपराह्णे च दद्यात्"। एवं चारं गतिविशेषम्। स्तम्भितायां विशेषमाह स एव "संमिश्रा या चतुर्द्दश्या अमावास्या भवेत् क्वचित्। खर्वितां तां विदुः केचिदुपेध्वमिति चापरे"॥ क्षीणायाः पूर्वमुक्तत्वाद्वर्द्धमाना- याश्च वक्ष्यमाणत्वादस्य स्तम्भितापरत्वम्। खर्वितां नीचां पितृलोकप्रापणानर्हाम्। केचित् यजुर्वेदिनः अपरे ऋग्वे- दिनः तामिवोपेध्वम् उपगच्छत श्राद्धायेतिशेषः। उपेध्वमित्यत्र गताध्वामिति पाठे गतः प्राप्तः पितृलोकप्रापणायैव अध्वा अन- येति गताध्वां प्रशस्तामित्यर्थः तस्मात् छन्दोगा उभयानुरो- धादिच्छात उभयादरं कुर्वन्तीति कात्यायनस्वरसः। व्यक्त-

माह लघुहारीत: 'त्रिमुहूर्त्तापि कर्त्तव्या पूर्वा दर्शा च वह्वृचैः। कुहूरध्वर्य्युभिः कार्य्या यथेष्टं सामगोतिभिः"। अत्र त्रिमुहूर्त्तत्वपादानात् खर्ब्बितायां पूर्वदिने त्रिमुहूर्त्तमात्रलाभेऽपि वह्वृचानां श्राद्धं न मुख्यापराह्नलाभादपि परदिने। सामगानां तत्राप्य नियत: एतादृग्विषय एवोभयत्रापराह्नालाभेऽपीयं व्यवस्थेति श्राद्धविवेक:।

मुख्यापराह्नस्यैकदिनलाभेऽप्युभयदिनालाभात् वर्द्धमानायां व्यवस्थामाह स एव। "वर्द्धमानाममावास्यां लक्षयेदपरेऽहनि। यामां स्त्रीनधिकान् वापि पितृयज्ञस्ततो भवेत्"॥ यामां स्त्रीनिति पूर्वदिवसीययामत्रयन्यूनचतुर्दश्यपेक्षया अथैवं वासरतृतीयांशानुरोधेन श्राद्धविधानात् कथममावास्याश्राद्धे पर्य्युदस्तेतरकालपरिग्रह: सत्यं तिथिद्वैधे क्षीणादिभेदेन खण्डविशेषपरिग्रहाय वासरतृतीयांशापेक्षा अन्यथोभयदिने वासरतृतीयांशाप्राप्तौ श्राद्धलोपापत्ते: प्रागुक्तनिरन्यादे: कुहूमतेत्यस्य निर्विषयतापत्तेश्च अत: पर्य्युदस्तेतरकालस्यापि परिग्रह:। यदा तु पूर्वापरखण्डयोरन्यतरस्यैव परिग्रह: तदा यथायोग्यं तत्रैव सायाह्नमुहूर्त्तद्वयपर्य्युदस्तेतरकालकुतपादिमुहूर्त्तपञ्चकरौहिणादि-मुहूर्त्तचतुष्टयवासरतृतीयांशीयापराह्नमुहूर्त्तद्वयकालपञ्चको यथाक्रममापत्तामान्यप्रशस्तप्रशस्ततरप्रशस्ततमत्वेन ज्ञेय:। एतद्विस्तारस्तु तिथितत्त्वे। मलमासपर्य्युदासविचारो तु मलमासतत्त्वेऽप्यनुसन्धेयाविति।

अथैकोद्दिष्टश्राद्धविचार:। तत्र गोभिल:। "अथैकोद्दिष्टमेकं पवित्रमेकोऽर्घ्यं एक: पिण्डो नावाहनं नाग्नौ करणं नात्र विश्वेदेवा:। स्वदितमिति तृप्तिप्रश्न: सुस्वदितमिति प्रत्युत्तरम्। उपतिष्ठतामित्यक्षय्यस्थाने अभिरम्यतामिति विसर्गोऽभिरतोऽस्मीति प्रतिवचनमेतत्प्रेतश्राद्धमिति"॥ अथेत्यने-

नैकोद्दिष्टस्य पार्वणानन्तर्य्याभिधानं तयोः प्रकृतिविकृतित्वं सूचयति । अतएवैकोद्दिष्टे "पार्वणधर्मप्राप्त्यावाहनादिप्राप्तौ नावाहनमित्यादिनिषेध उपपद्यते अन्यथा प्राप्त्यभावान्निषेधोऽनुपपन्नः स्यात् एतत् प्रेतश्राद्धमित्युपसंहारात् एकं प्रेतमुद्दिश्य यद्दीयते श्राद्धं तदेकोद्दिष्टमिति वैदिकप्रयोगाधीनयौगिकम् अतएव प्रतिसांवत्सरिकस्य नैकोद्दिष्टत्वं किन्त्वेकोद्दिष्टविधिकत्वम् अत्रार्घ्यैक्यात् द्विदलरूपसङ्केतितपवित्रैक्यप्राप्तौ एकं पवित्रमिति पुनरभिधानसार्थकत्वाय तदवयवैकदलपरम् । आज्योत्पवनप्रकरणे "तत एव बर्हिषः प्रादेशमात्रे पवित्रे कुरुते" इति गोभिलसूत्रे पवित्रपदस्य दलपरत्ववत् । न च तत्रापि साङ्केतितद्विदल पवित्रद्वयपरं प्रादेशमात्रे इति विशेषणवैयर्थ्यात् "अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च । प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्" इति सङ्केतादेव तज्ज्ञाभात् दललक्षणा तु "पवित्रेस्थो वैष्णव्याविति विष्णोर्मनसापूतेस्थः" इति मन्त्रयोर्द्विवचनोपपत्तये । एवञ्च छन्दोगपरिशिष्टेन यद्विशिष्टद्विदले पवित्रपदं सङ्केत्य आज्यस्योत्पवनार्थं यत्तदप्येतावदेव द्विदलेत्यनेन प्रागुक्त गोभिलसूत्रोक्तैकदलपवित्रयोरेकपवित्राभिधानं तत् "देवस्त्वा सवितोत्पुनात्वच्छिद्रेण पवित्रेण" इत्यादिमन्त्रस्थ पवित्रेण इत्याद्येकवचनोपपत्तये । अत्र नावाहनं नाग्नौकरणमिति निषेधयोः पौर्वापर्य्यादग्नौकरणपूर्वकालीनं प्रधानसम्बन्धि श्राद्धसूत्रोद्दिष्टं श्राद्धार्थावाहनमेव निषिध्यते नत्वप्रधान-सम्बन्धि पितृ-यज्ञवदित्यतिदेशप्राप्तं पिण्डार्थावाहनमिति एतेन पिण्डार्थावाहननिषेधो मैथिलोक्तो हेयः । अत्राग्नौकरणनिषेधेन हुतशेषस्यालाभे हुतशेषं दत्त्वा पात्रमालभ्य जपति पृथिवीत्यादि स्वाहा इत्यन्त सूत्रोक्तपात्रालम्भनस्यापि वाधः आनन्तर्य्याभावात् अमृतमिति मन्त्रलिङ्ग-

विरोधाच्च । स्वदितमिति तृप्तिप्रश्न इति तृप्ताःस्थ इति तृप्ति-प्रश्ने स्वदितमिति प्रश्नः । कुथमयब्राह्मणपक्षे तु प्रतिवचनानु-पपत्त्या प्रश्नस्यापि निवृत्तिः अक्षय्यशब्दस्थाने उपतिष्ठतामिति प्रयोगः अत्रोपतिष्ठतामित्यनेनान्नादिकमित्यस्यान्वये अस्त्वित्य-स्यान्वयानुपपत्त्या तस्याप्यप्रयोगः । अतएव पितृदयितायां मन्नादिकमुपतिष्ठतामिति लिखितम् । ततश्च "प्रेतायाचक्षय्य-मस्तु" इति । ब्रह्मपुराणीयं "ततो वदेत् पुनर्धीमानक्षय्यमुप-तिष्ठताम्" इति मार्कण्डेयपुराणीयञ्च गोभिलविरुद्धत्वात् शाख्यन्तरीयम् । अभिरम्यतामिति वाजे वाजे इति स्थाने-ऽभिरम्यतामित्यनेन विसर्जनमिति एतेन "प्रेतश्राद्धेषु सर्वेषु न स्वधा नाभिरम्यताम् । स्वस्त्यस्तु विसृजे देवं सकृत् प्रणव-वर्जितम्" ॥ इत्याश्वलायनगृह्यपरिशिष्टात् एकोद्दिष्टे प्रणव-वर्जितस्वस्त्वित्यनेन यद्विसर्जनं तत्प्रेतश्राद्धविषयम् अभिरम्यता-मिति तु सांवत्सरिकविषयमिति कल्पतरुश्रीदत्तवाचस्पति-मिश्राद्युक्तं निरस्तम् । बहृचानामेव पार्वणेऽभिरम्यतामिति विसर्जनस्य प्राप्तत्वादेकोद्दिष्टेऽपि तथा त्वात् सर्वशाखिसाधा-रणनिषेधानुपपत्तेश्च । एतदिति पूर्वोक्तेति कर्त्तव्यताकश्राद्ध-मित्यर्थः । प्रेतश्राद्धं प्रेतस्य श्राद्धं न तु पार्वणविकृतित्वेन प्राप्तपितृलोकरूपपितुः श्राद्धम् अकृतसपिण्डीकरणस्य तथा-विधपितृत्वाभावात् अतएवैतन्न्यायमूलकमेवाश्वलायनगृह्यप-रिशिष्टेऽपि "पितृशब्दं न युञ्जीत पितृहा चोपजायते" इत्युक्तम् अतएव विष्णुना "प्रेतस्य नाम गोत्राभ्यां दत्ताक्षय्यो-दकेषु" । इत्यत्र प्रेतनामगोत्राभ्यामित्यनेन प्रेतस्येत्युक्तं न तु सम्बन्धिन इत्युक्तं ततश्च मन्त्रे प्राप्तपितृलोकोपाधिक एव पितृपदस्थाने प्रेतपदोहो न तु अग्निस्वात्ताद्युपाधिके एव-मभिलापवाक्येऽपि सम्बन्धित्वेन नोल्लेखः किन्तु प्रेतत्वेन

असम्बन्धिनोऽपि मठब्राह्मणादेरपि प्रेतश्राद्धाधिकारित्वात् । अतएव शातातपेनापि "प्रेतान्तनामगोत्राभ्यमुत्सृजेदुपतिष्ठताम्" इत्युक्तम् अत्र प्रेतस्यान्तः प्रेतान्तो न तु सम्बन्धिवाचकस्यान्तः न वा मैथिलोक्तो बहुव्रीहिस्तस्य तत्पुरुषापेक्षया जघन्यत्वात् प्रेतपदस्य सम्बन्धिस्थानीयत्वेन तत्पुरुषस्यैव युक्तत्वाच्च । ततश्च प्रेतान्तनाम च गोत्रञ्च इति द्वन्द्वः अतएव तर्पणे विष्णुः "अपश्च सर्वे शवस्पर्शिनो गत्वा पितृपदस्थाने प्रेतपदोहेन द्वितीयान्तं तर्पयेयुः पितृशब्दोच्चारणे पितृहा भवति" इति एतेषां वचनानां न्यायमूलकत्वात् सांवत्सरिकश्राद्धे एकोद्दिष्टविकृतीभूतेऽपि प्राप्तपितृलोकाद्यधिकपितृपदवन्मन्त्रेऽभिलापे च सम्बन्धिबोधकपितृत्वेनैवोल्लेखः । एवञ्च देवताभ्यः पितृभ्यश्चेत्यत्र न प्रेतपदोहः पितृपदस्य दिव्यपितृपरत्वात् एवं नैकवचनोहोऽपि तथा मधुद्यौरस्तु नः पितेत्यस्य द्यौः स्वर्गः पिता पितेव सर्वस्याधिगम्यत्वात् मध्वस्तु मधुमयी भवत्विति भाष्यव्याख्याने । द्यौरिति पितेति पदयोः सामानाधिकरण्यं प्रतीयते अत्र च द्युत्वपितृत्वयोर्भेदेऽपि सामानाधिकरण्येनाभेदावगमात् दिवः पितृसाधर्म्यप्राप्तिरिति पितृपदं पितृतुल्यपरं न तु जनकपरं प्राप्तपितृलोकपरं वेति तेन अत्र मन्त्रे पितेत्येव वक्तव्यं न तु प्रेतपदोहः न वा पितृशब्दं न युञ्जीतेत्यनेन निषेधः एवमामावेति मन्त्रे पितरेत्यत्र नोहः यदाहं श्राद्धं करोमि तदा मातरपितरावागच्छतामित्यनुव्रजने क्रियमाणे श्राद्धफलस्य प्रार्थनीयत्वात् एवं वृद्धिश्राद्धेऽप्येतेषु नान्दीमुखविशेषणं न देयमेवेति अन्यत्र सर्वत्रोत्सर्गवाक्ये मन्त्रे च पितृपदप्रयोगनिषेधात् प्रेतपदोहः कार्यः ।

अनेकोद्दिष्टे गोभिलानुक्तो निषेधोऽभिधीयते । यथा विष्णुः । "एकवन्मन्त्रानूहेतैकोद्दिष्टे" इति एकवत् एकवचनवदुयाथ

स्यात्तथोहेत अपूर्वोत्प्रेक्षणमूह इत्युक्तेन पूर्वप्राप्तैकवचनान्तरत्वकल्पने बहुवचनान्तान्मन्त्रानविकृतान् कुर्य्यात् एकस्मिन् पितरि बहुवचनस्यासमवेतार्थत्वात् प्रकृतावर्थप्रकाशनाख्यदृष्टप्रयोजनकस्य मन्त्रस्य विकृतौ बहुवचनस्थाने एकवचनोहः कर्त्तव्य इति न्यायमूलमिदं वचनम्। यथा पवित्रेस्थो वैष्णव्याविल्यत्र पवित्रमसि वैष्णवीति न चात्र पवित्रमसि वैष्णव्य इति पितृदयितोक्तं युक्तं पवित्रेस्थो वैष्णव्याविति मन्त्रस्य हे पवित्रे युवां विष्णुदेवताके स्थः भवथः स्त्रीलिङ्गत्वं छान्दसमिति सायनाचार्य्यव्याख्याने गुणविष्णुनापि तथा व्याख्याने सम्बुद्ध्यन्तता प्रतीतेः एवं विष्णोर्मनसा पूतेस्थ इत्यत्रापि पूतमसीति। "अत्र पितरो मादयध्वं यथा भागमावृषायध्वम्" इति मन्त्रे अत्र प्रेत मादयस्व यथा भागमावृषायस्वेत्यूह्यम्। प्रार्थनार्थकतृतीयलकारीयमध्यमपुरुषबहुवचनस्थाने तदेकवचनस्यैव ऊह्यत्वात् न तु भूतार्थकचतुर्थलकारीयमावृषायथा इत्यनिरुद्धभट्टोक्तो युक्तः अतएव श्रीदत्तादिभिरपि मादयस्वेत्युक्तम् अमीमदन्त पितर इत्यत्रामीमदत् प्रेतेति वृषायिषतेत्यत्र वृषायिष्टेति एतपितर इत्यादि पिण्डार्थावाहनमन्त्रे एहि प्रेतेति सोम्यास इत्यत्र सोम्येति दत्तास्मभ्यमित्यत्र देह्यस्मभ्यमिति नियच्छतेत्यत्र नियच्छेति नमोव इत्यादि मन्त्रेषु पितर इति स्थानचतुष्टये प्रेतेत्यूह्यम्। एवं व इत्यत्र ते इति आशीः प्रार्थने येभ्य इत्यत्र यस्मै इति तेषामित्यत्र तस्मै त्यूह्यम्। एतद्वः पितर इत्यत्र तु प्रेता इति विकृतावूह्योनतु बहुवचनस्य "एतद्वः पितरो वास इति जल्पने पृथक् पृथक्" इति ब्रह्मपुराणेन प्रकृतावेव पार्वणे पित्रादिषु प्रत्येकमेतद्वः पितर इति बहुवचनान्तमन्त्रप्रयोगात् अत्रानर्थक्येन तद्विकृतावेकोद्दिष्टेऽप्यसमवेतार्थं बहुवचनस्यैव युक्तत्वात् ततश्च प्रकृतौ समवेतार्थ-

स्यैव विकृतावूहः सांवत्सरिकेत्वेकवचनस्यैवोक्तो न तु पितृपदस्य तत्र प्राप्तपितृलोकत्वेन तस्यैव युक्तत्वात्। स्मृतिः। "प्रेतश्राद्धे यदुच्छिष्टं गृहे पर्य्युषितञ्च यत्। दम्पत्योर्भुक्तशेषञ्च न भुञ्जीत कदाचन"॥ उच्छिष्टं पाकपात्रेऽवशिष्टं गृहे उपरागे पर्य्युषितं स्थितं दम्पत्योराश्रमस्वामिनोर्भोजनानन्तरं पाकस्थाल्यामवशिष्टमिति श्राद्धचिन्तामणिः। यत्तु देवलवचनम् "एकोद्दिष्टस्य शेषन्तु ब्राह्मणेभ्यः समुत्सृजेत्। पश्चात् स्वयञ्च भुञ्जीत पुनर्मङ्गलभोजनम्" इति तस्यैकोद्दिष्टशेषं ब्राह्मणेभ्यः समुत्सृजेत् नत्ववशेषयेत् पुनर्मङ्गलभोजनं पाकान्तरकृतान्नं भुञ्जीतेत्यन्वयः।

अथाशौचान्तद्वितीयदिन आद्यश्राद्धात् पूर्वकृत्यमाह देवलः। 'अघाहः सु निवृत्तेषु सुस्नाताः कृतमङ्गलाः। आशुच्यादिप्रमुच्यन्ते ब्राह्मणान् स्वस्तिवाच्य च" मङ्गलं स्वशाखोक्तशान्त्युदक गोहिरण्यादिस्पर्शः जलादिस्पर्शमाह मनुः। विप्रःशुद्ध्यत्यपः स्पृष्ट्वा क्षत्रियो वाहनायुधम्। वैश्यः प्रतोदं रश्मीन् वा यष्टिं शूद्रः कृतक्रियः"। अशौचकालोत्तरं कृतस्नान इति मिताक्षरा अत्राघाहः सु निवृत्तेष्वित्यनेन एकादशाहादेरशौचान्त द्वितीयाहत्वं सूचितम्। सुस्नाता इत्यादिना विप्रः शुद्ध्यत्यपः स्पृष्ट्वेत्यादिना च यथाशक्तिसमुच्चय विकल्पाभ्यां तत्तत्करणेन वैदिककर्मार्हतेति।

आद्यश्राद्धकालमाह याज्ञवल्क्यः। "मृताहनि तु कर्त्तव्यं प्रतिमासन्तु वत्सरम्। प्रति संवत्सरञ्चैवमाद्यमेकादशेऽहनि"। एकादशेऽहनीति स्वस्वा शौचान्तद्वितीयदिनोपलक्षणम्। "क्षत्रादिः सूतकान्ते तु भोजयेदयुजो द्विजान्" इति मत्स्यपुराणैकवाक्यत्वात्। आद्यं षोड़शश्राद्धानामादिभूतम्। तथा च छन्दोगपरिशिष्टम्। "श्राद्धमग्निमतः कुर्य्यात् दाहा-

ऐकादशेऽहनि । ध्रुवाणि तु प्रकुर्वीत प्रमीताहनि सर्वदा । द्वादशप्रतिमास्यानि आद्यं षाण्मासिके तथा । सपिण्डीकरणञ्चैव इत्येतत् श्राद्धषोड़शम् । एकाहेन तु षण्मासा यदा स्युरपि वा त्रिभिः । न्यूनाः संवत्सराश्चैव स्यातां षाण्मासिके तदा" ॥ अग्निमतः श्रौताग्निमतो दाहादेकादशेऽहनि श्राद्धं कर्त्तव्यं तस्य दाहावधिदशाहाशौचित्वात् । अन्येषान्तु मरणावधि । तथाच शङ्खः । "मरणादेव कर्त्तव्यं संयोगो यस्य नाग्निना । दाहादूर्द्ध्वमशौचं स्याद् यस्य वैतानिको विधिः" ॥ वैतानिकः श्रौतो होमः तस्मादग्निपदं श्रौताग्निपरम् । ततश्च केवलस्मार्त्ताग्निमतो निरग्नेश्च मरणादेवाशौचम् । ध्रुवाणि एतानि षोड़शश्राद्धानि नित्यानि सर्वदा मृतधनालाभेऽपि प्रमीताहनि मृततिथौ । आद्यश्राद्धषाण्मासिकश्राद्धद्वयेतरश्राद्धानि कार्य्याणि । आद्यश्राद्धस्यैकादशाहे विधानात् षाण्मासिकयोस्तु कालान्तरविधानात् अत्राशौचान्तद्वितीयदिवसीयाद्यश्राद्धस्यादिभवत्वसमाख्यानुरोधेन तदुत्तरकर्त्तव्यमासिकतिथेर्मृततिथित्वानुपपत्त्या तत् सजातीयत्वमेव प्रतीयते । तेन प्रथममृततिथिं विहायान्यमृततिथिमादाय मासिकादिसिद्धिरिति । एवञ्च एकाहेन तु षण्मासान्यूना इत्यनेन मृततिथिपूर्वतिथिः प्रतीयते । एवं त्रिभिरित्यत्रापि तथा संवत्सरस्याप्येकाहादिन्यूने अत्र संवत्सरकर्त्तव्यस्यापि षाण्मासिकत्वं द्वितीयषण्मासभवत्वाभानुपपन्नम् । संवत्सराभिधानन्त्वादिमध्याधिमासयुक्तप्रथमाब्दस्य द्वादशमासाः संवत्सरः क्वचित् त्रयोदशमासाः संवत्सर इति श्रुत्यनुसारेण त्रयोदशमासघटितत्वात् त्रयोदशमास एव द्वितीयषाण्मासिककरणाय कालः सप्तममासकर्त्तव्यस्य षाण्मासिकत्वं "षष्ट्या तु दिवसैर्मासः कथितो वादरायणैः" इत्यनेनाविरुद्धम् । ननु षोड़शश्राद्धगणने

द्वादशमासिकत्वमुक्तं कथं मलमासयुताब्दे त्रयोदशमासिकत्वमिति चेन्न "संवत्सरस्य मध्ये तु यदि स्यादधिमासकः । तदा त्रयोदशश्राद्धं कार्य्यं तदधिकं भवेत्" ॥ इति सत्यव्रतवचनेन द्वादशमासिकादधिकं त्रयोदशमासिकं श्राद्धमित्युक्तेः । एतद्वचनं न्यायमूलकम् एवं मृताहनि प्रतिमासं श्राद्धं कुर्य्यात् "मृताहनि तु कर्त्तव्यं प्रतिमासन्तु वत्सरम्" इति वचनद्वयेन पूर्वोक्तश्रुतिप्राप्तत्रयोदशमासात्मकं संवत्सरं व्याप्य मृततिथेर्मृततिथिं यावच्चान्द्र इत्युक्त्वा तत् प्रतिमासकर्त्तव्यमासिकानुरोधेन तत्पत्नीय तत्तत्तिथिषु श्राद्धं बोधयता इति अर्थापत्त्या वैशाखादिमृतस्यान्त्यमासिकं तन्मासीय तत्पत्नीय तत्तत्तिथिषु कर्त्तव्यमिति बोधनात् मध्येऽधिमासपाते द्वादशे मासि मृतमासीयतिथ्यप्राप्त्या वर्षान्तविहितस्य मासिकस्य सपिण्डनस्य चाप्राप्तेः । एवमाद्याधिमासेऽपि अतएवाद्याब्देऽधिमासपातेऽपि लघुहारीतेन द्वादशमासे यद्द्वादशमासिकमित्युक्तं तदन्याधिमासविषयम् । अत्र द्वादशमासे मृतमासीय तत्तत्तिथिप्राप्तेः । यथा लघुहारीतः "प्रत्यब्दं द्वादशे मासि कार्य्या पिण्डक्रिया द्विजैः । क्वचित्त्रयोदशेऽपि स्यादाद्यं मुक्त्वा तु वत्सरम् ॥ चक्रवत् परिवर्त्तेत सूर्य्यः कालवशाद् यतः । अतः सांवत्सरं श्राद्धं कर्त्तव्यं मासचिह्नितम् ॥ मासचिह्नन्तु कर्त्तव्यं पौषमाघाद्यमेव हि । यतस्तत्र विधानेन मासः स परिकीर्त्तितः ॥ असंक्रान्तेऽपि कर्त्तव्यमाब्दिकं प्रथमं द्विजैः । तथैव मासिकं पूर्वं सपिण्डीकरणन्तथा ॥ गर्भे वार्द्धुषिकत्वे च मृतानां पिण्डकर्म्मसु । सपिण्डीकरणे चैव नाधिमासं विदुर्बुधाः ॥ सपिण्डीकरणादूर्द्ध्वं यत् किञ्चित् श्राद्धिकं भवेत् । इष्टं वाप्यथवा पूर्त्तं तन्न कुर्य्यान्मलिम्लुचे" ॥ पिण्डक्रिया सांवत्सरिकश्राद्धं क्वचिन्मलमासयुताब्दे आद्यवार्षिकन्तु न

त्रयोदशे मासि किन्तु द्वादशे मासीत्यर्थः। ननु "यस्मिन्राशि-गते भानौ विपत्तिं यान्ति मानवाः। तेषां तत्रैव कर्त्तव्या पिण्डदानोदकक्रिया"॥ इति सत्यव्रतेन सौरमासविशेष-चिह्नितमृताहे श्राद्धं विहितम्। ततश्च त्रयोदशे मासि तत्करणे मृताह एव श्राद्धं न कृतं स्यादित्याह चक्रवदिति राशिचक्रे चक्रवत् परिभ्रमन् सूर्य्यो गतेर्मन्दत्वामन्दत्वाभ्यां कदाचिदेकराशिभोगसमाप्तावपि मृततिथिं न स्पृशति तिथि-द्वयं वा एकराशौ स्पृशति यदा न स्पृशति तदा श्राद्धलोपः स्यात् यदा चोभयं स्पृशति तदा संशयः स्यादतः सौरमास-चिह्नितं श्राद्धं न कर्त्तव्यं किन्तु मुख्यचान्द्रमासचिह्नितं कर्त्तव्यम्। तथाच लघुहारीतः। "इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः। अग्नीषोमौ स्मृतौ मध्ये समाप्तौ पितृसोमकौ॥ तमतिक्रम्य तु यदा रविर्गच्छेत् कदाचन। आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्रकृतः स्मृतः॥ तस्मिंश्च प्रकृते मासि कुर्य्यात् श्राद्धं यथाविधि। तथैवाभ्युदयं कार्य्यं नित्यमेकं हि सर्वदा"॥ शुक्लप्रतिपदीन्द्राग्नियागः कृष्णप्रति-पद्यग्नीषोमयागः। अमावास्यायां पितृसोमयागः। एतेषां प्रमाणं मलमासतत्त्वेऽनुसन्धेयम्। अत्रादिमध्यसमाप्तिकीर्त्त-नात् शुक्लप्रतिपदादिदर्शान्त एव मासपदस्य शक्तिः प्रतीयते। ततश्च तथाविधं मासमभिधाय चक्रवदित्यभिधानेन सौरे दोषं प्रदर्श्य दर्शान्त एव मासि सांवत्सरिकं कार्य्यमित्युक्तं तत्रैकस्यास्तिथेर्द्वित्वलोपयोरभावात्। तत्र दर्शान्तस्यानेक-त्वात् कुत्र श्राद्धमित्यनध्यवसाये मासविशेषचिह्नितमाह पौष-माघाद्यमिति स पौषादिः कीदृक् तस्य चान्द्रे वा कथं शक्ति-रित्यत आह यतस्तत्र विधानेनेति विधानेन श्रुत्यादिना। तथाच श्रुतिः "सा वैशाखस्यामावास्या या रोहिण्या सम्प-

ध्यते" इति अत्र वृषराशिभोग्यरोहिणीनक्षत्रयुक्तामावास्या वैशाखस्येति प्रतिपादयन्ती श्रुतिः चान्द्र एव शक्तिं बोधयति सौरे वैशाखे तदसम्भवात् तथाहि "सूर्य्याचन्द्रमसोर्यः परः सन्निकर्षः सामावास्या" इति गोभिलाच्चन्द्रार्कयोरेकराश्यव-स्थानममावास्येति वृषस्थरवावेव रोहिणीयुक्तवैशाखस्यामा-वास्यासम्भवात् कृत्यचिन्तामणौ व्यासः । "मीनादिस्थो रवि-र्येषामारम्भप्रथमक्षणे । भवेत्तेऽब्दे चान्द्रमासाश्चैत्राद्याः द्वादश-स्मृताः" ॥ येषां शुक्लप्रतिपदादिदर्शान्तानाम् आरम्भप्रथम-क्षणे आद्यक्षतिरूपस्यारम्भस्याद्यसमये मीनमेषादिस्थो रवि-र्भवेत् अब्दे वर्षे त एव शुक्लप्रतिपदादिदर्शान्ताश्चान्द्रमासा-श्चैत्रवैशाखाद्यसंज्ञकाः द्वादशमासाः स्मृताः द्वादशेति न पुन-र्मलमासेऽपि संज्ञान्तरं किन्तु द्विचैत्रादिरिति । तथाच ज्योतिषे "मिथुनस्थो यदा भानुरमावास्याद्वयं स्पृशेत् । द्विरा-षाढ़ः स विज्ञेयो विष्णुः स्वपिति कर्कटे" ॥ त्रयोदशा अपि द्वादशसंज्ञका इति व्यासेनोपदेशिकौ शुक्लादिमासे चैत्रादेः शक्तिरभिहितेति । अतएव श्राद्धविवेके मीनादिस्थरविप्रारब्ध-शुक्लप्रतिपदादिदर्शान्तश्चैत्रादिरिति । एवञ्च "असंक्रान्तमासो-ऽधिमासः स्फुटः स्यात् द्विसंक्रान्तमासः क्षयाख्यः कदाचित् । क्षयःकार्त्तिकादित्रये नान्यदा स्यात्तदा वर्षमध्येऽधिमासद्वयं स्यात्" इति ज्योतिःशास्त्रोक्तक्षयमासे व्यासोक्तलक्षणसङ्गति-र्मलमासतत्त्वेऽनुसन्धेया । असंक्रान्त इति असंक्रान्ते मलमासे आब्दिकं प्रथकं सपिण्डीकरणं सपिण्डीकरणमिति पञ्चम्यर्थे प्रथमा । सपिण्डीकरणात् पूर्वं मासिकं प्रेतस्य कार्य्यं न तु सपिण्डीकरणात् परं प्राप्तपितृलोकस्य प्रतिमासविहितं पार्वणं कर्त्तव्यं गर्भे गर्भकृत्ये पुंसवनादौ वार्द्धुषिकृत्ये वैश्यस्य गोभि-लाद्युक्ते पिण्डकर्म्मप्रेतपिण्डदानं पुनः सपिण्डीकरणग्रहणं

मलमासेऽपि सपिण्डीकरणापकर्षार्थं श्राद्धमेव श्राद्धिकं स्वार्थे ठक् यत् किञ्चिदित्यनेन पार्वणादिसकलश्राद्धनिषेधः। सामान्यतो निषेधेऽपि मघाश्राद्धादेः प्रतिप्रसवमाह माधवाचार्य्यधृतो व्यासः। "जातकर्म्मान्त्यकर्म्माणि नवश्राद्धं तथैव च। मघात्रयोदशीश्राद्धं श्राद्धान्यपि च षोडश॥ चन्द्रसूर्य्यग्रहे स्नानं श्राद्धं दानं तथा जपः। कार्य्याणि मलमासेऽपि नित्यनैमित्तिकं तथा" इति। जातकर्म्मान्त्यकर्म्माणि जातकर्म्मान्नप्राशननाम करणानि मुख्यकालकर्त्तव्यानि। अन्यथा "नामान्नप्राशनं चौड़ं विवाहं मौञ्जिबन्धनम्। निष्क्रमं जातकर्म्मापि काम्यं वृषविसर्जनम्॥ अस्तं गते गुरौ शुक्रे बाले वृद्धे मलिम्लुचे। उपायनमुपारम्भं व्रतानां नैव कारयेत्"॥ इति गर्गवचनविरोधः स्यात् अतएव "नामान्नजातकर्म्माणि यथाकालं समाचरेत्। अतिपाते तु कुर्वीत प्रशस्ते मासि पुण्यदे"॥ इति गर्गवचनान्तरं सङ्गच्छते। वृषोत्सर्गं काम्येति विशेषणात् "अशौचान्तद्वितीयेऽह्नि यस्य नोत्सृज्यते वृषः। पिशाचत्वं ध्रुवं तस्य दत्तैः श्राद्धशतैरपि"॥ इति मैथिलधृतवचनबोधिताशौचान्तात् द्वितीयदिनविहितवृषोत्सर्गः कार्य्य इत्यर्थः। इष्टमग्निहोत्रादि पूर्त्तं खातादि। तथाच जातूकर्णः "वापीकूपतड़ागादिदेवतायतनानि च। अन्नप्रदानमारामाः पूर्त्तमित्यभिधीयते॥ अग्निहोत्रं तपः सत्यं वेदानां चानुपालनम्। आतिथ्यं वैश्वदेवश्च इष्टमित्यभिधीयते"॥ नित्यमेकं हि सर्वदेति नित्यमेकं केवलं नित्यम् अहरहः क्रियमाणं श्राद्धं न नित्यनैमित्तिकं पार्वणश्राद्धादि अतएव नित्यस्य नित्यनैमित्तिकस्य च भेदमाह मार्कण्डेयपुराणम्। "नित्यं नैमित्तिकञ्चैव नित्यनैमित्तिकं तथा। गृहस्थस्य च यत्कर्म्म तन्निशामय पुत्रक॥ पञ्चयज्ञाश्रितं नित्यं यदेतत् कथितं

द्विज। नैमित्तिकं तथाप्यन्यत् पुत्रजन्मक्रियादिकम्। नित्य-नैमित्तिकं ज्ञेयं पर्वश्राद्धादिपण्डितैः" ॥ सर्वदा मलमासे प्रकृतमासेऽपि।

आद्यश्राद्धेति कर्त्तव्यतायां वराहपुराणम्। "आसनं चोपकल्पेत मन्त्रेण विधिपूर्वकम्"। मन्त्रस्तु "अत्रासने देवराजाभ्यनुज्ञातो विश्राम्यतां द्विजवर्य्यानुग्रहाय प्रसादये त्वासनं गृह्णपूतं ज्ञानाग्निपूतेन करेण विप्र" इति तथा "आवरणार्थञ्च तेच्छत्रं ब्राह्मणाय प्रदीयते। पश्चादुपानहौ दद्यात् पादस्पर्शकरे शुभे ॥ सन्तप्तवालुकां भूमिमसिकण्टकितां तथा। सन्तारयति दुर्गाणि प्रेतं ददुपानहौ ॥ तिलोपचारं कृत्वा तु विप्रस्य नियतात्मनः। नामगोत्रमुदाहृत्य प्रेताय तदनन्तरम् ॥ शीघ्रमावाहयेद्भूमि दर्भहस्तोऽथ भूतले" ॥ तच्छत्रं प्रेताय दत्तच्छत्रं प्रदीयते उत्तराप्रतिपत्तिः क्रियते। प्रेतमित्यस्य तु ददादित्यभिसम्बन्धात् सम्प्रदानत्वेऽपि सन्तारयतीति सम्बन्धेन कर्म्मतैव। "अपादानं सम्प्रदानं तथाधिकरणं पुनः। कारणं कर्म्म कर्त्ता च द्वयोर्योगे परं भवेत्" इत्युक्तेः। भूमीति पृथिव्याः सम्बोधनम्। मन्त्रस्तु "इहलोकं परित्यज्य गतोऽसि परमां गतिम्" इति अयञ्च स्त्री श्राद्धेऽविकृत एव पठनीयः एवमावाहिते गन्धपुष्पादीनि समर्पयेत्। गन्धमन्त्रस्तु। "सर्वः सुगन्धः" इति। पुष्पमन्त्रस्तु। "श्रियादेव्या" इति। धूपमन्त्रस्तु। वनस्पतिरस इत्यादि इदञ्च गन्धादिसमर्पणं प्रेताय गन्धादिदानानन्तरं ब्राह्मणे कार्य्यं लघुहारीतः। "सपिण्डीकरणं यावत् प्रेतश्राद्धानि षोड़श। पक्वान्नेनैव कार्य्याणि सामिषेण द्विजातिभिः" ॥ वृहस्पतिः। "वस्त्रालङ्कारशय्याद्यं पितुर्यद्वाहनायुधम्। गन्धपुष्पैः समभ्यर्च्य श्राद्धभोक्त्रे निवेदयेत्। भोजनञ्चानेकविधिं कारयेद्व्यञ्जनानि च"। जाबालिः।

"पितृयज्ञन्तु निर्वर्त्त्य मासिके श्राद्ध एव तु। श्राद्धं प्रतिरुचौ चैव मातापित्रोर्मृताहनि। असपिण्डीकृतं प्रेतमेकोद्दिष्टेन तर्पयेत्"॥ पितृयज्ञं पितृतर्पणं निर्वर्त्त्य क्रियमाणे श्राद्धे ऽहरहः क्रियमाण इत्यर्थः। तेनाम्बुघटश्राद्धे मृताहविहित मासिके तथा विशिष्टतीर्थद्रव्यादिप्राप्तौ प्रेतश्राद्धकरणे क्षायां मातापित्रोर्मृताहनि च असपिण्डीकृतं प्रेतमेकोद्दिष्टेन तर्पयेत्।

षोड़शश्राद्धानां यत् पतितं कृष्णैकादश्यां तत् कर्त्तव्यम्। तथा च लघुहारीतः "श्राद्धविघ्ने समुत्पन्ने मृताहाऽविदिते तथा। एकादश्यां प्रकुर्वीत कृष्णपक्षे विशेषतः"। विशेषत इत्यमावास्या पेक्षया तस्या अपि विघ्नादौ विधानात्। यथा हेमाद्रिधृतं षट्त्रिंशन्मतं "मासिके चाब्दिके त्वह्नि संप्राप्ते मृतसूतके। वदन्ति शुद्धौ तत् कार्य्यं दर्शे चापि विचक्षणाः"। राजमार्त्तण्डे। "श्राद्धविघ्ने समुत्पन्ने अन्तरामृतसूतके। एकादश्यां प्रकुर्वीत कृष्णपक्षे विशेषतः। श्राद्धविघ्ने समुत्पन्ने मृतस्याविदिते तथा। अमावास्यां प्रकुर्वीत वदन्त्येके मनीषिणः"। अत्र मृतसूतकोपादानात् ऋष्यशृङ्गवचनेऽशौच-पदमेतत् परम्। यत्त्वन्तरामृतसूतकेऽप्येकादश्यां श्राद्धविधानं तत् "दैवे पितॄणां श्राद्धे तु अशौचं जायते यदि। तदशौच-व्यतीते तु तेषां श्राद्धं विधीयते। शुचीभूतेन दातव्यं या तिथिः प्रतिपद्यते। सा तिथिस्तस्य कर्त्तव्या नत्वन्या वै कदा-चन"॥ इति ऋष्यशृङ्गवचनविरोधात् अशौचान्तदिने मल-मासादिरूप विघ्नान्तरेण तदकरणे बोध्यम्। अतएव श्राद्ध-विवेके अपाटवाद्य शौचाभ्यामपि पतितमेकोद्दिष्टमेकादश्या-मशौचान्ते च मलमासे न कर्त्तव्यं किन्तु मलमासाव्याप्त कृष्णैकादश्यामेवेत्युक्तम्। यत्तु "जातकर्म्मणि यच्छ्राद्धं नव-

श्राद्धं तथैव च। प्रतिसंवत्सरं श्राद्धं मलमासेपि तत् स्मृतम् । प्रति संवत्सरं श्राद्धमशौचात् पतितन्तु यत् मलमासेऽपि तत् कार्य्यमिति भागुरिभाषितम्" इति ज्योतिर्वचनद्वयं तत्र पूर्व-वचनशेषार्द्धस्य "असंक्रान्तेऽपि कर्त्तव्यमाब्दिकं प्रथमं द्विजैः" इति लघुहारीत वचनैकवाक्यतयास्याधिमासविषयत्वात् । "मलमासमृतानान्तु श्राद्धं यत् प्रतिवत्सरम् । मलमासेऽपि कर्त्तव्यं नान्येषान्तु कदाचन" इति कालमाधवीयधृत पैठीन-सिवचनस्य मलमासमृतविषयत्वाच्च परवचनेऽपि तदुभय श्राद्ध-स्याशौचपतितस्य मलमासाभ्यरे कर्त्तव्यतोक्ता न तु तद्भिन्नस्य अनुपस्थितस्य तस्य च राजमार्त्तण्डे नैकादश्यां कर्त्तव्यतोक्तिः मृताहाविदितेऽपि 'अविज्ञातमृते अमावास्यायां श्रवण दिवसे वा" इति प्रचेतोवचनोक्तामावास्यापेक्षया विशेषत इत्यनेन कृष्णैकादश्याः प्राधान्यं प्रतीयते मृतशब्दोऽत्र मृताहपरः अनिश्चितमरणस्योद्दिष्टिकाभावादिति श्राद्धविवेकः मृताह-नीत्येव सूत्रे पाठो मैथिलपाश्चात्यदाक्षिणात्यानाम् अतामा-वास्यायामिति गमनमाससम्बन्धिन्यां "प्रवासवासरे ज्ञेयं तन्मासेन्दुक्षयेथव" इति स्मरणादिति मिताक्षरा एतच्च मृत-दिनमासयोरज्ञाने वक्ष्यमाण बृहस्पतिवचनात् । मृतमासे ज्ञाते मरणदिनाज्ञाने तु तदीयामावास्यायां तथा च हेमाद्रि-कालादर्शनिर्णयामृत नव्यवर्द्धमानधृतानि वचनानि । बृह-स्पतिः "न ज्ञायते मृताहश्चेत् प्रोषिते संस्थिते सति । मास-श्चेत् प्रतिविज्ञातस्तद्दर्शे स्यान्मृताहनि" । मृताहनीत्यत्र यत् कर्त्तव्यमिति शेषः । प्रोषित इत्यज्ञानकारणोपलक्षणम् । मासाज्ञाने तिथिज्ञाने तु स एव "यदि मासो न विज्ञातो विज्ञातं दिनमेव च । तदामार्गशिरे मासि माघे वा तद्दिनं भवेत्" । कालादर्शनिर्णयामृतयोर्मार्गशिर इत्यत्राषाढ़क

इति पाठः। भविष्यपुराणम्। "दिनमेव तु जानाति मासं नैव तु यो नरः। मार्गशीर्षे तथा भाद्रे माघे वा तद्दिनं भवेत्"। एषु मृताहावधारणसान्निध्यान्मासविशेषो ग्राह्यः। मृतदिनमासयोरज्ञाने तु बृहस्पतिः। "दिनमासौ न विज्ञातौ मरणस्य यदा पुनः। प्रस्थानदिनमासौ तु ग्राह्यौ पूर्वोक्तया दिशा"॥ पूर्वोक्तया दिशेति यथा मरणदिनमासज्ञाने तत् ग्रहणम्। तयोरेकतराज्ञाने यथाव्यवस्थापितं तथात्रापीति तेन प्रस्थानदिनमासज्ञाने तत् ग्रहणम्। प्रस्थानमासमात्रज्ञाने तदीयामावास्या ग्राह्या प्रस्थानतिथिमात्रज्ञाने तु मार्गशीर्षादौ तत्तत्तिथिर्ग्राह्येति। सन्देहेत्वाह यमः। "गतस्य न भवेद्वार्त्ता यावत्द्वादशवार्षिकी। प्रेतावधारणन्तस्य कर्त्तव्यं सुतबान्धवैः। यन्मासि यदहर्यातस्तन्मासि तदहः क्रिया। दिनाज्ञाने कुहूस्तस्य आषाढ़स्याथवा कुहूः"॥ एवञ्च मरणप्रस्थानदिनमासाज्ञाने श्रवणदिवसस्य विषयः। प्रभासखण्डं "मृतस्याहो न जानाति मासं वापि कथञ्चन। तेन कार्य्यममावास्यां श्राद्धं माघेऽपि मार्गके"॥ कथञ्चनेति मरणप्रस्थानदिनमासस्वरूपेण श्रवणदिनस्वरूपेण च केनाप्यज्ञाने यच्च सर्वत्र तत्तन्मासीय कृष्णैकादश्यभाव एव अमावास्या ग्राह्या श्राद्धविघ्न इति वचनात्। अन्यथा तद्वचनस्य मृताहाविदित इत्यस्य विषयानुपपत्तेः। तस्याश्चामावास्यापेक्षया प्राधान्यं तद्वचने विशेष इत्यभिधानात्।

पतितैकादश्याहादिश्राद्धानां कृष्णैकादश्यकरणे श्राद्धान्तरदिने कर्त्तव्यतामाह हेमाद्रिधृतो देवलः। "एकोद्दिष्टे तु सम्प्राप्ते यदि विघ्नः प्रजायते। मासेऽन्यस्मिंस्तिथौ तस्मिंस्तदा दद्यात् प्रयत्नतः"। इत्यत्र लघुहारीतवचने मृताहाविदित इत्यादिना अमासिकसांवत्सरिकश्राद्धमेकादश्यां विहितम्

उपस्थितत्वाद्विघ्नेऽपि तस्यैव श्राद्धस्य एकादश्यां कर्त्तव्यत्वं प्रतीयते नत्वमावास्याश्राद्धादेरनुपस्थितत्वात्। एवञ्च ऋष्यशृङ्गवचने देये पितॄणां श्राद्धेऽशौचमित्यत्र देय इत्यनेन यस्य श्राद्धस्य विघ्नेऽप्यवश्यन्देयत्व मुक्तं तस्यैवाशौचान्ते कर्त्तव्यता नत्वमावास्याश्राद्धादेः। तत्राशौचोत्तरश्राद्धप्रशस्तकालप्राप्ततिथावेव श्राद्धमाह शुचीभूतेन दातव्यमित्यादिना। तथा हि दातव्यमित्यत्र शयनीयवत् श्राद्धं दातुमर्हत्यस्मिन् काल इति कृत्ययुटोऽन्यत्रापीति अर्हतावित्यधिकृत्य शकि च कृत्या इत्याभ्यां सूत्राभ्यामर्हाधिकरणे कृत्यप्रत्ययः। अन्यथा पूर्ववचनपरार्द्धेन पौनरुक्त्यापत्तेः। ततश्च दातव्यं श्राद्धपूज्यकालं मध्याह्नादिकं प्राप्य या तिथिः शुचीभूतेन प्राप्यते सा तिथिस्तस्य श्राद्धस्य कर्त्तव्या करणार्हा नत्वन्या कृष्णैकादशी अशौचरूपविघ्ने प्रतीक्षणीया। ततश्च शुचीभूताव्यवहितदिवसीयश्राद्धप्रशस्तकालप्राप्ततिथिखण्ड नियमादप्रशस्तकालेऽपि तत्तत्तिथिखण्ड एव श्राद्धं न तु शुक्लपक्षेऽपि तत् द्वितीयखण्डेऽनुपस्थितेः। एवञ्चाशौचान्ते सङ्गवाभ्यन्तरसमाप्य तिथौ श्राद्धं मैथिलोक्तं न युक्तम् किन्तु तदुत्तरप्रशस्तकालप्राप्ततिथावेव ' नन्वशौचे तु व्यतीते वै इति वचनादशौचान्त इति प्रयोक्तव्यमिति श्राद्धचिन्तामणिः। मैवं यथा मृताहनि तु कर्त्तव्यमित्यादिना मृताहादेर्निमित्तत्वेऽपि तत्तिथिविशेषत्वे नैवोल्लेखः। यथा वा तत्र विघ्ने एकादश्यादिविधानादेकादश्यादिरूपेणैव निमित्तत्वात्तथैवोल्लेखः। तथात्रापि तदशौचे व्यतीतेत्वित्यादिनाऽशौचान्तविहिते श्राद्धे शुचीभूतेन दातव्यमित्यादिना श्राद्धप्रशस्तकाले प्राप्ततिथिविशेषस्यैव निमित्तत्वात्तथैवोल्लेखो नत्वशौचान्तत्वेन व्यवहारोऽपि तथा।

अथ सपिण्डीकरणम्। तत्र गोभिलः। "पूर्णे संवत्सरे

मध्यमासे त्रिपक्षे यदहर्वा वृद्धिरापद्येत तदहश्चत्वार्य्युदकपात्राणि सतिलगन्धपुष्पोदकानि पूरयित्वा त्रीणि पितॄणामेकं प्रेतस्य प्रेतपात्रं पितृपात्रेष्वासिञ्चति। ये समानाः समनसः पितरो यमराज्ये तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पताम्। ये समानाः समनसो जीवाजीवेषु मामकाः तेषां श्रीर्मयि कल्पतामस्मिन् लोके शतं समाः”। इति एतेनैव पिण्डो व्याख्यात इति। पूर्णे संवत्सरे इति मुख्यकल्पः। तदशक्तौ नवमो मासः संवत्सरान्ते विसर्जनं “नवममासस्यमित्येके” इति पैठीनसिवचनात्। तदशक्तौ षष्ठो मासः। तत्राप्यशक्तौ त्रिपक्षः तत्राप्यशक्तौ अशौचापगमे प्रथममासस्य द्वादशभिर्दिनैर्द्वादशमासिकानि श्राद्धानि निर्वर्त्त्य त्रयोदशाहः सपिण्डीकरणकालः शूद्रस्य द्वादशाहो न तु त्रयोदशाह एव मासिकार्थवत् द्वादशाहश्राद्धं कृत्वा त्रयोदशेऽह्नि वा तत् कुर्य्यात् मन्त्रवर्ज्यं हि शूद्राणां द्वादशेऽह्नीति विष्णुवचनात्। मासिकार्थवदिति मासिकार्थो मासि मासि क्रियमाणश्राद्धप्रयोजनं प्रेताप्यायनादि तत् युक्तं द्वादशाहक्रियमाणश्राद्धमित्यर्थः। यत्र त्वेकादशमासाभ्यन्तरेऽधिमासपातस्तत्र त्रयोदशसु दिनेषु त्रयोदशमासिकानि कृत्वा चतुर्दशेऽह्नि सपिण्डनं कार्य्यमिति “संवत्सराभ्यन्तरे यद्यधिमासो भवति तदा मासिकार्थं दिनमेकं वर्द्धयेत्” इति विष्णुवाक्यात् शूद्रस्य चयोदशदिनेषु त्रयोदशमासिकानि चयोदशेऽह्नि सपिण्डनं दृष्टपरिकल्पनान्यायात्। एवञ्च श्राद्धवृद्धिमात्रं न दिनवृद्धिरिति मिश्रोक्तं ज्ञेयम्। तदृतविष्णुसूत्रे दिनमेकं वर्द्धयेदिति श्रुतेः। श्राद्धाधिक्यमाह सत्यव्रतः “संवत्सरस्य मध्ये तु यदि स्यादधिमासकः। तदा त्रयोदशे श्राद्धं कार्य्यन्तदधिकं भवेत्”। तत्राप्यशक्तौ प्रथममासस्यैकाह एव द्वादश-

मासिकसहितसपिण्डीकरणकालः। "मुख्यं श्राद्धं मासि मासि अपर्य्याप्तावृतुं प्रति। द्वादशाहेन वा कुर्य्यादेकाहे द्वादशाथवा"॥ इति मरीचिवचनात्। अपर्य्याप्तौ अशक्तौ ऋतुर्मासद्वयम्। अत्र कल्पे षष्ठमासिकदिने पञ्चममासिकं कृत्वा प्रथमषाण्मासिकं कृत्वा षष्ठमासिकं कार्य्यं तदाद्युत्कर्षन्यायात्। न तु तत् पूर्वं षाण्मासिकं व्युत्क्रमापत्तेर्न च पञ्चममासिकमपि पूर्वदिने मृततिथ्यभावात् एवमेव वाचस्पतिमिश्रः अपकर्षनिमित्तमाह व्याघ्रः "आनन्त्यात् कुलधर्माणां पुंसां चैवायुषः क्षयात्। अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते"॥ एतच्च द्वादशाहपदं शावाशौचान्तहतीयदिनमात्रपरमिति प्राचीनमैथिलाः अजहत् स्वार्थलक्षणया स्वजात्युक्ताशौचान्तहतीयदिनमात्रोपलक्षकमिति श्राद्धप्रदीपश्राद्धचिन्तामणी। तद्द्वयमप्ययुक्तं "द्वादशाहेन वा कुर्य्यात्" इति मरीचवचने "द्वादशाह श्राद्धं कृत्वा त्रयोदशेऽह्नि वा कुर्य्यात्" इति विष्णुवचनाभ्यामेकवाक्यतया द्वादशाह इत्यस्य द्वादशदिनपरत्वात् कुलधर्म्माणामिति कुलधर्म्मः ज्योतिरागमादिसिद्धानन्तरभाविनाशपरचक्रभयोत्पन्नम्लेच्छदेशगमनादिभिर्निमित्तैरशौचापगमे द्वादशदिनानि षोड़शश्राद्धापकर्षकाल इति शूलपाण्युपाध्यायव्याख्यानात् मरीचिनैव एकाहे द्वादशाथवेति सामान्यत एव एकाहविधानाच्च। अतएव एकाहापेक्षया प्राशस्त्याभिधानमपि सङ्गच्छते अतएव प्रथममासस्य एकाह एव द्वादशमासिकसहितसपिण्डीकरणकाल इति श्राद्धविवेकः। अत यानि एकाह कर्त्तव्यतया द्वादशमासिकश्राद्धान्युक्तानि तानि शूद्रेणापि आद्यमासिकदिन एव कार्य्याणि। नत्वाद्यमासिकं कृत्वा तत्परदिने एकादशमासिकानीति ज्ञेयम्। एवञ्च तेषामपकर्षे तन्मध्यतदन्तकालकर्त्तव्यतया षण्मा-

सिकद्वयसपिण्डीकरणापकर्षः सिद्ध्यतीति सुधीभिर्भाव्यम्। यद्दूर्वा वृद्धिरिति वृद्धिराश्रयमानं पुंसवनादि। आपद्येत आसन्ना भवति तद्दिनेऽपि सपिण्डीकरणम्। तथाहि "प्रागावर्त्तनादह्नः कालं विद्यात्" इति गोभिलगृह्यसूत्रेण पुंसवनादिरूपवृद्धेर्यामद्वयाभ्यन्तरे विधानात् सपिण्डीकरणस्य चापराह्णे विधानात्तयोः कालयोरबाधाय वृद्धिपूर्वदिने अपकर्षः। ननु सपिण्डीकरणस्यापराह्णिकत्वे किं प्रमाणमितिचेत् "अपराह्णे तु पैतृकम्" इत्युत्सर्गवचनम्। किञ्च "यद्यप्यदन्तकः पूषापैष्टमत्ति सदाचरुम्। अग्नीन्द्रेश्वरसामान्यात्तण्डुलोऽत्र विधीयते"॥ इति छन्दोगपरिशिष्टवचने यथा बहूनामनुरोधात्तण्डुलचरुर्नैकानुरोधात् पैष्टचरुः। "विरुद्धधर्मसमवाये भूयसां स्यात् सधर्मकत्वम्" इति जैमिनिसूत्रात् तद्वदत्रापि बहुदेवताकपार्वणानुरोधादेकोद्दिष्टकालबाध इति। एवञ्च संवत्सरमधिकृत्य "सपिण्डीकरणन्तस्मिन् काले राजेन्द्र तत् शृणु। एकोद्दिष्टविधानेन कार्य्यन्तदपि पार्थिव"॥ इति विष्णुपुराणीयमेकोद्दिष्टांशे तदिति कर्त्तव्यतापरं न तु तत्कालपरम्। तथाच परिशिष्टप्रकाशधृतम्। "श्राद्धद्वयमुपक्रम्य कुर्वीत सहपिण्डताम्। तयोः पार्वणवत् पूर्वमेकोद्दिष्टमथापरम्" इति॥ एवञ्च शुद्धितत्त्वलिखितस्यमन्तकोपाख्यानवत् वृद्धिं निश्चित्य कृतं सपिण्डीकरणं तदानीं विघ्नेन वृद्ध्यभावेऽपि वृद्ध्यारम्भकालान्तरं पूर्णसंवत्सरं प्राप्य पितृत्वप्रापकमिति न सपिण्डनान्तरम्। अत्र "श्वः कर्त्तास्मीति निश्चित्य दाता विप्रान्निमन्त्रयेत्"। इतिवन्निश्चित्येति उत्कटकोटिकसम्भावनोपलक्षणं भविष्यन्निमित्तस्य कर्म्मणः प्रत्यूहार्हत्वात्। एवञ्च वृद्धिश्राद्धं यदर्थं कृतं तत्कर्म्म चेत् विघ्नात्तद्दिने न क्रियते तदा दिनान्तरे तत् कर्म्मणि क्रियमाणे तदङ्गत्वात् पुनर्वृद्धि-

श्राद्धं कर्त्तव्यमेव । "प्रधानस्याक्रिया यत्र साङ्गं तत् क्रियते पुनः । तदङ्गस्याक्रियायान्तु नावृत्तिर्न च तत्क्रिया" ॥ इति छन्दोगपरिशिष्टेन साङ्गकरणाभिधानात् । हेमाद्रिधृतं "पूर्णे संवत्सरे श्राद्धं षोड़शं परिकीर्त्तितम् । तेनैव च सपिण्डत्वं तेनैवाब्दिकमिष्यते" ॥ अत्र पूर्णसंवत्सरक्रियमाणश्राद्धादुयथोभयनिर्वाहः । तथापकृष्टसपिण्डनादप्युभयनिर्वाहान्न पूर्णसंवत्सरे श्राब्दिकान्तरं कार्य्यम् । एवञ्च पञ्चदशश्राद्धे कृतेऽप्युन्नेयम् । उदकपात्राणीति अर्घ्यार्थमुदकयुक्तपात्राणि । अत्र त्रीणि पितॄणामेकं प्रेतस्येति पाठक्रमदर्शनात् सर्वत्रछन्दोगानां यजुर्वेदिनाञ्च गृह्यानुरोधात् सपिण्डीकरणे प्रेतकर्म्मकरणं पितृकर्म्मपूर्वकं "तयोः पार्वणवत् पूर्वमेकोद्दिष्टमथापरम्" इति पूर्वलिखितवचने शाब्दक्रमदर्शनात् देवकृत्य-पितृकृत्ययोर्मध्ये प्रेतकृत्येन व्यवधानस्यायुक्तत्वाच्च एतेन "अथ सपिण्डीकरणं संवत्सरमेकं पिण्डमुद्दिश्य संवत्सरान्ते चत्वार्य्युदकपात्राणि प्रयुनक्ति तत्रैकं प्रेतस्य त्रीणि इतरेभ्यः" इत्याश्वलायनदर्शनात् सर्वशाखिनां सपिण्डीकरणे प्रेतादित्वं मैथिलोक्तं निरस्तम् एतद्वचनस्य तच्छाखिमात्रपरत्वात् किन्त्वर्घ्यदानपात्रे पाठक्रमाच्छाब्दक्रमस्य बलवत्त्वात् ब्रह्मपुराणे प्रेतार्घ्यदानानन्तरं "ततः पितामहादिभ्यः" इति शाब्दक्रमस्याबाधायार्घ्यपात्रेषु गन्धपुष्पदानपर्य्यन्तं पितृपूर्वकता उत्सर्गे तु प्रेतपूर्वकतेति तथा ब्रह्मपुराणं चतुर्थ्यंस्यार्घ्यपात्रेभ्य एकं वामेन पाणिना । गृहीत्वा दक्षिणेनैव पाणिना च तिलोदकम् ॥ सम्मार्जयित्वा पृथिवीं ये समाना इति स्मरन् । प्रेतविप्रस्य हस्ते तु चतुर्भागं जलं क्षिपेत् ॥ ततः पितामहादिभ्यस्तन्मन्त्रैश्च पृथक् पृथक् । ये समाना इति द्वाभ्यां तज्जलन्तु समर्पयेत् ॥ अर्घ्यान्तेनैव विधिना प्रेतपात्राच्च पूर्ववत् । तेभ्यश्चार्घ्यं निवेद्यैव पश्चाच्च

स्वयमाचमेत्" ॥ एकं प्रेतपात्रं वामेन अनन्तरं दक्षिणेन गृहीत्वेति सम्बन्धः। ये समाना इति मन्त्रद्वयं पठन् प्रेतपात्रस्थम् उत्सृष्टजलं कुशरेखात्रयेण चतुर्धा विभज्य भागमेकं प्रेतपात्रस्थं जलं क्षिपेत् दद्यात् उत्सृष्टजलपिण्डयोर्विभागे मन्त्रस्य करणत्वं व्यक्तमाह शातातपः। "निरूप्य चतुरः पिण्डान् पिण्डदः प्रतिनामतः। ये समाना इति द्वाभ्यामाद्यन्तु विभजेत्त्रिधा। एष एव विधिः पूर्वमर्घ्यपात्रचतुष्टये" ॥ ततः तदनन्तरं तन्मन्त्रैः पितामहादिभेदेन त्रिरावृत्तैर्या दिव्या इति मन्त्रैश्चकारात् पितामहाद्युत्सर्गवाक्यैरर्घ्यमुत्सृज्य ये समाना इति द्वाभ्यां मन्त्राभ्यामर्घ्यं पुष्पोदकं तज्जलं प्रेतपात्रस्थजलं तेनैव विधिना प्रत्येकं पूर्ववत् चतुर्भागरूपं प्रेतपात्रात् समर्पयेत् तेभ्यः पितामहादिभ्यस्त्रिभ्यस्तास्मिन्मिश्रितपुष्पतिलोदकरूपमर्घ्यं निवेद्य तद्ब्राह्मणहस्ते प्रक्षिप्य पश्चादाचामेदित्यर्थः तेन प्रेतब्राह्मणहस्ते उत्सृज्य दत्तस्यैवार्घ्यजलस्य तदवशिष्टजलस्य भागत्रयं पितामहादुत्सृष्टार्घ्यजलेषु मिश्रीकर्त्तव्यमिति प्रतीयते। अतएव दत्तस्यैव प्रेतपिण्डस्य मिश्रीभाव इति श्राद्धविवेकः। यच्च न च "अत्र दैवं भोजयेत् प्रागेवं दैवेऽर्घ्यमन्नाद्यञ्च दत्त्वा गन्धमाल्यैः पात्रमर्चयित्वा हुतशेषं पितृभ्यः पात्रेषु दद्यात्" इत्याश्वलायनवचने पितृपात्रे दैवं न मिश्रयेदिति कल्पतरुव्याख्यानानुरोधेन मैथिलोक्तं सर्वशाखिनान्तथाचरणं तन्न युक्तम् आश्वलायनेन काण्डानुशयस्योक्तात् बह्वृचानामेव तथा युक्तत्वात् न सामगयजुर्वेदिनोः तयोः पदार्थानुशयस्योक्तत्वात् अतएव श्राद्धसूत्रे समन्वये मन्त्रदर्शनात्तत्रैव मन्त्रान्वयः पितृदयितादायुक्तः। वस्तुतस्तु पौराणिकत्वात् देवताभ्य इत्यस्य पाठवत् साधारणस्मृतिकारशातातपोक्तत्वाच्च विभागेऽपि मन्त्रान्वयो युक्तः अतएव मैथिलैरपि तथा लिखितमिति।

एवञ्च पार्वणे प्रागुक्तवचनेन शेषद्रव्येण पिण्डविधानात् तद्विकृतावपि सपिण्डीकरणे तन्नियमात्। यद्यपि शेषाभावेऽपि पिण्डनिवृत्तिरायाति तथापि "यथोक्तवस्त्वसंप्राप्तौ ग्राह्यन्तदनुकारि यत्। यवानामिव गोधूमा व्रीहीणामिव शालयः"। इति छन्दोगपरिशिष्टवचनात् मुख्याभावेऽपि प्रतिनिधिः शास्त्रार्थ इति न्यायाच्च मध्वाद्यभावे गुड़ादिग्रहणवत् द्रव्यान्तरेणापि पिण्डदानं शेषद्रव्यनियमस्तु तत् सम्भवे द्रव्यान्तरत्यागाय। अन्यथा तदङ्गाभावे कर्मवैगुण्यं स्यात् "सहपिण्डक्रियायाम्" इति मनूक्तेः पिण्डस्य प्रेतपिण्डेन सह मिश्रीकरणं यत्रेति सपिण्डीकरणसमाख्यासिद्ध्यर्थं सुतरान्तत्र तथाचरणं प्रतिपत्तिरूपकर्माङ्ग एव प्रतिपाद्याभावे तन्निवृत्तिः। पशुयागे लोहितं निरस्यति सकृन्निरस्यति इत्यादावक्ता अतएव यज्ञवास्तुरूपप्रतिपत्तियागेऽपि यज्ञो यत्र वसति इति यज्ञवास्तु समाख्यानुरोधेनास्तृतकुशविनाशेऽपि कुशान्तरप्रतिनिधिर्भट्टनारायणैर्गोभिलभाष्ये उक्तः "प्राक्स्विष्टिकृत आवापः" इति गोभिलसूत्रस्य व्याख्यानेऽपि आउप्यते इत्यावापः प्रधानहोमः स तु स्विष्टिकृद्धोमात् प्राक् न पश्चादित्यर्थः। एवञ्च मुख्यहोमेऽकृते यदि चरुर्नष्टो दुष्टो वा भवति तदान्यः पाच्यः मुख्ये कृते चेन्नाशदुष्टौ तदाज्येनैव स्विष्टिकृद्धोम इति सरला। एतेन शेषनाशे पिण्डनिवृत्तिरिति वाचस्पतिमिश्रोक्तं हेयम् एतेनार्घ्यदानविधानेन पिण्डमिश्रणप्रकारो व्याख्यात उक्तः। तथाच ब्रह्मपुराणम्। "अथ तेनैव विधिना दर्भमूलेऽवनेजनम्। पितुर्दत्त्वा तु पिण्डन्तु दद्यात् भक्त्या तु पूर्ववत्॥ दत्त्वा पिण्डान् पितृभ्यस्तु पश्चात् प्रेताय पार्श्वतः। तन्तु पिण्डं त्रिधा कृत्वा आनुपूर्व्याथ सन्ततम्। निदध्यात् त्रिषु पिण्डेषु एवं संसर्जने विधिः"॥ पितृभ्यः पितृपितामहादिभ्यः

पिण्डान् दत्त्वा प्रेताय पार्श्वतः पूर्वदेशे पिण्डं दद्यादित्यर्थः। तं प्रेताय दत्तपिण्डम् आनुपूर्व्या पितामहादिक्रमेण संसर्जने प्रेतपिण्डमिश्रणे। भविष्यपुराणम्। "गन्धोदक तिलैर्युक्तं कुर्य्यात् पात्रचतुष्टयम्। अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत्। ये समाना इति द्वाभ्यामेतज्ज्ञेयं सपिण्डनम्। नित्येन तुल्यं शेषं स्यादेकोद्दिष्टं स्त्रिया अपि"। नित्येनावश्यकेन ततश्च पार्वणांशे पार्वणेन एकोद्दिष्टांशे एकोद्दिष्टेन शेषमङ्गजातं तुल्यम् एकोद्दिष्टमिति एकोद्दिष्टं तद्धर्मग्राहित्वात् सपिण्डीकरणञ्चेत्युभय परम्। "एतत् सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि" इति याज्ञवल्क्यवचनैकवाक्यत्वात्। तेन श्राद्धेषु मध्ये एतच्छ्राद्धद्वयं स्त्रियाः कर्त्तव्यं नत्वाभ्युदयिकश्राद्धादि। अत्र च वा कर्त्तरिकृत्य इति कर्त्तरि षष्ठीति कर्त्तृत्व नियमः। वृद्धिश्राद्धादौ स्त्रीणां भोजनदर्शनान्न भोक्तृत्वनियमः।

पितरि पूर्वं मृते तद्वर्षाभ्यन्तरे पितामहे प्रपितामहे मृते यथा कर्त्तव्यं तथाह छन्दोगपरिशिष्टे कात्यायनः "पितुः सपिण्डतां कृत्वा कुर्य्यान्मासानुमासिकम्। असंस्कृतेन संस्कार्य्यौ पूर्वौ पौत्रप्रपौत्रकैः। पितरन्तत्र संस्कुर्य्यादिति कात्यायनोऽब्रवीत्। पापिष्ठमपि शुद्धेन शुद्धं पापकृतापि वा पितामहेन पितरं कुर्य्यादिति विनिश्चयः"। पितुः सपिण्डतां कृत्वा प्रेतीभूतयोरपि पितामहप्रपितामहयोः सत्त्वे प्रतिमासविहितं पार्वणं पितृवृद्धप्रपितामहातिवृद्धप्रपितामहानां कर्त्तव्यं नतु तयोः सपिण्डीकरणापेक्षा कार्य्या ननु सपिण्डनेनासंस्कृताभ्यां सह पिण्डः कथं सपिण्डनाख्य संस्कारस्तस्मात्तदर्थं तयोः सपिण्डीकरणमपकर्षणीयं पितुरेव वा सपिण्डनमुत्कर्षणीयमित्यत आह। असंस्कृताविति। उत्कर्षापकर्षौ

न कार्य्यावित्यनेन वचनेनोक्तं कथमसंस्कृतेन सह संस्कार इत्यत्राह पापिष्ठमपीति पापिष्ठमकृत सपिण्डीकरणं शुद्धेन कृतसपिण्डीकरणेन पितामहेन पापकृता अकृत सपिण्डीकरणेनापि शुद्धं कुर्य्यादिति शास्त्रनिश्चयः। अतोवचनबलाददोष इति तात्पर्य्यम् अत्र तु प्रेतीभूतपितामहेन पितुः सपिण्डने पितामहस्यैकोद्दिष्टमेव। "असपिण्डीकृतं प्रेतमेकोद्दिष्टेन तर्पयेत्" इति प्रागुक्तजाबालवचनात् एवमन्यत्रापि बोध्यं वृद्धप्रपितामहस्य प्रेतत्वे तेन सह न कार्य्यमिति तात्पर्य्यम्।

अत्र मातुः सपिण्डने श्वशुरार्य्यश्वशुरयोः पिण्डौ कुशेराच्छाद्यौ। तथा च गार्ग्यः पतिनैकेन कर्त्तव्यं सपिण्डीकरणं स्त्रियाः। सा गता हि मृतैकत्वं कुशैरन्तरयन् पितृन्। श्वशुरस्याग्रतो यस्माच्छिरः प्रच्छादनक्रिया। पुत्त्रैर्दर्भेण सा कार्य्या मातुरभ्युदयार्थिभिः"। अन्तरयन्तीत्यर्थे अन्तरयन्निति लिङ्गव्यत्ययेन पुंस्त्वमिति हलायुधः। परवचनं गोभिलश्राद्धसूत्रभाष्यकृतापि लिखितम्। अतएव प्रव्रजिते पतिते वा पितरि मृतेऽपि न पितामहादिभिर्मातुःसपिण्डीकरणं किन्तु पितामह्यादिभिरेव। "स्वेन भर्त्रा सहैवास्याः सपिण्डीकरणं स्त्रियाः। एकत्वं सा गता यस्माच्चरुमन्त्राहुतिव्रतैः। तस्मिन् सति सुताः कुर्य्युः पितामह्या सहैव तु"॥ इत्यत्र तस्मिन् सतीतिश्राद्धानर्हभर्त्तुपलक्षणम्। अतएव "तस्याश्चैव जीवन्त्यां तस्याः श्वश्रूेति निश्चयः" इति लघुहारीते न श्वश्रूजीवने तस्याः श्वश्र्वोक्तं न तु श्वशुरेणेति क्वचिदप्युक्तम्। एवं पितामह्यादिभिर्मातुः सपिण्डीकरणेऽपि सामगेन "ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधा" इति मन्त्रो न पाठ्यः मन्त्रलिङ्गविरोधात् अतएव आभ्युदयिके मातृपक्षे औदत्तादिभिर्मन्त्रान्तरं

लिखितं न तु ये चात्रत्वामिति वस्तुतस्तु आभ्युदयिके छन्दोगानां मातृपच्च एव नास्तीति वच्यते। एवञ्च "अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत्। ये समाना इति द्वाभ्यां शेषं पूर्ववदाचरेत्। एतत् सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि" इति याज्ञवल्क्येन पार्वणैकोद्दिष्ट विकृतीभूत पुंसपिण्डनातिदेशात् तद्विकृतीभूतस्त्री सपिण्डनेऽपि ये समाना इति मन्त्रद्वयस्य पार्वणोक्तये चात्रत्वामिति मन्त्रस्य च लिङ्गार्थसमवेतत्वेऽपि प्रकृत्यर्थस्य समवेतार्थत्वात् पाठः"। ततश्च "मातामहानामप्येवं श्राद्धं कुर्य्याद्विचक्षणः। मन्त्रोहेन यथान्यायं शेषाणां मन्त्रवर्जितम्" इत्यनेन यच्छेषाणां मन्त्रवर्जनमित्युक्तं तत् "शुन्धन्तां पितामहाः" इत्यादि प्रकृत्यूहयोग्य मन्त्रवर्जनपरमिति प्रागुक्तं मार्कण्डेयपुराणम्। "सर्वाभावे स्त्रियः कुर्य्युः स्वभर्तॄणाममन्त्रकम्। तदभावे च नृपतिः कारयेत् स्वकुटुम्बवत्। स्त्रीणामप्येव मेवैतदेकोद्दिष्टमुदाहृतम्। मृताहनि यथान्यायं नृणां यद्वद्विहोदितम्"। स्त्रियोऽत्र असवर्णोढ़ा अपरिणीतावेति श्राद्धविवेकः। सवर्णोढ़ायाः पुत्रपौत्रप्रपौत्राद्यभाव एव विधानात्। यथा शङ्खः। "पितुः पुत्रेण कर्त्तव्याः पिण्डदानोदकक्रियाः। तदभावे तु पत्नी स्यात्तदभावे सहोदरः"। स्त्रीणामिति तु सम्प्रदानपरम्। स्त्रीकर्त्तृकत्वस्य पूर्वार्द्धे एवोक्तत्वात्। एवमेवामन्त्रकमित्यर्थं इति श्राद्धविवेकः। अत्र स्त्रिया इत्यस्यासवर्णोढ़ा अपरिणीतापरत्वव्याख्यानात् स्त्रीणां मन्त्रनिषेधोऽपि तत् सम्प्रदानकश्राद्ध एवावगम्यते। न तु स्त्रीसम्प्रदानकमात्रे। कल्पतरौ तु स्त्रीणामप्येवमिति यादृशेन सम्बन्धेन पितृव्यत्वादिना पुरुषाणामेकादशाहादिश्राद्धं तादृशेनैव सम्बन्धेन स्त्रीणामेतत् कर्त्तव्यमिति। एतद्व्याख्याने स्त्रीसम्प्रदानकश्राद्धे सुतरां

मन्त्राः पाठ्याः। याज्ञवल्क्येनापि समन्त्रकमेकोद्दिष्टं सपिण्डीकरणोक्ता एतत् सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपीत्यनेन स्त्रिया अपि तथैवोक्तम्। "मातुः सपिण्डीकरणं पितामह्यासहोदितम्। यथोक्तेनैव कल्पेन पुत्रिकाया न चेत् सुतः" इति छन्दोगपरिशिष्टेनापि यथोक्तेनैव कल्पेन इत्यनेन मन्त्रादिकं सर्वमतिदिष्टं व्यवहारोऽपि तथेति। अमन्त्रकं स्त्रीकर्त्तृकमन्त्रपाठरहितम् "अमन्त्रा हि स्त्रियो मता" इति बौधायनेन सामान्यतोऽभिधानात्। न तु ब्राह्मणकर्त्तृकमन्त्रपाठरहितपरम्। तथा च वराहपुराणम्। "अयमेव विधिः प्रोक्तः शूद्राणां मन्त्रवर्जितः। अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते"॥ अत्रामन्त्रस्येति विशेषणस्य यावद् मन्त्रव्याप्त्यर्थत्वेन परिभाषारूपत्वान्न प्रेतश्राद्धमात्रस्य विषयः। न वा शूद्रकर्त्तृकश्राद्धमात्रविषयः किन्तु स्त्रीकर्त्तृकश्राद्धमप्यस्य विषयः। व्यक्तं ब्राह्मे। "स्त्रीभिश्चावरवर्णैश्च श्राद्धं विप्रानुशासनात्। मन्त्रवद्विधिपूर्वन्तु वह्निपाकविवर्जितम्"। विप्रानुशासनात् विप्रपाठनात्। मन्त्रवन्मन्त्रयुक्तम्। वह्निपाकविवर्जितमित्यसवर्णस्त्रीकर्त्तृकश्राद्धपरम्। पतिकर्त्तृकश्राद्धेऽपि पत्न्याः पाकाधिकारदर्शनात् तथाच छन्दोगपरिशिष्टं "शाकञ्च फाल्गुनाष्टम्यां स्वयं पत्न्यथवा पचेत्"। पत्नीत्वञ्च सवर्णोढायाः ज्येष्ठा पत्नीति वचनात्। ज्येष्ठामाह मनुः। "यदि स्वाश्च पराश्चैव विन्देरन् योषितो द्विजाः। तासां वर्णक्रमेणैव ज्यैष्ठं पूजा च वेश्म च"॥ कुबेरोपाध्यायधृतम्। "असंस्कृतप्रमीतानां पिता न श्राद्धमाचरेत्। यदि स्नेहेन कुर्वीत सपिण्डीकरणं विना"॥ असंस्कृतप्रमीतानाम् अनुपनीतमृतानाम्। लघुहारीतः "पुत्रेणैव तु कर्त्तव्यं सपिण्डीकरणं स्त्रियाः। पुरुषस्य पुनस्त्वन्ये भ्रातृपुत्रादयोऽपि ये"॥ आदिशब्दग्राह्या-

माह स एव। "भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा। सहपिण्डक्रियां कृत्वा कुर्य्यादभ्युदयन्ततः"॥ भ्राता वा इति वाशब्दात् भ्रात्रपेक्षया प्रधानत्वेन पूर्वाधिकारिणां दौहित्रात्मनां समुच्चयः। अतएव सपिण्डत्वेनैव भ्रातृतत्-पुत्रयोरधिकारसिद्धौ पृथगुपादानं प्राधान्यज्ञापनार्थम्।

"महागुरौ प्रेतीभूते वृद्धिकर्म्म न युज्यते" इति शूलपाणि-लिखितवचनेन "प्रमीतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत्। नापि दैवं न वा पैत्रं यावत् पूर्णो न वत्सरः"॥ इति देवी-पुराणवचनेन च प्रेतीभूतमातापितृकस्य संस्कर्त्तुः प्रेतीभूत-मातापितृकस्य संस्कार्य्यस्य प्रेतीभूतमातापितृकाया अनू-ढ़ायाः कन्यायाश्च वैदिककर्म्मकर्त्तृत्वकर्म्मत्वानर्हत्वेन तत् परी-हाराय "यदहर्वा वृद्धिरापद्येत" इत्यनेन पूर्वदिने सपिण्डनं कृत्वा पित्रादिः परदिने अभ्युदयं नामकरणादिकं कुर्य्यात्। ऊढ़ायास्तु "पतिरेको गुरुः स्त्रीणाम्" इति वचनोक्तैकपदेन पत्युरेव महागुरुत्वाभिधानात् तत् प्रेतत्वमात्रे तस्याः कर्म्मा-नधिकारः। एवञ्च पितृमात्रोर्महागुरुत्वव्यावृत्तेस्तयोर्मरणे ऊढ़ाया न कर्म्मानधिकारः। अत्राभ्युदयसपिण्डनयोरानन्तर्य्य-मात्रं क्त्वा-प्रत्ययार्थः न त्वेककर्त्तृकत्वमपि। अन्यथा सपिण्ड-नाधिकारिण्याः पत्न्याः सत्त्वे अभ्युदयादिकारिणो भ्रातुः सपिण्डनाधिकारापत्तेः। यथा "नानिष्ट्वा तु पितॄन् श्राद्धैः कर्म्मवैदिकमारभेत्" इति शातातपवचने पितृकर्त्तृकवृद्धि-श्राद्धानन्तरमेव पुत्रेण विवाहः क्रियते। न तु पुत्रेण श्राद्धा-न्तरं क्रियते। अत्र पुरुषस्य पुनस्त्वन्ये इत्यनेन पुत्रवत् शिष्या-न्तरस्य सपिण्डने सामान्यतोऽधिकारः प्रतिपादनात् अभ्यु-दयं विनापि पुरुषस्य सपिण्डनं प्रतीयते। "सहपिण्डक्रियां कृत्वा कुर्य्यादभ्युदयं ततः"। इति सपिण्डीकरणात् पूर्व्वमभ्यु-

दृयाभावार्थं नत्वभ्युदयसत्त्व एव सपिण्डीकरणार्थमिति। यत्तु "यानि पञ्चदशाद्यानि अपुत्रस्येतराण्यपि। एकस्यैव तु दातव्यमपुत्रायाश्च योषितः" ॥ इति छन्दोगपरिशिष्टीयं सपिण्डीकरणेतरपञ्चदशश्राद्धविधायकं तच्छिष्यपर्य्यन्ताभावे पुत्रपरस्य बोध्यम् इतराणि एकोद्दिष्टविधानेनैव यानि प्राप्तानि प्रत्याब्दिकश्राद्धानि तान्येव दातव्यं दातव्यानीत्यर्थः। अपुत्रायाश्चेति चकारोऽनुक्तसमुच्चायकं पतिरहिताया इति समुच्चिनोति। "अपुत्रायां मृतायान्तु पतिः कुर्य्यात् सपिण्डताम्" इति पैठीनसिवचनैकवाक्यत्वात्। अत्र छन्दोगपरिशिष्टेऽपुत्रायाः पञ्चदशश्राद्धविधानात् "सपिण्डीकरणान्तासां पुत्राभावे न विद्यते" इति मार्कण्डेयपुराणाच्च बालकपुत्रसत्त्वे सपिण्डीकरणम् अन्येनापि कर्त्तव्यमिति प्रतीयते। एवं पतिः कुर्य्यादित्यत्रापि पतिसत्त्वमात्रं विवक्षितम्। तेन पतितप्रव्रजितपतिसत्त्वेऽपि ऊढया दुहित्रा सपिण्डनं कार्य्यम् अत्र "सर्वासामेकपत्नीनामेका चेत् पुत्रिणीभवेत्। सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुः" इति मनुवचने सपत्नीपुत्रस्य पुत्रत्वातिदेशात् तत्सत्त्वेऽपि स्त्रीणां सपिण्डनं मैथिलैरुक्तं तन्न प्रागुक्तलघुहारीतवचने पुत्रेणैवेत्येवकारेणातिदिष्टपुत्रनिषेधात् अतएव तदुत्तरार्द्धे भ्रातृपुत्रोपादानं संगच्छते। अन्यथा भ्रातृपुत्रसत्त्वे "यद्येकजाता बहवो भ्रातरः स्युः सहोदराः। एकस्यापि सुते जाते सर्वे ते पुत्रिणो मताः" ॥ इति बृहस्पतिवचनेन पुत्रत्वातिदेशात् भ्रातृपुत्रस्य पुत्रत्वादिदेशेनैव पितृव्यश्राद्धाधिकारप्राप्ते भ्रातृपुत्रदानं व्यर्थं स्यात् पुत्रत्वादिदेशफलन्तु तत्सत्त्वे पुत्रान्तराकरणं पुन्नामनरकत्राणञ्च।

लघुहारीतः। "सपिण्डीकरणान्तानि यानि श्राद्धानि षोडश। पृथङ्नैव सुताः कुर्य्युः पृथग् द्रव्या अपि क्वचित् ॥

प्रेतसंस्कारकर्म्माणि यानि श्राद्धानि षोड़श। यथाकालन्तु कार्य्याणि नान्यथा मुच्यते ततः" ॥ पृथगद्रव्या अपि विभक्तधना अपि पृथक् न कुर्य्युः सुतरामपृथग्धनाः पृथक् न कुर्य्युः किन्त्व-पृथक् कुर्य्युः अत्र विशेषयति मरीचिः। "मृते पितरि पुत्रेण क्रिया कार्य्या विधानतः। बहवः स्युर्यदा पुत्राः पितुरेकत्र-वासिनः॥ सर्वेषान्तु मतं कृत्वा ज्येष्ठेनैव तु यत् कृतम्। द्रव्येण चाविभक्तेन सर्व्वैरेव कृतं भवेत्" ॥ पुत्रेणेत्यविशेषात् सर्वेषामधिकारे प्राप्ते ज्येष्ठस्य साक्षात् कर्त्तव्यतामाह बहव इति। ज्येष्ठेनापि सर्वेषां भ्रातृणामकरणेनैव करणं भवतु इति मतं ज्ञानं कृत्वा विभक्तत्वे द्रव्यसंश्लेषेण च कृतं कर्म्म सर्व्वैरेव कृतमेव भवेत्। तदानीं द्रव्यासंश्लेषेण च तस्मात् द्रव्यं प्राप्तव्यमिति कृत्वा कर्त्तव्यम्। यदि तेन तन्न परिशुध्यते तदा स ऋणी भवति प्रत्यवायी च भवतीति। न तु तेन श्राद्धा-न्तरं कर्त्तव्यमिति श्राद्धविवेकोक्तं युक्तम्। पृथङ् नैव सुताः कुर्य्युरित्यनेन पृथक्करणस्य पर्य्युदस्तत्वेनानधिकारात्। यथा-कालमिति अशौचान्तद्वितीयदिनद्वादशमासमृततिथि एका-हन्यूनषण्मासद्वितयसंवत्सरेषु। न च विधानसामर्थ्यादेव तत्तत्-कालप्राप्तेरनर्थकमिदमिति वाच्यम्। तत्तत् कालानां द्वाद-शाहाद्यपेक्षया प्राधान्यबोधनार्थत्वात्। अत्र "आनन्त्यात् कुलधर्म्माणां पुंसाञ्चैवायुषः क्षयात्। अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते" ॥ इति व्याघ्रवचनोक्तप्रशस्यत इत्यनेन कुलाचारज्योतिःशास्त्रादि-आतभ्रटिति-मरणराष्ट्रोपप्लवादिम्ले-च्छदेशादिगमनानुसारादेव सपिण्डीकरणापकर्षे द्वादशाहा-पेक्षया प्रागुक्तनवममासादिगौणकालपरिग्रहः अथवा यथा-कालमित्यादेर्यद्दर्वा वृद्धिरापद्येतेत्यनेनावश्यकनामकरणादि-वृद्ध्यर्थमेवापकर्षो नत्वनावश्यकेष्टपूर्त्ताद्यर्थापकर्षः कार्य्य इति

तात्पर्य्यम्। अतएव लघुहारीतेन "तथैव काम्यं यत् कर्म्म वत्सरात् प्रथमादृते"। इत्यनेन काम्यस्यापकर्षनिमित्तता नास्तीत्युक्तम्। यदि त्वावश्यकवृद्धिनिमित्तेनापकर्षः कृतस्तदा इष्टपूर्त्तादि काम्यं वत्सराभ्यन्तरेऽपि कर्त्तव्यमिति श्राद्धविवेकोऽप्येवं यद्यपि गोभिलसूत्रादौ सपिण्डीकरणस्यैवापकर्षः प्रागुक्तस्तथापि सपिण्डीकरणापकर्षे तत् पूर्वकर्त्तव्यश्राद्धानामपि तदादितदन्तन्यायादपकर्षः। "सपिण्डीकरणान्ता तु ज्ञेया प्रेतक्रिया बुधैः" इति शातातपवचने प्रेतक्रियायाः सपिण्डीकरणान्तत्वं प्रतीयते। अत्र वृद्धिनिमित्तं विना सपिण्डनापकर्षे कृते पूर्णसंवत्सरकालं प्राप्य प्रेतत्वपरीहारमाह विष्णुधर्म्मोत्तरम्। "कृते सपिण्डीकरणे नरः संवत्सरात् परम्। प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यते"॥ वृद्धिनिमित्तकसपिण्डीकरणापकर्षे कृते तत्क्षणादेव प्रेतत्वपरीहारः तदर्थं एवापकर्षात् एवञ्चान्यनिमित्तापकर्षे वृद्धिकालं प्राप्य प्रेतत्वपरीहारः तत्कालस्य पूर्णसंवत्सरकालतुल्यत्वात्। "अर्वाक् संवत्सरात् वृद्धौ पूर्णे संवत्सरेऽपि वा। ये सपिण्डीकृताः प्रेता न तेषान्तु पृथक् क्रिया" इति शातातपवचनात्।

अथ सांवत्सरिकश्राद्धं तत्र। गोभिलः। "अत ऊर्द्धं संवत्सरे संवत्सरे प्रेतायान्नं दद्यात् यस्मिन्नहनि प्रेतः स्यादिति"। अत ऊर्द्धं सपिण्डीकरणान्तश्राद्धनिमित्तादाद्यसंवत्सरादूर्द्धं संवत्सरे संवत्सरे प्रतिवर्षं यस्मिन्नहनि मृतस्तस्मिन्नहनि मृताय दद्यात्। व्याघ्रः। "प्रतिसंवत्सरञ्चैवमेकोद्दिष्टं मृताहनि"। एतेन सपिण्डीकरणापकर्षे आद्यसंवत्सरेऽपि मृताहे श्राद्धान्तरं कर्त्तव्यमिति मैथिलोक्तं हेयम्। व्यक्तमाह हेमाद्रिधृतवचनम्। "पूर्णे संवत्सरे श्राद्धं षोड़शं परिकीर्त्तितम्। तेनैव च सपिण्डत्वं तेनैवाब्दिकमिष्यते"॥ अत्र पूर्णसंवत्सरक्रियमाण-

श्राद्धद्वयथोभयनिर्वाहस्तथापकृष्टसपिण्डीकरणश्राद्धादप्युभयनिर्वाहो न पूर्णसंवत्सरे श्राब्दिकान्तरम्। एवं पञ्चदशश्राद्धेऽप्युन्नेयम्। मत्स्यपुराणम्। "ततःप्रभृतिसंक्रान्तावुपरागादिपर्वसु। त्रिपिण्डमाचरेत् श्राद्धमेकोद्दिष्टं मृताहनि"॥ ततः प्रेतत्वपरीहारात् त्रिपिण्डं त्रैपुरुषं निरुपपदमृताहशब्दः मृतसम्बन्धिमासपक्षतिथिविशेषपरः। उपपदात्तु क्वचित्तिथिविशेषमात्रपरः। यथा मृताहे प्रतिमासं कुर्य्यादित्यादौ।

शङ्खः। "सपिण्डीकरणादूर्द्धं यत्र यत्र प्रदीयते। तत्र तत्र त्रयं कुर्य्यात् वर्जयित्वा मृताहनि॥ अमावास्यां क्षयो यस्य प्रेतपक्षेऽथवा पुनः। सपिण्डीकरणादूर्द्धं तस्योक्तः पार्वणो विधिः"॥ त्रयं सम्प्रदानानां त्रयं कुर्य्यात् त्रिभ्यो दद्यादित्यर्थः। मृताहपर्य्युदस्तत्रिदैवतत्वस्य प्रतिप्रसवमाह अमावस्यामिति प्रेतपक्षोऽत्र पितृपक्षः अश्वयुक् कृष्णपक्ष इति यावत् न तु कृष्णपक्षमात्रं कृष्णपक्षसामान्यपरत्वेऽमावास्यापदवैयर्थ्यापत्तेः पितृपक्षं विशेषयति हेमाद्रिमाधवाचार्य्यधृतं नागरखण्डम्। "नभो वाथ नभस्यो वा मलमासो यदा भवेत्। सप्तमः पितृपक्षः स्यादन्यत्रैव तु पञ्चमः"॥ अत्र श्रावणभाद्रयोरन्यतरस्य मलमासत्वे आषाढ़ापेक्षया सप्तमपक्षस्य पितृपक्षत्वात्। अत्र मृतस्यैव प्रेतपक्षमृतत्वं न तु मलमासभाद्रकृष्णपक्षमृतस्य। ततश्च तत्र मृतस्य वर्षान्तरेऽश्वयुक् कृष्णपक्षेऽपि तच्छ्राद्धकरणे न पार्वणं किन्त्वेकोद्दिष्टमिति। अत्र पार्वणो विधिः पार्वणेति कर्त्तव्यताकैकोद्दिष्टविधिरिति नव्यवर्द्धमानप्रभृतयः। तन्न पूर्ववचनोक्तत्रैपुरुषिकस्य मृताहे पर्य्युदस्तस्य पार्वणो विधिरित्यनेन प्रतिप्रसवात् तस्मात् सदैकोद्दिष्टं त्रैपुरुषिकं न तु षाट्पौरुषिकं "कर्षूसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोड़शम्। प्रत्याब्दिकञ्च शेषेषु पिण्डाः स्युः षड़िति स्थितिः"॥ इति

छन्दोगपरिशिष्टवचनेन प्रत्याब्दिकव्यतिरेकेण षट्संख्यानियमात् एवममावास्यादिमरणनिमित्तेन मातुरपि प्रत्याब्दिकं पार्व्वणविधिनैव "अपुत्रा ये मृताः केचित् स्त्रियो वा पुरुषाश्च ये। तेषामपि च देयं स्यादेकोद्दिष्टं न पार्व्वणम्" ॥ इति आपस्तम्बवचने अपुत्रा इति विशेषणोपादानात् सपुत्राणां पार्व्वणाभ्यनुज्ञानात्। एतच्च मात्रादित्रितयदैवतं कार्य्यम्। मात्रे पितामह्यै प्रपितामह्यै च पूर्व्ववत् ब्राह्मणान् भोजयित्वा इत्यन्वष्टकायां तथा दर्शनात् अवसानदिननिमित्तत्वेन पार्व्वणविधिना छन्दोगैरपि मात्रादित्रिकाणां श्राद्धं कर्त्तव्यं न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते"। इति छन्दोगपरिशिष्टवचने विशेषतः प्रतिप्रसवात्। एवं सपिण्डीकरणेऽपि। एतच्च मृताहपार्व्वणं मातापित्रोरेव। तथाच हेमाद्रिधृतकात्यायनवचनं "सपिण्डीकरणादूर्द्ध्वं पित्रोरेव हि पार्व्वणम्। पितृव्यभ्रातृमातॄणामेकोद्दिष्टं सदैव तु" ॥ मातृपदं सपत्नीमातृपरम्। सपत्नीमातेत्यत्र मातृपदस्य राजदन्तादित्वात् परनिपातः ततश्च वाक्ये मातृसपत्नीति न प्रयोज्यं किन्तु सपत्नीमातमातरित्यादिकम्। एवं साग्निकौरसक्षेत्रजाभ्यां मृताहे पार्व्वणं कर्त्तव्यम्। "औरसक्षेत्रजौ पुत्रौ विधिना पार्व्वणेन तु। प्रत्यब्दमितरे कुर्य्युरेकोद्दिष्टं सुता दश" ॥ इति जाबालवचनस्य "यत्र यत्र प्रदातव्यं सपिण्डीकरणात् परम्। पार्व्वणेन विधानेन देयमग्निमता सदा" इति मत्स्यपुराणवचनस्य चैकवाक्यत्वात्। उशना च। "प्रत्यब्दं दर्शवच्छ्राद्धं साग्निः कुर्वीत वै द्विजः। एकोद्दिष्टं सदा कुर्य्यान्निरग्निः श्राद्धदः सुतः" ॥ अत्र प्रागुक्तयुक्त्या प्रेतश्राद्धस्य एकोद्दिष्टत्वाभिधानात् सांवत्सरिकश्राद्धे यदेकोद्दिष्टपदमुक्तं तत् प्रेतश्राद्धधर्म्मप्राप्तित्वार्थम्। ततश्च योग्यत्वादेकार्घ्यादिलाभः न तु यथा प्रेतश्राद्धे पितृशब्दस्याने

प्रेतत्वदोषः तथाच्चापीति वाच्यं सांवत्सरिके प्रेतत्वाभावात्तथा-विधानानुपपत्तेः। एवं प्रतिसांवत्सरिकश्राद्धे सम्बन्धार्थकपदं आशीः प्रार्थनं शेषभोजनञ्च कर्त्तव्यम् ।

रजस्वलायां विशेषयति गोतमः । "अपुत्रा तु यदा भार्य्या सम्प्राप्ते भर्त्तुराब्दिके । रजस्वला भवेत् सा तु कुर्य्यात्तत् पञ्चमे दिने"॥ कुर्य्याच्छ्राद्धमिति शेषः। यत्तु श्राद्धचिन्तामणौ। एकोद्दिष्टं त्रैवर्णिकेन सिद्धान्नेन कर्त्तव्यम्। "एकोद्दिष्टन्तु कर्त्तव्यं पाकेनैव सदा स्वयम्। अभावे पाकपात्राणां तदहः समुपोषणम्"॥ इति लघुहारीतवचनात् पाकपात्राभावः पाक-सामग्र्यभावोपलक्षकं तदापि नामश्राद्धं किन्तूपोषणमेव श्राद्ध-स्थानीयमित्यर्थः। स्वयमित्यभिधानादपाटवादिनापि नान्य-द्वारा कारयितव्यम् अतएव उपवासेनैव श्राद्धस्थानीयेन तद-करणप्रायश्चित्तेन वा कृतकृत्यतया श्राद्धविघ्न इत्यादिवचना-दपि नैकादश्यामनुष्ठानमिति तन्न। पितृत्वमेरजातत्वेनैका-दश्यां तदनुष्ठानस्य युक्तत्वात्। अन्यथा षोड़शश्राद्धाधिकारिणः कदाचित्तथात्वे "यस्यैतानि न दीयन्ते प्रेतश्राद्धानि षोड़श। पिशाचत्वं ध्रुवं तस्य दत्तैः श्राद्धशतैरपि"॥ इति यमवचनेन षोड़शश्राद्धाभावे प्रेतत्वपरीहारो न स्यात् तस्मादुपवासो न श्राद्धार्थः किन्तु तदानीन्तनाकरणप्रायश्चित्तार्थः यथा स्वकाला-कृतसंस्कारे प्रायश्चित्तं कृत्वा कालान्तरे तत् करणं तथात्रापि तद्दिने उपवासं कृत्वा एकादश्यां श्राद्धं कर्त्तव्यमिति। एको-द्दिष्टं नान्यद्वारा कार्य्यमित्यत्रापि गोत्रजेतरत्वेन विशेषणीयं "न कदाचित् सगोत्राय श्राद्धं कार्य्यमगोत्रजैः इति प्रेतश्राद्धे ब्रह्मपुराणात्। अत्र हि नागोत्रजस्य साक्षात् कर्त्तृत्वं निषि-ध्यते सगोत्रायेत्यसम्बन्धापत्तेः तस्मादगोत्रजैर्द्वारभूतैः सगोत्राय श्राद्धं न कार्य्यमित्यर्थः। तथाच पर्य्युदासपक्षे गोत्रजद्वारा

कारयितव्यमिति मुख्यत्वमेव प्रसज्यपक्षे तु असगोत्रजविशेषण-स्वरसात् गोत्रजलाभः। प्रेतश्राद्धधर्म्मग्राहित्वात् सांवत्सरिकमपि तथेति श्राद्धविवेकः। कल्पतरुरत्नाकरयोस्तु स्वगोत्रायेति पठितं स्वमात्मीयं गोत्रं यस्य स स्वगोत्रः विद्यमानगोत्र इत्यर्थः। यस्मै श्राद्धं कर्त्तव्यं तस्य स्वगोत्रजे विद्यमानेऽन्यगोत्रजेन संघातान्तर्गतेन राज्ञा श्राद्धं न कारयितव्यमिति व्याख्यातञ्च। एतन्मतेऽप्यूढ़दुहित्रादीनामसगोत्रत्वेऽपि न निषेधः। वस्तुतस्तु तत् पाठेऽपि कर्म्मधारयापेक्षया बहुव्रीहेर्जघन्यत्वात् स्वमात्मीयञ्च तत् गोत्रञ्चेति तस्मै अन्यगोत्रजद्वारा श्राद्धं न कार्य्यमित्यर्थः। अतो लघुहारीतवचने स्वयं पदं स्वगोत्रपरम्। अन्यथा ब्रह्मपुराणोक्तागोत्रजपदवैयर्थ्यापत्तेः। एवञ्च भविष्यपुराणप्रभासखण्डयोः। मृताहनि पितुर्यस्तु न कुर्य्यात् श्राद्धमादरात्। "मातुश्चैव वरारोहे वत्सरान्ते मृताहनि। नाहन्तस्य महादेवि पूजां गृह्णामि नोहरिः" ॥ मरीचिः। "पतिताज्ञानिनो मूर्खास्त्रियोऽथ ब्रह्मचारिणः। मृता हंसमतिक्रम्य चाण्डालेष्वभिजायते" ॥ इत्याभ्यां कालमाधवीयधृताभ्यां वचनाभ्यां सांवत्सरिकश्राद्धस्य मृताहकर्त्तव्यत्वेनावश्यकत्वात् भविष्यमृताहे स्वयं कर्त्तव्यत्वसम्भावनारहितेन मृताहात् पूर्वकालेऽपि प्रतिनिधीयते। "प्रक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजं तथा। प्रवसेत् कार्य्यवान् विप्रो वृथैव न चिरं क्वचित्" ॥ इति छन्दोगपरिशिष्टोक्तसायं प्रातर्होमप्रतिनिधिवत्। एवं सति प्रतिनिध्यकरण एव एकादश्यां क्रियते। न च पाकस्याङ्गत्वेन प्रधानतिथिकर्त्तव्यतानियम इति वाच्यम्। "व्रतोपवासनियमे घटिकैका यदा भवेत्। सा तिथिः सकला ज्ञेया पित्रर्थे चापराह्णिकी" ॥ इति वचनेन मुहूर्त्तमात्रलाभेऽपि कर्त्तव्यतोपदेशात् तदानीं

पाके तदसम्भवात्। एवमुदीच्याङ्गशेषभोजनेऽपि न तन्नियम इति।

अथाभ्युदयिकश्राद्धम्। तत्र गोभिलः। "अथाभ्युदयिके श्राद्धे युग्मानाशयेत्। प्रदक्षिणमुपचारः ऋजवो दर्भाः यवैस्तिलार्थः सम्पन्नमिति तृप्तिप्रश्नः दधिवदराक्षतमिश्राः पिण्डा नान्दीमुखाः पितरः प्रीयन्तामिति दैवे वाचयित्वा नान्दीमुखेभ्यः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च प्रीयन्तां न स्वधाञ्च प्रयुञ्जीत" इति। आभ्युदयिके अभ्युदयनिमित्तके अभ्युदय इष्टलाभः विवाहादिः। तदर्थं श्राद्धं आभ्युदयिकम्। तच्च भूतभविष्यद्भेदेन द्विविधं तत्र भूतं पुत्रजन्मादि भविष्यत् विवाहादि एवञ्च श्राद्धविवेकादौ श्राद्धभेदगणने वृद्धिश्राद्धत्वेन कर्म्माङ्गत्वेन च यदुभयत्वमुक्तं तदुभयमेवाभ्युदयिकत्वेनोपपन्नं तेनाभिलापे आभ्युदयिकश्राद्धमिति प्रयोज्यम् अत्र यवैस्तिलार्थं इत्यनेन पार्वणश्राद्धप्राप्ततिलस्थाने यवविधानादाभ्युदयिकस्यापि पार्वणप्रकृतिकत्वं प्रतीयते। अन्यथा तिलार्थं इत्युपादानं व्यर्थं स्यात्। ततश्च पार्वणप्रकृतिकत्वेन पित्र्येऽयुग्मब्राह्मणप्राप्तौ तन्निरासाय पितृपक्षे ब्राह्मणयुग्मत्वोपदेशः दैवे युग्मत्वस्य पार्वणप्राप्तत्वान्न तदर्थोपदेशः "अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणम्"। इति याज्ञवल्क्यवचनेन देवकर्म्मानन्तरं पितृकर्म्मकरणे प्राप्तवामोपचारनिरासाय प्रदक्षिणमुपचारस्तेन देवपितृकर्म्मकरणाय दक्षिणावर्त्तेन गन्तव्यं द्विगुणभुग्नत्वनिरासाय ऋजवो दर्भा इति ऋजुत्वोपदेशः तृप्ताः स्थ इत्यनेन तृप्तिप्रश्ने सम्पन्नमिति प्रष्टव्यं योग्यत्वात् सुसम्पन्नमिति प्रोक्ते वक्ष्यमाणच्छन्दोगपरिशिष्टवचनाच्च सुसम्पन्नमित्युत्तरम् एतदुभयमत्राह्मणपक्षेऽप्यबाधितत्वाद्वाच्यम्। दधिवद-

राचतमिश्रा इत्यनेन दध्यादिमिश्रणमावश्यकम् अचतो यव: "अचताश्च यवा: प्रोक्ता भृष्टाधाना भवन्ति ते" इति भट्टनारायणधृतात् अतएव वक्ष्यमाणछन्दोगपरिशिष्टवचनेऽचतमनूक्ता संयोज्ययवकर्कन्धुदधिभिरिति नि:सन्दिग्धत्वमुक्तम्। स्वधावाचनप्रश्ननिवृत्तये नान्दीमुखा: पितर: प्रियन्तामित्युपदेश: तत्र स्वधां वाचयिष्ये इति पितृपच एव प्रश्न: अतएव तन्निवृत्तये दैव इति देवपक्षे नान्दीमुखा: पितर: प्रीयन्तामिति प्रश्न:। उत्तरञ्च प्रीयन्तामिति तत: पितृपक्षे स्वधावाचनस्थानीयत्वेन वृद्धप्रमातामहेभ्यश्चेति चकारनिर्देशेन च स्वधोच्यतामितिवत् प्रत्येकमेव प्रीयन्तामिति पृच्छेत्। प्रत्युत्तरञ्च अस्तु स्वधेतिवत् तन्त्रेणैव प्रीयन्तामिति अत्र नान्दीमुखा: पितर इत्यादि नान्दीमुखेभ्य: पितृभ्य: इति निर्देशेन च नान्दीमुखं पितृगणमिति विष्णुपुराणेन च मातामहेभ्यश्च तथा नान्दीमुखेभ्य एव चेति ब्रह्मपुराणे च नान्दीमुखपदश्रुतेस्तद्विशेषणविशिष्टस्यैवाभ्युदयिके देवतात्वं ततश्चात्रापि प्रीयन्तामितिवन्नान्दीमुखेभ्य: पितामहेभ्य इत्यादिवाच्यं न तु नान्दीमुखविशेषणशून्यं पितामहेभ्य: प्रीयन्तामित्यादि पितृदयितोक्तं युक्तं नान्दीमुखेभ्य: पितृभ्य: प्रीयन्तामित्यत्रान्वितस्य नान्दीमुखेभ्य इत्यस्य पितामहेभ्य इत्यादावनन्वयित्वेन प्रागुक्तयुक्त्या प्राप्तस्य नान्दीमुखविशेषणस्य पितामहेभ्य इत्यादावप्राप्ते:। एतेनात्र मैथिलोक्तं तन्त्रता विधानमपि निरस्तम्। पार्वणवत् स्वधाप्राप्ते: तन्निरासाय न स्वधां प्रयुञ्जीतेति अत्र विशेषादभिलापे मन्त्रे च स्वधापदनिवृत्ति:। अभिलापे नम इति ब्रूयात्। "अमुकामुकगोत्रैतत्तुभ्यमन्नं स्वधा नम:"। इति ब्रह्मपुराणे श्राद्धे स्वधा नम: पदयोस्त्यागबोधकत्वेन विकल्पादत्राभ्युदयिके स्वधानिषेधान्नम एवान्वेति। पितृन-

प्यत्र दैववदित्यनेनापि पार्वणोक्त विश्वदेवपक्षीय नम एव प्रतीयते। न तु मैथिलोक्तं स्वाहेति श्राद्धे तथा प्रयोगे प्रमाणाभावात्। एवमाश्वलायनगृह्ये यवोऽसीति मन्त्रे तु पुष्ट्या इति श्रुतेर्मन्त्रमात्रे स्वधापदस्थाने पुष्टिपदप्रयोगः। अतएव "स्वधयेति पदस्थाने पुष्ट्याशब्दं वदेदिह। पितॄनितिपदात् पूर्वं वदेन्नान्दीमुखानिति" इति वह्वृचकारिका प्रदर्शनात् छन्दोगपरिशिष्टं कात्यायनः "कर्मादिषु तु सर्वेषु मातरः सगणाधिपाः। पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः॥ प्रतिमासु च शुभ्रासु लिखिता वा पटादिषु। अपि वा अक्षतपुञ्जेषु नैवेद्यैश्च पृथग्विधैः॥ कुड्यलग्नां वसोर्धारां सप्तधारान् घृतेन तु। कारयेत् पञ्चधारान् वा नातिनीचां नचोच्छ्रिताम्॥ आयुष्मानिति शान्त्यर्थं जप्त्वा तत्र समाहितः। षड्भ्यः पितृभ्यस्तदनुश्राद्धदानमुपक्रमेत्॥ वशिष्ठोक्तविधिः कृत्स्नो द्रष्टव्योऽत्र निरामिषः। अतःपरं प्रवक्ष्यामि विशेष इह यो भवेत्॥ प्रातरामन्त्रितान् विप्रान् युग्मानुभयतस्तथा। उपवेश्य कुशान्दद्यात् ऋजुनैव हि पाणिना" ॥ तथा "निपातो न हि सव्यस्य जानुनो विद्यते क्वचित्। सदा परिचरेद्भक्त्या पितॄनप्यत्र दैववत्॥ पितृभ्य इति दत्तेषु उपवेश्य कुशेषु तान्। गोत्रनामभिरामन्त्र्य पितॄनर्घं प्रदापयेत्॥ नात्रापसव्यकरणं न पित्र्यं तीर्थमिष्यते। पात्राणां पूरणादीनि दैवेनैव तु कारयेत्॥ ज्येष्ठोत्तरकरान् युग्मान् कराग्राग्रपवित्रकान्। कृत्वार्घ्यं सम्प्रदातव्यं नैकैकस्यात्र दीयते॥ मधुमध्विति यस्तत्र त्रिर्जपोऽशितुमिच्छताम्। गायत्र्यनन्तरं सोऽत्र मधुमन्त्रविवर्जितः॥ न चाश्नत्सु जपेदत्र कदाचित् पितृसंहिताम्। अन्य एव जपः कार्य्यः सोमसामादिकः शुभः॥ यस्तत्र प्रकारोऽन्नस्य तिलवद्यववत्तथा। उच्छिष्टसन्निधौ सोऽत्र

तृप्तेषु विपरीतकः॥ सम्पन्नमिति तृप्ताःस्थः प्रश्नस्थाने विधीयते। सुसम्पन्नमिति प्रोक्ते शेषमन्नं निवेदयेत्॥ प्रागग्रेष्वथ दर्भेषु आद्यमामन्त्र्य पूर्ववत्। अपःक्षिपेन्मूलदेशेऽवनेनिक्ष्वेति निस्तिलाः॥ द्वितीयञ्च तृतीयञ्च मध्यदेशाग्रदेशयोः। मातामह प्रभृतींस्तु एतेषामेव वामतः॥ सर्वस्मादन्नमुद्धृत्य व्यञ्जनैरुपसिच्य च। संयोज्य यवकर्कन्धुदधिभिः प्राङ्मुखस्थितः॥ अवने जनवत् पिण्डान् दत्त्वा विल्वप्रमाणकान्। तत्पात्रक्षालनेनाथ पुनरप्यवनेजयेत्॥ उत्तरोत्तरदानेन पिण्डानामुत्तरोत्तरम्। भवेदधश्चाचरणादधोधः श्राद्धकर्मसु॥ तस्मात् श्राद्धेषु सर्वेषु वृद्धिमत्स्वितरेषु च। मूलमध्याग्रदेशेषु ईषत् सक्तांश्च निर्वपेत्॥ गन्धादीन्निःक्षिपेत् तूष्णीं तत आचामयेत् द्विजान्। अन्यत्राप्येष एव स्यात् यवादिरहितो विधिः॥ दक्षिणाप्लवने देशे दक्षिणाभिमुखस्य तु। दक्षिणाग्रेषु दर्भेषु एषोऽन्यत्र विधिः स्मृतः॥ अथाग्रभूमिमासिञ्चेत् सुसुप्रोक्षितमस्त्विति। शिवा आपः सन्त्विति च युग्मानेवोदकेन च॥ सौम्यनस्यमस्त्विति च पुष्पदानमनन्तरम्। अक्षतञ्चारिष्टञ्चास्त्वित्य क्षतानपि दापयेत्॥ अक्षय्योदकदानन्तु अर्घ्यदानवदिष्यते। षष्ठ्यैव नित्यं तत् कुर्य्यान्न चतुर्थ्या कदाचन॥ प्रार्थनासु प्रति प्रोक्ते सर्वास्वेव द्विजोत्तमैः। पवित्रान्तर्हितान् पिण्डान् सिञ्चेदुत्तानपात्रकृत्॥ युग्मानेव स्वस्तिवाच्यानङ्गुष्ठग्रहणं सदा। कृत्वा धूर्य्यस्य विप्रस्य प्रणम्यानुव्रजेत्ततः"॥

कर्म्मादिषु वैदिककर्म्मादिषु। "नानिष्ट्वा तु पितॄन् श्राद्धैः कर्म्म वैदिकमारभेत्" इति शातातपवचनात्। एतच्च न वैदिककर्म्ममात्रे श्राद्धविधायकं किन्तु प्रमाणान्तरेण प्राप्तस्य आभ्युदयिकस्य पूर्वकर्त्तव्यत्वमात्र विधायकं लाघवात्। कर्म्मादिषु तु इत्येकवाक्यत्वाच्च रागप्राप्तमत्र त्वेन लौकिके तु नवगृह-

प्रवेशे यत् श्राद्धं तत्प्रवेशे नववेश्मन इत्यनेन वक्ष्यते। तत्र नवगृहप्रवेशस्य निमित्तस्य क्रियात्वेन क्षणिकस्यापि तन्निश्चयवत एवाधिकारात् संक्रान्तिवत् भूतभविष्यत्वेन द्विधैव निमित्तत्वात् भूते भविष्यति वा गृहप्रवेशे नान्दीमुखश्राद्धाचरणमिति। अत्र वृद्धिश्राद्धस्य निरवकाशत्वान्न त्रयोदश्यादि निषेधः। मातरो गौर्य्यादयः। तथाच बह्वृचगृह्यपरिशिष्टम्। "गौरीपद्माशचीमेधा सावित्री विजया जया। देवसेना स्वधा स्वाहा मातरो लोकमातरः। शान्तिपुष्टिर्धृतिस्तुष्टिरात्मदेवतया सह। आदौ विनायकः पूज्यो ह्यन्ते च कुलदेवताः"। ताश्चाभिधाय भविष्ये। "पूज्याश्चित्रेऽथवा कार्य्या वरदाभयपाणयः। मातर इति सर्व्वासां विशेषणम् अतएव एतत् पाद्यं गौर्य्यै मात्रे नम इति प्रयोगः एता मातरो लोकमातरो ज्ञेयाः। अतएवैतयोर्बहुत्वेन निर्देशः। पूजयन्ति अभ्युदयदानेन प्रीणयन्तीत्यर्थः। शुभ्रासु शुक्लासु रजतस्फटिकादिमयीषु लिखिता चित्रिता आदिशब्दात् भित्त्यादिषु अक्षतपुञ्जेषु यवपुञ्जेषु पृथग्विधैर्नानाप्रकारैर्वसोर्वेदिराजस्य। वसोर्धारामिति वसोर्धाराधिपातैनेत्यादिदर्शनात् अलुक्समासेनैव प्रयोगः कर्त्तव्यः। आयुष्याणि आयुषे हितानि आयुषे मे पवस्वेत्यादीनि शान्त्यर्थमभ्युदयस्यानिष्टनिवृत्त्यर्थं षड्भ्य इति छन्दोगानाम्। "मातृश्राद्धन्तु पूर्व्वं स्यात् पितॄणां तदनन्तरम्। ततो मातामहानाञ्च वृद्धौ श्राद्धत्रयं भवेत्" इति शातातपोक्तमातृश्राद्धव्युदासार्थम् अतएव तत्रैव छन्दोगपरिशिष्टे षण्णामेव पिण्डेति कर्त्तव्यता वक्ष्यते गोभिलसूत्रेऽपि पित्रादित्रयप्रमातामहान्तानामुल्लेखः कृतः न मात्रादीनां "न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते। स्वभर्त्तृपिण्डमात्राभ्यस्तृप्तिरासां यतः स्मृता" इति छन्दोगपरिशिष्टेन वृद्ध्यादौ योषित्श्राद्धं छन्दोगानां पर्य्युदस्तञ्च। न चाव-

सानदिनेतरत्र योषिद्भ्योऽपृथग्दद्यात् यतः स्वभर्तृपिण्डांशेभ्य उभयोर्ह्य कदत्तेभ्य एव योषितां तृप्तिः पुरुषाणां योषिज्जीवनादौ पृथक्पिण्डादपि तृप्तिसत्त्वात् योषित्पदमपि सार्थकमिति वाच्यं तथात्वेऽवसानदिनाहत इति व्यर्थं स्यात् तथाहि परिप्राप्ते योषितां श्राद्धेऽपृथक्त्वं विधीयते। किं वाऽपृथक्श्राद्धवैशिष्ट्यं विधीयते नाद्यः अमावास्यादौ योषिद्दानाप्राप्तौ कथं तदनूद्यापृथक्त्वमात्रविधानं न चामावास्यायां पितृभ्यो दद्यादित्यत्र "प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु" इति विष्णुपुराणीयेऽपि योषितामपि पितृत्वात् श्राद्धप्राप्तिरिति वाच्यं पितृभ्यो दद्यादित्यत्र पितृपदं न प्राप्त पितृलोकमात्रपरं किन्तु पितृपितामहप्रपितामहमात्रपरं असावेतत्ते इति यजमानस्य पित्रे असावेतत्ते इति यजमानस्य पितामहाय असावेतत्ते इति यजमानस्य प्रपितामहाय इति श्रुत्याद्येकवाक्यत्वात् "त्रयाणामुदकं कार्य्यं त्रिषु पिण्डः प्रवर्त्तते। चतुर्थः सम्प्रदातैषां पञ्चमो नोपपद्यते" इत्यत्र त्रयाणामित्यनेन पितृपितामहप्रपितामहानां पत्नीनिरपेक्षाणां तर्पणवद्देवतात्वावगमाच्च। मातामहादिलाभस्तु "पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम्। अविशेषेण कर्त्तव्यं विशेषान्नरकं व्रजेत्" इति वृद्धयाज्ञवल्क्यवचनात् मातामहा इति तदादित्रिकपरम्। इत्यादि बहुवचनान्ता गणस्य संसूचका इत्युक्तेः। श्राद्धेति कर्त्तव्यतायां मातामहादित्रिकोपादानाच्च। नान्यः। तथाहि अवसानदिनाहृत इति व्यर्थं स्यात् अवसानदिने तु "ध्रुवाणि तु प्रकुर्वीत प्रमीताहनि सर्वदा" इति छन्दोगपरिशिष्टीयेन स्त्रीपुंसयोः साधारणत्वेन श्राद्धप्राप्त्या "स्त्रीणामप्येवमेवैतदेकोद्दिष्टमुदाहृतम्। मृताहनि यथान्यायं नृणां यद्वदिहोदितम्"॥ इति मार्कण्डेयपुराणीयेन विशेषतः श्राद्धप्राप्त्या

च विशिष्टविधित्वानुपपत्तेः। न चैवं परशाखिकाविरोधिसर्वकर्मानुष्ठानप्रसक्तिरिति वाच्यम् अविरोधि चेति चकारेण नाकाङ्क्षितस्यैव लाभात् अतएवानाकाङ्क्षिते गृह्यपरिशिष्टं "बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्त्तितम्। तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत्" इति। तस्मादवसानदिनाहृत इति वाक्यस्य सार्थकत्वाय पृथक्पदमत्वानुवादः। न च वैपरीत्यं तथात्वे वाक्यानुवादः स्यात्। अव्ययपदानुवादे तु विभक्तेर्नानुवादकतेति। एवमेव ईशानन्यायाचार्य्याः। तस्मात् श्राद्धं सपिण्डकं कुर्य्यात् स्वसूत्रोक्तविधानतः। अन्वष्टकासु वृद्धौ च गयायाञ्च क्षयाहनि। मातुः श्राद्धं पृथक् कुर्य्यादन्यत्र पतिना सह। वृद्धिश्राद्धे तु मात्रादि गयायां पितृपूर्वकम्" इति तीर्थचिन्तामणिधृत वायुपुराणीयेन वृद्ध्यन्वष्टकावसानदिनगयानिमित्तकश्राद्धकरणेषु छन्दोगेतरोऽवसानदिनेतरत्र वृद्ध्यादौ योषिद्भ्यः पृथक् श्राद्धायान्नं दद्यात् अवसानदिने तु छन्दोगात् छन्दोगोभयो योषिद्भ्यो दद्यादित्यर्थात् सिद्धम्। ततश्च वृद्ध्यादौ छन्दोगो योषितां कथं तृप्तिरित्याकाङ्क्षामुत्थाप्य उत्तरार्द्धेनान्वय इति एतदर्थमेव स्वसूत्रोक्तविधानत इत्युक्तम्। सूत्रेति स्वगृह्यशास्त्रपरम्। अन्यत्रामावास्यादौ पतिना सह श्राद्धं भोग्यं कुर्य्यादित्येवार्थः। असावेतत्त इति यजमानस्य पित्र इति प्रागुक्तश्रुत्या श्राद्धे पत्नीनिरपेक्षणपित्रादित्रिकबोधिकया "सपिण्डीकरणादूर्द्ध्वं यत् पितृभ्यः प्रदीयते। सर्वेष्वंशहरा माता इति धर्मेषु निश्चयः" इति स्मृत्या भर्त्तृदत्तांशभागित्वबोधिकया चैकवाक्यत्वात् एतेन षड्भ्य इति जीवन्मातृकविषयमिति हलायुधोक्तं निरस्तम्। जीवन्मातृकेण छन्दोगेतरेण पितामह्यादीनां श्राद्धं क्रियते। "जीवन्तमतिदद्याद्वा प्रेतायान्नोदके द्विज"। इति छन्दोगपरिशिष्टात्। जीवन्त-

मित्यत्र निमित्तविशेषणत्वेन पुंस्त्वमविवक्षितम् अतएव लघुहारीतेनाप्युक्तं सपिण्डीकरणे "स्वेन भर्त्रा सहैवास्याः सपिण्डीकरणं स्त्रियाः। एकत्वं सा गता यस्माच्चरुमन्त्राहुतिव्रतैः। तस्मिन् सति सुताः कुर्य्युः पितामह्या सहैव तु। तस्यां चैव तु जीवन्त्यां तस्याः श्वश्र्वेति निश्चयः" इति। तदनु आयुष्यजपानन्तरं श्राद्धदानं श्राद्धीयद्रव्यदानं वशिष्ठोक्तं इति वशिष्ठेन छन्दोगगृह्यपरिशिष्टे पार्वणे यो विधिरुक्तः सोऽत्रामिषव्युदासेन बोध्यः। यत्तु मधुमांसाभ्यञ्जनेति याज्ञवल्क्यादौ ब्रह्मचारिणो निषेधे सन्नियोगशिष्टत्वान्मांसनिषेधे मधुनिषेध इत्युक्तं निरामिषश्राद्धशेषघटितपिण्डानां पिण्डांस्तु दधिमध्वक्तानित्यादिना तदुक्तरूपविशेषणमात्रविधानान्नात्र फलचमसन्यायेन श्राद्धे मधुप्राप्तिरिति द्वैतनिर्णयोक्तञ्च तदयुक्तं "शाल्यन्नं दधिमध्वक्तं बदराणि यवांस्तथा। मिश्रीकृत्य च चत्वारि पिण्डान् श्रीफलसन्निभान्"। इति ब्रह्मपुराणवचनेन पिण्डघटकान्नस्य दधिमध्वक्तत्वेन च पिण्डस्य सर्वस्मात् प्रकृतादन्नात् उद्धृत्य इत्यनेन श्राद्धशेषद्रव्यकर्त्तव्यतया फलचमसन्यायेन श्राद्धेष्वपि मधुप्राप्तेः। एवमेव श्राद्धप्रदीपे वर्द्धमानोपाध्यायाः। तन्न्यायश्च राजन्यवैश्यकर्त्तृके ज्योतिष्टोमे फलचमसमस्मै भक्ष्यं ददातीति श्रुत्या ऋत्विग्भक्ष्यत्वेन फलचमसविधानात् ऋत्विग्भक्ष्यस्य च यज्ञशेषद्रव्यत्वेन तत्सिद्धे यज्ञेऽपि फलचमसलाभः फलचमसश्च दधिमिश्रितवटत्वक्चूर्णमिति। अतएव मधुजपोऽन्नोत्सर्गानन्तरं मधुवाता इत्यादि जपश्चाभ्युदयिके मधुसत्त्वे मधुद्रव्यप्रकाशकत्वात् दृष्टार्थकः अन्यथा अदृष्टार्थकता स्यात्। व्यक्तमाह गोभिलभाष्ये यशोधरधृतवचनम्। "कृत्वा नान्दीमुखश्राद्धं दधिमध्वाज्यद्रव्यकम्। अन्नञ्च प्राशयेदन्नपत इत्यभिमन्त्रितम्"। गोभिलानुक्तस्यान्नप्राशनस्याभ्यु-

नैनाभ्युदयिकश्राद्धवत्त्वं प्रतीयते। प्रातरामन्त्रितानिति पूर्व-
दिननिमन्त्रणनिरासार्थं युग्मानिति अयुग्मव्यावृत्त्यर्थम् उभ-
यतः पितृपक्षे मातामहपक्षे च दैवपक्षे युग्मत्वस्य पार्वणे प्राप्त-
त्वात् तथा पार्वणवदुदङ्मुखीकृत्य ब्राह्मणानुपवेश्य वक्ष्यमाण-
प्रकारेण कुशान् दद्यात्। कर्त्तुस्तु पार्वणवन्न दक्षिणाभिमुखत्वं
किन्तु प्राङ्मुखत्वं पिण्डदाने तथादर्शनात्। एवञ्चाभ्युद-
यिके युग्मा ब्राह्मणाः समूला दर्भाः "प्राङ्मुखेभ्य उदङ्मुखो
दद्यात् उदङ्मुखेभ्यः प्राङ्मुखो वा" इत्याश्वलायनवचनेऽपि
द्वितीयकल्पाभिधानं छन्दोगपितृपक्षपरम्। न चैतद्दैवपक्ष-
पितृपक्षोभयसाधारणाच्छन्दोगपरमस्तु अविशेषादिति वाच्यम्
आभ्युदयिके छन्दोगानामपि दैवपक्षस्य पार्वणतुल्यत्वात् "ये
चात्र विश्वेदेवार्थं पूर्वं विप्रा निमन्त्रिताः। प्राङ्मुखान्यास-
नान्येषां द्विदर्भोपहितानि च" इति देवलोक्तसर्वशाखिगोचर-
सामान्यविधीनां सङ्कोचे हेत्वभावात्। किञ्च यथा पार्वणे
छन्दोगेतरेषां ब्राह्मणयुग्मत्वप्राङ्मुखत्वयोः कर्त्तुरुदङ्मुखत्वस्य
च दैवे प्राप्तत्वेन विध्यभावात् पितृपक्ष एव ब्राह्मणयुग्मत्वं
प्राङ्मुखत्वं कर्त्तुरुदङ्मुखत्वं विधेयम्। तथा छन्दोगानामपि
साहचर्य्यात् पार्वणप्राप्तब्राह्मणोदङ्मुखत्वमनूद्य पितृपक्ष एव
कर्त्तुः प्राङ्मुखत्वमात्रविधेयत्वम्। एतेन छन्दोगानां दैवब्राह्म-
णोदङ्मुखत्वं मैथिलमतं निरस्तम्। अन्यथा पार्वणेनैव ब्राह्म-
णोदङ्मुखत्वस्य प्राप्तत्वे पितृब्राह्मणस्य च प्राप्तत्वे विध्यनु-
वादापत्तेः। किन्त्वत्र वसुसत्ययोर्दैवतात्वं पितृपक्षवत् मधु-
मन्त्रवर्जनञ्चेति पार्वणाद्विशेषः। ऋजुना दैवतीर्थेन न तु पितृ-
तीर्थेन सव्यस्य वामस्य दैववत् दक्षिणजानुपातेन प्रागग्रकुश-
द्वययुक्तासनेन च। पूर्वम् ऋजुहस्तेन कुशदानमुक्तं तत्सम्प्रदान-
प्रकारञ्च पितृभ्य इतीति इतीत्यनेन गोत्रनामभिरामन्त्रेति

प्रक्ंस्यमानप्रकारेण पितृभ्यो दत्तेषु कुशेषु तान् ब्राह्मणानुपवेश्य गोत्रनामभिः पितृन् सम्बोध्यार्घ्यं प्रदापयेदित्यर्थः। अपसव्यं प्राचीनावीतित्वं नात्र किन्तूपवीतित्वं पितृतीर्थं तर्जन्यङ्गुष्ठयोर्मध्यरूपं नात्र किन्त्वङ्गुल्यग्ररूपं देवतीर्थम्। पात्राणामर्घ्यपात्रादीनाम् आदिशब्दात् आसनादिदानं देवेन तीर्थेनेति शेषः। ज्येष्ठोत्तरकरान् ज्येष्ठस्य पङ्क्तिश्रेष्ठस्य उत्तर उपरिकरो येषां तत्तथा। कराग्राग्रपवित्रकानिति कराग्रेऽग्रपवित्रकं पवित्राग्रं येषां ते तथा। नैकैकस्य नैकैकपित्रादिसम्बन्धिब्राह्मणस्य न तु यथा पार्वणे एकस्य पितृब्राह्मणस्य हस्ते तथाऽपरस्य पितामहब्राह्मणस्य हस्ते तथाऽपरस्य प्रपितामहब्राह्मणस्य हस्ते दीयते तथात्रेति। एतेन पितृब्राह्मणयोर्हस्तोपरि उत्तराग्रं पवित्रं दत्त्वाऽर्घ्योत्सर्गान्तमुक्त्वा एवमेव पितामहादीनां पञ्चानामेकैकशः द्वयोर्द्वयोर्ब्राह्मणयोर्दद्यादिति पितृदयितोक्तं निरस्तम्। एवं कराग्राग्रपवित्रकत्वमाभ्युदयिके विशेषः इत्यायाति तथा चैतद्वैपरीत्यं पार्वणे स्यादिति चेन्नैवं मिलितहस्ते पवित्रदानमभिधाय नैकैकस्यात्र दीयते इति यत् पुनरभिधत्ते तेन ज्ञापयति इदमेवात्र विधीयते कराग्राग्रपवित्रकत्वमनूद्य इति कल्पप्रदीपोक्तमपि निरस्तम्। नैकैकस्यात्र दीयत इत्यभिधानं विना पित्रादित्रयब्राह्मणानां मिलितहस्तोपरि दानानुपपत्त्या नैकैकस्यात्र दीयत इत्यस्य पुनरभिधानानुपपत्तेः। न च ज्येष्ठोत्तरकरत्वेनैव मिलितहस्तलाभः ज्येष्ठोत्तरकरत्वस्य च पित्रादि प्रत्येकब्राह्मणद्वयापेक्षयापि सम्भवेन तथात्वानुपपत्तेः। कराग्राग्रपवित्रकत्वस्यापि पार्वणे केनाप्यनुक्तत्वे नाभ्युदयिकेऽनुवादानुपपत्तेश्च। तस्मात् ज्येष्ठोत्तरकराग्राग्रपवित्रकत्वस्य पित्रादित्रयमिलितब्राह्मणहस्तोपरि दानस्य च विशेषादाभ्युदयिक एव विधानं

पार्वणीत्वासनादिदर्भवत् अर्घ्यदानेऽपि पवित्रदानस्य दक्षिणाग्रत्वं प्रतीयते। मधुमध्विति यस्त्वत्रेति पार्वणे भोक्तुमिच्छतां ब्राह्मणानां श्राव्यत्वेन मधुद्रव्यप्रकाशकमध्विति त्रिर्जपो मधुवातेति मन्त्रसहितो गायत्रीजपानन्तरं क्रियते सोऽत्र मधुवातेति मन्त्रवर्जितः कार्य्यः। एतेन भोजनादिकालत्रये मधुमन्त्रपाठो न निषिद्धः मधुमन्त्रपाठनिषेधाच्च मधुनो निवृत्तिर्नास्तीत्यवगम्यते। अन्यथा प्रधाननिवृत्तौ गुणनिवृत्तेरप्यर्थसिद्धत्वात् विधातुमयोग्यत्वात्। न च गुणनिवृत्त्या प्रधाननिवृत्तिः गुणलोपे न मुख्यस्येति न्यायविरोधात् मधुमध्विति जपाभ्यनुज्ञानञ्च न स्यादिति श्राद्धविवेकः। पितृसंहितायामिति पितृमहत्त्वप्रकाशकमन्त्रमात्रोपलक्षणार्थम्। यस्त्वत्रेति तत्र पार्वणे तृप्तेषु ब्राह्मणेषु अन्नस्य प्रकारोऽन्नस्य विकरणं तिलवत्तिलयुक्तं यथा स्यात्तथोक्तम् अत्र तु यवयुक्तं यथा स्यात्तथा विपरीतकः अतृप्तेषु ब्राह्मणेषु कार्य्यः। कल्पतरुस्तु विरीतको देवतीर्थादिदानेनेत्याह तदयुक्तम्। "पात्राणां पूरणादीनि देवेनैव हि कारयेत्" इत्यनेन प्राप्तत्वेनानुवादकतापत्तेः। पार्वणे तृप्ताः स्थ इति यः प्रश्नस्तत्स्थाने सम्पन्नमिति वाच्यं प्रश्नानन्तरं सुसम्पन्नमिति ब्राह्मणैः प्रोक्ते शेषमन्नं क्व देयमिति पृच्छेत्। इष्टेभ्यो दीयतामिति प्रतिवचनम्। "स तानाह पुनः क्व देयश्चान्नमित्यपि। इष्टेभ्यो दीयतामेतत् इति सम्प्रवदन्ति ते"॥ इति ब्रह्मपुराणात्। आद्यं पितरं पूर्ववत् गोत्रसम्बन्धनामभिरामन्त्र्य द्वितीयं पितामहं तृतीयं प्रपितामहं मध्यदेशाग्रदेशयोर्दर्भस्येति शेषः एतेषां पिण्डस्थाने आवाहितानां पित्रादीनां वामतो दक्षिणस्यां दिशि एवञ्चेत् कर्त्तुर्दक्षिणोपचारो भवति एतेन कृत्यप्रदीपे दक्षिणस्थितप्रागग्रकुशमूलमध्याग्रेषु मात्रादिभ्यो मध्यस्थितप्रागग्रकुशमूलमध्या-

ग्रेषु पित्रादिभ्यस्तदुत्तरस्थितप्रागग्रकुशमूलमध्याग्रेषु माता-महादिभ्यः प्राङ्मुखेनावनेजनादिदातव्यमित्युक्तं निरस्तं मातृपक्षस्य पूर्वं दूषितत्वात् आवाहितपित्रादीनां वामदेशे मातामहादीनामत्र जलदानानुपपत्तेश्च कर्त्तुर्दक्षिणोपचारानुपपत्तेश्च कार्कन्धुर्वदरं तत्पात्रक्षालनेन पिण्डपात्रक्षालनेन अवनेजयेदिति श्रुतेरवने निक्ष्वेति ब्रूयात्। उत्तरोत्तरदानेन पिण्डानां मूलादिक्रमेणोपर्य्युपरिदानेन दाताऽप्युत्तरोत्तर ऊर्द्धोर्द्धं गतिर्भवति अधश्चारणादग्रादिक्रमेणाधोऽध आचरणादधोगतिर्भवति इतरेषु पार्वणादिषु ईषत् सक्तान् अल्पलग्नान् तूष्णीमिति गन्धादिदानवाक्यनिषेधः। आचामयेत् लेपघर्षणप्रक्षालनादिकं कारयेत्। अन्यत्र पार्वणादौ यवादौत्यादिपदेन देवतीर्थोपवीति परिग्रहः। दक्षिणाप्लवने दक्षिणदिक्निम्ने न त्वाभ्युदयिकवत् प्राचीनिम्ने दक्षिणाभिमुखस्य कर्त्तृत्वं न तु प्राङ्मुखस्य दक्षिणाग्रेषु न प्रागग्रेषु एष विधिः पिण्डदानविधिः। अथ प्रकृतब्राह्मणाचमनानन्तरं ब्राह्मणाग्रभूमिं सुसम्प्रोक्षितमस्त्विति प्रोक्षयेत्। शिवा आप इत्यादिना युग्मानेव नैकैकम् उदकेन हस्ते सिञ्चेत्। सौमनस्यमस्त्वित्यनेन हस्ते पुष्पदानं कुर्य्यात्। अनन्तरमक्षतञ्चारिष्टञ्चास्त्वित्यादिना यवान्दद्यात् दापयेदिति प्रयोजकनिर्द्देशस्तु परोपदेशपक्षे अन्यद्वारापि पार्वणवद्वृद्धिश्राद्धं कर्त्तव्यम् इत्युपदेशाय वा अर्घ्यदानवदिति ज्येष्ठोत्तरकरत्वातिदेशार्थं न तु तन्त्रतानिवृत्तिरतिदिश्यते। "अर्घ्येऽक्षय्योदके चैव पिण्डदानेऽवनेजने। तन्त्रस्य विनिवृत्तिः स्यात् स्वधा वाचन एव च"॥ इत्यनेन विधानात्। षष्ठैव नित्यमिति गोत्रनामान्ते सम्बन्धिस्थाने षष्ठीं विधत्ते न चतुर्थीं कदाचन इति तस्मै ते स्वधेति मन्त्रस्थाने चतुर्थीनिषेधकमित्यपुनरुक्तिः तेन ये चात्र त्वेति मन्त्रो न पाठ्यः

उत्तरार्द्धमिदं प्रार्थणविषयकमपि। प्रार्थनासु सुसुप्रोचित-मस्त्वित्यादिषु प्रतिप्रोक्तोऽस्तु सन्त्वित्यादिना प्रतिवचने कृते। पवित्रान्तर्हितान् सिञ्चेदुत्तानपात्रकृदिति पवित्राच्छादितान् ऊर्जं वहन्तीत्यनेन सिञ्चेत्। अनन्तरं न्युब्जीकृतपात्रमुत्तानं कृत्वा युग्मानेवेत्यादिना वक्ष्यमाणं कुर्यात्। धूर्त्तस्य पङ्क्ति-मूर्द्धन्यस्य अनङ्गुष्ठं पाणिं गृहीत्वा प्रणम्यानुव्रजेत्। अत्र च दक्षिणा द्राक्षामलकादि। तथा च ब्रह्मपुराणम्। "द्राक्षा-मलकमूलानि यवांश्चाथ निवेदयेत्। तान्येव दक्षिणार्थन्तु दद्याद्विप्रेषु सर्वदा"॥ मूलमार्द्रकादि। निवेदयेत् भोज-नाय दद्यात् तानि द्राक्षामलकमूलानि। सम्भवे समुच्चयो-ऽसम्भवे प्रत्येकमपि दक्षिणा। आभ्युदयिकं नित्यं काम्यञ्च दर्शपौर्णमासवत्। देवीपुराणम्। "अष्टकामाघ्यभ्युदया-स्तीर्थपात्रोपपत्तयः। पितॄणामतिरेकोऽयं मासिकान्नात् ध्रुवः स्मृतः"॥ मासिकान्नादमावस्याश्राद्धादतिरेकोऽष्टकादिश्राद्ध-गणो ध्रुव आवश्यकः। विष्णुः "आदित्यसंक्रमणविषुवद्वयं विशेषेणायनद्वयं व्यतीपातो जन्मर्क्षमभ्युदयः। एतांस्तु श्राद्धकालान् वै काम्यानाह प्रजापतिः। श्राद्धमेतेषु यद्दत्तं तदानन्त्याय कल्पते"। एतच्च संयोगपृथक्त्वन्यायादविरुद्धम्। स च न्यायस्तिथितत्त्वेऽनुसन्धेयः। छन्दोगपरिशिष्टम्। "असकृद् यानि कर्म्माणि क्रियेरन् कर्म्मकारिणा। प्रतिप्रयोगं नैव स्युर्मातरः श्राद्धमेव च॥ आधाने होमयोश्चैव वैश्वदेवे तथैव च। बलिकर्म्मणि दर्शे च पौर्णमासे तथैव च॥ नवयज्ञे च यज्ञज्ञा वदन्त्येवं मनीषिणः। एकमेव भवेत् श्राद्धमेतेषु न पृथक् पृथक्॥ नाष्टकासु भवेत् श्राद्धं न श्राद्धं श्राद्ध-मिष्यते। न शोष्यन्ती जातकर्म्मप्रोषितागतकर्म्मसु॥ विवा-हादिः कर्म्मगणो य उक्तो गर्भाधानं शुश्रुम यस्य चान्ते॥

विवाहादावेकमेवात्र कुर्य्यात् श्राद्धं नादौ कर्म्मणः कर्म्मणः स्यात्। तथा गणयः क्रियमाणेषु मातृभ्यः पूजनं सकृत् ॥ सकृदेव भवेत् श्राद्धमादौ न पृथगादिषु। यत्र यत्र भवेत् श्राद्धं तत्र तत्रैव मातरः" ॥ यानि कर्म्माणि कृत्वा पुनः प्रति-दिनं प्रतिमासं प्रतिवत्सरं क्रियन्ते वैश्वदेवबलिकर्म्मदर्शपौर्णमा-सश्रावण्याग्रहायण्यादीनि तेषु प्रथमप्रयोग एव श्राद्धं मातृ-पूजा च न द्वितीयादिप्रयोगेष्वपि। आधाने अग्न्याधाने होमयोः सायं प्रातर्होमयोः नवयज्ञश्वाग्रहायणेष्टिः एतेषु आधानादिषु प्रतिप्रयोगं प्रतिकर्मापि श्राद्धं न कार्य्यं किन्त्वा-धानादौ कृते सर्वेष्वेव कृतं स्यात् तेनान्यत्र श्रावण्यादौ प्रति-कर्मैव श्राद्धमित्युक्तं सर्वाण्येवान्वाहार्य्यवन्तीति गोभिलगृह्ये सर्वाणि वक्ष्यमाणानि कर्माणि अन्वाहार्य्यवन्ति अनाहार्य्ये-माभ्युदयिकश्राद्धं दक्षिणा च तदुभययुक्तानि कार्य्याणीत्युक्तेः तथा च गृह्यान्तरं "यच्छ्राद्धं कर्मणामादौ या चान्ते दक्षिणा भवेत्। अमावास्यां द्वितीयं तदन्वाहार्य्यं प्रचक्षते"। तत्र कर्मविशेषे आभ्युदयिकश्राद्धं निषेधयति नाष्टकास्विति अष्ट-कासु अष्टकाहोमेषु। श्राद्धे गृह्योक्तास्वष्टकादिश्राद्धे पिण्ड-पितृयज्ञश्राद्धे च शोष्यन्ती होमः स च शोष्यन्तीं शूलायन्ती-मासन्नप्रसवां ज्ञात्वा होमः सुप्रसवै इत्यस्माद्वातोरिति भट्ट-भाष्यदन्यादिः। अथ जातकर्मणि श्राद्धनिषेधात् तत्र तद्वि-धायकं वचनं शाख्यन्तरीयम्। किन्तु पुत्रजन्मनिमित्तकं पुत्रमुखदर्शनार्थञ्च श्राद्धं कर्त्तव्यम्।

यथा मार्कण्डेयपुराणे। "नैमित्तिकमथो वक्ष्ये श्राद्धम-भ्युदयार्थकम्। पुत्रजन्मनि तत्कार्य्यं जातकर्मसमं बुधैः"। अत्र जातकर्मसमकालविधानादच्छिन्ननाड्यां कर्त्तव्यं तथा च विष्णुधर्मोत्तरम्। "अच्छिन्ननाड्यां कर्त्तव्यं श्राद्धं वै पुत्र-

जन्मनि। अशौचापगमे कार्य्यमथवापि नराधिप!"॥ न चास्य पूर्व्वपक्षोत्तरभावेन व्यवस्था हारलतोक्ता युक्ता पूर्व्ववैयर्थ्यापत्तेः जातकर्म्मसमकालविधानविरोधाच्च तस्माद्विकल्प एव शक्ताशक्तभेदेनोक्तः तावत्कालं स्तन्यादाने पुत्त्रनाशप्रसङ्गात् साङ्गं वृद्धिश्राद्धं कर्त्तुं न शक्यते चेदङ्गविकलमेव भविष्यतीति श्राद्धविवेकः। अतएव नव्यवर्द्धमानधृतभविष्यपुराणं "पिण्डनिर्व्वपणं कुर्य्यान्न वा कुर्य्याद्विचक्षणः। वृद्धिश्राद्धे कुलाचारात् देशकालाद्यपेक्षया। अग्नौकरणमर्घ्यञ्चावाहनञ्चावनेजनम्। पिण्डश्राद्धे प्रकुर्व्वीत पिण्डहीने विवर्जयेत्"। कृत्यप्रदीपेऽपि। "देशकालाद्यनुरोधेन यदि पिण्डरहितमाभ्युदयिकं क्रियते तदाग्नौकरणमर्घ्यदानावाहनावनेजनाद्युत्तरतन्त्रं निवर्त्तेत" इति पुत्त्रमुखदर्शननिमित्तश्राद्धञ्च वक्ष्यते। प्रवासादागतस्य पितुः पुत्त्रमूर्द्धाभिघ्राणरूपे प्रोषितागतकर्म्मणि गोभिलोक्तश्राद्धं न कार्य्यं विवाहादिति समसनीयचरुहोमगृहप्रवेशनयानारोहणचतुष्पथामन्त्रणाक्षभङ्गसमाधानार्थहोमचतुर्थीहोमानामादिशब्देन ग्रहणम् एषु विवाहादिगर्भाधानान्तकर्म्मस्वेकमेव श्राद्धं कर्त्तव्यं न प्रतिकर्म्मादौ एकेनैव कृतेन श्राद्धेन सर्व्वाण्येव तानि श्राद्धवन्तीति अन्तशब्दोऽत्र गणस्यावयवार्थः दशान्तः पट इतिवत् समीपार्थत्वे उपलक्षणं स्यात् ततश्च विशेषणोपलक्षणसन्देहे विशेषणत्वेन ग्रहणं कार्य्यान्वितत्वात् एतच्च छन्दोगपरम् अतएव भवदेवभट्टेनापि गर्भाधाने आभ्युदयिकं न लिखितम् अन्यवेदिभिस्तु "निषेककाले सोमे च सीमन्तोन्नयने तथा। ज्ञेयं पुंसवने चैव श्राद्धं कर्म्माङ्गमेव च" इति भविष्यपुराणे निषेककाले गर्भार्थशुक्राधानदिने श्राद्धं कर्म्माङ्गमित्यनेन विहितमाभ्युदयिकं कर्त्तव्यमिति तेषां श्राद्धानन्तरनिषेकविधानात् श्राद्धे नियुक्त इत्यादि विष्णुपुराणोक्तनिन्दा

एतद्भिन्नश्राद्धपरा गणशः समुदायेन एकस्मिन् दिने क्रियमाणेषु कर्मसु यथा यजनीयेऽहनि नवयज्ञवास्तुयज्ञगोयज्ञाश्वयज्ञेषु सर्वोद्देशेनैकमेव मातृपूजनमेकमेव च श्राद्धं सन्नियोगशिष्टत्वात् वसोर्धारादानमायुष्यमन्त्रजपश्च न तु कर्मसंख्यानुसारेण एतद्वचनं लाघवन्यायमूलम् अतएवाग्नेयादीनां षण्णामप्युद्देशेनाङ्गत्वात्तन्त्रेण प्रयाजादिकमित्येकादशाध्याये सिद्धान्तितं यत्र यत्रेति ननु कर्मादौ षड्भ्यः पितृभ्य इत्यनेन श्राद्धं विहितं कर्मादिषु च सर्वेष्वित्यनेन मातृपूजा विहिता इति। पुनरुक्तिर्न वैदिककर्मादौ मातृपूजा पूर्वमुक्ता अनेन पुत्रजन्मादौ वैदिककर्मादित्वाभावेऽपि श्राद्धनिमित्तत्वादेव विधीयते। यद्वा यत्र यत्र श्राद्धं भवेत्तत्र तत्रैव मातर इति वचनार्थः तेनाष्टकादौ वृद्धिश्राद्धनिषेधे मातृपूजानिषेधः।

अत्र विवाहान्तसंस्काराङ्गनान्दीमुखश्राद्धे पितुरधिकारमाह छन्दोगपरिशिष्टम्। "स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्मसु। पिण्डानोद्वहनात्तेषां तदभावेऽपि तत्क्रमात्"। सुतसंस्कारकर्मसु सुतसंस्कारजनककर्मसु। सुतसंस्कारग्रहणात् पुत्रविवाहान्तरे पित्रा नाभ्युदयिकं कार्य्यम् आद्येन संस्कारसिद्धौ द्वितीयादेस्तदजनकत्वात् तथा चाश्वलायनगृह्यपरिशिष्टं "सीमन्तोन्नयनं प्रथमे गर्भे सीमन्तोन्नयनसंस्कारो गार्भपात्रसंस्कारः" इति श्रुतिरिति गर्भपात्रयोरयं गार्भपात्रः गर्भस्योदरस्थस्य पात्रस्य तदाधारस्य स्त्रिया इति कल्पतरुः हारीतोऽपि "सकृत्तु कृतसंस्काराः सीमन्तेन कुलस्त्रियः। यं यं गर्भं प्रसूयन्ते स गर्भः संस्कृतो भवेत्। अत्र सकृत्संस्कृतपात्रजातानां सर्वेषां संस्काराभिधानेन प्रत्येककृतजातकर्मादिकसंस्काराणां सुतरां संस्कृतत्वं "सकृत्कृते कृतः शास्त्रार्थः" इति न्यायात् पिण्डानिति श्राद्धपरम्।

"कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः। नामकर्मणि बालानां चूड़ाकर्मादिके तथा। सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने। नान्दीमुखं पितृगणं पूजयेत् प्रयतो गृही" इति विष्णुपुराणीयैकवाक्यत्वात् तदैकवाक्यतयैकशेषात् सुतपदं कन्यापुत्रपरम्। आ उद्वहनादित्यत्राभिविधावाङ् तस्याभावेऽपि संस्कार्य्यक्रमवाधकस्य पितुरभावे पुनरन्यः संस्कार्य्यः सपिण्डादिर्वेति तत्क्रमादिति "चित्रं कर्म यथा अनेकैरङ्गैरुन्मील्यते शनैः। ब्राह्मण्यमपि तद्वत् स्यात् संस्कारैर्विधिपूर्वकैः" इत्यङ्गिरसोक्तफलभागितया तस्य प्रधानस्य संस्कार्य्यस्य क्रमात्तेषां पितृणां दद्यात् ततश्च संस्कार्य्यपित्रादित्रयमातामहादित्रयेभ्यः श्राद्धं कुर्य्यात् न च संस्कार्य्यपितरमादाय तेषां पितुः सम्प्रदानभूतानाम्। तत्क्रमादित्यनेन पितुः प्रवेशात् तत्प्रपितामहेतरपञ्चानामिति नारायणोपाध्यायमतं युक्तमिति वाच्यं पित्रनुप्रवेशेन संस्कार्य्यपितृपितामहप्रपितामहानां श्राद्धे तन्मातामहपक्षस्यैव "पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम्" इत्यनेन युक्तत्वात्। न वा तेषां संस्कर्त्तृपितॄणां संस्कार्य्य पितुः पितृगणमातामहानां वा ग्रहणं तत्क्रमादित्यनुपपत्तेस्तथा हि आद्ये संस्कर्त्तुरनुपात्तत्वेन तच्छब्दादनुपस्थितेः द्वितीये तेषामित्यनेनैव प्रक्रान्तत्वेन तथाविधानां प्राप्त्या तत्क्रमादित्यस्यानुवादकतापत्तेः अतएव कृत्यचिन्तामणिधृता स्मृतिः। "अष्टौ संस्कारकर्माणि गर्भाधानमिव स्वयम्। पिता कुर्य्यात्तदन्यो वा तदभावेऽपि तत्क्रमात्। तत्क्रमात् पितृक्रमात् तेनान्यवेदिना क्रियमाणे पितृशाखोक्तमेव कर्म कर्त्तव्यं तस्याभावे त्विति मैथिलपाठे प्रक्रान्तव्यवच्छेदक तु शब्देन द्वितीयपक्षस्य सुतरां वाधितत्वमिति ततस्तेषामिति निर्विशेषितपितमातृपरामर्शकमिति एवं

अत्रापि संस्कार्य्यदेवदत्तपितुरित्यादि प्रयोज्यम्। निर्णयामृते मत्स्यपुराणम् "अन्नप्राशे च सीमन्ते पुत्रोत्पत्तिनिमित्तके। पुंसवने निषेके च नववेश्मप्रवेशने। देववृक्षजलादीनां प्रतिष्ठायां विशेषतः। तीर्थयात्रावृषोत्सर्गे वृद्धिश्राद्धं प्रकीर्त्तितम्। हलायुधधृतकूर्मपुराणे। "तीर्थयात्रासमारम्भे तीर्थात् प्रत्यागमेऽपि च। वृद्धिश्राद्धं प्रकुर्वीत बहुसर्पिः समन्वितम्"। तीर्थयात्रायां विशेषमाह ब्रह्मपुराणम्। "यो यः कश्चित्तीर्थयात्रान्तु गच्छेत् सुसंयतः स च पूर्वं गृहे स्वे। कृतोपवासः शुचिरप्रमत्तः सम्पूजयेत् भक्तिनम्रो गणेशम्। देवान् पितॄन् ब्राह्मणांश्चैव साधून् धीमान् प्रीणयन् वित्तशक्त्या प्रयत्नात्। प्रत्यागतश्चापि पुनस्तथैव देवान् पितॄन् ब्राह्मणान् पूजयेच्च। एवं कुर्वतस्तस्य तीर्थाद्यदुक्तं फलं तत् स्यान्नात्र सन्देह एव"। एवं सुसंयतः पूर्वदिने कृतैकभक्तादिनियमस्तदुत्तरदिने कृतोपवासस्तदुत्तरदिने गणेशं ग्रहानिष्टदेवताश्च संपूज्य वृद्धिश्राद्धं कृत्वा ब्राह्मणान् भोजयेत् ततः शुभलग्ने यात्रां कुर्य्यादिति तीर्थयात्रान्तु गच्छेदित्युपक्रम्य उपवासदिने मुण्डनमपि। "प्रयागे तीर्थयात्रायां पितृमातृवियोगतः। कचानां वपनं कुर्य्यात् वृथा न विकचो भवेत्"। इति विष्णुपुराणात् प्रवेशेऽपि श्राद्धकरणे तीर्थयात्रायामिति वक्तव्यं "गच्छन् देशान्तरं यस्तु श्राद्धं कुर्य्यात्तु सर्पिषा। यात्रार्थमिति तत् प्रोक्तं प्रवेशे च न संशयः" इति भविष्यपुराणादिति गङ्गावाक्यावली। वस्तुतस्तु तीर्थप्रत्यागमनोत्तरस्वगृहप्रवेश इत्येव वक्तव्यं यात्राप्रत्यागमनोत्तरस्वगृहप्रवेशयोर्भेदात् तीर्थप्रत्यागमनोत्तरलाभस्तु प्रत्यागतश्चापीति प्रागुक्तेः ततः प्रवेशे चेति चकारेण श्राद्धमात्रं सूचितं न तु तस्य यात्रार्थत्वमपीति देवीपुराणे। अकालेप्यथ वा काले तीर्थश्राद्धं तथा नरैः। प्राप्तै-

रेव सदा कार्य्यं कर्त्तव्यं पितृतर्पणम्। पिण्डदानन्तु तच्छस्तं पितृणाञ्चातिदुर्लभम्। विलम्बो नैव कर्त्तव्यो नैव विघ्नं समाचरेत्। श्राद्धं तत्र च कर्त्तव्यमर्घ्यावाहनवर्जितम्"। अत्र काल इति न रात्र्यादिपर्य्युदस्तप्रतिप्रसवस्तथात्वे तद्बाधापत्तेः किन्तु पर्य्युदस्तेतर अप्रशस्तकालपरम्। "तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः"। इत्यनुशासनग्रन्थानुरोधात् काल इति प्रशस्तापराह्णादिकालपरं तत्र शुचेः प्राप्तुरुत्तरविहितप्रथमदिन एव श्राद्धं तेन पूर्वदिने राक्षसीवेलादावागमनेऽपि परदिने श्राद्धं न विरुद्धम्। तथा च हलायुधधृतम्। गत्वैव तीर्थं कर्त्तव्यं श्राद्धं तत्प्राप्तिहेतुकम्। पूर्वाह्णेऽप्यथवा प्रातर्देशः स्यात् पूर्वदक्षिणे"। पूर्वाह्णे सङ्गवे पूर्वदक्षिणेऽग्निकोणे पिण्डदानमिति श्राद्धासम्भवे केवलपिण्डदानमिति न पौनरुक्त्यम्। पिण्डप्रतिपत्तिमाह मत्स्यपुराणं "पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा। तीर्थश्राद्धे सदा पिण्डान् क्षिपेत्तीर्थे विचक्षणः"। गङ्गावाक्यावल्याम्। "संवत्सरं हिमासोनं पुनस्तीर्थं व्रजेद्यदि। मुण्डनञ्चोपवासञ्च ततो यत्नेन कारयेत्। अत्र हिमासोनमित्यनेन दशमासात् पूर्वं मुण्डनोपवासौ न कार्य्याविति सूचितम्। अन्त्येष्टिप्रमाणं दानप्रमाणञ्च शुद्धितत्त्वेऽभिहितं वानुसन्धेयम्। इति वन्द्यघटीयश्रीरघुनन्दनभट्टाचार्य्यविरचितं श्राद्धप्रमाणतत्त्वं समाप्तम्।

---

# आह्निकतत्त्वम् ।

नमो गणेशाय ।

प्रणम्य सच्चिदानन्दं भुक्तिमुक्तिप्रदायकम् ।
आह्निकाचारतत्त्वानि वक्ति श्रीरघुनन्दनः ॥

अथ प्रातःकृत्यम् । तत्र दक्षः । "प्रातरुत्थाय कर्त्तव्यं यत् द्विजेन दिने दिने । तत्सर्वं संप्रवक्ष्यामि द्विजानां हितकारकम् ॥ दिवसस्याद्यभागे तु कृत्यं तस्योपदिश्यते । द्वितीये च तृतीये च चतुर्थे पञ्चमे तथा । षष्ठे च सप्तमे चैव अष्टमे च पृथक् पृथक्" ॥ तत्र दिनपदं ब्राह्ममुहूर्त्तादिप्रदोषान्तकालपरम् । "त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम् । नाड़ीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते" ॥ इति ब्रह्मवैवर्त्तवचनैकवाक्यत्वात् नाड़ीदण्डः । ब्राह्ममुहूर्त्तकृत्यमाह वामनपुराणम् । ब्राह्मे मुहूर्त्ते बुध्येत स्मरेद्देववरान्मुनीन् । "ब्रह्मा मुरारिस्त्रिपुरान्तकारी भानुः शशी भूमिसुतो बुधश्च । गुरुश्च शुक्रः शनिराहुकेतू कुर्वन्तु सर्वे मम सुप्रभातम्" ॥ ब्राह्ममुहूर्त्तमाह पितामहः । रात्रेश्च पश्चिमे यामे मुहूर्त्तो ब्राह्म उच्यते" । पश्चिमे यामे शेषार्द्धप्रहरे भवदेवीयनिर्णयामृते सुमन्तुः । "रात्रेश्च पश्चिमे यामे मुहूर्त्तो यस्तृतीयकः । स ब्राह्म इति विख्यातो विहितः संप्रबोधने" ॥ शेषार्द्धप्रहरे ब्राह्मो मुहूर्त्त इति मदनपारिजातात् । तत्र सूर्य्योदयात् प्रागर्द्धप्रहरे द्वौ मुहूर्त्तौ तत्र आद्यो ब्राह्मः द्वितीयो रौद्रः । ततः "प्रातः शिरसि शुक्लाब्जे द्विनेत्रं द्विभुजं गुरुम् । प्रसन्नवदनं शान्तं स्मरेत्तन्नामपूर्वकम् ॥ नमोऽस्तु गुरवे तस्मै इष्टदेवस्वरूपिणे । यस्य वाक्यामृतं हन्ति विषं संसारसंज्ञकम्" ॥ इति पठेत्

"अहं देवो न चान्योऽस्मि ब्रह्मैवाहं न शोकभाक्। सच्चिदानन्दरूपोऽहं नित्यमुक्तस्वभाववान्" ॥ इति भावयेत्। "लोकेश-चैतन्यमयाधिदेव श्रीकान्त विष्णो भवदाज्ञयैव। प्रातः-समुत्थाय तव प्रियार्थं संसारयात्रामनुवर्त्तयिष्ये ॥ जानामि धर्मं न च मे प्रवृत्तिर्जानाम्यधर्मं न च मे निवृत्तिः। त्वया हृषीकेश हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि" ॥ विष्णुपुराणम्। "प्रबुद्धश्चिन्तयेत् धर्म्ममर्थञ्चास्याविरोधिनम्। अपीड़या तयोः काममुभयोरपि चिन्तयेत्" ॥ धर्म्मलक्षणन्तु भविष्ये। "धर्म्मः श्रेयः समुद्दिष्टं श्रेयोऽभ्युदयसाधनम्" ॥ अतएव जैमिनिः। "चोदनालक्षणोऽर्थोधर्म्मः इति तेन वैदिक-प्रतिपाद्योऽर्थोधर्म्मः कोऽर्थो योऽभ्युदयायेति भाष्यम्। ततश्च प्रियदत्तायै भुवे नमः। इति पृथिवीं नमस्कृत्य दक्षिणं चरणं न्यस्येत्। छन्दोगपरिशिष्टम्। "श्रोत्रियं सुभगामग्निगाञ्चै-वाग्निचितन्तथा। प्रातरुत्थाय यः पश्येदापद्भ्यः स विमुच्यते ॥ पापिष्ठं दुर्भगां मद्यं नग्नमुत्कृत्तनासिकम्। प्रातरुत्थाय यः पश्येत्तत्कलेरुपलक्षणम्" ॥ अतएव व्यासः। "धनिनः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः। पञ्च यत्र न विद्यन्ते तत्र वासं न कारयेत्" ॥ महाभारते। "कर्कोटकस्य नागस्य दमयन्त्या नलस्य च। ऋतुपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनम्" ॥ मात्स्ये। "कार्त्तवीर्य्यार्जुनो नाम राजा बाहुसहस्रभृत्। योऽस्य संकीर्त्तयेन्नाम कल्यमुत्थाय मानवः। न तस्य वित्तनाशः स्यान्नष्टञ्च लभते पुनः" ॥ कल्यं प्रातः।

अथ विण्मूत्रोत्सर्गः। विष्णुधर्म्मोत्तरे। "निद्रां जह्याद्गृही राम नित्यमेवारुणोदये। वेगोत्सर्गं ततः कृत्वा दन्त-धावनपूर्वकम्। स्नानं समाचरेत् प्रातः सर्वकल्मषनाशनम्" ॥ अरुणोदयकालमाह स्कन्दपुराणम्। "उदयात् प्राक् चतस्रस्तु

नाड़िका अरुणोदयः। तत्र स्नानं प्रशस्तं स्यात्तद्धि पुण्यतमं स्मृतम्"। नाड़िका दण्डः। नाड़ीषष्ट्या दिवानिशमित्युक्तेः। विष्णुधर्मोत्तरे। "वेगरोधं न कर्त्तव्यमन्यत्र क्रोधवेगतः"। वेगरोधं न कर्त्तव्यमिति तु कां दिशं गन्तव्यमितिवत् भावाख्यातेतरत्वात् साधुत्वम्। आयुर्वेदीयेऽपि। "न वेगितोऽन्यसिद्धिः स्यात् नाजित्वा साध्यमामयम्"। अङ्गिराः। "उत्थाय पश्चिमे रात्रे स्तत आचम्य चोदकम्। अन्तर्धाय तृणैर्भूमिं शिरः प्रावृत्य वाससा। वाचं नियम्य यत्नेन ष्ठीवनोच्छ्वासवर्जितः। कुर्य्यान्मूत्रपुरीषे तु शुचौ देशे समाहितः"। विष्णुपुराणम्। "ततः कल्यं समुत्थाय कुर्य्यान्मैत्रं नरेश्वर। नैर्ऋत्यामिषुविक्षेपमतीत्याभ्यधिकं भुवः। तिष्ठन्नातिचिरं तस्मिन्नेव किञ्चिदुदीरयेत्"। कल्यमुषः कालम्। मैत्रं मित्रदेवताकं पायुसम्बन्धात् पुरीषोत्सर्गं नैर्ऋत्यामुत्थानदेशमारभ्य उत्थायेत्यनेनोपस्थितेः। इषुविक्षेपमतीत्य इषुविक्षेपयोग्यदेशाद्बहिः। तद्देशपरिमाणमाह पितामहः। "मध्यमेन तु चापेन प्रक्षिपेत्तु शरत्रयम्। इस्तानान्तु शते सार्द्धे लक्ष्यं कृत्वा विचक्षणः"। आपस्तम्बः। "मूत्रपुरीषे कुर्य्यात् दक्षिणां दिशं दक्षिणापरां वेति"। दक्षिणापरा नैर्ऋतिः। मनुः। "मूत्रोच्चारसमुत्सर्गं दिवा कुर्य्यादुदङ्मुखः। दक्षिणाभिमुखो रात्रौ सन्ध्ययोश्च यथा दिवा"। उच्चारः पुरीषः। यत्तु यमवचनं "प्रत्यङ्मुखश्च पूर्वाह्णे अपराह्णे च प्राङ्मुखः। उदङ्मुखस्तु मध्याह्ने निशायां दक्षिणामुखः"। इति उदङ्मुखेन सहेच्छाविकल्पार्थं सूर्य्याभिमुखनिरासार्थञ्च न तु नियमार्थं देवलवचनविरोधात्। तथाच "सदैवोदङ्मुखः प्रातः सायाह्ने दक्षिणामुखः। विण्मूत्रे आचरेन्नित्यं सन्ध्यायां परिवर्जयेत्" इत्यत्र प्रातःसायाह्नशब्दौ दिवारात्रिपरौ। पूर्वाह्णमनुवश-

नैकवाक्यत्वात्। सन्ध्यायां परिवर्जयेदिति तु पीड़ितेतर-परम्। यमः। "कृत्वा यज्ञोपवीतन्तु पृष्ठतः कण्ठलम्बितम्। विण्मूत्रे च गृही कुर्य्यात् यद्वा कर्णे समाहितः"। पृष्ठतः पृष्ठे। कण्ठलम्बितं निवीतम्। अत्र संवीतं निवीतम्। "संवीतं मानुषे कृत्ये" इति तैत्तिरीयश्रुतेः। मानुषे मल-मूत्रादिकृत्ये "पृष्ठलम्बितं निवीतं वा" इति बौधायनवचनाच्च। तथाच हारवत् कृत्वा पृष्ठलम्बितं स्कन्धे इत्यर्थः अत्र व्यवस्था-माह सांख्यायनः। "यद्येकवस्त्रो यज्ञोपवीतं कर्णे कृत्वा अवगुण्ठितः" इति कर्णे दक्षिणकर्णे। "पवित्रं दक्षिणे कर्णे कृत्वा विण्मूत्रमाचरेत्"। इति स्मृतौ तथा दर्शनात्। अव-गुण्ठितः कृतशिरोऽवगुण्ठनः। मनुः। "छायायामन्धकारे वा रात्रावहनि वा द्विजाः। यथासुखमुखः कुर्य्यात् प्राणबाध-भयेषु च"। महाभारते। "प्रत्यादित्यं प्रतिजलं प्रतिगाञ्च प्रतिद्विजम्। मेहन्ति ये च पथिषु ते भवन्ति गतायुषः"। प्रतिः सांमुख्ये। मनुः। "न मूत्रं पथि कुर्वीत न भस्मनि न गोव्रजे। न फालकृष्टे न जले न चित्यां न च पर्वते। न जीर्णदेवायतने न वल्मीके कदाचन। न ससत्वेषु गर्त्तेषु न गच्छन्नापि संस्थितः। न नदीतीरमासाद्य न च पर्वतमस्तके। वाय्वग्निविप्रानादित्यमपः पश्यंस्तथैव च। न कदाचन कुर्वीत विण्मूत्रस्य विसर्जनम्"। ससत्वेषु प्राणिमत्सु। संस्थितः उपस्थितः। पर्वतमस्तकनिषेधोऽधिकदोषाय। वशिष्ठः। "आहारनिर्हारविहारयोगाः सुसम्भृता धर्मविदा तु कार्य्याः। वाग्बुद्धिकार्य्याणि तपस्तथैव धनायुषी गुप्ततमे तु कार्य्ये"। निर्हारो मूत्रपुरीषोत्सर्गः। विहारः स्त्रीसम्भोगः। योगः समाधिः। वाग्गुप्तिरश्लीलालापत्यागः। बुद्धिगुप्तिरनिष्टचिन्ता-त्यागः। हारीतः। "आहारन्तु रहः कुर्य्यात् निर्हारञ्चैव

सर्वदा। गुह्याभ्यां लक्ष्म्यपेतः स्यात् प्रकाशे ष्ठीवते तथा"। विष्णुपुराणम्। "सोमाग्न्यर्काम्बुवायूनां पूज्यानाञ्च न संमुखे। कुर्य्यात् ष्ठीवनविण्मूत्रसमुत्सर्गञ्च पण्डितः"। आपस्तम्बः। "न च सोपानत्को मूत्रपुरीषे कुर्य्यादिति"। वृहन्मनुः। "करगृहीतपात्रेण कृत्वा मूत्रपुरीषके। मूत्रतुल्यन्तु पानीयं पीत्वा चान्द्रायणञ्चरेत्"। भरद्वाजः। "अथ विकृष्य विण्मूत्रं लोष्ट्रकाष्ठतृणादिना। उदस्तवासा उत्तिष्ठेद्दृढं विधृतमेहनः। उदस्तवासाः कटिदेशादुत्क्षिप्तवस्त्रः।

अथ शौचम्। देवलः। "धर्म्मविद्दक्षिणं हस्तमधःशौचे न योजयेत्। तथैव वामहस्तेन नाभेरूर्द्ध्वं न शोधयेत्। प्रकृतिस्थितिरेषा स्यात् कारणादुभयक्रिया"॥ कारणाद्रोगादेः। ब्रह्माण्डपुराणम्। "उद्धृतोदकमादाय मृत्तिकाञ्चैव वाग्यतः। उदङ्मुखो दिवा कुर्य्यात् रात्रौ चेद्दक्षिणामुखः॥ सुनिर्णिक्ते मृदं दद्यात् मृदन्ते त्वप एव च। दातव्यमुदकं तावद् यावत् स्यात् मृत्तिकाक्षयः"॥ कुर्य्यात् शौचमिति शेषः। सुनिर्णिक्ते भरद्वाजोक्त लोष्ट्रादिप्रमृष्टे गुदे। उदकपात्राभावे करेण जलाशयादुदकग्रहणमाह आदित्यपुराणम्। "अरत्निमात्रं जलं त्यक्त्वा कुर्य्यात् शौचमनुद्धृते। पश्चाच्च शोधयेत्तीर्थमन्यथा न शुचिर्भवेत्"॥ तस्मिन् देशे शौचं कर्त्तव्यं यस्मादरत्निमात्रव्यवहितं जलं तत्स्थलमेव तीर्थं जलसमीपत्वात्। विष्णुपुराणम्। "वल्मीकमूषिकोत्खातां मृदमन्तर्जलान्तथा। शौचावशिष्टां गेहाच्च नादद्यात् लेपसम्भवाम्। अन्तःप्राण्यवपन्नाञ्च हलोत्खातां सकर्द्दमाम्"॥ मनुदक्षौ। "एका लिङ्गे गुदे तिस्रो दश वामकरे तथा। उभयोः सप्त दातव्या मृदः शुद्धिमभीप्सता"॥ उभयोः करयोः। विष्णुपुराणम्। "एका लिङ्गे गुदे तिस्रो दश वामकरे तथा। हस्त-

हये च सप्तान्या मृदः शौचोपपादिकाः” ॥ यमः । “लिङ्गे त्वेका गुदे तिस्रो वामहस्ते चतुर्द्दश । ततः पुनरुभाभ्याञ्च दातव्याः सप्त मृत्तिकाः” ॥ पैठीनसिः । “मृत्तिकां संगृह्य एका लिङ्गेऽपाने पञ्च एकस्मिन् हस्ते दश उभयोः सप्त इत्यादि”। एतासां संख्यानां दक्षाद्युक्ताधिक्यं गन्धाद्यनुवृत्तिमनुरुध्य व्यवस्थेयम् । वामहस्ते दशदानानन्तरं तत्पृष्ठे षड्दानमाह हारीतः । “दशमध्ये च षट्पृष्ठे इति” । शङ्खदक्षौ “तिस्रस्तु मृत्तिका देयाः कृत्वा नखविशोधनम् । तिस्रस्तु पादयोर्देयाः शुद्धिकामेन नित्यशः” ॥ नखशोधनं तृणादिना नखान्तर्मल-शोधनं तिस्र इति हस्तयोरिति शेषः । पादप्रक्षालनं कांस्ये न कर्त्तव्यमित्याह विष्णुधर्मोत्तरम् । “दर्भैर्न मार्जयेत् पादौ न च कांस्ये प्रधावयेत्” । दक्षः । “लिङ्गे तत्र समाख्याता त्रिपर्व्वी पूर्य्यते यया । अर्द्धप्रसृतिमात्रा तु प्रथमा मृत्तिका स्मृता ॥ द्वितीया च तृतीया च तदर्द्धाऽर्द्धा प्रकीर्त्तिता” ॥ यदा तु उक्तप्रमाणया मृदा गन्धलेपक्षयो न भवति तदा अधिकयापि कर्त्तव्यम् । “गन्धलेपक्षयकरं शौचं कुर्य्यादतन्द्रितः” । इति याज्ञवल्क्यात् । गुदादन्यत्र परिमाणमाह यमः । “मृत्तिका तु समुद्दिष्टा त्रिपर्व्वी पूर्य्यते यया” । त्रिपर्व्वी तर्जनी मध्यमानामिकानामग्रत्रयं मूत्रमात्रे तु स्मृतिः । “एकां लिङ्गे मृदं दद्यात् वामहस्ते तु मृत्त्रयम् । उभयोर्हस्तयोर्द्वे च मूत्रशौचं प्रकीर्त्तितम्” । ब्रह्मपुराणे । “पादयोर्द्वे गृहीत्वा च सुप्रक्षालित पाणिमान् । द्विराचम्य ततः शुद्धः स्मृत्वा विष्णुं सनातनम्” ॥ पादयोर्द्वे एकैका इदं मूत्रोत्सर्गे पुरीषोत्सर्गे तिसृणां विधानात् । दक्षः । “यथोदितं दिवा शौचम् अर्द्धं रात्रौ विधीयते । आतुरे तु तदर्द्धं स्यात्तदर्द्धं तु पथि स्मृतम्” ॥ यथोक्तकरणाशक्ताविदं न तु निशादि पुरस्कारेणैव वाक्यस्या-

दृष्टार्थतापत्तेः। आपस्तम्बः। "पथि पादस्तु विज्ञेय आर्त्तः कुर्य्याद्यथाबलम्"। एतयोर्विरोध आर्त्तानार्त्ताभ्यां परिहरणीयः। दक्षबौधायनौ। "देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम्। उपपत्तिमवस्थाञ्च ज्ञात्वा शौचं प्रकल्पयेत्"॥ ब्रह्मपुराणे। "न यावदुपनीयेत द्विजः शूद्रस्तथाङ्गना। गन्धलेपक्षयकरं शौचं तेषां विधीयते॥ प्रमाणं शौचसंख्या वा न शिष्टैरुपदिश्यते। यावत् शुद्धिं स मन्येत तावत् शौचं समाचरेत्। न्यूनाधिकं न कर्त्तव्यं शौचं शुद्धिमभीप्सता। प्रायश्चित्तं प्रसज्येत विहितातिक्रमे कृते। शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः"॥ गन्धलेपक्षये सत्यधिकं न कर्त्तव्यं याज्ञवल्क्यविरोधात्। गन्धलेपाक्षयेत्वधिकसंख्ययापि याज्ञवल्क्यवचनमनुपनीतादि परं वा। व्याघ्रपादः। "शौचन्तु द्विविधं प्रोक्तं वाह्यमाभ्यन्तरन्तथा। मृज्जलाभ्यां स्मृतं वाह्यं भावशुद्धिस्तथान्तरम्। गङ्गातोयेन कृत्स्नेन मृद्भारैश्च नगोपमैः। आमृत्योः स्नातकश्चैव भावदुष्टो न शुद्ध्यति"। स्मृतिः। "धावन्तञ्च प्रमत्तञ्च मूत्रोच्चारकृतन्तथा। भुञ्जानमाचमनार्हञ्च नास्तिकं नाभिवादयेत्। जन्मप्रभृति यत्किञ्चित् चेतसा धर्ममाचरेत्। सर्वं तन्निष्फलं याति एकहस्ताभिवादनात्"। ऋष्यशृङ्गः। "यस्मिन् स्थाने कृतं शौचं वारिणा तद्विशोधयेत्। न शुद्धिस्तु भवेत्तस्य मृत्तिकां यो न शोधयेत्"। शौचानन्तरं हारीतः। 'गोमयेन मृदा वा कमण्डलुं प्रमृज्य पूर्ववदुपस्पृश्य आदित्यं सोममग्निं वा वीक्षेत इति" अत्र मार्जनानन्तरं चालनमन्यत्र तथा दर्शनात्। आचमनानन्तरं सूर्य्यादिदर्शनं यथा सम्भवम्।

आचमनविधिः। दक्षः। "प्रक्षाल्य पाणीपादौ च त्रिः पिवेदम्बुवीक्षितम्। संवृत्याङ्गुष्ठमूलेन द्विःप्रमृज्यात्ततो मुखम्।

संहृत्य तिसृभिः पूर्वमास्यमेवमुपस्पृशेत्। अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम्। अङ्गुष्ठानामिकाभ्याञ्च चक्षुःश्रोत्रे पुनः पुनः। नाभिः कनिष्ठाङ्गुष्ठेन हृदयन्तु तलेन वै। सर्वाभिस्तु शिरः पश्चात् बाहू चाग्रेण संस्पृशेत्"। पादप्रक्षालनं विशेषयति देवलः। "प्रथमं प्राङ्मुखः स्थित्वा पादौ प्रक्षालयेच्छनैः। उदङ्मुखो वा दैवत्ये पैतृके दक्षिणामुखः"। शनैस्त्वरः। दैवपैतृकेतराचापस्तम्बः। "प्रत्यक् पादावसेचनमिति"। प्रत्यक्पश्चिमाभिमुखः। क्रममाह गोभिलः। "सव्यं पादमवनेनिजे" इति सव्यं पादं प्रक्षालयति। "दक्षिणं पादमवनेनिजे" इति दक्षिणं पादं प्रक्षालयति। अर्हणीये तथादर्शनात् सर्वत्र तथा कल्प्यते। पारस्करः। "सव्यं प्रक्षाल्य दक्षिणं प्रक्षालयतीति" सव्यं प्रथमं प्रक्षालयतीति सूत्रेण प्राक्सव्यपादप्रक्षालने सिद्धे सव्यं प्रक्षाल्य दक्षिणं प्रक्षालयतीत्यत्र सव्यग्रहणं सामान्यार्थं तेनान्यस्मिन्नपि पादप्रक्षालने सव्यस्यैव प्राथम्यम् अन्यार्थं पूर्ववचनमिति दर्शनात्। ब्राह्मणश्चेद् दक्षिणं प्रथममिति सूत्रं तस्य पादौ यदि ब्राह्मणः प्रक्षालयति तदा दक्षिणं दातव्यप्रथममिति मन्तव्यं न सव्यं यथा प्रक्षालयतीत्यनुवृत्तावाश्वलायनः। "दक्षिणमग्रे ब्राह्मणाय प्रयच्छेत् सव्यं शूद्रायेति" स्वयं प्रक्षालने सव्यस्यैव प्राथम्यमिति हरिशर्म्मा। एवञ्च दक्षिणपादप्रक्षालनानन्तरं वामपादप्रक्षालनं वाचस्पतिमिश्राद्युक्तं हेयमिति। आचमने पाणिपादप्रक्षालनं मूत्राद्युत्सर्गे यथा वृद्धपराशरः। "कृत्वाथ शौचं प्रक्षाल्य पादौ हस्तौ च मृज्जलैः। निबद्धशिख आसीनो द्विज आचमनञ्चरेत्। कृत्वोपवीतं सव्येऽंशे वाङ्मनःकायसंयतः"॥ आपस्तम्बः। "इत्येवमङ्गिराजानु प्रक्षाल्य चरणौ पृथक्। हस्तौ चामनिबन्धाभ्यां पश्चादासीत संयतः"॥ आजानु आमनिबन्धा-

भ्यामित्यवध्युपादानं तत्पर्य्यन्ताशुचित्वशङ्कायामध्वश्रमापनोद-नायातिशयशौचाय वा अतएवोक्तम् "अङ्गप्रकर्षात् फलप्रकर्षः" इति ।

शिखाबन्धे विशेषमाह ब्रह्मपुराणम्। "गायत्र्या तु शिखां बद्धा नैरृर्त्यां ब्रह्मरन्ध्रतः । जुटिकाञ्च ततो बद्धा ततः कर्म्म समारभेत्" । शूद्रस्य शिखाबन्धे मन्त्रस्तु । "ब्रह्मवाणीसहस्राणि शिववाणीशतानि च । विष्णोर्नामसहस्रेण शिखाबन्धं करोम्यहम् ॥ गच्छन्तु सकला देवा ब्रह्मविष्णुमहेश्वराः । तिष्ठत्वत्राचला लक्ष्मीः शिखामुक्तं करोम्यहम्" ॥ पिबेदित्य-त्रान्तर्जानु इत्याह याज्ञवल्क्यः । "अन्तर्जानुशुचौ देशे उप-विष्ट उदङ्मुखः । प्राग् वा ब्राह्मेण तीर्थेन द्विजो नित्यमुप-स्पृशेत्" ॥ अन्तर्जानु जानुनोर्मध्ये हस्तौ कृत्वेति शेषः । तथाच हारीतः । "अन्तरूर्वोररत्नीकृत्वा त्रिरपो हार्द्दीश्च पिबे-दिति" । अरत्नीकृतौ हस्तौ हार्द्दीः हृद्गता इत्यर्थः । वाशब्दादी-शाभिमुखश्च । "ईशानाभिमुखो भूत्वाऽपः स्पृशेत्तु यथा-विधि" । इति मरीच्युक्तेः । ब्राह्मेण तीर्थेनाङ्गुष्ठमूलेन । "कनिष्ठप्रदेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च । प्रजापतिपितृ-ब्रह्मदेवतीर्थान्यनुक्रमात्" ॥ करस्य दक्षिणस्य । तथाच मार्क-ण्डेयपुराणम् । "अङ्गुष्ठोत्तरतो रेखा या पाणेर्दक्षिणस्य च । एतत् ब्राह्ममिति ख्यातं तीर्थमाचमनाय वै" ॥ द्विजो न शूद्रादिरिति मिताक्षरा । अतएव "स्त्रियास्त्वेदशिकं तीर्थं शूद्रजातेस्तथैव च । सकृदाचमनाच्छुद्धिरेतयोरेव चोभयोः" ॥ ब्राह्मणावरोधे मनुः । "कायत्रैदशिकाभ्याञ्च न पिबेण कदा-चन" । याज्ञवल्क्यः । "अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेन-बुद्बुदैः । हृत्कण्ठतालुगाभिश्च यथासंख्यं द्विजातयः । शुध्येरन् स्त्री च शूद्रश्च सकृत् स्पृष्टाभिरन्ततः" ॥ अन्तत ओष्ठप्रान्ते

उत्तरोत्तरमपकर्षात् । अतएव स्पृष्टाभिरित्युक्तं न तु भक्षिताभिरित्युक्तम् । "स्त्रीशूद्रौ वाथ नित्याभ्यः चालनाच्च करोष्ठयोः" । इति ब्रह्मपुराणाच्च । आचमनार्थे पाणिपादप्रक्षालनमेव इत्येके इति स्त्रीशूद्राधिकारे गोतमोक्तिश्च । आचमनाईंजलाभावे इत्याचाराध्यायात् दक्षिणश्रवणस्पर्शः । मनुः । "हृद्गाभिः पूयते विप्रः कण्ठगाभिस्तु भूमिपः । वैश्योऽद्भिः प्राशिताभिश्च शूद्रः स्पृष्टाभिरन्ततः" ॥ अत्र वैश्यावधिप्राशनमुक्तम् । अनुपनीतानान्तु स्त्रीशूद्रवदाचमनम् । "न यावदुपनीयेत द्विजः शूद्रस्तथाङ्गना । गन्धलेपक्षयकरं शौचं तेषां विधीयते" ॥ इति शौचे प्रागुक्तदर्शनात् । मिताक्षराद्योऽप्येवम् । अत्र विशेषयति बौधायनः । पादप्रक्षालनात् शेषेण नाचामेत् यद्याचामेत् भूमौ स्रावयित्वा आचामेदिति" । उशना । "कांस्यायसेन पात्रेण त्रपुसीसकपित्तलैः । आचान्तः शतकृत्वोऽपि न कदाचिच्छुचिर्भवेत्" ॥ आचमनजलनिषेधे शङ्खलिखितौ । "न शूद्राशुच्येकपाण्यावर्जितेनेति" । अत्राशुचिपदम् आचमनकर्तृभिन्नपरं शूद्रसाहचर्य्यात् एकपाणिपदमपि कर्तृपाणिभिन्नपरम् । तेन स्वीयवामपाण्यावर्जिते न दोषः तदाह बौधायनः । "मूत्रपुरीषे कुर्वन् दक्षिणहस्तेन जलपात्रं गृह्णाति सव्येनाचमनीयमिति" गृह्णाति जलमिति शेषः । आचामेदित्यनुवृत्तौ देवलः । "शिखां बद्धा वसित्वा द्वे निर्णिक्ते वाससी शुभे । तूष्णीं भूत्वा समादाय नीचैश्चक्षुर्विलोकयन् ॥ एकवस्त्रः प्राचीनावीतिनः" इत्यादिपारस्करदर्शनात् । अत्र प्रेतस्नानतर्पणादौ एकवस्त्रत्वं विहितं तत्र च तदङ्गत्वात् । एकवासा एवाचमनं कुर्य्यात् । प्रचेताः । "अनुष्णाभिरफेनाभिः पूताभिर्वीक्ष्य चक्षुषा । हृद्गताभिर्विशब्दाभिस्त्रिश्चतुर्वाद्भिराचमेत्" ॥ चतुर्वेति भावशुद्ध्यपेक्षया विकल्पः

न च भूयस्त्वार्थं कल्पनागौरवापत्तेः। वीक्षणानुक्षयोर्भट्टभाष्यमाधवाचार्य्यकृतपराशरभाष्ययोरपवादमाह यमः। "रात्राववीक्षितेनापि शुद्धिरुक्ता मनीषिभिः। उदकेनातुराणाञ्च तथोष्णेनोष्णपायिनाम्" ॥ आचामेदित्यनुवृत्तौ वशिष्ठः। "प्रदरादपि यागोस्तर्पणाय स्युः न वर्णैरसदुष्टायाश्च स्युरशुभागमाः"। इति प्रदरः स्वयं विदीर्णभूभागः अशुभदेशादागताः। यस्मिन् देशे वर्णाभिदुष्टमेव तोयं तत्र तदपि ग्राह्यं तथाच मरीचिः। "येषु स्थानेषु यत् शौचं धर्म्माचारश्च यादृशः। तत्र तन्नावमन्येत धर्मस्तत्रैव तादृशः। "येषु स्थानेषु ये देवा येषु स्थानेषु ये द्विजाः। येषु स्थानेषु यत्तोयं या च यत्रैव मृत्तिका"।

आचमने उदकग्रहणप्रकारपरिमाणञ्चाह भरद्वाजः। "अयातं पर्वणां कृत्वा गोकर्णाकृतिमत्करम्। संहताङ्गुलिना तोयं गृहीत्वा पाणिना द्विजः॥ मुक्ताङ्गुष्ठकनिष्ठाभ्यां शेषेणाचमनं चरेत्। माषमज्जनमात्रास्तु संगृह्य त्रिःपिबेदपः" ॥ पाणिना दक्षिणेन त्रिःपिबेद्दक्षिणेन इत्यादिपुराणोक्तेः। मार्कण्डेयः। "सपवित्रेण हस्तेन कुर्य्यादाचमनक्रियाम्। नोच्छिष्टं तत् पवित्रन्तु भुक्तोच्छिष्टन्तु वर्जयेत्" ॥ मदनपारिजाते हारीतः। "ग्रन्थिर्यस्य पवित्रस्य न ते नाचमनञ्चरेत्'। ग्रन्थनाग्रन्थिरिति समुद्रकरोऽपि। आचमनानुवृत्तौ देवलः। "न गच्छन् न शयानश्च न क्रमन् न परान् स्पृशन्। न हसन् नैव संजल्पन् नात्मानञ्चैव वीक्षयन्"। क्रमन् कम्पमान इति रत्नाकरः। आत्मानम् आत्मस्थानं हृदयं वीक्षयन् इति स्वार्थे णिच्। नेत्यनुवृत्तौ। "केशान्नीवीमधःकायं संस्पृशन् धरणीमपि। यदि स्पृशति चैतानि भूयः प्रक्षालयेत् करम्"। अधःकायं नाभेरधःप्रदेशम्। करं

दक्षिणम् आचमनानुवृत्तौ गोभिलः। "नान्तरीयैकदेशेन कल्पयित्वोत्तरीयकम्" इति। अन्तरीयमधःपरिधानं तदेकदेशेन उत्तरीयं कृत्वा। मरीचिः। "न वहिर्जानुरुर्ध्वस्थयनासनस्थो न चोत्थितः। न पादुकास्थो नाचित्तः शुचिः प्रयतमानसः॥ उपस्पृश्य द्विजो नित्यं शुद्धः पूतो भवेन्नरः। भुक्त्वासनस्थोऽप्याचामेत् नान्यकाले कदाचन"॥ जलस्थलोभयकर्मानुष्ठानार्थं जलस्थलैकचरणेनाचमनं कर्त्तव्यमित्याह पैठीनसिः। "अन्तरुदके आचान्तोऽन्तरेव पूतो वहिरुदके आचान्तो वहिरेव शुद्धो भवति तस्मादन्तरेकं वहिरेकं पादं कृत्वा आचामेत् सर्वत्र शुद्धो भवति" इति जानोरूर्द्ध्वजलेषूत्तिष्ठन्नेवाचामेत्। "जानोरूर्द्ध्वं जले तिष्ठन्नाचान्तः शुचितामियात्। अधस्तात् शतकृत्वोऽपि समाचान्तो न शुद्ध्यति" इति विष्णूक्तेः। हारीतः। "आर्द्रवासा जले कुर्य्यात् तर्पणाचमनं जपम्। शुष्कवासा स्थले कुर्य्यात् तर्पणाचमनं जपम्"॥ कात्यायनः। "स्नानमाचमनं होमं भोजनं देवतार्चनम्। प्रौढ़पादो न कुर्वीत स्वाध्यायं पितृतर्पणम्॥ आसनारूढ़पादस्तु जानुनोर्जङ्घयोस्तथा। कृतावसक्थिको यस्तु प्रौढ़पादः स उच्यते"॥ आसनारूढ़पादः आसनारूढ़पादतलः। जानुनोर्जङ्घयोः कृतावसक्थिके वस्त्रादिना कृतपृष्ठजानुजङ्घाबन्धः। तुद्वयेन भेदप्रतीतेः। अत्र च "अनेकोद्दासे दारुशिले भूमिसमे इष्टकाश्च संकीर्णीभूता" इति वौधायनवचनात्। तथाविध पादोऽपि कुर्य्यात्। व्यासः। "शिरः प्रावृत्य कण्ठं वा मुक्तकच्छशिखोऽपि वा। अकृत्वा पादयोः शौचं आचान्तोऽप्यशुचिर्भवेत्॥ अपः पाणिनखाग्रेषु आचामेद् यस्तु वै द्विजः। सुरापानेन तत्तुल्यमित्येव ऋषिरब्रवीत्"॥ संवृत्येति मुखं संवृत्य अलोमकोष्ठस्पर्शो यथा न भवतीति तात्पर्य्यम्। तथा च वशिष्ठः।

"आचान्तः पुनराचामेत् वासो विपरिधाय च। ओष्ठौ संस्पृश्य च तथा यत्र स्यातामलोमकौ"॥ एवञ्च प्रागुक्तहारीत वचने ओष्ठयोर्मार्जनमुक्तं तत् सलोमकयोरेवेति। एतदनन्तरं वामहस्तं पादौ शिरश्च दक्षिणेन पाणिना जलेनाभ्युक्षयेत्। तथा च कामधेनावापस्तम्बः। "त्रिराचमेत् हृद्गताभिरद्भिस्त्रिरोष्ठौ परिमृजेत्। द्विरित्येके दक्षिणेन पाणिना सव्यं प्रोक्ष्य पादौ शिरश्च"॥ गोभिलः। "त्रिराचामेत् द्विः प्रमृजीत पादावभ्युक्ष्य शिरोऽभ्युक्षयेत् इन्द्रियाण्यद्भिः स्पृशेत्। अक्षिणी नासिके कर्णाविति"॥ इन्द्रियाणि इन्द्रियायतनानि इन्द्रियाणाममूर्त्तत्वात्। तिसृभिरिति तर्जनीमध्यमानामिकाभिः तर्जन्यनामामध्याभिर्मुखं पूर्वं स्पृशेदिति ब्रह्मचारिकाण्डधृतभविष्यात्। "घ्राणं नासापुटद्वयं तर्जन्यङ्गुष्ठयोगेन स्पृशेन्नासापुटद्वयम्" इति शङ्खात्। एवं पुनः पुनरिति चक्षुःश्रोत्रद्वयाभिप्रायेण श्रोदत्तोऽप्येवम्। तेन दक्षिणं स्पृष्ट्वा वामं स्पृशेत्। व्यक्तं कामधेनावाचारचिन्तामणावापस्तम्बः। "चक्षुषी नासिके कर्णौ सकृत् सकृदुपस्पृशेत्"। द्विरित्येके द्विरिति शाख्यन्तरीयम् अत्र गोभिलीयापस्तम्बीयपाठक्रमो न ग्राह्यः तत्क्रमस्य "श्रुत्यर्थपठनस्थानमुख्यप्रवर्त्तिकाः" इति जैमिनिसूत्रात्। घ्राणं पश्चादनन्तरमिति दक्षोक्तशब्दक्रमेण बलवता बाधात्। अतएव दक्षेणैव प्रतिज्ञातम्। "उक्तं कर्मक्रमो नोक्तः न कालस्तत एव हि। द्विजानान्तु हितार्थाय दक्षस्तु स्वयमब्रवीत्"॥ अतश्छन्दोगपरिशिष्टेन गोभिलास्पष्टक्रमः स्पष्टीकृतः। यथा "त्रिःप्राश्यापो द्विरुन्मृज्य मुखमेताम्युपस्पृशेत्। आस्यनासाक्षिकर्णांश्च नाभिवक्षः शिरोंऽसकान्"॥ अत्र नासाक्षीत्युक्तं सर्वत्राङ्गुष्ठयोगेन करणमाह पैठीनसिः। "अग्निरङ्गुष्ठस्तस्मात्तेनैव सर्वाणि स्थानानि

स्पृशेत्”। नाभिस्पर्शानन्तरं जलस्पर्शमाह व्यासः। “ततः स्पृश्यनाभिदेशं पुनरपश्च संस्पृशेत्”। इन्द्रियस्पर्शानन्तरं भविष्ये। “यद्भूमावुदकं वीर समुत्सृजति मानवः। वासुकि-प्रमुखान् नागान् तेन प्रीणाति मानवः” ॥ पैठीनसिः। “स्पृष्ट्वा प्राणान् यथासंख्यं पादौ प्रोक्ष्य ततः शुचिः। सव्ये पाणौ ततः शेषा अपो विनिमयेदिति” ॥ प्राणान् इन्द्रियाणीति रत्नाकरः शेषा आचमनावशिष्टाः इति मदनपारिजातः। एतत् परमेव “अन्ततः प्रत्युपस्पृश्य शुचिः” इति गोभिलसूत्रम्। अक्ष्यादि-स्पर्शसहित आचमनं कृत्वा उदकं स्पृष्ट्वा शुचिरिति सरला। अन्तत उपस्पर्शनात् पाणिना उदकस्पर्शं कृत्वा शुचिर्भवतीति भट्टभाष्यम्। अतएवोपस्पर्शमभिधाय ततो जलशेषं वाम-हस्ते त्यजेदिति पितृदयिता। एतेन द्विजातीनामपि द्विरा-चमने ओष्ठजलस्पर्शमात्रं शास्त्रार्थः “प्रत्युपस्पृश्यान्ततः शुचि-र्भवति” इति गोभिलग्रन्थादिति छन्दोगाह्निकं निरस्तम्। हृदयं स्पृशं स्त्वेवमेवाचामेत्। इति तदनन्तरसूत्रेण हृदय-स्पृग्जलनियमात्। “उच्छिष्टोऽन्नैवातोऽन्यथाभवत” इति सूत्रा-न्तरेण हृद्गतत्वाभावे उच्छिष्टाभिधानात्। एतदनन्तरमेवाथ प्रत्युपस्पर्शनमित्यादिना द्विराचमनादिविधानाच्च। वायुपुराणे। “निष्ठीवने तथाभ्यङ्गे तथा पादावसेचने। उच्छिष्टस्य च संभाषात् अशुच्युपहतस्य च ॥ सन्देहेषु च सर्वेषु शिखां मुक्त्वा तथैव च। विना यज्ञोपवीतेन नित्यमेवमुपस्पृशेत्। उष्ट्रवायस-संस्पर्शे दर्शने चान्त्यवासिनाम्” ॥ प्रागर्द्धं कृत इति शेषः। सन्देहेषु अप्रायत्यस्येति। शिखां मुक्त्वा अनन्तरं बद्ध्वा यज्ञो-पवीतेन विना स्थित्वा पुनः परिधाय चाचामेदित्यर्थः। हारीतः। “स्त्रीशूद्रोच्छिष्टसंभाषणे मूत्रपुरीषोत्सर्गदर्शने देवमभिगन्तु-काम आचामेदिति”। देवलः। “उच्छिष्टं मानवं स्पृष्ट्वा

भोज्यं चापि तथाविधम् । तथैव हस्तौ पादौ च प्रक्षाल्याचम्य शुद्ध्यति" ॥ तथाविधमुच्छिष्टम् । याज्ञवल्क्यः । "स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे । आचान्तः पुनराचामेत् वासोविपरिधाय च" ॥ ब्रह्मपुराणं "होमे भोजनकाले च सन्ध्ययोरुभयोरपि । आचान्तः पुनराचामेत् अन्यत्रापि सकृत् सकृत् । द्विराचम्य ततः शुद्धः स्मृत्वा विष्णुं सनातनम्" ॥ स्मृतिः । "क्षुते निष्ठीविते सुप्ते परिधानेऽश्रुपातने । कर्मस्थ एषु नाचामेद्दक्षिणं श्रवणं स्पृशेत्"॥ सांख्यायनः ।"आदित्या वसवो रुद्रा वायुरग्निश्च धर्मराट् । विप्रस्य दक्षिणे कर्णे नित्यं तिष्ठन्ति देवताः" ॥ अत्र हेतुमाह पराशरः । "प्रभासादीनि तीर्थानि गङ्गाद्याः सरितस्तथा । विप्रस्य दक्षिणे कर्णे वसन्ति मनुरब्रवीत्" ॥ मार्कण्डेयपुराणम् । "कुर्य्यादाचमनस्पर्शं गोपृष्ठस्यार्कदर्शनम् । कुर्वीतालभनञ्चापि दक्षिणश्रवणस्य च ॥ यथा विभवतो ह्येतत् पूर्वाभावे ततः परम् । न पूर्वस्मिन् विद्यमाने उत्तरप्राप्तिरिष्यते" ॥ पुराणसारवायुपुराणयोः । "यः कर्म्म कुरुते मोहादनाचम्यैव नास्तिकः । भवन्ति हि वृथा तस्य क्रियाः सर्वा न संशयः" ॥

अथ दन्तधावनम् । वृद्धशातातपः । "मुखे पर्य्युषिते नित्यं भवत्यप्रयतो नरः । तस्मात् सर्वप्रयत्नेन भक्षयेद्दन्तधावनम्" ॥ गन्धालङ्कारवस्त्राणि पुष्पमाल्यानुलेपनम् । "उपवासेन दुष्यन्ति दन्तधावनमञ्जनम् । पादाभ्यङ्गं शिरोऽभ्यङ्गं ताम्बूलञ्चानुलेपनम्" ॥ सर्वव्रतेषु वर्ज्यानि पर्य्युषितमुखस्याप्रयतत्वे हेतुमाह पृथिवीं प्रति यज्ञवराहः । "मनुष्यः किल्बिषीभद्रे कफपित्तसमन्वितः । पूयशोणितसम्पूर्णो दुर्गन्धं मुखमस्य तत्" ॥ तत्पर्य्युषितम् । दन्तधावनमित्यनेन शोधकस्य काष्ठादेर्दन्तमात्रसम्बन्धात् भक्षयेदिति गौणप्रयोगः । पूर्वापर-

द्विराचमनरूपभोजनधर्म्मप्राप्त्यर्थः । अत्र दन्तधावनस्य शोधकत्वप्रतीतेः प्राधान्यम् । अतएव "ततः स्नानं प्रकुर्वीत दन्तधावनपूर्वकम्" इति दक्षोक्तमानन्तर्य्यमात्रपरम् आरम्भणीया या इष्टेर्दर्शपौर्णमासप्राक् कर्त्तव्यत्ववत् न त्वङ्गाङ्गिभावार्थमिति वृद्धशातातपस्य पूर्ववचनं विधायकं परवचनस्य निषेधकम् । तथा च । उपवासेन हेतुनेति दानसागरप्रायश्चित्तविवेकौ । उपवासे चेति पाठे कालविवेके चकारादनुक्तादिष्वपि व्याख्यातम् । एतेन न दुष्येतेति मैथिलोक्तं हेयम् । व्यक्तमाह विष्णुः । "श्राद्धे जन्मदिने चैव विवाहे जीर्णसम्भवे । व्रते चैवोपवासे च वर्जयेद्दन्तधावनम्" ॥ इति । "दन्तधावनमद्यात् प्राङ्मुख उदङ्मुखो वेति" । गोतमः । "दन्तश्लिष्टे दन्तवदन्यत्र जिह्वाभिमर्षणात् प्राक् च्युतेरित्येके" । च्युतेरास्रावयद्विद्यात् निगिरन्नेव तत् शुचिरिति जिह्वाभिमर्षणायोग्यं दन्तलग्नम् अशौचजनकं न भवतीत्यर्थः । एतच्चानुपलभ्यमानरसविषयम् । "दन्तवद्दन्तलग्नेषु रसवर्जने" इति शङ्खवचनात् । जिह्वाभिमर्षणेऽप्यशक्योद्धरणे न दोषः । "भोजने दन्तलग्ने च निर्हृत्याचमनञ्चरेत् । दन्तलग्नमसंहार्य्यं लेपं मन्येत दन्तवत् ॥ न तत्र बहुशो यत्नं कुर्य्यादुद्धरणे पुनः ॥ भवेदशौचमत्यन्तं तृणवेधात् व्रणे कृते" ॥ इति देवलवचनात् । च्युतेरित्यनुपलभ्यमानरसविषयम् । आस्रावो लाला । तद्वन्निगिरन्नित्यर्थः । अतएव शोणितं यथा न भवति तृणादिना दन्तलग्ननिःसारणाचरणं छन्दोगपरिशिष्टम् । "नारदाद्युक्तवार्क्षंयमष्टाङ्गुलमपाटितम् । स त्वचं दन्तकाष्ठं स्यात्तदग्रेण प्रधावयेत् ॥ उत्थाय नेत्रे प्रक्षाल्य शुचिर्भूत्वा समाहितः । परिजप्य तु मन्त्रेण भक्षयेद्दन्तधावनम् ॥ आयुर्बलं यशोवर्च्चः प्रजाः पशुवसूनि च । ब्रह्मप्रज्ञाञ्च मेधाञ्च त्वन्नो धेहि वनस्पते" ॥

शुचिर्भूत्वा द्विराचमनेनेति शेषः। नरसिंहपुराणम्। "दन्त-काष्ठस्य वक्ष्यामि समासेन प्रशस्तताम्। सर्वे कण्टकिनः पुण्याः क्षीरिणश्च यशस्विनः" ॥ परार्द्धं नारदस्यापि स्थौल्य-माह विष्णुः। "कनिष्ठाग्रसमस्थौल्यं सकूर्चं द्वादशाङ्गुलम्। प्रातर्भूत्वा च यतवाक् भक्षयेद्दन्तधावनम् ॥ प्रक्षाल्य भूत्वा तज्जह्यात् शुचौ देशे समाहितः" ॥ सकूर्चं दलिताग्रम्। द्वादशाङ्गुलन्तु छन्दोगेतरेषाम्। प्रातः प्रातःकाले भुक्त्वा भोजनपरकाले च भक्षयेदित्यर्थः मार्कण्डेयपुराणम्। "प्रक्षाल्य भक्षयेत् पूर्वं प्रक्षाल्यैव तु तत् त्यजेत्"। अत्र विहितकाष्ठा-न्याह नृसिंहपुराणम्। "खदिरश्च कदम्बश्च करञ्जश्च तथा वटः। तिन्तिड़ी वेणुपृष्ठश्च आम्रनिम्बौ तथैव च ॥ अपा-मार्गश्च विल्वश्च अर्कश्चोड़म्बरस्तथा। एते प्रशस्ताः कथिता दन्तधावनकर्म्मसु" ॥ महाभारते। "तिक्तं कषायं कटुकं सुगन्धिकण्टकान्वितम्। क्षीरिणो वृक्षगुल्मानां भक्षयेद्दन्त-धावनम्। भक्षयेत् शास्त्रदृष्टानि पर्वस्वपि च वर्जयेत्" ॥ पर्वाण्याह विष्णुपुराणम्। "चतुर्द्दश्यष्टमी चैव अमावास्याथ पूर्णिमा। पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च ॥ स्त्री-तैलमांससम्भोगी पर्वस्वेतेषु वै पुमान्। विण्मूत्रभोजनं नाम प्रयाति नरकं मृतः" ॥ नरसिंहपुराणे "प्रतिपद्दर्शषष्ठीषु नवम्याञ्चैव सत्तमाः। दन्तानां काष्ठसंयोगाद्दहत्यासप्तमं कुलम् ॥ अलाभे दन्तकाष्ठानां प्रतिषिद्धदिने तथा। अपां द्वादशगण्डूषैर्मुखशुद्धिर्विधीयते" ॥ गण्डूषस्य दन्तधावनतुल्य-त्वेऽपि न तत्र मन्त्रान्वयः व्रीहिकार्य्यकारिणि यवे व्रीहि मन्त्रस्येव इति प्रकृतावेव श्रुतत्वात् मन्त्रलिङ्गविरोधाच्चेति नव्यवर्द्धमानः। तन्न तद्धृतकात्यायनसूत्रविरोधात्। तच्च सूत्रं "शब्देऽविप्रतिपत्तिरिति"। प्रतिनिधिद्रव्ये श्रुतशब्दः

प्रयोज्यः। श्रुतद्रव्या बुद्ध्या प्रतिनिध्युपादानात्। शब्दान्तर-प्रयोगे द्रव्यान्तरबुद्धिप्रसङ्गात्। अतएव "सोमप्रतिनिधित्वेन पूतिकासु गृहीतासु सोमं पिबते" इति अविकृत एव मन्त्रः पठ्यते। अतएव जलेऽप्यग्नीकरणहोमे अग्नौ करिष्ये इति प्रयुज्यते। किन्तु यत्र प्रतिपदादौ दन्तकाष्ठनिषेधस्तत्र प्रति-निध्यभावान्मन्त्रपाठः। एवञ्च गौणशब्दप्रयोगान्मन्त्रलिङ्ग-विरोधोऽपि नास्ति। शातातपः "प्रतिपद्दर्शषष्ठीषु नवम्यां दन्तधावनम्। पत्रैरन्यत्र काष्ठैश्च जिह्वोल्लेखः सदैव हि"। क्रियाकौमुद्यां वशिष्ठः "गुवाकतालहिन्तालास्तथा ताडी च केतकी। खर्जूरनारिकेलौ च सप्तैते तृणराजकाः। तृणराज-शिरापत्रैर्यः कुर्य्याद्दन्तधावनम्। तावद्भवति चण्डालो यावद्गां नैव पश्यति"। पराशरभाष्ये वृद्धयाज्ञवल्क्यः। "इष्टका-लोष्ट्रपाषाणैरितराङ्गुलिभिस्तथा। त्यक्त्वा अनामिकाङ्गुष्ठौ वर्जयेद्दन्तधावनम्"॥ अनामिकाङ्गुष्ठौ त्यक्त्वा इतराङ्गुलिभि-र्दन्तधावनं वर्जयेदित्यर्थः। तेनाशक्तौ अनामिकाङ्गुष्ठाभ्यां दन्तान् घर्षयेत्। आचारचन्द्रिकाप्येवम्। पद्मपुराणे। "तृणा-ङ्गारकपालाश्मवालुकायसचर्मभिः। दन्तधावनकर्त्तारो भवन्ति पुरुषाधमाः"। प्रचेताः। "मध्याह्नस्नानकाले च यः कुर्य्या-द्दन्तधावनम्। निराशास्तस्य गच्छन्ति देवाः पितृगणैः सह"। स्मृतिः। "वमन्तं जृम्भमाणञ्च कुर्वन्तं दन्तधावनम्। अभ्यक्त-शिरसञ्चैव स्नान्तं नैवाभिवादयेत्"। हारीतः। "शुचिं देवा हि रक्षन्ति पितरः शुचिमन्वयुः। शुचेर्बिभ्यति रक्षांसि ते चान्ये दुष्टचारिणः"। तथा "स्नानं दानं तपस्त्यागो मन्त्रकर्म-विधिक्रियाः। मङ्गलाचारनियमाः शौचभ्रष्टस्य निष्फलाः"। दक्षः। "शौचन्तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा। मृज्ज-लाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथान्तरम्। यावच्च रात्रिवासो-

ऽस्ति तावदप्रयतो नरः। तस्माद्यत्नेन तत्त्याज्यमादौ शुचि-मभीप्सता"। इति शिष्टस्तीतवचनात् रात्रिवासस्त्याज्यम्। क्रियाकौमुद्याम्। "जलौकागूढ़पादश्च क्रमिगण्डुपदादिकम्। कामाद्धस्तेन संस्पृश्य नित्यकर्माणि संत्यजेत्"। कालिका-पुराणे। "गुरुमाक्षिप्य विप्रञ्च प्रहृत्यैव च पाणिना। न कृत्यानि न कर्माणि रेतःपाते तथैव च॥ अश्रुपाते समुत्पन्ने क्षुरकर्मणि मैथुने। धूमोद्गारे तथा वान्ते नित्यकर्माणि संत्यजेत्॥ पत्रं पुष्पञ्च ताम्बूलं न सेवस्वोपकल्पितम्। कणा-दिपिप्पल्यन्तञ्च फलं भुक्त्वापि नाचरेत्॥ जलस्यापि नरश्रेष्ठ भोजनाद्द्वेषजादृते। नित्यक्रिया निवर्त्तेत काम्यनैमित्तिकैः सह"॥

अथ प्रातःस्नानसम्बन्धे। ब्रह्मपुराणे। "प्रातःस्नानं ततः कृत्वा संक्षेपेण यथोदितम्। सन्ध्यास्वापि तथा कुर्य्यादिति कात्यायनोऽब्रवीत्॥ यथाहनि तथा प्रातर्नित्यं स्नायादना-तुरः। दन्तान् प्रक्षाल्य नद्यादौ गेहे चेत्तदमन्त्रवत्"॥ दन्तान् प्रक्षाल्य प्रातरनातुरः स्नायादित्यर्थः। तत्कालमाह विष्णुः। "प्रातःस्नायी अरुणकिरणग्रस्तां प्राचीमवलोक्य स्नायात्" इति समुद्रकरधृतभारते। "मृत्तिकातिलकं कुर्य्यात् स्नात्वा हुत्वा च भस्मना। दृष्टदोषविघातार्थं चाण्डालाद्यस्य दर्शने"। ब्रह्मपुराणे। "कर्मादौ तिलकं कुर्य्याद्रूपं तद्वैष्णवं परम्। गोप्रदानं तपोहोमः स्वाध्यायः पितृतर्पणम्। भस्मीभवति तत्सर्वं ऊर्द्ध्वपुण्ड्रं विना कृतम्"॥ उशना। "अभावे तूदके-नापि पुण्ड्री देवतमर्च्चयेत्"। ब्रह्माण्डे। "अङ्गुष्ठः पुष्टिदः प्रोक्तो मध्यमायुष्करी भवेत्। अनामिकार्थदा नित्यं मुक्तिदा च प्रदेशिनी"॥ व्यासः। "जाह्नवीतीरसम्भूतां मृदं मूर्द्ध्नि बिभर्त्ति यः। बिभर्त्ति रूपं सोऽर्कस्य तमोनाशाय केवलम्"॥

गोपीचन्दनफलमाह शातातपः। "गोमतीतीरसम्भूतां गोपीदेहसमुद्भवाम्। मृदं मूर्द्ध्नि वहेद्यस्तु सर्वपापैः प्रमुच्यते"॥ ब्रह्मपुराणे। "ऊर्द्धपुण्ड्रं मृदा कुर्य्यात् त्रिपुण्ड्रं भस्मना सदा। तिलकं वै द्विजः कुर्य्यात् चन्दनेन यदृच्छया॥ ऊर्द्धपुण्ड्रं द्विजः कुर्य्यात् क्षत्रियस्य त्रिपुण्ड्रकम्। अर्द्धचन्द्रन्तु वैश्यस्य वर्त्तुलं शूद्रजातिषु"॥ ततः सन्ध्यां कुर्य्यात्। आतुराणान्तु "अशिरस्कं भवेत् स्नानं स्नानाशक्तौ तु कर्मिणाम्। आर्द्रेण वाससा वापि मार्जनं दैहिकं विदुः"॥ इति जावालवचनाच्छिरो विहाय गात्रप्रक्षालनं तदशक्तौ सर्वगात्रमार्जनम् आर्द्रेण वाससा कुर्य्यात्। तदनन्तरं सन्ध्यां कुर्य्यात्। एतत्परमेव "प्रातःसन्ध्यां ततः कुर्य्यात् दन्तधावनपूर्वकम्" इति याज्ञवल्क्यवचनम्।

अथ प्रथमयामार्द्धकृत्यम्। दक्षः। "सन्ध्याकर्मावसाने तु स्वयं होमो विधीयते। देवकार्य्यं ततः कृत्वा गुरुमङ्गलवीक्षणम्। दिवसस्याद्यभागे तु सर्वमेतत् समाचरेत्"॥ होमस्तु साग्नेः। विष्णुपुराणम्। "आचान्तस्तु ततः कुर्य्यात् पुमान् केशप्रसाधनम्। तथा "आदर्शाञ्जनमाङ्गल्यदूर्वाद्यालभनानि च। स्वमात्मानं घृते पश्येत् यदीच्छेच्चिरजीविताम्"। आत्मानं देहम्। माङ्गल्यान्याह नारदः। "लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः। हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः"॥ यमः। "यतीनां दर्शनञ्चैव स्पर्शनं भाषणं तथा। कुर्वाणः पूयते नित्यं तस्मात् पश्येत नित्यशः"॥ ब्रह्मपुराणे। "प्रचण्डपवनाघाते मेघेषु स्तनितेषु च। त्रिःपठेज्जैमिनीयन्तु प्राङ्मुखो वाप्युदङ्मुखः। तस्य माभूत् भयं घोरं वैद्युतं योऽवसीदति"॥ कालिकापुराणम्। "यः शिवाविरुतं श्रुत्वा शिवदूतीं शुभप्रदाम्। प्रणमेत् साधको भूत्वा

तस्य कामाः करे स्थिताः" ॥ प्रयोगसारे। "विभीतकार्ककार-ञ्ज स्नुहीच्छायां न चाश्रयेत्। स्तम्भदीपमनुष्याणामन्येषां प्राणिनां तथा" ॥ विष्णुपुराणम्। "विद्विष्टपतितोन्मत्त बहु-वैरातिकूटकैः। बन्धकीबन्धकीभर्त्तृ क्षुद्रकानृतकैः सह ॥ तथा-तिव्ययशीलैश्च परिवादरतैः शठैः। बुधो मैत्रीं न कुर्वीत नैकं पन्थानमाश्रयेत् ॥ नासंवृतमुखो जृम्भेत् श्वासकासौ विव-र्जयेत्। नोच्चैर्हसेत् सशब्दञ्च न मुञ्चेत् पवनं बुधः ॥ नासम-ञ्जसशीलैस्तु सहासीत कदाचन। सद्वृत्तसन्निकर्षो हि क्षणार्द्ध-मपि शस्यते ॥ नखांश्च वादयेत् छिन्द्यात् न तृणं न महीं लिखेत्। न श्मश्रु भक्षयेन्नोष्ठं न मृद्नीयात् विचक्षणः" ॥ एकपाणिना चक्षुःस्पर्शं निषेधमाह बृहस्पतिः। "चक्षुःपरि-हिताकाङ्क्षी न स्पृशेदेकपाणिना"।

अथ द्वितीययामार्द्धकृत्यम्। दक्षः। "द्वितीये च तथा भागे वेदाभ्यासो विधीयते। वेदाभ्यासो हि विप्राणां परमन्तप उच्यते ॥ ब्रह्मयज्ञपरं ज्ञेयः षडङ्गसहितश्च यः। वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः। तद्दानञ्चैव शिष्येभ्यो वेदभ्यासो हि पञ्चधा" ॥ अन्याध्ययनमप्याहतुः शङ्खलिखितौ। "न वेद-मनधीत्यान्यां विद्यामधीयीतान्यत्र वेदाङ्गस्मृतिभ्यः"। अङ्गानि च "शिक्षाकल्पोव्याकरणं छन्दोज्योतिषमेव च। निरुक्तञ्चेति चाङ्गानि वेदानां गणितानि षट् ॥ स्मृतिस्तु धर्म्मसंहिता" इत्यमरः। गारुडे "धनप्रयोगे च तथा कार्य्ये विद्यागमेषु च। आहारे व्यवहारे च त्यक्तलज्जः सदा भवेत्" ॥ याज्ञवल्क्यः "वेदार्थानधिगच्छेत्तु शास्त्राणि विविधानि च"। तत्फलमाह यमः। "दानेन तपसा यज्ञैरुपवासैर्व्रतैस्तथा। न तां गति-मवाप्नोति विद्यया यामवाप्नुयात्" ॥ कूर्म्मपुराणम्। "स्वाध्या-यस्य त्रयोभेदा वाचिकोपांशुमानसाः"। विद्यादानप्रकारमाह।

शिवधर्मे "संस्कृतैः प्राकृतैर्वाक्यैर्यः शिष्यमनुरूपतः। देशभाषाद्युपायैश्च बोधयेत् स गुरुः स्मृतः"॥ आदिशब्दन्यकरणादिः। गारुड़े। "वेदार्थं धर्मशास्त्राणि यज्ञशास्त्राणि चैव हि। मूल्येन लेखयित्वा यो दद्यादिति स वैदिकः॥ इतिहासपुराणानि लिखित्वा यः प्रयच्छति। ब्रह्मदानसमं पुण्यं प्राप्नोति द्विगुणीकृतम्"॥ तथाच बृहस्पतिः। "षाण्मासिकेऽपि समये भ्रान्तिः संजायते नृणाम्। धात्राक्षराणि सृष्टानि पत्रारूढ़ान्यतः पुरा॥ उपदेष्टानुमन्ता च लोके तुल्यफलौ स्मृतौ। एकलव्येनानुपमदेष्टापि द्रोणाचार्य्यो गुरुः कृतः"॥ अतो ग्रन्थकर्त्तुः सुतरां गुरुत्वं यथा महाभारतम्। "अरण्यमनुसंप्राप्य कृत्वा द्रोणं महीमयम्। तस्मिन्नाचार्य्यवृत्तिञ्च परमामास्थितस्तदा। इष्वस्त्रे योगमातस्थे परं निश्चयमागतः"॥

लिखनविधिमाह नन्दिपुराणम्। "शुभे नक्षत्रदिवसे शुभे वापि दिनग्रहे। लेखयेत् पूज्य देवेशान् रुद्रब्रह्मजनार्दनान्॥ पूर्वदिग्वदनो भूत्वा लिपिज्ञो लेखकोत्तमः। निरोधो हस्तवाह्नोश्च मसीपत्रविधारणे"॥ मत्स्यपुराणञ्च। "शीर्षोपेतान् सुसम्पूर्णान् समश्रेणिगतान् समान्। अक्षरान् लेखयेद्यस्तु लेखकः परमः स्मृतः"॥ अधीतस्यार्थिभ्यो दानमावश्यकम्। यथा श्रुतिः। "यो वाधीत्य विद्याञ्च न प्रयच्छेत् स कार्य्यहा भवेत् श्रेयसो द्वारमावृणुयादिति" नन्दिपुराणे। "प्रशस्तशब्दसंयोगे कुर्य्यादिति विरामणं" विरामणं तद्दिनपाठसमाप्तिम्। "समाप्ते वाचकाभीष्टं कुर्य्यादेव विचक्षणः। सुश्रुतं सुव्रतं भूदस्तु व्याख्यातु नित्यदा॥ लोकः प्रवर्त्ततां धर्मे राजा चास्तु सदा जयी। धर्मवान् धनसम्पन्नो गुरुश्चास्तु निरामयः॥ इति प्रोच्य यथायातं मन्तव्यश्च विभावितैः। शिष्टैः परस्परं शास्त्रं चिन्तनीयं विचक्षणैः॥ कथा वस्तुप्रसङ्गेन नानाव्याख्या-

नभाषणै:। युक्तिभिश्च स्वरेद्धाभ्यां चिह्नैश्चापि स्वयं कृतैः। एवं दिने दिने व्याख्यां शृणुयान्नियतो नरः" ॥ विष्णुपुराणं "पुत्रैरध्यापिता ये च ते पतन्ति स्वभोजने। यो गुरुं पूजयेन्नित्यं तस्य विद्या प्रसीदति। तत्प्रसादेन यस्मात् स प्राप्नोति सर्वसम्पदः" ॥ लघुहारीतः "एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत्। पृथिव्यां नास्ति तद्द्रव्यं यद्दत्वा सोऽनृणी भवेत्" ॥ नन्दिपुराणम्। "यस्य श्रुत्वान्यतः शास्त्रं संस्कारं प्राप्य वै शुभम्। अन्यस्य जनयेत् कीर्त्तिं गुरोः स ब्रह्महा भवेत् ॥ विस्मरेच्च तथा मौढ्यात् योऽपि शास्त्रमनुत्तमम्। स याति नरकं घोरमक्षयं भीमदर्शनम् ॥ ब्रह्म यस्त्वननुज्ञातमधीयानादवाप्नुयात्। स ब्रह्मस्तेयसंयुक्तो नरकं प्रतिपद्यते" ॥ विष्णुः। "यस्य विद्यां समासाद्य तया जीवेत्र तस्य परलोके फलप्रदा भवति यश्च विद्यया परेषां यशो हन्तीति"। देवलः। "इष्टं दत्तमधीतं यत् विनश्यत्यनुकीर्त्तनात्। श्लाघानुशोचनाभ्याञ्च भग्नतेजो विभिद्यते। तस्मादात्मकृतं पुण्यं वृथा न परिकीर्त्तयेत्" ॥ अनुकीर्त्तनं कथनं श्लाघा प्रशंसा अनुशोचनं धनव्ययेन पश्चात्तापः। भग्नतेजः फलजननशक्तिहीनम्। वृथा रथा प्रयोजनं विना। वैष्णवामृते भविष्यपुराणम्। "उपाध्यायस्य यो वृत्तिं दत्त्वा ध्यापयति द्विजान्। किन्न दत्तं भवेत्तेन धर्मकामार्थमिच्छता"। हारीतः। "समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत्"। शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन् पतत्यधः"। शूद्रानीतैरिति विशेषनिषेधात् अन्यब्राह्मणैश्चानयनमनिषिद्धम्। क्रये प्रतिप्रसूते ब्रह्मपुराणं "पुष्पधूपैश्च नैवेद्यैर्वीरक्रयक्रियाहृतैः"। वीरक्रयः स्वयाच्ञाशून्येन क्रयः।

अथ तृतीययामार्द्धकृत्यम्। "तृतीये च तथा भागे पोष्य-

स्वर्गार्थसाधनम्। माता पिता गुरुर्भार्य्या प्रजा दीनाः समाश्रिताः। अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्गं उदाहृतः। भरणं पोष्यवर्गस्य प्रशस्तं स्वर्गसाधनम्। नरकं पीड़ने चास्य तस्माद्यत्नेन तान् भरेत्"॥ गारुड़े। "स जीवति वरस्त्वेको बहुभिर्योपजीव्यते। जीवन्तो मृतकास्त्वन्ये पुरुषाः स्वोदरम्भराः"॥ योपजीव्यत इत्यार्षः पुनः सन्धिः। मनुव्यासबृहस्पतयः। "वृद्धौ च मातापितरौ साध्वी भार्य्या सुतः शिशुः। अप्यकार्य्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत्। अध्यापनञ्चाध्ययनं यजनं याजनन्तथा। दानं प्रतिग्रहश्चैव षट्कर्माण्यग्रजन्मनः। षस्मान्तु कर्मणां मध्ये त्रीणि कर्माणि जीविका। याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः"॥ गोतमः "कृषिगोरक्षवाणिज्येऽस्वयं कृते कुषीदञ्चेति" कुषीदस्य पृथग्ग्रहणं स्वयं कृतस्याप्यनुज्ञानार्थं कुषीदं वृद्धिकर्म प्रदेशान्तरेऽभिधानादिति कल्पतरुः। बृहस्पतिः। "कुषीदकृषिवाणिज्यं प्रकुर्वीतास्वयं कृतम्। आपत्काले स्वयं कुर्वन् नैनसा युज्यते द्विजः। लब्धलाभः पितॄन् देवान् ब्राह्मणांश्चैव भोजयेत्। ते तृप्तास्तस्य तं दोषं शमयन्ति न संशयः। वणिक् कुषीदी दद्यात्तु वस्त्रगोकाञ्चनादिकम्। कृषीवलोऽन्नपानानि यानशय्यासनानि च। पण्येभ्यो विंशकं दत्त्वा पशुस्वर्णादिकं शतम्। वणिक् कुषीदृदोषः स्यात् ब्राह्मणानाञ्च पूजनात्। राज्ञे दत्त्वा तु षड्भागं देवतानाञ्च विंशकम्। त्रिंशद्भागञ्च विप्राणां कृषिं कृत्वा न दोषभाक्। हारीतः "अष्टागवं धर्महलं षड्गवं जीवितार्थिनाम्। चतुर्गवं नृशंसानां द्विगवं ब्रह्मघातिनाम्"॥ मनुः। "अशीतिभागं गृह्णीयात् मासाद्वार्द्धुषिकः शतात्। द्विकं शतं वा गृह्णीयात् सतां धर्ममनुस्मरन्। द्विकं शतञ्च गृह्णानो न भवत्यर्थकिल्बिषी"॥ शतकार्षापणेऽशीतिभागं

विंशतिः पणाः। द्विकं पुराणद्वयम्। एवंविधनियममति-क्रम्य अनापदि स्वयमन्यद्वारा वा यः स्वाच्छन्द्येन व्यवहरति तस्यैव प्रायश्चित्तम्। आपदि तु स्वयं करणे नियमातिक्रमे च न दोष इति प्रायश्चित्तविवेकः। याज्ञवल्क्यः। "उपेया-दीश्वरञ्चैव योगक्षेमार्थसिद्धये। ईश्वरमतिशयगुणयुक्तमन्यं वा श्रोमन्तमकुत्सितम्"॥ अलब्धस्य प्रापणं योगः लब्धस्य रक्षणं क्षेमः। "वयोबुद्ध्यर्थवाक्वेशश्रुताभिजनकर्मणाम्। आचरेत् सदृशीं वृत्तिमजिह्मामशठान्तथा"॥ बालः पांशु-क्रीड़ां युवा स्रग्गन्धादिसेवनं वृद्धो धर्मार्थसाधनं बुद्धिमान् मीमांसादिश्रवणम् अर्थवान् वस्तुदानं वाग्मी दूत्यं सुवेशो राजसन्निधिं श्रुतेन व्याकरणादिना अर्थवित्ता वेदार्थनिरूपणं विशुद्धकुलजन्मवान् तथाविधकुलोद्वाहनम्। यागवान् पशु-हिंसनम्। एवं वयःप्रभृतीनामुचितानां चेष्टामाचरेत्। अजिह्मामकुटिलाम् अशठां मिथ्याविषयरहिताम्।

भगवद्गीतायां "मुक्तसङ्गोऽनहंवादी धृत्युत्साहसम-न्वितः। सिद्ध्यसिद्ध्योर्निर्विकारः कर्त्ता सात्त्विक उच्यते"। मुक्तसङ्गस्त्यक्तफलाभिनिवेशः। अतएवोक्तम्। "मा कर्मफल-हेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि"। तेन बन्धहेतुफलं विना कर्म-कर्त्तव्यमिति तात्पर्य्यम्। अनहंवादी गर्वरहितः निर्विकारो हर्षविषादशून्यः। "रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मको-ऽशुचिः। हर्षशोकान्वितः कर्त्ता राजसः परिकीर्त्तितः। अयुक्तः प्राकृतस्तब्धः शठो नैकृतिकोऽलसः। विषादी दीर्घ-सूत्री च कर्त्ता तामस उच्यते"॥ अयुक्तोऽनवहितः। प्राकृतो विवेकशून्यः। शठः शक्तिगूहनकारी। नैकृतिकः पराप-मानी। अलसः अनुद्यमशीलः। विषादी शोकशीलः। यद-द्यः कार्य्यं तन्मासेनापि न सम्पादयति स दीर्घसूत्री। अल-

एव लिङ्गपुराणं "श्वः कार्य्यमद्यकर्त्तव्यं पूर्वाह्णे वाऽपराह्णिकम्। न हि प्रतीक्षते मृत्युः कृतमस्य न वा कृतम्" ॥ इति "लाभे न हर्षयेद्यस्तु न व्यथेदपमानतः। असंमूढ़स्तु यो नित्यं स राजवसतिं व्रजेत् ॥ अग्लानो बलवान् शूरश्छायेवानुगतः सदा। सत्यवादी मृदुर्दान्तः स राजवसतिं वसेत्" ॥

नयमाह नरसिंहपुराणे "अनुक्तेनापि सुहृदा वक्तव्यं जानता हितम्। न्याय्यश्च प्राप्तकालश्च पराभवमनिच्छता ॥ वक्तव्यं सर्वथा सद्भिरप्रियस्यापि यद्धितम्। आनृण्यमेतत् स्नेहस्य सद्भिरेव कृतं पुरा ॥ यत् स्यात्तापकरं पश्चादारब्धं कार्य्यमीदृशम्। आरभेन्नैव तद्विद्वान् एष बुद्धिमतां नयः ॥ कुमित्रे सौहृदं नास्ति कुभार्य्यायां कुतो रतिः। कुतः पिण्डं कुपुत्रेषु नास्ति सत्यं कुराजनि ॥ कुसौहृदे न विश्वासः कुदेशे न प्रजीव्यते। कुराजनि भयं नित्यं कुपुत्रे सर्वदा भयम् ॥ अपकारिणि विश्रब्धं यः करोति नराधमः। अनाथो दुर्बलो यद्वन्न चिरं स तु जीवति ॥ न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत्। विश्वस्ताद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ राजसेविषु विश्वासं गर्भसङ्करितेषु च। यः करोति नरो मूढ़ो न चिरं स तु जीवति ॥ ऋणशेषं ऋणाच्छेषं शेषमग्नेश्च भूमिप। पुनर्वर्द्धेत सम्भूय तस्माच्छेषं न शेषयेत् ॥ अद्रोहं समयं कृत्वा मुनीनामग्रतो हरिः। जघान नमुचिं पश्चादपां फेनेन पार्थिव ॥ कृत्वा सम्बन्धकञ्चापि विश्वसेच्छत्रुणा न हि। पुलोमानं जघानाजौ जामाता सन् शतक्रतुः ॥ न चासन्ने निवस्तव्यं सवैरे वर्द्धिते रिपौ। पातयेत्तु स मूलं हि नदीतीर इव द्रुमम्" ॥ गारुड़े। "यो ध्रुवाणि परित्यज्य अध्रुवाणि च सेवते। ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च" ॥ विष्णुपुराणे "अल्पहानिस्तु सोढ़व्या वैरिणार्थागमं त्यजेत्। उपा-

यतः समारब्धाः सर्वे सिद्धन्त्युपक्रमाः ॥ धीमान् ह्रीमान् क्षमायुक्तः आस्तिको विनयान्वितः। विद्याभिजनवृद्धानां याति लोकाननुत्तमान्" ॥

भागवते कलिं प्रति परीक्षितवाक्यं "त्वां वर्त्तमानं नरदेवदेहेष्वनुप्रवृत्तोऽयमधर्म्मपूगः। लोभोऽनृतं चौर्य्यमनार्य्यमंहो जेष्ठा च माया कलहश्च दम्भः" ॥ अनार्य्यं दौर्जन्यम् अंहः स्वधर्म्मत्यागः। जेष्ठाऽलक्ष्मीः लक्ष्म्याऽग्रजत्वात्। माया कपटः। "अभ्यर्थितस्तथा तस्मै स्थानानि कलयेऽदिशत्। द्यूतं पानं स्त्रियः शूना यत्राधर्म्मश्चतुर्विधः ॥ पुनश्च याचमानाय जातरूपमदात् प्रभुः। ततोऽनृतं मदं कामं राजो वैरञ्च पञ्चमम्। अथैतानि न सेवेत बुभूषुः पुरुषः क्वचित्" ॥ अभ्यर्थितस्तत्रिस्टहीतेन कलिना स्थानलाभाय प्रार्थितः जातरूपं स्वर्णम्। अथेति अत इत्यर्थः बुभूषुः ऋद्धं भवितुमिच्छुः याज्ञवल्क्यः "शूद्रस्य द्विजशुश्रूषा तया जीवन् वणिग् भवेत्। शिल्पैर्वा विविधैर्जीवेत् द्विजातिहितमाचरन्" ॥ वणिग्भवेदित्यनेन वैश्यवृत्त्यभिधानात्। शिल्पैरिति कृष्यादिजीवनोपायैरिति बोध्यम्। हारीतः "बालानां दमनञ्चैव वाहनञ्च न शस्यते। पुंस्त्वोपघातनं नैव वाह्यानां कारयेत्ततः। वृद्धं युग्ये न युञ्जीत जीर्णं व्याधितमेव च। न षण्डं वाहयेद्गाश्च न गां भारेण पीड़येत्" ॥ गां स्त्रीगवीमिति नव्यवर्द्धमानः। मार्कण्डेयपुराणं "पादेन तस्य पारक्यं कुर्य्यात् सञ्चयमात्मवान्। अर्द्धेन चात्मभरणं नित्यनैमित्तिकन्तथा ॥ पादश्चार्द्धमर्थस्य मूलभूतं विवर्द्धयेत्। एवमारभतः पुंसश्चार्थः साफल्यमृच्छति" ॥ येन यस्यार्थो भुज्यते तेन तस्य पारितोषिकं कर्म्म कर्त्तव्यं तथाच युधिष्ठिरं प्रति भीष्मवाक्यम् "अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित्। इति सत्यं महाराज

बहोऽस्मार्थेन कौरवे:" ॥ मनुः। "शक्तेनापीह शूद्रेण न कार्यो धनसञ्चयः। शूद्रो हि धनमासाद्य ब्राह्मणानेव बाधते" ॥ स्मृतिः। "विक्रीणन् मद्यमांसानि ह्यभक्ष्यस्य च भक्षणम्। कुर्वन्नगम्यागमनं शूद्रः पतति तत्क्षणात् ॥ कपिलाक्षीरपानेन ब्राह्मणीगमनेन च। वेदाक्षरविचारेण शूद्रश्चाण्डालतां व्रजेत्" ॥ अभक्ष्यं गोमांसादि। अगम्या भगिन्यादयः। इति माधवाचार्य्यः। कालिकापुराणं "विक्रयं सर्व्ववस्तूनां कुर्वन् शूद्रो न दोषभाक्। मधु चर्म्म सुरां लाक्षां त्यक्त्वा मांसञ्च पञ्चमम्" ॥ मनुः "सद्यः पतति मांसेन लाक्षया लवणेन च। त्र्यहेण शूद्रीभवति ब्राह्मणः क्षीरविक्रयात् ॥ अयज्ञौ भेषजस्यार्थे यज्ञहेतोस्तथैव च। यद्यवश्यन्तु विक्रेयास्तिला धान्येन तत्समाः" ॥ मनुः "जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः। आकाशमिव पङ्केन न स पापेन लिप्यते" ॥ स ब्राह्मणः। नारदः "परेण निहितं लब्ध्वा राजन्युपहरेन्निधिम्। राजगामी निधिः सर्व्वः सर्व्वेषां ब्राह्मणादृते ॥ ब्राह्मणोऽपि निधिं लब्ध्वा क्षिप्रं राज्ञे निवेदयेत्। तेन दत्तन्तु भुञ्जीत स्तेनः स्यादनिवेदयन्" ॥ नारदः "धनमूलाः क्रियाः सर्व्वा यत्नस्तस्यार्जने मतः। रक्षणं वर्द्धनं भोग इति तत्र विधिक्रमात्" ॥

अत्यन्तापदि मनुः "अवृत्तिकर्षितः सीदन् इमं धर्म्मं समाचरेत्। सर्व्वतः प्रतिगृह्णीयात् ब्राह्मणस्त्वनयं गतः ॥ नाध्यापनाद्याजनाद्वा गर्हिताद्वा प्रतिग्रहात्। दोषो भवति विप्राणां ज्वलनाम्बुसमा हि ते" ॥ ज्वलनाम्बुसमाः अग्निजलतुल्या इति कुल्लूकभट्टः। "अशक्नुवंस्तु शुश्रूषां शूद्रः कर्त्तुं द्विजन्मनाम्। पुत्रदारात्ययं प्राप्तो जीवेत् कारुककर्म्मभिः ॥ यैः कर्म्मभिः प्रचरितैः शुश्रूष्यन्ते द्विजातयः। तानि कारुककर्म्माणि

शिल्पानि विविधानि च ॥ विद्या शिल्पं भृतिः सेवा गोरक्षं विपणिः कृषिः । धृतिर्भैक्षं कुसीदञ्च दश जीवनहेतवः" ॥ विद्या गारुड़ादिः । शिल्पं चित्रादिभृतिर्वेतनं विपणिः विक्रयस्थानं तेन वाणिज्यं लक्षयति । धृतिः सन्तोषः तस्मिन् सति स्वल्पेनापि जीवनम् । "कुसीदं वृद्धिजीविका" इत्यमरः । वृहस्पतिः । "बहवो वर्त्तनोपाया ऋषिभिः परिकीर्त्तिताः । सर्वेषामपि चैतेषां कुसीदमधिकं विदुः ॥ अनावृष्ट्या राजभयैर्मूषिकाद्यैरुपद्रवैः । कृष्यादिके भवेद्धानिः सा कुसीदे न विद्यते" ॥ याज्ञवल्क्यः "वृद्धे वृद्धिश्चक्रवृद्धिः प्रतिमासन्तु कारिका । इच्छाकृता कामयिता कायिका कायकर्मणा" ॥ छागलेयः । "शकटः शाकिनी गावो जालमस्पन्दनं वनम् । अनूपं पर्वतो राजा दुर्भिक्षे नव वृत्तयः" ॥ शकटो धान्यादिवहनद्वारेणोपजीव्यः । "पत्रं पुष्पं फलं कन्दं नालं संस्वेदजं तथा । शाकं षड्विधमुद्दिष्टं गुरु विद्याद्यथोत्तरम्" ॥ इति वैद्यकोक्तशाकयोगात् शाकिनी गृहवाटिका शाकाद्याहरणेन जालं मत्स्याद्याहरणेन । अस्पन्दनं स्वस्थानादत्यागः ऋणादिलाभेन व्ययाधिक्यनिवृत्त्याचरणं फलपुष्पाद्याहरणेन । अनूपं बहूदको देशः समृणालशालूकाद्याहरणेन । पर्वतो गैरिकमृदाद्याहरणेन ।

अथ चतुर्थयामार्द्धकृत्यम् । दक्षः । "चतुर्थे च तथा भागे स्नानार्थं मृदमाहरेत् । तिलपुष्पकुशादीनि स्नानञ्चाकृत्रिमे जले" ॥ कुर्य्यादिति शेषः । तथाच "अस्नात्वा चाप्यहुत्वा च भुङ्क्तेऽदत्त्वा च यो नरः । देवादीनामृणी भूत्वा नरकं प्रतिपद्यते" ॥ अथ स्नानं दक्षः "अस्नात्वा नाचरेत् कर्म जपहोमादि किञ्चन । नानास्वेदसमाकीर्णः शयनादुत्थितः पुमान् ॥ अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः । स्रवत्येव दिवा-

रात्रौ प्रातःस्नानं विशोधनम् ॥ प्रातःस्नानं प्रशंसन्ति दृष्टादृष्ट-फलं हि तत्। सर्वमर्हति पूतात्मा प्रातःस्नायी जपादिकम् । अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः। स्रवत्येव दिवारात्रौ प्रातःस्नानं विशोधनम्? यद्वा मोहात् रात्रौ दुश्चरितं कृतम् । प्रातःस्नानेन तत्सर्वं शोधयन्ति द्विजातयः" ॥ दृष्टं मलापकर्षादि अदृष्टं प्रत्य-वायपरीहारादि। प्रातः सूर्योदयात् प्राक्कालः । "प्रातः-स्नाय्यरुणकिरणग्रस्तां प्राचीमवलोक्य स्नायात्" इति विष्णूक्तेः । प्रातःस्नाने मध्याह्नस्नानधर्मातिदेशमाह कात्यायनः । "यथा-हनि तथा प्रातर्नित्यं स्नायादनातुरः । दन्तान् प्रक्षाल्य नद्यादौ गेहे चेत्तदमन्त्रवत्" ॥ यथा तथेति कर्त्तव्यतया सा च "आचरेदुषसि स्नानं तर्पयेद्देव मानुषान्" । इति जावालुक्तेः । वैदिके कर्मणि वामहस्ते बहुतरकुशान् दक्षिणेन पवित्रं धारयेत् । तथा छन्दोगपरिशिष्टं "कृत्स्नाः प्रचरणीयाः स्युः कुशा दीर्घाश्च वर्हिषः । दर्भाः पवित्रमित्युक्तमतःसन्ध्यादि-कर्मसु । सव्यः सोपग्रहः कार्य्यो दक्षिणः सपवित्रकः" ॥ प्रचरणीयाः पार्वणपञ्चयज्ञादिकर्मानुष्ठानार्हाः । वर्हिषः यज्ञाद्यास्तरणार्थाः । यतस्तत्तत् कर्मसु कुशविशेषा उक्ताः । अतः सन्ध्यादिकर्मसु अवस्थाविशेषशून्याः कुशाः पवित्रं सोप-ग्रहः बहुतरकुशयुक्तः सपवित्रको विशिष्टद्विदलयुक्तः विशेषमाह स एव "अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च । प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्" ॥ अनन्तर्गर्भिणम् अन्तर्गर्भ-शून्यम् । तथा च शौनकः । "अनन्तस्तरुणौ यौ तु कुशौ प्रादेशसम्मितौ । अनखच्छेदिनौ साग्रौ तौ पवित्राभिधायकौ" ॥ एतदभावे कुशपत्रचतुष्टयं त्रयं वा समुद्रकरधृतवचनात् । तद्यथा "चतुर्भिर्दर्भपत्रैश्च त्रिभिर्द्वाभ्यामथापि वा । पवित्रं कारयेन्नित्यं प्रशस्तं सर्वकर्मसु" ॥ विद्याकरवाजपेयिधृतं "पवित्रन्तु द्विजः कुर्य्यात् कुशपत्रद्वयेन वा । पत्रत्रयेण वा कार्य्यं

नैकपत्रेण कुत्रचित्" ॥ एतद्दर्शनात् दर्भाः पवित्रमित्यत्रैवमपि व्याख्येयम् । "मार्कण्डेयः सर्वकालं तिलैः स्नानं पुण्यं व्यासोऽब्रवीन्मुनिः । श्रीकामः सर्वदा स्नानं कुर्वीतामलकैर्नरः । सप्तमीं नवमीञ्चैव पर्वकालञ्च वर्जयेत्" ॥ विष्णुधर्मोत्तरे । "त्वराक्रोधौ तथा वर्ज्यौ देवकर्मणि पण्डितैः । इक्षुरापः पयश्चैव ताम्बूलं फलमौषधम् । भक्षयित्वा तु कर्त्तव्याः स्नानदानादिकाः क्रियाः" ॥ भविष्योत्तरे "स्नातुस्तु वरुणस्तेजो जुह्वतोऽग्निः श्रियं हरेत् । भुञ्जानस्य यमस्त्वायुस्तस्मान्नव्याहरेत् त्रिषु" ॥ स्नातुः स्नानं कुर्वतः ।

अशुचेरवगाहनानन्तरं स्नानमाह योगियाज्ञवल्क्यः । "तूष्णीमेवावगाहेत यदा स्यादशुचिर्नरः । आचम्य तु ततः पश्चात् स्नानं विधिवदाचरेत्" ॥ वामनपुराणम् "नाभिमात्रजले गत्वा कृत्वा केशान् द्विधा द्विजः । निरुध्य कर्णौ नासाञ्च त्रिकृत्वो मज्जनं ततः" ॥ तत्रैव वृद्धयाज्ञवल्क्यः । "स्रोतसां संमुखो मज्जेत् यत्रापः प्रवहन्ति वै । स्थावरेषु गृहे चैव सूर्य्यसम्मुख आप्लवेत्" ॥ हारीतः । "नातुरो न भुक्त्वा न जीर्णवासा न बहुवासा न नग्नो नाम्नन् नावशक्थिको नालङ्कृतो नाजस्रं नाज्ञाते जले नाकुले नाशुचौ न प्रभूतजले न नाभेरल्पजले न चत्वरे नोपद्वारे न सन्ध्यायां न निशायां स्नायादिति" । चत्वरे काकादिवलिस्थले इति श्रीदत्तः । उपद्वारे द्वारसमीपे । अत्रैकेन मुनिना नग्नबहुवाससोर्निषेधविधानात् स्नाने द्विवासस एवाधिकारः प्रतीयते । एकवस्त्रस्नाने दोषमाह समुद्रकरधृतभविष्ये गौतमः । "एकवस्त्रेण यत् स्नानं शूद्रा विह्वेन चैव हि । स्नातस्तु न भवेत् शुद्धः श्रिया च परिहीयते" ॥ अतएव "स्नानं तर्पणपर्य्यन्तं कुर्य्यादेकेन वाससा" । इति यदि समूलं तदा प्रेततर्पणपरमिति ।

अत्रैकवस्त्रा स्नातय इत्यादिना एकवस्त्रत्वविधानात् एकेन एकजातीयेन इति वाचस्पतिमिश्रः येन वाससा स्नानं कृतं जलस्थस्य तेनैव तर्पणम् इति कृत्यतत्त्वार्णवः। न च "स्नान-शाट्यान्तु दातव्या मृदस्तिस्रो विशुद्धये। जलमध्ये तु यः कश्चित् द्विजातिर्स्नानदुर्बलः॥ निष्पीड़यति तद्वस्त्रं स्नानं तस्य वृथा भवेत्"॥ इति वशिष्ठवचने स्नानशाट्यामिति तद्वस्त्रमिति एकवचननिर्देशेन च स्नानेऽप्येकवस्त्रत्वमिति वाच्यम्। अत्र विशुद्धय इत्यभिधानेनाधोधृतवस्त्रस्यैव मृत्त्रयेण प्रक्षालनं न तूत्तरीयस्य एतदर्थमेकवचनम् अतएव मृत्त्रयेणा-धरीयवस्त्रं प्रक्षाल्य इत्याह्निकचिन्तामणिः। वशिष्ठवचनैक-वाक्यतया "स्नातो नाङ्गानि निर्मृज्यात् स्नानशाट्या न पाणिना"। इति विष्णुपुराणीयेनाधरीयवस्त्रेणैव गात्र-मार्जनं निषिध्यते। एतेन निष्पीड्य स्नानवस्त्रमिति कात्या-यनवचने एकत्वमविवक्षितमिति निरस्तम्। अतएव सर्वत्रैकत्व निर्देशः। शिष्टानाम् आचारोऽपि तथा इति नाजस्रमिति पुनःपुनः स्नाननिषेधः रागप्राप्तस्नानविषयो दृष्टार्थकत्वात्। एवञ्चैकस्मिन् दिने नानातीर्थादि निमित्तप्राप्तस्नानावृत्ति-र्भवत्येव वैधत्वात्। अत्रापि तन्त्रप्रसङ्गयोः सत्त्वे सकृदेवेति।

अह्नः स्नानप्रधानकालमाह दक्षः "चतुर्थे च तथा भागे स्नानार्थं मृदमाहरेत्। तिलपुष्पकुशादीनि स्नानञ्चाकृत्रिमे जले"। विष्णुः "कुशाभावे कुशस्थाने काशं दूर्वां वा दद्या-दिति" विद्याधरधृतं "तर्जनीरूप्यसंयुक्ता हेमयुक्ता त्वना-मिका। सैव युक्ता तु दर्भेण कार्य्या विप्रेण सर्वदा"॥ मत्स्य-सूक्ते "शस्ताः समूला दर्भास्तु गुच्छेन चाधिकं फलम्। सव्यः सोपग्रहः कार्य्यो दक्षिणः सपवित्रकः" इति रोगिणश्चाच्छा-सादिस्पर्शोऽपि न दोषायेत्याह रत्नाकरे बृहस्पतिः "तीर्थे

विवाहे यात्रायां संग्रामे देशविप्लवे। नगरग्रामदाहे च स्पृष्टा-स्पृष्टि न दूष्यति॥ आपद्यपि च कष्टायां कम्पये पीडने सदा। मातापित्रोर्गुरोश्चैव निदेशे वर्त्तनात्तथा"॥ स्पृष्टास्पृष्टीत्य-व्ययम्। क्रियाव्यतिहारे तथेति न दूष्यतीत्यर्थः। गारुडे "सर्वतीर्थाभिषेकाद्धि पवित्रं विदुषां वचः। धर्मश्रवणवेलायां विप्रो व्यासमतः स्थितः"॥ तथाविधातुरं प्रति जावालः "अशिरस्कं भवेत् स्नानं स्नानाशक्तौ तु कर्मिणाम्। आर्द्रेण वाससा वापि दैहिकं मार्जनं स्मृतम्"॥ कर्मिणां "शिरः स्नातस्तु कुर्वीत दैवं पैत्रमथापि वा" इति मार्कण्डेयपुरा-णोक्तकर्मचिकीर्षूणां मार्जनमिह प्रोञ्छनं योगियाज्ञवल्क्यः "असामर्थ्याच्छरीरस्य कालशक्त्याद्यपेक्षया। मन्त्रस्नानादितः सप्त केचिदिच्छन्ति सूरयः॥ मान्त्रं भौमं तथाग्नेयं वायव्यं दिव्यमेव च। वारुणं मानसञ्चैव सप्त स्नानं प्रकीर्त्तितम्॥ आपो-हिष्ठेति वै मान्त्रं मृदालम्भन्तु पार्थिवम्। आग्नेयं भस्मना स्नानं वायव्यं गोरजः स्मृतम्॥ यत्तु सातपवर्षेण स्नानं तद्दिव्य-मुच्यते। वारुणश्चावगाहश्च मानसं विष्णुचिन्तनम्॥ समस्तं स्नानमुद्दिष्टं मन्त्रस्नानक्रमेण तु। कालदोषादसामर्थ्यात् सर्वं तस्य फलं स्मृतम्"॥ आपोहिष्ठेति आपोहिष्ठादि ऋक्त्रय-मत्र विवक्षितम्। एवञ्च "कालदोषादसामर्थ्यात् न शक्नोति यदम्भसि। तदा स्नात्वा तु ऋषिभिर्मन्त्रैरष्टन्तु मार्जनम्॥ अन्न आपस्तु द्रुपदा आपोहिष्ठाघमर्षणम्। एभिश्चतुर्भिर्ऋग्भिर्वै-मन्त्रस्नानमुदाहृतम्। इति योगियाज्ञवल्क्योयं यन्मन्त्रस्ना-नान्तरं तत् प्राधान्यख्यापनाय अतएव पितृदयितायां सन्ध्यातः पूर्वं तल्लिखितम्। मृदालम्भस्तु गङ्गामृत्तिकातिल-करूपः। भस्मना संस्कृतभस्मना इति छन्दोगाह्निकः। अव-गाहं मन्त्राद्यङ्गशून्यावगाहनमात्रं विवक्षितम् अतो मुख्या-

अगाहनरूपस्नानानुकल्पत्वमप्युक्तम्। कालदोषोऽतिवृष्ट्यादिः असामर्थ्यं शरीरापाटवहेतुः अशक्त्वेन सम्पूर्णवारुणस्नानविधि-कालायोग्यत्वं वेति। एतन्मूलकं गेहे चेत्तदमन्त्रवदिति छन्दोगपरिशिष्टीयं प्रागुक्तम् अन्यथा मूलभूतश्रुत्यन्तरकल्पना-पत्तेः सामर्थ्ये तूद्धृतजलेनापि समन्त्रकस्नानमाह पराशरभाष्ये व्यासः "शीतास्त्वपो निषिञ्चीष्णा मन्त्रसम्भावसंस्कृताः। गेहेऽपि शस्यते स्नानं तद्धीनमफलं स्मृतम्"॥ पद्मपुराणे "नैर्मल्यं भाव-शुद्धिश्च विना स्नानं न जायते। तस्मान्मनोविशुद्ध्यर्थं स्नान-मादौ विधीयते॥ अनुद्धृतैरुद्धृतैर्वा जलैः स्नानं सदाचरेत्। तीर्थं प्रकल्पयेद्विद्वान् मूलमन्त्रेण मन्त्रवित्॥ नमो नाराय-णायेति मूलमन्त्र उदाहृतः। दर्भपाणिस्तु विधिना आचान्तः प्रयतः शुचिः॥ चतुर्हस्तसमायुक्तं चतुरस्रं समन्ततः। प्रकल्प्यावाहयेद्गङ्गां एभिर्मन्त्रैर्विचक्षणः॥ विष्णोः पादप्रसूतासि वैष्णवी विष्णुपूजिता। पाहि नस्त्वेनसस्तस्मादाजन्ममरणा-न्तिकात्॥ तिस्रः कोट्योऽर्द्धकोटी च तीर्थानां वायुरब्रवीत्॥ दिवि भुव्यन्तरीक्षे च तानि ते सन्ति जाह्नवि!। नन्दिनीत्येव ते नाम देवेषु नलिनीति च॥ वृन्दा पृथ्वी च सुभगा विश्व-काया शिवा शिता। विद्याधरी सुप्रसन्ना तथा लोकप्रसा-दिनी॥ क्षमा च जाह्नवी चैव शान्ता शान्तिप्रदायिनी। एतानि पुण्यनामानि स्नानकाले प्रकीर्त्तयेत्॥ भवेत् सन्नि-हिता तत्र गङ्गा त्रिपथगामिनी। सप्तवाराभिजप्तेन करसंपु-टयोजितम्॥ मूर्द्ध्नि दद्याज्जलं भूयस्त्रिश्चतुः पञ्चसप्त वा। स्नानं कुर्य्यान्मृदा तद्वदामन्त्र्य च विचक्षणः॥ अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे!। मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम्॥ उद्धृतासि वराहेण कृष्णेन शतबाहुना। आरुह्य मम गात्राणि सर्वं पापं प्रमोचय। नमस्ते सर्वभूतानां

प्रभवारिणि सुव्रते !" ॥ नमो नारायणायेति अष्टाक्षररूपमूल-मन्त्रेण चतुरस्रं चतुष्कोणरूपं समन्ततः सर्वदिक्षु चतुर्हस्तं जलं प्रतिदिक्षु हस्तमात्रेण व्यवच्छिद्य तीर्थं प्रकल्पयेत्। विततै नद्यादिजले स्नानस्थानं परिच्छिन्द्यात्। तत्र विष्णोःपादेत्यादि-शान्तिप्रदायिनीत्यन्तेन मन्त्रेण गङ्गामावाहयेत्। सप्तवारा-भिजप्तेनेति सप्तवाराभिजप्तेन नमो नारायणायेति मन्त्रेणाभि-मन्त्रेति शेषः। एकवचननिर्देशात् तस्य मूलमन्त्रत्वोक्त्या च अत्रापि विनियोगोऽवगम्यते ततश्च सप्तवारपठितनारायण-मन्त्रेण जलमभिमन्त्र्य करयुगेन त्रिवारादिमूर्द्धि क्षिपेत्। ततश्चाश्वक्रान्ते इति मन्त्राभ्यां तद्वदिति जप्ताभ्याम्। "मृत्तिकाः सप्त न ग्राह्या वल्मीके मूषिकोत्करे। अन्तर्जले श्मशाने च वृक्षमूले सुरालये। परस्नानावशिष्टे च श्रेयः कामैः सदा नरैः" ॥ इति दक्षप्रतिषिद्धेतरां मृदमामन्त्र्य तया मृदा शिरःप्रभृत्यालभ्यानुद्धृतैरुद्धृतैर्वा जलैः शिरःप्रभृत्यङ्गक्षालनम-वगाहनरूपप्रधानं वारुणस्नानं समाचरेदिति पूर्वोक्तेनान्वयः। मृद्ग्रहणमन्त्रे प्रभवारिणीति प्रभवमुत्पत्तिमर्त्तुं प्रापयितुं शीलमस्यास्तत्सम्बोधनमिदम्। अवगाहनन्तु चक्षुः कर्ण-नासिकामङ्गुलीभिराच्छाद्य कुर्य्यात्। "अङ्गुलीभिः पिधायैव श्रोत्रदृङ्नासिकामुखम्। निमज्जेत प्रतिस्रोतस्त्रिःपठेदघ-मर्षणम्" ॥ इति समुद्रकरधृतात्। अत्रानुद्धृते वारत्रय-मेवावगाहनं प्रागुक्तवामनपुराणात्। एष विधिः पौराणिक-त्वात् सर्वशाखिसाधारणः। वेदमन्त्ररहितत्वात् अनधीत वेदा-नामपि सर्वथा आदरणीयः। मत्स्यपुराणम्। "नद्यां प्रत्येकशः स्नाने भवेत्गोदानजं फलम्। गोप्रदानैश्च दशभिस्तासां पुण्यन्तु सङ्गमे" ॥ वशिष्ठः। "योऽनेन विधिना स्नाति यत्र तत्राम्भसि द्विजः। स तीर्थफलमाप्नोति तीर्थे तु द्विगुणं

फलम्"। अनेन तीर्थावाहनादिना। अतो गङ्गायामप्यावाहनं कुर्वन्ति शिष्टाः। अत्र च माघसप्तम्यादिनिमित्तकतीर्थविशेषनिमित्तकमन्त्रपाठस्तु मृदालम्भनानन्तरं कार्य्यः। आगन्तुकानामन्तेऽभिनिवेश इति न्यायात्। एवं गङ्गायां विशेषमन्त्रानन्तरमेव दशहरादिमन्त्राः पाठ्याः। तत्र गङ्गायां विशेषमन्त्रौ विद्याकरधृतौ। "विष्णुपादार्घ्यसम्भूते गङ्गे त्रिपथगामिनि। धर्म्मद्रवीतिविख्याते पापं मे हर जाह्नवि। श्रद्धया भक्तिसम्पन्ने श्रीमातर्देवि जाह्नवि। अमृतेनाम्बुना देवि भागीरथि पुनीहि माम्"। स्मृतिः "फाल्गुने शुक्लपक्षस्य पुष्यर्क्षे द्वादशी यदि। गोविन्दद्वादशी नाम महापातकनाशिनी"॥ अत्र गङ्गायां पद्मपुराणीयो मन्त्रः। "महापातकसंज्ञानि यानि पापानि सन्ति मे। गोविन्दद्वादशीं प्राप्य तानि मे हर जाह्नवि"। गङ्गासागरसङ्गमे मन्त्रः "त्वं देव सरितां नाथ त्वं देवि सरितांवरे। उभयोः सङ्गमे स्नात्वा मुञ्चामि दुरितानि वै"॥ लौहित्य स्नाने तु मन्त्रः। "ब्रह्मपुत्र महाभाग शान्तनोः कुलनन्दन। अमोघागर्भसम्भूत पापं लौहित्य मे हर"॥ करतोयास्नानमन्त्रः। "करतोये सदा नीरे सरित्श्रेष्ठे सुविश्रुते। पौण्ड्रान् प्लावयसे नित्यं पापं हर करोद्भवे"॥ विष्णुः। "स्नातः शिरो नावधुनेत् नाङ्गेभ्यस्तोयमुद्धरेत्। न तैलं वा संस्पृशेत् नाप्रोच्छितं पूर्वधृतं वासो विभृयात् स्नात एव सोष्णीषे धौते वाससी विभृयात न म्लेच्छान्त्यजपतितैः सह संभाषणं कुर्य्यादिति" नाङ्गेभ्यस्तोयमुद्धरेदिति स्नानशाटीपाणिभ्यां पूरणीयम्। "स्नातो नाङ्गानि निर्मृज्यात् स्नानशाट्या न पाणिना" इति विष्णुवचनात्। अत्र वासोऽन्तरधारणात् प्राक्ततैलस्पर्शनिषेधः प्रतीयते। "शिरः स्नातस्तु तैलेन नाङ्गं किञ्चिदुपस्पृशेत्"॥ इति मनुवचनमेतत्परम्। ततः पादाभ्यङ्गाचरणं सङ्गच्छते।

२१

यदुक्तम् आयुर्वेदीये "अभ्यङ्गमाचरेन्नित्यं स जराश्रमवातहा। शिरःश्रवणपादेषु तं विशेषेण शीलयेत् ॥ वर्ज्योऽभ्यङ्गः कफग्रस्तः कृतसंशुद्ध्य जीर्णिभिः। तिलतैलं हितं वाते शिरोऽभ्यङ्गावगाहने ॥ वस्तिस्नेहानुपानेषु नासाकर्णाक्षिपूरणे। सार्षपं कटुतीक्ष्णोष्णं कफशुक्रानिलापहम् ॥ लघुपित्त यकृत् कोष्ठ कुष्ठास्रु व्रणतीव्रनुत्। तैलं कुसुम्भजं चोष्णं त्वग्दोषकफपित्तनुत् ॥ तैलमेरण्डजं रम्यं गुरूष्णमधुरं रसम्। सुतीक्ष्णं पिच्छिलं बल्यं रक्तैरण्डोद्भवं भृशम् ॥ कफपित्तानिलहरं रेचनं कटुदीपनम्। छद्दस्ति पार्श्वजानूरुत्रिकपृष्ठास्थिशूलिनाम्। हितं वातामय श्वासग्रन्थि व्रध्नविकारिणाम्" ॥ विष्णुपुराणम् "चतुर्द्दश्यष्टमी चैव त्वमावास्याथ पूर्णिमा। पर्वाण्येतानि राजेन्द्र ! रविसंक्रान्तिरेव च ॥ स्त्री तैलमांससम्भोगी पर्वस्वेतेषु वै पुमान्। विण्मूत्रभोजनं नाम प्रयाति नरकं मृतः" ॥ विष्णुधर्म्मोत्तरे। "अष्टमीञ्च तथा षष्ठीं नवमीञ्च चतुर्दशीम्। शिरोऽभ्यङ्गं न कुर्वीत पर्वसन्धौ तथैव च" ॥ गारुड़े। "सन्तापः कीर्त्तिरल्पायुर्धनं निधनमेव च। आरोग्यं सर्वकामाप्तिरभ्यङ्गे भास्करादिषु ॥ उपोषितस्य व्रतिनः कृत्तकेशस्य नापितैः। तावत् श्रीस्तिष्ठति प्रीता यावत्तैलं न संस्पृशेत्" ॥ कल्पतरौ "नाभ्यङ्गमर्के न च भूमिपुत्रे क्षौरञ्च शुक्रेऽथ कुजेऽथ मांसम्। बुधेऽथ योषित् परिवर्जनीया शेषेषु सर्वाणि सदैव कुर्य्यात् ॥ चित्राश्विहस्ताश्रवणेषु तैलं क्षौरं विशाखप्रतिपत्सु वर्ज्जम्। मूले मघा भाद्रपदासु मांसं योषिन्मघाक्षत्तिकसोत्तरासु" ॥ मघाकृत्तिकाभ्यां सहोत्तरास्तासु तृतीयासमासः छान्दसः। ज्योतिषे। "सोमे कीर्त्तिः प्रसरतितरां रौहिणेये हिरण्यं देवाचार्य्ये रविसुतदिने वर्द्धते दीर्घमायुः। तैलस्नानात्तनयमरणं दृश्यते सूर्य्यवारे भौमे

मृत्युर्भवति नियतं भार्गवे वित्तनाशः॥ रवौ पुष्पं गुरौ दूर्वां भूमिं भूमिजवासरे। शुक्रे च गोमयं दद्यात्तैलदोषोपशान्तये"॥ दद्यात्तैले इति शेषः। तैलपदं यौगिकमिति कल्पतरुप्रभृतयः। विष्णुधर्मोत्तरे। "तैले जले तथा खड्गमादर्शे च मलान्विते। न पश्येन्न तथा पश्येदुपरक्तं दिवाकरम्"॥ उष्णीषधारणं शिरोजलापनयनाय। तेन तदनन्तरं न धार्य्यम्। तथा महाभारतम् "आप्लुतः साधिवासेन जालेन च सुगन्धिना। राजहंसनिभं प्राप्य उष्णीषं शिथिलार्पितम्"॥ जलक्षयनिमित्तं वै वेष्टयामास मूर्द्धनि। शिथिलार्पितमगाढ़बद्धम्। सत्यतपाः। "प्रागग्रमुदगग्रं वा धौतं वस्त्रं प्रसारयेत्। पश्चिमाग्रं दक्षिणाग्रं पुनः प्रक्षालनात् शुचिः"॥ अत्राग्रं दशा वृत्तवत्। प्रचेताः "स्वयं धौतेन कर्त्तव्या क्रिया धर्म्या विपश्चिता। न च राजकधौतेन नाधौतेन भवेत् क्वचित्॥ पुत्रमित्रकलत्रेण स्वज्ञातिबान्धवेन च। दासवर्गेण यद्धौतं तत्पवित्रमिति स्थितिः"॥ भृगुः विकच्छोऽनुत्तरीयश्च नग्नश्चावस्त्र एव च। श्रौतं स्मार्त्तं तथा कर्म न नग्नश्चिन्तयेदपि"॥ विकच्छः परिधानासंवृतकच्छः। तथाच योगियाज्ञवल्क्यः "परिधानाद्बहिः कक्षानिबद्धा ह्यासुरी भवेत्"। स्मृतिः "वामे पृष्ठे तथा नाभौ कच्छत्रयमुदाहृतम्। एभिः कच्छैः परीधत्ते यो विप्रः स शुचिः स्मृतः"॥ बौधायनः "नाभौ धृतञ्च यद्वस्त्रमाच्छादयति जानुनी। अन्तरीयं प्रशस्तं तदच्छिन्नमुभयोस्तयोः"॥ प्रचेताः "दशानाभौ प्रयोजयेत्"। स्मृतिः "न स्यात् कर्म्मणि कञ्चुकीति" उत्तरीयधारणं चोपवीतवत्। "यथा यज्ञोपवीतञ्च धार्य्यते च द्विजोत्तमैः। तथा सन्धार्य्यते यत्नादुत्तराच्छादनं शुभम्" इति स्मृतेः। अत्र द्विजोत्तमैर्यथा सव्यापसव्यत्वादिना उपवीतं धार्य्यते यथा उत्तरा-

च्छादनमपि द्विजोत्तमैरिति प्रदर्शकमात्रं प्रागुक्तभृगुवचनेन सर्वेषां द्विवस्त्रता प्रतीयते । भारते "न स्यूतेन न दग्धेन पारक्येण विशेषतः । मूषिकोत्कीर्णजीर्णेन कर्म कुर्य्याद्विचक्षणः" ॥ नारसिंहे "न रक्तमुल्वनं वासो न नीलञ्च प्रशस्यते । मलाक्तञ्च दशाहीनं वर्जयेदम्बरं बुधः" ॥ उल्वनम् उत्कटरक्तविशेषम् । आचाररत्ने उशना "दशाहीनेन वस्त्रेण कुर्य्यात् कर्माण्यभावतः" । विष्णुधर्मोत्तरे "वस्त्रं नान्यधृतं धार्य्यं न रक्तं मलिनं तथा । जीर्णं वापदशञ्चैव श्वेतं धार्य्यं प्रयत्नतः ॥ उपानहं नान्यधृतं ब्रह्मसूत्रञ्च धारयेत् । न जीर्णमलवद्वासो भवेच्च विभवे सति" ॥ योगियाज्ञवल्क्यः । "स्नात्वैवं वाससी धौते अक्लिन्ने परिधाय च । प्रक्षाल्योरू मृदद्भिश्च हस्तौ प्रक्षालयेत्ततः ॥ अभावे धौतवस्त्राणां शौणक्षौमाविकानि च । कुतपो योगपट्टं वा द्विवासा येन वा भवेत् ॥ अधौतेन च वस्त्रेण नित्यनैमित्तिकीं क्रियाम् । कुर्वन् फलं न चाप्नोति दत्तं भवति निष्फलम्" ॥ येन वेति उपवीतेन तत् प्रतिनिधिभूतेन कुशरज्ज्वादिना वा । तथाच स्मृतिः । "यज्ञोपवीते द्वे धार्य्ये श्रौतस्मार्त्तेषु कर्मसु । तृतीयं चोत्तरीयार्थं वस्त्रालाभे तु दिश्यते" ॥ कुतपो नेपालकम्बलः । "निष्पीड़यति यः पूर्वं स्नानवस्त्रन्तु तर्पणात् । निराशास्तस्य गच्छन्ति देवाः पितृगणैः सह" ॥ पराशरभाष्ये जावालिः । "स्नानं कृत्वार्द्रवासास्तु विण्मूत्रं कुरुते यदि । प्राणायामत्रयं कृत्वा पुनः स्नानेन शुद्ध्यति" ॥ जावालिः । "नार्द्रमेकञ्च वसनं परिदध्यात् कथञ्चन" । हारीतः । "आर्द्रञ्च सप्तवाताहतमपि शुद्धमिति" । मदनपरिजाते पारस्करः । "एकश्चेद्वासो भवति तस्य उत्तरार्द्धेन प्रच्छादयतीति" । याज्ञवल्क्यः । "ब्रह्मक्षत्रविशामेव मन्त्रवत् स्नानमिष्यते । तूष्णीमेव हि शूद्रस्य

सनमस्कारकं मतम्॥ अगम्यागमनात् स्तेयात् पापिभ्यश्च प्रतिग्रहात्। रहस्याचरितात् पापात् मुच्यते स्नानमाचरन्॥ प्रकर्त्तुमसमर्थश्चेत् जुहोति यजति क्रियाः। स्नानध्यानजपैर्दानैरात्मानं शोधयेद् बुधः"॥ तूष्णीममन्त्रकं सनमस्कारकम्। तूष्णीमित्यनेन वेदमन्त्रवर्जं शूद्रस्य इति स्मृतिवाक्यैकवाक्यतया शूद्रस्य वेदमन्त्रमात्रनिषेध इति वाचस्पतिमिश्राः छन्दोगाह्निकोऽप्येवम्। वस्तुतस्तु सनमस्कारकमित्यनेन स्नानस्यैव नमस्कारवत्त्वं प्रतीयते। न त्वनुपस्थिततीर्थनमस्कारवत्त्वम्। तूष्णीमेवेत्येवकारेण पौराणिकादेरपि निषेधः। एवञ्च "भार्य्यारतिः शुचिर्भृत्यभर्त्ता श्राद्धक्रियापरः। नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत्"॥ इति याज्ञवल्क्यविशेषोपदिष्टनमस्कारेतरत्र शूद्रस्य पौराणिकमन्त्रपाठः प्रतीयते। अगम्येत्यादिना पापक्षयः प्रतीयते। ब्रह्मपुराणम्। "नद्यां प्रत्येकशः स्नाने भवेत् गोदानजं फलम्। गोप्रदानैश्च दशभिस्तासां पुण्यन्तु सङ्गमे"॥ देवलः। "न नदीषु नदीं ब्रूयात् पर्वतेषु च पर्वतम्। नान्यत् प्रशंसेत्तत्रस्थस्तीर्थेष्वायतनेषु च"॥ नदीं न नदीत्वेन ब्रूयात् किन्तु गङ्गादिविशेषनामत्वेन ब्रूयात्। तीर्थादौ स्थित्वा तीर्थान्तरं न प्रशंसेत। विष्णुधर्मोत्तरे "अकारणं नदीपारं बाहुभ्यां न तरेत्तथा। न प्रशंसेन्नदीतोये नदीमन्यां कथञ्चन॥ न गिरौ पर्वतं राम न राज्ञः पुरतो नृपम्। असन्तर्प्य पितॄन् देवान् नदीपारन्तु न व्रजेत्"। मनुः "न स्नानमाचरेद् भुक्त्वा नातुरो न महानिशि। न वासोभिः सहाजस्रं नाविज्ञाते जलाशये"॥ न स्नानमाचरेद्भुक्त्वेति रागप्राप्तस्नाननिषेधः नित्यस्याप्राप्तत्वात् नैमित्तिकनिषेधवक्तुमशक्यत्वात् "नैमित्तिकानि काम्यानि निपतन्ति यथायथा। तथा तथैव कार्य्याणि न कालस्तु विधीयते"॥ इति दक्षोक्तेः।

आतुरः स्नानसम्बद्धैकरोगवान् । अतएव विष्णुधर्मोत्तरं "नोपेक्षितव्यो व्याधिः स्यात् रिपुरल्पोऽपि भार्गव । महानिशा तु विज्ञेया मध्यमं प्रहरद्वयम् । तस्यां स्नानं न कर्त्तव्यं काम्यनैमित्तिकादृते" । इति देवलवचनात् । अत्र न वासोभिः सहेत्यनेन बहुवासो निषेधात् स्नाने द्विवासस्त्वं प्रतीयते । अजस्रं पुनः पुनः । तेन वारुण्यादिसंक्रान्त्यादिनिमित्तभेदप्राप्तमेकदा नानास्नानं निषिध्यते । किन्तु तन्त्रेण प्रसङ्गेन चैकं स्नानम् । तथा च निगमः "नावर्त्तयेत् पुनः कर्म्म तर्पणादिकमन्वहम् । काम्यनैमित्तिके हित्वा एकं ह्येकत्र वासरे ॥ विषुवद्दिवसे प्राप्ते पञ्चतीर्थी विधानतः । स्नात्वा सङ्कर्षणं कृष्णं दृष्ट्वा भद्राश्च भो द्विजाः । नरः समस्तयज्ञानां फलं प्राप्नोति दुर्लभम्" इति ब्रह्मपुराणोक्त मार्कण्डेयह्रदे प्रद्युम्नसरोवरे समुद्रकूपादितीर्थभेदादौ तन्त्रप्रसङ्गयोरभावात् पुनः पुनरेकदिनेऽपि नानास्नानमिति "व्यपोह्य चाष्टमं भागमुदयाद् यत्र कुत्रचित् । तिथ्योर्युग्मेऽप्ययुग्मे वा सकृदाह्निकमाचरेत्" ॥ अविज्ञाते सुगमतया निन्दितकर्त्तृतया च । बौधायनः "स्रवन्तीष्वनिरुद्धासु त्रयोवर्णा द्विजातयः । प्रातरुत्थाय कुर्वीरन् देवर्षिपितृतर्पणम् ॥ निरुद्धासु न कुर्वीरन्नंशभाक् सेतुकृद्भवेत् । तस्मात् परकृतान् सेतून् कूपांश्च परिवर्जयेत् ॥ उद्धृत्य वा त्रीन् पिण्डान् कुर्य्यादापत्सु नो सदा । निरुद्धासु च मृतपिण्डान् कूपात्तु त्रीन् घटांस्तथा" ॥ निरुद्धासु सेतुभिर्निरुद्धप्रवाहासु । अत्र परकृतान् इत्यनेन उत्सृष्टकूपादेरपि तथात्वात्तत्रापि घटपिण्डोद्धारः । अतएव मनुनापि निपानकर्त्तुरित्यभिहितम् । न तु निपानस्वामिनः इति । यथा "परकीयनिपानेषु स्नायान्नैव कदाचन । निपानकर्त्तुः स्नात्वा हि दुष्कृतांशेन लिप्यते" ॥ निपानं जलाधारमात्रं तथा च

याज्ञवल्क्यः "पञ्च पिण्डाननुद्धृत्य न स्नायात् परवारिणि" योगियाज्ञवल्क्यः । "अनुद्धृत्य तु यः स्नायात् परकीय जलाशये । वृथा तस्य भवेत् स्नानं कर्त्तुः पापेन लिप्यते ॥ स्नानं दानं तपो ध्यानं पितृदेवार्चनं तथा । पावनानि मनुष्याणां दुष्कृतस्येह कर्म्मणः"॥ शङ्खः "नृणां पापकृतां तीर्थं भवेत्पापस्य संचयः । यथोक्तफलदं तीर्थं भवेत् शुद्धात्मनां नृणाम्" ॥ छन्दोगपरिशिष्टं "षण्मासद्वयं श्रावणादिसर्वा नद्यो रजस्वलाः । तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः" ॥ नदीलक्षणं तत्रैव "धनुः सहस्राण्यष्टौ च गतिर्यासां न विद्यते । न ता नदीशब्दवहा गर्त्तास्ताः परिकीर्त्तिताः ॥ उपाकर्म्मणि चोत्सर्गे प्रेतस्नाने तथैव च । चन्द्रसूर्य्यग्रहे चैव रजो दोषो न विद्यते"॥ षण्मासः "षण्मासाः समिकः संवत्सरः" इति शतपथश्रुतेः । अत्र तासु स्नानमात्रस्य निषेधात् प्रागपि रजस्वला इति हेतुवन्निगदात् स्नानानर्हत्वमेव विवक्षितं न त्वाचमनाद्यनर्हतापि । सम्प्रदायोऽप्येवमिति रत्नाकरः मलिम्लुचतत्त्वे विवृतहेतुवन्निगदस्यापि एषोऽर्थः स्फुट इति । अत्र विशेषो मदनपारिजाते निगमः "न दुष्येत्तीरवासिनाम्" इति तत्रैव व्याघ्रपादः । "अभावे कूपवापीनामन्येनापि समुद्धृते । रजो दुष्टेऽपि पयसि ग्रामभोगो न दुष्यति" ॥ अन्येन कुम्भादिना अतएव छन्दोगपरिशिष्टे तास्विति निर्देशः ।

धनुः परिमाणञ्च हस्तचतुष्टयं तथा च विष्णुधर्म्मोत्तरे "द्वादशाङ्गुलिकः शङ्कुस्तद्द्वयञ्च शयः स्मृतः । तच्चतुष्कं धनुः प्रोक्तं क्रोशो धनुः सहस्रिकः" ॥ शयोहस्तः उपाकर्म्मोत्सर्गकर्म्मणी वैदिककर्त्तव्ये छन्दोगपरिशिष्टोक्ते । "अन्त्यैरपि कृते कूपे सेतौ वाप्यादिके तथा । तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं समाचरेत्" ॥ तथा "प्रभूते विद्यमाने तु उदके सुम-

गोहरे। नाप्सोदके द्विजः स्नायान्नदीष्वोत्सृज्य कर्हिचित्" ॥ इति बहुभिरुक्तम्। ब्रह्मपुराणे "नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमिष्यते। तर्पणन्तु भवेत्तस्य अङ्गत्वेन व्यवस्थितम्" ॥ नित्यमहरहः क्रियमाणं "यथाहनि तथा प्रातर्नित्यं स्नायादनातुरः" इति छन्दोगपरिशिष्टोक्तं प्रातर्मध्याह्नसम्बन्धि नैमित्तिकं सूर्य्यग्रहणादावावश्यकं कार्य्यं न तु चाण्डालादिस्पर्शनिमित्तकम्। "श्मश्रु कर्म्माश्रुपातश्च मैथुनं छर्दनं तथा। अस्पृश्य स्पर्शनं कृत्वा स्नायादर्च्या जलक्रियाः" ॥ इति ब्रह्मपुराणे तर्पणनिषेधात् काम्यं स्वर्गादिफलकं तीर्थादिस्नानं तर्पणस्याङ्गत्वात् येन कल्पेन स्नानं तर्पणं तेन कल्पेन। किन्तु "यन्नाम्ना तं स्वशाखायां परोक्तमविरोधि च। विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्म्मवत्" ॥ छन्दोगपरिशिष्टोक्त चकारेणाकाङ्क्षितमविरोधिपरोक्तमधिकमपि बोध्यम् एवञ्च यद्यपि स्नानाङ्गं तर्पणं तत्प्रयोगान्तर्भवितु मर्हति तथापि तस्य सन्ध्यानुष्ठानसत्त्वे सन्ध्योत्तरत्वं वाचनिकं चन्द्रसूर्य्यग्रहादौ च सन्ध्यानुष्ठानाभावात् स्नानप्रयोगान्तर्गतमेव। प्रातःस्नानस्यापि यथाहनीत्यनेनाहः स्नानधर्म्मातिदेशात् तदङ्गतर्पणस्यापि सन्ध्योत्तरता किञ्च गृहमेधीय प्रयोगमध्ये अग्निहोत्रकाल आगते तत्पदार्थक्रमानुरोधेन यथाऽग्निहोत्रानुष्ठानं तथा स्नानानन्तरं सन्ध्याकाले आगते तर्पणमकृत्वैव सन्ध्यानुष्ठानं युक्तमिति विद्याकरः एवञ्च स्नानाङ्गतर्पणादेव पञ्चयज्ञान्तर्गतत्वेन प्रधानतर्पणस्यापि प्रसङ्गात् सिद्धिः तदाह मनुः "यदेव तर्पयत्यद्भिः पितॄन् स्नात्वा द्विजोत्तमः। तेनैव सर्वमाप्नोति पितृयज्ञक्रिया फलम्" ॥ यत्र तु रोगादिना स्नानं न कृतं तत्रापि गात्रमार्जनादिना शौचमुत्पाद्य पितृयज्ञसिद्धये तर्पयेत्। तदाह शातातपः "तर्पणन्तु शुचिः

कुर्य्यात् प्रत्यहं स्नातको द्विजः । देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमम्" ॥ अन्वाहः पदं त्रियामामित्यादिना प्रागुक्तकालपरम् । अतएव मनुना स्नात्वा इत्यविशेषादुक्तम् । तस्मादरुणोदयतर्पणादपि पितृयज्ञतर्पणसिद्धिः । महाभारतेऽप्युक्तम् "सुखोषितास्तां रजनीं प्रातः सर्वे कृताह्निकाः । विविशुस्तां सभां दिव्यां किङ्करैरुपशोभिताम्" ॥ इति अत्राप्रत्याख्येयकर्म्मानुरोधेन प्रधानकालादन्यत्रापि कालान्तरे कर्म्मानुष्ठानमिति । प्रधानतर्पणस्य स्नानाङ्गतर्पणप्रकृतिकत्वात् सन्ध्यानुष्ठानान्तरत्वं यथा ज्योतिष्टोमस्य इष्ट्युत्तरकालत्वं विकृतिसोमेऽप्यतिदेशात् प्राप्तमिति । एवम् "अनन्विराचरेत् कृत्यं मध्याह्नात् प्राग्विशेषतः" । इति वशिष्ठवचनात् महाभारतवचनाच्च प्रातरपि मध्याह्नकर्म्मानुष्ठानम् एवं "दिवोदितानि कर्म्माणि स्वकालेनाकृतानि चेत् । शर्व्वर्याः प्रथमे यामे तानि कुर्य्यादतन्द्रितः" ॥ इति नारदीयात् परकालेऽपि कर्त्तव्यम् । एवं स्नानाङ्गपिण्डोद्धारादपि तर्पणाङ्गपिण्डोद्धारसिद्धिः प्रसङ्गात् । यत्र तु स्नानं विना वाप्यादौ तर्पणं क्रियते तत्रैव तन्मात्रपिण्डोद्धारः । तथा च शङ्खलिखितौ । "वापि कूपतडागोदपानेषु सप्त पञ्च त्रीन् । वा पिण्डानुद्धृत्य देवान् पितृंश्च तर्पयेत्" ॥ उदपानपदं वापीकूपतडागेतरस्वल्पजलाधारपरं तत्प्रमाणन्तु जलाशयोत्सर्गतत्त्वेऽनुसन्धेयम् । "पुष्ये वा जन्मनक्षत्रे व्यतीपाते च वैधृतौ । अमावास्यां नदीस्नानं दहत्याजन्मदुष्कृतम्" ॥ अमावास्याम् अमावासीशब्दस्य रूपम् । स्कन्दपुराणं "नदी तडागसम्भूतं वापीकूपह्रदोद्भवम् । गङ्गोदकं भवेत् सर्वं शङ्खेनैव समुद्धृतम्" ॥ एतद्दर्शनात् शङ्खाभिषेकं करोति । अस्पृश्य स्पर्शनादौ तज्जलं स्पृशति । वराहपुराणं "दक्षिणावर्त्तशङ्खे च पात्रेऽप्यौडुम्बरे

स्थितम् । उदकं यः प्रतीच्छेत शिरसा हृष्टमानसः । तस्य जन्मकृतं पापं तत्क्षणादेव नश्यति" ॥ औड़म्बरे ताम्रपात्रे । मरीचिः "चेत्रस्थमुद्धृतं वापि शीतमुष्णमथापि वा । गाङ्गं पयः पुनात्याशु पापमामरणान्तिकम्" ॥

"अच्छिन्नपद्मपत्रेण सर्वरत्नोदकेन च । स्रोतसा वै नरः स्नात्वा सर्वपापैः प्रमुच्यते" ॥ विष्णुधर्मोत्तरे । "तथा दर्भोदकस्नानं सर्वपापप्रणाशनम् । गोमूत्रेण च यत् स्नानं सर्वाघविनिसूदनम् ॥ तथा पुष्पोदकस्नानं भवेदारोग्यकारकम् । केवलैर्वा तिलैः स्नानमथवा गौरसर्षपैः ॥ स्नानं प्रियङ्गुणा प्रोक्तं तथा सौभाग्यवर्द्धनम् । आयुष्यञ्च यशस्यञ्च धर्म्यं मेधाविवर्द्धनम् । स्नानं पवित्रमाङ्गल्यं तथा काञ्चनवारिणा" ॥ शङ्खः "स्नातस्य वह्नितोयेन तथाच परवारिणा । कायशुद्धिं विजानीयात् न तु स्नानफलं लभेत्" ॥ स्नानफलं वैधम् आयुर्वेदीयन्तु भवत्येव । "उष्णाम्बुनाधःकायस्य परिषेको बलावहः । तेनैव चोत्तमाङ्गस्य बलनुत् केशचक्षुषोः" ॥ इति यमः । "नित्यं नैमित्तिकञ्चैव क्रियाङ्गमलकर्षणम् । तीर्थाभावे च कर्त्तव्यमुष्णोदकपरोदकैः" ॥ विष्णुपुराणं "स्नानार्द्रां धरणीञ्चैव दूरतः परिवर्जयेत्" । विष्णुधर्मोत्तरे । "चण्डालैः पतितैर्म्लेच्छभाषणं वाप्युदक्यया । न कार्य्यं कामतः कृत्वा कीर्त्तयेत् केशवं विभुम् ॥ जले स्थित्वा कर्म्म कुर्वन् जलेन तिलकं चरेत् । अन्यथा भस्मना मृद्भिः कुर्य्यात् काष्ठेन वा पुनः" ॥ इति कर्म्माङ्गतिलकं सामगेन कर्त्तव्यम् इति केचित् ।

अथ तर्पणम् । तद्द्विविधं प्रधानमङ्गञ्च । तत्राद्यमाह शातातपः । "तर्पणन्तु शुचिः कुर्य्यात् प्रत्यहं स्नातको द्विजः । देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमम्" ॥ विधवामधिकृत्य काशीखण्डम् । "तर्पणं प्रत्यहं कार्य्यं भर्त्तुः कुशतिलोदकैः ।

तत्पितुस्तत्पितुश्चापि नामगोत्रादिपूर्वकम्" ॥ द्वितीयन्तु ब्रह्माण्डपुराणीयम्। "नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमिष्यते। तर्पणन्तु भवेत्तस्य अङ्गत्वेन व्यवस्थितम्" ॥ तर्पणाकरणे दोषमाह योगियाज्ञवल्क्यः। "नास्तिक्यभावाद्यश्चापि न तर्पयति वै सुतः। पिबन्ति देहरुधिरं पितरो वै जलार्थिनः" ॥ तर्पणमधिकृत्य ब्रह्मपुराणम्। "तस्मात् सदैव कर्त्तव्यमकुर्वन् महतैनसा। युज्यते ब्राह्मणः कुर्वन् विश्वमेतद्बिभर्त्ति हि" ॥ शङ्खलिखितौ। "नेष्टकारचिते स्थाने पितृंस्तर्पयेत्"। मार्कण्डेयपुराणम्। "यच्च सर्वाय नोत्सृष्टं यच्चाभोज्यनिपानजम्। तद्वर्ज्यं सलिलं तात सदैव पितृकर्मणि" ॥ विष्णुः "स्नातश्चार्द्रवासा देवपितृतर्पणमम्भःस्थ एव कुर्य्यात्। परिवर्त्तितवासाश्चेत्तीर्थमुत्तीर्य्य"। अत्रापि तीर्थे विशेषमाह मत्स्यपुराणे। "तिलोदकाञ्जलिर्देयो जलस्थैस्तीर्थवासिभिः। सदा न हस्तेनैकेन गृहे श्राद्धं समिष्यते" ॥ अत्र जलस्थैरित्यनेन स्थलस्थानामपि जलस्थत्वं नियम्यते। ततश्च "अन्तरुदक आचान्तोऽन्तरेव पूतो भवति। बहिरुदके आचान्तो बहिरेव पूतो भवति तस्मादन्तरेकं बहिरेकञ्च पादं कृत्वा आचामेत्। सर्वत्र शुद्धो भवति इति पैठीनसिवचनात्। जलस्थैकचरणकृताचमनेनोभयकर्म्माहत्वात् तर्पणकाले तीर्थे जलैकचरणेन भवितव्यम् अन्यत्र त्वनियमः। तद्रूपाणां जले तर्पणमनिषिद्धमिति। स्थलस्थतर्पणे आग्नेयपुराणं "प्रागग्रेषु सुरांस्तृप्येन्मनुष्यांश्चैव मध्यतः। पितॄंश्च दक्षिणाग्रेषु दद्यादिति जलाञ्जलीन्" ॥ अशुचिदेशे तु विष्णुः। यत्राशुचिस्थलं व्यासादुदके देवतापितॄन्। तर्पयेत्तु यथा काममप्सु सर्वं प्रतिष्ठितम्" ॥ बृहस्पतिः। "ब्रह्मयज्ञप्रसिद्ध्यर्थं विद्यांश्चाध्यात्मिकीं जपेत्। जप्त्वाथ प्रणवं वापि ततस्तर्पण-

माचरेत्' ॥ एतच्च तर्पणं ब्रह्मयज्ञानन्तरं छन्दोगेतरपरम्। तेषान्तु वैश्रवणाय चोपजाय इत्यन्तसूर्य्योपस्थानानन्तरं गोभिलेन तर्पणाभिधानात्। "आप्लवने तु सम्प्राप्ते तर्पणं तदनन्तरम्। "गायत्रीञ्च जपेत् पश्चात् स्वाध्यायञ्चैव शक्तितः"। आप्लवने तु सम्प्राप्ते गायत्रीं जपतः पुरा। तर्पणं कुर्वतः पश्चात् स्नानमेव वृथा भवेत्" ॥ इति गोभिलीयवचनाभ्याञ्च दक्षः "प्रादेशमात्रमुद्धृत्य सलिलं प्राङ्मुखः सुरान्। उदङ्म-नुष्यांस्तृप्येत पितॄन् दक्षिणतस्तथा ॥ अग्रैस्तु तर्पयेद्देवान् मनुष्यान् कुशमध्यतः। पितॄंस्तु कुशमूलाग्रे विधिः कौशो यथाक्रमम्" ॥ एवञ्च गोशृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत्। इति यमवचनस्थगोशृङ्गपदं प्रादेशमात्रपरम्। उद्धृतोदके तु हारीतः। "पात्राद्वा जलमादाय शुचौ पात्रान्तरे क्षिपेत्। जलपूर्णेऽथवा गर्त्ते न स्थाने तु विवर्ज्जिते"। अत्र यद्धि यदुप-क्रम्य श्रुतं तच्च येन समं समभिव्याहृतं तदेव तत्रैवाङ्गं नान्य-दिति बोध्यं तदङ्गम् इतरत् समभिव्याहारप्रकरणाभ्यामिति गोतमसूत्रात् तेन पद्मपुराणीयस्नाने तदुक्तमेव तर्पणम्। तद्-यथा "ब्रह्माणं तर्पयेत् पूर्वं विष्णुं रुद्रं प्रजापतिम्। देवा यक्षास्तथा नागा गन्धर्वाप्सरसोऽसुराः ॥ क्रूराः सर्पाः सुपर्णाश्च तरवो जम्भगाः खगाः। विद्याधरा जलधरास्तथैवाकाशगा-मिनः ॥ निराहाराश्च ये जीवाः पापे धर्मे रताश्च ये। तेषा-माप्यायनायैतद्दीयते सलिलं मया" ॥ एतेनैकाञ्जलिरिति सर्वेषां मतम्। "कृतोपवीती देवेभ्यो निवीती च भवेत्ततः। मनुष्यांस्तर्पयेद्भक्त्या ऋषिपुत्रानृषींस्तथा ॥ सनकश्च सनन्दश्च तृतीयश्च सनातनः। कपिलश्चासुरिश्चैव वोढः पञ्चशिखस्तथा ॥ सर्वे ते तृप्तिमायान्तु मद्दत्तेनाम्बुना सदा। मरीचिमत्र्याङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ॥ प्रचेतसं वशिष्ठञ्च भृगुं नारदमेव च।

देवान् सर्वानृषीन् सर्वांस्तर्पयेदक्षतोदकैः॥ अपसव्यं ततः कृत्वा सव्यं जानु च भूतले। अग्निष्वात्तांस्तथा सौम्यान् हविष्मन्तस्तथोष्मपान्॥ सुकालिनो वर्हिषद आज्यपांस्तर्पयेत्ततः। तर्पयेच्च पितॄन् भक्त्या सतिलोदकचन्दनैः॥ दर्भपाणिस्तु विधिना हस्ताभ्यां तर्पयेत्ततः" ॥ अत्र केचित् पितृधर्मातिदेशात् दिव्यपितॄणामपि अञ्जलित्रयदानम्। तदसत् "कव्यवालं नलं सौम्यं यममर्य्यमणन्तथा। अग्निष्वात्ताः सोमपाश्च वर्हिषदः सकृत् सकृत्" ॥ इति छन्दोगपरिशिष्टेन विशिष्टैकाञ्जलिविधानात्। "पित्रादीन्नामगोत्रे च तथा मातामहानपि। सन्तर्प्य भक्त्या विधिवदिमं मन्त्रमुदीरयेत्॥ ये बान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः। ते तृप्तिमखिलां यान्तु ये चास्मत्तोयकाङ्क्षिणः" ॥ अत्र ब्रह्मादिचतुर्षु तर्पणप्रयोगाकाङ्क्षायां गोभिलयाज्ञवल्क्योक्तप्रयोगविधिर्ग्राह्यः। स च "अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु। तृप्यतामिति वक्तव्यं नाम्ना तु प्रणवादिना" ॥ अन्वारब्धेन पश्चाल्लग्नेन अस्मादेव वचनात् तर्पणाभिलापे प्रणवादित्वं तृप्यतामिति च लभ्यते। ततश्च ब्रह्मा तृप्यतामिति प्रयोगः। देवा इत्यादि मयेत्यन्तेन मन्त्रलिङ्गादेकाञ्जलिः। तथा सनक इत्यादि सदा इत्यन्तेनैकाञ्जलिः एवं पुनरपि। "एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः। अर्हन्ति पितरस्त्रीन् स्त्रियस्त्वेकैकमञ्जलिम्" इति व्यासगोभिलसूत्रवचनात्। न तु द्वौ द्वाविति वीप्साश्रुतेः सनकादिप्रत्येक एव द्व्यञ्जलिरिति वाच्यं प्रत्येकपक्षे द्वौ द्वौ समुदायपक्षे तृप्त्यनुरोधेन तथैव युक्तत्वात्। अत्राञ्जलिपदं प्रागुक्तान्वारब्धेनेति श्रवणात्तथाविधहस्तद्वयपरम्। तद्वैकल्पिकाञ्जलिपरं वा। देवादिपक्षे पितृपक्षे तु तौ युतावञ्जलिः पुमानित्येतत्परं पक्ष-

पुराणीयतर्पणपक्षे तु पितृपक्ष एव हस्ताभ्यामिति श्रुतेस्तत्रै-वाञ्जलिः। अन्यत्र नाञ्जलिरित्यवगम्यते। आचारमाधवीये प्रचेताः "मातृमुख्यास्तु यास्तिस्रस्तासां दद्याच्चिरञ्जलीन्"। इति पराशरभाष्ये सनकादिदिव्यमनुष्याणां तर्पणादिकं सामगेन प्राङ्मुखेन तदितरेणोदङ्मुखेन कर्त्तव्यं तथाच परि-शिष्टधृतं सामवेदीयषट्त्रिंशद्ब्राह्मणं "मनुष्याणामेषा दिक् याच प्रतीचीति"। तथाच ज्योतिष्टोमे श्रूयते। "प्राचीं देवा अभ्यजन्त दक्षिणां पितरः प्रतीचीं मनुष्याः उदीचीमसुराः अपरेषामुदीचीं मनुष्याः"। यत्तु "कृतजप्योऽन्तर्जानुरुद-ङ्मुखः। दिव्येन तीर्थेन देवानुदकेन तर्पयेत्" इति शङ्ख-लिखितसूत्रं देवतर्पणे। उदङ्मुखत्वविधायकं तच्छ्रुति-विरोधात् शाख्यन्तरीयम् अशक्तविषयकम्। उदकेनेति श्रवणात् यवादिरिति फलाधिक्यार्थं व्यवहारोऽपि तथा। यत्तु "निवीती हन्तकारेण मनुष्यांस्तर्पयेदथ। कुशस्य मध्यदेशेन नृतीर्थेन उदङ्मुखः"॥ लघुविष्णूक्तं हन्तप्रयोगेन जलदान-मुक्तं तत् सनकादिप्रत्येकतर्पणे यथा "सनकस्तृप्यतां तस्मै-तदुदकं हन्त" इत्यादौ न तु पद्मपुराणीयमिलिततर्पणे दत्त-नाम्ना अनेन दत्तस्य पुनस्त्यागासम्भवात्। नृतीर्थेन कनिष्ठाङ्गुलिमूलेन "प्राजापत्येन तीर्थेन मनुष्यांस्तर्पयेत् पृथक्" इति विष्णुपुराणीयैकवाक्यत्वात्। मरीच्यादि ऋषि-तर्पणन्तु अङ्गुल्यग्रेण "अङ्गुल्यग्रमार्षं" इति यमवदनात् एव-ञ्चार्षं देवतीर्थयोरङ्गुल्यग्ररूपैकदेशत्वसाधर्म्येण मरीच्यादितर्पणे तु दिगाद्याकाङ्क्षायां देववदिति। अतएव योगियाज्ञवल्क्य-वचने सनकानित्यत्र मनुष्यानिति विशेषणं दत्तम्। ब्रह्माद्या-नित्यत्र देवानिति विशेषणं दत्तमिति व्यवहारोऽपि तथा। मरीचिः "सौवर्णेन तु पात्रेण ताम्ररूप्यमयेन वा। औडुम्बरेण

खड्गेन पितॄणां दत्तमक्षयम्॥ विना रूप्यसुवर्णेन विना ताम्रमयेन वा। विना तिलैश्च दर्भैश्च पितॄणां नोपतिष्ठते"। एतच्च समग्राभावे बोध्यं न तु एकस्याभावे बोध्यं शङ्कः। "सौवर्णेन तु पात्रेण राजतेनौडुम्बरेण च। खड्गपात्रेण शङ्कुना वाप्युदकं पितृतीर्थं स्पृशन्दद्यात्"॥ शङ्कुः सुवर्णकीलकः। "अक्षतोदकैर्यवाद्भिस्तर्पयेद्देवान् सतिलाभिः पितॄंस्तथा"। इति छन्दोगपरिशिष्टेनापि पितृपक्षे तिलोदकमात्रविधानात्। पद्मपुराणे चन्दनविधानं फलाधिक्यार्थम्। अपसव्यं प्राचीनावीतित्वम्। उपवीतित्वं प्राचीनावीतित्वञ्चाह गोभिलः। "दक्षिणं बाहुमुद्धृत्य शिरोऽवधाय सव्येऽंसे प्रतिष्ठापयति दक्षिणं कक्षमवलम्बनं भवति एवं यज्ञोपवीती भवति। सव्यं बाहुमुद्धृत्य शिरोऽवधाय दक्षिणे प्रतिष्ठापयति सव्यकक्षमवलम्बनं भवति एवं प्राचीनावीती भवति" इति प्रतिष्ठापयति यज्ञोपवीतमिति शेषः। तथाचामरसिंहोऽपि। "उपवीतं यज्ञसूत्रं प्रोद्धृते दक्षिणे करे। प्राचीनावीतमन्यस्मिन्निवीतं कण्ठलम्बितम्" इति। "सावित्री ग्रन्थिसंयुक्तं उपवीतं तवाच्युत" इति ब्रह्मपुराणीय पूजादर्शनात्। गायत्रीमन्त्रेण उपवीतं कर्त्तव्यमिति प्रतीयते। लौकिकास्तु सावित्री ग्रन्थिरिति वदन्ति प्रवरसंख्यया वेष्टितग्रन्थिरिति लौकिकव्यवहारः। विद्याकरधृतं "यथा यज्ञोपवीतम्" इत्यादिवाक्यात् उत्तरीयमपि यज्ञोपवीतवत् सव्यापसव्यत्वादिना धार्य्यं विहितं शुद्धितत्त्वे। पित्रादीत्यादिना मातामहादित्रयपरिग्रहः। तथाच विष्णुपुराणे "त्रिरपः प्रीणनार्थाय देवानामपवर्जयेत्। ऋषीणाञ्च यथा न्यायं सकृच्चापि प्रजापतेः। पितॄणां प्रीणनार्थाय त्रिरपः पृथिवीपते। पितामहेभ्यश्च तथा प्रीणयेत् प्रपितामहान्॥ मातामहाय तत् पित्रे तत्पित्रे च समा-

हित:। दद्यात् पित्रेण तीर्थेन काम्यस्थान्यत् शृणुष्व मे"॥ स्मृतिसारे धृतम्। "वामहस्ते तिलान् दत्त्वा जलमध्ये तु तर्पयेत्। स्नानशाट्यञ्चले पात्रे रोमकूपे न कुत्रचित्"॥ जलतर्पणे रोमरहितप्रदेशे वामबाहौ वस्त्राच्छादिते तिलान् संस्थाप्य मुद्रारहितदक्षिणहस्ततर्जन्यङ्गुष्ठयोरन्यतरेण तिलान् गृहीत्वा वामहस्ततलेन स्थापयित्वा तर्पयेदिति मदनपारिजात:। अतएव मरीचि:। "मुक्तहस्तश्च दातव्यं न मुद्रां दर्शयेत् क्वचित्। वामहस्ते तिला ग्राह्या मुक्तहस्तश्च दक्षिणम्"॥ मुक्तहस्तं प्रसारितहस्तं यथा स्यात्। एवं मुद्रा प्रदेशिन्यङ्गुष्ठयोगी सन्दंशरूप:। "मुक्तहस्तश्च दक्षिणम्" इति दक्षिणहस्तं तिलरहितं कुर्य्यात् इति नैयतकालीन कल्पतरु:। तथाच नारदीये "अङ्गुष्ठानामिकाभ्यान्तु दक्षिणस्येतरात् तरात्। तिलान् गृहीत्वा पात्रस्थान् ध्यात्वा संतर्पयेत् पितॄन्"॥ देवल:। "रोमसंस्थान् तिलान् कृत्वा यस्तु संतर्पयेत् पितॄन्। पितरस्तर्पितास्तेन रुधिरेण मलेन च"॥

वृष्टिजलसम्पर्के तर्पणनिषेधमाह वायुपुराणम्। "मेघे वर्षति य: कुर्य्यात् तर्पणं ज्ञानदुर्बल:। पितॄणां नरके घोरे गतिस्तस्य भवेद् ध्रुवम्"॥ तथा "शूद्रोदकैर्न कुर्वीत तथा मेघाद्विनि:सृतै:"। इति दर्शनादिति कौमुदी। योगियाज्ञवल्क्य:। "यद्युद्धृतश्चेत्तु तिलान् संमिश्रयेज्जले। अतोऽन्यथा तु सव्येन तिला ग्राह्या विचक्षणै:"॥ अत्र शेषार्द्धं मदनपारिजाते लिखितम् "अन्यथा वामहस्तेन ततस्तर्पणमाचरेदिति"। वायुपुराणम्। "तिलदर्भैस्तु संयुक्तं श्रद्धया यत् प्रतीयते। तत्सर्वममृतं भूत्वा पितॄणामुपतिष्ठते"॥ स्मृति:। "रविशुक्रदिने चैव द्वादश्यां श्राद्धवासरे। सप्तम्यां जन्मदिवसे न कुर्य्यात्तिलतर्पणम्" मत्स्यपुराणे "संक्रान्त्यां निशि सप्तम्यां रविशुक्र-

दिने तथा। श्राद्धे जन्मदिने चैव न कुर्यात्तिलतर्पणम्"। श्राद्धे अमावास्यातिरिक्तश्राद्धे "नीलषण्डविमोक्षेण अमावास्यां तिलोदकैः। वर्षासु दीपदानेन पितॄणामनृणो भवेत्। अमावास्यान्तु ये मर्त्याः प्रयच्छन्ति तिलोदकम्। पात्रमौडुम्बरं प्राप्य मधुमिश्रं तपोधनाः। कृतं भवति तत् श्राद्धं सरहस्यञ्च सदा भवेत्। विशेषतश्च जाह्नव्यां सर्वदा तर्पयेत् पितॄन्। न कालनियमस्तत्र क्रियते सर्वकर्मसु"। वौधायनः। "न जीवत् पितृकः कृष्णैस्तिलैस्तर्पणमाचरेत्। सप्तम्यां रविवारे च जन्मर्चदिवसेषु च"। स्मृतिः। "निषिद्धदिनमासाद्य यः कुर्यात्तिलतर्पणम्। रुधिरं तद्भवेत्तोयं दाता च नरकं व्रजेत्"॥ प्रतिप्रसवमाह स्मृतिः। "अयने विषुवे चैव संक्रान्त्यां ग्रहणेषु च। उपाकर्मणि चोत्सर्गे युगादौ मृतवासरे। सूर्य्यशुक्रादिवारेऽपि न दोषस्तिलतर्पणे। तीर्थे तिथिविशेषे च कार्य्यं प्रेते च सर्वदा"। स्कन्दपुराणम्। "तीर्थमात्रे तु कर्त्तव्यं तर्पणं सतिलोदकैः। योऽन्यथा तर्पयेन्मूढ़ः स विष्ठायां भवेत् कृमिः। विशेषतस्तु जाह्नव्यां सर्वदा तर्पयेत् पितॄन्"। एतत्तु निषिद्धदिनतर्पणविधायकम्। "तीर्थे तिथिविशेषे च गङ्गायां प्रेतपक्षके। निषिद्धेऽपि दिने कुर्य्यात्तर्पणं तिलमिश्रितम्"॥ इति मदनपारिजात विद्याकरवाजपेयिधृतमरीचिवचनात्।

तिलाभावे पितृतीर्थे प्रतिनिधिना तर्पणं "तिलानामप्यभावे तु सुवर्णरजतान्वितम्। तदभावे निषिञ्चेत्तु दर्भैस्तोयेन चान्यथा"। इति याज्ञवल्क्यात्। सुवर्णरजतान्वितं सुवर्णरजतस्पृष्टम्। अतएव "सुलभं सकलं पुण्यं यज्ञदानादिजं फलम्। गङ्गातोयैश्च सतिलैर्दुर्लभं पितृतर्पणम्"॥ इति भविष्यपुराणे गङ्गातोयस्य दुर्लभत्वमुक्तं न च तदभावात्त-

पंणाभावः शातातपः "पितृणां पितृतीर्थेन जलं सिञ्चेद् यथा-विधि। दक्षिणेनाथ गृह्णीयात् पितृतीर्थं समीपतः"॥ गोभिलः। "गोत्रं स्वरान्तं सर्वत्र गोत्रस्याक्षय्यकर्मणि। गोत्रस्तु तर्पणे प्रोक्तः कर्त्ता एवं न मुह्यति। सर्वत्रैव पितः प्रोक्तः पिता तर्पणकर्मणि। पितुरक्षय्यकाले तु अक्षयां तृप्ति-मिच्छता। शर्मन्नर्घ्यादिके कार्य्यं शर्मा तर्पणकर्मणि। शर्म-णोऽक्षय्यकाले तु पितॄणां दत्तमक्षयम्"। कार्ष्णाजिनिः। "नाभिमात्रे जले स्थित्वा चिन्तयेदूर्द्ध्वमानसः। आगच्छन्तु मे पितर इमं गृह्णन्त्वपोऽञ्जलिम्"॥ योगियाज्ञवल्क्यः। "नामगोत्रस्वधाकारैस्तर्प्याः स्युरनुपूर्वशः"। तेन अमुकगोत्रः पिता अमुकदेवशर्मा तृप्यतामेतत्तिलोदकं तस्मै स्वधेति प्रयोगः सिध्यति। एवञ्च मातामहादौ। एष चासम्बुद्धिप्रयोगो वाजसनेयीतरपरः। तेषान्तु सम्बुद्ध्यन्ततामाह ब्राह्मणसर्वस्वे जातूकर्णः। "प्रमीतपितृकस्तृषन्तस्त्वेत्यावाह्य नामगोत्र-मुदाहृत्य यावता पितृकार्य्यमसावेतत्ते उदकमिति पितॄन् पितामहान् प्रपितामहान्। एकैकस्मै त्रींस्त्रीन् दद्यात्"॥ अत्र चासाविति नाम गृह्णातीति कात्यायनोक्तस्य नाम्नस्ते इति युष्मत्प्रयोगात् सम्बुद्ध्यन्तता प्रतीयते। तस्य सम्बुद्ध्यमानात्मवाचित्वात्। असम्बुद्धिप्रथमान्तत्वेऽनन्वयापत्तेः। ततश्चामुकगोत्र पितरमुकदेवशर्मं स्तृप्यस्वैतत्ते तिलोदकं स्वधेति प्रयोगः सिध्यति। एवं मातामहान्तानामपि। ततो मात्रादीनां षण्णां तर्पणानि। द्वादशानां मध्ये यो जीवति तं विहाय वृद्धप्रपितामहादीन् गृहीत्वा पूरयेत्। एवं प्रव्रज-तिते पतिते च। ततो विमातृज्येष्ठभ्रातृपितृव्यमातुलादीं-स्तर्पयेत्। शङ्खः। "बान्धवानां कृत्वा सुहृदां तर्पयेत्"॥ सुहृदो मित्रादयः। मित्रायाप्यसवर्णाय जलं न देयम्।

"सवर्णेभ्यो जलं देयं नान्यवर्णेभ्य एव च"। इति याज्ञवल्कीयात्। भीष्मायासवर्णायापि भीष्माष्टम्यां तर्पणं कार्य्यं "ब्राह्मणाद्यास्तु ये वर्णा दद्युर्भीष्माय नो जलम्। संवत्सरकृतं तेषां पुण्यं नश्यति सत्तम"। इत्यादिवचनात्। मन्त्रस्तु "वैयाघ्रपद्यगोत्राय इत्यादि ब्राह्मणेनैतत् पितृतर्पणानन्तरं कार्य्यम् अन्येन पितृतर्पणात् पूर्वम्। अत्र वीजं वर्णज्यैष्ठमिति हलायुधः। अपसव्येन दक्षिणामुखेन सतिलोदकेन सकृत् कर्त्तव्यम्। ततः कृताञ्जलिः। भीष्मः शान्तनवो वीर इत्यादि पठेत्। ततो ये बान्धवा बान्धवा वा इत्यादिना एकाञ्जलिर्देयः। योगियाज्ञवल्क्यः। "निष्पीडयति यः पूर्वं स्नानवस्त्रञ्च तर्पणात्। निराशाः पितरस्तस्य यान्ति देवाः सहर्षिभिः। तथान्नप्रकरवत्तस्य अपसव्येन पीडितम्"। अन्नप्रकारवत् आद्योच्छिष्टसमीपान्नप्रकरवत् तस्याधोवस्त्रस्य "स्नानशाट्यान्तु दातव्या मृदस्तिस्रो विशुद्धये"॥ इति वशिष्ठवचने अधोवस्त्रस्य दुष्टस्यैव शुद्धये मृद्दानं प्रतीयते। योगियाज्ञवल्क्यः। "वस्त्रनिष्पीडितं तोयं स्नातस्योच्छिष्टभागिनः। भागधेयं श्रुतिः प्राह तस्मान्निष्पीडयेत् स्थले"। अत्र मन्त्रमाह गोभिलः। "ये चास्माकं कुले जाता अपुत्रा गोत्रिणो मृताः। ते तृप्यन्तु मया दत्तं वस्त्रनिष्पीडनोदकम्"। अशक्तौ शङ्खः। "आब्रह्मस्तम्बपर्य्यन्तं जगत्तृप्यत्विति क्रमात्। अञ्जलित्रयं दद्यात्" एतत् संक्षेपतर्पणं पराशरः। "स्नात्वा निवस्य वासोऽन्यत् जङ्घे प्रक्षालयेन्मृदा। अपवित्रीकृतेते तु कौपीनच्युतवारिणा"॥ याज्ञवल्क्यः "स्नात्वैवं वाससी धौते अक्लिन्ने परिधाय च। प्रक्षाल्योरुमृदद्भिश्च हस्तौ प्रक्षालयेत्तदा। रत्नाकरे "आचम्य तीर्थं नत्वा च सोपानको गृहं व्रजेत्"।

अथ सन्ध्योपासनम्। तत्र छन्दोगपरिशिष्टम्। "अत

ऊर्द्ध्वं प्रवक्ष्यामि सन्ध्योपासनिकं विधिम्। अनर्हः कर्मणा विप्रः सन्ध्याहीनो यतः स्मृतः"। अतः प्रातःस्नानानन्तरम्। तथा "एतत् सन्ध्यात्रयं प्रोक्तं ब्राह्मण्यं यदधिष्ठितम्। यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते"॥ शातातपः। "अब्राह्मणास्तु षट् प्रोक्ता ऋषिणा तत्त्ववादिना। आद्यो राजभृतस्तेषां द्वितीयः क्रयविक्रयी। तृतीयो बहुयाज्यः स्याच्चतुर्थो ग्रामयाजकः। पञ्चमस्तु भृतस्तेषां ग्रामस्य नगरस्य च। अनागतान्तु यः पूर्वां सादित्याञ्चैव पश्चिमाम्। नोपासीत द्विजः सन्ध्यां सषष्ठोऽब्राह्मणः स्मृतः"॥ राजभृतो राजसेवकः। ग्रामादेर्भृतो भरणीयः।

ग्रामलक्षणमाह मार्कण्डेयपुराणं "तथा शूद्रजनप्रायाः सुसमृद्धकृषीवलाः। क्षेत्रोपयोगभूमध्ये वसतिर्ग्रामसंज्ञिका"॥ अत्र सन्ध्यात्रयस्य नित्यत्वाभिधानात् "सर्वकालमुपस्थानं सन्ध्यायाः पार्थिवेष्यते। अन्यत्र सूतकाशौचविभ्रमातुरभीतितः"॥ इति विष्णुपुराणीये सन्ध्याया इत्येकवचनान्तपाठो धर्मकोषोक्तो युक्तः। एवमेव नव्यवर्द्धमानः। सर्वकालं प्रातर्मध्याह्नसायंरूपकालत्रये। अन्यथा तदुपादानं व्यर्थं स्यात् विभ्रमश्चित्तविक्षेपः। तेन क्षतादावपि सन्ध्यामाचरन्ति अतएव याज्ञवल्क्यः"सर्वावस्थोऽपि यो विप्रः सन्ध्योपासनतत्परः"॥ ब्राह्मण्याच्च न हीयते अन्त्यजन्मगतोऽपि सन्। सर्वावस्थो नित्यं सेवकादिकर्मरतोऽपि। यथोचितशौचेऽप्यशक्तोऽपीति रत्नाकरः। अन्धाद्यवस्थापन्नोऽपीति युक्तं सन्ध्यात्रयसाधारणलक्षणमाह योगियाज्ञवल्क्यः। "त्रयाणाञ्चैव देवानां ब्रह्मादीनां समागमः। सन्धिः सर्वसुराणाञ्च तेन सन्ध्या प्रकीर्त्तिता"॥ सन्ध्याद्वयकालस्तु अहोरात्रसम्बन्धिमुहूर्त्तात्मकः। तथा च दक्षः। "अहोरात्रस्य यः सन्धिः सूर्य्यनक्षत्रवर्जितः। सा च

सन्ध्या समाख्याता मुनिभिस्तत्त्ववादिभिः" ॥ सूर्य्यनक्षत्र-वर्जितः। अर्द्धास्तमितार्द्धोदितसूर्य्यमण्डलप्रकृष्टतेजो नक्षत्र-वर्जितः। तथा च वराहः "अर्द्धास्तमयात् सन्ध्या व्यक्तीभूता न तारका यावत्। तेजः परिहानिरुषाभानोरर्द्धोदयं यावत्"॥ अत्र आद्यन्तता उक्ता परिमाणमाह दक्षः। "रात्र्यन्तकाले नाड्यौ द्वे सन्ध्यादिः काल उच्यते। दर्शनाद्रविरेखायास्तदन्तो मुनिभिः स्मृतः" ॥ नाड़ीदण्डः। योगियाज्ञवल्क्यः "ह्रास-वृद्धौ च सततं दिनरात्रयोर्यथाक्रमम्। सन्ध्या मुहूर्त्तमाख्याता ह्रासवृद्धौ समा स्मृता" ॥ अत्रोपासनाया अपि सन्ध्यात्वमाह व्यास "उपास्ते सन्धिवेलायां निशाया दिवसस्य च। तामेव सन्ध्यां तस्मात्तु प्रवदन्ति मनीषिणः" ॥ उपास्ते यद्वक्ष्यमाण-प्राणायामादिक्रिययेति यावत्। तत्काले उपास्यापि देवता सन्ध्या तथा च याज्ञवल्क्यः। "सन्धौ सन्ध्यामुपासीत नास्तगे नोद्गते रवौ" ॥ उपासनोपक्रममाह संवर्त्तः "प्रातःसन्ध्यां सनक्षत्रामुपासीत यथाविधि। सादित्यां पश्चिमां सन्ध्यां अर्द्धास्तमितभास्कराम्" ॥ सनक्षत्रामित्यनेन तदुयुक्तकाले उपक्रम्य प्रातःसन्ध्यामुपासीत एवमेवार्द्धास्तमितभास्करा-ख्यां पश्चिमां सादित्यामित्यनेन तदयुक्तकाले उपक्रम्य उपा-सीतेत्यर्थः। मध्याह्नसन्ध्याया अष्टममुहूर्त्तं कालमाह स्मृतिः "पूर्वापरे तथा सन्ध्ये सनक्षत्रे प्रकीर्त्तिते। समसूर्य्येऽपि मध्याह्ने मुहूर्त्ते सप्तमोपरि" ॥ संख्यायनगृह्यं "अरण्ये समित्पाणिः सन्ध्यामुपास्ते नित्यं वाग्यत उत्तरापराभिमुखो-ऽन्वष्टमदिशमानक्षत्रदर्शनात् अतिक्रान्तायां महाव्याहृतिः सावित्रीं स्वस्त्ययनादिजप्त्वा एवं प्रातः प्राङ्मुखः तिष्ठन् आमण्ड-लदर्शनादिति"। उत्तरापराभिमुखो वायुकोणाभिमुखः कोणं विवृणोति अन्वष्टममिशमिति। उभयदिगष्टमभाग-

मिति यावत्। तत्र मन्त्रस्योङ्काराादित्वमाह याज्ञवल्क्यः। "यन्न्यूनञ्चातिरिक्तञ्च यच्छिद्रं यदयज्ञियम्। यदमेध्यमशुद्धञ्च यातयामञ्च यद्भवेत्। तदोङ्कारेण पूर्वेण मन्त्रेणाविकलं भवेत्"॥ व्यासः "गायत्री नाम पूर्वाह्णे सावित्री मध्यमे दिने। सरस्वती च सायाह्ने सैव सन्ध्या त्रिषु स्मृता॥ प्रतिग्रहा-न्नदोषाच्च पातकादुपपातकात्। गायत्री प्रोच्यते तस्मात् गायन्तं त्रायते यतः॥ सवितृद्योतनात् सैव सावित्री परि-कीर्त्तिता"॥ जगतःप्रसवित्रीत्वात् वाग्रूपत्वात् सरस्वती तैत्तिरीयब्राह्मणं "उद्यन्तमस्तं यान्तम् आदित्यमभिध्यायन् कुर्वन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुते"। असावादित्यो ब्रह्म इति ब्रह्मैव सन् ब्रह्माप्येति य एवं वेदेत्ययमर्थः। वक्ष्य-माणप्रकारेण प्राणायामादिकं कुर्वन् यथोक्तनामरूपोपेतम् सन्ध्याशब्दस्य वाच्यमादित्यं ब्रह्मेति ध्यायन् ऐहिकमामुष्मि-कञ्च सकलं भद्रमश्नुते। य एवमुक्तध्यानेन शुद्धान्तःकरणो ब्रह्म साक्षात् कुरुते स पूर्वमपि ब्रह्मैव सन् प्रज्ञावान् चिर-जीवित्वं प्राप्तो यथोक्तज्ञानेनाज्ञानोपशमे ब्रह्मैव प्राप्नोति इति पराशरभाष्ये माधवाचार्य्यः। अतएव व्यासः "न भिन्नां प्रतिपद्येत गायत्रीं ब्रह्मणा सह। सोऽहमस्मीत्युपासीत विधिना येन केनचित्"॥ गायत्र्यास्य भर्गपदप्रतिपाद्य ईश्वरः। अहं जीवरूपोऽस्मि भवामीति अजहत्स्वार्थलक्ष-णया जीवेश्वरयोरहङ्कारप्रतिफलितत्वोपाधिराहितेन चिद्रूपे-णैक्यं घटाकाशमहाकाशयोरुपाधिरित्यवगमादैक्यमिव भाव-यन् उपासीत योगियाज्ञवल्क्योऽपि "या सन्ध्या सा तु गायत्री द्विधा भूत्वा प्रतिष्ठिता। सन्ध्या उपासिता येन विष्णुस्तेन उपासितः"॥ उपासनायाः फलमाह स एव। "गवां सर्पिः शरीरस्थं न करोत्यङ्गपोषणम्। निःसृतं कर्म्मसंयुक्तं पुन-

स्तासां तदौषधत् ॥ एवं स हि शरीरस्थः सर्पिर्वत् परमेश्वरः । विना चोपासनादेव न करोति हितं नृषु ॥ प्रणव व्याहृति-व्याद्य गायत्र्या त्रितयेन च । उपास्यं परमं ब्रह्म आत्मा यत्र प्रतिष्ठितः" ॥ त्रितयेन प्रणवादित्रितयेन ब्रह्मप्रतिपादकेन उच्चारितेन तदर्थावगमेन उपास्यं प्रसादनीयं तदाह स एव "वाच्यः स ईश्वरः प्रोक्तो वाचकः प्रणवः स्मृतः । वाचकेऽपि च विज्ञाते वाच्य एव प्रसीदति ॥ भूर्भुव स्वस्तथा पूर्वं स्वय-मेव स्वयम्भुवा । व्याहृता ज्ञानदेहेन तस्मात् व्याहृतयः स्मृताः" ॥ ज्ञानदेहेन तत्त्वज्ञानस्य चिद्रूपेश्वरस्य देहेन शरीर-रूपेण व्याहृता उक्ता । तेन तद्वाच्योऽपीश्वरः । कूर्म्मपुराणम् । "प्रधानं पुरुषः कालो ब्रह्मविष्णुमहेश्वराः । सत्त्वं रजःतम-स्त्रिस्रः क्रमाद्व्याहृतयः स्मृताः" ॥ एतद्रूपेणापि भावनीयः ।

गायत्र्यर्थमाह योगियाज्ञवल्क्यः । "देवस्य सवितुर्वर्च्चो भर्गमन्तर्गतं विभुम् । ब्रह्मवादिन एवाहुर्वरेण्यञ्चास्य धीमहि ॥ चिन्तयामो वयं भर्गं धियो यो न प्रचोदयात् । धर्म्मार्थकाम-मोक्षेषु बुद्धिवृत्तीः पुनः पुनः ॥ बुद्धेर्बोधयिता यस्तु चिदात्मा पुरुषो विराट् । वरेण्यं वरणीयञ्च जन्मसंसारभीरुभिः ॥ आदित्यान्तर्गतं यच्च भर्गाख्यं तन्मुमुक्षुभिः । जन्ममृत्युविना-शाय दुःखस्य त्रितयस्य च ॥ ध्यानेन पुरुषो यश्च द्रष्टव्यः सूर्य्य-मण्डले । मन्त्रार्थमपि चैवायं ज्ञापयत्येवमेव हि" ॥ तेन गायत्र्या अयमर्थः । देवस्य सवितुर्भर्गस्वरूपान्तर्यामि ब्रह्म वरेण्यं वरणीयं जन्ममृत्युभीरुभिः तद्विनाशाय उपासनीयं धीमहि प्रागुक्तेन सोऽहमस्मीत्यनेन चिन्तयामः । यो भर्गः सर्वान्तर्यामीश्वरो नोऽस्माकं सर्वेषां संसारिणां धियो बुद्धीः प्रचोदयात् धर्म्मार्थकाममोक्षेषु प्रेरयति तथा च भगवद्गीतायां "ईश्वरः सर्वभूतानां हृद्देशेऽर्ज्जुन तिष्ठति । भ्रामयन् सर्व-

भूतानि यन्त्रारूढ़ानि मायया"॥ ईश्वरोऽन्तर्यामी हृद्देशे अन्तःकरणे भ्रामयन् तत्तत् कर्म्मसु प्रेरयन् यन्त्रारूढ़ानि दारुयन्त्रतुल्यशरीरारूढ़ानि भूतानि प्राणिनो जीवानीति यावत्। मायया अघटनघटनपटीयस्या निजशक्त्या तथा चाश्वतरूणां मन्त्रः। "एको देवः सर्वभूतेषु गूढ़ः सर्वव्यापी सर्वभूतान्तरात्मा। कर्म्माध्यक्षः सर्वभूताधिवासः साक्षाच्चेतः केवलो निर्गुणश्च"॥ भारते। "यथा दारुमयी योषिन्नृत्यते कुहकेच्छया। एवमीश्वरतन्त्रोऽयं ईहते सुखदुःखयोः"॥ मदनपारिजाते संवर्त्तः। "नत्वा तु पुण्डरीकाक्षमुपात्ताघप्रशान्तये। ब्रह्मवर्च्चसकामार्थं प्रातः सन्ध्यामुपास्महे॥ इत्थं कृत्वाथ सङ्कल्पं कुशानादाय पाणिना। नद्यां समुत्थतोयैस्तु गृह्हे वामकरे स्थितैः"॥ भृगुः। "धाराच्युतेन तोयेन सन्ध्योपास्तिर्विगर्हिता। नद्यां तीर्थे ह्रदे वापि भाजने मृण्मयेऽपि वा॥ औडुम्बरे च सौवर्णे राजते दारुसम्भवे। अथवा वामहस्तेन सन्ध्योपास्तिं समाचरेत्"॥ वामहस्ते जलं कृत्वा इत्यादिना निषेधस्तु पात्रान्तरसद्भावविषयः।

उपासनाविधिः। कूर्मपुराणे। "प्राक्कूलेषु ततः स्थित्वा दर्भेषु सुसमाहिताः। प्राणायामत्रयं कृत्वा ये सन्ध्यां समुपासते। प्राणानायम्य संप्रोक्ष्य तृचेनाब्दैवतेन च"॥ प्राक्कूलेषु प्रागग्रेषु तृचेनाब्दैवतेन आपोहिष्ठा इत्यादिना त्रिकेन। बृहस्पतिः। "बद्धासनं नियम्यासून् स्मृत्वा ऋष्यादिकं तथा। संनिमीलितदृङ्मौनी प्रणायामं समाचरेत्"॥ छन्दोगपरिशिष्टं "भूराद्यास्तिस्र एवैता महाव्याहृतयोऽव्ययाः। महर्जनस्तपः सत्यं गायत्री च शिरस्तथा। आपोज्योती रसो ऽमृतं ब्रह्मभूर्भुवः स्वरिति। शिरः प्रतीकं प्रणवमन्ते च शिरसस्तथा। एता एतां सहानेन तथैभिर्दशभिः सह। त्रिर्जपे-

दायतप्राणः प्राणायामः स उच्यते। अव्यया अव्ययफलदा मोक्षदा इत्यर्थः। शिरोमन्त्रे छन्दोवृत्ते ब्रह्मपदं नेच्छन्ति। तत्र "षोड़शाक्षरकं देव्या गायत्र्यास्तु शिरः स्मृतम्"। इति योगियाज्ञवल्क्यविरोधात्। आद्यन्तयोरोङ्कारमादाय षोड़श संख्यापूरणम्। छन्दोवृद्धिरार्षत्वेन सुघटा प्रतीकं भूरादिप्रतिभागम्। एताः सप्तव्याहृतीः एतां गायत्रीम् अनेन शिरसा एभिर्दशभिः प्रणवैः सह निरुद्धप्राणः त्रिर्जपेदेवं प्राणायामः। व्यासः। "आदानं रोधमुत्सर्गं वायोस्त्रिस्त्रिः समभ्यसेत्। ब्रह्माणं केशवं शम्भुं ध्यायेद्देवाननुक्रमात्"। पूर्ववचने त्रिर्जपमात्राभिधानात् अत्र त्रिरिति वीप्सा सम्ध्यात्रयापेक्षया "ब्रह्माणं केशवं शम्भुं ध्यायन् मुच्येत बन्धनात्"इति वृहस्पतिधृतविष्णुधर्मोत्तरवचनात्। ध्यानं काम्यमित्याह। योगियाज्ञवल्क्यः। "भूर्भुवः स्वर्महर्जनस्तपः सत्यं तथैव च। प्रत्योङ्कारसमायुक्तास्तथा तत्सवितुः पदम्। आपोज्योतीति रित्येतच्छिरः पश्चात्तु योजयेत्। त्रिरावर्त्तनयोगात्तु प्राणायामस्तु शब्दितः। पूरकः कुम्भको रेच्यः प्राणायामस्त्रिलक्षणः। नासिकागत उच्छ्वासो ध्मातुः पूरक उच्यते। कुम्भको निश्चलश्वासो मुच्यमानस्तु रेचकः"। मोचनं विशेषयति विष्णुपुराणम्। "नासंवृतमुखो जृम्भेत् हासकाशौ तु वर्जयेत्। नोच्चैर्हसेत् सशब्दञ्च न मुञ्चेत् पवनं बुधः"।

अत्र ऋष्यादिज्ञानफलमाह स एव। "आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च। वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः। अविदित्वा तु यः कुर्य्यात् याजनाध्यापनं जपम्। होममन्तर्जलादीनि तस्य चाल्पफलं भवेत्"। विशेषतो विशेषफलाय। अन्तर्जलादीनि जलमध्यक्रियमाणानि अघमर्षणजपादीनि होममन्यच्च यत् किञ्चिदिति पाठान्तरम्।

सन्ध्योपासनप्रकारमाह योगियाज्ञवल्क्यः। "प्रणवो व्याहृतीः सप्त गायत्री सशिरास्तथा। आपोहिष्ठा ऋचस्तिस्रः सूक्तञ्चैवाऽघमर्षणम्। आदित्यरक्षणार्थन्तु प्रातःसायं दिने दिने। सृष्टं स्वयम्भुवा पूर्वं ब्रह्मणस्तन्मुखं स्मृतम्"। ब्रह्मणो देवस्य ऋष्यादिकमाह संवर्त्तः। "प्रणवस्य ब्रह्मऋषिर्देवोऽग्निस्तस्य कथ्यते। गायत्री च भवेत् छन्दो नियोगः सर्वकर्मसु। त्रिमात्रस्तु प्रयोक्तव्यः प्रारम्भे सर्वकर्मसु"॥ त्रिमात्रः प्रणवः "व्याहृतीनाञ्च सर्वासामार्षञ्चैव प्रजापतिः। गायत्र्युष्णिगनुष्टुप् बृहती त्रिष्टुबेव च। पङ्क्तिश्च जगती चैव छन्दांस्येतानि सप्त वै। अग्निर्वायुस्तथा सूर्यो बृहस्पतिरपांपतिः। इन्द्रश्च विश्वेदेवाश्च देवताः समुदाहृताः। प्राणस्यायमने चैव विनियोग उदाहृतः"। गायत्र्या ऋष्यादिकमाह। "विश्वामित्रऋषिश्छन्दो गायत्री सवितेष्यते। जपहोमोपनयने विनियोगो विधीयते"॥

प्राणायामानन्तराचमने बौधायनः। "सूर्य्यश्च मामन्युश्च इति प्रातः पवित्रपाणिना इति"। भरद्वाजः। "सायमग्निश्चेत्युक्त्वा प्रातः सूर्य्येत्यपः पिबेत्। आपः पुनन्तु मध्याह्ने ततश्चाचमनञ्चरेत्"॥ तत इत्यत्र एभिरिति शौनकपाठः। मैत्रायनीय गृह्यपरिशिष्टम्। "प्रातः सूर्य्यश्च मेत्युक्त्वा सायमग्निश्च मेति च। आपः पुनन्तु मध्याह्ने कुर्य्यादाचमनं ततः"। ततः प्राणायामानन्तरं तदाह योगियाज्ञवल्क्यः। "प्राणस्यायमनं कृत्वा आचामेत् प्रयतोऽपि सन्। अन्तरं स्विद्यते यस्मात्तस्मादाचमनं स्मृतम्"। मार्जनमाह छन्दोगपरिशिष्टम्। "शिरसो मार्जनं कुर्य्यात् कुशैः सोदकविन्दुभिः। प्रणवो भूर्भुवः स्वश्च सावित्री च तृतीयिका। अब्दैवत्यं त्र्यृचञ्चैव चतुर्थमिति मार्जनम्। ओङ्कारो भूरादि व्याहृतित्रय,

तृतीया च गायत्री चतुर्थमापो हिष्ठेति ऋक्त्रयम् इतीदं मार्जनं मार्जनक्रियाकरणमित्यर्थः । रामायणम् । "ऋगन्ते मार्जनं कुर्य्यात् पादान्ते वा समाहितः । आपोहिष्ठे त्यृचा कार्य्यं मार्जनन्तु कुशोदकैः । प्रतिप्रणवसंयुक्तं क्षिपेन्मूर्द्ध्नि पदे पदे । तृचस्यान्तेऽथवा कुर्य्याद्दर्षीणां मतमीदृशम् । आपोहिष्ठेति सूक्तस्य सिन्धुद्वीपऋषिः स्मृतः । आपो वै देवता छन्दो गायत्री मार्जनं स्मृतम्" ॥ छन्दोगपरिशिष्टम् । "करेणोद्धृत्य सलिलं घ्राणमासज्य तत्र च । जपेदनायतासुर्वा त्रिः सकृद्वाघमर्षणम्" ॥ हस्तेन जलमुद्धृत्य तत्र घ्राणमर्पयित्वा प्राणनिरोधं विना वाशक्तानिरुद्धप्राणो वा सकृत्त्रिर्वा ऋतञ्च सत्यमित्यादि मन्त्रं जपेत् । मार्जनानन्तरं ब्राह्मेऽपि "जलपूर्णं तथा हस्तं नासिकाग्रे समर्पयेत् । ऋतञ्चेति पठित्वा तु तज्जलन्तु क्षितौ क्षिपेत्" ॥ योगियाज्ञवल्क्यः । "पुरा कल्पे समुत्पन्ना मन्त्राः कर्मार्थमेव च । अनेनेदन्तु कर्त्तव्यं विनियोगः स उच्यते" ॥ इति सामान्यतोऽभिधायापि 'अघमर्षणसूक्तस्य ऋषिः स्यादघमर्षणः । अनुष्टुप् च भवेत् छन्दो भाववृत्तस्तु दैवतम् । अश्वमेधावभृथके विनियोगः प्रकीर्त्तितः" ॥ इत्यनेनाघमर्षणसूक्तस्य अश्वमेधावभृथके कर्मणि विशेषतोऽभिधानात् कर्मान्तरेऽदृष्टार्थं तथैवाभिधानं न तु तत्तत् कर्मणि विनियोगार्थम् । अतएव तेनैव तदुक्तम् । "सर्वपापापनोदार्थं स्मृतिकारैरुदाहृतम् । इत्वा लोकानपीमां स्त्रीं स्त्रिः पठेदघमर्षणम्" । इत्यनेन सर्वपापापनोदाय पाठाय विहितम् । न तु तत्तत् पाठे विनियोग इति एवं सर्वत्र सुधीभिर्भाव्यं भाववृत्त इति भावः सृष्टिस्तत्र वृत्तः प्रवृत्तो ब्रह्मा इत्यर्थः । छन्दोगपरिशिष्टम् । "उत्थायार्कं प्रतिप्रोहेत् त्रिकेणाञ्जलिमम्भसः । उच्चित्रमृग्द्वयेनाथ चोपतिष्ठेदनन्तरम्" ॥ उत्थितो

भूत्वा प्रणवव्याहृतिसावित्र्यात्मकेण त्रिकेण सूर्य्याभिमुखं जलाञ्जलिं क्षिपेत् । अनन्तरमुदुत्यं चित्रं देवानामिति ऋक्द्वयेन चोपस्थानं कुर्य्यात् उदिद्वयमृग्द्वयेनेति पाठो भोजराजाद्यनुमतः । एकाञ्जलिर्वक्ष्यमाण गोभिलोक्तत्र्यञ्जल्योर्व्यवस्थामाह व्यासः । "कराभ्यान्तोयमादाय गायत्र्या चाभिमन्त्रितम् । आदित्याभिमुखस्तिष्ठन् त्रिरूर्द्धं सन्ध्ययोः क्षिपेत् । मध्याह्ने तु सकृदेवं क्षेपणीयं द्विजातिभिः" ॥ अत्राभिमन्त्रितमित्युक्तेर्वारत्रयं मन्त्रपाठः । प्रधानावृत्तौ गुणावृत्तिन्यायेनापि मन्त्रावृत्तिरेवमेव समुद्रकरभाष्यम् अञ्जलिक्षेपे कारणमाह काश्यपः । "त्रिंशत्कोट्यो महावीर्य्याः मन्देह नाम राक्षसाः । कृष्णातिदारुणा घोराः सूर्य्यमिच्छन्ति खादितुम् ॥ ततो देवगणाः सर्वे ऋषयश्च तपोधनाः । उपासतेऽत्र ये सन्ध्यां प्रक्षिपन्त्युदकाञ्जलिम् ॥ दह्यन्ते तेन ते दैत्या वज्रीभूतेन वारिणा । एतस्मात् कारणात् विप्राः सन्ध्यां नित्यमुपासते"॥ उपस्थाने विशेषमाह छन्दोगपरिशिष्टम् । "तदसंयुक्तपार्ष्णिर्वा एकपादर्द्धपादपि । कुर्य्यात् कृताञ्जलिर्वापि ऊर्द्ध्वबाहुरथापि वा" ॥ तदुपस्थानं भूम्यलग्नगुल्फभागो भूमिष्ठैकचरणो भूमिलग्नार्द्धचरणो वा कुर्य्यात्तत्र कृताञ्जलिः । ऊर्द्ध्वबाहुर्वा भवेत् पादगतविकल्पे प्रयासबाहुल्यात् फलबाहुल्यं तत्रैवोक्तम् । "यत्र स्यात् कृच्छ्रभूयस्त्वं श्रेयसोऽपि मनीषिणः । भूयस्त्वं ब्रुवते तत्र कृच्छ्रात् श्रेयो ह्यवाप्यते" ॥ हस्तगतविकल्पे हारीतः । "सायं प्रातरुपस्थानं कुर्य्यात् प्रञ्जलिरानतः । ऊर्द्ध्वबाहुस्तु मध्याह्ने तथा सूर्य्यस्य दर्शनात्"॥ तेन प्रातःसायं कृताञ्जलिः । मध्याह्ने ऊर्द्ध्वबाहुरित्यर्थः । ऋष्यादिकमाह व्यासः । "उदुत्यं जातवेदेति ऋषिः प्रस्कन्न उच्यते । छन्दोगायत्रमेवास्य सूर्य्योदैवतमेव च ॥ अग्निष्टोम उपस्थाने विनियोगः प्रकीर्त्तितः ।

चित्रं देवेति हि ऋच ऋषिः कौत्स उदाहृतः। त्रिष्टुप्छन्दो देवतञ्च सूर्य्योऽस्याः परिकीर्त्तितः। अग्निष्टोम उपस्थाने विनियोगस्तथैव च" ॥ अत्र विनियोगद्वयम् अग्निष्टोमे सूर्य्योपस्थाने चेति प्रतीयते।

अथ सवितुरुपस्थानम्। नमो ब्रह्मणे इत्याद्युपजाय चेत्येव मन्त्रेणोपस्थानमुक्त्वा गोभिलेनाग्निस्तृप्यत्वित्यादिना तर्पणमभिधाय ततः प्रत्युपस्थानं गायत्र्यष्टशतादीनि जप्त्वा इति सूत्रान्तरेण गायत्री जपरूपोपस्थानमुक्तं ततश्च छन्दोगानामुपजाय चेत्यन्तमुपस्थानं ततश्च तर्पणाधिकारे तर्पणं विधाय गायत्रीजपं कुर्य्यात्। ब्राह्मणसर्वस्वे शङ्खयाज्ञवल्क्यौ। "प्रणवो भूर्भुवः स्वश्च अङ्गानि हृदयादयः। त्रिरावृत्य ततः पश्चादार्षं छन्दश्च दैवतम्। विनियोगस्तथा रूपं ध्यातव्यं क्रमशस्तु वै"॥ भूर्भुवः स्व इत्यक्षरपञ्चकं हृदय शिरः शिखा सर्वगात्रकरद्वयेषु प्रत्येकं न्यसेत्। एवमपरं वारद्वयमिति गायत्र्या ऋष्यादिकमाह योगियाज्ञवल्क्यः। "विश्वामित्र ऋषिश्छन्दो गायत्री सविता तथा। देवता विनियोगश्च गायत्र्या जप उच्यते" ॥ ततश्चावाहनं तत्र सामगानां पितृदयितोक्तमन्त्रः। "आयाहि इत्यादि यजुर्वेदिनान्तु योगियाज्ञवल्क्यः। "आवाह्य यजुषानेन तेजोऽसीति विधानतः"। व्यासः "तेजोऽसीति च मन्त्रेण गायत्रीमावाहयेत्ततः। उपस्थाय तुरीयेण नमस्कृत्य जपेत्तु ताम्। तुरीयेण गायत्र्यसीत्यादि परो रजस इत्यन्तेन तथा च वौधायनः "उपतिष्ठेद्वा एतां देवीं तुरीयेण तथाप्युदाहरन्ति गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि न हि पद्यसे नमस्ते तुरीयाय दर्शिताय पदाय परो रजसे" इत्यखिलां जपतीति ततश्चैतदुपस्थानं कृत्वा गायत्रीं जपित्वा विसर्जयेत्। तथाच योगियाज्ञवल्क्यः। "तामावाह्य जपित्वा च नमस्कृत्य

विसर्जयेत्" ॥ तत्र तेनैवोक्तमन्त्रो यथा "उत्तरे शिखरे देवि भूम्यां पर्वतवासिनि । ब्राह्मणैः समनुज्ञाता गच्छ देवि यथासुखम्" ॥ तत आवाहनानन्तरं ध्यानं महाप्रयोगसारे पितृदयितोक्तसमानम् । यथा "कुमारीमृग्वेदयुतां ब्रह्मरूपां विचिन्तयेत् । हंसास्थितां कुशहस्तां सूर्य्यमण्डलसंस्थिताम् ॥ मध्याह्ने विष्णुरूपाञ्च तार्च्यस्थां पीतवाससीम् । युवतीञ्च युजुर्वेदां सूर्य्यमण्डलसंस्थिताम् ॥ सायाह्ने शिवरूपाञ्च वृद्धां वृषभवाहिनीम् । सूर्य्यमण्डलमध्यस्थां सामवेदसमायुताम्" ॥ स्मृतिः "गायत्री ब्रह्मरूपा तु सावित्री विष्णुरूपिणी । सरस्वती रुद्ररूपा उपास्या रूपभेदतः" ॥ योगियाज्ञवल्क्यः । "पूर्वा सन्ध्या च गायत्री सावित्री मध्यमा स्मृता । या भवेत् पश्चिमा सन्ध्या विज्ञेया सा सरस्वती" ॥

करविन्यासाय स्मृतिः । "कृत्वोत्तानौ करौ प्रातःसायञ्चाधोमुखौ करौ । मध्ये तिर्य्यक् करौ प्रोक्तौ जप एवमुदाहृतः" ॥ मध्ये समकराभ्यान्त्विति शौनकपाठः । शङ्खः । "तिस्रोऽङ्गुल्यस्त्रिपर्वाणो मध्यमा चैकपर्विका । अनामा मध्यमारभ्य जप एवमुदाहृतः" ॥ मदनपारिजातेऽपि । "मध्यमाया द्वयं पर्व जपकाले तु वर्जयेत् । एनं मेरुं विजानीयाद्भाषितं ब्रह्मणा स्वयम् ॥ अङ्गुष्ठाग्रेण यज्जप्तं यज्जप्तं मेरुलङ्घितम् । असंख्यातञ्च यज्जप्तं तत्सर्वं निष्फलं भवेत्" ॥ अङ्गुष्ठाग्रस्य निषेधात् पर्वणा जपः । गोभिलः । "कदाचिदपि नो विद्वान् गायत्रीमुदके जपेत् । गायत्र्यग्निमुखी प्रोक्ता तस्मादुत्थाय तां जपेत् ॥ यज्जले शुष्कवस्त्रेण स्थले चैवार्द्रवाससा । जपहोमौ तथा दानं तत्सर्वं निष्फलं भवेत् ॥ गृहेषु तत्समं जप्यं गोष्ठे शतगुणं स्मृतम् । नद्यां शतसहस्रन्तु अनन्तं शिवसन्निधौ ॥ दर्भभिर्ज्जजनितं शतेन च पुराकृतम् । त्रियुगन्तु

सहस्रेण गायत्री हन्ति दुष्कृतम्॥ सहस्रपरमां देवीं शतमध्यां दशा वराम्। गायत्रीन्तु जपेद्विप्रो न स पापेन लिप्यते"॥ नरसिंहपुराणे। "त्रिविधो जपयज्ञः स्यात् तस्य भेदं निबोधत। वाचिकश्च उपांशुश्च मानसश्च त्रिधा मतः॥ त्रयाणां जपयज्ञानां श्रेयान् स्यादुत्तरोत्तरः। यदुच्चनीचस्वरितैः स्पष्टशब्दवदक्षरैः॥ मन्त्रमुच्चारयेद्व्यक्तं जपयज्ञः सवाचिकः। शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ प्रचालयन्॥ किञ्चित् शब्दं स्वयं विद्यादुपांशुः स जपः स्मृतः। ध्येया यदक्षरश्रेण्या वर्णाद्वर्णं पदात्पदम्। शब्दार्थमानसाभ्यासः स उक्तो मानसो जपः"॥ तेन स्वरादिसुव्यक्तवर्णोच्चारणवान् वाचनिकः। स्वयं ग्रहणयोग्य किञ्चित् शब्दवान् उपांशुः। जिह्वौष्ठचालनमन्तरेण वर्णार्थसन्धानात्मको मानसः।

वाचिकोऽपि उच्चैर्जपनिषेधमाह शङ्खः। "नोच्चैर्जप्यं बुधः कुर्य्यात् सावित्र्यास्तु विशेषतः"। योगियाज्ञवल्क्यः। "न चंक्रमन् न विहसन् न पार्श्वमवलोकयन्। नोपाश्रितो न जल्पंश्च न प्रावृतशिरस्तथा॥ न पदा पादमाक्रम्य न वै वहिः करौ स्मृतौ। नैवं विधं जपं कुर्य्यात् न च संश्रावयेत् जपम्॥ उत्तिष्ठन् वीक्ष्यमाणोऽर्कमासीनः प्राङ्मुखो जपेत्। प्राक् कुशेष्ववमासीनो वसानो वाससी शुभे॥ यदि स्यात् क्लिन्नवासा वै गायत्रीमुदके जपेत्। अन्यथा तु शुचौ भूम्यां कुशोपरि समाहितः"॥ व्यासः। "जपकाले न भाषेत व्रतहोमादिकेषु च। एतेष्वेवावशक्तस्य यद्यागच्छेद्द्विजोत्तमः। अभिवाद्य ततो विप्रं योगक्षेमञ्च कीर्त्तयेत्"॥ योगियाज्ञवल्क्यः। "यदि वाग्यमलोपः स्याज्जपादिषु कदाचन। व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम्"॥ गोतमः। "क्रोधं मोहं क्षुतं निद्रां निष्ठीवनविजृम्भितम्। दर्शनं

वनितानाञ्च वर्जयेज्जपकर्मणि। आचामेत् सम्भवे चैषां स्मरेद्विष्णुं सुरार्च्चितम्" ॥ बौधायनः। "नाभेरधश्च संस्पर्शं कर्मयुक्तो विवर्जयेत्"। छन्दोगपरिशिष्टम्। "तिष्ठेदोदयनात् पूर्वां मध्यमामपि शक्तितः। आसीतोडुगमाच्चान्त्यां सन्ध्यां पूर्वत्रिकं जपन्॥ एतत् सन्ध्यात्रयं प्रोक्तं ब्राह्मण्यं यदधिष्ठितम्। यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते"॥ पूर्वां प्राप्य सन्ध्यां सप्रणवव्याहृति सावित्रीरूपं त्रिकं जपन् आ उदयात् सूर्य्योदयपर्य्यन्तं तिष्ठेदुत्थितो भवेदित्यर्थः। एवं मध्यमामपि सन्ध्यां यथाशक्ति त्रिकं जपंस्तिष्ठेत्। पश्चिमान्तु आ उडुगमात् नक्षत्रदर्शनपर्य्यन्तं जपन्नासीत उपविष्टः स्यात्। शङ्खः। "कुशवृष्यामासीनः कुशोत्तरायां वा पवित्रपाणिरुदङ्मुखः सूर्य्याभिमुखो वाक्षमालामादाय देवतां ध्यायन् जपं कुर्य्यादिति"। अत्र च। "प्रणवं पूर्वमुच्चार्य्य भूर्भुवः स्वस्ततः परम्। गायत्री प्रणवश्चान्ते जपे चैवमुदाहृता"॥ इति योगियाज्ञवल्क्येन जपे गायत्र्या आद्यन्तप्रणवद्वयाभिधानात् प्रागुक्तत्रिकेऽपि प्रणवद्वयं बोध्यं किन्तु प्रणवत्वेनैक्यादविरुद्धम्। परवचनेन सन्ध्याविधानमुपसंहृतम्। निन्दया तन्नित्यत्वाभिधानञ्च।

प्राणायामादिगायत्रीजपान्तं सन्ध्योपासनमाह गोभिलः। "तथातः सन्ध्योपासनविधिं व्याख्यास्यामः। सुप्रक्षालितपाणिपादवदनः उपविश्योपस्पृश्य प्रागग्रेषु दर्भेषु प्राङ्मुख उदङ्मुखो वा बद्धशिखो यज्ञोपवीती ततः भूर्भुवः स्वर्महर्जनस्तपः सत्यमिति सप्तव्याहृतयः प्रतिप्रणवाद्या गायत्र्यापोज्योतिरसोऽमृतं ब्रह्मभूर्भुवः स्वरोम् इति शिरो दश प्रणवसंयुक्तास्त्रिरभ्यस्त पूरककुम्भकरेचकाख्य प्राणायाम एवं त्रीन् कृत्वा सप्त वा षोड़शवाचामेत्। ततो मार्जनं प्रणवव्याहृति-

भिर्व्याहृतिभिरथ गायत्र्या आपोहिष्ठा इति तिसृभिः ऋग्भि-र्यथोदकं हस्ते कृत्वा तत्र नासिकामाधायायतासुरनायतासुर्वा सकृत् त्रिर्वा जपेत् ऋतञ्च सत्यञ्चेति त्रिरुदकाञ्जलिमादित्यं क्षिपेत्। सावित्र्या उपस्थानम् उदुत्यं चित्रमिति अथ ध्यायन् युक्तमावर्त्तयेदोम् पूर्वां गायत्रीमष्टकृत्वः एकादशकृत्वः द्वादश-कृत्वः पञ्चदशकृत्वः शतकृत्वः सहस्रकृत्वश्चेति अष्टकृत्वः प्रयुक्ता पृथिवीमभिजयति एकादशकृत्वोऽन्तरीक्षं द्वादशकृत्वो दिवं पञ्चदशकृत्वः सर्वदिशः शतकृत्वः सर्वान् कामान् सहस्र-कृत्वो यत्किञ्चित् तत्सर्वमेव जयतीति। अथ य इमां सन्ध्यां नोपास्ते नाचष्टे न स जयति ये तूपासते ते श्रोत्रिया भव-न्तीति"। ततश्च तथाविधं जपित्वा। "महेशवदनोत्पन्ना विष्णोर्हृदयसम्भवा। ब्रह्मणा समनुज्ञाता गच्छ देवि यथे-च्छया" इति पितृदयितोक्तेन सामगो विसृजेत्। यजुर्विच्च "उत्तरे शिखरे देवि भूम्यां पर्वतवासिनि। ब्राह्मणैः समनु-ज्ञाता गच्छ देवि यथासुखम्"॥ इति योगियाज्ञवल्क्योक्तेन विसृजेत्। सन्ध्योपासना विसर्जनपर्य्यन्ता सर्ववेदिसिद्धा पितृदयितावान्तु छन्दोगानाम् आदित्यशुक्राभ्यां नमः इत्य-न्तेन उदकाञ्जलिं दद्यात्। तदनन्तरं जातवेदसे सुनवाम इति मन्त्रेणात्मरक्षणम् ऋतं सत्यमित्यनेन रुद्रोपस्थानञ्चानि-रुद्धभट्टेनाधिकमुक्तं सामगैन कार्य्यम्। "रक्षन्ते वारिणा-त्मानमित्युपतिष्ठेत। ततो रुद्रमवाग् वा वेदिकाञ्जपात्" इति छन्दोगपरिशिष्टवचनद्वयं तत्र प्रमाणं वदन्ति। जात-वेदसे सुनवाम इति मन्त्रजपेन पथि स्वस्त्ययनमाह विष्णु-धर्मोत्तरे। "जातवेदस इत्येतज्जपेत् स्वस्त्ययनः पथि। भयैर्विमुच्यते सर्वैः स्वस्तिमान् प्राप्नुयाद् गृहम्॥ चित्रमिति उदुत्यमित्ये-तयोः प्रयोगान्तरमाह तत्रैव। "व्युष्टायाञ्च तथा रात्र्यां

प्रातर्दुःस्वप्नदर्शने । चित्रमित्युपतिष्ठेत त्रिसन्ध्यं भास्करन्तथा ॥ समित्याणिर्नरो नित्यं प्राप्नुयाच्च धनायुषी । उदित्युद्यन्तमादित्यमुपतिष्ठेदहिने दिने ॥ क्षिपेज्जलाञ्जलीन् सप्त मनोदुःखविनाशने" ॥ व्युष्टायां गतायां तदनन्तरं ब्रह्मवरुणविष्णुरुद्रेभ्यः प्रत्येकम् अञ्जलीन् दद्यात् इत्यपि पितृदयिता। स्मृतिः "एतदष्टाक्षरं मन्त्रं जपन्नारायणं स्मरेत् । सन्ध्यावसाने सततं सर्वपापैः प्रमुच्यते" ॥ नारसिंहे । "अर्घ्यं दद्यात्तु सूर्य्याय त्रिकालेषु यथाक्रमात् । अशक्ता एककालेऽपि मध्याह्नेऽपि विशेषतः ॥ सन्ध्यां कृत्वा तु दत्त्वार्घ्यं ततः पश्येद्दिवाकरम् । सन्ध्यानन्तरमर्घ्यदानं ब्रह्मयज्ञतर्पणयोरकरणे तयोः करणे तु सामगानां ब्रह्मयज्ञानन्तरम् । अन्येषां तर्पणानन्तरं तथाच ब्रह्मयज्ञानन्तरम् । नरसिंहपुराणम् । "ततोऽर्घ्यं भानवे दद्यात्तिलपुष्पसमन्वितम् । उत्थाप्या मूर्द्धपर्य्यन्तमवेक्ष्य भास्करन्तथा" इति तर्पणानन्तरं विष्णुपुराणम् । "आचम्य च ततो दद्यात् सूर्य्याय सलिलाञ्जलिम् । नमो विवस्वते ब्रह्मन् भास्वते विष्णुतेजसे ॥ जगत् सवित्रे शुचये सवित्रे कर्मदायिने । आदित्याय नमस्तुभ्यं प्रसीद मम भास्कर ॥ दिवाकर नमस्तेऽस्तु प्रभाकर नमोऽस्तु ते । ततो गृहार्चनं कुर्य्यादभीष्टसुरपूजनम् ॥ जलाभिषेकपुष्पाणां धूपादीनां निवेदनैः" ॥ पद्मपुराणे "सम्पूज्य प्रणमेत् सूर्य्यं समाहितमनास्ततः । नमस्ते विष्णुरूपाय नमस्ते ब्रह्मरूपिणे ॥ सहस्ररश्मये नित्यं नमस्ते दिव्यचक्षुषे । नमस्ते रुद्रवपुषे नमस्ते भक्तवत्सल ॥ पद्मनाभ नमस्तेऽस्तु कुण्डलाङ्गदभूषण । नमस्ते सर्वलोकेश सुप्तानामपि बुद्ध्यते ॥ सुकृतं दुष्कृतं वापि सर्वं पश्यसि सर्वदा । सर्वदेव नमस्तेऽस्तु प्रसीद मम भास्कर ॥ दिवाकर नमस्तेऽस्तु विभाकर नमोऽस्तु ते । एवं द्विजो नम-

स्कृत्य त्रि: कृत्वा च प्रदक्षिणम् ॥ द्विजं गां काञ्चनं स्पृष्ट्वा ततो विष्णुगृहं व्रजेत्" ॥ समुद्रकरभाष्यादौ व्यासः। "सूर्य्याय नमः प्रातःसायञ्चैवाग्नये नमः अनग्निर्ब्रह्मचारी च प्रदद्या-दुदकाञ्जलिम्" ।

अथ ब्रह्मयज्ञः । तत्र याज्ञवल्क्यः । "वेदाथर्वपुराणानि सेतिहासानि शक्तितः । जपयज्ञार्थसिद्ध्यर्थं विद्याञ्चाध्यात्मिकीं जपेत्" ॥ बृहस्पतिः । "जप्त्वाथ प्रणवं वापि ततस्तर्पणमाच-रेत्" । ब्रह्मपुराणम् । सन्ध्योपासनानन्तरम् । "कृत्वा प्रद-क्षिणं सूर्य्यं नमस्कृत्योपविश्य च । स्वाध्यायं प्राङ्मुखः कृत्वा तर्पयेद्देवतामृषीन् ॥ ब्रह्मयज्ञानन्तरं तर्पणं सामगेतरपरम् । "अतएव कुर्वीत देवता पूजां जपयज्ञादनन्तरम्" इति हारीत-वचनं सामगस्य मध्याह्नपूजापरम् । जपयज्ञो ब्रह्मयज्ञः। श्रुतिः । "दक्षिण उत्तरौ पाणिपादौ कृत्वा सपवित्रपाणिः त्वमिति प्रति-पद्येत इति च ओनैव प्रयुङ्क्ते भूर्भुवः स्वरिति च अथ सावित्री-मिति । गोतमापस्तम्बौ । "एकामृचमेकं वा यजुरेकं वा सामाभिव्याहरेदिति" । एतदनुसारेणानिरुद्धभट्टेन प्रणव-व्याहृतिगायत्रीपाठानन्तरं चतुर्वेदादिमन्त्रचतुष्टयं लिखित-मिति । बृहस्पतिकात्यायनौ । "सचार्वाक् तर्पणात् कार्य्यः पश्चाद्वा प्रातराहुतेः । वैश्वदेवावसाने वा नान्यत्रेति निमित्त-कादिति" ॥ स ब्रह्मयज्ञः पश्चाद्वा प्रातराहुतिरित्यस्याध्यापनं ब्रह्मयज्ञ इति स्वोक्तेनैकवाक्यता तथाच दक्षः । "द्वितीये च तथा भागे वेदाभ्यासो विधीयते । वेदस्वीकरणं पूर्वं विचारो-ऽभ्यसनं जपः । तद्दानञ्चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा"॥ इति वैश्वदेवावसाने वा वामदेव्यगानरूपो सामगानां ब्रह्म-यज्ञः । निमित्तकादिति स्वकालरूपनिमित्तयान्यकालेन कार्य्यः। "अथ सप्रतवासा उदकान्तं कृत्वा प्रयतः शुचौ देशे विधी-

यति" ॥ इत्यापस्तम्बेन सामान्यतः स्थल एव ब्रह्मयज्ञविधानात् सामगीतरैरपि तर्पणानन्तरं वेदाभ्यासरूपो ब्रह्मयज्ञः कार्य्य इत्यर्थः। योगियाज्ञवल्क्यः। "दर्भेषु दर्भपाणिः स्यात् प्राङ्मुखस्तु कृताञ्जलिः। स्वाध्यायञ्च यथाशक्ति ब्रह्मयज्ञार्थमाचरेत्" ॥

अथ देवपूजा। कालिकापुराणे। "सलिले यदि कुर्वीत देवतानां प्रपूजनम्। तत्राप्यासन आसीनो नोत्थितस्तु सदाचरेत्" ॥ नरसिंहपुराणे। "ततो गृहार्च्चनं कुर्य्यादभीष्टसुरपूजनम्। जलाभिषेकपुष्पाणां धूपादेश्च निवेदनैः" ॥ गृहार्च्चनं गृहसंस्कार इति केचित्। आदिपदेन गन्धदीपनैवेद्यग्रहणम्। नरसिंहपुराणे। "नरसिंह गृहे नित्यं यः सम्मार्जनमाचरेत्। सर्वपापविनिर्मुक्तो विष्णुलोके महीयते॥ गोमयेन सदा तोयैर्यः कुर्य्यादुपलेपनम्। चान्द्रायणफलं प्राप्य विष्णुलोके महीयते" ॥ विष्णुः। "स्नातः सुप्रक्षालितपाणिपादः शुचिर्बद्धशिखो दर्भपाणिराचान्तः प्राङ्मुख उदङ्मुखो वा उपविष्टो ध्यानी देवतां पूजयेदिति"। हारीतः। "मार्जनार्च्चनबलिकर्म्मभोजनानि देवेन तीर्थेन" कुर्य्यादिति शेषः। "देवार्च्चनपरो विप्रो वित्तार्थी वत्सरत्रयम्। दत्त देवलको नाम हव्यकव्येषु गर्हितः" ॥ लिङ्गपुराणम्। कामासक्तोऽपि लुब्धोऽपि शालग्रामशिलार्च्चनम्। भक्त्या वा यदि वाऽभक्त्या कृत्वा मुक्तिमवाप्नुयात्" ॥ रत्नाकरे। "स्निग्धा तु श्रीकरी नित्यं रूक्षा दारिद्रदायिनी। कृष्णा भोगकरी नित्यं स्थूला एकान्त दायदा। कपिला दहते पापं ब्रह्मचर्य्येण पूजिता" ॥ दायदा धनदा "तथा व्यात्ताननना भग्ना विषमा वक्रचक्रिका। नैकचक्रं न भग्नारं चक्रलं मुखकालिमम्। नृसिंहरूपिणश्चक्रं नार्च्चयेत सदा गृही" ॥ लिङ्गपुराणे

शिववाक्यं "शालग्रामशिलायां यो मूल्यमुद्घाटयेन्नरः । स च क्रेता चानुमन्ता विक्रेता च परीक्षकः ॥ सर्वे ते निरयं यान्ति यावदाहूतसंप्लवम् । अतः संवर्जयेत् पुत्र चक्रस्य क्रयविक्रयम्" ॥ गृहेऽपि प्रतिमाधारणमाह संवत्सरप्रदीपे स्मृतिः । "केशवार्च्चा गृहे यस्य न तिष्ठति महीपते । तस्यान्नं नैव भोक्तव्यमभक्ष्येण समं स्मृतम्" ॥ अर्च्चा प्रतिमा । पद्मपुराणम् । "शालग्रामशिलारूपी यत्र तिष्ठति केशवः । तत्र देवासुरा यक्षा भुवनानि चतुर्दश" ततश्च सर्वदेवपूजनं शालग्रामे कर्त्तव्यम् अतएव ब्रह्मपुराणे श्रीशङ्करः । "अग्राह्यं मम नैवेद्यं पत्रं पुष्पं फलं जलम् । शालग्रामशिलालग्नं सर्वं याति पवित्रताम्" ॥ लग्नं सम्बद्धम् । शालग्रामशिलायां शिवपूजा-नैवेद्याद्यदुष्टमिति प्रामाणिकाः । तथा "गङ्गा गोदावरी रेवा नद्यो मुक्तिप्रदास्तु याः । निवसन्तीह तीर्थाद्याः शालग्राम-शिलाजले" ॥ पूजा रत्नाकरे भविष्यपुराणम् । "वरं देह-परित्यागो वरं नरकसम्भवः । न चैवापूज्य भुञ्जीत देवं पद्म-समुद्भवम् ॥ सदा पूजयते यस्तु देवं भक्त्या पितामहम् । मनुष्य-चर्मणा बद्धः स वेधा नात्र संशयः" ॥ स्मृतिः । "गन्धं पुष्पं तथा धूपं दीपं नैवेद्य पञ्चमम् । प्रतिमादिषु पूजायामवश्यं कल्पयेद् बुधः । जले तु पुष्पमात्रेण जलैर्वा प्रतिपूजयेत्" ॥ तुरप्यर्थे भिन्नक्रमे पुष्पेणापीत्यर्थः । विष्णुः । "आप आयतनं यस्मात्तस्मात्तासु सदा हरिः" । अतएव बौधायनः । "प्रतिमा-स्थानेष्वप्स्वन्नावावाहनविसर्ज्जनवर्ज्जमिति" । शातातपोऽपि । "अप्सु देवा मनुष्याणां दिवि देवा मनीषिणाम् । काष्ठलोष्ट्रेषु मूर्खाणां युक्तस्यात्मनि देवता" इति आत्मनीति योगिनो वाह्योपचारनिरासेन अन्तर्यागकर्त्तव्यतापरमिति देवलः । "अन्नेन सुमनोभिश्च गन्धपुष्पैः प्रदीपकैः । गृहस्थः पूजये-

नित्यं स्वगृहे गृहदेवताः" ॥ मरीचिः । "विधाय देवतापूजां प्रातर्होमादनन्तरम्" । तत्र पूर्वाह्णे देवतार्चनं मुख्यं "पूर्वाह्ण एव कुर्वीत देवतानाञ्च पूजनम्" इति मनुवचने एवकार-स्मरणात् । मध्याह्नेऽपि कूर्मपुराणे । "पौरुषेण तु सूक्तेन ततो विष्णुं समर्च्चयेत् । वैश्वदेवं ततः कुर्य्यात् बलिकर्म्म ततः परम् ॥ अपसर्पन्तु ते भूता ये भूता भूमिपालकाः । भूतानामविरोधेन पूजा कर्म्म करोम्यहम् ॥ अनेन स्थण्डि-लात् भूतानपसार्य्याथ साधकः । ततो दिग्बन्धनं कृत्वा दिग्भ्यस्तानपसर्पयेत्" ॥ ततो मध्याह्नस्नानानन्तरम् आश्व-मेधिके "स्थण्डिले पद्मकं कृत्वा अष्टपर्णं सकर्णिकम् । अष्टा-क्षरविधानेनाप्यथवा द्वादशाक्षरैः ॥ वैदिकैरथवा मन्त्रैर्नाम-युक्तैर्वा पुनः । स्थापितं मां ततस्तस्मिन् अर्च्चयीत विच-क्षणः ॥ देवताप्रतिमां दृष्ट्वा यतिञ्चैव त्रिदण्डिनम् । नमस्कारं न कुर्य्याद्य उपवासेन शुध्यति" ॥ हूङ्कारदोषे । "नमेद्यः शूद्रसंस्पृष्टं लिङ्गं वा हरिमेव वा । स सर्वयातनाभोगी याव-दाहृतसंप्लवम् ॥ स्त्रीणामनुपनीतानां शूद्राणाञ्च जनेश्वर । स्पर्शने नाधिकारोऽस्ति विष्णौ वा शङ्करेऽपि वा" ॥ याव-दाहृतसंप्लवं भूतसंप्लवपर्य्यन्तं प्रलयपर्य्यन्तमिति यावत् । अका-रस्य हकारश्छान्दसः । योगियाज्ञवल्क्यः । "स्नात्वा प्रणव-पूर्वन्तु देवतान्तु समाहितः । नमस्कारेण पुष्पाणि विन्यसेत्तु पृथक् पृथक् ॥ प्रणवादिसमायुक्तं नमस्कारान्तकीर्त्तितम् । स्वनाम सर्वदेवानां मन्त्र इत्यभिधीयते ॥ अनेनैव विधानेन गन्धपुष्पे निवेदयेत्" ॥ कालिकापुराणे । "शिवं भास्कर-मग्निञ्च केशवं कौशिकीन्तथा । मानसेनार्चयन् याति देव-लोकादधोगतिम्" ॥ मनसापीत्यर्थः । अतएव गोतमः । "यदा समर्थस्तदा मनसा समग्रमाचारमनुपालयेत्" । पञ्च-

पुराणम्। "आदित्यं गणनाथञ्च देवीं रुद्रं यथाक्रमम्। नारायणं विशुद्धाख्यमन्ते च कुलदेवताम्॥ यः सूर्य्यं पूजये-न्नित्यं तन्मना नियतेन्द्रियः। भक्तिभावसमायुक्तः स गच्छेत् परमां गतिम्"॥ तन्मना सूर्य्यपरायणः नियतेन्द्रियः विषया-प्रसक्तेन्द्रियः। भक्तिरूपाख्यत्वेन बोधः भावः श्रद्धा। परमां गतिं मोक्षम्। मत्स्यपुराणे। "आरोग्यं भास्करादिच्छे-द्धनमिच्छेद्धुताशनात्। ज्ञानञ्च शङ्करादिच्छेन्मुक्तिमिच्छे-ज्जनार्दनात्"॥ एषु फलेषु एषां शीघ्रदातृत्वं न तु फला-न्तरदातृत्वव्यावृत्तिः तत्तद्वाक्यविरोधात्। तथा च देवीपुरा-णम्। "श्रीमेधास्नानवात्सल्यमात्मयोगाञ्शचीपते। धर्मार्थ-काममोक्षाणां भाजनो विष्णुपूजकः॥ सर्वान् कामानवाप्नोति सम्पूज्य विष्णुवल्लभाम्। विघ्नं न जायते तस्य यजेद् यस्तु विनायकम्"॥ अगृहीतागममन्त्रस्य पौराणिकी विष्णुपूजा। विष्णुधर्मोत्तरम्। "अकामः सात्त्विको लोके यत्किञ्चिद्विनि-वेदयेत्। तेनैव स्थानमाप्नोति यत्र गत्वा न शोचते"॥ भविष्ये। "वरं प्राणपरित्यागः शिरसो वापि कर्त्तनम्। अनभ्यर्च्य न भुञ्जीत भगवन्तं त्रिलोचनम्"॥ अन्यत्रापि भगवन्तमधोक्षज-मित्यूहेत मत्स्यपुराणे भगवन्तमित्यत्र केशवं कौशिकीं शिव-मिति पठितम्।

देवपूजायां सर्व्वेषामधिकारमाह। विष्णुपुराणम्। "क्षमा शौचं दमः सत्यं दानमिन्द्रियनिग्रहः। अहिंसा गुरुशुश्रूषा तीर्थानुसरणं दया॥ आर्जवं लोभशून्यत्वं देवब्राह्मणपूजनम्। अनभ्यसूया च तथा धर्म्मः सामान्यः उच्यते"॥ महाभारते। "काङ्क्षन्तः कर्म्मणां सिद्धिं यजन्ते इह देवताः। क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्म्मजा"॥ कर्म्मणां सिद्धिमाका-ङ्क्षतो देवानां पूजनं कुर्य्युरित्यर्थः। कर्म्मविभक्तिसमभिव्या-

द्वाराद् यजन्त इत्यत्र यजेः पूजापरत्वनियमः। "गवाह्निकं देवपूजा वेदाभ्यासः सरित् प्लवः। नाशयन्त्याशु पापानि महापातकजान्यपि"॥ दानधर्मे विष्णुं प्रति नारदवाक्यम्। "अकृत्वा देवकार्य्याणि न कुर्वीतात्मसत्क्रियाम्। सन्तुष्टाश्च क्षमायुक्ता भवेयुरविकत्थनाः"॥ अविकत्थना आत्मश्लाघा-रहिताः। देवीपुराणे। "वस्त्राङ्गुलिविहीनन्तु न पात्रं कार-येत् क्वचित्"। स्मृतिः। "दूषिताः पशवो वत्साः कन्यका च रजस्वला। देवता च सनिर्माल्या हन्ति पुण्यं पुरातनम्"॥ गोतमः। "रात्रावुदङ्मुखः कुर्य्याद्देवकार्य्यं सदैव हि। शिवार्चनं सदाप्येवं शुचिः कुर्य्यादुदङ्मुखः"॥ यत्तु "परा-रोपितवृक्षेभ्यः पुष्पाण्यानीय योऽर्चयेत्। अविज्ञाप्य च तस्यैव तस्य तन्निष्फलं भवेत्"॥ तत् द्विजेतरपरम्। "द्विजस्तृणैधः-पुष्पाणि सर्वतः स्ववदाहरेत्"। इति याज्ञवल्क्यात्। "देव-तार्थन्तु कुसुममस्तेयं मनुरब्रवीत्" इति वचनाच्च। गोऽभ्यर्थं-तृणमेधांसि यज्ञार्थे वीरुद्वनस्पतीनां पुष्पाणि स्ववदाददीत फलानि च परिवृंहितानाम्" इति गोतमवचनाच्च विशेषो ज्ञेयः। एवम् "उग्रगन्धीन्यगन्धीनि कुसुमानि न दापयेत्। अन्यायतनजातानि कण्टकीनि तथैव च"॥ इति विष्णु-धर्म्मोत्तरोक्त अन्यायतनजातानीत्यपि द्विजेतरपरम्। "तृणं वा यदि वा काष्ठं पुष्पं वा यदि वा फलम्। अयच्छतो हि गृह्णानो हस्तच्छेदनमर्हति"॥ इति स्मृतेः। "देवोपरिधृतं मस्तकोपरिधृतम् अधोवस्त्रधृतम् अन्तर्जलक्षालितपुष्पं दुष्टम्" इति। हरिभक्तिनामके ग्रन्थे अभिवाद्याभिवादककरस्थस्य पुष्पं प्रोक्षणात् कर्म्मार्हमिति कश्चित्। अतएव तयोरभि-वादननिषेधमाह बौधायनः। "समिद्वार्य्युदकुम्भपुष्पान्न हस्तो नाभिवादयेत् यच्चाप्येवं युक्तमिति"। एवं युक्तं समिदादि-

युक्तम्। लघुहारीतः। "जपयज्ञस्थलस्थश्च समित्पुष्पकुशान् तिलान्। दन्तकाष्ठञ्च भैक्ष्यञ्च वहन्तं नाभिवादयेत्"॥ अभिवादयेदित्यनुवृत्तौ शङ्खलिखितौ। "न पुष्पाक्षतपाणिर्नाशुचिर्न जपन्न दैवपितृकार्य्यं कुर्वन्निति"। अक्षता यवाः। "अक्षतास्तु यवाः प्रोक्ता भ्रष्टाधाना भवन्ति ते" इति भट्टनारायणधृतात्। अतएवामरः। धानाभ्रष्टयवे स्त्रियः। आगमने तु वशिष्ठः। "जपकाले न भाषेत होमपूजादिकेषु च। एतेषु चैव शक्तेषु यद्यागच्छेद्द्विजोत्तमः॥ अभिवाद्य ततो विप्रं योगक्षेमन्तु कीर्त्तयेत्"॥ अत्र द्विजोत्तमपदं निषादस्थपतिवत् कर्मधारयसमासस्यैव युक्तत्वादपतितत्रैवर्णिकपरमिति विद्याकरः। वस्तुतस्तु विप्रमिति श्रवणात् तन्मात्रपरमिति। "याचितं निष्फलं पुष्पं क्रयक्रीतञ्च निष्फलम्"। इति वदन्ति तथा। "न पुष्पच्छेदनं कुर्य्यात् देवार्थं वामहस्ततः। न दद्यात्तानि देवेभ्यः संस्थाप्य वामहस्ततः"॥ स्मृतिः। "पत्रत्रयान्विता दूर्वा प्रशस्ता चार्घ्यकर्म्मणि"। शारदायाम्। "मलिनं भूमिसंस्पृष्टं क्रिमिकेशादिदूषितम्। अङ्गस्पृष्टं समाघ्रातं त्यजेत् पर्य्युषितं बुधः"॥ हारीतशातातपौ। "समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत्। शूद्रानीतैः क्रयक्रीतैः कर्म्म कुर्वन् पतत्यधः"॥ क्रये प्रतिप्रसूतं ब्रह्मपुराणम्। "पुष्पैर्धूपैश्च नैवेद्यैः वीरक्रयक्रियाहृतैः"॥ वीरक्रयः वीरवद्याच्ञाशून्येन विक्रेतुरुपन्यस्तमूल्येन क्रयः तद्रूपा या क्रिया तयाहृतैः। लघुहारीतः। "स्नानं कृत्वा तु ये केचित् पुष्पं गृह्णन्ति वै द्विजाः। देवतास्तन्न गृह्णन्ति भस्मीभवति काष्ठवत्"॥ एतत्तु द्वितीयस्नानाभिप्रायमिति रत्नाकरः। व्यक्तं मत्स्यसूक्ते। "स्नात्वा मध्याह्नसमये न छिन्द्यात् कुसुमं नरः। तत्पुष्पस्यार्च्चनाद्देवि निरये परिपच्यते"॥ ज्ञानमालायाम्।

"पुष्पं वा यदि वा पत्रं फलं नेष्टमधोमुखम्। पुष्पाञ्जलिविधिं हित्वा यथोत्पन्नं तथार्पणम्"। एवञ्च पद्मपुराणे "आदित्यं गणनाथञ्च इत्यादि यथाक्रममित्यनेन शब्दक्रमाभिधानात्। सूर्य्यं गणेशं दुर्गां शिवं विष्णुं सम्पूज्य ब्राह्मणमन्यांश्च पूजयेत्। गृहीतागमस्त्वस्य तु तत्तत् पूजनादेव पौराणिकपूजनसिद्धिः। तदनन्तःपातिनस्तु पृथक् पूजनम्। तत्र सर्वेषां शक्तितारतम्येन वक्ष्यमाणषोड़शोपचारादिकं कुर्य्यात्। अशक्तौ जलेनापि। तत्र प्रथमतः सूर्य्यपूजा सम्यक्त्व प्रथमं सूर्य्यमपरान् यः प्रपूजयेत्। न तत्र तत् कृतं पापं संप्रतीच्छन्ति देवताः। इति ब्रह्मपुराणात्। प्रागुक्तपद्मपुराणवचनाच्च। यत्तु भविष्यपुराणे। "देवतादौ यदा मोहात् गणेशो न च पूज्यते। तदा पूजाफलं हन्ति विघ्नराजो गणाधिपः" ॥ इत्यनेन गणेशपूजनम् आदावुक्तं तत् सूर्य्यपूजातिरिक्ते ज्ञेयम्। "आदित्यं गणनाथञ्च देवीं रुद्रं यथाक्रमम्। नारायणं विशुद्धाख्यमन्ते च कुलदेवताः" ॥ इति पद्मपुराणैकवाक्यत्वात्। "आदौ विनायकः पूज्योऽन्ते च कुलदेवताः" ॥ इति बह्वृचगृह्यपरिशिष्टोक्तं गौर्य्यादिपूजनपरमिति कल्पतरुप्रभृतिभिरपि सूर्य्यपूजनस्यादित्वमुक्तम्।

भूतशुद्धिप्रकारमाह भविष्यपुराणे। "गत्वाथायतनं शुद्धमर्कं शुद्धतनुर्यजेत्। पूरकं कुम्भकं कृत्वा रेचकञ्च समाहितः ॥ कृत्वोङ्कारेण दोषांस्तु हन्यात् कायादिसम्भवान्" ॥ आदिपदेन वाङ्मनसोरुपादानम्। वायव्याग्नेयमाहेन्द्रवारुणीभिर्यथाक्रमम्। किल्विषं धारणाभिश्च हन्यात् शुद्धयेऽमात्मनः। शोषणे दहने स्तम्भे प्लावने च यथाक्रमम्। वायुग्नीन्द्रजलाख्याभिर्धारणाभिः कृते सति ॥ ध्यायेद्विशुद्धमात्मानं प्रणवेनार्कवत् स्थितम्। देहं तेनैव सञ्चिन्त्य पञ्चभूतमयं

परम्" ॥ तेनैव प्रणवेन । सञ्चिन्त्य संघय्य । "स्थूलं सूक्ष्मं तथाङ्गानि स्वस्थानेषु प्रकल्प्य च" । इत्यादीन्यभिधाय । "आवाहनादिकर्म्माणि रश्मेश्च प्रणवेन तु" । आदिपदेन संस्थापनसन्निधापनसन्निरोधनानि बोध्यानि । "यावद् यागावसानन्तु सान्निध्यं परिकल्पयेत् । दत्त्वा पाद्यादिकं पूजां शक्त्या चान्नं निवेदयेत् ॥ जप्त्वा च विधिवन्नत्वा ततो देवं विसर्जयेत् । एष कर्म्मक्रमः प्रोक्तः सर्वेषां यजनक्रमे" ॥ अत्र विसर्जयेदित्यन्तेन यथोक्तामर्कपूजाम् अभिधाय एष कर्म्मक्रम इत्यनेन सर्वेषां देवानां पूजने आकाङ्क्षितभूतशुद्ध्यादिकमतिदिश्यते । न तु तन्मात्रोपयुक्ताङ्गन्यासादिकम् एवञ्च "प्राक् पश्चिमोदगास्यश्च प्रातःसायं निशासु च" इत्यनेन सायं पश्चिमाभिमुखपूजनं नान्यदेवपूजायाम् अन्वेति किन्तु समाचारसूर्य्यमन्त्रविषय एव शिष्टाचारोऽपि तथा । तत्र पञ्चोपचाराः तत्र गन्धा भविष्ये "चन्दनागुरुकर्पूरकुङ्कुमोशीरपद्मकैः । अनुलिप्तो नरैर्भक्त्या ददाति मानसेप्सितम्" ॥ पद्मकं पद्मं अनुलिप्तः सूर्य्यः प्रकरणात् । तथा "मुकुलैर्नार्चयेत् भानुमपक्वं न निवेदयेत् । अलाभे न तु पुष्पाणां पत्राण्यपि निवेदयेत्" ॥ तथा "मल्लिका मालती चैव दूर्वा शोकातिमुक्तकः । पाटला करवीरश्च जया पावन्तिरेव च ॥ कुटजस्तगरश्चैव कर्णिकारः कुरुण्टकः । चम्पको वकुलो कुन्दो वानो वर्वरमल्लिका ॥ अशोकं तिलकं लोध्रस्तथा चैवाटरूषकः । शतपत्राणि चान्यानि वकाह्वश्च विशेषतः ॥ अगस्त्यं किंशुकं तद्वत् पूजायां भास्करस्य तु । विल्वपत्रं शमीपत्रं पत्रं भृङ्गरजस्य च ॥ तुलसी कालतुलसी तथा रक्तञ्च चन्दनम् । गोपतिं वत्सकं वापि यथेष्टं विनिवेदयेत् ॥ यावन्ति देहरूपाणि तत् प्रसूतिकुलेषु वै । तावद् युगसहस्राणि सूर्य्यलोके महीयते" ॥ गोह्वषं वृष-

श्रेष्ठं बृहत् महत् परिमाणं वस्त्रकमिति प्रशंसायां क इति रत्नाकरः ।

अथ गणेशपूजनम् । तत्र तुलसी व्यतिरेकेण । "न तुलस्या विनायकम्" इति वचनात् । तत्रावाहनविशेषमाह । वायुपुराणम् । "विनायकं तथा दुर्गां वायुमाकाशमेव च । आवाहयेद्व्याहृतिभिस्तथैवाश्विकुमारकौ" ॥ ततो दुर्गापूजनम् । भविष्यपुराणम् । "चन्दनेन विलिप्यार्च्चां अग्निष्टोमफलं लभेत् । विलिप्य कृष्णागुरुणा वाजपेयफलं लभेत्" ॥ भविष्ये । "मल्लिकामुत्पलं रम्यं शमीपुन्नागचम्पकम् । अशोककर्णिकारञ्च द्रोणपुष्पं विशेषतः ॥ करवीरशमीपुष्पं कुङ्कुमं नागकेशरम् । यः प्रयच्छति पुण्यार्थं पुष्पाण्येतानि भारत ॥ चण्डिकायै नरश्रेष्ठ भक्तिश्रद्धासमन्वितः । स कामानखिलान् प्राप्य चण्डिकानुचरो भवेत्" ॥ देवीपुराणम् । "मञ्जरीभिः कुशानाञ्च बिल्वपत्रैश्च शोभितैः । उक्तानुक्तैस्तथा सर्व्वैर्जलजैः स्थलसम्भवैः" ॥ ब्रह्मपुराणे "बलिं कृत्वा च सूर्य्याय सर्व्वान् कामानवाप्नुयात् । क्षीरेण तर्पणं कृत्वा मनस्तापैः प्रमुच्यते ॥ दध्ना तु तर्पणं कृत्वा कार्य्यसिद्धिर्भवेन्नृणाम् । पत्रैः पुष्पैर्यथालाभं सर्व्वौषधिमयैः शुभम् ॥ मुकुलैर्नार्चयेद्देवान् अपक्वं न निवेदयेत् । फलं कथितविद्धञ्च कालापक्वमपि त्यजेत्" ॥ भविष्ये "सर्व्वेषामेव धूपानां दुर्गाया गुग्गुलुः प्रियः । घृतयुक्तो विशेषेण सततं प्रीतिवर्द्धनः ॥ माहिषाख्यं घृताक्तन्तु दत्त्वा बिल्वमथापि वा । वाजपेयफलं प्राप्य दुर्गालोके महीयते" ॥ बिल्वेऽपि घृतयोगः । "सकृष्णागुरुधूपेन धूपिता सर्व्वमङ्गला । शोधयेत् पापकलितं यथाग्निरिव काञ्चनम्" ॥ सकृष्णागुरुधूपेन कृष्णागुरुसहितघृतमहिषाख्यगुग्गुलुबिल्वान्यतमधूपेन । तथा "घृतप्रदीपदानेन चण्डिकां पूजयेन्नरः । सोऽश्वमेधफलं

प्राप्य स्वर्गलोके महीयते॥ तैलदीपप्रदानेन पूजयित्वा तु चण्डिकाम्। वाजपेयफलं प्राप्य मोदते सह किन्नरैः”॥ तैलं तिलभवम्। भविष्ये। “आम्रञ्च नारिकेलञ्च खर्जूरं बीजपूरकम्। यः प्रयच्छति दुर्गायै स गच्छति परं पदम्”॥ ततः शिवपूजनं भविष्ये। “चन्दनाच्चागुरौ ज्ञेयं पुण्यमष्टगुणं नृप। कृष्णागुरौ विशेषेण द्विगुणं फलमादिशेत्”॥ तथा “अर्कपुष्पसहस्रेभ्यः करवीरं विशिष्यते। करवीरसहस्रेभ्यो बिल्वपत्रं विशिष्यते”॥ तथा च “करवीरसमा ज्ञेया जातीबकुलपाटलाः। श्वेतमन्दारकुसुमं सितपद्मञ्च तत्समम्। नागचम्पकपुन्नागौ धुस्तूरकुसुमाः स्मृताः” तथा। “केतकी चातिमुक्तञ्च कुन्दो यूथी मदन्तिका। शिरीषसर्जबन्धूककुसुमानि विवर्जयेत्॥ मुकुलैर्नार्च्चयेद्देवमपक्वं न निवेदयेत्। फलं क्वथितविद्धञ्च यत्र पक्वमपि त्यजेत्॥ अलाभेन तु पुष्पाणां पत्राण्यपि निवेदयेत्। बिल्वपत्रैरखण्डैश्च यो लिङ्गं पूजयेत् सकृत्। सर्वपापविनिर्मुक्तः शिवलोके महीयते”॥ तथा “कनकानि कदम्बानि रात्रौ देयानि शङ्करे। दिवा शेषाणि पुष्पाणि दिवारात्रौ तु मल्लिका”॥ शिवपुराणे। “गुग्गुलुं घृतसंयुक्तं यः शिवाय निवेदयेत्। रुद्रलोकमवाप्नोति गाणपत्यञ्च विन्दति”॥ भविष्ये। “दधित्थं घृतसंयुक्तं दत्त्वा बिल्वमथापि वा। अग्निष्टोमस्य यज्ञस्य फलमाप्नोति मानवः”॥ दधित्थं कपित्थं बिल्वं बिल्वफलम्। “घृतदीपप्रदानेन शिवाय शतयोजनम्। विमानं लभते दिव्यं सूर्य्यकोटिसमप्रभम्”॥ शिवपुराणे। “घृतेन तिलतैलेन तथा चैवौषधीरसैः। दीपं प्रज्वाल्य देवेशे भक्त्या सद्गतिमाप्नुयात्”॥ ओषध्यः सर्षपाद्याः। “गुडखण्डघृतानाञ्च भक्ष्याणाञ्च निवेदने। घृतेन पाचितानाञ्च तेषां शतगुणं फलम्॥ मातुलुङ्गफलाद्यानि सुपक्वानि

निवेदयेत्। शिवाय तत् फलं तस्य यज्ञस्याणां निवेदने॥ गन्धधूपनमस्कारैर्मुखवाद्यैश्च सर्वतः। यो मामर्चयते तत्र तस्य तुष्याम्यहं सदा"॥

अथ पार्थिवशिवलिङ्गपूजाविधिः। ब्रह्मपुराणम्। "हरो महेश्वरश्चैव शूलपाणिः पिनाकधृक्। पशुपतिः शिवश्चैव महादेव इति क्रमात्॥ मृत्तिकाग्रहणे चैव घटने च प्रतिष्ठने। आवाहने च स्नपने पूजने च विसर्जने। हरादीनि च नामानि महादेवान्तानि कीर्त्तयेत्"॥ भविष्ये। "सर्वाय क्षितिमूर्त्तये नमः भवाय जलमूर्त्तये नमः रुद्रायाग्निमूर्त्तये नमः उग्राय वायुमूर्त्तये नमः भीमायाकाशमूर्त्तये नमः पशुपतये यजमानमूर्त्तये नमः। महादेवाय सोममूर्त्तये नमः ईशानाय सूर्य्यमूर्त्तये नमः। मूर्त्तयोऽष्टौ शिवस्यैताः पूर्वादिक्रमयोगतः। आग्नेय्यन्ताः प्रपूज्यास्तु वेद्यां लिङ्गे शिवं यजेत्"। शिवमिति नमः शिवायेति मन्त्रेण लिङ्गे शिवं पूजयेत्। ततो वामावर्त्तेन मूर्त्तीरष्टौ पूजयेदिति वाक्यार्थः। अत्राग्रे पूजानिषेधात् "देवाग्रे स्वस्य चाग्रे प्राची प्रोक्तागुरुक्रमैः"। इत्यागमोक्तस्य विषयो न किन्त्वभिधानप्रसिद्धप्राची ग्राह्या। एतदनुसारादेव पूर्वाद्याग्नेय्यन्ताः पूज्याः। सहेतुकनिषेधस्तु रुद्रयामले। "न प्राचीमग्रतः शम्भोर्नोदीचीं शक्तिसंस्थिताम्। न प्रतीचीं यतः पृष्ठमतो दक्षं समाश्रयेत्"॥ यजमानः शम्भोर्जगत् संहारकर्त्तुः प्राचीं न समाश्रयेत्। संहारकर्त्तुः सांमुख्यनिषेधात्। अत्र पञ्चवक्त्रपक्षे प्रधानं वक्त्रं प्राच्यवस्थितम् एकवक्त्रपक्षे सुतरां तथा। तद्रूपमाहादित्यपुराणम्। "सौम्यं मौलीन्दुभृत् त्र्यक्षं एकवक्त्रं चतुर्भुजम्। शूलपङ्कजहस्तञ्च वरदाभयपाणिकम्॥ आयताक्षं सुराराध्यं सर्वाभरणभूषितम्। शिवरूपं गृहे कुर्य्यात् प्रासादे वाप्यनिन्दितम्"॥ भविष्ये।

"यः कृत्वा पार्थिवं लिङ्गं अर्चयेत् शुभवेदिकम् । इहैव धनवान् श्रीमानन्ते रुद्रोऽभिजायते" ॥ शिवधर्म्मे । "वालुकानि च लिङ्गानि पार्थिवानि च कारयेत् । सहस्रपूजनात् सोऽपि लभते वाञ्छितं फलम्" ॥ ततो विष्णुपूजा आचारचिन्तामणौ । षोड़शोपचाराः । "आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् । मधुपर्कमाचनस्नानवसनाभरणानि च ॥ गन्धपुष्पे धूपदीपौ नैवेद्यं वन्दनन्तथा" ॥ कालिकापुराणे । "आसनं प्रथमं दद्यात् पौष्पं दारवमेव वा" । प्रपञ्चसारे । "अर्घ्यं पाद्याचमनकमधुपर्काचमनान्यपि । गन्धादयो नैवेद्यान्ता उपचारा दश क्रमात् ॥ गन्धादयो नैवेद्यान्ता पूजा पञ्चोपचारिका" ॥ मधुपर्केत्यत्र स्नानीयमिति कृत्वा व्यवहरन्ति । कालिकापुराणे । "पाद्यार्थमुदकं पाद्यं केवलं तोयमेव तत् । तत्तैजसेन पात्रेण शङ्खेनाथ प्रदापयेत् ॥ कुशपुष्पाक्षतैर्वापि सिद्धार्थैश्चन्दनैस्तथा । तोयैर्गन्धैर्यथालब्धैरर्घ्यं दद्यात्तु सिद्धये । अमृतीकरणं कुर्य्यात् सलिलं धेनुमुद्रया" ॥ तथा "एवमेव त्वर्घ्यं पात्रेऽष्टधा मन्त्रं जपेत् सुधीः । तत्तोयैः सेचयेत् शीघ्रं गन्धपुष्पादिकं तथा ॥ न दद्याद्भास्करायार्घ्यं शङ्खतोयैर्विचक्षणः । उदकं दीयते यस्तु प्रसन्नं फेनवर्जितम् ॥ आचमनाय देवेभ्यस्तदाचमनमुच्यते । यथा तथा सुगन्धैर्वा प्रसन्नैः फेनवर्जितैः ॥ तत्तैजसेन पात्रेण शङ्खेनापि प्रदापयेत् । स्वर्णरत्नोदके स्नाने कर्पूराद्यधिवासितम् । तैजसैः कांस्यपात्रैर्वा शङ्खैर्वा तन्निवेदयेत्" ॥ स्कान्दे । "दक्षिणावर्त्तशङ्खस्य तोयेन योऽर्चयेद्धरिम् । सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति" ॥ वराहपुराणे । "संस्मृतः कीर्त्तितो वापि दृष्टः स्पृष्टोऽपि वा प्रिये । पुनाति भगवद्भक्तश्चण्डालोऽपि यदृच्छया ॥ एतज्ज्ञात्वा तु विद्वद्भिः पूजनीयो जनार्दनः । वेदोक्तविधिना

भद्रे आगमोक्तेन वा सुधीः" ॥ भद्र इति पृथिव्याः सम्बोधनं तथा "यावत् सर्वेषु भूतेषु सद्भावो नोपजायते। तावदेवमुपासीत वाङ्मनः कायकर्म्मभिः" ॥ अत्राङ्गिरसौ। "सर्वपापप्रसक्तो हि ध्यायेन्निमिषमच्युतम्। पुनस्तपस्वी भवति पङ्क्तिपावनपावनः" ॥ विष्णुपुराणे। "गत्वा गत्वा निवर्त्तन्ते चन्द्रसूर्य्यादयो ग्रहाः। अद्यापि न निवर्त्तन्ते द्वादशाक्षरचिन्तकाः" ॥ द्वादशाक्षरस्तु। नमो भगवते वासुदेवाय। नारसिंहे। "योऽष्टाक्षरेण देवेशं नरसिंहमनामयम्। गन्धपुष्पादिभिर्नित्यं अर्चयेदर्चितं नरः ॥ गन्धपुष्पादिसकलमनेनैव निवेदयेत्" ॥ नमो नारायणायेत्यनेन। "अष्टाक्षरस्य मन्त्रस्य ऋषिर्नारायणः स्वयम्। छन्दश्च देवी गायत्री परमात्मा च देवता ॥ ध्यात्वा प्रणवपूर्वन्तु तन्नाम्ना सुसमाहितः। नमस्कारेण पुष्पाणि विन्यसेत्तु पृथक् पृथक्" ॥ कालिकापुराणे। "यद्दीयते देवताभ्यो गन्धपुष्पादिकं तथा। अर्घ्यपात्रस्थितैस्तोयैरभिषिच्य समुत्सृजेत् ॥ नैवेद्यं दक्षिणे वामे पुरतोऽपि न पृष्ठतः। दीपं दक्षिणतो दद्यात् पुरतो वा न वामतः ॥ वामतस्तु तथा धूपमग्रे वा न तु दक्षिणे। निवेदयेत् पुरोभागे गन्धपुष्पञ्च भूषणम्" ॥ यद्यपि देव्या इत्युपक्रम्य नैवेद्यादौ दिङ्नियम उक्तस्तथाऽप्यकाङ्क्षया सर्वत्रान्वेति। दीपं तथा स्थापयेत् यथा छायां नाश्रयेत्। "विभीतकार्ककारञ्जस्नुही छायां न चाश्रयेत्। स्तम्भदीपमनुष्याणां अन्येषां प्राणिनां तथा" इति प्रयोगसागरात्। शारदायाम्। तत्र तत्र जलं दद्यादुपचारान्तरान्तरे। एतज्जलदानमुपचारद्रव्यद्रानाय। तथाह कालिकापुराणम्। "यदेव दीयते पश्चे मण्डलस्य तदुत्सृजेत्। वाक्पुष्पतोयैः कुसुमं विना यच्छादकं भवेत्। पद्मस्य तद्दक्षिणे द्वारादौ विनिवेदयेत्" ॥

ह्लादकमिति पद्मस्थावरकं कुसुमं विना यदन्यत्तत् पद्मस्य वहि-र्दद्यादित्यर्थः। "प्रतिमादिषु यद्‌ योग्यं मात्रे दातुञ्च तत्तनौ। दद्यादयोग्यं पुरतो नैवेद्य भोजनादिकम्"॥ नरसिंहपुराणे। "स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकम्"। गन्धादयस्तु "सुगन्धसुमनो धूपदीपनैवेद्यवन्दनम्" इत्यत्रोक्ताः। अशक्तानां गन्धपुष्पमात्रमाह ब्रह्मपुराणम्। "प्रणवादिसमायुक्तं नमस्कारान्तकीर्त्तितम्। स्वनाम सर्वसत्वानां मन्त्र इत्यभिधीयते॥ अनेनैव विधानेन गन्धपुष्पे निवेदयेत्। एकैकस्य प्रकुर्वीत यथोद्दिष्टं क्रमेण तु॥ आग्नेये केवलपुष्पेणापि पुष्पमुपक्रम्य "ध्यात्वा प्रणवपूर्वन्तु तन्नाम्ना सुसमाहितः। नमस्कारेण मन्त्रेण विन्यसेत्तु पृथक् पृथक्"॥ ध्यात्वेत्यत्र स्नात्वेति तन्नाम्ना इत्यत्र दैवतमिति योगियाज्ञवल्क्येर पाठः। नरसिंहपुराणे। नरकस्थान् प्रति यमवाक्यम्। "अलाभे चान्यद्रव्याणामुदकेनापि पूजितः। यो ददाति स्वकं स्थानं स त्वया किं न पूजितः"। राघवभट्टधृतम्। "सर्वोपचारवस्तूनामलाभे भावनैव हि। निर्म्मलेनोदकेनाथ पूर्णतेत्याह नारदः"॥ प्रणवादिनमोऽन्तस्य नाम्नो मन्त्रत्वाभिधानान्मन्त्रादौ पाद्याद्यभिधान न मन्त्रमध्ये पाद्यार्घ्ययोरादित्वे विकल्पः। "पाद्यञ्चैव तृतीयया चतुर्थ्यार्घ्यं प्रदापयेत्"। इति नरसिंहपुराणात् अर्घ्यं पाद्यादिकन्तथेति मत्स्यपुराणात् तृतीयया पुरुषसूक्तीयया ऋचा। "आगच्छ नरसिंहेति आवाह्याक्षतपुष्पकैः। एतावतापि राजेन्द्र सर्वपापैः प्रमुच्यते"॥ अक्षतपुष्पकैस्तण्डुलादिपुष्पकैः। "दत्त्वासनमथार्घ्यञ्च पाद्यमाचमनीयकम्। देवदेवस्य विधिना सर्वपापैः प्रमुच्यते॥ स्नापितो येन भक्त्या च नरसिंहो नराधिप। सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति"॥ कालिकापुराणे। "कार्पासं सर्वतो भद्रं दद्यात्

सर्वेभ्य एव तु । नैकान्तरक्तं दद्यात्तु वासुदेवाय चैलकम्" ॥ तथा "तत्पूर्वं पूजयित्वैव मन्त्रैर्देवाय चोत्सृजेत् । निर्दशं मलिनं जीर्णं छिन्नं गात्रावलिङ्गितम् ॥ परकीयं चाखु-दंष्ट्रं सूचीविद्धं तथोषितम् । उग्रकेशं विधूतञ्च श्लेष्म-मूत्रादिदूषितम्" ॥ उग्रकेशं केशेन सह वापितम् । "वर्ज्जयेत् स्वोपयोगेन यज्ञादावुपयोजने । पताकाध्वजवस्त्रादौ स्यूतं वस्त्रं नियोजयेत् ॥ ग्रैवेयकादिसंयुक्तं सौवर्णं राजतञ्च वा । निवेदयेत्तु देवेभ्यो नान्यत्तैजससम्भवम् । प्रावारः पानपात्रञ्च गण्डको गृहमेव वा" ॥ गण्डक आभरणविशेषः "पर्य्यङ्कादि-यदन्यच्च सर्वं तदुपभूषणम्" । आग्नेये । "चन्दनागुरुकर्पूर-कुङ्कुमोशीरपद्मकैः । अनुलिप्तो हरिर्भक्त्या वरान् भोगान् प्रयच्छति ॥ कालेयकं तुरुष्कञ्च रक्तचन्दनमेव च । नृणां भवन्ति दत्तानि पुण्यानि पुरुषोत्तमे" ॥ कालिकापुराणे । "गन्धो मलयजो यस्तु देवे प्रियः च स स्मृतः । तत्पङ्को वा रसो वापि चूर्णो वा विष्णुतुष्टिदः" ॥ तत्रैव "चन्दनागुरुदग्धा तु गृह्यते दारुजो रसः । प्रशस्तगन्धयुक्तानां गन्धचूर्णानि यानि तु" ॥ विष्णुधर्म्मोत्तरे । "चन्दनागुरुकर्पूरमृगमदस्तथैव च । जातीफलं तथा दत्त्वा अनुलेपनकारणात् ॥ अतोऽन्यं नैव दातव्यं किञ्चिद्देवानुलेपनम् । अनुलिप्तं जगन्नाथं तालवृन्तेन वीजयेत् ॥ वायुलोकमवाप्नोति पुरुषस्तेन कर्म्मणा । चामरै-र्वीजयेद् यस्तु देवदेवं जनार्द्दनम् ॥ तिलप्रस्थप्रदानस्य फलं प्राप्नोत्यसंशयम्" ॥ राघवभट्टधृतम् । "शङ्खपात्रस्थितं गन्धं मन्त्रैर्दद्यात् कनिष्ठया । कनिष्ठाङ्गुष्ठसंयुक्ता गन्धमुद्रा प्रकी-र्त्तिता" ॥ नरसिंहे । "अपर्य्युषितनिश्छिद्रैः प्रोक्षितैर्जन्तु-वर्जितैः । स्वीयारामोद्भवैर्वापि पुष्पैः संपूजयेद्धरिम्" ॥ भक्त्या संपूजयेद्धरिमिति स्थानान्तरे चतुर्थचरणे पाठः । देवीपुराणे ।

"स्वयं पतित पुष्पाणि त्यजेदुपहतान्यपि"। नारसिंहे। "मल्लिकामालती जाती केतक्यशोकचम्पकैः। पुन्नागनागबकुलैः पद्मैरुत्पलजातिभिः॥ तुलसी करवीरैश्च पलाशावन्तिकुब्जकैः। एतैरन्यैश्च कुसुमैः प्रशस्तैरच्युतं नरः॥ दत्त्वा दश सुवर्णस्य प्रत्येकं फलमाप्नुयात्"॥ नागो नागकेशरः। योगिनीतन्त्रे। "बिल्वपत्रञ्च माध्यञ्च तमालामलकीदलम्। कह्लारं तुलसी चैव पद्मञ्च मुनिपुष्पकम्। एतत्पर्य्युषितं न स्यात् यच्चान्यत् कलिकात्मकम्"॥ नारसिंहे। "शमीपत्रसहस्रेभ्यो बिल्वपत्रं विशिष्यते। बिल्वपत्रसहस्रेभ्यो बकपुष्पं विशिष्यते"॥ राघवभट्टधृतम्। "कलिकाभिस्तथा नित्यं विना चम्पकपद्मकैः। शुष्कैर्न पूजयेद्विष्णुं पत्रैः पुष्पैः फलैरपि"॥ विष्णुधर्म्मोत्तरम्। "रक्तानि यानि धर्म्मज्ञ चैत्यवृक्षोद्भवानि च। श्मशानजातानि यानि यानि चाकालजानि च"॥ तथा "कौटजं शाल्मलीपुष्पं शिरीषञ्च जनार्दने। निवेदितं भयं घोरं निस्वत्वञ्च प्रयच्छति॥ बन्धुजीवकपुष्पाणि रक्तान्यपि च दापयेत्। अनुक्तरक्तकुसुमदानाद्दौर्भाग्यमाप्नुयात्"॥ आग्नेये। "पद्मान्यम्बुसमुत्थानि रक्तनीले तथोत्पले। सिंहोत्पलञ्च कृष्णस्य दयितानि सदा नृप"॥ भविष्ये। "पद्मानि सितरक्तानि कुसुमान्युत्पलानि च। एषां पर्य्युषिताशङ्का कार्य्या पञ्चदिनोद्धृतः। तुलस्यगस्त्यबिल्वानां नास्ति पर्य्युषितात्मता"॥ वामनपुराणम्। "बिल्वपत्रं शमीपत्रं भृङ्गराजस्य पत्रकम्। तुलसी कृष्णतुलसी सद्यस्तुष्टिकरं हरेः"॥ यत्तु "सुरभीणि तथान्यानि वर्जयित्वा तु केतकीम्"। इति वामनपुराणीये केतकीवर्जनं तन्नारसिंहेतरपरम्। वामनपुराणे। "पारिभद्रं पाटला च बकुलं गिरिशायिनी। तिलकं जम्बुवनजं पीतकं तगरन्त्वपि। एतान्याह प्रशस्तानि कुसुमान्यच्युतार्चने"॥

गिरिशायिनी श्वेतापराजिता। जम्बुवनजं श्वेतजवाकुसुमम्। विष्णुधर्म्मोत्तरे। "रक्ताशोकस्य कुसुममतसीकुसुमन्तथा। चम्पकस्य तु देयानि तथा भूचम्पकस्य च"॥ अतसी शनः। नारदीयसप्तसहस्रे। "मालती वकुलाशोकशेफाली नवमल्लिका। अम्लानतगराङ्कोठमल्लिकामधुपिण्डिका॥ यूथिकाष्टापदं कुन्दं कदम्बं मधुपिङ्गलम्। पाटला चम्पकं कृष्णं लवङ्गमतिमुक्तकम्॥ केतकं कुरुवकं विल्वं कह्लारं वासकं द्विज। पञ्चविंशतिपुष्पाणि लक्ष्मीतुल्यप्रियाणि मे"॥ स्कान्दे। "न धात्री सफला यत्र न विष्णोस्तुलसीवनम्। तं म्लेच्छदेशसदृशं यत्र नायान्ति वैष्णवाः॥ यत्र मातृपरा मर्त्या यत्र द्वादशी वत्सरः। तुलसी मालती धात्री तत्र विष्णुः श्रिया सह॥ दूर्वा दहति पापानि धात्री हरति पातकम्। हरीतकी हरेद्रोगं तुलसी हरते त्रयम्॥ तुलसीं प्राप्य यो नित्यं न करोति ममार्चनम्। तस्याहं प्रतिगृह्णामि न पूजां दशवार्षिकम्"॥ अतएव "गृह्णाति तुलसीं शुष्कामपि पर्य्युषितां हरिः"। तथा "वर्ज्यं पर्य्युषितं तोयं वर्ज्यं पर्य्युषितं दलम्। न वर्ज्यं जाह्नवीतोयं न वर्ज्यं तुलसीदलम्॥ तुलसीपत्रमादाय यः करोति ममार्चनम्। न पुनर्योनिमाप्नोति मुक्तिभागी भवेद्धि सः"॥ तथा "समञ्जरिदलैर्युक्तं तुलसीसम्भवैः स्थितौ। कुर्वन्ति पूजनं विष्णोस्ते कृतार्थाः कलौ युगे॥ स्नाने ध्याने तथा दाने प्राशने केशवार्चने। तुलसी दहते पापं कीर्त्तने रोपणे कलौ॥ तुलस्यमृतनामासि सदा त्वं केशवप्रिये। केशवार्थं चिनोमि त्वां वरदा भव शोभने॥ त्वदङ्गसम्भवैर्देवं पूजयामि यथा हरिम्। तथा कुरु पवित्राङ्गि कलौ मलविनाशिनि॥ मन्त्रेणानेन यः कुर्य्यात् गृहीत्वा तुलसीदलम्। पूजनं वासुदेवस्य लक्षकोटिफलं लभेत्"॥

यादवभट्टधृतम्। "सद्यः पर्य्युषिता वापि निर्म्माल्या नैव दुष्यति। तथान्यैर्न हरेस्तुष्टिस्तुलस्या तुष्यते यथा" ॥ गरुड़पुराणे। "गवामयुतदानेन यत्फलं लभते खग। तुलसीपत्रकैकेन तत्फलं कार्त्तिके स्मृतम्" ॥ तथा "तुलसीं विना यत् क्रियते न पूजा स्नानं न तद् यत् तुलसी विना कृतम्। भुक्तं न तद् यत् तुलसी विवर्जितं पीतं न तद् यत् तुलसी विवर्जितम्" ॥ अन्यत्रापि "तुलसीदलसंमिश्रं यत्तोयं शिरसा वहेत्। सर्वतीर्थाभिषिक्तस्य तेन प्राप्तं फलं ध्रुवम्" ॥ वैष्णवामृते व्यासः। "जलक्लिन्ना भवेद् यावत्तुलसीमूलमृत्तिका। तावत् प्रीणाति विश्वात्मा भगवान् पितृभिः सह ॥ संक्रान्त्यां पक्षयोरन्ते द्वादश्यां निशि सन्ध्ययोः। छिन्दन्ति तुलसीं ये तु ते छिन्दन्ति हरेः शिरः" ॥ विष्णुधर्म्मोत्तरे। "पुष्पाभावे च देयानि पत्राणि च जनार्द्दने। पत्राभावे जलं देयं तेन पुण्यमवाप्यते" ॥ ज्ञानमालायाम्। "नाक्षतैरर्चयेद्विष्णुं न तुलस्या विनायकम्। न दूर्वयार्चयेद्दुर्गां नोन्मत्तकैर्दिवाकरम्"॥

अथ धूपः। वामनपुराणम्। "कृष्णिकाख्यं कनं दारुसिह्लकं सागुरु सितम्। शङ्खो जातीफलं श्रीशे धूपानि स्युः प्रियाणि वै" ॥ कृष्णिका मांसीकनो महिषाख्यगुग्गुलुः सितं कर्पूरं सितेति पाठे सिता शर्करा। शङ्खो नखी। श्रीशे विष्णौ। कालिकापुराणे। "पुष्पं धूपञ्च गन्धञ्च उपचारांस्तथापरान्। जिघ्रन्निवेद्य देवेभ्यो नरो नरकमाप्नुयात्। न भूमौ वितरेद्धूपं नासने न घटे तथा। यथा तथाधारगतं कृत्वा तं विनिवेदयेत्" ॥ विष्णुधर्मोत्तरे। "धूपदः सर्वमाप्नोति धूपदः सर्वमश्नुते"।

अथ दीपः। विष्णुः। "न घृतं तिलतैलं विना किञ्चिद्दीपार्थं इति" विष्णुधर्मोत्तरे। "यावदक्षिनिमेषाणि दीपो

देवालये ज्वलेत्। तावद्वर्षसहस्राणि स्वर्गलोके महीयते"॥ तथा "यः कुर्य्यात्तेन कर्माणि स्यादसौ पुष्पितेक्षणः"। तेन देवदत्तप्रदीपेन। कालिकापुराणे। "लभ्यते यस्य तापस्तु दीपस्य चतुरङ्गुलात्। न स दीप इति ख्यातो व्योमवह्निस्तु स स्मृतः॥ नेत्राह्लादकरः स्वर्चिः क्रूरतापविवर्जितः। सुशिखः शब्दरहितो निर्धूमो नातिह्रस्वकः॥ सर्वंसहा वसुमती सहते न त्विदं द्वयम्। अकार्य्यपादघातञ्च दीपतापं तथैव च"॥ तथा "दीपहर्त्ता भवेदन्धः काणो निर्वापको भवेत्"॥

अथ नैवेद्यम्। नारसिंहे। "मोचकं पनसं जम्बु तथान्यन्नवलीफलम्। प्राचीनामलकं श्रेष्ठं मधुकोडुम्बरन्तथा॥ यत्नपक्वमपि ग्राह्यं कदलीफलमुत्तमम्"॥ मोचकं कदलकम्। प्राचीनामलकं करमर्दकम्। वराहपुराणे "अपर्य्युषितपक्वानि दातव्यानि प्रयत्नतः। खण्डाज्यादिकृतं पक्वं नैव पर्य्युषितं भवेत्"॥ वामनपुराणम्। "हविषा संस्कृता ये च यवगोधूमशालयः। तिलमुद्गादयो माषा व्रीहयश्च प्रिया हरेः॥ विष्णुः। "नाभक्ष्यं नैवेद्यार्थे भक्ष्येष्वजामहिषीक्षीरं वर्जयेत्। पञ्चनखमत्स्यवराहमांसानि चेति"। भक्ष्यम् इति यद्वर्णस्य यदभक्ष्यं स्वरूपतो लशुनादि तत् तेन न देयम्। न तु रात्र्यादौ दध्यादि। पञ्चनखश्च शशातिरिक्तः। "मार्गं मांसं तथा छागं शाशं मांसन्तथैव च। एतानि हि प्रियाणि स्युः प्रयोज्यानि वसुन्धरे'॥ इति वराहपुराणे भगवद्वाक्यात्। तथा "माहिषञ्चाविकं मांसमयाज्ञिकमुदाहृतम्। माहिषं वर्जयेन्मांसं क्षीरं दधि घृतन्तथा"॥ देवलः। "चाण्डालेन शुना वापि दृष्टं हविरयज्ञियम्। विड़ालादिभिरुच्छिष्टं दुष्टमन्नं विवर्जयेत्॥ अन्यत्र हिरण्योदकस्पर्शादिति"। श्रीभागवते "यद्यदिष्टतमं लोके यच्चापि प्रियमात्मनः। तत्त-

निवेदयेन्मन्त्रं तदानन्त्याय कल्पते" ॥ मन्त्रं वासुदेवाय "नमो नारायणायेति मन्त्रः सर्वार्थसाधकः । भक्तानां जपतां तात स्वर्गमोक्षप्रदायकः" ॥ विद्याकरधृतम् । "सहस्रं वा शतं वापि दश वानुदिनं जपेत् । कुर्य्यादष्टाधिकं तेषामिति जप्ये विधिः स्मृतः" ॥ आगमे । "गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् । सिद्धिर्भवतु मे देव त्वत्प्रसादात् त्वयि स्थिते ॥ मन्त्रो श्लोकं पठित्वा तु दक्षहस्तेन विष्णवे । मूलानुनार्घ्यतोयेन दक्षहस्ते निवेदयेत्" ॥ अनुमन्त्रः । तन्त्रान्तरे । "विक्षेपादथ वालस्याज्जपहोमार्चनान्तरा । उत्तिष्ठति तथा न्यासं षडङ्गं विन्यसेत्ततः" ॥ पञ्चरात्रे "अपवित्रकरो नग्नः शिरसि प्रावृतोऽपि वा । प्रलपन् प्रजपेत् यावत्तावन्निष्फलमुच्यते" ॥ विष्णुपुराणे । "सर्वदेवेषु यत् पुण्यं सर्वतीर्थेषु यत् फलम् । तत्फलं समवाप्नोति स्तुत्वा देवं जनार्दनम्" ॥ स्मृतिः । तथा "भ्रान्त्वा चातुष्पार्श्वं श्रीकृष्णं यो नमेन्नरः । अष्टाङ्गप्रणिपातेन तस्य मुक्तिः करे स्थिता" ॥ स्कान्दे । "अर्घ्यं कृत्वा तु शङ्खेन यः करोति प्रदक्षिणम् । प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा" ॥ वामनपुराणे । "त्रिःप्रदक्षिणञ्च यः कुर्य्यात् साष्टाङ्गकप्रणामकम् । दशाश्वमेधस्य फलं प्राप्नुयान्नात्र संशयः" ॥ नृसिंहपुराणे "उरसा शिरसा दृष्ट्या वचसा मनसा तथा । पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग इष्यते" ॥ विष्णुधर्मे । "जानुभ्यां चैव पाणिभ्यां शिरसा च विचक्षणः । कृत्वा प्रणामं देवेशे सर्वान् कामानवाप्नुयात् ॥ कैर्धृताञ्जलिभिर्नमुः" । इति भागवतीयात् । शिरोऽञ्जलियोगोऽपि नमस्कारः । श्रीभागवते "नानातन्त्रविधानेन कलावपि तथा शृणु । ध्येयं सदा परिभवघ्नमभीष्टदोऽहं तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् । भृत्यार्त्तिहं प्रणतपाल-

भवाब्धिपोतं वन्दे महापुरुष ते चरणारविन्दम् । त्यक्त्वा सुदु-स्त्यजसुरेप्सितराज्यलक्ष्मीं धर्मिष्ठ आर्य्यवचसा यदगादरण्यम् ॥ मायामृगं दयितयेप्सितमन्वधावद्वन्दे महापुरुष ते चरणार-विन्दम् । एवं युगानुवृत्तिभ्यां भगवान् युगवृत्तिभिः । मनुजै-रीड्यते राजन् श्रेयसामीश्वरो हरिः ॥ स्तुत्वा प्रसीद भग-वन्निति वन्देत दण्डवत्" ॥ तथा "शिरो मत्पादयोः कृत्वा बाहुभ्याञ्च परस्परम् । प्रपन्नं पाहि मामीश भीतं मृत्यु-ग्रहार्णवात्" इति भगवद्वाक्यम् । ब्रह्मपुराणे । "यत्किञ्चित् क्रियते देव मया सुकृतदुष्कृतम् । तत्सर्वं त्वयि संन्यस्तं त्वत्प्रयुक्तः करोम्यहम्" इत्यनेन सर्वं समर्पयेत् श्रीभागवते । "मन्त्रहीनं क्रियाहीनं भक्तिहीनं जनार्दन । यत् पूजितं मया देव परिपूर्णं तदस्तु मे" ॥ कालिकापुराणे । "यदक्षरं परि-भ्रष्टं मात्राहीनञ्च यद्भवेत् । क्षन्तुमर्हसि मे देवि कस्य न स्खलितं मनः" ॥ पुरश्चरणचन्द्रिकायाम् । "सुषुम्ना वर्त्मना पुष्पमाघ्रायोद्वासयेत् सुधीः । निर्माल्यं मस्तके धार्य्यं सर्वाङ्गे-ष्वनुलेपनम् ॥ नैवेद्यञ्चोपयुञ्जीत दत्त्वा तत् भक्तिशालिने" ॥ भक्तिशालिने विष्वक्सेनाय । षष्ठस्कन्धेऽपि "उद्वास्य देवं स्वे धाम्नि तन्निवेदितमग्रतः । अद्यादात्मविशुद्ध्यर्थं सर्वकाम-समृद्धये" ॥ स्वे धाम्नि स्वीयहृदये । उद्वास्य संस्थाप्य तथाच कालिकापुराणे । "ध्यायंस्तु मन्त्रेणानेन तत्रस्थं स्थापयेत् हृदि । तिष्ठ देवि परे स्थाने स्वस्थानं परमेश्वरि । यत्र ब्रह्मा-दयः सर्व सुरास्तिष्ठन्ति मे हृदि" भविष्ये । "निर्माल्यं नोप-भोक्तव्यं रुद्रस्य तपनस्य च । उपयुज्य च तन्मोहान्नरके पच्यते ध्रुवम्" ॥ निर्माल्यमात्रे तु "उदके तरुमूले वा निर्माल्यं तस्य संत्यजेत्" । कालिकापुराणे । "यो यद्देवार्च्चनरतः स तन्नै-वेद्यभक्षकः" ब्रह्मपुराणे "अम्बुरीषनवं वस्त्रं फलमन्यद्रसा-

दिकम् । कृत्वा कृष्णोपभोग्यन्तु सदा सेव्यं हि वैष्णवैः" ॥ तदेककर्त्तरि क्त्वा श्रवणात् स्वदत्तनैवेद्यभक्षणेऽप्यधिकार उक्तः "केवलं सौरशैवे तु वैष्णवो नैव भक्षयेत्" । विष्णुयामले । "पीत्वा पादोदकं देवि नैवेद्यं स्वयमुद्धरेत् । त्यजेत् पादोदकं यस्तु नैवेद्यं वा त्यजेच्च यः ॥ षष्टिवर्षसहस्राणि रौरवे नरके पचेत्" ॥ उद्धरेत् अभ्यवहरेत् स्कन्दयामले । "उद्वास्य देवं स्वे धाम्नि तन्निवेदितमात्मनः । भक्षयेत् पापशुद्ध्यर्थं सर्वदा साधकः प्रिये" ॥ अथच शिवधर्मोत्तरे भक्ष्यविषये । "अथ भक्त्या शिवं पूज्य नैवेद्यमुपकल्पयेत् । तदन्नं स्वयमश्नीयात् तत् सर्वं विनिवेदयेत्" ॥ कालिकापुराणे । अतिभक्त-विषये । "फलं पुष्पञ्च ताम्बूलमन्नपानादिकञ्च यत् । अदत्त्वा तन्महादेव्यै न भोक्तव्यं कदाचन" ॥ एतेन तत् पठन्ति "अन्यदेवस्य नैवेद्यं भुक्त्वा चान्द्रायणञ्चरेत्" ॥ इति तदेकान्तवैष्णवपरमिति भूषणः । यत्तु "शूद्रान्नं याज-कान्नञ्च नैवेद्यञ्चापि वर्जयेत्" इति लैङ्गवचनम् । तन्नैवेद्य-त्वेनोपकल्पितानिवेदितपरं लोभादिना भोजननिषेधकं वा यथोक्तं शास्त्रे "नोपभुक्त्वा च नैवेद्यं प्रयाति प्रेतयोनिषु" । विसर्जनात् पूर्वं विष्णुनैवेद्योपादाननिषेधार्थं वा । "अर्वाक् विसर्जनात् द्रव्यं सर्वं नैवेद्यमुच्यते । विसर्जिते जगन्नाथे निर्माल्यं भवति क्षणात्" ॥ इति गारुड़पुराणीयसंज्ञाकरण-स्यैतत्प्रयोजकत्वात् विसर्जिते पूजने समापिते इति भूषणः ।

पुरश्चरणचन्द्रिकाषष्ठस्कन्दकालिकापुराणेभ्यश्च पूजानन्तरं शङ्खपूजामाह तन्त्रप्रकाशः । "पूजयेद्गन्धपुष्पाद्यैः शङ्खं वै देववद् बुधः" । नारसिंहे । "ततःप्रभृति निर्माल्यं मा लङ्घय महामते । नरसिंहस्य देवस्य तथान्येषां दिवौकसाम् ॥ अह-न्यहनि यो मर्त्यो गीताध्यायन्तु संपठेत् । द्वात्रिंशपदराधैश्च

अहन्यहनि मुच्यते" ॥ ते चापराधा वराहपुराणान्निष्कृष्य लिख्यन्ते । भगवद्भक्तानां क्षत्रियसिद्धान्नभोजनम् ॥ १ ॥ अनिषिद्धदिने दन्तधावनमकृत्वा विष्णोरुपसर्पणम् ॥ २ ॥ मैथुनं कृत्वाऽस्नात्वा विष्णोरुपसर्पणम् ॥ ३ ॥ मृतं नरं स्पृष्ट्वाऽस्नात्वा विष्णुकर्म्मकरणम् ॥ ४ ॥ रजस्वलां स्पृष्ट्वा विष्णुगृहप्रवेशनम् ॥ ५ ॥ मानवं शवं स्पृष्ट्वाऽस्नात्वा विष्णुसन्निधाववस्थानम् ॥ ६ ॥ विष्णुं स्पृशतः पायुवायुप्रयोगः ॥ ७ ॥ विष्णोः कर्म्म कुर्वतः पुरीषत्यागः ॥ ८ ॥ विष्णुशास्त्रमनादृत्य शास्त्रान्तरप्रशंसा ॥ ९ ॥ अतिमलिनं वासः परिधाय विष्णुकर्म्माचरणम् ॥१०॥ अविधानेनाचम्य विष्णोरुपसर्पणम् ॥११॥ विष्णावपराधं कृत्वा विष्णोरुपसर्पणम् ॥ १२ ॥ क्रुद्धस्य विष्णुस्पर्शनम् ॥ १३ ॥ निषिद्धपुष्पेण विष्ण्वर्च्चनम् ॥ १४ ॥ रक्तं वासः परिधाय विष्णोरुपसर्पणम् ॥ १५ ॥ अन्धकारे दीपेन विना विष्णोश्च स्पर्शनम् ॥ १६ ॥ कृष्णवस्त्रं परिधाय विष्णोः कर्माचरणम् ॥ १७ ॥ वायसोद्धृतवासः परिधाय विष्णोः कर्माचरणम् ॥ १८ ॥ विष्णवे कुक्कुरोच्छिष्टदानम् ॥ १९ ॥ वराहमांसं भुक्त्वा विष्णोरुपसर्पणम् ॥ २० ॥ हंसजालपादसरारिमांसं भुक्त्वा विष्णोरुपसर्पणम् ॥ २१ ॥ दीपं स्पृष्ट्वा हस्तमप्रक्षाल्य विष्णो स्पर्शनं कर्म्मकरणं वा ॥ २२ ॥ श्मशानं गत्वा विष्णूपसर्पणम् ॥२३॥ पिन्याकं भुक्त्वा विष्णोरुपसर्पणम् ॥२४॥ विष्णवे वराहमांसनिवेदनम् ॥ २५ ॥ मद्यमादाय पीत्वा वा स्पृष्ट्वा विष्णुगृहप्रवेशनम् ॥ २६ ॥ परकीयेनाशुचिना वस्त्रेण परिहितेन विष्णुकर्माचरणम् ॥ २७ ॥ विष्णवे नवान्नमप्रदाय तद्भोजनम् ॥ २८ ॥ गन्धपुष्पे अप्रदाय धूपदीपदानम् ॥ २९ ॥ उपानद्भावारुह्य विष्णुस्थानप्रवेशनम् ॥३०॥ भेरीशब्देन विना विष्णुप्रबोधनम् । ३१ ॥ अजीर्णे सति विष्णुस्पर्शनम् ॥ ३२ ॥

एतदुपलक्षणम् । यथा नारसिंहपुराणम् । "अपराधसहस्राणि अपराधशतानि च । पद्मेनैकेन देवेशः क्षमते ह्येवमर्चितः" ॥

अथ पञ्चमयामार्द्धकृत्यम् । तत्र वैश्वदेवादिकमाह दक्षः । "पञ्चमे च ततो भागे संविभागो यथार्हतः । देवपितृमनुष्याणां कीटानाञ्चोपदिश्यते ॥ संविभागं ततः कृत्वा गृहस्थः शेषभुग् भवेत्" ॥ पञ्चमे भागेऽष्टधाविभक्तदिनस्य संविभागो विभज्यान्न प्रतिपादनम् । एष मुख्यः कल्पः देवो वैश्वदेवसम्बन्धी । तथाच देवपूजानन्तरं वैश्वदेवमाह नृसिंहपुराणम् । "पौरुषेण तु सूक्तेन तत्र विष्णुं समर्च्चयेत् । वैश्वदेवं ततः कुर्य्यात् बलिकर्म्म ततः परम् ॥ स्नानं दानं जपः श्राद्धमनन्तं राहुदर्शने । आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्जयेत्" ॥ इति शातातपीये दिवावैधकृत्यस्य पर्य्युदस्तरात्रीतरकालो गौण उक्तः । अतएव "सायं प्रातर्वैश्वदेवः कर्त्तव्यो बलिकर्म्म च । अनश्नतापि सततमन्यथा किल्बिषीभवेत्" ॥ सायं प्रातरिति दिवारात्रिपरम् अनश्नता अतिथ्याद्यनुरोधेन पाकसम्भव एव सायमिति बोध्यम् । विष्णुपुराणे "पुनः पाकमुपादाय सायमप्यवनीपते । वैश्वदेवनिमित्तं वै पत्न्या सार्द्धं बलिं हरेत्" ॥ इत्यत्र पुनः पाकमुपादाय इत्यभिधानात् । तेन स्वीयभोजनसम्भवे पाकं विनापि तदसम्भवे पाकसत्त्व एव रात्रौ वैश्वदेवबलिकर्म्मणी दिवा तु सर्वथैव इति । एवमेव श्रीदत्तोपाध्यायाः । यत्तु मदनपारिजाते । "धर्म्मविन्नाचरेत् स्नानमाह्निकन्तु पुनः पुनः । तर्पणं ब्रह्मयज्ञञ्च वैश्वदेवं न चाचरेत्" । इति तद्दिवा पुनःकरणं रात्रौ पुनः करणञ्च निषेधयति । पार्वणश्राद्धादिकरणे तदनन्तरं वैश्वदेवविधिमाह भविष्यपुराणम् । "कृत्वा श्राद्धं महाबाहो ब्राह्मणांश्च विसृज्य च । वैश्वदेवादिकं कर्म ततः कुर्य्यान्नराधिपः" ॥ इति शब्द-

क्रमेण क्रमान्तरं बाध्यते इति न तेन व्यवहार इति पार्व्वणादिपूर्वकरणे निन्दामप्याह गोतमः। "पितृश्राद्धमकृत्वा तु वैश्वदेवं करोति यः। अकृतं तद्भवेदन्नं पितृणां नोपतिष्ठते"। स्वयमशक्तौ अत्रिः। "पुत्रो भ्राताऽथवा ऋत्विक् शिष्यस्वस्रीयमातुलाः। पत्नीश्रोत्रिययाज्याश्च दृष्टाश्च बलिकर्मणि"॥ दृष्टाः प्रतिनिधित्वेनेति शेषः। हवनीयमाह छन्दोगपरिशिष्टम्। "हविष्येषु यवामुख्यास्तदनुव्रीहयः स्मृताः। माषकोद्रवगौरादीन् सर्वाभावेऽपि वर्जयेत्"॥ गौरः श्वेतसर्षपः। आदिशब्दाच्चीनकचनकमसूरकुलत्थोद्दालनिषेधः। तथाह शङ्खः। "कोद्रवचीनचनकमसूरकुलत्थोद्दालवर्ज्जम्"॥ आपस्तम्बः। "गृहमेधिनो यदशनीयं तस्य होमावलयश्च स्वस्वपुष्टिसंयुक्ता" इति पुष्टिः कर्मफलम् अशक्तावाहतुः शङ्खलिखितौ। अहरहः पञ्चयज्ञान्निर्वपेत् आमूलफलोदकशाकेभ्यः"। इति व्यासः। "जुहुयात् सर्पिषा युक्तं तैलक्षारविवर्जितम्। दध्यक्तं पयसाक्तं वा तदभावेऽम्बुनापि च"॥ तयोरारम्भे वृद्धिश्राद्धं कर्त्तव्यं वैश्वदेवार्थं कृते श्राद्धे बलिकर्मणि न पृथक् श्राद्धं कर्त्तव्यम्। "आधानहोमयोश्चैव वैश्वदेवे तथैव च। बलिकर्मणि दर्शे च पौर्णमासे तथैव च॥ नवयज्ञे च यज्ञज्ञा वदन्त्येवं मनीषिणः। एकमेव भवेत् श्राद्धमेतेषु न पृथक् पृथक्"॥ इति छन्दोगपरिशिष्टवचनात् पितुरशौचान्तद्वितीयदिने तदारम्भे तु न वृद्धिश्राद्धम्। "न तत्पूर्वं यतः प्रोक्तः सपिण्डनावधिः क्वचित्। वृद्धिश्राद्धस्य लोपः स्यात् पक्षयोरुभयोरपि"॥ इति छन्दोगपरिशिष्टात्। उभयोर्वैश्वदेवाग्न्याधानयोः। एवञ्च पूर्वारब्धवैश्वदेवबलिकर्मणोर्महागुरुनिपातेऽपि सुतरां कर्त्तव्यतेति। महादाननिर्णये गोभिलः "उत्तानेन तु हस्तेन ह्यङ्गुष्ठाग्रेण पीडितम्।

संहताङ्गुलिपाणिस्तु वाग्यतो जुहुयाद्धविः" ॥ एतद्धवनं परिशिष्टस्येति पराशरमदनपारिजातयोः। वायुपुराणम्। "दानं प्रतिग्रहो होमो भोजनं बलिरेव च। साङ्गुष्ठेन सदा कार्य्यमसुरेभ्योऽन्यथा भवेत्" ॥ परिमाणमाह व्यासः। "आर्द्रामलकमानेन कुर्य्याद्धोमहविर्बलीन्। प्राणाहुतिबलिश्चैव सदं गात्रविशोधनीम्" ॥ बोधायनः। "भोजनं हवनं दानमुपचारः प्रतिग्रहः। बहिर्जानु न कार्य्याणि तद्वदाचमनञ्चरेत्" ॥ व्यासः। "अकृते वैश्वदेवे तु भिक्षुके गृहमागते। उद्धृत्य वैश्वदेवार्थं भिक्षां दत्त्वा विसर्जयेत् ॥ ब्रह्मचारी यतिश्चैव विद्यार्थी गुरुपोषकः। अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः"। तत्र "स्वशाखाविधिना हुत्वा तच्छेषेण बलिं हरेत्" इति कात्यायनोक्तम्। "वैश्वदेवन्तु कुर्वीत विह्नौनन्तु स्वशाखया"। इति व्यासोक्तञ्च साग्निपरम्। निरग्निकर्त्तृकशाकलहोमबलिविशेषाभ्यां सामान्यविशेषन्यायसङ्कोचात्। तथा छन्दोगपरिशिष्टम्। "अग्न्यादिर्गोतमेनोक्तो होमः शाकल एव च। अनाहिताग्नेरेवेष युज्यते बलिभिः सह ॥ अग्नवाग्निधन्वन्तरिर्विश्वदेवाः प्रजापतिः स्विष्टकृद्धोमाः" इति गोतमोक्तो होमः स च दिग्देवताभ्यो यथा स्वमित्यादि तदुक्तबलिभिः सहितो यश्च शाकलहोमो देवकृतस्यैनस इत्याद्यष्टाहुत्यात्मकसामवेदपठितः स चाग्निपुराणाद्युक्तभूतादिबलिसहितोऽनाहिताग्नेरेवेत्यर्थः। शाकलपदव्युत्पत्तिमाह आश्वलायनः। "अष्टावष्टौ शकलान्याहवनीये अनुहरेयुर्देवकृतस्यैनसः" इति ज्योतिष्टोमीययूपकाष्ठशकलाष्टकेन देवकृतस्येत्यादिमन्त्रेण होमविधानात्। यत्तु पितृदयितायामेकस्मिन् प्रयोगे गौतमोक्ताग्न्यादिहोमदेवकृतस्येत्यादिशाकलहोमौ समुच्चितौ लिखिताविति तच्चिन्त्यम्। शाकल एवेति एवकारेण पूर्वक्लृप-

समुच्चयनिराशात्। एष इति सर्वनाम्नः सन्निकृष्टपेक्ष्य कल्प-इयावाचित्वात्। साहित्यवाचिद्विवचनान्तौ तावेव इत्यनुक्तेः। अग्निपुराणादिभिः केवलशाकलहोमविधानाच्च। ततश्च शाकल एव चेति चकारस्य विकल्पार्थकत्वमिति। मनुः। "अन्नं व्याहृतिभिर्हुत्वा यथा मन्त्रैश्च शाकलैः। भूतेभ्यश्च बलिं दत्त्वा ततोऽश्नीयादनग्निमान्"॥ अत्रानग्निक इति पाठः प्रणवपरिशिष्टे। आचारमाधवीयमदनपारिजातयोरनग्निकस्य विशेषमाह वशिष्ठः। "अनग्निकस्तु यो विप्रो ह्यन्नं व्याहृतिभिः स्वयम्। हुत्वा शाकलहोमैश्च शिष्टाद्भूतबलिं हरेत्"। शिष्टाहुतशिष्टात् तथाच याज्ञवल्क्यः "देवेभ्यश्च हुतादन्नात् शेषं भूतबलिं हरेत्"। शेषनाशे त्वन्यदादाय कर्त्तव्यमेव भट्टभाष्यम्। पराशरभाष्ये हारीतः। "वास्तुपालभूतेभ्यो बलिहरणं भूतयज्ञः" इति गोतमकल्पे अग्नाविति "लौकिके वैदिके वापि हुतोच्छिष्टे जले क्षितौ। वैश्वदेवञ्च कुर्वीत पञ्चसूनापनुत्तये"॥ इति शातातपोक्तजलक्षित्याधारतानिवृत्त्यर्थः। ततश्चाग्न्यभावे तु जलक्षित्याधारता शाकलकल्पेऽवतिष्ठते। जलक्षित्योः संस्कारोऽपि नास्तीति श्रीदत्तप्रभृतयः। ततश्च बहुवादिसम्मतः सामान्याधारकशाकलकल्पोऽत्राभिधीयते। शाकलकल्पेऽप्यन्ते स्विष्टिकृद्धोमः। भूतेभ्यश्चेति चकारादादौ देवबलिः अन्ते च पितृबलिः। "यमाय तूष्णीमिकाञ्च तथा स्विष्टिकृदग्नये"॥ तथाच स्कन्दपुराणे काशीखण्डम्। "भूराद्याव्याहृतीस्तिस्रः स्वाहान्ताः प्रणवादिकाः। भूर्भुवः स्वः स्वाहेति च विप्रो दद्यात्तथाहुतिम्॥ तथा देवकृतस्याद्या जुहुयादष्ट आहुतीः। विश्वेभ्यश्चापि देवेभ्यो भूमौ दद्यात्तथा बलिम्॥ सर्वेभ्यश्चापि भूतेभ्यो नमो दद्यात्तदुत्तरे। दक्षिणेऽग्नि पितृभ्यश्च प्राचीनावीतिको ददेत्॥ निर्णेजनोदकाद्वेन

ऐशान्यां यक्ष्मणेऽर्पयेत्" ॥ जुहुयात्तु षड़ाहुतीरिति पाठश्चेत्तदा शाखिभेदाद्व्यवस्थितः। षड़ाहुतिपक्षस्तु ब्राह्मणसर्वस्वे हलायुधलिखितः। एवं यमाहुतिरपि स्विष्टिकृत् शोभनाभिलषितकारी एवमेव भट्टभाष्यं प्रयोगे तु "अग्नये स्विष्टकृते स्वाहा" इति गोभिलादौ तथा दर्शनात् श्रुतावपि प्रथमतोऽग्नेर्निर्देशात्। "यथा देवा अग्निं स्विष्टकृतमब्रुवन् हव्यं नो वहेति सोऽब्रवीत् किं मे ततः स्यादिति यत् कामयसे इत्यब्रुवन् सोऽब्रवीत् सर्वेष्टिषु केवला सौविष्टकृतीति तथेति सोऽवहद्धवींषि इति सौविष्टकृती" आहुतिरिति शेषः।

बलिदानप्रकारमाह छन्दोगपरिशिष्टम्। "अमुष्मै नम इत्येवं बलिदानं विधीयते। बलिदानप्रकारार्थं नमस्कारः कृतो यतः॥ स्वाहाकारवषट्कारनमस्कारादिवौकसाम्। स्वधाकारः पितॄणाञ्च हन्तकारो नृणां मतः। स्वधाकारेण निनयेत् पित्र्यं बलिमतः सदा"॥ बलीनां पूर्वापरयोः सेकमाह गोभिलः। "सर्वेषामुभयोरद्भिः परिषेकः" इति। परिपाटीमाह बलिदानानन्तरं मार्कण्डेयपुराणम्। "ततस्तोयमुपादाय तेषामाचमनाय च। स्थानेषु निक्षिपेत् प्राज्ञः नाम्ना तूद्दिश्य देवताः"॥ पितृबल्यन्नानामभ्युक्षणानन्तरं दानमाह गोभिलः। "तथैतद्बलिशेषमभिषिच्यापसलविदक्षिणस्यां निनयेत् तत् पितृभ्यो भवति"। यक्ष्मबल्यनन्तरं काम्यबलिमाह विष्णुपुराणम्। "ततोऽन्यदन्नमादाय भूमिभागे शुचौ पुनः। दद्यादशेषभूतेभ्यः स्वेच्छया तत् समाहितः"॥ देवामनुष्याः पशवो वयांसि सिद्धाः सयक्षोरगदैत्यसङ्घाः। प्रेताः पिशाचास्तरवः समस्ता ये चान्नमिच्छन्ति मया प्रदत्तम्। पिपीलिकाः कीटपतङ्गकाद्या बुभुक्षिताः कर्म्मनिबन्धबद्धाः। प्रयान्तु ते तृप्तिमिदं मयान्नं तेभ्यो विसृष्टं सुखिनो भवन्तु। येषां न

माता न पिता न बन्धुर्नैवान्नसिद्धिर्न तथान्नमस्ति । तत्तृप्तयेऽन्नं भुवि दत्तमेतत् प्रयान्तु तृप्तिं मुदिता भवन्तु । भूतानि सर्वाणि तथान्नमेतदहञ्च विष्णुर्न यतोऽन्यदस्ति । तस्मादहं भूतनिकायभूतमन्नं प्रयच्छामि भवाय तेषाम् । चतुर्दशो भूतगणो य एष तत्र स्थिता येऽखिलभूतसङ्घाः । तृप्त्यर्थमन्नं हि मया विसृष्टं तेषामिदन्ते मुदिता भवन्तु । "इत्युच्चार्य्य नरो दद्यादन्नं श्रद्धासमन्वितः । श्वचाण्डालविहङ्गानां भुवि दद्यात्ततो नरः । ये चान्ये पतिताः केचिदपात्राः पापरोगिणः" ॥ द्वन्द्वात् परः सङ्घशब्देन सह समासः एवमाद्यशब्देन गणत्वञ्चामीषां सजातीयानां बहुवचनाद्विजातीयानां सङ्घाद्यशब्दाभ्यामवगम्यते । विसृष्टं दत्तम् आदिकर्म्मणि क्त प्रत्ययात् । अतः प्रयच्छामि इत्युपयुज्यते । वस्तुतस्तु साध्याभिधायित्वेनाख्यातिकपदस्य प्राधान्यात्तद्विशेषणीभूतस्य क्तदन्तस्य गौणत्वात् क्तप्रत्ययोक्तकालस्याविवक्षया न तत्रातीतार्थता एतदर्थमेव धातुसम्बन्धेन प्रत्यया इति सूत्रम् । इतिना पश्चानुकर्षादन्नमित्येकवचननिर्देशात् भवन्त्वित्यन्तेनैक एव बलिः । विहङ्गपदं वायसपरम् अपात्रपदं पापरोगिपरम् । "शुनाञ्च पतितानाञ्च श्वपचां पापरोगिणाम् । वायसानां कृमीणाञ्च शनकैर्निक्षिपेद् भुवि" ॥ इति मनुवचनैकवाक्यत्वात् वायसबलिदानमन्त्रे तु कामधेनुपितृदयिता हलायुधबहृचगृह्यधर्म्मकोषहरिहरपद्धति-रत्नाकराचार्य्यदर्शाचारप्रदीपाह्निकोद्धार नव्यवर्द्धमानधृतसौम्या इति लिखनात् याम्या इति पाठः काल्पनिकः काकानां यमप्रभुत्वदर्शनात् मन्त्रे तथा कल्पनायां मानाभावात् । एवञ्च मन्त्रपाठक्रमसुसङ्ग "ऐन्द्रवरुणवायव्याः सौम्या वै नैर्ऋतस्तथा । वायसाः प्रतिगृह्णन्तु भूमौ पिण्डं मयार्पितम् ॥ श्वानौ द्वौ श्यावशबलौ

वैवस्वतकुलोद्भवौ। ताभ्यां पिण्डं प्रयच्छामि स्यातामेतावहिंसकौ" ॥ इत्यानेन विधानेन श्राद्धक्रम इष्यते। शूद्रस्याप्यत्राधिकारः। "दानं दद्याच्च शूद्रोऽपि पाकयज्ञैर्यजेत च" इति विष्णुपुराणात्। "भार्य्यारतिः शुचिर्भृत्यभर्त्ता श्राद्धक्रियापरः। नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत्" ॥ इति याज्ञवल्क्याच्च। पञ्चयज्ञाधिकारस्य स्फुटमवगमादिति। अत्र नमस्कारेण मन्त्रेणेत्यभिधानात् श्राद्धपञ्चयज्ञेषु वैदिकेतरमन्त्रपाठो नास्तीति प्राक् प्रतिपादितम्। किन्तु "अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते" ॥ इति वचनात् ब्राह्मणेन मन्त्राः पठनीयाः। ब्राह्मणाभावे मन्त्रार्थं भावयन् नमस्कारमुच्चरन् स्वयं कुर्य्यात्। बलिदानन्तु आद्यन्तनमस्कारयुक्ततत्तत् प्रतिपादकपदेनेति। बलिवैश्वदेवावशिष्टानां भोज्यतामाह भगवद्गीता। "यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वपातकैः। भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्" ॥ वैश्वदेवादियज्ञावशिष्टं येऽश्नन्ति ते पञ्चसूनाकृतैः सर्वैः पापैर्मुच्यन्ते। ये आत्मभोजनार्थमेव पचन्ति न तु वैश्वदेवार्थं ते पापात्मानोऽघमेव भुञ्जते।

अथातिथिभोजननित्यश्राद्धे। तत्र बलिदानानन्तरं विष्णुपुराणम्। "ततो गोदोहमात्रं वै कालं तिष्ठेत् गृहाङ्गणे। अतिथिग्रहणार्थाय तदूर्द्ध्वं वा यथेच्छया" ॥ गोदोहकालश्च मुहूर्त्ताष्टमभागः। "आचम्य च ततः कुर्य्यात् प्राज्ञो द्वारावलोकनम्। मुहूर्त्तस्याष्टमं भागमुदीक्ष्यो ह्यतिथिर्भवेत्" ॥ इति मार्कण्डेयपुराणैकवाक्यत्वात्। शातातपः। "प्रियो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा। सम्प्राप्ते वैश्वदेवान्ते सोऽतिथिः स्वर्गसंक्रमः" ॥ विष्णुपुराणं "स्वाध्याय गोत्रचरणमपृष्ट्वापि तथा कुलम्। हिरण्यगर्भबुद्ध्या तं मन्येताभ्यागतं गृही" ॥

इति। गोत्रं वंशप्रवर्त्तकमहर्षिरूपम् । चरणं शाखा। स्मृतिः। "देशं नाम कुलं विद्यां पृष्ट्वा योऽन्नं प्रयच्छति। न स तत् फलमाप्नोति दत्त्वा स्वर्गं न गच्छति" ॥ मनुः। "न भोजनार्थं स्वे विप्रः कुलगोत्रे निवेदयेत्। भोजनार्थं हि ते शंसन् वान्ताशीत्युच्यते बुधैः" ॥ इति। मार्कण्डेयपुराणम्। "भोजनं हन्तकारं वा अग्रं भिक्षामथापि वा। अदत्त्वा नैव भोक्तव्यं यथा विभवमात्मनः॥ ग्रासप्रदानाद्भिक्षा स्यात् अग्रं ग्रासचतुष्टयम्। अग्रं चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमाः" ॥ ग्रासः पलमात्रमिति नव्यवर्द्धमानः। तदानीमतिथ्यलाभे तु नित्यश्राद्धानन्तरं तद्भोजनमाह विष्णुपुराणम्। "पित्रर्थं चापरं विप्रमेकमप्याशयेन्नृप। तद्देश्यं विदिताचारसम्भूतिं पाञ्चयज्ञिकम्॥ अन्नाग्रञ्च समुद्धृत्य हन्तकारोपकल्पितम्। निवापभूतं भूपाल श्रोत्रियायोपकल्पयेत्" ॥ हन्तकारोपकल्पितं हन्तपदेनोत्सृष्टं निवापभूतम् इति पितृदानं निवापः स्यादित्यभिधानात् प्रकृते पितृदानासम्भवात् पितृदानसदृशमित्यर्थः। सादृश्यञ्च श्राद्धेति कर्त्तव्यतायोगेन स्वधा प्राचीनावीतयोस्तु हन्तकारनिवीतिभ्यां विशेषविहिताभ्यां प्रागुक्तज्योतिष्टोमीयश्रुत्या सामागानां प्रत्यङ्मुखत्वस्येतरेषामुदङ्मुखत्वस्य विधानात् दक्षिणामुखत्वस्यापि निवृत्तिः। निरुपपदस्य नामातिदेशस्वीकारे वैयर्थ्यप्रसङ्गात्। एतदपि श्राद्धे न सदैवप्रयोगेण कार्य्यम्। "नित्यश्राद्धमदैवं स्यान्मनुष्यैः सह गीयते"। तेन देवश्राद्धस्थलीयं मनुष्यश्राद्धं किन्त्विदं प्रधानं तेन जीवत् पितृकेण मनुष्यश्राद्धमात्रं कार्य्यं मनुष्याश्च सनकादयः। तर्पणादौ तथा निर्णयात्। तच्चार्घ्यावाहनादिशून्यं तथाच मत्स्यपुराणं "नित्यं तावत् प्रवक्ष्यामि अर्घ्यावाहनवर्जितम्। अदैवं तद्विजानीयात् पार्वणं पर्वसु

ऋतम्" ॥ अर्घ्यादिनिषेधानुपपत्त्या पार्वणधर्मातिदेशः। अप्रजस्तु इति निषेधानुपपत्त्या दौचणौयादिषु दर्शपौर्णमासातिदेशवत् इति श्राद्धविवेकः। आचारमाधवीयधृतं पार्वणं तद्धि कीर्त्तितमिति चतुर्थचरणे पाठादपि व्यक्तस्तत्रैवार्थः। लिखितजातूकर्णौ। "नित्यश्राद्धं प्रवक्ष्यामि पिण्डहोमविवर्जितम्" इति। होमबाधे हुतशेषाङ्गबाधात् पात्रालम्भनबाध इति श्राद्धविवेकादयः। तथाच व्यासवचनेन अग्नौकरणादिकं प्रत्युक्तं तद्यथा "आवाहनस्वधाकारपिण्डाग्नौकरणादिकम्। ब्रह्मचर्य्यादिनियमं विश्वान् देवांस्तथैव च ॥ नित्यश्राद्धे त्यजेदेतान् भोज्यमन्नं प्रकल्पयेत्। दत्त्वा च दक्षिणां शक्त्या नमस्कारैर्विसर्जयेत्। एकमप्याशयेन्नित्यं षण्णामप्यन्वहं गृही" ॥ इति स्वधाकारः स्वधावाचनं तथाच शातातपः। "पिण्डनिर्वापरहितं यत्तु श्राद्धं विधीयते। स्वधावाचनलोपोऽत्र विकिरस्तु न लुप्यते ॥ अक्षय्यदक्षिणा स्वस्ति सौमनस्यं तथास्त्विति" ॥ एवं "नित्यश्राद्धमदैवं स्यादर्घ्यपिण्डविवर्जितम्। दक्षिणारहितं ह्येतत् दातृभोक्तृव्रतोज्झितम्" ॥ इति काशीखण्डवचनं दक्षिणानिषेधकम्। अशक्तविषयमिति। पार्वणानन्तरं नित्यश्राद्धे विकल्प उक्तः। मार्कण्डेयपुराणे। "नित्यक्रियां पितॄणान्तु केचिदिच्छन्ति सत्तमाः। न पितॄणां तथैवान्ये शेषं पूर्ववदाचरेत्" ॥ एवं नित्यश्राद्धमभिधाय विष्णुपुराणम्। "दद्याच्च भिक्षात्रितयं परिव्राट् ब्रह्मचारिणाम्। स्वेच्छया तु नरो दद्यात् विभवे सत्यवारितम् ॥ इत्येतेऽतिथयः प्रोक्ताः सम्प्राप्ता भिक्षुकाश्च ये। चतुरः पूजयेन्नेतान् नृयज्ञर्णात् प्रमुच्यते" ॥ चकारः पूर्वोक्तातिथिभोजनेन समुच्चयार्थः। सन्न्यासिभिक्षादाने तु "यतिहस्ते जलं दद्यात् भैक्षं दद्यात् पुनर्जलम्। तद्भैक्ष्यं मेरुणा तुल्यं

तज्जलं सागरोपमम्" ॥ विष्णुधर्मोत्तरे । "चाण्डाली वाथ पापो वा शत्रुर्वा पितृघातकः । देशकालात्ययगतो भरणीयो मतो मम" ॥ इति विष्णुपुराणम् "व्याधितस्यान्नहीनस्य कुटुम्बात् प्रच्युतस्य च । अध्वानं वा प्रपन्नस्य भिक्षाचर्य्या विधीयते" ॥ अत्र भिक्षाद्यदाने भोजननिषेधात् मनुष्ययज्ञस्य नित्यत्वाच्च अतिथिप्राप्तेरनित्यत्वात् यज्ञसिद्धये ब्राह्मणमात्राय भिक्षादिदानमावश्यकम् । अतएव बौधायनः । "अहरहर्ब्राह्मणेभ्योऽन्नं दद्यात् आमूलफलशाकेभ्यो अथैवं मनुष्ययज्ञं समाप्नोति" । विष्णुः । भिक्षुकाभावे चाग्रं गोभ्यो दद्यात् अग्नौ वा क्षिपेत्" इति । विष्णुपुराणम् । "यत्फलं सोमयागेन प्राप्नोति धनवान् द्विजः । सम्यक् पञ्चमहायज्ञैर्दरिद्रस्तदवाप्नुयात्" ॥ अकरणे प्रत्यवायमाह व्यासः । "पञ्चयज्ञांश्च यो मोहान्न करोति गृहाश्रमी । तस्य नायं न च परलोको भवति धर्मतः" ॥ देवपितृमनुष्यभूतर्षिपूजामभिधाय गौतमः । नित्यं स्वाध्यायं पितृतर्पणञ्च यथोक्तास्वमन्यदिति" तर्पणब्रह्मयज्ञयोः पूर्वमुक्तयोरपि नित्यमित्यादिना पुनरभिधानं यज्ञ-त्रयानुष्ठानाशक्तावङ्ग-वैकल्येनाप्यनयोरवश्यानुष्ठेयत्वमिति कल्पतरुप्रभृतयः । श्राद्धाशक्तौ केवलान्नोत्सर्गः कार्य्यः तत्राप्यशक्तौ द्रव्याभावे वा किञ्चिदन्नं पात्रे दत्त्वा षट् पितॄनुद्दिश्य इदमन्नं पितृभ्यः स्वधेति दत्त्वाऽपरमन्नं पात्रे कृत्वा इदमन्नं मनुष्येभ्यो हन्त इत्युत्सृज्य दद्यात् ।

अथ गोग्रासदानम् । ब्रह्मपुराणम् । "सौरभेय्यः सर्वहिताः पवित्राः पुण्यराशयः । प्रतिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्यमातरः ॥ दद्यादनेन मन्त्रेण गवां ग्रासं सदैव हि" ॥ अत्र सदैवहीत्युक्तेर्नित्याधिकारः । महाभारते । "ग्रासमुष्टिं परगवे सान्नं दद्यात्तु यः सदा । अकृत्वा स्वयमाहारं स्वर्ग-

लोकं स गच्छति" ॥ अत्र फलश्रवणात् काम्याधिकारोऽपी-त्याचारदर्शनादयः। अत्र गोर्टिमभक्ष्यदाने फलातिशयः मत्स्यस्य उक्तो भविष्ये। "तृणोदकेन संयुक्तं यः प्रदद्याद्गवा-ह्निकम्। कपिलाशतदानस्य फलं विन्देन्न संशयः॥ पञ्च-भूते शिवे पुण्ये पवित्रे सूर्य्यसम्भवे। प्रतीच्छेदं मया दत्तं सौरभेयि नमोऽस्तु ते" ॥ गवा अह्नि यद्भुज्यते तत् गवाह्नि-कम्।

अथ भोजनम्। विष्णुपुराणम्। "स केवलमघं भुङ्क्ते यो भुङ्क्ते त्वतिथिं विना। अघं स केवलं भुङ्क्ते यः पचत्यात्म-कारणात्। इन्द्रियप्रीतिजननं वृथा पाकं विवर्जयेत्"॥ तथा "स्ववासिनी दुःखिगर्भिणी वृद्धबालकान् भोजयेत् संस्कृतान्नेन प्रथमं चरमं गृही। अभुक्तवत्सु चैतेषु भुञ्जन् भुङ्क्तेऽतिदुष्कृ-तम्। मृतश्च नरकं गत्वा श्लेष्मभुग् जायते नरः। अस्नात्वाशीमलं भुङ्क्ते अजपी पूयशोणितम्। अहुत्वा च कृमिं भुङ्क्ते अदत्त्वा विषभोजनम्। असंस्कृतान्नभुङ्मूत्रं बालादिप्रथमं सकृत्॥ भुञ्जतश्च यथा पुंसः पापबन्धो न जायते। इह चारोग्यमतुलं बलवृद्धिस्तथा नृप" ॥ तथा "प्रशस्तरत्नपाणिस्तु भुञ्जीत प्रयतो गृही। अन्नं प्रशस्तं पथ्यञ्च प्रोक्षितं प्रोक्षणोदकैः। न कुत्सिताहृतं नैव जुगुप्सावदसंस्कृतम्" ॥ रत्नान्याह गरुड़-पुराणम्। "तेषु रत्नो विषव्यालव्याधिघ्नान्यघघ्नानि च। प्रादुर्भवन्ति रत्नानि तथैव विगुणानि च॥ वज्रं मुक्ता मणयः पद्मरागाः समरकताः प्रोक्ताः। अपि चेन्द्रनीलमणयो वैदूर्य्याः पुष्परागाः॥ कर्केतनकुञ्च विस्मो रुधिराख्यसमन्वितम्। तथा स्फटिकं विद्रुममणिश्च यत्नादुद्दिष्टं संग्रहे तज्ज्ञैः॥ विष्णु-पुराणे "मन्त्राभिमन्त्रितं शस्तं न च पर्य्युषितं नृप। अन्यत्र फलमांसेभ्यः शुष्कशाकादिकात्तथा॥ तद्वद्धारिकेभ्यश्च गुड़-

पक्वेभ्य एव च । भुञ्जीतोद्धृतसाराणि न कदाचिन्नरेश्वर ॥ नाश्नीयात् पुरुषोऽश्नीयादन्यत्र जगतीपते । मध्वम्बुदधिसर्पिभ्यः सक्तुभ्यश्च विवेकवान् ॥ अश्नीयात्तन्मना भूत्वा पूर्वन्तु मधुरं रसम् । लवणाम्लौ तथा मध्ये कटुतिक्तादिकांस्तथा ॥ प्राग्द्रवं पुरुषोऽश्नन् वै मध्ये च कठिनाशनः । पुनरन्ते द्रवाशी तु बलारोग्येण मुञ्चति ॥ अनिन्द्यं भक्षयेदित्थं वाग्यतोऽन्नमकुत्सयन् । पञ्चग्रासान् महामौनं प्राणाद्याप्यायनाय तत्" ॥ मन्त्राभिमन्त्रितमिति मन्त्रानादेशे गायत्रीति वचनात् गायत्र्यभिमन्त्रितम् । गारुड़े "शाकं सूपञ्च भूयिष्ठम् अत्यम्लञ्च विवर्जयेत् ॥ न चैकरससेवायां प्रसज्येत कदाचन" ॥ छन्दोगपरिशिष्टम् । "मुनिभिर्द्दिरशनमुक्तं विप्राणां मर्त्यवासिनां नित्यम् । अहनि च तथा तमस्विन्यां सार्द्धप्रहरयामान्तः" ॥ अहनि अचिरोदितास्तमितसूर्य्यतरदिनमात्रे तत्राप्यायुर्वेदीये विशेषः । "याममध्ये न भोक्तव्यं त्रियामन्तु न लङ्घयेत्' ॥ याममध्ये रसस्तिष्ठे त्रियामे तु रसक्षयः" ॥ प्रागुक्तदक्षवचनात् तत्रापि पञ्चमयामार्द्धो मुख्यकालः । महामौनं हुङ्कारादिरहितम् । तथा चात्रिः "मौनव्रतं महाकष्टं हुङ्कारेणैव नश्यति । तथा सति महान् दोषस्तस्मात्तु नियतश्चरेत्" ॥ प्राणादिपदेन वक्ष्यमाणप्राणापानसमानोदानव्यानानां क्रमेण तेषां ग्रहणम् । एष क्रमः पौराणिकत्वात् सर्वसाधारणः । विष्णुः । "न तृतीयमथाश्नीयादापद्यपि कदाचन" ॥ इति भगवद्गीतासु । "आयुः सत्त्वबलारोग्यसुखप्रीतिविवर्द्धनाः । रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥ कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः । आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ यातयामं गतरसं पूतिपर्य्युषितञ्च यत् । उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम्" ॥ महाभारते ।

"इन्दुव्रतसहस्रन्तु यश्चरेत् कायशोधनम्। पिबेद् यश्चापि गङ्गाम्भस्तस्य साम्यं न यात्यसौ"॥ गङ्गामधिकृत्य मत्स्यपुराणम्। "अवगाह्य च पीत्वा च पुनात्यासप्तमं कुलम्"। देवीपुराणम्। "ये चैव मृत्तिकास्तस्मात्तीर्थादाहृत्य भुञ्जते। ते सर्वपापविनिर्मुक्ताः प्रभवन्ति गतामयाः"॥ मनुः। "आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः। श्रियः प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते ह्युदङ्मुखः"॥ नियमेत्वेतम्। अनियमे तु नोदङ्मुखः। हारीतः। "नोदङ्मुखोऽश्नीयात्" इति निष्कामस्य तु प्राङ्मुखेनैव यथा देवलः "प्राङ्मुखोऽन्नानि भुञ्जीत शुचिपीठमधिष्ठितः। विशुद्धवदनप्रीतो भुञ्जीत न विदिङ्मुखः"॥ जीवन्मातृकस्य दक्षिणामुखत्वनिषेधमाह आपस्तम्बः। "दक्षिणामुखो न भुञ्जीत एवंविधभोजनमनायुष्यं मातुरुपदिशति"। केचित्तु। "क्षुरस्नानं गयाश्राद्धं तिलैस्तर्पणमेव च। न जीवत् पितृकः कुर्य्याद्दक्षिणामुखभोजनम्"॥ इत्याचाररत्नाकरधृताज्जीवत् पितृकस्यापि निषेध इत्याहुः। व्यासः। "पञ्चार्द्रो भोजनं कुर्य्यात् प्राङ्मुखो मौनमास्थितः। हस्तौ पादौ तथैवास्यमेषु पञ्चार्द्रता मता"॥ व्यासः। "अप्येकपङ्क्त्या नाश्नीयात् संवृतः स्वजनैरपि। को हि जानाति किं कस्य प्रच्छन्नं पातकं महत्॥ भस्मस्तम्भजलद्वारमार्गैः पङ्क्तिश्च भेदयेत्"॥ जलादिना पङ्क्तिभेदाकरणे तु शङ्खः। "एकपङ्क्त्युपविष्टानां विप्राणां सह भोजने। यद्येकोऽपि त्यजेत् पात्रं शेषमन्नं विवर्जयेत्॥ मोहात् भुञ्जीत यः पङ्क्त्यामुच्छिष्टसहभोजनम्। प्राजापत्यं चरेद्विप्रः चत्रः सान्तपनन्तथा"॥ सान्तपनं द्वादशसाध्यमन्नैकपुराणं देयम्। एतज्ज्ञानकृतः सकृदिति प्रायश्चित्तविवेकः। एतत् समानार्थमित्यभिधाय गोभिलः। "भुञ्जानेषु तु विप्रेषु यस्तु पात्रं

परित्यजेत् । भोजने विघ्नकर्त्तासौ ब्रह्महापि तथो-च्यते" ॥ आपस्तम्बः । दिवा पुनर्न भुञ्जीतान्यत्र फलमूलेभ्यः" । मनुः । "नातिप्रगे नातिसायं न सायं प्रातराशितः" । अतिप्रगेऽचिरोदितसूर्य्ये अतिसायं सूर्य्यास्तमितसमय एव प्रातराशितः दिनभोजनेनातितृप्तः न सायं न रात्रौ भुञ्जीतेत्यर्थः । आपस्तम्बः । "यस्तु भोजनशालायां भोक्तुकाम उपस्पृशेत् । आसनस्थो न चान्यत्र स विप्रः पङ्क्तिदूषकः ॥ भोजनशालायां भोक्तुकामः सन् आसनस्थो वान्यत्र स्थितो वा न चोपस्पृशेत्" ॥ बौधायनः । "उपलिप्ते समे स्थाने शुचौ श्लक्ष्णासनान्विते । चतुरस्रं त्रिकोणञ्च वर्त्तुलञ्चार्द्धचन्द्रकम् । कर्त्तव्यमानुपूर्व्येण ब्राह्मणादिषु मण्डलम्" ॥ इति । "अकृत्वा मण्डलं ये तु भुञ्जतेऽधमयोनयः । तेषान्तु यक्षरक्षांसि हरन्त्यन्नानि तद्बलात्" ॥ आपस्तम्बः । "भिन्नकांस्ये तु यो विप्रो यदि भुङ्क्ते तु कामतः । उपवासेन चैकेन पञ्चगव्येन शुद्ध्यति" ॥ तथा शूद्रादिभोजनेनापरिष्कृतपात्रेऽपि वृद्धमनुः । "ताम्रपात्रे न भुञ्जीत भिन्नकांस्ये मलाविले । पलाशपद्मपत्रेषु गृही भुक्त्वैन्दवं चरेत्" ॥ नव्यवर्द्धमानधृताग्निपुराणम् । "अर्कपत्रे तथा पृष्ठे आयसे ताम्रभाजने । करे कर्पटके चैव भुक्त्वा चान्द्रायणञ्चरेत्" ॥ पृष्ठे कदलिपत्रादिपृष्ठे । पैठीनसिः । "ताम्ररजतसुवर्णाश्मशङ्खशुक्तिस्फटिकानां भिन्नमभिन्नम्" इति न दोषः । अत्र पाषाणपात्रं भोजने विहितम् । "तैजसानां मणीनाञ्च सर्व्वस्याश्ममयस्य च । भस्मनाद्भिर्मृदा चैव शुद्धिरुक्ता मनीषिभिः" ॥ इति मनुना पाषाणपात्रस्य शुद्धिविधानाच्च । प्रचेताः "ताम्बूलाभ्यञ्जने चैव कांस्यपात्रे च भोजनम् । यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत्" ॥ अत्रिः "आसने पादमारोप्य यो भुङ्क्ते

ब्राह्मणः क्वचित्। मुखेन चान्नमश्नाति तुल्यं गोमांसभक्षणैः" ॥ मुखेन हस्तोत्तोलनं विना। गवादिवदित्यर्थः। आश्वमेधिके "आर्द्रपादस्तु भुञ्जीत प्राङ्मुखश्चासने शुचौ। पादाभ्यां धरणीं स्पृष्ट्वा पादेनैकेन वा पुनः" ॥ बौधायनः। "भोजनं हवनं दानमुपहारः परिग्रहः। बहिर्जानु न कार्य्याणि तद्वदाचमनं स्मृतम्" ॥ हारीतः। "मार्जनार्चनबलिकर्मभोजनानि दैवतीर्थेन कुर्य्यात्"। पराशरभाष्ये वृद्धमनुः। "न पिबेन्न च भुञ्जीत द्विजः सव्येन पाणिना। नैकहस्तेन च जलं शूद्रेणावर्जितं पिबेत्" ॥ मार्कण्डेयपुराणम्। "पादप्रसारणं कृत्वा न च वेष्टितमस्तकः"। मनुः "पूजयेदशनं नित्यं चाद्याच्चैवमकुत्सयन्। दृष्ट्वा हृष्येत् प्रसीदेच्च प्रणमेच्चैव सर्वदा ॥ अन्नं दृष्ट्वा प्रणम्यादौ प्राञ्जलिः प्रार्थयेत्ततः। अस्माकं नित्यमस्त्वेतदिति भक्त्याथ वन्दयेत्" ॥ विष्णुपुराणे। "नागः कूर्मश्च कृकरो देवदत्तो धनञ्जयः। बहिस्था वायवः पञ्च तेषां भूमौ प्रदीयते ॥ अदत्त्वा बाह्यवायुभ्यः प्राणादिभ्यो न होमयेत्" ॥ इति शिष्टपठितवचनान्नागादिभ्यो बलिदानमिति प्राचीनाचारः। तत्रान्नं देवेभ्यो दत्त्वैव भोक्तव्यं तथा च भगवद्गीतापि। "इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः। तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः" ॥ यज्ञैः संवर्द्धिता वो युष्मभ्यं भोगानन्नादीन् वृष्ट्यादिद्वारा दास्यन्ति अतो देवैर्दत्तान् अन्नादीन् तेभ्योऽदत्त्वा यो भुङ्क्ते स चौर एव। स्मृतिः "निवेद्य प्राशनात् पूर्वं देवपादोदकाहुतिः। होतव्या जठरे वह्नौ स्वेन पाणितलेन तु" ॥ तेन पादोदकेनापोशानं कृत्वा प्राणाहुतिर्नैवेद्येन कार्य्या। स्वदत्तनैवेद्यभक्षणन्तु पश्चादुपपादयिष्यते। ब्रह्मपुराणे। "आपोशानञ्च गृह्णीयात् सर्वतीर्थमयञ्च यत्। अमृतोपस्तरणमसीति वि-

ग्गोरन्नमयस्य च॥ अत्र चास्तरणार्थन्तु प्राश्यते योऽम्बुवं सकृत्। अमृतोपस्तरणमसि स्वाहेति स च उच्चरेत्” इति। सन्ध्यापद्धतौ लिखितवचनं प्रमाणयन्तोऽसौत्येतदनन्तरं स्वाहाकारं कुर्वन्ति। ब्रह्मपुराणे। “हस्तेन लङ्घयेन्नान्नं नोदकेन कदाचन। दम्भाद्यो लङ्घयेद् भुञ्जंस्तेनान्नं निहतं भवेत्॥ हतञ्चान्नमभक्ष्यत्वं तस्य याति दुरात्मनः। प्राणेभ्यस्त्वथ पञ्चभ्यः स्वाहा प्रणवसंयुताः॥ पञ्चाहुतीस्तु जुहुयात् प्रलयाग्निनिभेषु च”॥

प्राणाहुतिमुद्रामाह शौनकः। “तर्जनीमध्यमाङ्गुष्ठैर्लग्नैः प्राणाहुतिर्भवेत्। मध्यमानामिकाङ्गुष्ठैरपाने जुहुयात्ततः॥ कनिष्ठानामिकाङ्गुष्ठैर्व्याने च जुहुयाद्धविः। तर्जनीन्तु बहिष्कृत्वा उदाने जुहुयात्ततः॥ समाने सर्वहस्तेन समुदायाहुतिर्भवेत्”॥ स्मृत्यर्थसारे। “प्राणाहुतौ घृताभावे पश्चाद्भुञ्जीत नो घृतम्”। देवलः। “न भुञ्जीत घृतं नित्यं गृहस्थो भोजनद्वयम्। पवित्रमथ जुह्वञ्च सर्पिराहुरघापहम्”॥ काशीखण्डे “दर्भपाणिस्तु यो भुङ्क्ते तस्य दोषो न बाधते। केशकीटादिसम्भूतस्ततोऽश्नीयात् सदर्भकः॥ यावदेवान्नमश्नीयान्नक्रयात्तद्गुणागुणात्। अतो मौनेन यो भुङ्क्ते स भुङ्क्ते केवलामृतम्”॥ मनुः। “स्वाध्यायभोजने चैव दक्षिणं पाणिमुद्धरेत्”। उद्धरेद्वस्त्राद्बहिःकुर्य्यादित्यर्थः। बौधायनः। “आचम्य संवृते देशे उपविश्यान्नं संगृह्य सर्वाङ्गुलीभिरशब्दमश्नीयात्”। संगृह्य अन्नपात्रं सम्यक् स्पृष्ट्वेत्यर्थः। काशीखण्डम्। “प्रदद्याद्भुवः पतये भुवनपतये तथा। भूतानां पतये स्वाहेत्युक्त्वा भूमौ बलित्रयम्॥ आपोशानं विधानेन कृत्वाश्नीयात् सुधीर्द्विजः”॥ इति श्रवणादुभयं कर्त्तव्यम्। ब्रह्मपुराणं “तेजोऽसीति जपंस्त्वन्नं प्रणमेदस्तत्तञ्च यत्।

आपोशानञ्च गृह्णीयात् सर्वतीर्थमयञ्च यत् । अमृतोपस्तरणमसीति विष्णोरन्नमयस्य च" ॥ अन्नमयस्य विष्णोर्यदास्तरणमिति विशेषः । ततश्च । तेजोऽसीतिनमस्कृत्य भुञ्जीतेत्यर्थः । भविष्योत्तरे । "स्नातुस्तु वरुणस्तेजो जुह्वतोऽग्निः श्रियं हरेत् । भुञ्जानस्य यमस्त्वायुस्तस्मान्न व्याहरेत्त्रिषु" ॥ मौने विशेषमाह । आपस्तम्बः । तत्र मौनमुक्तम् । "त्रिविद्यवृद्धैर्मुनिभिरन्यैराश्रमिभिर्बहुश्रुतैर्दन्तैर्दन्तान् सन्धायान्तर्मुख एव यावद् यावदर्थं भाषेत न मन्त्रलोपो भवतीति विज्ञायते इति" मन्त्रलोपो मौनव्रतलोपः । ब्रह्मपुराणे "यस्तु पाणितले भुङ्क्ते यस्तु हुङ्कारसंयुतः । प्रसृताङ्गुलिभिर्यस्तु तस्य गोमांसवद्भवेत् ॥ करेण च पिबेत्तोयं यावन्मांसं न भक्षयेत् । मांसलिप्तकरे तोयं तुल्यं गोमांसभक्षणम्" ॥ अत्र मांसलिप्तकरेण जलपाननिषेधात् मांसलिप्तकरं प्रक्षाल्यैवापोशनं कर्त्तव्यं प्रत्यापोशाने तु हस्तप्रक्षालननिषेधात् मांसलिप्तकरं प्रक्षाल्य पुनरन्नलिप्तकरेण प्रत्यापोशानं कर्त्तव्यम् । षट्त्रिंशन्मतम् । "पिबतो यत् पतेत्तोयं भाजने मुखनिःसृतम् । अभक्ष्यं तद्भवेदन्नं भुक्त्वा चान्द्रायणञ्चरेत् । वामपार्श्वे स्थिते तोये यो भुङ्क्ते ज्ञानदुर्बलः ॥ ग्रासे ग्रासे मलं भुक्त्वा पानीयं रुधिरं पिबेत् । विद्यमाने तु हस्ते तु ब्राह्मणो ज्ञानदुर्बलः ॥ तोयं पिबति वक्त्रेण श्वाऽसौ जायेत नान्यथा । उद्धृत्य वामहस्तेन यत्तोयं पिबति द्विजः । सुरापानेन तुल्यं स्यात् मनुराह प्रजापतिः" । वामहस्तेन केवलवामहस्तेन । अतएव "पीतशेषन्तु यत्तोयं तत् पिबेन्न द्विजोत्तमः" । इति "पीतशेषं पिबेन्नैव" इति ब्रह्मपुराणात् अविशेषात् सर्वं निषिद्धम् । ब्रह्मपुराणे । तिलकल्कं जलं क्षीरं दधि क्षौद्रं घृतानि च । न त्यजेदर्द्धजग्धानि शक्तुं शाकं कदाचन" ॥ महाभारते । "पानीयं पायसं सर्पि-

दधिक्षीरघृतान्यपि । निरश्यं शेषमेतेषां न प्रदेयन्तु कस्य-चित्"॥ एतन्न त्याज्यम् अशक्तौ कस्यचिन्न देयमित्यर्थः । निरश्यं निःशेषमशनीयमित्यर्थः । तथा "अन्नं प्रशस्तं पथ्यञ्च प्रोक्षितं प्रोक्षणोदकैः" । इति प्रागुक्तविष्णुपुराणादुक्तेतरभक्षणदोष-माह मनुः "आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति" । अन्नदोषस्त्रिविधः दृष्टद्वारकः अदृष्टद्वारकः दृष्टादृष्टद्वारकः । दृष्टद्वारक आयुर्वेदोक्तः । अदृष्टद्वारकः स्मृत्युक्तः । उभयोक्तस्तु वालवत्सा-विवत्सादुग्धादिदोषो दृष्टादृष्टद्वारकः । अतएव मनु-नैवोक्तम् । "स्वाध्याये चैव युक्तः स्यात् नित्यमात्महितेषु च" । इति युक्तः उद्युक्तः । हारीतः । "पृथक् पानं पुनर्दानमामिषं पायसानि च । दन्तच्छेदनमुष्णञ्च सप्त सक्तुषु वर्जयेत्" ॥ आयुर्वेदोक्तद्रव्य गुणा यथा । "व्याधिमिन्द्रियदौर्बल्यं मरण-ञ्चाधिगच्छति । विरुद्धरसवीर्य्याणि भुञ्जानो नात्मवान् नरः ॥ शुष्कमांसं स्त्रियो वृद्धा वालार्कस्तरुणं दधि । प्रभाते मैथुनं निद्रा सद्यः प्राणहराणि षट्" ॥ तरुणं नूतनं वालो विवस्वान् दधि नूतनञ्चेत्युक्तेः । "रसौ विरुद्धौ स्वाद्वम्लौ कटूष्णौ रस-पाकतः । अम्लतिक्तौ कषायाम्लौ रसवीर्य्यविपाकतः ॥ रक्षेदन्नं विषाग्नित्यं तत् परीक्षोच्यते यथा । म्रियन्ते मक्षिकाः स्पर्शादन्नं पर्य्युषितोपमम्" ॥

अथ ऋतुगुणाः । "मासैर्द्विसंख्यैर्मार्गाद्यैः क्रमात् षड्तवः स्मृताः । हेमन्ते कुपिताद्वायोः स्वाद्वम्ललवणान्रसान् ॥ गोधूम-पिष्टमांसेक्षुक्षीरोत्थविकृतिर्भजेत् । नवमन्नं रसान् तैलं शौचे तप्तोदकं नरः ॥ शय्यार्ककिरणान् स्वेदं पादत्राणञ्च सर्वदा । उष्णस्वभावैर्लघुभिः प्रावृतः शयनं भजेत् ॥ अयमेव विधिः कार्य्यः शिशिरेऽपि विशेषतः । वसन्ते कुपितः श्लेष्मा ह्यग्नि-मान्द्यं करोत्यतः ॥ तीक्ष्णं वमननस्यादि कवलग्रहमञ्जनम् ।

व्यायामोद्वर्त्तनं धूमं शौचे तप्तोदकं भजेत्॥ पुराणयवगोधूमक्षौद्रजाङ्गलमांसभुक्। गुरूष्णस्निग्धमधुरं दिवास्वप्नञ्च वर्जयेत्॥ स्वादुशीतं द्रवं स्निग्धमनुपानं सशर्करम्। घृतं पयः सशाल्यन्नं भजन् ग्रीष्मे न सीदति॥ मध्याह्ने शीतले स्वप्यात् निशि वातहिमाश्रिते। लवणाम्लकटूष्णानि व्यायामञ्चात्र वर्जयेत्॥ वर्षास्वग्निवले क्षीणे कुप्यन्ते पवनादयः। अग्नेः संवर्द्धकं द्रव्यं जीर्णधान्यं रसान् लघु॥ जाङ्गलं पिशितं मुद्गान् दिव्यं कौपं जलं शुचि। हृद्याम्ललवणं स्नेहं सशुष्कं क्षौद्रमेव च॥ नदीजलौदनक्वाथःस्वप्नायासातपांस्त्यजेत्। शरदि कुपिते पित्ते विरेकं रक्तमोक्षणम्॥ स्वादुतिक्तकषायेक्षुशालिमुद्गसरोजलम्। तुषारक्षारसौहित्यदधितैलरसातपान्॥ अम्लतीक्ष्णदिवास्वप्न प्राचीवातान् विवर्जयेत्। नित्यं सर्वरसास्वादः स्वस्वाधिक्यमृतावृतौ॥ ऋतूनां शेषसप्ताहे सेवितव्यः पराक्रमः। तत्र नित्यं प्रयुञ्जीत स्वास्थ्यं येन प्रवर्त्तते॥ अजातानां विकाराणामनुत्पत्तिकरञ्च यत्। व्यायामादपतर्पणादभिभवाङ्गङ्गात् क्षयाज्जागरात्॥ वेगानाञ्च विधारणादतिशुचः शैत्यादतित्रासतः। रूक्षक्षोभकषायतिक्तकटुकैरेभिः प्रकोपं व्रजेद्वायुर्वारिधरागमे परिणते चान्नेऽपराह्णेऽपि च॥ कट्वम्लोष्णविदाहितीक्ष्णलवणक्रोधोपवासातपस्त्रीसम्पर्कतिलातसीदधिसुरासूक्तारनालादिभिः। भुक्ते जीर्यति भोजने च शरदि ग्रीष्मे सति प्राणिनाम्। मध्याह्ने च तथार्द्धरात्रसमये पित्तप्रकोपं व्रजेत्। गुरुमधुररसातिस्निग्धदुग्धेक्षुभक्ष्यद्रवदधिदिननिद्रासूपसर्पिःप्रपूरैः। तुहिनपतनकाले श्लेष्मणः संप्रकोपः। प्रभवति दिवसादौ भुक्तमात्रे वसन्ते। आध्मानस्तम्भरौक्ष्यं स्फुटनविमथनक्षोभकम्पप्रभेदाः। कण्ठध्वंसावसादौ श्रमविलपनभ्रंशशूलप्रभेदाः। पारुष्यं कर्णनादो विषय-

परिणतिभ्रंशहृष्टिप्रमेहो निष्यन्दोद्दहनानि ग्लपनमशयनं ताड़नं पीड़नञ्च। नामोन्नामौ विषादभ्रमपरिषदनं जृम्भणं रोमहर्षौ विक्षेपोत्क्षेपशोषग्रहणशुषिरता वेष्टनं वेदनञ्च। वर्णः श्यामोऽरुणो वा दृड़पि च महतो श्चापरिस्नेषशङ्का। विद्यात् कर्माण्यमूनि प्रकुपितमरुतः स्यात् कषायो रसश्च। विस्फोटाम्लकधूमकाः प्रलपनं स्वेदस्रुतिर्मूर्च्छनम्। दौर्गन्ध्यं दरणं मदोऽभिसरणं पाकोऽरतिस्तृड्भ्रमौ। उष्मा हृप्तितमः प्रवेशदहनकटूम्लतिक्तारसा वर्णः पाण्डुविवर्जितः क्वथितता कर्माणि पित्तस्य वै। तृप्तिस्तन्द्रा गुरुतास्तैमित्यं कठिनता मलाधिक्यं स्नेहापस्युपलेपाः शैत्यं कण्डुः प्रसेकश्चिरकर्तृत्वं शोथो निद्राधिक्यं रसौ कटुस्वादू वर्णः श्वेतो श्चलसता कर्माणि कफस्य जानीयात्। द्विदोषलिङ्गः संसर्गः सन्निपातस्त्रि-लिङ्गकः। पक्वामयकटीसक्थिश्रोत्रास्थिस्पर्शनेन्द्रियम्। स्थानं वा तस्य तत्रापि पक्वाधानं विशेषतः। नाभिरामाशयः स्वेदा नासिका रुधिरं रसः॥ दृक्स्पर्शनञ्च पित्तस्य स्थानं नाभि-र्विशेषतः। रूपालोचनकं दृक्स्थं पक्वामाशयमध्यगम्॥ पच-त्यन्नं विभजते रसकिट्टावतोऽनलः। उरः कण्ठशिरः क्लेशः पर्वाण्यामाशयो रसः। मेदो घ्राणञ्च जिह्वा च कफस्थानमूरः परम्॥ स्वस्थानस्थो बली दोषः प्राक् तं स्वस्यौषधिर्जयेत्। उष्मणोऽल्पबलत्वेन धातुमान्यमपाचितम्॥ दुष्टमामाशयगतं रसमामं प्रचक्षते। आमेन तेन संसृष्टा दोषो दृष्याश्च दूषिताः॥ सामा इत्युपदिश्यन्ते ये च रोगास्तदुद्भवाः। रूक्षः शीतो लघुः सूक्ष्मश्चलोऽथ विषमोऽनिलः॥ सस्नेहमुष्णस्तीक्ष्णञ्च पित्तमम्लं द्रवं कटु। गुरुः शीतमृदुस्निग्धमधुरस्थैर्य्यकृत् कफः॥ विपरीतगुणैर्द्रव्यैः सर्वदोषः प्रशाम्यति। क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत्॥ पूर्वस्यां शान्तरोगार्थं न

क्रियासङ्करोहितः। गुणालाभेऽपि कर्त्तव्या विश्रामान्तरिता क्रिया॥ अभ्यस्यमानाः क्रमशः प्रयोगा जयन्ति रोगान् बलिनः स्थिरांश्च"॥

अथ षड्रसगुणाः। मधुरः प्रीणनो वल्यो वृंहणोऽनिलपित्तहा। रसायनो गुरुः स्निग्धश्चक्षुष्यः शीतलश्च सः॥ आयुःकृद् व्रणहा रुच्यः कण्ठोदावर्त्तनाशकः। अम्लो रुचिकरो हृद्यः प्रीणनो वह्निवर्द्धनः॥ वातहा रसनोद्वेगी स्निग्धोष्णो रक्तमांसदः। क्लेदनस्तर्पणः पक्ता लघुश्चापि कटुश्च यः॥ लवणः क्लेदनस्तीक्ष्णः पाचनो दीपनो रसः। स्निग्धो रुचिकरः स्यन्दी दृष्टिशुक्रकरोऽगुरुः॥ कटुर्जिह्वास्य नाशाक्षि रेचनो रुचिराङ्गकृत्। उष्णस्तीक्ष्णो लघुः कण्डूक्रमिशुक्रकफापहः॥ लघुः शोषी पङ्क्तिकरः श्लेष्मा कर्षणकः पटुः। तिक्तः पित्तकफच्छेदी विषकुष्ठज्वरापहः॥ दीपनः पाचनो रुचः कण्डूः क्रमिहरो लघुः। कषायः शोषकस्तम्भी व्रणग्लानार्त्तिनाशनः॥ कफशोणितपित्तघ्नो रुचः शीतो लघुस्तथा। शीतलः पित्तहा बल्यः कफवातहरो गुरुः॥ उष्णं पित्तकरो वीर्य्यो वातश्लेष्महरो लघुः। शीतं वीर्य्येण यद्द्रव्यं मधुरं रसपाकयोः। तयोरम्लं कटुष्णञ्च यच्चोष्णं कटुकं तयोः। कटुतिक्तकषायाणां विपाकः प्रायसः कटुः। अम्लोष्णं पच्यते स्वादु मधुरं लवणं तथा। कटुर्विपाके शुक्रघ्नो बद्धविड्वातलो लघुः। स्वादुर्गुरुः सृष्टमलो विपाके कफशुक्रलः। पाकेऽम्लः सृष्टविण्मूत्रपित्तकृच्छुक्रकृल्लघुः"॥ गारुड़े। "कटुतिक्तकषायाश्च कोपयन्ति समीरणम्। कट्वम्ललवणाः पित्तं स्वाद्वम्ललवणाः कफम्। अतएव विपर्य्यस्ताः समायैषां प्रयोजिताः। चक्षुष्यो मधुरोऽश्रेयो रसो धातुविवर्द्धनः। स्थौल्यालस्यविषघ्नश्च कटूद्दीपनपाचनः"।

धातुप्रकृतिमाह । "कृशो रूक्षोऽल्पकेशश्चलचित्तोऽनव-स्थितः । बहुवाक्यो मतः स्वप्ने वातप्रकृतिको नरः । अकाल-पलितो गौरः प्रस्वेदी कोपनो बुधः । स्वप्ने दीप्तिमतः प्रेक्षी पित्तप्रकृतिरुच्यते । स्थिरचित्तः सुबद्धाङ्गः स्वप्नलः स्निग्ध-मूर्द्धजः । स्वप्ने जलाशयालोकी श्लेष्मप्रकृतिको नरः । संमिश्र-लक्षणैर्ज्ञेया द्वित्रिदोषात्मजा नराः । दोषान्यतरसद्भावेऽप्यधि-कात् प्रकृतिः स्मृता । पानाहारादयो यस्य विरुद्धाः प्रकृते-रपि । सुखित्वायोपकल्पन्ते तत्सात्म्यमिति कथ्यते । मन्द-स्तीक्ष्णोऽतिविषमः समश्चेति चतुर्विधः । कफपित्तानिलाधि-क्यात् तत्सात्म्याज्जठरोऽनलः । समस्य पालनं कार्य्यं विषमे वातनिग्रहः । तीक्ष्णे पित्तप्रतीकारो मन्दे श्लेष्मविशोधनम् । प्रभवः सर्वरोगाणाम् अजीर्णञ्चाग्निनाशनम् । दिवा स्वप्नं प्रकुर्वीत सर्वाजीर्णप्रणाशनम्" ।

अथ धान्यादिगुणाः । "शालयो मधुराः शीता लघुपाका बलप्रदाः । पित्तघ्नाल्पानिलकराः स्निग्धा बद्धाल्पवर्चसः । मधुरश्चाम्लपाकश्च वार्षिकं पित्तकृद् गुरु । धान्यं शरद्ग्रीष्म-भवं रूक्षञ्च पित्तकृद् गुरु । श्यामाकः शोषणो रूक्षो वातलः श्लेष्मपित्तहा । तथा च कङ्गुनीवाराः कोरदूषाः प्रकीर्त्तिताः" । गारुड़े । "बृंहणाः सामिषा भक्षाः पैष्टिका गुरवः स्मृताः । तैलकृताश्च दृष्टिघ्नास्तोयसिन्नाश्च दुर्जराः । पायसः कफ-कृत्तुल्यः कृशरो वातनाशनः । अत्युष्णा मण्डकाः पथ्याः शीतला गुरवो मताः । मुद्गः कषायो मधुरः कफपित्तामजि-ल्लघुः । ग्राही शीतः पटुः पाके चक्षुष्यो नातिवातलः । माषो बहुमलो वृष्यः स्निग्धोष्णो मधुरो गुरुः । वातनुत्पित्तलो बल्यो मेदमांसकफप्रदः" । गारुड़े । "मसूरो मधुरः शीतः संग्राही कफपित्तनुत् । वर्त्तुला वातला रक्तपित्तघ्ना भिन्नवर्चसः ।

तिलः कषायो मधुरस्तिक्तः पित्तहरो गुरुः । बल्यो मेधाग्नि-दद्रुघ्नो ग्राही केश्योऽनिलापहः । स्निग्धो बल्योऽल्पमूत्रोष्णो व्रणलेपहितश्च सः । समाधुर्य्यात् तथोष्णाच्च स्नेहाच्चानिल-नाशनः । कषाय भावान्माधुर्य्यात्तिक्तत्वाच्चापि पित्तहा । औष्ण्यात् कषायभावाच्च तिक्तत्वाच्च कफे हितः । शूकधान्यं शमीधान्यं लघु संवत्सरोषितम्" ।

अथ शाकगुणाः । "पटोलं कफपित्तासृक्ज्वरदुष्टव्रणा-पहम् । विसर्पपाजलव्याधि त्रिदोषाणां विनाशनम् ॥ पटोल-पत्रं पित्तघ्नं नाड़ी तस्य कफापहा । फलं तस्य त्रिदोषघ्नं मूलं तस्य विरेचकम् ॥ वास्तूकः शुक्रलो हृद्यो दोषनुत्पाकतो लघुः । सच्चारः क्रमिहा मेध्यो रुच्योऽग्निबलवर्द्धनः ॥ वयः-संस्थापनी ब्राह्मी मेधायुः स्मृतिवर्द्धिनी । निम्बः पित्तकफ-च्छर्दिव्रणहृल्लासकुष्ठनुत् ॥ मूलकं गुरुविष्टम्भितीक्ष्णमाम-त्रिदोषकृत् । तदेव घृतपक्वञ्चेत् पित्तनुत् कफवातनुत् ॥ नालीशाकञ्च पित्तघ्नं तिक्तं मधुरशीतलम् । पिच्छिलं गुरु-र्विष्टम्भिकफवातप्रकोपनम् ॥ तच्छुष्कपर्णं जलयुक् पित्तश्लेष्म-कफापहम् । पालङ्की कफपित्तघ्नी रुच्या वातविवर्द्धिनी ॥ तण्डुलीयमसृक्पित्तविषनुत् स्वादुपाकतः । कलायशाकं रुच्यन्तु पित्तश्लेष्महरं गुरु ॥ कफपित्तहरी ब्राह्मी मेधा स्वरकरी मता । हिलमोची सदा तिक्ता कुष्ठघ्नी कफपित्तजित् ॥ पञ्चा-ङ्गुलः सरस्तीक्ष्ण आमवातापहो लघुः ॥ शाकेषु सर्वे निवसन्ति रोगारोगो हि देहस्य विनाशहेतुः । तस्माद् बुधैः शाकविव-र्जनञ्च कार्य्यं तथाम्लेषु त एव दोषाः ॥ स्विन्नं निष्पीड़ित-रसं स्नेहाक्तञ्च प्रशस्यते । सर्वं शाकमचाक्षुष्यमजाङ्ग्यममेधु-नम् । ऋते पटोलवास्तूककाकमाची पुनर्णवाः ॥ वार्त्ताकुरेषा गुणसप्तयुक्ता वह्निप्रदा मारुतनाशिनी च । शुक्रप्रदा शोणित-

वर्द्धिनौ च हृल्लासकाशारुचिनाशिनौ च ॥ सा बाला कफ-पित्तघ्ना पक्वा सूक्ष्मा च पित्तला । सदा फला त्रिदोषघ्नी रक्तपित्तप्रसादिनी ॥ कुष्माण्डकं पित्तहरं बालं मेध्यं कफापहम् । पक्वं लघूष्णं सक्षारं दीपनं वस्तिशोधनम् ॥ सर्वदोषहरं हृद्यं पथ्यं चेतो विकारिणाम् । कुष्माण्डनालिका गुर्वी शर्करा कफरोगनुत् ॥ सक्षारा मधुरा रुच्या रुक्षा वातकफापहा । अलावुः शीतला गुर्वी मधुरा *पित्तनाशिनी ॥ वातश्लेष्मकरी रुक्षा दुर्जरा मलभेदिनी । अलावु नालिका गुर्वी शर्करा कफरोगनुत् ॥ कारवेल्लः स कर्कटो रोचनः कफपित्तनुत् । भिण्डाकं कफपित्तघ्नं गुरुविष्टम्भि वातलम् ॥ त्रपुषं मूत्रलं रुच्यं बालं पित्तहरं स्मृतम् । शूरणो दीपनो रुच्यः कफघ्नो विषदो लघुः ॥ विशेषादर्शसां पथ्यो भूकन्दस्त्वतिदोषलः । मानकं स्वादु पित्तघ्नं गुरुशोथहरं कटु ॥ कच्वी सदा कटुः सामवातकृत् गुरुपित्तला । कदल्या बलकृन्मूलं वातपित्तहरं गुरु ॥ कुमुदोत्पलपद्मानां कन्दा मारुतनाशनाः । कषायाः पित्तशमना विपाके मधुरा इमे ॥ मांसं वातहरं वृष्यं वृंहणं बलवर्द्धनम् । प्रीणनं गुरु हृद्यञ्च मधुरं रसपाकयोः ॥ मत्स्यास्तु वृंहणाः सर्वे गुरवः शुक्रवर्द्धनाः । बल्या स्निग्धोष्णमधुराः कफपित्तकरा मताः ॥ अध्वव्यवायव्यायामदीप्ताग्नीनाञ्च पूजिताः । वातोद्भवा न बाधन्ते रोगा मत्स्याशिनः सदा । क्षुद्रमत्स्यास्तु लघवो ग्राहिणो ग्रहणीहिताः" ॥

अथ लवणगुणाः । "सैन्धवं दीपनं हृद्यं चाक्षुष्यं रोचनं लघु । स्निग्धं वृष्यं त्रिदोषघ्नं मधुरं लवणोत्तमम् ॥ सामुद्रं मधुरं पाके नात्युष्णमविदाहि च । भेदनं स्निग्धमीषच्च शूलघ्नं नातिपित्तलम् ॥ लोकप्रचारिलवणं पाचनं दीपनं परम् । कफवातकृमिहरं मेहनं पित्तकोपनम् ॥ पांशुजं तिक्तमुष्णञ्च

श्लेष्मपित्तकफापहम्॥ हिङ्गुतीक्ष्णं कटुरसं शूलाजीर्णविबन्ध-नुत्। लवणं पाचनं स्निग्धं दीपनं कफवातजित्॥ जीरकं रुचिकृत् हृद्यं गन्धाढ्यं कफवातजित्। पाके तु कटुतीक्ष्णोष्णं लघुपित्ताग्निवर्द्धनम्॥ धन्याकं मधुरं हृद्यं रोचनं चक्षुषो-र्हितम्। कषायतिक्तकटुकं स्वादुशीतसुगन्धि च। काशच्छर्दि-तृषा मोहनाशनं वह्निदीपनम्॥ कफानिलहरं स्वर्य्यं विबद्धा-नाह शूलनुत्। आर्द्रकं रोचनं हृद्यं कटूष्णं वृष्यमेव च॥ कफा-निलहरं स्वर्य्यं विबद्धानाह शूलनुत्। शुण्ठी तु कफवातघ्नी सस्नेहा लघुदीपनी॥ विपाके मधुरा वृष्या कटुका दीपनीपरा। हरिद्रा कफपित्तघ्नी कण्डूदुष्टव्रणापहा। पाण्डुशोथापचित् प्लीहत्वग्दोषविषमेहनुत्। पिप्पली मधुरा वृष्या कटुका दीपनीपरा। स्निग्धोष्णा मारुतश्लेष्मकाशश्वासांश्च नाशयेत्। भेदनं पिप्पलीमूलं दीपनं कृमिनाशनम्॥ चविका गज-पिप्पल्यौ पिप्पलीगुणवत् स्मृता। मरीचं लघु तीक्ष्णोष्णं रुक्षं रोचनदीनम्॥ रसे पाके च कटुकं कफघ्नं पित्तकोपनम्। स्वर्य्यं शुक्रहरं काशपीनसश्लेष्मवातजित्॥ यमानी कोष्ठ-शूलघ्नी हृद्या पित्ताग्निकारिणी। रोचनी कफवातघ्नी पाचनी कृमिनाशिनी॥ किञ्चिद्धीनगुणा तस्या यमानी क्षेत्र-सम्भवा। सर्षपः श्लेष्मपित्तघ्नः सुतीक्ष्णो रक्तपित्तकृत्॥ रसे पाके कटुस्निग्धकृमिकुष्ठापहा मतः। गुडूच्युष्णग्राहिवल्या त्रिदोषघ्नी रसायनी॥ दीपनी ज्वरहृट्छर्दिकामला वात-रक्तनुत्। वासकः काशवैस्वर्य्यरक्तपित्तकफापहः"॥

अथ फलगुणाः। "दाड़िमं हृद्यमम्लोष्णं वातघ्नं ग्राहि-दीपनम्। वृष्यं कषायमधुरं कफपित्तविरोधि च॥ कर्कन्धु-कोलवदरमम्लं वातकफापहम्। पक्वं पित्तानिलहरं स्निग्धास्तु मधुरं रसम्। तच्छुष्कं कफवातघ्नं न च पित्ते विरुद्ध्यति॥

शुष्कचूर्णन्तु हृद्रुद्दिकफघ्नं दीपनं लघु। पुराणं हृट्प्रशमनं श्रमघ्नं वह्निदीपनम्॥ आम्रं बालं रक्तपित्तकरं मध्यन्तु पित्तलम्। पक्वं वर्णकरं रुच्यं मांसशुक्रबलप्रदम्॥ पित्त-विरोधिवातघ्नं हृद्यं गुर्वग्निदीपनम्। आम्रपेषी कषायोष्णा भेदिनी कफपित्तजित्॥ कण्टाफलं सुमधुरं कषायं स्निग्ध-शीतलम्। दुर्जरं पित्तशमनं श्लेष्मशुक्रविवर्द्धनम्॥ कदलं मधुरं हृद्यं कषायं नातिशीतलम्। रक्तपित्तहरं रुच्यं वृष्यं श्लेष्मकरं गुरु॥ मातुलुङ्गफलं हृद्यमम्लं नष्टाग्निदीपनम्। कासश्वासारुचिहरं तृष्णाघ्नं कण्ठशोधनम्॥ जम्बीरं मधुरं किञ्चित् अत्यम्लं पित्तकृद् गुरु। दुर्गन्धिदुर्जरं वह्निकफवात-विवर्द्धनम्॥ तृष्णाशूलकफोत्क्लेशच्छर्दिश्वासनिवारणम्। तिन्तिड़ीफलकं बालं वातनुत् कफपित्तकृत्॥ पक्वं तत्-दीपनं रुच्यं नात्युष्णं कफवातनुत्। आम्रातं तर्पणं रम्यं मधुरं बृंहणं गुरु॥ खेहलं श्लेष्मलं शीतं स्निग्धं विष्टम्भि जीर्य्यति। बिल्वं बालकषायोष्णं पाचनं वह्निदीपनम्॥ संग्राहि तिक्तकटुकं तीक्ष्णं वातकफापहम्। पक्वं सुगन्धिमधुरं दुर्जरं ग्राहि दोषलम्॥ फलेषु परिपक्वेषु यद्गुणं समुदाहृतम्। बिल्वादन्यत्र विज्ञेयं बिल्वादामं गुणोत्तरम्॥ कफवाताम-शूलघ्नी ग्राहिणी बिल्वपेषिका। नारिकेलं गुरुस्निग्धं पित्तघ्नं स्वादुशीतलम्॥ बलमांसप्रदं हृद्यं बृंहणं वस्तिशोधनम्। विशेषतः कोमलनारिकेलं निहन्ति पित्तज्वरपित्तदोषान्। तृट्छर्दिदाहामयमाशु हन्यात् सपित्तरक्तप्रभवान् विकारान्॥ नारिकेलोदकं पक्वं गुरुविष्टम्भि पिच्छलम्। वातघ्नी लवणैः पथ्या पित्तघ्नी घृतसंयुता॥ नागरेण कफं हन्ति सर्वरोगान् गुड़ान्वितान्। शिवा पञ्चरसायुष्या चक्षुष्या लवलीसमा॥ मेध्योष्णा दीपनी दोषशोथकुष्ठव्रणापहा। तद्वद्धात्री विशेषेण वृष्या शीतरवीर्य्यतः॥

अथ तोयगुणाः । "अन्नेनापि विना जन्तुः प्राणान् धारयते चिरम् । तोयाभावे पिपासार्त्तः क्षणात् प्राणैर्विमुच्यते ॥ अजीर्णे भेषजं वारि जीर्णे वारि बलप्रदम् । आयुराहारकाले च भुक्तान्नोपरि नो निशि ॥ तोयं सप्तगुणं प्रोक्तं स्वच्छं लघु च शीतलम् । सुगन्धिसंसृष्टरसं हृद्यं तृष्णाप्रणाशनम् ॥ पिच्छिलं कृमिसंक्लिन्नं पर्णशैवालकर्दमैः । विवर्णं विरसं सान्द्रं दुर्गन्धं न हितं जलम् ॥ शीताम्बु मदमूर्च्छघ्नं पित्तच्छर्दिज्वरापहम् । श्रमभ्रमोष्णदाहतृट्मदात्ययविषापहम् ॥ उष्णोदकं सदा पथ्यं काशश्वासज्वरार्त्तिहम् । कफवातामदोषघ्नं पित्तलं वस्तिशोधनम् ॥ छिनत्ति श्लेष्मसंघात मारुतञ्चापकर्षति । अजीर्णं जरयत्याशु पीतमुष्णोदकं निशि ॥ क्वथ्यमानन्तु यत्तोयं निष्फेनं निर्मलं लघु । भवत्यर्द्धावशिष्टन्तु तदुष्णोदकमिष्यते ॥ तत्पादहीनं वातघ्नमर्द्धहीनन्तु पित्तनुत् । कफघ्नं पादशेषस्थं पानीयं लघुदीपनम् ॥ धारापातेन विष्टम्भि दुर्जरं पवनापहम् । शृतं शीतं त्रिदोषघ्नं वाष्पान्तर्भाविशीतलम् ॥ दिवा शृतन्तु यत्तोयं रात्रौ तद्गुरुतां व्रजेत् । मूर्च्छा पित्तोष्णदाहेषु विषे रक्ते मदात्यये ॥ श्रमक्लमपरीतेषु भ्रमके वमथौ तथा । ऊर्द्ध्वगे रक्तपित्ते च शीतमम्भः प्रशस्यते ॥ पार्श्वशूले प्रतिश्याये वातरोगे गलग्रहे । आध्मानेस्तिमिते कोष्ठे सद्यः शुद्धे नवज्वरे ॥ हिक्कायां स्नेहपित्ते च शीताम्बु परिवर्जयेत् । अरोचके प्रतिश्याये प्रमेहे श्वयथौ क्षये ॥ मन्दाग्नावुदरे कोष्ठे ज्वरे नेत्रामये तथा । व्रणे च मधुमेहे च पानीयमल्पमाचरेत् ॥ नारिकेलोदकं वृष्यं स्वादु शीतं हिमं गुरु । तृष्णापित्तानिलहरं दीपनं वस्तिशोधनम् ॥ विशेषादग्निवर्णस्य नारिकेलस्य यज्जलम् । तत्पित्तप्रभवान् रोगान् सर्वानेवापकर्षति ॥ बालस्य नारिकेलस्य जलं प्रायो विरेचनम् । नारिकेलाम्बु तरुणं

तृष्णाघ्नं पित्तनाशनम् ॥ नारिकेलजलं जीर्णं विष्टम्भि गुरु पिच्छिलम्” ॥

अथ क्षीरगुणाः । “क्षीरं स्वादुरसं स्निग्धमोजस्यं धातुवर्द्धनम् । वातपित्तहरं वृष्यं श्लेष्मलं गुरु शीतलम् ॥ गोक्षीरं जीवनं बल्यं रक्तपित्तानिलापहम् । आयुष्यं पुंस्त्वकृत् पथ्यं हृद्यं मेध्यं रसायनम् ॥ माहिषं स्निग्धमत्यर्थं मधुरं शीतलं गुरु । निद्राकराभिवृष्यञ्च स्वादु वह्निविनाशनम् ॥ शृतोष्णं कफवातघ्नं शृतं शीतन्तु पित्तनुत् । आममामकरं प्रोक्तं कवोष्णमशृतं पयः ॥ शर्कराक्षौद्रसर्पिर्भिर्युक्तं वृष्यं बलप्रदम् । नष्टदुग्धं वातहरं दुर्जरं रुच्यमेव च ॥ क्षीरसन्तानिका स्निग्धा वृष्या पित्तानिलापहा । वर्ज्यं सलवणं क्षीरं यच्च विश्रथितं भवेत् ॥ विवत्साबालवत्सानां पयो दोषलमीरितम्” ॥

अथ दधिगुणाः । “गव्यं दधि तु वातघ्नं माङ्गल्यं शुचिरोचनम् । स्निग्धं विपाके मधुरं दीपनं बलवर्द्धनम् ॥ माहिष्यं दध्यतिस्निग्धं रक्तपित्तप्रसाधनम् । विपाके मधुरं वृष्यं कफवृद्धिकरं गुरु ॥ दधि यत् स्वादु तन्मेदः कफाभिष्यन्दिकारणम् । दध्यम्लमतियद्रक्तदूषणं कफपित्तनुत् ॥ विदाहिसृष्टविण्मूत्रं मन्दं जातं त्रिदोषकृत् । पीनासे चातिसारे च शीतके विषमज्वरे ॥ अरुचौ मूत्रकृच्छ्रे च कार्श्ये च दधि शस्यते । शरद्ग्रीष्मवसन्तेषु प्रायशो दधि गर्हितम् ॥ हेमन्ते शिशिरे चैव वर्षासु दधि शस्यते । रक्तपित्तविकारेषु कफोत्थेषु न तद्धितम् ॥ न नक्तं दधि भुञ्जीत न चाप्यघृतशर्करम् । यथा तथा शृतात् क्षीरात् जातं तत्र गुणोत्तरम् । वातपित्तहरं वृष्यं धात्वग्निबलवर्द्धनम्” ॥

अथ तक्रगुणाः । “तक्रं लघु कषायाम्लं दीपनं कफवातजित् । शोथोदरारुचिप्लीहरोगार्त्तौ ग्रहणी गदः ॥ मूत्रग्रहं

घृतस्यापि ज्वरपार्श्वी भयात् जयेत्। ससारं निर्जलं घोलं तक्रं पादजलान्वितम्॥ अर्द्धोदकमुदश्वित् स्यात् मथितं जलवर्जितम्। पीनसश्वासकासादौ सिद्धमेव तदिष्यते॥ घोलं पित्तानिलहरं तक्रं दोषत्रयापहम्। उदश्वित् श्लेष्मलश्चैव मथितं कफपित्तनुत्॥ तक्रमामं कफं कोष्ठे हन्ति कण्ठगदानपि। न तु तक्रं कफे दद्यात् नोष्मकाले न दुर्बले॥ नो मूर्च्छाभ्रमदाहेषु न रोगे रक्तपैत्तिके। शीतकालेऽग्निमान्द्ये च कफोत्थेष्वामयेषु च॥ मार्गावरोधे दुष्टे च वायौ तक्रं प्रशस्यते। वातेऽम्लं सैन्धवोपेतं पित्ते स्वादु सशर्करम्। पिबेत्तक्रं कफे चापि क्षारत्रिकटुसंयुतम्"॥

अथ घृतगुणाः। "घृतं सहस्रवीर्य्यं स्यात् बुद्धिवीर्य्यसहस्रकृत्। सर्वस्नेहोत्तरं शीतं मधुरं रसपाकयोः॥ वातपित्तरसोन्मादशोषालक्ष्मीज्वरापहम्। स्मृतिबुद्ध्यग्निशुक्रौजः कफमेदोविवर्द्धनम्॥ गव्यं घृतं घृतश्रेष्ठं चाक्षुष्यं बलवर्द्धनम्। विपाके मधुरं शीतं वातपित्तविषापहम्॥ माहिषस्य घृतं स्वादु मधुरं शीतलं गुरु। वातपित्तप्रशमनं कफकृत् रक्तपित्तनुत्"॥

अथेक्ष्वादिगुणाः। "इक्षवो रक्तपित्तघ्ना बल्या वृष्याः कफप्रदाः। विपाके मधुराः स्निग्धा गुरवो मूत्रलाः पराः॥ गुडो वृष्यो गुरुः स्निग्धो वातघ्नो मूत्रशोधनः। नातिपित्तकरो मेदः कफहृद्बलप्रदः॥ गुडः पुराणोऽधिगुणो वातघ्नो सृक् प्रसाधनः। पित्तघ्नो मधुरः स्निग्धो बल्यः पथ्यो विशेषतः॥ खण्डं वृष्यतमं वृष्यं चाक्षुष्यं बृंहणं महत्। वातपित्तहरं शीतं स्निग्धं हृद्यं सुखप्रदम्॥ शर्करा ज्वरपित्तासृक् मूर्च्छा छर्दितृषापहा॥ मधु स्वादु रसं शीतं व्रणशोधनरोचनम्। कषायाम्लरसं वल्यं रूक्षं दीपनरोचनम्॥ कषायाम्लरसं तैलं सूक्ष्ममुष्णं व्यवायि च। पित्तलं बद्धविण्मूत्रं न च श्लेष्माभि-

वर्द्धनम् ॥ वातघ्नं षूत्तमं बल्यं रुच्यं मेधाग्निवर्द्धनम् । छिन्न-भिन्नच्युतोऽपिष्टक्वथितच्चतपिच्छिले ॥ भग्नस्फुटितविद्धाग्नि-दग्धविश्लिष्टदारिते । तथा विहितनिर्भग्ने मृगव्याड़ादिभिः चते ॥ सेकाभ्यङ्गावगाहेषु तिलतैलं प्रशस्यते । वर्जयेत् पयसा स्निग्धं मत्स्यमांसमनूपजम् ॥ वल्लीफलमकुष्माण्डमक्षैर्जम्बू-फलाद्दृते । मांसं मूलकसंसिद्धं घृते मधु समांसके ॥ मत्स्यानि चुरिकारिष चौद्रमुष्णेन वारिणा । पुनरुष्णीकृतञ्चान्नं घृतं कांस्ये दशाहिकम् ॥ दध्ना तक्रेण पयसा तालस्यापि फलेन च । विरोधान्नैव भुञ्जीत मतिमान् कदलीफलम्" ॥ श्रुतिः "विरुद्धाशनजान् रोगान् प्रतिघ्नन्ति विरेचनम् । वमनं शयनं वापि पूर्वं वाहितभोजनम् ॥ शाम्येताल्पतया वापि दीप्ताग्ने-स्तरुणस्य च । स्निग्धव्यायामबलिनां विरुद्धं वितथं भवेत् ॥ अदृष्टद्वारदोषास्तु जायन्ते पापिनामिह" ॥ आलस्यादन्न-दोषादित्यनन्तरं मनुरप्याह । "लशुनं गृञ्जनञ्चैव पलाण्डुं कवकानि च । अभक्ष्याणि द्विजातीनाममेध्यप्रभवाणि च" ॥ कवकं छत्राकः अमेध्यप्रभवाणि विष्ठादिजातानि । "वृथा कृषरसं यावपयसा पूपमेव च । अनुपाकृतमांसानि देवान्नानि हवींषि च" ॥ वृथेति देवताद्यनुद्देशेन आत्मार्थं यत् पच्यते । कृषरमाह छन्दोगपरिशिष्टम् । "तिलतण्डुलसंपक्वः कृषरः सोऽभिधीयते" । संयावो घृतक्षीरगुड़गोधूमादिचूर्णसिद्धः । अनुपाकृतमांसानि । मन्त्राकृतसंस्कृतमांसानि देवान्नानि यानि देवतानैवेद्यार्थमन्नानि तानि । हवींषि पुरोड़ासादीनि प्राक् होमात् । "अनिर्दशाया गोःक्षीरमौष्ट्रमैकशफन्तथा । आविकं सन्धिनी क्षीरं विवत्सायाश्च गोःपयः ॥ आरण्यानाञ्च सर्वेषां मृगाणां महिषीं विना । स्त्रीक्षीरञ्चैव वर्ज्यानि सर्व-शुक्तानि चैव हि ॥ दधिभक्ष्यञ्च शुक्तेषु सर्वञ्च दधिसम्भवम् ।

थानि चैवाभिसूयन्ते पुष्पमूलफलैः शुभैः" ॥ अनिर्दशायाः प्रसवानन्तरमनिर्गतदशाहायाः गोरिति छागमहिषोपलक्षणम्। तथाच यमः। "अनिर्दशाया गोःक्षीरमाजं माहिषमेव च" ॥ एकशफमश्वाद्येकखुरसम्बन्धित्वात् सन्धिनी या ऋतुमती वृषमिच्छन्ति तस्याः सम्बन्धि। विवत्सायाश्च वत्सग्रहणादेव गोर्लाभे गोग्रहणं गोरेव न त्वजामहिष्योः। मृगाणामिति महिषप्रतिप्रसवात् पशुमात्रपरम्। शुक्तानि स्वभावतो मधुररसानि कालवशात् अम्लतां गतानि दधिसम्भवं तक्रादि। अभिसूयन्ते सन्धीयन्ते। शुभैर्मोहादिविकाराजनकैः। तथाच बृहस्पतिः। "कन्दमूलफलैः पुष्पैः शस्तैः शुक्तरसन्तु यत्। अविकारि भवेन्मेध्यमभक्ष्यं तद्विकारकृत्" ॥ मनुः। "मत्स्यादः सर्वमांसादः तस्मान्मत्स्यान् विवर्जयेत्। पाठीनरोहितावाद्यौ नियुक्तौ हव्यकव्ययोः ॥ राजीवाः सिंहतुण्डाश्च सशल्कांश्चैव सर्वशः। सामान्यतः प्रवक्ष्यामि विधिं भक्षणवर्जने ॥ प्रोक्षितं भक्षयेन्मांसं ब्राह्मणानान्तु काम्यया। यथाविधिनियुक्तश्च प्राणानामेव चात्यये ॥ प्राणस्यान्नमिदं सर्वं प्रजापतिरकल्पयत्। जङ्गमं स्थावरञ्चैव सर्वं प्राणस्य भोजनम् ॥ क्रीत्वा स्वयं वाप्युत्पाद्य परोपकृतमेव वा। देवान् पितॄंश्चार्चयित्वा खादन् मांसं न दुष्यति ॥ नाद्यादविधिना मांसं विधिज्ञो नापदि द्विजः। नियुक्तश्च यथा न्यायं यो मांसं नात्ति मानवः। स प्रेत्य पशुतां याति सम्भवानेकविंशतिम्" ॥ प्रोक्षितं मन्त्रकृतप्रोक्षणाख्यसंस्कारयुतं यज्ञहतपशुमांसविशिष्टं यज्ञाङ्गत्वेन तदभक्ष्यम्। तथाच तत्रैवोक्तम्। "मन्त्रैस्तु संस्कृतानद्यात् शाश्वतं विधिना स्थितः" ॥ इति आरण्यानां प्रोक्षितत्वमगस्त्येन कृतम्। तथाच महाभारते। "आरण्याः सर्वदैवत्याः प्रोक्षिताः सर्वशो मृगाः। अगस्त्येन पुरा राजन् मृगया येन

पूज्यते" ॥ ब्राह्मणकाम्ययात्वेकवारं यथाविधि नियुक्तः श्राद्धादाविति शेषः । तथाच यमः । "भक्षयेत् प्रोक्षितं मांसं सकृत् ब्राह्मणकाम्यया । दैवे नियुक्तः श्राद्धे वा नियमे तु विवर्जयेत्" ॥ नियमे शास्त्रान्तरनिषिद्धतत्कालमांसभक्षणे । अतएव नियुक्तास्त्विति मनुवचनं तत्कालीनानिषिद्धमांसाभुग्विषयमिति प्रायश्चित्तविवेकः । प्रेत्य परलोके । याज्ञवल्क्यः । "वसेत् स नरके घोरे दिनानि पशुरोमभिः । सम्मितानि दुराचारो यो हन्त्यविधिना पशून् ॥ सर्वान् कामानवाप्नोति हयमेधफलं तथा । गृहेऽपि निवसन् विप्रो मुनिर्मांसस्य वर्जनात्" ॥ मनुः । "वर्षे वर्षेऽश्वमेधेन यो यजेत शतं समाः । मांसानि न तु खादेद् यस्तयोः पुण्यफलं समम्" ॥ नारदीये । "न मत्स्यं भक्षयेन्मांसं न कौर्म्यं नान्यदेव हि । चण्डालो जायते राजन् कार्त्तिके मांसभक्षणात्" ॥ महाभारते । "कौमुदन्तु विशेषेण शुक्लपक्षं नराधिप । वर्जयेत् सर्वमांसानि धर्मस्तत्र विधीयते" ॥ कौमुदं कार्त्तिकम् । कार्त्तिकमधिकृत्य ब्रह्मपुराणे । "कार्त्तिकमासतत् शुक्लपक्षतदेकादश्यादिपञ्चदिनानि शक्ताशक्तभेदात् पापतारतम्याद्वा निषिद्धानि" । भविष्ये । "आमिषं रक्तशाकञ्च यो भुङ्क्ते च रवेर्दिने । सप्तजन्म भवेत् कुष्ठी दरिद्रश्चोपजायते" ॥ विष्णुपुराणे । "चतुर्दश्यष्टमी चैव अमावास्याथ पूर्णिमा । पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च ॥ स्त्रीतैलमांससम्भोगी पर्वस्वेतेषु वै पुमान् । विण्मूत्रभोजनं नाम नरकं प्रतिपद्यते" ॥ अत्र यद्यपि संक्रान्तिपदेन पुण्यकालो लक्ष्यते तथापि । "अष्टम्यां पक्षयोरन्ते रविसंक्रान्तिवासरे । पक्षोपान्ते स्त्रियं तैलं मीनञ्च परिवर्जयेत्" ॥ इति ब्रह्मपुराणात् वासरपदग्रहणात् पुण्यकालोपलक्षितदिन एव

निषेधः । विष्णुपुराणवचनमपि तत्पुण्यकालोपलक्षिततद्दिन-परम् । अन्यथा वासरपदवैयर्थ्यापत्तेः । राजमार्त्तण्डे भोज-राजधृतम् । "अर्द्धरात्रादधश्चेत् स्यात् तस्मिन्नेवाह्नि क्रिया । ऊर्द्ध्वं संक्रमणे भानोरपरेऽहनि तत् क्रिया" ॥ इति वचनात् सञ्चारक्षणावच्छिन्नपूर्वापरदिनार्द्धपुण्यकालोपलक्षित-दिनपर-मपीति । स्त्रियास्तु पशुमांसभक्षणनिषेधमाह श्रीभागवते गद्यम् । "ये त्विह वै पुरुषाः पुरुषमेधेन जयन्ते याश्च स्त्रियो नृपशून् खादन्ति तांश्च ताश्च ते पशव इह निहता यमसदने यातयन्तो रक्षो गणाः शौनिका इव स्वधितिनाऽवदायासृक् पिबन्ति" इति स्वधितिना कुठारेण अवदाय खण्डयित्वा मनुः । "मत्तक्रुद्धातुराणाञ्च न भुञ्जीत कदाचन । केशकीटा-वपन्नञ्च पदा स्पृष्टञ्च कामतः ॥ भ्रूणघ्नावेक्षितञ्चैव संस्पृष्ट-ञ्चाप्युदक्यया । पतत्रिणावलीढञ्च शुना संस्पृष्टमेव च ॥ गवा चान्नमुपघ्रातं स्पृष्टान्नञ्च विशेषतः । गणान्नं गणिकान्नञ्च विदुषा च जुगुप्सितम् ॥ शुक्तं पर्य्युषितं चैव शूद्रोच्छिष्टन्तथैव च । स्तेन गायनयोश्चैव तक्ष्णो वार्द्धुषिकस्य च ॥ चिकित्सकस्य मृगयोः क्रूरस्योच्छिष्टभोजिनः । उग्रान्नं सूतिकान्नञ्च पर्य्या-चान्तमनिर्दशम् ॥ अनर्चितं वृथामांसमवीरायाश्च योषितः । द्विषदन्नं नगर्य्यन्नं पतितान्नमवक्षुतम् ॥ पिशुनानृतिनोश्चान्नं क्रतुविक्रयिणस्तथा । मृष्यन्ति ये चोपपतिं स्त्रीजितानाञ्च सर्वशः ॥ अनिर्दशञ्च प्रेतान्नं अतुष्टिकरमेव च । राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम् ॥ आयुःसुवर्णकारान्नं यश-श्चर्म्मावकर्त्तिनः । विष्ठा वार्द्धुषिकस्यान्नं शस्त्रविक्रयिणो मलम् ॥ भुक्त्वा चान्यतमस्यान्नममत्या क्षपणं त्र्यहम् । मत्या भुक्त्वा चरेत् कृच्छ्रं रेतो विण्मूत्रमेव च ॥ नाद्यात् शूद्रस्य पक्वान्नं विद्वानश्राद्धिनो द्विजः । आददीताममेवास्मादवृत्तावेकरात्रि-

कम्" ॥ केशकीटावपन्नञ्च केशकीटसंसर्गदुष्टम् । कामत इति इच्छातः । भ्रूणघ्नावेक्षितं पतितदृष्टम् । उदक्यया रजस्वलया । पतत्रिणावलीढं काकादिना भक्षितं घुष्टान्नं के के भोक्तार इत्युक्त्वान्नं सत्रादौ यद्दीयते तदन्नं पर्य्युषितं रात्रान्तरितं तत्तु स्नेहाक्तं भक्ष्यमाह मनुः । "यत्किञ्चित् स्नेहसंयुक्तं भक्ष्यभोज्यमगर्हितम् । तत्पर्य्युषितमप्याद्यं हविः शेषञ्च यद्भवेत्" ॥ विशेषमाह स एव । "चिरसंस्थितमप्याद्यं सुस्नेहाक्तमपि द्विजैः । यवगोधूमजं सर्वं पयसाश्चैव विक्रिया" ॥ उच्छिष्टं भुक्तावशिष्टं मृगयोर्व्याधस्य वार्द्धुषिकस्य "समर्घं मूल्यमादाय महार्घं यः प्रयच्छति" । सूतिकान्नं सूतिकाभोजनमुद्दिश्य यत् क्रियते तत् कुलजैरपि न भोक्तव्यं पर्य्याचान्तम् एकपङ्क्तिस्थे भुज्यमाने यदि कश्चिदाचमनं करोति तदन्नम् । अनिर्दशं जननाशौचान्नं अनर्चितमवज्ञया दत्तं वृथामांसं देवपित्रुद्देशेन यन्न कृतम् । अवीरायाः पतिपुत्रविहीनया योषित इत्युपदानात् स्त्रीत्वमात्रेणैवासम्बन्धिन्या निषेधो न तु पितामह्यादिसम्बन्धिन्या अपि प्रायश्चित्तविवेकोऽप्येवम् । नगर्य्यन्नं नगराधिपान्नं नगराधिपतेश्चैवेति ब्रह्मपुराणात् । अवक्षुतम् उपरिक्षुतम् । अनिर्दशञ्च प्रेतान्नं मृता शौचान्नम् आदत्ते नाशयति दोषाभिधानाद्भक्षणनिषेधः कल्पते ब्रह्मवर्चसम् अध्ययनादिनिमित्ततेजः अमत्या अज्ञानेन त्र्यहं क्षपणम् उपवासः । कृच्छ्रं प्राजापत्यव्रतम् । अश्राद्धिनः श्राद्धपञ्चयज्ञशून्यस्य अवृत्तौ अर्थान्तराभावे ऐकरात्रिकम् एकरात्रिनिर्वाहोचितम् आममन्नं दत्तमपि भोजनकाले तद्गृहावस्थितं शूद्रान्नम् । तथा चाङ्गिराः । "शूद्रवेश्मनि विप्रेण क्षीरं वा यदि वा दधि । निवृत्तेन न भोक्तव्यं शूद्रान्नं तदपि स्मृतम्" ॥ निवृत्तेन शूद्रान्नानिवृत्तेन अपिशब्दात्

साक्षात् घृततण्डुलादिस्वगृहागते। पुनरङ्गिराः। "यथा यातस्ततो ह्यापः शुद्धिं यान्ति नदीं गताः। शूद्राद्विप्रगृहेष्वन्नं प्रविष्टन्तु सदा शुचि"॥ प्रविष्टेऽपि स्वीकारापेक्षामाह पराशरः। "तावद्भवति शूद्रान्नं यावन्न स्पृशति द्विजः। द्विजातिकरसंस्पृष्टं सर्वं तद्धविरुच्यते"॥ स्पृशति गृह्णातीति कल्पतरुः। तच्च संप्रोक्ष्य ग्राह्यमाह विष्णुपुराणम्। "संप्रोक्षयित्वा गृह्णीयात् शूद्रान्नं गृहमागतम्"। तच्च पात्रान्तरेण ग्राह्यमाहाङ्गिराः। "स्वपात्रे यच्च विन्यस्तं दुग्धं यच्छति नित्यशः। पात्रान्तरगतं ग्राह्यं दुग्धं स्वगृह आगतम्"॥ एतेषु स्वगृह आगतस्यैव शुद्धत्वं तद्गृहगतस्य शूद्रान्नदोषभागित्वं प्रतीयते। वृहन्नारदीये। "यः शूद्रेण समाहूतो भोजनं कुरुते द्विजः। सुरापीति स विज्ञेयः सर्वधर्मबहिष्कृतः॥ यः शूद्रेणाभ्यनुज्ञातः कुर्य्याद्वा भोजनं द्विजः। सुरापीति स विज्ञेयः सर्वधर्मबहिष्कृतः॥ यः शूद्रेणार्चितं लिङ्गं विष्णुं वापि नमेन्नरः। स सर्वयातनाभोगी यावदाहूतसंप्लवम्॥ योषिद्भिः पूजितं लिङ्गं विष्णुं वापि नमेत्तु यः। स कोटिकुलसंयुक्त आकल्पं रौरवे वसेत्"॥ स्मृतिः। "कुष्माण्डे चार्थहानिः स्यात् वृहत्यां न स्मरेद्धरिम्। बहुशत्रुः पटोले स्यात् धनहानिस्तु मूलके॥ कलङ्की जायते विल्वे तिर्य्यग्योनिश्च निम्बके। ताले शरीरनाशः स्यान्नारिकेले च मूर्खता॥ तुम्बी गोमांसतुल्या स्यात् कलम्बी गोवधात्मिका। शिम्बी पापकरी प्रोक्ता पूतिका ब्रह्मघातिका॥ वार्त्ताकी सुतहानिः स्याच्चिररोगी च माषके। महापापकरं मांसं प्रतिपदादिषु वर्जयेत्"॥ तत्र सप्तम्यामेव तालनिषेधादन्यत्र भक्षणं प्राप्तम्। अतः "तालं श्वेताञ्च वार्त्ताकीं न खादेद्वैष्णवो नरः"। इत्यनेन तालमपि श्वेतं निषिद्धं साहचर्य्येण श्वेतानुसङ्गात्। एवम्

"अलावूं वर्त्तुलाकारां वार्त्ताकीं कुन्दसन्निभाम्"॥ इति यदपि "कुसुम्भं नालिकाशाकं वृन्ताकं पूतिकान्तथा। भक्षयन् पतितस्तु स्यादपि वेदान्तगो द्विजः"॥ इत्युशनसा सामान्यतोऽभिहितम्। तत्र नालिका श्वेतकलम्बी। पूतिका द्वादश्यामधिकदोषाय शूद्रविषयिका वा इति कल्पतरुः। शङ्खः "वाग्दुष्टं भावदुष्टञ्च भाजने भावदूषिते। भुक्त्वान्नं ब्राह्मणः पश्चात् त्रिरात्रञ्च व्रती भवेत्"॥ एतदभ्यासे। व्रती यावकेन। मनुः। "त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन्। अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते"॥ अदृष्टमुपघातशङ्काभिरज्ञातम्। "अज्ञातञ्च सदा शुचि" इति याज्ञवल्क्यैकवाक्यत्वात्। वाचेति उपसंघातशङ्कायां पवित्रं भवत्विति ब्राह्मणैर्वाचा यत् प्रशस्यते इति दीपकलिका कुल्लूकभट्टौ। शातातपः। "गोकुले कन्दुशालायां तैलयन्त्रेक्षुयन्त्रयोः। अमौ मांस्यानि शौचानि स्त्रीषु बालातुरेषु च"॥ अमौ मांस्यानि शौचाशौचभागितया न विचार्य्याणि कन्दुशालायां लाजाद्यर्थं धान्यादिभर्जनशालायां बौधायनः। "अदुष्टासन्तताधारा वातोद्धूताश्च रेणवः। आकराः शुचयः सर्वे वर्जयित्वा सुराकरम्"॥ पराद्दमत्रिसुनैरपि। यमः। "अजा गावो महिष्यश्च ब्राह्मणी च प्रसूतिका। दशरात्रेण शुद्ध्यन्ति भूमिष्ठञ्च नवोदकम्"॥ ब्रह्मपुराणम्। "नवस्नातजलं गावा महिषश्छागयोनयः। शुद्ध्यन्ति दिवसैरेव दशभिर्नात्र संशयः"॥ स्मृतिः। "काले नवोदकं शुद्धं न पातव्यन्तु तत्त्र्यहम्। अकाले तु दशाहं स्यात् पीत्वा नाद्यादहर्निशम्"॥ काले वर्षाकाले। शङ्खः। "स्नानमाचमनं दानं देवतापितृतर्पणम्। शूद्रोदकैर्न कुर्वीत तथा मेघादिनिःसृतैः"॥ पानादीतरस्पर्शादौ हरिवंशः। "अभौममम्भो विसृजन्ति मेघाः पूतं पवित्रं पवनैः सुगन्धि"। शङ्ख-

लिखितौ। "आकरद्रव्याणि प्रोक्षितानि शुचीनि" इति यमः। "आममांसं घृतं क्षौद्रं स्नेहाश्च फलसम्भवाः। म्लेच्छ-भाण्डस्थिता दुष्टा निष्क्रान्ताः शुचयः स्मृताः"॥ विष्णुधर्मोत्तरे। "मुखवर्जञ्च गौः शुद्धा मार्जारः क्रमणे शुचिः। पुष्पाणाञ्च फलानाञ्च प्रोक्षणात् शुद्धिरिष्यते"॥ अत्रिः। "मक्षिकाः सन्तता धारा भूमिस्तोयं हुताशनः। मार्जारश्चापि दर्वी च मारुतश्च सदा शुचिः॥ चाण्डालेन शुना वापि दृष्टं हविरयज्ञियम्। बिड़ालादिभिरुच्छिष्टं दुष्टमन्नं विवर्जयेत्॥ अन्यत्र हिरण्योदकस्पर्शात्" इति शातातपः "तापनं घृततैलानां प्लावनं गोरसस्य च। तन्मात्रमुद्धृतं शुद्धेत् कठिनन्तु पयो दधि॥ अविलीनं तथा सर्पिर्विलीनं श्रपणेन तु"॥ मनुः। "द्रव्याणाञ्चैव सर्वेषां शुद्धिरुत्पवनं स्मृतम्"। उत्पवनं वस्त्रान्तरितनिर्वापणेन केशकीटाद्यपनयनम्। शातातपः। "क्लीवाभिशस्तपतितैः सूतिकोदक्यनास्तिकैः। दृष्टं वा स्याद् यदन्नन्तु तस्य निष्कृतिरुच्यते॥ अभ्युक्ष्य किञ्चिदुद्धृत्य भुञ्जीताप्यविशङ्कितः"॥ शुद्धिरित्यनुवृत्तौ विष्णुः। "गुड़ानामिक्षु-विकाराणां प्रभूतानां वायुग्निदानेन सर्वलवणानाञ्च" इति ब्रह्मपुराणम्। "चाण्डालपतितामेध्यैः कुनखैः कुष्ठिना तथा। ब्रह्मघ्नसूतिकोदक्या कौलेयककुटुम्बिभिः॥ दृष्टं वा केशकीटाक्तं मृद्भस्मकनकाम्बुभिः। शुद्धमद्यात् सहृल्लेखं प्रभूतं घुष्टमेव च"॥ कौलेयकः श्वा कुटुम्बी प्राणिविशेषः। सहृल्लेखं विचिकित्सितमन्नं घुष्टं पर्युषितम्। तथा ब्रह्मपुराणम्। "विचिकित्सा तु हृदये यस्मिन्नन्ने प्रजायते। सहृल्लेखन्तु विज्ञेयं पुरीषन्तु स्वभावतः"॥ मत्स्यसूक्ते। "अनिवेद्य न भोक्तव्यं मत्स्यं मांसञ्च यद्भवेत्। अन्नं विष्ठा पयो मूत्रं यद्विष्णोरनिवेदितम्॥ अनेन स्वयं भोज्यमन्नादिदेयमित्युक्तं

"नाभक्ष्यं नैवेद्यार्थे भक्ष्येष्वजामहिषीक्षीरं विवर्जयेत् पञ्चनख-मत्स्यवराहमांसानि चेति" विष्णुवचने तु अनेवंविधं निषिद्ध-मित्यविरोधः। अतएवायोध्याकाण्डे श्रीरामवाक्यम्। "यदन्नः पुरुषो नूनं तदन्नास्तस्य देवताः" इति।

स्वदत्तस्यापि भक्षणमाह श्रीभागवते। "निवेदितं मद्भक्ताय दद्याद्भुञ्जीत वा स्वयम्"। फलमप्याह "उद्वास्य देवं स्वे धाम्नि तन्निवेदितमग्रतः॥ अद्यादात्मविशुद्ध्यर्थं सर्वकामसमृद्धये"॥ उद्वास्यानीय स्वे धाम्नि हृदये। "त्वयोपयुक्तस्रग्गन्धवासो-ऽलङ्कारचर्चिता। उच्छिष्टभोजिनो दासास्तव मायां जये महि। हृदिरूपं मुखे नाम नैवेद्यमुदरे हरेः। पादोदकञ्च निर्माल्यं मस्तके यस्य सोऽच्युतः"॥ ब्रह्मपुराणम्। "अम्बरीषनवं वस्त्रं फलमन्नं रसादिकम्। कृत्वा कृष्णोपभोग्यन्तु सदा सेव्यं हि वैष्णवैः॥ अम्बरीषहरेर्लग्नं नीरं पुष्पं विलेपनम्। भक्त्या न धत्ते शिरसि चाण्डालादधिको हि सः"॥ नारसिंहे। पादोदकफलमाह। "गङ्गाप्रयागगयनैमिषपुष्कराणि पुण्यानि यानि कुरु जाङ्गलयामुनानि। कालेन तीर्थसलिलानि पुनन्ति पापात् पादोदकं भगवतस्तु पुनाति सद्यः"॥ पद्मपुराणे। "ये पिबन्ति नरा नित्यं शालग्रामशिलोदकम्। प्रक्षालयन्त्य-सन्दिग्धं ब्रह्महत्यादिपातकम्॥ शालग्रामशिलातोयमपीत्वा यस्तु मस्तके। प्रक्षेपणं प्रकुर्वीत ब्रह्महा स निगद्यते"॥ बह्वृच-गृह्यपरिशिष्टम्। "पवित्रं विष्णुनैवेद्यं सुरसिद्धर्षिभिः स्मृतम्। अन्यदेवस्य नैवेद्यं भुक्त्वा चान्द्रायणञ्चरेत्॥ अग्राह्यं शिव-नैवेद्यं पत्रं पुष्पं फलं जलम्। शालग्रामशिलास्पर्शात् सर्वं याति पवित्रताम्॥ यो यद्देवार्चनरतः स तन्नैवेद्यभुग्भवेत्। केवलं सौरशैवे तु वैष्णवो नैव भक्षयेत्॥ समानं चान्य-नैवेद्यं भक्षयेदन्यदैवतः"॥ भविष्ये। "निर्माल्यं नैव भोक्तव्य,

रुद्रस्य तपनस्य च। उपयुज्य च संमोहात् नरके पच्यते ध्रुवम्”॥ अतएव पुरश्चरणचन्द्रिकायाम्। “सुषुम्ना वर्त्मना पुष्पमाघ्रायोद्वासयेत् सुधीः॥ निर्माल्यं मस्तके धार्य्यं सर्वाङ्गेष्वनुलेपनम्। नैवेद्यञ्चोपभुञ्जीत दत्त्वा तद्भक्तिशालिने”॥ विश्वक्सेनप्रभृतये। नन्दिकेश्वरपुराणम्। “दत्त्वा नैवेद्यपुष्पाणि नाददीत कदाचन। त्यक्तव्यं शिवमुद्दिश्य तदा दानेन तत्फलम्” इति शिवदत्ते विशेषः। “ब्रह्मचारिगृहस्थैश्च वनस्थयतिभिः सह। भोक्तव्यं विष्णुनैवेद्यं नात्र कार्य्या विचारणा”॥ एवञ्च तत् “हन्तकारञ्च नैवेद्यं भुक्त्वा कृच्छ्रं यतिश्चरेत्”॥ इति विष्णुनैवेद्येतरपरम्। तथाच। “अनुत्सृष्टेन सृष्टान्नं ग्रासार्द्धं ग्रासमेव वा। विष्णोर्निवेदितान्नं यो नित्यं भुङ्क्ते स मुक्तिभाक्”॥ स्वोत्सृष्टजलाशयजलोपयोगेऽपि न दोषः तथा हि। “प्रदद्यात् सर्वभूतेभ्यो जलपूर्णं जलाशयम्”। इति मत्स्यपुराणे जलाशयोत्सर्गस्य सर्वभूतेभ्य इत्यनेन अप्रकृष्टचेतनोद्देश्यकत्वादुद्देश्यगतस्वामित्वाजननान्न दानत्वं किन्तु जलं स्वस्वत्वे दूरीकरणेन नद्यादिवत् साधारणीकृतम् अतएव “सामान्यं सर्वभूतेभ्यो मयोत्सृष्टमिदं जलम्। रमन्तु सर्वभूतानि स्नानपानावगाहनैः”॥ इति मन्त्रलिङ्गेनोपादानं विना कस्यापि न स्वत्वमिति। तत्साधारणजलस्य गौतमोक्तेन स्वामित्वश्रुतेः तदुत्स्रष्टुरपि तथात्वे पुनः स्वामित्वात्तदुपयोगः। यथा गौतमः। “स्वामी ऋक्थक्रयसंविभागपरिग्रहाधिगमेषु। ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयोः”॥ इति परिग्रहोऽनन्यपूर्वस्य जलतृणकाष्ठादेः स्वीकार इति मिताक्षरा। वृत्त्यधिकारे व्यक्तमाहापस्तम्बः। दायाद्यं शिलोञ्छौ चान्यच्चापरिगृहीतम्” इति। अपरिगृहीतमनन्यस्वीकृतमस्वामिक-

मित्यर्थः। निर्विष्टं वेतनलब्धं निर्वेशो भृतिभोगयोरित्यमरोक्तेः। पैठीनसिः "लवणं व्यञ्जनञ्चैव घृतं तैलं तथैव च। लेह्यं पेयञ्च विधिवत् हस्तदत्तं न भक्षयेत्"॥ आश्वमेधिके। "उदक्यामपि चाण्डालं श्वानं कुक्कुटमेव च। भुञ्जानो यदि पश्येत तदन्नञ्च परित्यजेत्"॥ बौधायनः। "भुञ्जानेषु च विप्रेषु यस्तु पात्रं परित्यजेत्। भोजने विघ्नकर्त्ता च ब्रह्महा च तथोच्यते"॥ अन्यत्र गमनेन पात्रं त्यजेदित्यर्थः। कूर्मपुराणे। "यो भुङ्क्ते वेष्टितशिरा यश्च भुङ्क्ते विदिङ्मुखः। सोपानत्कश्च यो भुङ्क्ते सर्वं विद्यात्तदासुरम्"॥ इति ब्रह्मपुराणे। "कुर्य्यात् क्षीरान्तमाहारं न च पश्चात् पिबेद्दधि"। अधि अधिकम्। "हस्तं प्रक्षाल्य गण्डूषं यः पिबेत् पापमोहितः। सदैवञ्चैव पैत्रञ्च आत्मानञ्चावसादयेत्॥ अर्द्धं पीत्वा च गण्डूषम् अर्द्धं त्याज्यं महीतले। रसातलगतान्नागांस्तेन प्रीणाति नित्यशः"॥ वृद्धव्यासः। "ततस्तृप्तः सवममृतापिधानमसीति" अपः प्राश्य तस्माद्देशाच्चनागवसृत्य विधिवदाचामेदिति। देवलः। "भुक्त्वाचामेद् यथोक्तेन विधानेन समाहितः। शोधयंश्च मृदा हस्तौ मृदद्भिर्घर्षणैरपि॥ भोजने दन्तलग्नानि निर्हृत्याचमनं चरेत्। दन्तलग्नमसंहार्य्यं लेपं मन्येत दन्तवत्॥ न तत्र बहुशो यत्नं कुर्य्यादुद्धरणे पुनः। भवेदशौचमत्यन्तं तृणवेधात् व्रणे क्षते"॥ बौधायनः। "पुनराचम्य दक्षिणे पादाङ्गुष्ठे पाणिना विस्रावयति। अङ्गुष्ठमात्रः पुरुषो ह्यङ्गुष्ठञ्च समाश्रितः। ईशः सर्वस्य जगतः प्रभुः प्रीणातु विश्वभुक्"॥ विस्रावयति जलमिति शेषः। ब्रह्मपुराणम्। "आचान्तोऽप्यशुचिस्तावद्यावत्पात्रमनुद्धृतम्। उद्धृत्याप्यशुचिस्तावद्यावन्नोच्छिष्टमार्जनम्॥ भुक्तोच्छिष्टं समादाय सर्वस्मात् किञ्चिदासनः। उच्छिष्टभागधेयेभ्यः सोदकं निर्वपेद्भुवि"॥ तत्र मन्त्रः।

"रौरवे पुण्यनिलये पद्मार्बुदनिवासिनाम्। प्राणिनां सर्वभूतानामक्षय्यमुपतिष्ठताम्" ॥ इत्यनेन शेषजलं त्यजेत्। विष्णुपुराणम्। "भुक्ता सम्यगथाचम्य प्राङ्मुखोदङ्मुखोऽपि वा। यथावत् पुनराचामेत् पाणी प्रक्षाल्य मूलतः ॥ स्वस्थः प्रशान्तचित्तस्तु कृतासनपरिग्रहः। अभीष्टदेवतानाञ्च कुर्वीत स्मरणं नरः ॥ अग्निराप्याययतां धातुं पार्थिवं पवनेरितः। दत्तावकाशो नभसा जरयत्वस्तु मे सुखम् ॥ अन्नं बलाय मे भूमेरपामग्न्यनिलस्य। भवत्येतत् परिणतौ ममास्त्वव्याहतं सुखम् ॥ प्राणापानसमानानामुदानव्यानयोस्तथा। अन्नं तुष्टिकरञ्चास्तु ममास्त्वव्याहतं सुखम् ॥ अगस्त्यवह्निर्वड़वानलश्च भुक्तं मयान्नं जरयत्वशेषम्। सुखं ममैतत् परिणामसम्भवं यच्छत्वरोगं मम चास्तु देहे" ॥ विष्णुः। "यथा समस्तेन्द्रिय देहि देहे प्रधानभूतो भगवान् यथैकः। सत्येन तेनान्नविशेषमेतदारोग्यदं मे परिणाममेतु ॥ वीर्य्यवत्ता यथैवान्नं परिणाममवेति हि। सत्येन तेन मद्भुक्तं जीर्य्यत्वन्नमिदं तथा ॥ इत्युच्चार्य्य स्वहस्तेन परिमृज्य तथोदरम्। अनायासप्रदायीनि कुर्य्यात् कर्माण्यतन्द्रितः" ॥ मार्कण्डेयः। "भूयोऽप्याचम्य कर्त्तव्यं ततस्ताम्बूलभक्षणम्"। वशिष्ठः। "सुपूगञ्च सुपर्णञ्च सुचूर्णेन समन्वितम्। अदत्त्वा द्विजदेवेभ्यस्ताम्बूलं वर्जयेद् बुधः ॥ पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसम्भवः। जीर्णपर्णं हरेदायुः शिरा बुद्धिप्रणाशिनी" ॥

अथ षष्ठयामार्द्धकृत्यम्। "इतिहासपुराणाद्यैः षष्ठसप्तमकौ नयेत्। अष्टमे लोकयात्रा तु बहिः सन्ध्या ततः परम्" ॥ विष्णुपुराणम्। "सच्छास्त्रादिविनोदेन सन्मार्गादविरोधिना। दिनं नयेत्ततः सन्ध्यामुपतिष्ठेत् समाहितः" ॥ सन्ध्योपासनन्तु पूर्ववदेव। विशेषस्तु अग्निश्च मामन्युश्चेति मन्त्रेणाचमनं

सायमग्निश्चेति बौधायनीयपरिशिष्टदर्शनात्। गायत्रीजपश्च उपविश्य प्रत्यङ्मुखेन वायुकोणसम्बन्धिदिगष्टमभागमुखेन वा कर्त्तव्यः। "जपन्नासीत सावित्रीं प्रत्यगातारकोदयात्" इति याज्ञवल्कीयात्। अन्वष्टममिति सांख्यायनात्।

अथ रात्रिकृत्यम्। स्मृतिः। "पूर्वाह्णविहितं कर्म न कृतं यत् प्रमादतः। रात्रेस्तु प्रहरं यावत् कर्त्तव्यं तद्यथोक्तवत्॥ दिवोदितानि कर्माणि प्रमादादकृतानि च॥ शर्वर्य्याः प्रथमे यामे तानि कुर्य्यादतन्द्रितः"॥ इति रत्नाकरः। याज्ञवल्क्याङ्गिरसौ। "उपास्य पश्चिमां सन्ध्यां हुत्वाग्नींस्तानुपास्य च। भृत्यैः परिवृतो भूत्वा नातितृप्तोऽथ संविशेत्"॥ अग्नौ होमोपासनं साग्निपरम्। उपास्य चेति चकारो वैश्वदेवादिकं समुच्चिनोति। संविशेत् स्वपेत्। तथाच विष्णुपुराणम्। "पुनः पाकमुपादाय सायमप्यवनीपते। वैश्वदेवनिमित्तं वै पत्न्या सार्द्धं वलिं हरेत्॥ अतिथिश्चागतं तत्र स्वशक्त्या पूजयेद् बुधः। दिवाऽतिथौ तु विमुखे गते यत् पातकं भवेत्॥ तदेवाष्टगुणं विद्यात् सूर्य्योढ़े विमुखे गते"॥ सूर्य्योढ़े सूर्य्ये अस्तं गते सूर्य्येण प्रापिते। तथा। "कृतपादादिशौचस्तु भुक्ता सायं ततो गृही। गच्छेत् शय्यामस्फुटितामपि दारुमयीं नृप"॥ निशि भोजनं सार्द्धप्रहराभ्यन्तरे प्रागुक्तम्।

अथ शयनविधिः। सति सूर्य्ये शय्या च न पातनीया सा च सूर्य्योदयात् पूर्वमुत्तोलनीया। तथा च स्मृतिः। "भास्कराद्दृष्टशय्यानि नित्याग्नि सलिलानि च। सूर्य्यावलोकिदीपानि लक्ष्म्या वेश्मानि भाजनम्॥ आसनं वसनं शय्या जायापत्यं कमण्डलुः। आत्मनः शुचिरेतानि न परेषां कदाचन"॥ न कदाचन इत्यनुमतिं विना अन्यथाऽतिथ्यानुपपत्तेः। व्यासः। "शुचौ देशे विविक्ते तु गोमयेनोपलिप्तके। प्रागुदक्प्लवने

चैव संविशेत्तु सदा बुधः ॥ माङ्गल्यं पूर्णकुम्भञ्च शिरःस्थाने निधापयेत् । वैदिकैर्गारुड़ैर्मन्त्रै रक्षां कृत्वा स्वपेत्ततः" ॥ गर्गः । "स्वगृहे प्राक्शिराः शेते आयुष्ये दक्षिणा शिराः । प्रत्यक्शिराः प्रवासे तु न कदाचिदुदक्शिराः" ॥ मार्कण्डेयपुराणे । "प्राक्शिराः शयने विद्यात् धनमायुश्च दक्षिणे । पश्चिमे प्रबलां चिन्तां हानिं मृत्युं तथोत्तरे" ॥ तथा नमस्कृत्याव्ययं विष्णुं समाधिस्थः स्वपेन्निशि" । मार्कण्डेयः । "शून्यालये श्मशाने च एकवृक्षे चतुष्पथे । महादेवगृहे चापि शर्करा लोष्टपांशुषु ॥ धान्यगोविप्रदेवानां गुरूणाञ्च तथोपरि । न चापि भग्नशयने नाशुचौ नाशुचिः स्वयम् । नार्द्रवासा न नग्नश्च नोत्तरापरमस्तकः । नाकाशे सर्वशून्ये च न च चैत्यद्रुमे तथा" ॥ न स्वपेदित्यर्थः ।

अथ दारोपगमनविधिः । याज्ञवल्क्यः । "षोड़शर्त्तुर्निशा स्त्रीणां तासु युग्मासु संविशेत् । ब्रह्मचार्य्येव पर्वण्याद्याश्चतस्रश्च वर्जयेत्" ॥ स्त्रीणां षोड़शनिशा ऋतुः गर्भाधानयोग्यकालः । तथोक्तविधिना गच्छन् ब्रह्मचार्य्येव भवति तत्र व्रतादौ गच्छन् ब्रह्मचर्य्यस्खलनदोषो नास्तीति मिताक्षरा । पर्वाणि चोक्तानि । हारीतः । "चतुर्थेऽहनि स्नातायां युग्मासु च गर्भाधानम् । तदुपेतं ब्रह्मगर्भं दधातीति" अत्र चतुर्थ्यां रात्रौ यद्गर्भाधानमुक्तं तद्रजोनिवृत्तौ बोद्धव्यम् । "रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला" इति मनुवचनैकवाक्यत्वात् । साध्वी गर्भाधानादिविहितकर्मयोग्येत्यर्थः । आद्याश्चतस्रो वर्जयेदिति तु रजोनिवृत्तीतरपरम् । चतुर्थ्यां रात्रौ जातस्याप्रशस्तत्वमाहापस्तम्बः । "चतुर्थीप्रभृत्युत्तरोत्तराप्रजानिःश्रेयसार्थम्" इति मिताक्षरा मदनपारिजातयोः । स्नानानन्तरं पुनरपि रजोदर्शने विशेषमाह हारीतः । "रजस्वला यदि

स्नात्वा पुनरेव रजस्वला। अष्टादशदिनादर्वागशुचित्वं नैव विद्यते। एकोनविंशतेरर्वाक् एकाहं स्यात्ततोद्व्यहम्। विंशप्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेत्"॥ अष्टादशदिनादर्वाक् सप्तदशदिनाभ्यन्तरे इत्यर्थः। एवमुत्तरत्रापि। वशिष्ठः। "त्रिरात्रं रजस्वला अशुचिर्भवति सा नाञ्ज्यात् नाभ्यञ्ज्यात् नाप्सु स्नायात् अधःशयीत न दिवा स्वप्यात् न रज्जुं प्रसृजेत् नाग्निं स्पृशेत् न दन्तान् धावयेत् न मांसमश्नीयात् न ग्रहान्निरीक्षेत न हसेत् न किञ्चिदाचरेत् नाञ्जलिना जलं पिबेत् न लोहितायसेन न खर्वेण वेति"। न रज्जुं प्रसृजेत् न रज्जुं कुर्यादित्यर्थः। न खर्वेण वामपाणिना लोहितायसेन ताम्रपात्रेण। अनृतावपि कामुकीगमनमाह विष्णुपुराणम्। "ऋतौ नरकमभ्येति हीयेतात्रापि चायुषः। परदाररतिः पुंसामुभयत्रापि भीतिदा। इति मत्वा स्वदारेषु ऋतुमत्सु बुधो व्रजेत्। यथोक्तदोषहीनेषु सकामेष्वनृतावपि"। प्रौढगर्भामपि अत्यन्तकामामुपेयात्। तदाह वशिष्ठः। "अद्य श्वो वा विजनिष्यमाना: पतिभिः सह शयन्ते इति स्त्रीणामिन्द्रदत्तोवर इति"। विजनिष्यमानाः प्रसवित्र्यः शयन्ते शेरते। लटोरूपं छान्दसम्। पैठीनसिः। "त्वाष्ट्रं विश्वरूपं जघान वज्रेणेन्द्रः तं देवा ब्रह्महन्नित्यवदन् स स्त्रियः उपागच्छीत वरं दास्यामीति ततोऽस्याः तृतीयं ब्रह्महत्यायाः प्रपद्यन्त एकं भूमिर्वनस्पतयश्चैकम् आसां मघवा तुष्टः प्रायच्छत वरं भूमेः खिरत्वं वृक्षाणां छिन्नप्ररोहणं स्त्रीणां सर्वकालेषु सम्भवः" इति सम्भवः सम्भोगः। दुष्टकालमाह "ज्येष्ठामूलामघाश्लेषारेवतीकृत्तिकाश्विनी। उत्तरा त्रितयं त्यक्त्वा पर्ववर्जं व्रजेदृतौ"॥ एवञ्च "ऋतौ नोपैति यो भार्य्यामनृतौ यश्च गच्छति। तुल्यमाहुस्तयोर्दोषमयोनौ यश्च गच्छति"॥ इति बौधायनीयमनृतौ

दोषाभिधानम् अकामविषयम् । "पर्वस्वनारोग्यमनृतावपि गच्छन् पत्नीञ्चिराअमुपवसेत्" । वृद्धशातातपः । "स्त्रीणां संप्रेक्षणात् स्पर्शात् ताभिः संकथनादपि । ब्रह्मचर्य्यं विपद्येत न दारेष्वृतुसङ्गमात्" ॥ संप्रेक्षणादित्यत्र संशब्दः कामार्थः । श्राद्धानन्तरन्तु निषेधमाहतुः शङ्खलिखितौ । "ऋतुस्नातां तदहोरात्रं परिहरेत् । नातुरो न दिवा मैथुनं व्रजेत् । क्लीवा अल्पवीर्य्याश्च दिवा प्रसूयन्ते । अल्पायुषश्च तस्मादेतद्विवर्जयेत् । प्रजाकामः पितॄणां नोद्धरेत् तन्तुं विच्छिन्द्यात् प्रयतेताच्छेदाय ये नाप्रतिष्ठो भवति । तस्मात् प्रतिष्ठाकामः प्रजया तिष्ठति" ॥ नोशब्दोनिषेधः । तन्तुं सन्तानम् अच्छेदाय अविच्छेदाय सन्तानस्य येन यस्मात् तन्तुच्छेदात् अप्रतिष्ठश्च प्रजानुत्पत्त्या अप्राप्तनिष्ठः सन् पतति तस्मात्तदुत्पत्त्यर्थं यतितव्यमिति कल्पतरुः । एवञ्च श्राद्धदिने यदभिगमनं प्रागुक्तयाज्ञवल्क्यवचनादुक्तं मिताक्षरायां तद्धेयम् । वशिष्ठः "शूद्रान्नेन तु भुक्तेन मैथुनं योऽधिगच्छति । यस्यान्नं तस्य ते पुत्रा अस्वर्ग्याः शूद्रवद्द्विजाः । ऋतुस्नातां च यो भार्य्यां सन्निधौ नाधिगच्छति । स गच्छेन्नरकं घोरं ब्रह्महेति तथोच्यते" ॥ सन्निधावित्यभिधानादसन्निहितस्य गमनाभावे न दोषः । पुत्त्रोत्पत्तिपर्य्यन्तम् ऋत्वभिगमननियममाह विष्णुपुराणम् । "ऋतुकालाभिगामी स्यात् यावत् पुत्रो न जायते । ऋणापकर्षणार्थं हि पुत्त्रस्योत्पादनं प्रति" ॥ यतितव्यमिति शेषः । आपस्तम्बः । "ऋतौ तु गर्भशङ्कित्वात् स्नानं मैथुनिनः स्मृतम् । अनृतौ तु सदा कार्य्यं शौचं मूत्रपुरीषवत्" ॥ इति "द्वावेतावशुचौ स्यातां दम्पती शयनं गतौ । शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान्" ॥ मैथुनशुद्धेः पूर्वं मलमूत्रोत्सर्गं न कुर्य्यात् । "तैलाभ्यङ्गे तथा वान्ते श्मश्रुकर्मणि मैथुने ॥

मूत्रोच्चारं यदा कुर्य्यात् अहोरात्रेण शुद्ध्यति” इति यमवच- नात्। पुत्रानुत्पत्तौ पारस्करः। “सा यदि गर्भं नादधीत निदिग्धिकायाः सिंह्याः श्वेतपुष्पायाः उपोष्य पुष्येण मूलमु- द्धृत्य चतुर्थेऽहनि स्नातायां निशायामुदकेन पिष्ट्वा दक्षिणस्यां नासिकायामासिञ्चतीति। इयमोषधीत्रायमाणा सहमाना सरस्वती। अस्या अहं पुत्रः पितुरिव नाम जनयत्यभित इति” सा परिणीता ऋतुकाले कृताभिगमना यदि गर्भं न धारयति तदा उपोष्य पुष्ये नक्षत्रे श्वेतकण्टकारिकाया मूल- मुत्थाप्य चतुर्थेऽहनि ऋतुस्नातायां सत्यां रात्रावुदकेन पिष्ट्वा दक्षिणनासापुटे पतिरियमोषधीत्रायमाणा” इति मन्त्रेण सिञ्चति। “नस्यं दधाति दक्षिणहस्तानामिकाङ्गुष्ठाभ्यां गृहीत्वा प्राक्शिरः संविष्टाया इति” गोभिलस्मरणात्। आयुर्वेदीयेऽपि। “पिप्पल्या शृङ्गवेरञ्च मरिचं नागकेशरम्। आज्येन सह भुञ्जीत अपि वन्ध्या प्रसूयते। याज्ञवल्क्यः। “एवं गच्छन् स्त्रियं क्षामां मघां मूलञ्च वर्जयेत्। सदोपवी- तिना भाव्यं सदा बद्धशिखेन च। विशिखो व्युपवीतश्च यत् करोति न तत् कृतम्”। अत्र पूर्वार्द्धेनापि नित्यता उत्तरा- र्द्धेनापि कर्माङ्गता बोधिता अन्यथा उपवीताभावदशायां कृतं साङ्गमेव न स्यात्। पुरुषस्य प्रत्यवायी भवेत्। अत्र वदन्ति करोति कृतवान् कृतमित्यकृतत्वातिदेशः। पितृकृत्यादौ उप- वीतित्वाभावात् कथं न प्रत्यवायः न च बाधकाभावे सतीति पूरणीयम्। सदा पदसङ्कोचापत्तेः। न च पदाहवनीय इति वाच्यं सत्युपवीते यज्ञसूत्रान्तरमादाय प्राचीनावीति- त्वोपपत्तेः। अतएव व्युपवीत इत्यनेन पितृकृत्यादावव्युपवी- तोपयोग उक्तः तथा चात्र समुच्चय एवेति उच्यते “यज्ञोपवीति- निर्वर्त्त्यं ततः पर्य्युक्षणादिकम्”। इत्यत्र ततो यज्ञोपवीती

व्याख्यानात् तथाग्नौकरणहोमोऽपसव्येन वा कार्य्य इत्यत्र वाकारेण समुच्चयानुपपत्तेः ततश्च व्युपवीतपदं यज्ञसूत्रमात्रपरं सदोपवीतिनेत्यत्रापि यज्ञसूत्रधारणवतेत्यर्थः। न च मुख्याधारणेऽपि तत् स्यात्। धारणे विहिते इति विशेषणात्। न च मुख्यादिधारणं कुत्रापि कर्मणि विहितं न चैवं कर्माङ्गत्वेन सूत्रार्थत्वेन कर्माचरणकाले प्राचीनावीतित्वेनापि स्थित्यापत्तिः। उपनयनकाले यज्ञसूत्रविन्यासस्य प्राथमिकत्वात् औत्सर्गिकत्वेन बाधकं विना तदत्यागात्। "यस्य इन्द्रो सकृत् पुत्रं ब्राह्मणं जनयेत् पुमान्"। सकृदेकवारम् अत्र सम्यगाधानहेतुतया उत्तानकरचरणामेव कुर्वीत नातिर्य्यक् आहितकरचरणां स्त्रियम् ऋत्वभिगमनानन्तरं दक्षिणपार्श्वेण स्वापयेत्। पुरुषायिते तु गर्भानुत्पत्तिरिति शेषः। दक्षः। "प्रदोषपश्चिमौ यामौ वेदाभ्यासेन वै नयेत्। यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते"॥ इति ब्रह्मपुराणे। "इत्येतदखिलं प्रोक्तमहोरात्राश्रितं मया। ब्राह्मणानां कृत्यमेतदपवर्गफलप्रदम्॥ नास्तिक्यादथवालस्यात् ब्राह्मणो न करोति यः। स याति नरकं घोरं पशुयोनौ च जायते"॥ इति श्रीहरिहरभट्टाचार्य्यात्मज-श्रीरघुनन्दनभट्टाचार्य्य-विरचितमाह्निकाचारतत्त्वं सम्पूर्णमिति।

---

# प्रायश्चित्ततत्त्वम्।

नमो गणेशाय।

प्रणम्य सच्चिदानन्दं सृष्टिस्थित्यन्तकारिणम्।
प्रायश्चित्तस्य तत्त्वानि वक्ति श्रीरघुनन्दनः॥

"प्रायश्चित्तस्य लक्ष्मात्र तथा तन्त्रप्रसङ्गकौ। कर्त्तृसंस्कार-काङ्गानां प्रतिकर्म्मनिवर्त्तनम्॥ गोग्रासभक्षणाच्छुद्धिस्तद-भावादशुद्धता। प्रायश्चित्तं भवेन्नित्यं काम्यं नैमित्तिकन्तथा॥ काम्यादप्यङ्गहानौ स्यात् कियांस्तत्र फलोदयः। श्रद्धया लक्षणं पुण्यमज्ञानादपि सम्भवेत्॥ प्रायश्चित्ताद्दिजातीयात्ता-दृक् पापविनाशनम्। गोधूमावयवे यव्यावयवस्तत्र साधकम्॥ लाघवं गौरवं वीक्ष्य सकृदावृत्तितस्तथा। दानव्रतादिमन्त्रेण पापमात्रस्य नाश्यता॥ चान्द्रायणादौ ग्रासानां परिसंख्या-व्यवस्थितिः। प्रायश्चित्ते गुरौ भूते लघुपापस्य संक्षयः॥ गङ्गा-माहात्म्यविस्तारो रात्रावपि च तत् क्रिया। बालादिना कृते पापे प्रायश्चित्तस्य हीनता॥ प्रायश्चित्ते तु वक्तव्येऽनुग्रह-द्वयमेव हि। प्रायश्चित्तोपदेशादिचौराल्लाभविनिर्णयः॥ क्रयस्य निर्णयश्चैव तद्धानेः कालनिर्णयः। प्रायश्चित्तस्य पूर्वाह्णकृत्यं वाल्यभिदा तथा॥ धेनुमूल्यव्यवस्था च ज्ञानकृतनिरूपणम्। विप्रादिस्वामिभेदेन गोबधव्रतनिर्णयः॥ एकवर्षादिभेदेन रोधादेश्च निमित्ततः। अपालननिमित्तेन गोबधव्रतनिर्णयः॥ अपवादो गोबधस्य नरस्य च बधे तथा। चाण्डालपतिता-दीनामोदनादेश्च भक्षणे॥ प्रायश्चित्तविधिस्तत्र कृतघ्नस्य निरूपणम्। यवनादेस्तथोत्पत्तिस्तद्दास्यादौ व्रतन्तथा॥

अन्त्यजादेः स्त्रियाः सङ्गे भोजने च प्रतिग्रहे। चण्डालस्पृष्टतोयादौ गोमांसादौ च भक्षिते॥ भार्य्यायां मातृवचने उपवीतस्य भेदने। निबध्यन्तेऽत्र संक्षेपात् सतां मुदमभीप्सता। प्रायश्चित्तविवेकादावन्यज्ज्ञेयं विचक्षणैः" ॥

अथ प्रायश्चित्तलक्षणम्। तत्र हारीतः। "प्रयतत्वाद्वोपचितमशुभं नाशयतीति" प्रायश्चित्तमिति यत्तपःप्रभृतिकं कर्म्म उपचितं सञ्चितमशुभं पापं नाशयतीति कृततत्तत्कर्म्मभिः कर्त्तुः प्रयतत्वात् वा शुद्धत्वादेव तत् प्रायश्चित्तं तथाच। पुनर्हारीतः। "यथा क्षारोपस्वेदचण्डनिर्णोदनप्रक्षालनादिभिर्वासांसि शुद्ध्यन्ति एवं तपोदानयज्ञैः पापकृतः शुद्धिमुपयान्ति"। शुद्धिं पापक्षयम्। यथा महाभारते। "अद्भिर्गात्राम् मलमिव तमो ह्यग्निभयात् यथा। दानेन तपसा चैव सर्वपापमपोहति"॥ तेन पापक्षयमात्रसाधनत्वेन विधिबोधितं कर्म्म प्रायश्चित्तम्। मात्रार्थलाभस्तु प्रयतत्वाद्वेत्येवकारार्थकवाशब्दात्। तथाच विश्वः। "वाञ्चाहिकल्पोपमयोरेवार्थे च समुच्चये"। एवञ्च "अश्वमेधेन शुद्ध्यन्ति महापातकिनस्त्विमे"। इति विष्णूक्तस्याश्वमेधस्यापि प्रायश्चित्तत्वम्। पापक्षयस्वर्गोभयसाधकस्य तु तस्यापि न प्रायश्चित्तत्वम्। प्रायश्चित्तस्य स्वध्वंसादिजनकत्वेऽपि तदंशे विधिबोधितत्वाभावान्नासम्भवः।

अथ तन्त्रप्रसङ्गकौ। तत्रानेकमुद्दिश्य सकृत् प्रवृत्तिस्तन्त्रता। यथा दर्शपौर्णमासयोराग्नेयादीनाम्। यथाग्नेयाष्टाकपालोऽमावास्यायां पौर्णमास्याञ्चाच्युतो भवति उपांशुयाजमन्तरा यजति ताभ्यामग्नीषोमीयमेकादशकपालं पौर्णमासे प्रायच्छत् ऐन्द्रं दध्यमावास्यायामैन्द्रं पयो अमावास्यायामिति कर्म्मस्वरूपज्ञापकरूपोत्पत्तिश्रुत्युक्तानां षण्णां प्रधानयागानां

मध्ये आग्नेयाष्टाकपालेन्द्रदधिपयो यागानां त्रयाणाम् आग्नेयाष्टाकपालोपांशु-याजाग्नीषोमीयैकादश-कपाल—यागानां त्रयाणां सकृत् सकृदनुष्ठितेन प्रयाजाद्यङ्गेन उपकारः सिध्यति। प्रयाजादयश्च समिधो यजति तनूनपातं यजति इडो यजति बर्हिर्यजति स्वाहाकारं यजति इत्येवंरूपाः पञ्च। तथा नानाब्रह्मवधसत्त्वे सर्वोद्देशेन सकृत् प्रायश्चित्ते कृते सर्वब्रह्मवधजन्यपापनाशः। यथा वधानुवृत्तौ भविष्ये। "ब्राह्मणस्य ब्राह्मणयोर्ब्राह्मणानाञ्च पुत्रक। प्रायश्चित्तस्य चैकत्वं जातिमाश्रित्य लभ्यते॥ क्षामवत्यादिना यद्वत् कर्म्मणा पृतनापते। दैवदोषादकरणे जाते दोषकदम्बके॥ होमेनैकेन दोषाणां सर्वेषां क्षयमादिशेत्"॥ एवञ्च एकप्रायश्चित्तेनानेकदोषक्षयाय क्षामवतीष्टिः सर्वत्र दृष्टान्तः। तन्त्रताया हेतुश्च अदृष्टार्थकैजातीयकर्म्मणः कालदेशकर्त्रादीनां प्रयोगानुबन्धवैधहेतुभूतानामभेदे उद्देश्यविशेषाश्च इति। एवञ्च "स्नातोऽधिकारी भवति दैवे पैत्रे च कर्म्मणि"। इति विष्णूक्तम्। "अस्नात्वा नाचरेत् कर्म्म जपहोमादिकिञ्चन"। इति दक्षोक्तञ्च। क्रियाङ्गस्नानं कर्त्तृसंस्कारद्वारैव तद्दिनकर्त्तव्याशेषकर्म्मार्थमेकमेव न तु प्रतिकर्म्म कर्त्तव्यं तच्चारुणोदयस्नानादपि सिद्ध्यति। "सर्व्वमर्हति पूतात्मा प्रातःस्नायी जपादिकम्"। इति दक्षोक्तेः। "अस्नातस्य क्रियाः सर्व्वा भवन्तीह यतोऽफलाः। प्रातः समाचरेत् स्नानमतो नित्यमतन्द्रितः"॥ इति विष्णुधर्म्मोत्तराच्च। "अस्नातस्तु पुमान्नार्हो जप्यादिहवनादिषु। प्रातःस्नानं तदर्थन्तु नित्यस्नानमुदाहृतम्"॥ इति शङ्खवचनाच्च। प्रातरित्यरुणोदयकालपरम्। "प्रातःस्नायारुणकिरणग्रस्तां प्राचीमवलोक्य स्नायात्" इति विष्णुवाक्यैकवाक्यत्वात्। "सूर्य्योदयं विना नैव स्नानदानादिकाः क्रियाः"

इति तु अह:स्नानप्रधानकालपरम् । "दिवाकरकरैः पूतं दिवास्नानं प्रशस्यते" । इति पराशरेण प्रशस्यते इत्येकवाक्यत्वात् एवञ्च "प्रदोषे घटिकायुग्मं प्रभाते घटिकाद्वयम् । दिनवत् सर्वकर्म्माणि कारयेन्न विचारयेत्" इति हलायुधधृतवचनम् गौणकालपरम् । घटिकाऽत्र दण्डद्वयम् । "त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम् । नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते"॥ इत्येकवाक्यत्वात् तथा चामरः । त्रियामा क्षणदा क्षपा इति यद्वा सूर्य्योदयपदं सूर्य्यकरस्पर्शपरम् । विष्णुपुराण एव अनुदितसूर्य्ये कर्मानधिकारमुक्त्वा अंशुस्पर्शे कर्माधिकारविधानात् । यथा "सत्कर्मयोग्यो न जनोनैवापः शुद्धिकरणम् । यस्मिन्ननुदिते तस्मै नमो देवाय भास्वते । स्पृष्टो यदंशुभिर्लोकः क्रियायोग्योऽभिजायते । पतिव्रता कारणाय तस्मै शुद्धात्मने नमः" ॥ सूर्य्योदयात् प्रागपि प्रकाशेन तत्करस्य विद्यमानत्वात् । एवञ्च "उपस्पृश्य द्विजो नित्यं शुद्धः पूतो भवेन्नरः" ॥ इति मरीच्युक्ताचमनेन कर्त्तुः संस्काराभिधानात् । शुद्धः प्रक्षालितपाणिपाद इत्यर्थः । "यज्ञोपवीतिना आचान्तोदकेन कृत्यम्" । इति गोभिलोक्तं "क्रियां यः कुरुते मोहादनाचम्यैव नास्तिकः । भवन्ति हि वृथा तस्य क्रियाः सर्वा न संशयः" ॥ इति वायुपुराणोक्तञ्च । कर्माङ्गाचमनं प्रयतेन प्रतिकर्म न कर्त्तव्यम् अतएव पाठकामस्यैव प्रयतस्याचमनं विशिष्य । मन्वत्रयङ्गिरो वृहस्पतय आहुः । यथा "सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वानृतं वचः । पीत्वापोऽध्येष्यमानश्च आचामेत् प्रयतोऽपि सन्" ॥ भक्तुकामस्याप्याहापस्तम्बः । "भोक्ष्यमाणः प्रयतोऽपि द्विराचमेत्" । इति तच्च द्विजस्य ब्राह्मेण तीर्थेन । तथा याज्ञवल्क्यः । "प्राग् ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत्" । प्राक्प्राङ्मुख उप-

स्पृशेत् आचामेत् द्विजो न स्त्रीशूद्राविति मिताक्षरा। स्त्रीशूद्रयोस्तु दैवेन तीर्थेन। यथा नारदः "स्त्रियास्तैदशिकं तीर्थं शूद्रजातेस्तथैव च। सकृदाचमनाच्छुद्धिरेतयोरेव चोभयोः"॥ एवञ्च साधारणाङ्गमात्रे प्रधानदेशकालान्वयानियम इत्युक्तम्। यत्तु अङ्गानां प्रयोगविध्यैक्ये हि तन्त्रतेत्युक्तम्। तत्कर्त्तृसंस्कारकाङ्गभिन्नानामेव यथा श्राद्धभेदेऽर्घ्यादीनामिति।

अथ प्रसङ्गः। अन्योद्देशेन प्रवृत्तावन्यस्यापि सिद्धिः प्रसङ्गः। यथा पश्वर्थमनुष्ठितेन प्रयाजादिना पशुतन्त्रमध्यपातिनः पुरोडाशस्यापि उपकारः सिद्ध्यति। यथा वा तप्ते पयसि दध्यानयति। सा वैश्वदेव्यामिक्षा भवति वाजिभ्यो वाजिनमित्यत्रामिक्षार्थं प्रवृत्तौ अनुद्दिश्य वाजिनस्यापि सिद्धिः। अतएव क्वचिदपचारे आमिक्षा पुरुषं प्रयोजयति न तु वाजिनम्। तस्य प्रसङ्गसिद्धत्वादित्युक्तम्। आमिक्षा घनीभूतं पयः। तथाच भट्टवार्त्तिकम्। "पय एव घनीभूतमामिक्षेत्यभिधीयते"। तदवशिष्टं जलं वाजिनम्। यथा वा काम्ययागनिष्पत्त्यर्थमनुष्ठितैराग्नेयादिभिर्नित्ययागसिद्धिरिति मिताक्षरोक्तम्। यथा वा दण्डनिपातप्रायश्चित्तेनैव गुरुणा तन्नान्तरीयकावगोरणप्रायश्चित्तमपि सम्पद्यत इति प्रायश्चित्तविवेकोक्तम्। तथा ब्राह्मणवधोद्देशेन द्वादशवार्षिके कृते क्षत्रियवधनिमित्तकत्रैवार्षिकप्रायश्चित्तस्य सिद्धिः। एवञ्च तन्त्रप्रसङ्गयोरनावृत्तेनैव कर्मणा नानादृष्टफलसिद्धौ लाघवमेव हेतुः। नन्ववगोरणक्षत्रियवधप्रायश्चित्तयोः कथं प्रसङ्गेन सिद्धिः सङ्कल्पादेरभावात् तयोः सङ्कल्पादिः कुत इति चेत् प्रायश्चित्तत्वात् तथात्वेऽपि कथं सङ्कल्प इति चेत् काम्यत्वात्। काम्यत्वमाह जावालः। "काम्यानां स्वफलार्थञ्च दोषघातार्थमेव च। अतः काम्यं नैमित्तिकञ्च प्रायश्चित्तमिति स्थितिः"॥ सहजतश्चन्द्र-

लोकावाप्तादिफलकत्वेन काम्यानां चान्द्रायणादीनां क्वचित् स्वफलार्थं क्वचिद्दोषघातार्थञ्च कर्त्तव्यत्वं तत्र स्वफलार्थं स्वं चान्द्रायणादिकं फलं येषां पापानां तानि तथा तदर्थं तन्निमित्तं पापनिमित्तमिति यावत् । पापज्ञानवतएव चान्द्रायणाद्याचरणात् । तत्फलत्वम् अतो नैमित्तिकत्वं दोषघातार्थम् अतः काम्यत्वम् आसत्तिक्रमेणान्वयः । अतः पापक्षयकामभावदधिकारिकर्त्तव्यत्वेन पापनिश्चयवदधिकारिकर्त्तव्यत्वेन च काम्यत्वं नैमित्तिकत्वञ्चेति द्वयोरेवावगम्यमानत्वात् जातेष्टिवदधिकारयोः सम्बलनम् इति एवञ्च काम्यस्य सर्वप्रत्ययधिकरणे सर्वाङ्गोपेतस्यैव फलवत्त्वाभिधानात् तस्यापि प्रसङ्गविषयत्वेन काम्ये हि काम्याभिलापसहितकुशतिलजलत्यागरूपः सङ्कल्पः शास्त्रार्थ इति प्रक्रमाधिकरणोक्तेन । "प्रत्येकं नियतं कालमात्मनो व्रतमादिशेत् । प्रायश्चित्तमुपासीनो वाग्यतस्त्रिसवनं स्पृशेत्" ॥ इति शङ्खलिखितवचने प्रत्येकं नियतं कालमिति तत्तत्व्रतकालसंख्याम् आत्मनो व्रतम् आत्मसम्बन्धित्वेन आत्मकर्तृत्वेन इति यावत् । तेनामुकव्रतमहं करिष्ये इति चादिशेदुल्लेखं कुर्य्यात् इत्यनेन च प्राप्तस्य सङ्कल्पस्य बाधः । एवं तदन्ते दक्षिणायाः शुद्ध्यर्थं श्राद्धस्य च बाधः । तदभिहितं भविष्ये । "क्रियते शुद्धये यत्तु ब्राह्मणानाञ्च भोजनम् । शुद्ध्यर्थमिति तत् प्रोक्तं वैनतेयमनीषिभिः" ॥ यत्तु शुद्धये इति प्रायश्चित्तादौ तदाह जावालः । "प्रारम्भे सर्वकृच्छ्राणां समाप्तौ च विशेषतः । श्राद्धं कुर्य्यात् व्रतस्यान्ते गोहिरण्यान्नदक्षिणम्" इति । वाचस्पतिमिश्र आह । तत्र समाप्तावित्यस्य व्याख्यातत्वात् व्रतस्यान्ते इत्यस्य पुनरुक्तत्वापत्तेश्च । श्राद्धविवेककारास्तु आरम्भ इत्यर्द्धानन्तरम् "आज्येनैव हि शालाग्नौ जुहुयात् व्याहृतीः पृथक्" । इत्यर्द्धमधिकं

लिखितवन्तः। प्रायश्चित्तानन्तरं पापक्षयार्थं श्राद्धं कर्त्तव्यमिति व्याख्यातवन्तश्चेति। शालाग्नावित्युपादानात् साग्नेरेव होमः। व्रतस्यान्त इति प्रायश्चित्तमात्रस्योपलक्षणम्। भविष्ये शुद्धये इति सामान्यतोऽभिधानात्। अन्यथा त्रैमासिकव्रताद्युक्तदक्षिणाविशेषस्तदनुकल्पधेनुदानादौ प्रायश्चित्तविवेकाद्युक्तोऽपि न स्यात्। "वृषभैकादशा गाश्च दद्यात् सुचरितव्रतः" इत्यभिधानात्। एवञ्च शुद्धिहेतुपार्वणश्राद्धं जीवत्पितृकेणापि कर्त्तव्यं संस्काराङ्गवृद्धिश्राद्धवत्। "जीवे पितरि वै पुत्रः श्राद्धकालं विवर्ज्जयेत्। येषां वापि पिता कुर्य्यात् तेषामेके प्रचक्षते" ॥ इति हारीतवचनोत्तरार्द्धेन प्रधानसाङ्गतार्थं श्राद्धविधानात्। एवं प्रायश्चित्तोत्तरकर्त्तव्यपापक्षयज्ञापकगोग्रासस्यापि वाधः। यथा चरितव्रतविधौ याज्ञवल्क्यः। "घटेऽपवर्जिते ज्ञातिमध्यस्थो यवसं गवाम्। प्रदद्यात् प्रथमं गोभिः सत्कृतस्य हि सत्क्रिया" ॥ अपवर्जिते प्रक्षिप्ते। "प्रायश्चित्ते तु चरिते पूर्णकुम्भमपां नवम्। तेनैव सार्द्धं प्रास्येयुः स्नात्वा पुण्यजलाशये" ॥ इति मनूक्तेः। तेन ज्ञातिना प्रास्येयुः क्षिपेयुः कृतप्रायश्चित्ता इति शेषः। गवां सत्कारश्च तद्दत्ततृणभक्षणमेव। यदि तु गावस्तद्दत्तयवसं न गृह्णीयुस्तदा पुनः प्रायश्चित्तमनुतिष्ठेत्। यथा हारीतः। "स्वशिरसा यवसमादाय गोभ्यो दद्यात् यदि ताः प्रमुदिता गृह्णीयुरथैनं प्रावर्त्तयेयुरिति"। एनं कृतप्रायश्चित्तम् इतरथा नेत्यभिप्रेतमिति मिताक्षरा। एवञ्च हारीतयाज्ञवल्क्यवचनैकवाक्यतया वक्ष्यमाणमनुवचनद्वयमपि सामान्यप्रायश्चित्तोत्तरकर्त्तव्यतापरम्। न तु प्रकरणादसत्प्रतिग्रहमात्रपरं ततश्चासत्प्रतिग्रहमात्रपरतया यत् कुल्लूकभट्टव्याख्यानं तत् प्रदर्शनमात्रपरम्। एवं घटापवर्जनमपि न पतितमात्रविषयम्। यथा मनुः।

"उपवासकृशं तन्तु गोव्रजात् पुनरागतम् । प्रणतं परि-पृच्छेयुः साम्यं सौम्येच्छसीति किम् । सत्यमुक्ता तु विप्रेषु विकिरेत् यवसं गवाम् । गोभिः प्रवर्त्तिते तीर्थे कुर्य्युस्तस्य परिग्रहम्" ॥ सत्यमिति नाहमेतत् पापं करिष्यामीति । तीर्थे गोभिस्तृणभक्षणेन पवित्रीकृते देशे । उच्यते । प्रायश्चित्तस्य नित्यत्वेनाङ्गवैकल्येऽपि फलसिद्धिः । तथाच प्रायश्चित्तस्य नैमित्तिकत्वं निमित्तत्वञ्च मिताक्षराकृदाह । नैमित्तिकोऽयं प्रायश्चित्ताधिकारः । अत्र चार्थवादावगतपापक्षयेऽपि जाते-ष्टिन्यायेन साध्यतया स्वीक्रियते । न च दुरितपरिजिहीर्षु-णानुष्ठीयते एतावता काम्याधिकारमात्रशङ्का न कार्य्या । यस्मात् । "चरितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये । निन्द्यैश्च लक्षणैर्युक्ता जायन्ते निष्कृतैनसः" ॥ इति मनुवचनेऽकरणे दोषश्रवणेनावश्यकतावगमात् । तथाच याज्ञवल्क्यः । "प्राय-श्चित्तमकुर्वाणाः पापेषु निरता नराः । अपश्चात्तापिनः कष्टा-न्नरकान् यान्ति दारुणान्" ॥ प्रायश्चित्तमकुर्वाणा दुःसहान्न-रकान् प्राप्नुवन्ति इत्यन्तेन । वस्तुतस्तु पूर्वोक्तमनुवचने नित्य-मिति श्रवणात् नित्यत्वम् अतएव सर्वैरेव निबन्धृभिः श्राद्ध-विशेषस्य नित्यत्वे एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजा-पतिरित्युक्तम् । तथाचोक्तं "नित्यं सदा यावदायुर्न कदाचिद-तिक्रमेत् । उपेत्यातिक्रमे दोषश्रुतेरत्यागदर्शनात् ॥ फलाश्रु-तेर्वीप्सया च तन्नित्यमिति कीर्त्तितम् । तस्मात् कर्त्तव्यमेवेह प्रायश्चित्तं विशुद्धये" ॥ इति शङ्खलिखितवाक्ये एवकारेण नियमादवश्यं करणं प्रतीयते । अवश्यकरणञ्चाकरणान्नि-वृत्तिः तदतिक्रमे तु "विहितस्याननुष्ठानान्निन्दितस्य च सेव-नात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति" ॥ इति याज्ञवल्क्यवचने प्रत्यवायश्रुतेः । नित्यत्वम् अङ्गिरसापि ।

"कृते निःसंशये पापे न भुञ्जीतानुपस्थितः। भुञ्जानो वर्द्धयेत् पापमसत्यं पर्षदिब्रुवन्" ॥ इत्यनेन पापवतो भुञ्जानस्य प्रायश्चित्तार्थमनुपस्थितस्य पापवृद्धिदर्शनात् प्रायश्चित्तस्य नित्यत्वमभिहितम्। यथा स्मृतिसागरे देवलः। "कालातिरेके द्विगुणं प्रायश्चित्तं समाचरेत्। द्विगुणं राजदण्डञ्च दत्त्वा शुद्धिमवाप्नुयात्" ॥ कालातिरेके संवत्सरातिरेके। "संवत्सराभिशस्तस्य दुष्टस्य द्विगुणो दमः"। इति मनुवचने संवत्सरात् परतो द्विगुणदण्डदर्शनेन दण्डवत् प्रायश्चित्तानि भवन्तीति न्यायेन एकत्र निर्णीतः शास्त्रार्थो बाधकमन्तरेणान्यत्रापि तथा इति न्यायाच्च। आकाङ्क्षितत्वेन प्रायश्चित्तेऽपि तथैव युक्तत्वात्। अधिकन्यूनकाले तु तदनुसारादेव व्यवस्थेति। अतएव यथा "क्षारोपस्वेदचण्डनिर्णोदनप्रक्षालनादिभिर्वासांसि शुद्ध्यन्ति एवं तपो दानयज्ञैः पापकृतः शुद्धिमुपयान्ति ध्मायमाना इव धातवोऽग्नौ दोषेभ्यस्तस्मात् विश्रम्भात् स्नेहात् लोभात् भयात् प्रमादाद्वा अशुभं कृत्वा सद्यः शौचमारभेत्" इति हारीतेन सद्यः करणमुक्तम्। अत्रापि व्यवहारचिन्तामणौ विशेषः। "नाष्टम्यां न चतुर्दश्यां प्रायश्चित्तपरीक्षणे। न परीक्षा विवाहस्य शनिभौमदिने तथा" ॥ एवञ्च प्रायश्चित्तस्य नित्यत्वे जावालोक्तं काम्यत्वं कथं सङ्गच्छते। काम्यत्वं हि अनित्यत्वम् असति कामे परित्यक्तुं शक्यत्वात्। तथा सत्येकस्य कर्म्मणो नित्यत्वकाम्यत्वाभ्यां द्वैरूप्याङ्गीकारे नित्यानित्यसंयोगविरोधः। मैवं संयोगपृथक्त्वन्यायात् स च न्यायश्चतुर्थाध्याये उक्तः यथा "खादिरे पशुं बध्नाति खादिरं वीर्य्यकामस्य यूपं कुर्वीत" इति श्रूयते अत्र संशयः काम्यस्यैव खादिरता नित्येऽपि स्यात् उत नेति। तत्र फलार्थत्वेनानित्यतया खादिरताया नित्यप्रयोगाङ्गता न

युक्ता। यच्च नित्येऽपि खादिरत्वश्रवणं तत्काम्यस्यैव पशुबन्धनाय यूपाश्रयज्ञापनार्थमतो न नित्ये खादिरतेति प्राप्तेराद्यान्ताय चतुर्थाध्यायसूत्रम्। एकस्योभयत्वेऽसंयोगपृथक्त्वमिति। तत्र संयोगः सम्बन्धमात्रम्। एकस्य खादिरस्य क्रत्वर्थत्व पुरुषार्थत्व रूपोभयात्मकत्वे वाक्यद्वयेन च क्रतुशेषत्व फलशेषत्व लक्षणसंयोगभेदावगमात् न नित्यानित्यसंयोगविरोधः। न चाश्रयज्ञानार्थं नित्यवाक्यम्। सन्निधानादेवाश्रयलाभात् अत उभयार्था खादिरतेति। एवं "दध्ना जुहोति दध्नेन्द्रियकामस्य" इत्यादावुभयार्थतैव दधित्वस्य द्वेधाश्रवणात्। तस्मात् प्रायश्चित्तं नित्यं नैमित्तिकं काम्यञ्चेत्यतो यत्र प्रसङ्गसम्भावना तत्र नित्यत्वात् काम्याभिलापदक्षिणाद्यङ्गं विनाऽपि प्रधाननिष्पत्त्या फलनिष्पत्तिः। अतएव "क्षयं केचिदुपात्तस्य दुरितस्य प्रचक्षते। अनुत्पित्तं तथा चान्ये प्रत्यवायस्य मन्वते॥ नित्यक्रियां तथा चान्ये ह्यनुसङ्गफलां श्रुतिम्"॥ इति जावालभविष्यपुराणाभ्यां सङ्कल्पादिकं विनाऽपि सन्ध्यादिवत् नित्यकर्मणा कृतेनैव पापक्षय उक्त इति। नित्यक्रियां नित्या क्रिया यस्याः श्रुतेः तां प्राप्येति शेषः। फलमिति पाठे तु छान्दसत्वम्। केवलावगोरणादौ प्रकारान्तरकृतप्रधाननिष्पत्तिरूप-बाधकाभावेन काम्यत्वात् काम्याभिलापादिरपि क्रियते। वस्तुतस्तु काम्ये नित्ये वा वैदिकमात्रे यथा कथञ्चित् प्रधाननिष्पत्तौ नाङ्गानुष्ठानार्थं प्रधानावृत्तिः। तथाच छन्दोगपरिशिष्टम्। "प्रधानस्याक्रिया यत्र साङ्गं तत् क्रियते पुनः। तदङ्गस्याक्रियायान्तु नावृत्तिर्न च तत्क्रिया"॥ अतएव नान्दीमुखश्राद्धप्रकरणशेषे प्रधानानामपि काम्यानां तत्तद्द्रव्यकालविहितानां तन्त्रेणैव सिद्धिरिति श्राद्धचिन्तामणिः। अथैवं मुमुक्षोर्नित्यकरणात् कथं न काम्यफलसिद्धिरिति चेन्न।

"सम्यक् संसाधनं कर्म कर्त्तव्यमधिकारिणा। निष्कामेण सदा पार्थ काम्यं कामान्वितेन च" ॥ इति भविष्यपुराणेन स्वर्गादिकाम्ये कामनावतएवाधिकारात् अतएव काम्यो नैमित्तिको वार्थो नित्यमर्थं विकल्याभिनिविश्यते न नित्य इत्युक्तम्। द्वादशाध्याये सम्यक्संसाधनं प्रथमकल्पादिना-करणं यस्य तत्तथा। अधिकारिणार्थिना विदुषा समर्थेन। निष्कामेणेति नित्यपरं मुमुक्षुपरञ्च। अतएव मार्कण्डेयपुराणेऽपि फलार्थिनं प्रति तत्तत्फलदातृत्वं तदनर्थिनं मुमुक्षुं प्रति मुक्तिदातृत्वं पितॄणामाह रुचिः। "पितॄन्नमस्ये दिवि ये च मूर्त्ताः स्वधा भुजः काम्यफलाभिसन्धौ। प्रदानशक्ताः सकलेप्सितानां विमुक्तिदा येऽनभिसंहितेषु" ॥ एवं देवता-नामपि फलदातृत्वमधिकारिभेदेनेति।

अथाङ्गहीने काम्येऽपि फलम्। ननु काम्ये अङ्गाभावे फलसिद्धौ साङ्गाद्धि वैदिककर्म्मणः फलावश्यम्भावनियम इत्यस्य सर्वशक्त्यधिकरणोक्तस्य का गतिरिति चेत् समग्रफलविषयतया गृहाण तथाच कल्पतरौ योगियाज्ञवल्क्यः। "श्रद्धाविधि-समायुक्तं कर्म्म यत् क्रियते नृभिः। सुविशुद्धेन भावेन तदा-नन्त्याय कल्पते" ॥ श्रद्धा शास्त्रार्थे दृढ़प्रत्ययः। "प्रत्ययो धर्म्मकार्य्येषु तथा श्रद्धेत्युदाहृता। नास्ति ह्यश्रद्दधानस्य धर्म-कृत्ये प्रयोजनम्" ॥ इति देवलवचनात्। अत्राङ्गप्रकर्षेण फलप्रकर्ष उक्तः। अङ्गाप्रकर्षे तु न फलाभावः। किन्तु फलाल्पत्वमाह योगियाज्ञवल्क्यः। "आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च। वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः" ॥ मन्त्राणामित्यनुषज्यते। विशेषतो विशेष-फलाय। "अविदित्वा तु यः कुर्य्यात् याजनाध्यापनं जपम्। होममन्तर्जलादीनि तस्य चाल्पफलं भवेत्" ॥ अन्तर्जलादीनि

जलमध्यक्रियमाणानि अघमर्षणजपादीनि। होममन्यच्च यत्किञ्चिदिति क्वचित्पाठः। अतएव प्रतिनिधावङ्गहानेरावश्यकत्वेऽपि काम्यायामपि देवप्रतिष्ठायां विहितद्रव्याभावे प्रतिनिधिमाह कल्पतरौ भविष्यपुराणम्। "काञ्चनं हरितालञ्च सर्वाभावे विनिक्षिपेत्। दद्याद्वौजौषधिस्थाने सहदेवां यवानपि"॥ सहदेवा मेदिन्युक्ता यथा "सहदेवा बला दण्डोत्पलयोः शारिवौषधौ। सहदेवौ तु सर्प्याक्ष्यां सहदेवौ तु पाण्डवौ"। प्रायश्चित्तविवेकेऽपि पापवत् पुण्येऽपि अज्ञानात् ज्ञाने द्वैगुण्यमाहापस्तम्बः। "यः प्रमत्तो हन्ति प्राप्नोति दोषफलं सङ्कल्पेन भूय एवमन्येष्वपि दोषवत्सु कर्मसु तथा पुण्यक्रियासु च"। यथा ब्रह्मवधादिषु पापस्य निषिद्धतयोपयुक्तब्राह्मणादिज्ञाने द्वैगुण्यं तथा गङ्गास्नानादिषु पुण्यस्य विधेयतावच्छेदकगङ्गादिज्ञाने द्वैगुण्यं ततश्च गङ्गादिज्ञानं विनापि पुण्यं भवत्येव किन्तु गङ्गादिज्ञानात् यथा न तथेति एवञ्चाज्ञानतः पुण्यकर्मणः स्वर्गादिकामनां विनापि तत्तत्फलसिद्धेर्न कामनाया अवश्यापेक्षा अतएव प्रासङ्गिकी फलसिद्धिरप्युपपन्ना अतएव विष्णुपुराणे। आकाशवागपि "अनुक्तापि वचः किञ्चित् कृतं भवति कर्मणः" इति प्रासङ्गिकादितरत्र ज्ञानकृतपुण्यकर्मणि तु स्वर्गादिकामनायाः सम्भवात् द्वैगुण्यफलार्थं कामनाद्यपेक्षन्ते धीमन्तः। व्यक्तं प्रतिष्ठाकाण्डे कल्पतरौ विष्णुसर्पणे भविष्यपुराणम्। "दुष्कृतं सुकृतं वापि ज्ञानतोऽज्ञानतोऽपि वा। तत्सर्वमात्मना सार्द्धं मया तुभ्यं निवेदितम्"॥ एवं ज्ञानाभावादभिलापादेः कः प्रसङ्गः तथा च विष्णुपुराणम्। "भगवद्विष्णोः पादाङ्गुष्ठविनिर्गतजलस्यैतन्माहात्म्यं यन्न केवलमभिसन्धिपूर्वकस्नानाद्युपयोगिषूपकारकमनभिसंहितमप्यपेतप्राणस्यास्थिचर्मस्नायुकेशाद्युत्सृष्टं शरीर-

जमपि तदुपरि पतितं सद्यः शरीरिणं स्वर्गं नयति" इति तथा शिवरात्रिव्रते दैववशसम्पन्न लुब्धदेहसंसर्गेण जलश्रीफलपत्र पातादिनापि श्रीमहादेवपादादीनां प्रीतिरित्यादि दर्शनाच्चा-ङ्गहीनादपि प्रधानात् फलसिद्धिः । अतएव लोके पुण्यबुद्धा अर्घ्याद्यङ्गं विनापि यथा कथञ्चित् दीयते इति व्यवहारः तथा च दानरत्नाकरे । "सर्वत्र गुणवद्दानं श्वपाकादिष्वपि स्मृतम् । देशे काले विधानेन पात्रे दत्तं विशेषतः" ॥ गुणवत् फलवत् देशे स्वभावतः कृष्णसारप्रचरणदेशे अत्रापि स्वभूमौ परभूमौ तु तदनुमतायाम् । तथा च महाभारतम् । "नाननुज्ञात-भूमिर्हि यज्ञस्य फलमश्नुते" ॥ यज्ञस्येति वैदिककर्मोपलक्ष-णम् । काले रात्र्यादीतरत्र विधानेन प्राङ्मुखत्वादिना । पात्रे विद्यातपस्या युक्ते । दत्तं दानं विशेषतः समग्रफलार्थ-त्यर्थः । तथा च दृष्टान्ततया ज्ञानकृतपापस्य भवदेवभट्टेनापि शूद्रगतवस्त्रादिदानकामस्यैव भ्रान्त्या ब्राह्मणगतवस्त्रादिदान-त्वेऽपि न कामनाकृतब्राह्मणगतदानफलम् । अपि तु ब्राह्मण-गतदानमात्रफलम् इत्यभिहितम् । एवञ्च दानादिकर्म मया कर्त्तव्यम् इति सम्यक्सङ्कल्पजनितेच्छापि धर्मकारणम् । "सम्यक्सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम्" ॥ इति याज्ञ-वल्क्यवचनात् । तथा "धर्माय पुनरारम्भः सङ्कल्पोऽपि न निष्फलः" इति तट्टीकायां यत्तु योगियाज्ञवल्क्यवचनम् । "विधिहीनं भवेद्दुष्टं कृतमश्रद्धया तु यत् । तद्धरन्त्यसुरा-स्तस्य मूढस्य दुष्कृतात्मनः" इति तत् पूर्वोक्तश्रद्धाविधिसमा-युक्तमित्यस्य प्रशंसार्थम् । यथा व्यस्ततिथेर्निन्दा युग्मतिथेः प्रशंसार्था अन्यथा वाक्यभेदः स्यात् पूर्वोक्तापस्तम्बवचनविरो-धश्च स्यात् ।

अथ विजातीयप्रायश्चित्तात् विजातीयपापनाशः । तथा

च प्रायश्चित्तविवेके दण्डनिपातप्रायश्चित्तेनैव गुरुणा तन्नान्तरीयकस्यावगोरणस्य प्रायश्चित्तमपि सम्पद्यते इत्युक्तम्। ननु दण्डनिपातप्रायश्चित्तात् तदनन्तःपातिनोऽवगोरणप्रायश्चित्तस्य कथं सिद्धिः। तथा हि मनुः। "अवगूर्य्य चरेत् कृच्छ्रमतिकृच्छ्रं निपातने"॥ अवगूर्य्य ब्राह्मणताड़नार्थं दण्डमुद्यम्य शतयातनाजनकं यत् पापमुत्पादितं तत्पापक्षयकामः कृच्छ्रं प्राजापत्यव्रतं चरेत्। तदुक्तं शंयुधिकरणे। शंयोः प्रजापतेः प्रार्थनया देवैर्ब्राह्मणावगोरणफलत्वेन शतयातनाभिहिता। तथा च श्रुतिः। "शंयुः प्रजापतिः प्रजाविनेता प्रजाहितेरतस्य देवानां हविर्वहन्नाशिषोऽयाचत देवास्त्ववगोरणेशतयातनास्त्वित्याशिषो ददत" इति शास्त्रदीपिकादौ दर्शपौर्णमासप्रकरणे "देवा वै शंयुं वार्हस्पत्यम् अब्रुवन् हव्यं नोवहेति किं मे प्रजाया इति ते ब्रुवन् यो ब्राह्मणायावगुरेत्तं शतेन यातयेद् यो निहन्यात्तं सहस्रेण यो लोहितमकरोत् यावतः पांशून् व्यनक्ति तावतः परिवत्सरान् स स्वर्गात् प्रच्यवेत् तस्मात् ब्राह्मणान्नावगुरेत् न हन्यात् न लोहितं कुर्य्यात् इति"। इतिहासात्मकं ब्राह्मणञ्च। अत्र संशयः। ब्राह्मणावगोरणादिनिषेधोऽयं दर्शार्थः पुरुषार्थो वेति। अत्र पूर्वपक्षः। प्रकरणात् दर्शार्थोऽयं दर्शेऽवगोरणादिकं न कार्य्यमित्यर्थः। तदुक्तं फलाभावात् क्रतोश्चापि प्रकृतत्वात् तदर्थता इति अत्र राद्धान्ताय जैमिनिसूत्रम्। शंयौ सर्वपरीदानादिति। शंयौ शंयुपदयुक्तप्रागुक्तब्राह्मणसंज्ञकवेदेऽवगोरणाद्यभावो न दर्शयागाङ्गं कुतः सर्वपरीदानात् प्रकरणात् वाक्यस्य बलवत्त्वेन सर्वस्मिन् कालेऽवगोरणादीनां खण्डनात् तदुक्तम्। "क्लृप्तत्वात्तु फलस्यायं पुरुषार्थो न तु क्रतोः इति"॥ ननु कथमाशु विनाशिनोऽवगोरणस्य कालान्तरभाविशतयातनाहेतुत्वम् इति

चेन्न हेतुहेतुमतोर्लिङिति पाणिनिसूत्रानुशिष्टलिङावगोरण-शतयातनयोर्हेतुहेतुमद्भावोऽवगम्यते। आशुविनाशिनस्तदनु-पपत्त्या तद्द्वारीभूतदूरितापूर्वकल्पनात्। एवं पञ्चम्या तृतीयया विशेषणेन च साधनत्वं प्रतीयते। यथा याज्ञवल्क्यः। "विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्। अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति"॥ मनुः। "शरीरजैः कर्मदोषैर्याति स्थावरतां नरः। वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम्"। यमः। सुरापो ब्रह्महा गोघ्नः सुवर्णस्तेयकृन्नरः। पतितैः संप्रयुक्तश्च कृतघ्नो गुरुतल्पगः। एते पतन्ति सर्वेषु नरकेष्वनुपूर्वशः"॥ अत्रैते सुरापादयः पतन्तीति सुरापादीनां पतनकर्त्तृत्वावगतेः। कर्त्तृत्वञ्च साधनत्वविशेषः। अतः सुरापानादिविशिष्टस्य पतनसम्बन्धे विशेषणस्य सुरापानादेः पतनसाधनत्वमवगम्यते। तत्र चिरध्वस्तं फलायालं न कर्मातिशयं विना"इति न्यायेनावगोरणादेर्व्यापाररूपं पापं शतयातनादेः कारणं कल्प्यते। अत्र यद्यपि पापस्य कार्य्यानन्वितत्वात् तत् सत्तायामप्रामाण्यं प्रतिभाति। यदाह जैमिनिः। "आम्नायस्य क्रियार्थत्वात् आनर्थक्यमतदर्थानामिति"आम्नायस्य वेदस्य क्रियार्थत्वात् कार्य्यप्रतिपादकत्वात् प्रामाण्यमिति शेषः। एतदर्थानां कार्य्यप्रतिपादकानाम् आनर्थक्यम् अप्रमाण्यमिति तथापि "विधिनात्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युस्तद्वद्भूतार्थानां क्रियार्थेन सह आम्नायादिति" आभ्यां जैमिनिसिद्धान्तसूत्राभ्यां क्वचिद्विधिशक्तिरेवावसीदन्तीत्यादिभिरुत्तभ्यते। इति विध्येकवाक्यत्वात् क्वचिद्भूतार्थानां सिद्धार्थानां क्रियार्थत्वेन सहैकवाक्यत्वाच्च प्रामाण्यमुक्तं तथा अत्रापि "क्षारोपस्वेदचण्डनिर्णोदनक्षालनादिभिर्वासांसि शुध्यन्ति। एवं तपोदानयज्ञैः पापकृतः शुद्धिमुपयन्ति ध्मायमाना इव

धातवोऽग्नौ दोषेभ्यस्तस्मात् विस्रमस्मात् स्नेहात् लोभाद्भयादशुभं कृत्वा सद्यः शौचमारभेदिति" हारीतादिप्रायश्चित्तविधिवाक्यसमभिव्याहारात् पापस्य सत्त्वे प्रामाण्यम् इति याज्ञवल्क्यः। "विप्रदण्डोद्यमे कृच्छ्रमतिकृच्छ्रं निपातने"।

कल्पतरुमिताक्षरयोर्गौतमः। "अथातः कृच्छ्रान् व्याख्यास्यामो हविष्यान् प्रातराशान् भुक्त्वा तिस्रो रात्रीर्नाश्नीयादथापरं त्र्यहं नक्तं भुञ्जीत अतःपरं त्र्यहं न कञ्चन याचेत अथापरं त्र्यहमुपवसेत्" इति। अयमेव मनुना प्राजापत्यत्वेन परिभाषितो यथा। "त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम्। त्र्यहं परन्तु नाश्नीयात् प्राजापत्यं चरन् द्विजः"॥ ग्राससंख्या पराशरेणोक्ता। "सायं द्वाविंशतिर्ग्रासाः प्रातः षड्विंशतिः स्मृताः। अयाचिते चतुर्विंशः परश्चानशनं स्मृतम्"॥

अतिकृच्छ्रमाह मनुः। "एकैकं ग्रासमश्नीयात् त्र्यहाणि त्रीणि पूर्ववत्। त्र्यहञ्चोपवसेदन्त्यमतिकृच्छ्रं चरन् द्विजः"॥ त्र्यहाणि त्रीणि नवाहानि पूर्ववत् प्रातःसायमयाचितैः प्राजापत्यवत्। एवञ्चातिकृच्छ्रमध्ये कथं कृच्छ्रसिद्धिः। न ह्येकग्रासमध्ये द्वाविंशतिग्रासाः सम्भवन्ति सत्यं नियमपक्षे एवं दोषो भवतु परिसंख्यापक्षे तु नैष दोषः। एकग्रासातिरिक्तभोजनाभावे द्वाविंशतिग्रासाद्यतिरिक्तभोजनाभावः सिद्ध्यति। एवञ्चेत् भवतु दण्डनिपातप्रायश्चित्तात्दवगोरणप्रायश्चित्तसिद्धिः। किन्तु प्रचारिणो गुरुदारगमनप्रायश्चित्तेनैव गुरुणा लघ्ववकीर्णप्रायश्चित्तं कृतं भवेदिति प्रायश्चित्तविवेककृदुक्तं कथं सङ्गच्छते। तथा हि याज्ञवल्क्यः। "आचार्य्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः। छित्त्वा लिङ्गं वधस्तस्य सकामायास्तु योषितः"॥ तथा "अवकीर्णी भवेद्गत्वा ब्रह्मचारी तु योषितम्। गर्दभं पशुमालभ्य नैर्ऋतं स विशुद्ध्यति"॥ अत्र मरणेन कथं

योगसिद्धिरिति चेन्न मरणवैकल्पिकचतुर्विंशतिवार्षिकव्रत-प्रतिनिधिधेनुदाने एतद्यागप्रतिनिधिधेनुदानसम्भवात् गुरुप्रायश्चित्तेनैव लघुपापनाशस्य वक्ष्यमाणत्वाच्च। अथ यत्र विहितयवादीनामवघातादिना नाशे यवादिसाध्यत्वं पुरोडाशस्य न स्यात्ततोऽवयवपर्य्यन्तः शास्त्रार्थः। एतच्च यवानामपचारे प्रतिनिधीभूतगोधूमादिगतयवाद्यवयवेषु प्रत्यभिज्ञानसम्भवात् प्रतिनिधिन्यायावसर इति। अथ गोधूमादिगताः कथं यवाद्यवयवाः न खल्वन्यत्रान्यावयवाः सम्भवन्ति। उच्यते। अवयवाः खलु केचन यवादिमात्राणां केचन गोधूममात्राणां केचन उभयवर्गाणां निष्पादकाः। तत्रोभयनिष्पादकानामुभयत्र सम्भवात् गोधूमादिगता अपि यवाद्यवयवा यवाद्यवयवत्वेन प्रत्यभिज्ञायन्ते व्यवह्रियन्ते च। किन्तु यवादिमात्रारम्भकाणामसम्भवात् तदितरमात्रारम्भकाणाञ्च सम्भवात् न यागादीनां पूर्णनिष्पत्तिः अतो मुख्यालाभ एव प्रतिनिधिरिति अतएव जीमूतवाहनप्रभृतिभिरुक्तं यथा मुद्गापचारे माषप्रतिनिधौ मुद्गानां माषाणाञ्च यज्ञसम्बन्धेऽयज्ञिया वै माषा इति माषा निषिद्धाः माषगतमुद्गावयवोपादानेऽपि माषाणां यज्ञसम्बन्धो नास्तीति वक्तुं न शक्यते माषामिश्रितानामेव यज्ञसम्बन्धप्रतीतेरित्यन्तेन तत्र माषामिश्रितानामिति माषमात्रारम्भकावयवामिश्रितानामित्यर्थः अन्यथा मुद्गेऽप्युभयारम्भकावयवत्वे माषारम्भकस्यापि तत्र सत्त्वात् यागे तद्ग्रहणमनुपपन्नं स्यात्। अतएवोक्तं यत्र यत्र सौसादृश्यं तत्र तत्रावयवानां भूयस्त्वेन त्यागायोगात्। सुसदृशा एव गृह्यन्ते तस्यासम्भवे तु यत्किञ्चिदवयवसत्त्वेनापीति। परिशिष्टप्रकाशेऽपि। यत्र विहितद्रव्यावयवा एव प्रत्यभिज्ञायन्ते यथा गवये गवावयवास्तत्र हि प्रतिनिधिन्याय इत्युक्तम्।

एवञ्च व्रताचरणधेनुदानयोः प्रतिनिधिन्यायासम्भवात् कथं प्रतिनिधित्वम् इति चेन्न वचनाद्भविष्यति यथा मनुः। "ख्यापनेनानुतापेन तपसाध्ययनेन च। पापकृत् मुच्यते पापात् तथा दानेन चापदि"॥ आपदीत्यनेन अध्ययनतपसोर्दानं प्रतिनिधिरित्यर्थः। मरणयागादीनामपि तपस्त्वं यैर्यैर्व्रतैरपोहेतेत्युक्त्वा मरणादीनामपि मनुनोक्तत्वात्। "उमेति चपला पुत्रि न क्षमं तावकं वपुः। सोढुं क्लेशस्वभावस्य तपसः सौम्यदर्शने"॥ इति मत्स्यपुराणोक्तवैधक्लेशजनकस्वभावत्वाच्च। उमेति चपलात्वमिति शेषः। अतएव शातातपः। "देवतार्थे पितृणाञ्च ब्राह्मणार्थे च नित्यशः। स्वं चिन्वतां स्ववृत्तेषु योनः क्लेशः स नस्तपः"॥ स्वं धनं चिन्वतां सञ्चयं कुर्वतां स्ववृत्तेषु प्रतिग्रहादिषु इति कल्पतरुः। अत्र विशेषदानमाह संवर्त्तः। "हिरण्यदानं गोदानं भूमिदानं तथैव च। नाशयन्त्याशु पापानि महापातकजान्यपि"॥ यमः। "तिलं ददाति यः प्रातस्तिलान् स्पृशति खादति। तिलैः स्नातस्तिलैर्जुह्वत् सर्वं तरति दुष्कृतम्"॥ अग्निपुराणम्। ब्रह्महत्याकृतं पापमन्नदानात् प्रणश्यति। अन्नदः पापकर्त्तापि पूतः स्वर्गे महीयते"॥ हिंसात्मके तु दानस्य प्राधान्यं तपसः प्रतिनिधित्वमाह मनुः। "दानेन वधनिर्णेकं सर्पादीनामशक्नुवन्। एकैकशश्चरेत् कृच्छ्रं द्विजः पापापनुत्तये"॥ वधनिर्णेकं वधात् शौचम्। वस्तुतस्तु पापक्षयसाधनत्वेनोक्तानां कृच्छ्रचान्द्रायणादीनां यथा कथञ्चित् येन केनाप्यनुष्ठितेन यस्य कस्यापि पापस्य क्षयः। तथा च विश्वामित्रः। "कृच्छ्रचान्द्रायणादीनि शुद्ध्यभ्युदयकारणम्। प्रकाशे च रहस्ये च संशयेऽनुक्तके स्फुटे॥ प्राजापत्यः शान्तपनः शिशुकृच्छ्रः पराकक‌ः। अतिकृच्छ्रः पर्णकृच्छ्रः सौम्यः कृच्छ्रातिकृच्छ्रकः॥

महासान्तपनः शुद्धौ तप्तकृच्छ्रस्तु पावनः। जलोपवासकृच्छ्रस्तु ब्रह्मकूर्चस्तु शोधकः॥ एते व्यस्ताः समस्ता वा प्रत्येकमेकशोऽपि वा। पातकादिषु सर्वेषु पातकेषु प्रयत्नतः। कार्य्याश्चान्द्रायणैर्युक्ताः केवला वा विशुद्धये॥ शिशुचान्द्रायणं प्रोक्तं यतिचान्द्रायणन्तथा। यवमध्यं तथा प्रोक्तं तथा पिपीलिकाकृतिः॥ उपवासस्त्रिरात्रन्तु मासः पक्षस्तदर्द्धकम्। षड्द्वादशाद्दादिकार्य्यं शुद्धिफलार्थिना॥ उपपातकयुक्तानामनादिष्टेषु चैव हि। प्रकाशे च रहस्ये च अभिसन्ध्याद्यपेक्षया॥ जातिशक्तिगुणान् दृष्ट्वा सकृत् बुद्धिकृतं तथा। अनुबन्धादिकं दृष्ट्वा सर्वं कार्य्यं यथाक्रमम्"॥ प्रकाशे बहुभिर्ज्ञाते पाप इति शेषः। रहस्ये बहुभिरज्ञाते संशये पापस्य अनुक्तके अतिपातकाद्यन्यतमत्वेन विशेषतोऽनुक्ते प्रकीर्णक इति यावत्। अस्फुटेऽव्यक्तेऽज्ञाते इति यावत् आदिपदविवरणं प्राजापत्य इत्यादि। सौम्यः सौम्यकृच्छ्रः व्यस्ता असमस्ता अनेकश इति यावत् प्रत्येकम् एकमेकं प्रति तत्तथा एकशो व्रतमिति शेषः षड्द्वादशाद्दादीत्यत्रादिशब्दोऽयमनुक्तप्रायश्चित्तपरिग्रहार्थः। अथैवं समस्ता इति निर्विषयं स्यात् न ह्येकत्र मरणद्वादशवार्षिकादिसम्भव इति चेन्न कामतः शूद्रकर्तृकाभ्निहोत्रादिगुणयुक्तब्राह्मणवधे विषयसम्भवात्। "द्विगुणा क्षत्रियाणान्तु वैश्यानां त्रिगुणा मता। चतुर्गुणा तु शूद्राणां परिषदुक्ता महात्मना॥ परिषद्भूतं प्रोक्तं शुद्धये पापकर्मणाम्। अधमानान्तु वर्णानामुत्कृष्टहनने गुरु। दोषो गुरुतरो ज्ञेयः क्षयादीनां न संशयः"॥ इति भविष्ये ब्राह्मणापेक्षया चतुर्गुणप्रायश्चित्तश्रुतेः। "समो द्विगुणसाहस्रमानन्त्यञ्च यथाक्रमम्। दाने फलविशेषः स्यात् हिंसायां तद्वदेव हि"॥ इति दक्षवचनाच्च। अतो द्वादशवार्षिकव्रताद्यनन्तरमपि

मरणसम्भवात्। व्रतन्तु द्वादशवार्षिकादतिरिक्तकालिकं न भवति यच्च यावज्जीवनव्रतं तदपि द्वादशवार्षिकद्वैगुण्येन संकलितम् अन्यथा तत्संसर्गिणो जीवनकालानियतत्वेन प्रायश्चित्तकल्पनानध्यवसायापत्तेरेवमेव प्रायश्चित्तविवेकः। अभिसन्धेस्तारतम्यं मातृपोषणपरदारत्वादिना। जातेस्तारतम्यं ब्राह्मणत्वादिना। शक्तिर्बालत्वादिना। गुणस्य विद्यत्वादिना। अनुबन्धः पौनःपुन्येनाभिनिवेशः।

अथ चान्द्रायणादौ भोजनपरिसंख्या। भोजनस्य रागप्राप्तत्वात् नाप्राप्तप्रापको विधिः। स चाहरहः सन्ध्यामुपासीत इत्येवं रूपम्। नापि तद्भक्षणस्यानावश्यकत्वेन स्वायोगव्यवच्छेदमात्रफलको नियमविधिः। स च तत्तत्तिथौ तत्तद्ग्रासान् भुञ्जीतैवेत्येवं रूपः। तथा च "स्वरुच्या क्रियमाणे च यत्रावश्यं क्रिया क्वचित्। चोद्यते नियमः सोऽत्र ऋताबभिगमो यथा"॥ तथात्वे पितृमरणादावपि भोजनं प्रसज्येत हविष्यान्नभोजनव्रतादावपि उपवासाभाव एव आपद्येत तद्भक्षणस्य समकालमेवान्यभक्षणेऽपि न दोषः स्यात्। तस्मादगत्या "श्रुतार्थस्य परित्यागादश्रुतार्थस्य कल्पनात्। प्राप्तस्य बाधादित्येवं परिसंख्या त्रिदोषिका"॥ इत्युक्तस्वार्थहान्यर्थान्तरकल्पनरागप्राप्तबाधरूपदोषत्रयदुष्टापि अन्ययोगव्यवच्छेदफलिका परिसंख्या एव युक्ता सा च सति भोजने तत्तत्तिथौ तत्तद्ग्रासानेव भुञ्जीत नान्यदित्येवं रूपा तस्मात्तदतिरिक्तभोजनाभावपरत्वेन उपवासेऽपि दोषाभावः। तदुक्तं भट्टपादैः। "अन्यार्थश्रूयमाणा च यान्यार्थप्रतिषेधिका। परिसंख्या तु सा ज्ञेया यथा प्रोचित भोजनम्"॥ अन्यथा प्राजापत्यव्रतेऽपि त्र्यहमयाद्याचितमिति। "अयाचितन्तु मध्याह्ने चतुर्विंशतिग्रहये"। इति ब्रह्मपुराणोक्तस्यायाचितस्यालाभे व्रतलोपा-

पत्तिः स्यात् । चतुर्विंशतिरिति चतुर्भिरधिका विंशतिर्यत्र तत्तथा अयाचितन्तु स्वकीयानुद्योगेन पराहृतं दत्तं वस्तु। तथा च यतिधर्मे उशना। "भिक्षाशनमनुद्योगात् प्राक् केनाप्यनिमन्त्रितम्। अयाचितन्तु तद्भैक्ष्यं भोक्तव्यं मनुरब्रवीत्"॥ याज्ञवल्क्यः। "अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्म्मणः। अन्यत्र कुलटाषण्डपतितेभ्यो द्विषस्तथा"॥ एतेन तदानीमयाचितत्वेन गृहस्थितानामयाचितत्वमिति निरस्तम्। प्राजापत्ये परिसंख्या व्यक्तमाह गौतमः। "अथापरं त्र्यहं न कञ्चन याचेत" इति। तथा प्रायश्चित्तविवेककृद्भिरप्यज्ञानादिजातप्राणिवधे मनूक्तहुतप्राशनस्य प्रायश्चित्तरूपत्वात् शवानुगमननिमित्त इव शरीरशुद्धिहेतुरूपत्वाभावादन्नान्तरनिवृत्तिरवसीयते इति वदद्भिः सर्वप्रायश्चित्ते परिसंख्या दुर्गसिंहोऽपि अश्राद्धभोजीत्यस्य सति भोजनेऽश्राद्धमेव भुङ्क्ते न श्राद्धमिति न तु नियमः। तथात्वे व्रतलोपः स्यात्। यथा मया स्नानं कर्त्तव्यमिति नियमे सत्यस्नानात् व्रतभङ्ग इत्याह अतएव कृच्छ्रभूयस्त्वमप्युपपद्यतेऽत्र विशेषयति वौधायनः। "अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः। हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम्"॥ अतएव फलाहारादौ तथाचारः।

अथ गुरुप्रायश्चित्तेन लघुपापनाशः। "पापे गुरूणि गुरूणि लघूनि च लघूनि च। प्रायश्चित्तानि मैत्रेय जगुः स्वायम्भुवादयः"॥ इति विष्णुपुराणात्। "एवं विषयभेदाद्दै व्यवस्थाप्यानि पुत्रक। प्रायश्चित्तानि सर्वाणि गुरूणि च लघूनि च॥ अन्यथा हि महावाहो लघूनामुपदेशतः। गुरूणामुपदेशो हि निष्प्रयोजनतां व्रजेत्"॥ इति भविष्यपुराणात्। "स्वल्पसाध्ये च दुःसाध्यं श्रावयेत् सततं जने। यथा पापे न वर्त्तेत प्रायश्चित्तभयादिह॥ न निर्दिशेदल्पसाध्यं प्राय-

श्चित्तं नरे बुधः। तस्मिन् संक्रमते पापं कर्त्ता तु तद्विमुच्यते"॥ इति गङ्गावाक्यावलीधृतस्कन्दपुराणवचनात्। "यस्मिन् कर्म्मण्यस्य कृते मनसः स्यादलाघवम्। तस्मिंस्तावत्तपः कुर्य्यात् यावत्तुष्टिकरं भवेत्"॥ इति मनुवचनाच्च। अभ्यस्तानभ्यस्ताभ्यां कृच्छ्रचान्द्रायणादीनि इत्यादि विश्वामित्रवचनैः सर्वप्रायश्चित्तानां सर्वपापक्षयहेतुतोक्ता एवञ्च पापविशेषे प्रायश्चित्तविशेषोपदेशो मुनीनां तत्तुल्यप्रायश्चित्तप्रदर्शनाय अन्यथा प्रायश्चित्तविशेषकल्पनायामनध्यवसायः स्यात्। अतएव विश्वामित्रेणापि। "कृच्छ्रांस्तु चतुरः कुर्य्यात् गोवधे बुद्धिपूर्वके"। इत्यादिविशेषवचनेन तदभिहितं तेन प्राजापत्यादिसाध्यपापक्षयस्य तदन्यूनक्लेशे प्रायश्चित्तान्तरसाध्यतापि अतएव। "प्राजापत्यव्रताशक्तौ धेनुं दद्यात् पयस्विनीम्"। इति प्राजापत्यव्रतानुकल्पत्वेन श्रुतं धेनुदानं तत्तुल्यत्वेन संकलय्य पापान्तरेऽपि कल्प्यते। अतएव वौधायनेन सामान्यत उक्तम्। "बहूनामेकधर्म्माणामेकस्यापि यदुच्यते। सर्वेषामेव तत् कुर्य्यादेकरूपा हि ते स्मृताः"॥ एवं पूर्वोक्तगर्दभपशुयागसाध्यपापनाशस्यापि तदधिकक्लेशेन मरणेन प्रसङ्गात् सिद्धिः। अतएव ब्रह्मवधपापक्षयार्थिनो गोसहस्रदानेन तदनधिकसर्वपापक्षयमाहाङ्गिराः। "गवां सहस्रं विधिवत् पात्रेभ्यः प्रतिपादयेत्। ब्रह्महा वै प्रमुच्येत सर्वपापेभ्य एव हि"॥ यमः। "गवाह्निकं देवपूजावेदाभ्यासः सरित्प्लवः। नाशयन्त्याशु पापानि महापातकजान्यपि"। गवाह्निकं गोर्दिनभक्ष्यम् अपि ना ब्रह्महत्यापनाशकस्य सुतरामल्पपापनाशकतावगम्यते। तथा च छन्दोगपरिशिष्टम्। "वेदाश्छन्दांसि सर्वाणि ब्रह्माद्याश्च दिवौकसः। जलार्थिनोऽपि पितरो मरीच्याद्यास्तथर्षयः। उपाकर्मणि चोत्सर्गे स्नानार्थं ब्रह्मवादिनः। यियासूननुग-

च्छन्ति संहृष्टा ह्यशरीरिणः । समवायश्च यत्रैषां तत्राघे बहवोऽमलाः । न्यूनं सर्वे क्षयं यान्ति किमुतैकं नदीरजः" एषां वेदादीनां यत्र नदीजले समवायस्तत्र गुरुतरा एव ब्रह्महत्यादयो दोषाः कार्त्स्न्येन नाशं यान्ति किमुतैकं नदीरजः । अतएव अविज्ञाते गर्भवधे पुरुषशङ्कया पुंवधप्रायश्चित्तमेवोक्तम् । गुरुणा पुंवधप्रायश्चित्तेन लघुनः स्त्रीवधपापक्षयस्य सम्भवात् । यथा वशिष्ठः "ब्राह्मणं हत्वा भ्रूणहा भवति अविज्ञातश्च गर्भम् अविज्ञाता हि गर्भाः पुमांसो भवन्ति तस्मात् पुंस्कृत्या जुह्वती" इति प्रायश्चित्तविवेकः महाभारते । "यद्यकार्य्यशतं कृत्वा कृतं गङ्गाभिषेचनम् । सर्वं दहति गङ्गाम्भस्तूलराशिमिवानलः" ॥

अथ गङ्गामाहात्म्यम् । भविष्ये । "गच्छंस्तिष्ठन् स्वपन् ध्यायन् जाग्रद् भुञ्जन् वसन् वदन् । यः स्मरेत् सततं गङ्गां स च मुच्येत बन्धनात्" ॥ तथा "भवनानि विचित्राणि विचित्राभरणाः स्त्रियः । आरोग्यं वित्तसम्पत्तिर्गङ्गास्मरणजं फलम्" । ब्रह्माण्डे । "यैः पुण्यवाहिनी गङ्गा सकृद्भक्त्यावगाहिता । तेषां कुलानां लक्षन्तु भवात्तारयते शिवा" । दानधर्मे । "अन्धाः क्लीवा जडा व्यङ्गाः पतिता रोगिणोऽन्त्यजाः । गङ्गां संसेव्य पुरुषा देवैर्गच्छन्ति तुल्यताम्" ॥ स्कान्दभविष्ययोः । "स्नानमात्रेण गङ्गायां पापं ब्रह्मवधादिकम् । दुराधर्षं कथं याति चिन्तयेद् यो वदेदपि । तस्याहं प्रददे पापं कोटिब्रह्मवधोद्भवम् । स्तुतिवादमिमं मत्वा कुम्भीपाके महीयते ॥ आकल्पं नरकं भुक्त्वा ततो जायेत गर्दभः" ॥ ब्रह्माण्डे । "ये गच्छन्ति स्वतो गङ्गां परांश्च प्रेरयन्ति ये । इह ते सर्वभोगानामन्ते ज्ञानस्य भाजनम्" ॥ यज्ञपार्श्वपरिशिष्टम् । "वित्तान्यर्जयितुं युक्तः प्रवासी ह्यग्निहोत्रिणः । वित्ते हि

मध्यवेदिष्या तीर्थार्थं न तु व्रजेत्" ॥ स्कान्दमत्स्ययोः। "तीर्थयात्रादिकं कृत्स्नमकुर्वाणोऽपि मानवः। गङ्गातोयस्य माहात्म्यात् सोऽप्यत्र फलभाग् भवेत्" ॥ यात्राकरणे तु भविष्यपुराणम्। "गङ्गास्नानसमायुक्तो विधिना स्वगृहात्ततः। निर्गत्य मध्ये च नरः कुदेशे म्रियते यदि। गङ्गास्नानफलं सोऽपि नियतात्मा लभेत् सदा" ॥ समायुक्तः समुद्युक्तः विधिना यथोक्तविधिना। तथाविधकृतयात्र इत्यर्थः। तद्विधिमाह ब्रह्मपुराणम्। "यो यः कश्चित्तीर्थयात्रान्तु गच्छेत् सुसंयतः सच पूर्वं गृहे स्वे। कृतोपवासः शुचिरप्रमत्तः संपूजयेद् भक्तिनम्रो गणेशम्। देवान् पितॄन् ब्राह्मणांश्चैव साधून् धीमान् प्रीणयन् वित्तशक्त्या प्रयत्नात्। प्रत्यागतश्चापि पुनस्तथैव देवान् पितॄन् ब्राह्मणान् पूजयेच्च। एवं प्रकुर्वतस्तस्य तीर्थाद् यदुक्तं फलं तत् स्यान्नात्र सन्देह एव" ॥ सुसंयतः पूर्वदिने कृतैकभक्तादिनियमः। तदुत्तरदिने कृतोपवासस्तदुत्तरदिने गणेशं यथानिष्टदेवताश्च संपूज्य वृद्धिश्राद्धं कृत्वा ब्राह्मणान् भोजयेत्। ततः शुभलग्ने यात्रां कुर्य्यात् तीर्थयात्रान्तु गच्छेदित्युपक्रमादुपवासदिने मुण्डनमपि। "प्रयागे तीर्थयात्रायां पितृमातृवियोगतः। कचानां वपनं कार्य्यं न वृथा विकचो भवेत्" ॥ इति विष्णुपुराणवचनात्। प्रवेशेऽपि तीर्थयात्रायामिति वक्तव्यम्। "गच्छन् देशान्तरं यत्तु श्राद्धं कुर्य्यात्तु सर्पिषा। यात्रार्थमिति तत् प्रोक्तं प्रवेशे च न संशयः"। इति भविष्यपुराणादिति गङ्गावाक्यावली। वस्तुतस्तु तीर्थप्रत्यागमनोत्तरस्वगृहप्रवेशे इत्येव वक्तव्यम्। यात्राप्रत्यागमनोत्तरस्वगृहप्रवेशयोर्भेदात् प्रत्यागमनोत्तरलाभस्तु प्रत्यागतश्चापीति प्रागुक्तत्वात् व्यक्तमाह हलायुधधृतं कूर्मपुराणवचनम्। "तीर्थयात्रासमारम्भे तीर्थात् प्रत्यागमेऽपि

च। वृद्धिश्राद्धं प्रकुर्वीत बहुसर्पिः समन्वितम्"॥ ततश्च प्रवेशे चेति चकारेण श्राद्धमात्रं समुच्चितम्। न तु तस्य यात्रार्थत्वमपोति। एवं देवान् पितॄनित्यभिधानात् तत् पूजनमेव पुनः कार्य्यं न तूपवासादिकमपि अन्यथा देवानित्यादिकं व्यर्थं स्यात्। मत्स्यपुराणम्। "तिलोदकाञ्जलिर्देयो जलस्थैस्तीर्थवासिभिः। सदानहस्तेनैकेन गृहे श्राद्धं समिष्यते"॥ अत्र जलस्थैरित्यनेन स्थलस्थानामपि जलस्थत्वं नियम्यते। तथा हि "अन्तरुदके आचान्तो अन्तरेव शुद्धो भवति। बहिरुदके आचान्तो बहिरेव शुद्धो भवति। तस्मादन्तरेकं बहिरेकञ्च पादं कृत्वा आचामेत् सर्वत्र शुद्धो भवति" इति पैठीनसिवचनेन जलैकचरणकृताचमनेन उभयत्र कर्माहत्वात्। तर्पणकाले तीर्थे जलैकचरणत्वं प्रतीयते। अन्यत्र त्वनियमः। तद्रूपाणां जले च तर्पणमविरुद्धमिति। गृह इति स्थलोपलक्षणम्। देवीपुराणे। "अकालेऽप्यथवा काले तीर्थश्राद्धं तथा नरैः। प्राप्तैरेव सदा कार्य्यं कर्त्तव्यं पितृतर्पणम्। पिण्डदानं तत्र शस्तं पितृणाञ्चातिदुर्लभम्। विलम्बो नैव कर्त्तव्यो न च विघ्नं समाचरेत्। श्राद्धं तत्र तु कर्त्तव्यमर्घ्यावाहनवर्जितम्। श्वध्वाङ्क्षगृध्रकाकाणां नैव दृष्टिहतञ्च यत्"॥ ध्वाङ्क्षो दण्डकाकः। अत्राकाल इति न रात्र्यादाविति पर्य्युदस्तप्रतिप्रसवः। तथात्वे तद्बाधापत्तेः। किन्तु पर्य्युदस्तेतराप्रशस्तकालपरम्। "तत् सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट्प्रकीर्त्तिताः"॥ इत्यनुसारात्। काल इति प्रशस्तापराह्णादिकालपरम्। अत्र शुचेः प्राप्युत्तरविहितप्रथमदिन एव श्राद्धं तेन पूर्वदिने राक्षसोवेलादावागमनेऽपि परदिने श्राद्धमविरुद्धम्। तथा च हलायुधधृतम्। "गत्वैव तीर्थं कर्त्तव्यं श्राद्धं तत् प्राप्ति-

हेतुकम्। पूर्वाह्णेऽप्यथवा प्रातर्दंष्ट्रे स्यात् पूर्वदक्षिणे”॥ पूर्वाह्णे सङ्गवे पूर्वदक्षिणे अग्निकोणे। पिण्डदानमिति श्राद्धासम्भवे केवलपिण्डदानमिति न योजनकृत्यम्। पिण्डप्रतिपत्तिमाह मत्स्यपुराणम्। “पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा। तीर्थश्राद्धे सदा पिण्डान् क्षिपेत्तीर्थे विचक्षणः”। महाभारते। “यो लुब्धः पिशुनः क्रूरो नास्तिको विषयात्मकः। सर्वतीर्थेष्वपि स्नातः पापो मलिन एव सः”॥ तथा “विषयेष्वतिसंरागो मानसोऽमल उच्यते। तेष्वेव हि विरागोऽस्य नैर्मल्यं समुदाहृतम्। पिण्डदानं तपः शौचं तीर्थसेवाश्रुतन्तथा। सर्वाण्येतान्यतीर्थानि यदि भावो न निर्मलः”॥ भावः सात्त्विकराजसतामसान्यतममनोवृत्तिः स च निर्मलः सात्त्विक इत्यर्थः। एतानि तीर्थे कृतान्यपि अतीर्थान्यतीर्थकृतानि। यथा “प्रतिग्रहादपावृत्तः सन्तुष्टो येन केनचित्। अहङ्कारविमुक्तश्च स तीर्थफलमश्नुते॥ तीर्थेन प्रतिगृह्णीयात् पुण्येष्वायतनेष्वपि। निमित्तेषु च सर्वेषु अप्रमत्तो भवेन्नरः”॥ निमित्तेषु संक्रान्त्यादिषु। तथा “स्वकार्ये पितृकार्येऽपि देवताभ्यर्चनेऽपि वा। निष्फलं तस्य तत्तीर्थं यावत्तद्धनमश्नुते”॥ शङ्खः। “तीर्थं प्राप्यानुषङ्गेन स्नानं तीर्थे समाचरन्। स्नानजं फलमाप्नोति तीर्थयात्राफलं न तु”॥ तथा “यस्य पादौ च हस्तौ च मनश्चैव सुसंयतम्। विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते॥ नृणां पापकृतां तीर्थे भवेत् पापस्य संक्षयः। यथोक्तफलदं तीर्थं भवेच्छुद्धात्मनां नृणाम्”॥ हस्तसंयमोऽत्र निन्दितप्रतिग्रहादिनिवृत्तिः। पादसंयमस्तु अगम्यदेशादिगमननिवृत्तिः। मनःसंयमः कामक्रोधादिनिवृत्तिः। विद्या तत्तत्तीर्थफलबोधकसच्छास्त्रवेदाद्यधिगमरूपा। तपः ग्रामिष्यादिनिवृत्तिः। कीर्त्तिर्धर्मार्थितीर्थगमने धार्मिकत्वादिना प्र-

सिद्धिः। फलं सम्यगिति शेषः। एतच्च हस्तसंयमनादि-तीर्थयात्राङ्गं महाभारते तीर्थयात्रामुपक्रम्याभिधानात्। तीर्थ-स्नानादि कर्माङ्गञ्च। प्रसङ्गेन यात्राप्रकरणमन्तरेणैव स तीर्थ-फलमश्नुते इति सामान्याभिधानात्। इति कल्पतरुः। अत-एव पैठीनसिः। "षोड़शांशं स लभते यः परार्थेन गच्छति। अर्द्धं तीर्थफलं तस्य यः प्रसङ्गेन गच्छति"॥ परार्थेन वेतना-दिना प्रसङ्गेन उद्देश्यान्तरप्रसङ्गेन।

"तथा प्रतिकृतिं कृत्वा तीर्थवारिणि मज्जयेत्। मज्जयेत्तु यमुद्दिश्य अष्टभागं लभेत सः"॥ प्रतिकृतिः प्रतिनिधिः। अत्र दर्भवटुः। शान्तिदीपिकायाम्। "सप्तभिर्नवभिर्वापि सार्द्धद्वितयवेष्टितम्। प्रणवेन च मन्त्रेण द्विजः कुर्य्यात् कुश-द्विजम्"॥ नवभिरित्यत्र पञ्चभिरिति कर्म्मोपदेशिन्यां पाठः। रत्नाकरे तु गृह्यपरिशिष्टम्। "ऊर्द्धकेशो भवेद् ब्रह्मा लम्ब-केशस्तु विष्टरः। दक्षिणावर्त्तको ब्रह्मा वामावर्त्तस्तु विष्टरः"॥ केशोऽग्रः। तद्बन्धने मन्त्रः। "कुशोऽसि कुशपत्रोऽसि ब्रह्मणा निर्म्मितः पुरा। त्वयि स्नाते स च स्नातो यस्यार्थे ग्रन्थिबन्धनम्"॥ स्कान्दे। "स्नापयेत् स्निग्धमित्रादीन् प्रार्त्तीं-स्तीर्थे नरोत्तमः। अन्यथापहरन्त्येते बलात्तीर्थभवं फलम्"॥ विष्णुः। "स्वयमुद्दिश्य कर्त्तव्यं स्वार्थे तीर्थे नरोत्तमैः। अक-र्तॄणां हरन्त्येते तीर्थं पूर्वञ्च यत् कृतम्"॥ नरोत्तमैः स्वयं स्वार्थमात्मीयार्थमुद्दिश्य तीर्थं कर्त्तव्यम्। एते आत्मीयाः मदन-पारिजाते मार्कण्डेयपुराणम्। "मातरं पितरं जायां भ्रातरं सुहृदं गुरुम्। यमुद्दिश्य निमज्जेत अष्टभागं लभेत सः"॥ अत्रिसंहितायामप्येतत्। निमज्जेत स्वयमिति शेषः। मत्स्यपुराणे। "ऐश्वर्य्यलाभमाहात्म्याद्गच्छेद् यानेन यो नरः। निष्फलं तस्य तत्तीर्थं तस्माद् यानं विवर्जयेत्"॥ गङ्गावाक्या-

वत्स्याम्। "संवत्सरं द्विमासोनं पुनस्तीर्थं व्रजेद्यदि। मुण्डनञ्चोपवासश्च ततो यत्नेन कारयेत्"॥ एतेन दशममासाभ्यन्तरे पुनर्गमने मुण्डनोपवासौ न कार्य्याविति सूचितम् एवं तीर्थप्राप्तिनिमित्तकश्राद्धमपि। आकाङ्क्षायास्तौल्यात्। तदुक्तं भट्टपादैः। "काकेभ्योरक्षतामन्नमिति बालोपदेशतः। उपघातप्रधानत्वात् किं श्वादिभ्यो न रक्ष्यते"॥

स्कान्दे। "मुण्डनञ्चोपवासश्च सर्वतीर्थेष्वयं विधिः। वर्जयित्वा गयां गङ्गां विशालां विरजां तथा"॥ यत्तु "गङ्गायां भास्करक्षेत्रे मातापित्रोर्मृते गुरौ। आधाने सोमपाने च वपनं सप्तसु स्मृतम्"॥ इति स्मृतिसमुच्चयलिखितवचनं भास्करक्षेत्रं प्रयागः। तत्र पूर्ववचनं सामान्यतो गङ्गायां निषेधकं परवचनन्तु प्रयागावच्छिन्नगङ्गायां विधायकमिति न विरोधः। सप्तमत्वन्तु गङ्गात्वभास्करक्षेत्रत्वभेदात्। अत्र सर्वतीर्थं पुराणभारतादिप्रसिद्धदेशविशेषतीर्थपरं शिष्टपरिग्रहात् प्रयागेऽकरणे दोषोऽपि। तथा च "गङ्गायां भास्करक्षेत्रे मुण्डनं यो न कारयेत्। स कोटिकुलसंयुक्त आकल्पं रौरवे वसेत्"॥ अत्र गङ्गाप्रयागयोर्वैशिष्ट्यं स्फुटम्। प्रयागे स्त्रीणामपि मुण्डनं न तु वक्ष्यमाणवचनाभ्यां केशानां द्व्यङ्गुलच्छेदमात्रम्। "केशमूलान्युपाश्रित्य सर्वपापानि देहिनाम्। तिष्ठन्ति तीर्थस्नानेन तस्मात्तान्यत्र वापयेत्"॥ इति वचनात्। अत्र कारयेत् वापयेत् इति श्रवणात् वपनं कारयिष्ये इति प्रयोगः। मुण्डने फलमपि तथा च प्रयागमधिकृत्य "केशानां यावती संख्या छिन्नानां जाह्नवीजले। तावद्वर्षसहस्राणि स्वर्गलोके महीयते॥ यावन्तो नखलोमानि वायुना प्रेरितानि वै। पतन्ति जाह्नवीतोये नराणां पुण्यकर्मणाम्॥ तावद्वर्षसहस्राणि स्वर्गलोके महीयते"॥ सर्वतीर्थेष्वित्यत्र कर्मधारयः।

न च प्रयागमभिव्याप्य ब्रह्मपुराणम्। "एवं कुरुष्व कौन्तेय सर्वतीर्थाभिषेचनम्। यावज्जीवकृतं पापं तत्क्षणादेव नश्यति"॥ इत्यत्र समस्यन्यपदार्थबहुव्रीहिदर्शनात्तदत्रापि तथेति वाच्यम्। लक्षणाप्रसङ्गात् ब्रह्मपुराणवचनेऽन्यथानुपपत्त्या तथा कल्पनेऽत्र बहुवचनानुपपत्तेश्च। न च ग्रहं संमार्ष्टीतिवदुद्देश्यगतत्वेन बहुत्वसंख्याया अविवक्षितत्वमिति वाच्यं प्रमाणान्तराप्राप्तत्वेनास्योद्देश्यत्वाभावात्। किन्तु पशुना यजेतेत्यत्र पश्वेकत्ववत् बहुत्वस्य विधेयत्वमिति गङ्गादिविशेषनिषेधानुपपत्तेश्च। न चायमिया वैभाषा इति वदत्वस्य निषेधार्थमिति वाच्यम्। तत्र मौञ्जमवभृथतीत्युपदेशेऽपि प्रतिनिधिना प्राप्तेर्युक्तो निषेधः। अत्र प्रयागे मुण्डनं कुर्य्यादित्युक्ते गयादौ प्रसक्त्यभावात् कुतो निषेधः। सर्वतीर्थपदस्य तीर्थमात्रपरत्वे गयादौ प्रसक्त्या निषेधः सूपपन्नः। सामान्यशास्त्रप्रामाण्योपजीवित्वात् पर्य्युदास एव तस्यम्। न च "गङ्गायां भास्करक्षेत्रे पित्रोश्च मरणं विना। वृथा छिनत्ति यः केशांस्तमाहुर्ब्रह्मघातकम्" इति कालिकापुराणवाक्यादन्यत्र निषेध इति वाच्यं पूर्वोक्तस्मृतिसमुच्चयवचनेनास्योपलक्षणत्वात्। विष्णुनापि "प्रयागे तीर्थयात्रायां पितृमातृवियोगतः। कचानां वपनं कुर्य्यात् वृथा न विकचो भवेत्" इत्यत्र तीर्थयात्रायामित्यधिकमुक्तम्। ततः प्रयागेऽवश्यमुण्डनमन्यतीर्थेषु गयागङ्गाविशालाविरजेतरेषु मुण्डने उपवासवत् फलाधिक्यम्। कूर्मपुराणे। "गङ्गायां ज्ञानतो मृत्वा मुक्तिमाप्नोति मानवः। अज्ञानात् ब्रह्मलोकञ्च याति नास्त्यत्र संशयः"॥ तथा "गङ्गायाञ्च जले मोक्षो वाराणस्यां जले स्थले। अन्तरीक्षे च गङ्गायां गङ्गासागरसङ्गमे"॥ चकारात् स्थलेऽपि। स्मृतिः। "शुक्लपक्षे दिवा भूमौ गङ्गायामुत्तरायणे।

धन्या देहं विमुञ्चन्ति हृदयस्थे जनार्दने" ॥ आग्नेये। "अर्द्धोदके तु जाह्नव्यां म्रियतेऽनशनेन यः। स याति न पुनर्जन्म ब्रह्मसायुज्यमेति च"। अर्द्धोदकं चरणान्नाभिपर्य्यन्तम्। स्कान्दे। "गङ्गायां त्यजतः प्राणान् कथयामि वरानने। कर्णे तत् परमं ब्रह्म ददामि मामकं पदम्" ॥ प्रागुक्तकूर्म्मपुराणवचनात् गङ्गात्वज्ञानेन मुक्तिः तदज्ञाने ब्रह्मलोकगमनम्। इति ब्रह्माण्डे। "स्नानन्तु भक्त्या गङ्गायां कर्त्तुकामस्य गच्छतः। पदे पदेऽश्वमेधस्य फलं मर्त्यस्य जायते" ॥ ब्रह्माण्डाग्नेययोः। "दृष्टा तु हरते पापं स्पृष्टा तु त्रिदिवं नयेत्। प्रसङ्गेनापि या गङ्गा मोक्षदा त्ववगाहिता ॥ अनेकजन्मसम्भूतं पापं पुंसां प्रणश्यति। स्नानमात्रेण गङ्गायां सद्यः स्यात् पुण्यभाजनम् ॥ अन्यस्थानकृतं पापं गङ्गातीरे विनश्यति। गङ्गातीरे कृतं पापं गङ्गास्नानात् विनश्यति" ॥ ब्रह्मपुराणे। "षष्ठ्यादौ कृष्णपक्षे तु भूमौ सन्निहिता भवेत्। यावत् पुण्यममावास्यां दिनानि दश नित्यशः" ॥ गङ्गेति शेषः। तेनात्राधिकं फलमित्यर्थः। भविष्ये। "द्वादश्यां श्रवणर्क्षे तु षष्ठ्यां पुष्ययोगतः। आर्द्रायाञ्च चतुर्दश्यां गङ्गास्नानं सुदुर्लभम्" ॥ तथा "कृष्णाष्टम्यां सहस्रन्तु शतं स्यात् सर्व्वपर्व्वसु। अमावास्यां शतगुणं सहस्रन्तु दिनक्षये" ॥ शतगुणं पर्व्वत्वेन पूर्व्वमुक्तं शतशतगुणमयुतमित्यर्थः। अन्यथा पर्व्वत्वेन शतगुणप्राप्ते अमावास्यामिति वैयर्थ्यं स्यात्। तथा "संवत्सरफलं तस्य नवम्यां कार्त्तिके तथा। मन्वादौ च युगादौ च मासत्रयफलं लभेत् ॥ नैरन्तर्य्येण गङ्गायां मासं यः स्नाति मानवः। स शक्रलोकेषु चिरं स्थित्वा कालं सगोत्रजैः ॥ ततो ब्रह्मपुरे तिष्ठेत् कल्पकोटिशतायुतम्" ॥ तथा "षण्मासं स्नाति गङ्गायां नैरन्तर्य्येण यो नरः। सर्व्वपापविनिर्मुक्तः समस्तकुलसंयुतः ॥ समस्तभोगसंयुक्तो विष्णुलोके महीयते।

परार्द्धद्वितयं यावत् नात्र कार्य्या विचारणा ॥ षण्मासमेकन्त्व-परं सकृदेवोत्तरायणे । एतदेव भवेत् पुण्यं विषुवे च तथैव च" ॥ ब्रह्माण्डे । संक्रान्तिषु व्यतीपाते ग्रहणे चन्द्रसूर्य्ययोः । पुष्ये स्नात्वा तु गङ्गायां कुलकोटीः समुद्धरेत्" ॥

व्यतीपातमाह बृहन्मनुः । "श्रवणाश्विधनिष्ठार्द्रा नाग-दैवतमस्तके । यद्यमारविवारेण व्यतीपातः स उच्यते" ॥ नागदैवतमश्लेषा । मस्तकं मृगशिरः । गङ्गामृतग्रन्थे भवि-ष्यपुराणम् । "चतुर्दश्यां यदा योगो व्यतीपातेन चार्द्रया । तदा पुण्यतमः कालो देवानामपि दुर्लभः ॥ तदा यः स्नाति गङ्गायां भक्त्या तत्फलमाप्नुयात् । यत्र यत्र विपन्नो हि गङ्गा मरणजन्तु सः" ॥ व्यतीपातेन चन्द्रमा इति गङ्गावाक्यावल्यु-क्तपाठोऽनन्वितत्वाद्धेयः । तथा "आत्मनो जन्मनक्षत्रे जाह्नवी गाङ्गते दिने । नरः स्नात्वा तु गङ्गायां कुलकोटीः समुद्धरेत्" ॥ नक्षत्रद्वैधे मार्कण्डेयपुराणम् । "तन्नक्षत्रमहोरात्रं यस्मिन्नस्तं गतो रविः । यस्मिन्नुदेति सविता तन्नक्षत्रं दिनं स्मृतम्" ॥ पूर्वार्द्धमुपवासनक्तैकभक्तेषु । "तत्रैवोपवसेदृक्षे यन्निशीथादधो भवेत् । उपवासे यदृक्षं स्यात्तद्धि नक्तैकभक्तयोः" ॥ इति स्कन्द-पुराणात् । "उपोषितव्यं नक्षत्रं येनास्तं याति भास्करः । यत्र वा युज्यते राम निशीथे शशिना सह" ॥ इति विष्णु-धर्म्मोत्तराच्च । यस्मिन्नुदेतीति तु परिशेषात् स्नानादाविति । गङ्गामर्त्त्यावतरणमाह आदित्यपुराणम् । "वैशाखे शुक्लपक्षे तु तृतीयायां जनार्दनः । यवानुत्पादयामास युगञ्चारब्धवान् कृतम् ॥ ब्रह्मलोकात् त्रिपथगां पृथिव्यामवतारयत् । तस्यां कार्य्यो यवैर्होमो यवैर्विष्णुं समर्चयेत् ॥ यवान् दद्यात् द्विजा-तिभ्यः प्रयतः प्राशयेद् यवान् । पूजयेच्छङ्करं गङ्गां कैलासञ्च हिमालयम् ॥ भगीरथञ्च नृपतिं सागराणां सुखावहम्" ॥

सागराणां सगरवंशप्रभवानां "स्नानं दानं तपः श्राद्धं जपहोमादिकञ्च यत्। श्रद्धया क्रियते तत्र तदानन्त्याय कल्पते" ॥ ब्राह्मे। "वैशाखे शुक्लसप्तम्यां जाह्नवी जह्नुना पुरा। क्रोधात् पीता पुनस्त्यक्ता कर्णरन्ध्रात् सुदारुणात् ॥ तां यत्र पूजयेत् देवीं गङ्गां गगनमेखलाम्" ॥ शङ्खः। "वैशाखे शुक्लपक्षे तु तृतीयायां तथैव च। गङ्गातोये नरः स्नात्वा मुच्यते सर्वकिल्बिषैः" ॥ नन्दास्नानफलमाह भविष्ये। "सप्तजन्मसु यद्भुक्तं पतितान्नञ्च तैः सह। संसर्गश्च कृतः पञ्च पातकानि महान्ति च ॥ तथानिर्वचनीयानि पापानि चयतामिषुः। रजस्वलायाः स्पृष्टान्नभोजनेनापि यद्भवेत् ॥ सततासत्यभाषेण स्वर्णस्य हरणेन च। मणेश्चापि च रत्नस्य सामान्यसकलस्य च ॥ वस्तुनश्चापि हरणैर्बधैः सख्युर्द्विजातयः। मित्रहिंसा विप्रहिंसा मातृहिंसादिभिश्च यत् ॥ जनितानि महान्तीह रौरवादीनि यानि च। तेष्वनवरतं विप्रास्ताड़नञ्च निवारयेत् ॥ यमस्य किङ्कराणां वै पापमाजन्म तत् कृतम्। बाल्ययौवनवार्द्धक्यदशा पापचयो भवेत् ॥ ब्रह्मपुरे वसेद्दृष्ट्वा हंसञ्च परमन्ततः। धेनूनां कपिलानाञ्च लक्षं दत्त्वा द्विजन्मने ॥ चतुर्वेदाधीतकाय यत् फलं लभते नरः। श्रीमन्नारायणस्येह वसते दक्षिणे भुजे ॥ मर्त्यलोके ततो जन्म ततो गुणाश्रयो भवेत्। भुङ्क्ते सर्वसुखं भोगं यथश्चाप्नोति मानवः। नन्दास्नानेन गङ्गायां नात्र कार्य्या विचारणा" ॥

अथात्र प्रयोगः। तत्सदद्येत्यादि। सप्तजन्मावच्छिन्नपतितान्नभक्षणपतितसंसर्गकृतपापपञ्चमहापातकानिर्वचनीयपापचयरजस्वला–स्पृष्टान्नभोजनसततासत्यभाषणस्वर्णमणिरत्नापहरणसामान्यसकलवस्त्वपहरणसखिवधमित्रहिंसा विप्रहिंसा मातृहिंसादिजनितमहारौरवाद्यनवरतयमकिङ्करताड़-

ननिवारणाजन्मबाल्ययौवनवार्द्धक्यदशा पापक्षयब्रह्मलोकाधि- करणकपरमहंसदर्शनपूर्वकवासाधीतचतुर्वेदब्राह्मणसम्प्रदानक- कपिलाधेनुलक्षदानजन्यफलश्रीमन्नारायणदक्षिणभुजवासतदु- त्तरमर्त्यलोकीयजन्मगुणाश्रयत्वसर्वसुखभोगयशः—प्राप्तिकामो गङ्गायां नन्दायां स्नानमहं करिष्ये। गङ्गायां रजो योगे प्रति- प्रसवमाह छन्दोगपरिशिष्टम्। "यद्यपीयं श्रावणादिसर्वा नद्यो रजस्वलाः। तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः"॥ यत्तु "आदौ कर्कटके देवी त्र्यहं यावद्रजस्वला। चतुर्थेऽहनि संप्राप्ते शुद्धा भवति जाह्नवी"॥ इति तद्रजो योगमात्रं बोधयति न तु स्नानादिनिषेधकम्। अतएव निगमः। "गङ्गा धर्मद्रवी पुण्या यमुना च सरस्वती। अन्तर्गतरजो योगे सर्वाहः स्वेव निर्म्मलाः"॥ त्र्याहिकरजो योगस्तु नीरा- जनाद्यर्थं इति शङ्खधर इति कृत्यतत्त्वार्णवः। नारदीये। "किमष्टाङ्गेन योगेन किं तपोभिः किमध्वरैः। वास एव हि गङ्गायां ब्रह्मज्ञानस्य कारणम्॥ यज्ञैर्यमैश्च नियमैर्दमैः सन्न्या- सतोऽपि वा। न तत् फलमवाप्नोति गङ्गां प्राप्य सरिद्वराम्॥ गङ्गामेवापरस्येह दिवसार्द्धेन यत् फलम्। न तत् फलं समर्थो न प्राप्तुं क्रतुशतैरपि"॥ दानधर्मब्रह्माण्डाग्नेयेषु। "जाह्नवीतीर- सम्भूतां मृदं मूर्द्ध्ना बिभर्त्ति यः। बिभर्त्ति रूपं सोऽर्कस्य तमो- नाशाय केवलम्"॥ गङ्गामधिकृत्य वाराहे। "ब्रह्महा गुरुहा गोघ्नः स्पृष्टो वा सर्वपातकैः। तस्यास्तोयैर्नरः स्पृष्टः सर्वपापैः प्रमुच्यते"। ब्रह्मपुराणे। प्रवाहमवधिं कृत्वा यावद्धस्तचतु- ष्टयम्। अत्र नारायणः स्वामी नान्यः स्वामी कदाचन। अत्र न प्रतिगृह्णीयात् प्राणैः कण्ठगतैरपि"॥ अत्र साधारणत्वेन सारदातिलोक्तहस्तो ग्राह्यः तथा च "चतुर्विंशत्यङ्गुलाढ्यं हस्तं तत्त्वविदो विदुः। यवानामष्टभिः क्लृप्तं मानाङ्गुलमुदीरितम्"॥

प्रमाणञ्च पार्श्वेन। "षड्यवाः पार्श्वसम्मिताः" इति कात्यायनदर्शनात्। अनयोर्व्यवस्थामाह कपिलपञ्चरात्रम्। "अष्टभिस्तैर्भवे ज्यैष्ठं मध्यमं सप्तभिर्यवैः। कन्यसं षड्भिरुद्दिष्टमङ्गुलं मुनिसत्तम"॥ कन्यसं कनिष्ठम्। यवानां तण्डुलानाह कालिकापुराणम्। "यवानां तण्डुलैरेकमङ्गुलञ्चाष्टभिर्भवेत्। अदोर्घयोजितैर्हस्तश्चतुर्विंशतिभिरङ्गुलैः"॥ दानधर्मे। "भाद्रकृष्णचतुर्दश्यां यावदा क्रमते जलम्। तावद्गर्भं विजानीयात् तदूर्द्ध्वं तीरमुच्यते"॥ ब्रह्मपुराणे। सार्द्धहस्तशतं यावत् गर्भतस्तीरमुच्यते"॥ गङ्गावाक्यावल्याम्। "गङ्गातीरे कृतं यत्नात् कोटिकोटिगुणं भवेत्"॥ स्कान्दे। "यज्ञो दानं तपो जाप्यं श्राद्धञ्च सुरपूजनम्। गङ्गायान्तु कृतं सर्वं कोटिकोटिगुणं भवेत्"॥ गङ्गायामिति तीरपरमिति गङ्गावाक्यावली। पाद्मे "तीरे प्रतिग्रहस्त्यज्यस्त्याज्यो धर्मस्य विक्रयः"॥ स्कान्दे "तीराद्गव्यूतिमात्रन्तु परितः क्षेत्रमुच्यते। अत्र दानं तपो होमो गङ्गायां नात्र संशयः। अत्रस्थास्त्रिदिवं यान्ति ये मृतास्ते पुनर्भवाः"॥ गव्यूतिः क्रोशयुगम्। न श्मशानं न चादेशी गङ्गायां परिकीर्त्त्यते"॥ तीर्थचिन्तामणौ ब्रह्मपुराणम्। "अत्र दूरे समीपे वा सदृशं योजनद्वयम्। गङ्गायां मरणेनेह नात्र कार्य्या विचारणा"॥ भविष्ये। "सुलभं सकलं पुण्यं यज्ञदानादिजं फलम्। गङ्गातोयैश्च सतिलैर्दुर्लभं पितृतर्पणम्"॥ अत्र निषिद्धेऽपि दिने तिलतर्पणम्। यथा स्मृतिः। "तीर्थे तिथिविशेषे तु गङ्गायां प्रेतपक्षके। निषिद्धेऽपि दिने कुर्य्यात् तर्पणं तिलमिश्रितम्"॥ निषिद्धदिनमाह तत्रैव। "रविशुक्रदिने चैव द्वादश्यां श्राद्धवासरे। सप्तम्यां जन्मदिवसे न कुर्य्यात्तिलतर्पणम्"॥ मत्स्यपुराणञ्च "संक्रान्त्यां निशि सप्तम्यां रविशुक्रदिने तथा। श्राद्धे

जन्मदिने चैव न कुर्य्यात्तिलतर्पणम्" ॥ आद्यपदम् अमावास्या आद्येतरपरम् । "नीलषण्डविमोक्षेण अमावास्यां तिलोदकैः । वर्षासु दीपदानेन पितृणामनृणो भवेत्" ॥ इति वचनात् तीर्थेतरप्रतिप्रसवमाह स्मृतिः "अयने विषुवे चैव संक्रान्त्यां ग्रहणेषु च । उपाकर्म्मणि चोत्सर्गे युगादौ मृतवासरे । सूर्य्य-शुक्रादिवारेऽपि न दोषस्तिलतर्पणे" इति । एवञ्च भविष्ये । सतिलगङ्गातोयस्य दुर्लभत्वाभिधानेन तीर्थे तिलाभावेऽपि प्रतिनिधिना तर्पणं सूचितम् । "तिलानामप्यभावे तु सुवर्ण-रजतान्वितम् । तदभावे प्रसिञ्चेत्तु दर्भैर्मन्त्रेण चाप्यथ" इति योगियाज्ञवल्क्येनाभिधानात् । सुवर्णरजतान्वितं सुवर्णरज-तस्पृष्टजलम् अतएव महाभारते । "त्रिषु लोकेषु ये केचित् प्राणिनः सर्व एव ते । तर्प्यमाणाः परां तृप्तिं यान्ति गङ्गा-जलैः शुभैः" ॥ भविष्ये । "ये नरा दुःखिताः सम्यक् सर्वे ते सकुशैस्तिलैः । तर्पिता जाह्नवीतोयैर्नरेण विधिना सकृत् । प्रयान्ति स्वर्गलोकन्तु नात्र कार्य्या विचारणा" ॥ आभ्यां वचनाभ्यां तीर्थचिन्तामणौ केवल गङ्गाजलेन सतिलजलेन च वाक्यभेदो लिखितः । यत्तु "तीर्थमात्रे तु कर्त्तव्यं सतिलेनैव तर्पणम् । योऽन्यथा तर्पयेन्मूढ़ः स विष्ठायां क्रमिर्भवेत्" ॥ इति स्कन्दपुराणीयतीर्थे तिलरहिततर्पणनिन्दा साऽपि सप्त-म्यादिनिषिद्धतिलतर्पणस्य तीर्थे तिथिविशेषे चेत्यादिना प्राप्तप्रतिप्रसवपरा । सुवर्णादिप्रतिनिधिरहितपरा वा अन्यथा तिलाभावेऽपि प्रधानस्य बाधः । वचनप्राप्तप्रतिनिधेर्बाधश्च तीर्थे स्यात् ततश्च वचनान्तरप्राप्तप्रतिप्रसवेनैव उपपत्तौ बाधकल्पनाया अन्याय्यत्वात् । "नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमिष्यते । तर्पणन्तु भवेत्तस्य अङ्गत्वेन व्यवस्थि-तम्" ॥ इति जावालोक्तस्नानाङ्गतर्पणात् । यथा "तर्पणन्तु

शुचिः कुर्य्यात् प्रत्यहं स्नातको द्विजः” इति योगियाज्ञवल्क्योक्तस्य पितृयज्ञस्तु तर्पणमिति छन्दोगपरिशिष्टोक्तस्य च प्रधानतर्पणस्य सिद्धिस्तथा गङ्गादि काम्यतर्पणं सिद्ध्यति कामनावतः प्रधाननिर्वाहस्य विशेषात्। एतेन गङ्गावाक्यावल्योक्तं पृथक् तर्पणं निषिद्धम्। भविष्ये। “गयाश्राद्धं कृतं तेन उत्सृष्टश्च वृषस्तथा। येन तद्वीचिसंसिक्ते तीरे श्राद्धमकारि च। गङ्गायाञ्च गयायाञ्च पिण्डदानं समं स्मृतम्। विशेषतः कलियुगे गङ्गापिण्डः प्रशस्यते” ॥ ब्राह्मे। “सर्वाणि येषां गाङ्गेयैस्तोयैः कृत्यानि देहिनाम्। देहं त्यक्त्वा नराः शैवे पदे तिष्ठन्ति सर्वदा” ॥ तथा “भक्त्या तज्जलपक्वाशी तज्जलं सेवते तु यः। अनायासेन हि नरो मोक्षोपायं स विन्दति”। स्कान्दे “गङ्गातीरं परित्यज्य येऽन्यतीर्थाभिलाषिणः। ब्रह्महत्याफलं तेषां सततं संशयात्मनाम्” ॥ स्मृतिः “षष्टिविघ्नसहस्राणि गङ्गां रक्षन्ति सर्वदा। निवारयन्त्यभक्तांश्च पापकर्मरतांस्तथा” ॥ महाभारते। “प्रद्युम्ननगराद् याम्ये सरस्वत्यास्तथोत्तरे। तद्दक्षिणप्रयागस्तु गङ्गातो यमुना गता। स्नात्वा तत्राक्षयं पुण्यं प्रयाग इव लभ्यते” ॥ दक्षिणप्रयाग उन्मुक्तवेणी सप्तग्रामाख्यदक्षिणदेशे। तथा “गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे। स्नात्वैव ब्रह्मणो विष्णोः शिवस्य च पुरं व्रजेत्”। भविष्ये। “यत् पुण्यं जायते पुंसां दर्शने परमात्मनः। तद्भवेदेव गङ्गाया दर्शने भक्तिभावतः”। स्कान्दे। “गण्डूषमात्रपानेन अश्वमेधफलं लभेत्। स्वच्छन्दश्च पिबेदापः तस्य मुक्तिः करे स्थिता। त्रिभिः सारस्वतं तोयं सप्तभिस्त्वथ यामुनम्। नार्मदं दशभिर्मासैर्गाङ्गं वर्षेण जीर्य्यति। वर्षैर्द्वादशभिर्याति शालग्रामशिलाजलम्। नाभ्यन्तर्गततोयानां मृतानां क्वापि देहिनाम्। तत्तत्तीर्थफलावाप्तिर्नात्र कार्य्या विचारणा।

स्रोतस्थमुद्धृतं वापि शीतमुष्णमथापि वा। गाङ्गेयं हरते पापमाजन्ममरणान्तिकम्" ॥ भविष्ये। "अप्सु नारायणं देवं स्नानकाले स्मरेत् सदा। साक्षात् ब्रह्मस्वरूपिण्यां गङ्गायाञ्च विशेषतः। गङ्गायां मौषलं स्नानं महापातकनाशनम्" ॥ तस्यां स्नाने मन्त्रौ विद्याकरलिखितौ। "विष्णुपादार्घ्यसम्भूते गङ्गे त्रिपथगामिनि। धर्मद्रवीति विख्याते पापं मे हर जाह्नवि। श्रद्धया भक्तिसम्पन्ने श्रीमातर्देवि जाह्नवि। अमृतेनाम्बुना देवि भागीरथि पुनीहि मां" ॥ अत्र "ब्रह्मक्षत्रविशामेव मन्त्रवत् स्नानमिष्यते। तूष्णीमेव हि शूद्रस्य सनमस्कारकं मतम्" ॥ इति योगियाज्ञवल्क्योक्तस्याप्यबाधः। गङ्गासागरसङ्गमे मन्त्रः। "त्वं देव सरितां नाथ त्वं देवि सरितां वरे। उभयोः सङ्गमे स्नात्वा मुञ्चामि दुरितानि वै" ॥ गाङ्गेये। "पूजितायान्तु गङ्गायां पूजिताः सर्वदेवताः। तस्मात् सर्वप्रयत्नेन पूजयेदमरापगाम्" ॥ पूजाजपमन्त्राः भविष्ये। "गां गङ्गायै विष्णुमुख्यै शिवामृतायै शान्तिप्रदायिन्यै नारायण्यै नमो नमः" ॥ इति तथा "गङ्गायै नारायण्यै शिवायै च नमो नमः। इति मन्त्रेण सततं शतमष्टोत्तरं जपेत्" ॥ तथा। "वासो हिरण्यरत्नानि पत्रपुष्पफलानि च। अन्नपानादिकञ्चापि यस्य यद्भवति प्रियम् ॥ तत्तद्भक्त्यैव गङ्गायै यः प्रयच्छति मानवः। तत्तत्सुखमनन्तं हि संप्राप्येह च जन्मनि ॥ प्रेत्यमाप्नोति निर्वाणं परमं यन्निरञ्जनम्" ॥ देवसम्प्रदानकदानेऽपि ब्राह्मणाय दक्षिणा देया। "तस्मात् सर्वात्मना पात्रे दद्यात् कनकदक्षिणाम्" इति नन्दिपुराणादिति गङ्गावाक्यावल्यौ। वस्तुतस्तु देवस्यापि पात्रत्वात् तस्यैव दक्षिणा देया। तथा च भविष्ये। "सर्वेषामेव पात्राणां परं पात्रं महेश्वरः। पतन्तं त्रायते यस्मादतीव नरकार्णवात्" ॥ महेश्वर इति

प्रदर्शनं हेतोरविशेषात् । तथा च नन्दिपुराणम् । "पात्रा-ण्याध्यात्मिका मुख्या विप्रश्चात्माग्निहोत्रिणः । देवताश्च तथा मुख्या गोदानं श्रेतदुत्तमम्" ॥ सान्तानिकादीत्युपक्रम्य । "एतेभ्योऽपि द्विजातिभ्यो देयमन्नं सदक्षिणम्" ॥ इति मनु-वचने यस्मै दानं तस्मै दक्षिणा देया दक्षिणेति दर्शनाच्च । व्यक्तं मत्स्यसूक्ते । "देवे दत्त्वा तु दानानि देवे दद्याच्च दक्षिणाम् । तत् सर्वं ब्राह्मणे दद्यादन्यथा निष्फलं भवेत्" ॥ दत्त्वा त्वित्यत्र देयानीति वाराहीतन्त्रे पाठः । भविष्ये । "सर्व-तत्त्वमयीं गङ्गां परमात्मस्वरूपिणीम् । त्रैलोक्यपावनार्थाय गाङ्गतां प्रणमेत् सदा ॥ यथा गौरी तथा गङ्गा तस्माद्गौर्य्यास्तु पूजने । विधिर्योऽभिमतः सम्यक् सोऽपि गङ्गाप्रपूजने"॥ अतएव छागघातसमाचारः ।

गङ्गायां अस्थिप्रक्षेपः । आदिपुराणे । "भागीरथी यत्र यत्रास्ति तीर्थे कुलद्वये चापि यदा विपन्नः । तदा तदा तत्र तस्याथ भक्त्या भावेन चास्थीनि विनिक्षिपेच्च । स्नात्वा ततः पञ्चगव्येन सिक्त्वा हिरण्यमध्वाज्यतिलैश्च योज्य । ततश्च मृत्पिण्डपुटे निधाय पश्यन् दिशं प्रेतगणोपगूढ़ाम् । नमोऽस्तु धर्माय वदन् प्रविश्य जलं स मे प्रीत इति क्षिपेच्च । उत्थाय भास्वन्तमवेक्ष्य सूर्य्यं सदक्षिणां विप्रमुखाय दद्यात्" ॥ एतदर्द्धं तीर्थचिन्तामणौ अन्यथा पठितम् । तद्यथा । "स्नात्वा तथो-त्तीर्य्य च भास्करञ्च दृष्ट्वा प्रदद्यादथ दक्षिणान्तु" इति । "एवं कृते प्रेतपुरस्थितस्य स्वर्गे स्थितिः स्याच्च महेन्द्रतुल्या" । प्रेत-गणोपगूढ़ां दक्षिणां दिशं नमोऽस्तु धर्मायेति गङ्गाजलप्रवेश-मन्त्रः । स मे प्रीतो भवत्विति अस्थिनिक्षेपमन्त्रः । इत्यनि-रुद्धभट्टाः । अत्र विष्णुपुराणीये । गतप्राणाभिधानात् मृत-स्यैवास्थिगङ्गासम्बन्धे पुण्यजनकमिति तेन जीवतो दन्तादि-

स्थाप्यते पश्चात्तत्सम्बन्धाय इत्याचारः। तत्र क्रमः। स्नात्वाचम्यापसव्यं कृत्वाऽस्थीनि पञ्चगव्येन सिक्ता हिरण्यमध्वाज्यतिलैश्च संयोज्य मृत्तिकापुटे स्थापयित्वा दक्षिणहस्तेन तत्पुटकमादाय दक्षिणां दिशं पश्यन् नमोऽस्तु धर्मायेति वदन् जलं प्रविश्य स मे प्रीतो भवत्विति उक्ता प्रक्षिपेत्। ततो मज्जनं कृत्वा उत्थाय सूर्य्यं दृष्ट्वा दक्षिणामुत्सृजेत्। आदिपुराणम्। "मातुःकुलं पितृकुलं वर्जयित्वा नराधमः। अस्थीन्यन्यकुलोत्थस्य नीत्वा चान्द्रायणञ्चरेत्"॥ एतत्तु धनग्रहणादिना। "अस्थीनि मातापितृपूर्वजानां नयन्ति गङ्गामपि ये कदाचित्। सद्भावकस्यापि दयाभिभूतास्तेषान्तु तीर्थानि फलप्रदानि" इत्यादिपुराणे सद्भावकस्य भावशुद्धस्यान्यकुलजस्यापि कृपातिशयात् धर्मबुद्ध्याऽस्थिप्रक्षेपे फलाभिधानात्। कौर्म्मे। "यावन्त्यस्थीनि गङ्गायां तिष्ठन्ति पुरुषस्य च। तावद्वर्षसहस्राणि स्वर्गलोके महीयते। यावदस्थि मनुष्यस्य गङ्गातोयेषु गच्छति"॥ इति दानधर्मे पूर्वार्द्धेन पाठात् कालस्यापि तावत्त्वं प्रतीयते यमः। "दशाहाभ्यन्तरे यस्य गङ्गातोयेऽस्थि मज्जति। गङ्गायां मरणे यादृक् तादृक् फलमवाप्नुयात्"॥ मिताक्षरायां स्मृतिः। "आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया। तेषामपि तथा गङ्गातोये संस्थापनं हितम्"॥ भविष्ये। "सर्वतीर्थमयीं गङ्गां सर्वदेवमयीं पराम्"। तथा "सर्वानन्दप्रदायिन्यां गङ्गायाञ्च नरोत्तमः। अष्टाक्षरं जपेन्नित्यं मुक्तिस्तस्य करे स्थिता। नमो नारायणायेति प्रणवाद्यष्टवर्णकः"॥ स्कान्दमात्स्ययोः। "क्रोधलोभैकवृत्तीनां विपरीतक्रियावताम्। कामिनाञ्च तथान्यत्र जपयज्ञादिनिष्फलम्॥ गङ्गायां यत् कृतं सर्वं सफलं नात्र संशयः। परं ब्रह्मस्वरूपिण्यां गङ्गायाञ्च स्वभावतः"॥ ब्रह्माण्डे। "सर्वभावा विशुद्धो हि

गङ्गायां कुरुते तु यः। सम्पूर्णफलमाप्नोति हेलया तस्य कर्मणः॥ पापानां पापहन्त्री त्वं स्वर्गमोक्षाप्तिहेतुता। स्वभाव एव गङ्गायाः शैत्यं हिमवतो यथा"॥ अन्यत्र मनुः। "अश्रद्दधानः पापात्मा नास्तिको छिन्नसंशयः। हेतुनिष्ठश्च पञ्चैते न तीर्थफलभागिनः"॥ अच्छिन्नसंशयः फलोपायेतिकर्त्तव्यतासु निश्चयशून्यः। पुलस्त्यः। "कपटेनापि गङ्गायां स्नानदानादि कर्म्म यत्। यो लाभख्यातिपूजार्थं कुर्य्यात् सोऽपि दिवं व्रजेत्॥ चन्द्रसूर्य्यग्रहे चैव मृतानां पिण्डकर्म्मणि। महातीर्थे तु संप्राप्ते व्रतदोषो न विद्यते"॥ अन्यत्र तु देवलः। "सव्रणः सूतकी सूर्यो मत्तोन्मत्तरजस्वला। मृतबन्धुरबन्धुश्च वर्ज्यास्तष्टौ स्वकालतः"॥ इत्यनेन वर्ज्यतामाह अशुचित्वमप्याह। "दन्तलग्नमसंहार्य्यं लेप्यं मन्येत दन्तवत्। न तत्र बहुशः कुर्य्यात् यत्नमुद्धरणे पुनः॥ भवेदशौचमत्यन्तं व्रणवेधात् व्रणे क्षते"॥ रत्नाकरादयोऽप्येवम्। ब्रह्माण्डे। "गङ्गां पुण्यजलां प्राप्य चतुर्दश विवर्जयेत्। शौचमाचमनं केशं निर्माल्यं मलघर्षणम्॥ गात्रसंवाहनं क्रीड़ां प्रतिग्रहमथो रतिम्। अन्यतीर्थरतिञ्चैव अन्यतीर्थप्रसंशनम्॥ वस्त्रत्यागमथाघातं सन्तारञ्च विशेषतः"॥ आचमनं मुखशोधनाचमनपरम्। "गण्डूषान्निक्षिपेत्तूष्णीं तत आचमयेत् द्विजान्"। इति कात्यायनवचने। "भुक्त्वाचामेद्यथोक्तेन विधानेन समाहितः। शोधयेन्मुखहस्तौ च मृदद्भिर्घर्षणैरपि" इत्याचारमाधवीयधृतदेवलवचने च तथा दर्शनात्। न तु कर्माङ्गाचमनादिपरम्। तदबाधेन चरितार्थत्वे तद्बाधा योगात् वस्त्रत्यागमिति जले स्नानसाटीत्यागपरम्। स्कान्दे। "नाभ्यङ्गितश्च प्रविशेत् गङ्गायां न मलार्दितः। न जल्पन्न मृषा वीक्षन्न वदन्नानृतं वचः। मृषा वीक्षन्नितस्ततो वीक्ष्यमाणः"॥ ब्राह्मे। "स्नायीत तैल-

वान् विप्रस्तटभूमिमुपेयिवान्”। तटे गात्रं प्रक्षाल्य स्नायादित्यर्थः। योगियाज्ञवल्क्यः। “अग्राम्यास्त्वागता आपो नद्याः प्रथमवेगिकाः। प्रक्षोऽभितास्तु केनापि याश्च तीर्थाद्विनिःसृताः”॥ तीर्थाद्विनिःसृता इति गङ्गाप्रवाहाद्विच्छिन्नाः। प्रवाहमध्ये विच्छेदे तु अन्तःसलिलप्रवाहित्वान्न दोषः। अन्यथा इदानीं गङ्गायाः सागरगामित्वानुपपत्तेः। “स्रवन्तीष्वनिरुद्धासु त्रयो वर्णा द्विजातयः। प्रातरुत्थाय कर्त्तव्यं देवर्षिपितृतर्पणम्॥ निरुद्धासु न कुर्वीरन्नंशभाक् तत्र सेतुकृत्। तस्मात् परकृतान् सेतून् कूपांश्च परिवर्जयेत्। उद्धृत्य त्रीन् पिण्डान् वा कुर्य्यादापत्सु नो सदा”॥ इति वौधायनवचने निरुद्धाया अपि स्रवन्तीत्वश्रुतेः सुतरामेवान्तःसलिलवाहित्वम्। योगियाज्ञवल्क्यः। “तूष्णीमेवावगाहेत यदा स्यादशुचिर्नरः। आचम्य प्रयतः पश्चात् स्नानं विधिवदाचरेत्”॥ शुचिरपि क्रियाङ्गस्नाने स्नातोऽधिकारी भवति दैवे पैत्रे च कर्मणीत्युपपत्तये प्राङ्निमज्जति क्रियाङ्गस्नानस्य मज्जनरूपत्वात् तीर्थावाहनाद्युपक्रम्य वशिष्ठः। “योऽनेन विधिना स्नाति यत्र तत्राम्भसि द्विजः। स तीर्थफलमाप्नोति तीर्थेषु द्विगुणं स्मृतम्” व्यासः। “नाभिरूर्द्धं हरेदायुरधोनाभेस्तपः क्षयः। नाभेः समजलं कृत्वा स्नानं तर्पणमाचरेत्”॥ नाभिमात्रे जले स्थित्वा इत्याद्युपक्रम्य ततस्त्रिराप्लुत्येत्यत्र। यद्यपि नाभिमात्रे जले स्थित एव कर्म कर्त्तुं शक्नोति नोपविष्टस्तथापि। स्थित्वेत्युपादानाद्बहूदक एव नियमः। स्वल्पोदके तूपविष्टोऽपि एवमङ्गानां बाधकं विना प्रधानसमदेशत्वनियमात्। सङ्कल्पादि तत्रैव। स्कान्दे। “वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी। गङ्गायां यदि लभ्येत सूर्य्यग्रहशतैः समा”॥ वारुणं शतभिषा। “शनिवारसमायुक्ता सा महावारुणी

स्मृता। गङ्गायां यदि लभ्येत कोटिसूर्य्यग्रहैः समा। शुभयोगसमायुक्ता शनौ शतभिषा यदि। महामहेति विख्याता त्रिकोटिकुलमुद्धरेत्"। ब्रह्मपुराणम्। "महाज्यैष्ठ्यान्तु यः पश्येत् पुरुषः पुरुषोत्तमम्। विष्णुलोकमवाप्नोति मोचं गङ्गाम्बुमज्जनात्। ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा। पूर्णिमा गुरुवारेण महाज्यैष्ठी प्रकीर्त्तिता"। ऐन्द्रे ज्येष्ठायाम्। प्रजापत्ये रोहिण्याम्। विना गुरुवारेणापि। "ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा। पूर्णिमा ज्यैष्ठमासस्य महाज्यैष्ठी प्रकीर्त्तिता"॥ अनुराधास्थ गुरावपि। "ऐन्द्रे मैत्रे यदा जीवस्तत्पश्चदशके रविः। पूर्णिमा शक्रचन्द्रेण महाज्यैष्ठी प्रकीर्त्तिता"॥ अनुराधास्थ चन्द्रेऽपि व्याघ्रभूतिः। "ऐन्द्रर्क्षे त्वथवा मैत्रे गुरुचन्द्रौ यदा स्थितौ। पूर्णिमा ज्यैष्ठमासस्य महाज्यैष्ठी प्रकीर्त्तिता"॥ राजमार्त्तण्डे। "ज्यैष्ठसंवत्सरे चैव ज्यैष्ठमासस्य पूर्णिमा। ज्येष्ठाभेन समायुक्ता महाज्यैष्ठी प्रकीर्त्तिता"॥ ज्यैष्ठसंवत्सरः "ज्येष्ठामूलोपगे जीवे वर्षं स्यात् शक्रदैवतम्"। इति विष्णुधर्मोत्तरोक्तो ग्राह्यः। न तु संवत्सरादिपञ्चकान्तर्गतो वर्षविशेषः। ज्यैष्ठः इति विशेषणवैयर्थ्यापत्तेः। संवत्सरे यदि स्यादिति पाठस्तु काल्पनिकः। प्रपञ्चस्तु मलमासतत्त्वेऽनुसन्धेयः। वारुण्यादिषु पूर्णतिथौ मध्याह्नादिसमये नक्षत्रसत्त्वे परदिने पूर्वाह्णतिथिनक्षत्रलाभेऽपि पूर्वदिन एव स्नानम्। "षष्टिदण्डात्मिकायाश्च तिथेर्निष्क्रमणे परे। अकर्मण्यं तिथिमलं विद्यादेकादशीं विना"॥ इति स्मृतेः। न च "कर्म्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः। तया कर्म्माणि कुर्वीत ह्रासवृद्धी न कारणम्"॥ इति वृद्धयाज्ञवल्क्यवचनात्। "मैत्रं प्रसाधनं स्नानं दन्तधावनमञ्जनम्। पूर्वाह्ण एव कुर्वीत देवतानाञ्च

पूजनम्"॥ इति मनुवचनाच्च। पूर्वदिन एव कथमिति वाच्यम्। "दिवाकरकरैः पूतं दिवास्नानं प्रशस्यते। अप्रशस्तं निशि स्नानं राहोरन्यत्र दर्शनात्"॥ इति पराशरवचने दिवामात्रस्य स्नानाङ्गत्वात् मनुवचने मैत्रसाहचर्य्यात् स्नानपदं प्रातःस्नानपरम् एवमेव कुल्लूकभट्टः। मैत्रं पुरीषोत्सर्गः। मित्रदेवताक् पायुसम्बन्धात्। यत्तु वृहद्वशिष्ठः। "अरुग् विचारयेत् स्नानं मध्याह्नात् प्राग्विशेषतः"। इति तत् पूर्वाह्ने विहिततत्तत्तिथ्यादिलाभे बोध्यम् अत्र अरुगित्युपादानात् चण्डालादिपरिस्पर्शे न रोगिणः स्नानम्। स्पष्टमाह रत्नाकरे वृहस्पतिः। "तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे। नगरग्रामदाहे च स्पृष्टास्पृष्टि न दुष्यति॥ आपद्यपि च कष्टायां रुग्भये पीड़िते तथा। मातापित्रोर्गुरोश्चैव निदेशे वर्त्तनात्तथा"॥ स्पृष्टास्पृष्टि इत्यव्ययं क्रियाव्यतीहारे तथेति न दुष्यतीयं:॥ प्रत्युत गङ्गायामुत्तरोत्तरकालप्राशस्त्यमाह भविष्यपुराणम्। "प्रातःस्नानाद्दशगुणं तुल्यं मध्यदिनं तथा। सायंकाले शतगुणमनन्तं शिवसन्निधौ" इति। "प्रातर्निशि तथा सन्ध्या मध्याह्नादिषु संस्मरन्। नारायणमवाप्नोति सद्यः पापक्षयं नरः"॥ इति विष्णुपुराणोक्तवत्। "न देशनियमस्तत्र न कालनियमस्तथा। नोच्छिष्टादौ निषेधोऽस्ति हरेर्नामनि लुब्धक"॥ इति संवत्सरप्रदीपोक्तवत् राहुदर्शनवत् रात्रावपि गङ्गायां प्रतिप्रसवमाह ब्रह्मपुराणम्। "दिवारात्रौ च सन्ध्यायां गङ्गायाञ्च प्रसङ्गतः। स्नात्वाश्वमेधजं पुण्यं गृहेऽप्युद्धृत्य तज्जलैः"॥ रात्रिस्वराधिकारमुपक्रम्यादिपर्वणि गान्धर्ववाक्यञ्च। "अतो रात्रौ प्राप्लुवतो जलं ब्रह्मविदो जनाः। गर्हयन्ति जलान् सर्वान् वनस्थानृपतीनपि"॥ अत्रार्जुनस्य प्रतिवचनम्। "समुद्रे हिमवत्पार्श्वे नद्यामस्याञ्च दुर्म्मते।

रात्रावपि च गङ्गायां स्नानस्य गुणः परिग्रहः॥ असंबाधा देवनद्यो स्वर्गसंवादिनी शुभा। कथमिच्छति तां रोद्धुं नैष धर्मः सनातनः॥ अनिर्वार्य्यमसंबाधं तव वाचा कथं वयम्। न स्पृशामो यथा कामं पुण्यं भागीरथीजलम्"॥ स्मृतिः। "न मन्त्रो न विधिश्चैव न मृदो न च गोमयम्। न कालनियमस्तत्र गङ्गां प्राप्य सरिद्वराम्"॥ भविष्ये। "सर्व एव शुभः कालः सर्वो देवस्तथा शुभः। सर्वोजनस्तथा पात्रं स्नानादौ जाह्नवीजले"॥ गृहस्थरत्नाकरे देवलः। "महानिशा तु सा ज्ञेया मध्यमं प्रहरद्वयम्। तस्यां स्नानं न कुर्वीत काम्यनैमित्तिकादृते"॥ अतएव कल्पतरुः। न नक्तं स्नायादिति बौधायनवचनं रागप्राप्तस्नानविषयम्। अतएव "नद्यः पुण्याः सदा सर्वा जाह्नवी च विशेषतः"। इति शङ्खवचनं तद्धृतमपि सङ्गच्छते। कृत्यतत्त्वार्णवेऽपि स्कन्दपुराणम्। "विशेषतस्तु जाह्नव्यां सर्वदा तर्पयेत् पितॄन्। न कालनियमस्तत्र क्रियते सर्वकर्मसु"॥ एवञ्च गङ्गास्नानस्य दिवारात्रि कर्त्तव्यत्वाविशेषात् तत्तन्निमित्ततिथिविशेषस्यापि दिवारात्रिसम्बन्धित्वेनाविशेषः। कालमाधवीयेऽपि विशेषवचनाभावे सामान्यस्य स्वीकर्त्तव्यत्वादित्युक्तं तच्च "कर्म्मणो यस्य यः कालः" इति प्रागुक्तत्वात्। "अहःसु तिथयः पुण्याः कर्म्मानुष्ठानतो दिवा। नक्तादिव्रतयोगे तु रात्रियोगो विशिष्यते"॥ जावालोक्तस्य दिवाविहितकर्म्मानुष्ठाने अहःसु तिथयः पुण्याः नक्तादिव्रतयोगे रात्रिविहितकर्म्मणि रात्रिसम्बन्धितिथयः पुण्या इत्युक्तत्वाच्च। न च रात्रौ गङ्गायां तीर्थश्राद्धं स्यात् इति वाच्यं तस्य तीर्थप्राप्तिमात्रनिमित्तकत्वात् न तु गङ्गात्वेन निमित्तकत्वमिति। एतेन वारुण्यादौ महाफलजनकत्वात् रात्रावपि गङ्गास्नानं कर्त्तव्यमिति महाव्यामोह

एव तस्या राहुदर्शनादिप्रतिप्रसूतेतरसर्व्वव्रतकर्म्मणि पर्य्युदस्तत्वादिति निरस्तम्। स्नानेऽपि मुहूर्त्तन्यूनतिथिर्न ग्राह्या। यथा स्कान्दपुराणं "व्रतोपवासस्नानादौ घटिकैका यदा भवेत्। उदये सा तिथिर्ग्राह्या विपरीता तु पैतृके"॥ पद्मपुराणे। ग्राह्या इत्यत्र भद्रेति पाठः विष्णुधर्मोत्तरे। आद्यादावस्तगामिनीति चतुर्थचरणे पाठः। घटिकात्र मुहूर्त्तपरा पैतृक इत्यनुरोधात्। भविष्ये भोजदेवधृतम्। "चैत्रकृष्णचतुर्दश्यामङ्गारकदिनं भवेत्। पिशाचत्वं पुनर्न स्यात् गङ्गायां स्नानभोजनात्"॥ भविष्ये। "माहात्म्यं ये च गङ्गायां शृण्वन्ति च पठन्ति च। तेऽप्यसंख्यैर्महापापैर्मुच्यन्ते नात्र संशयः"॥

गोवधादौ बालत्वादिना प्रायश्चित्तभेदः। "कृच्छ्रांस्तु चतुरः कुर्य्यात् गोवधे बुद्धिपूर्व्वके। अमत्या तु द्वयं कुर्य्यात् तदर्द्धं बालवृद्धयोः॥ स्त्रीशूद्रयोरेवमेतद्वधे चैव न संशयः"॥ अत्र शूद्रकर्त्तृकवधे अर्द्धश्रुतेः। "गोघ्नवद्विहितः कल्पश्चान्द्रायणमथापि वा॥ अभ्यासे तु तयोर्भूयस्ततः शुद्धिमवाप्नुयात्"॥ इत्यनेन उपपातकमात्रे गोवधधर्मातिदेशात्। तत्र शूद्रस्यार्द्धमन्येषां वर्णानां सम्पूर्णमिति। एवञ्च "शूद्राणाञ्च सधर्म्माणः सर्व्वेऽपध्वंसजाः स्मृताः"॥ इति मनूक्तेः प्रतिलोमजातानमप्यर्द्धं यत्र एकस्याव्यक्तेर्बालत्वं स्त्रीत्वञ्च तत्र यथा बालत्वादिना अर्द्धं तथा स्त्रीत्वात्तदर्द्धं पादमात्रमिति यावत्। यथा मिताक्षरायाम्। "अर्वाक् द्वादशवर्षीयादशीतेरूर्द्ध्वमेव च। अर्द्धमेव भवेत् पुंसां तुरीयन्तत्र योषिताम्"॥ न चैवं तस्याः शूद्रत्वात्तदर्द्धमिति वाच्यम्। अनुग्रहे पादमात्रावधेर्वक्तव्यत्वात्। यथा हारीतः। "यथा वयो यथाकालं यथा प्राणश्च ब्राह्मणे। प्रायश्चित्तं प्रयोक्तव्यं ब्राह्मणैर्धर्मपाठकैः"॥ वयो बाल्यादि। कालो ग्रीष्मादिः। यथा प्राणमशक्तत्वादि। "तस्मात् कृच्छ्र-

मथाप्यर्द्धं पादं वापि विधानतः। ज्ञात्वा बलाबलं कालं प्रायश्चित्तं प्रकल्पयेत्"॥ पादं वेति पादमेवेत्यर्थः। "वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये"। इति विश्वदर्शनात्। अतएव "पादं वेति ततो न्यूनं प्रायश्चित्तं न कल्पयेत्" इति प्रायश्चित्तविवेकः। शास्त्रीयं प्रायश्चित्तमुदाहृत्य पश्चादनुग्रहः कार्य्यः इत्याहाङ्गिराः। "कृत्वा पूर्वमुदाहारं यथोक्तं धर्म्मवर्त्तिभिः। पश्चात् कार्य्यानुसारेण शक्त्या कुर्व्वन्त्यनुग्रहम्"॥

अथ प्रायश्चित्तोपदेशादि। यमः। "एको द्वौ वा त्रयो वापि यद् ब्रूयुर्धर्म्मपाठकाः। स धर्म इति विज्ञेयो नेतरेषां सहस्रशः"॥ वृद्धशातातपः। "अबुद्ध्वा धर्मशास्त्राणि प्रायश्चित्तं वदन्ति ये। प्रायश्चित्ती भवेत् पूतस्तत्पापं तेषु गच्छति"॥ अतएव यमः। "वेदाः प्रमाणांस्मृतयः प्रमाणं धर्म्मार्थसंयुक्तवचः प्रमाणम्। यस्य प्रमाणं न भवेत् प्रमाणं कस्तस्य कुर्य्याद्वचनं प्रमाणम्"॥ धर्मार्थसंयुक्तवचःमीमांसकसन्निबन्धृवाक्यम्। यस्येत्यनन्तरोक्तं प्रमाण एवं यो न मन्येत इत्यर्थः। मनुरपि। "आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना। यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः"॥ ऋषिजुष्टत्वादार्षं वेदं धर्मोपदेशं तन्मूलं स्मृत्यादिकम्। यस्तदविरुद्धेन तर्केण मीमांसादिना अनुसन्धत्ते विचारयति स धर्मं वेद जानाति न तु मीमांसानभिज्ञः। अतएव भट्टपादैरुक्तम्। "धर्मे प्रमीयमाणे हि वेदेन करणात्मना। इति कर्त्तव्यताभागं मीमांसा पूरयिष्यति"॥ इति मीमांसा वेदविचारः। सा च कर्मब्रह्मभेदात् जैमिनिवादरायणप्रणीता द्विविधा। अतएव वृहस्पतिः। "केवलं शास्त्रमाश्रित्य न कर्त्तव्यो विनिर्णयः। युक्तिहीनविचारे तु धर्महानिः प्रजायते"॥ वशिष्ठोऽपि। "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्। बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति"॥

श्रुतमर्थावबोधकव्याकरणमीमांसादिशास्त्राण्यष्टादश। यथा विष्णुपुराणम्। "अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः। धर्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश॥ आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः। अर्थशास्त्रं चतुर्थञ्च विद्या ह्यष्टादशैव ताः"॥ चतुर्दशधर्मप्रमितिप्रधानानि चतस्रः पुनर्दृष्टप्रधानाः क्वचिदलौकिकमर्थप्रमाणयन्त्यो धर्मोऽपि प्रमाणम्। अङ्गानि षड़ित्यष्टादशप्रायश्चित्तं जानतामनुपदेशे दोषमाहाङ्गिराः। "आर्त्तानां मार्गमाणानां प्रायश्चित्तानि ये द्विजाः। जानन्तो न प्रयच्छन्ति तेऽपि तद्दोषभागिनः"॥ प्रायश्चित्तोपदेशे पुण्य-मात्र स एव। "यत् पुण्यमुद्धृते विप्रे म्रियमाणे जलादिषु। तत् पुण्यं तारिते पापात् प्रायश्चित्तैस्तु मानवे"॥ अर्चां विना न वक्तव्यम् "अनर्चितैरनाहूतैरस्पृष्टैश्चैव संसदि। प्रायश्चित्तं न वक्तव्यं जानद्भिरपि लभ्यते"॥ इत्यङ्गिरो वचनात्। व्यव-हारचिन्तामणौ ज्योतिषे च। "नाष्टम्यां न चतुर्दश्यां प्राय-श्चित्तपरीक्षणे। न परीक्षा विवाहश्च शनिभौमदिने तथा"॥ विष्णुः। "ब्राह्मणादीनामशौचे यः सकृदन्नमश्नाति तस्य तावदेवाशौचं यावत्तेषाम्। अशौचापगमे प्रायश्चित्तं कुर्य्या-दिति"। अशौचापगमे प्रायश्चित्तविधानादशौचादभ्यन्तरे प्रायश्चित्तानाम्। "नैमित्तिकानि काम्यानि निपतन्ति यथा यथा। तथा तथैव कार्य्याणि न कालस्तु विधीयते"॥ इति दक्षवचनेनापि न प्रतिप्रसवः। प्रायश्चित्तोपदेशाय वस्त्रादिना ब्राह्मणस्तोषणीयः। यथा मिताक्षरायां पराशरः। "पापं प्रख्यापयेत् पापी धेनुं दत्त्वा तथा वृषम्"। एतच्चोपलक्षणम्। "प्रख्याप्य पापं वक्तृभ्यः किञ्चिद्दत्त्वा व्रतं चरेत्" इति स्मृतेः। देवलवचने तोषयित्वा द्विजोत्तमानिति। अत्र तोषयित्वेति श्रवणात् आनतिकरत्वेन तद्ग्रहणान्न दोषः। पापिभ्यः

प्रतिग्रह एव दोषश्रुतेः। प्रतिग्रहस्त्वदृष्टार्थत्यक्तद्रव्यस्वीकार इति प्रायश्चित्तविवेकः। अतएव प्रायश्चित्तद्रव्यग्रहणे दोषं वदन्ति। क्षत्रियादिभ्यः प्रायश्चित्तोपदेशो ब्राह्मणमन्तर्धाय करणीयः। यथाहाङ्गिराः "न्यायतो मार्गमाणस्य क्षत्रियादेः प्रणामिनः। अन्तरा ब्राह्मणं कृत्वा व्रतमेतत् समादिशेत्"॥ गोवधे तु स्वामिने गोमूल्यं दत्त्वा व्रतं करणीयम्। "आदौ गोपतये दत्त्वा गोमूल्यं साधुकल्पितम्" ॥ इति ब्रह्मपुराणात्। न चैतद्ग्रहणे दोषः। "गवां विक्रयकारी च गविलोमानि यानि च। तावद्वर्षसहस्राणि गवां गोष्ठे कृमिर्भवेत्" इति यमवचनादिति वाच्यम्। तद्ग्रहणस्य विक्रयत्वेन व्यवहाराभावात्। अवस्थितस्य गवादेर्मूल्यग्रहण एव व्यवह्रियते प्रतिरूपकस्थानीयत्वाच्च न हि प्रतिरूपकग्रहणं विक्रयः। तथा च पराशरः। "प्रमापणे प्राणभृतां प्रदद्यात् प्रतिरूपकम्। तस्यानुरूपं मूल्यं वा दद्यादित्य ब्रवीन्मनुः"॥ प्रतिरूपकं तत्तुल्यप्राण्यन्तरम्। एवं चौरात् स्वामिनो वा क्रीतगवादिकं गोस्वामिने दत्त्वा तन्मूल्यं गृह्णतो न विक्रयः किन्तु उपाधिं विना यत्र स्वेच्छया लाभाय वा विक्रीणीते तत्र तथेति।

अथ चौरालाभविनिर्णयः। याज्ञवल्क्यः। "विक्रेतुर्दर्शनाच्छुद्धिः स्वामी द्रव्यं नृपोदमम्। क्रेता मूल्यमवाप्नोति तस्माद् यस्तस्य विक्रयी"॥ क्रेतुश्चौरत्वेनाभिशस्तत्वे सति विक्रेतुर्दर्शनाच्छुद्धिः। एतदप्रकाशक्रये। यथा बृहस्पतिः "प्रकाशं वा क्रयं कुर्य्यात् मूलं वापि समर्पयेत्"॥ मूलं विक्रेतारम्। यस्तस्यापहृतद्रव्यस्य विक्रयी चौरस्तस्मात् स्वामी नष्टधनः सन् "नाष्टिकस्यैव कुरुते तद्धनं ज्ञातिभिः स्वकम्। अदत्तत्यक्तविक्रीतं कृत्वा स्वं लभते धनी"॥ इत्युक्तरीत्या स्वं द्रव्यं नृपश्चापराधानुरूपं दण्डं "धान्यं दशभ्यः

कुम्भेभ्यो हरतोऽप्यधिकं वधः”॥ इति मनूक्तादिदण्डं क्रेता च मूल्यमवाप्नोति। कुम्भपरिमाणमाह कात्यायनः। “दश द्रोणा भवेत् खारी कुम्भोऽपि द्रोणविंशतिः”। द्रोण उक्तो मिताक्षरायाम्। “अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ तु पुष्कलम् पुष्कलानि च चत्वारि आढकः परिकीर्त्तितः। चतुराढको भवेत् द्रोण इत्येतन्मानलक्षणम्” कल्पतरौ द्वादशप्रसृतिभिः कुडवस्तच्चतुर्गुणोत्तरं प्रस्थाढकद्रोणा इत्युक्तं कुडवचतुर्गुणादष्टचत्वारिंशत् प्रसृतिभिः प्रस्थस्तच्चतुर्गुणा द्विनवत्यधिकशतेन प्रसृतिभिराढकः। तच्चतुर्गुणादष्टषष्ट्यधिकसप्तशतप्रसृतिभिर्द्रोणः। तद्दशगुणादशीत्यधिकषट्शत्यधिकसप्तसहस्रप्रसृतिभिः खारी द्रोणविंशतिगुणात् षष्ट्यधिकत्रिशताधिकपञ्चदशसहस्रप्रसृतिभिः कुम्भः। तेन षट्प्रसृतिभिः कुञ्चिः। प्रस्थपुष्कलयोः पर्य्यायता इति कुञ्चितण्डुलाश्च पुरुषाहारयोग्या इति गोपथब्राह्मणाच्च। “द्वात्रिंशत्पलिकं प्रस्थमुक्तं स्वयमथर्वणा। आढकस्तु चतुःप्रस्थश्चतुर्भिर्द्रोण आढकैः। पलप्रमाणन्तु वक्ष्यते। प्रकाशक्रये तु स्वामिनो ग्रहणे नारदबृहस्पती। “वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः। अविज्ञाता श्रयात् क्रीतं विक्रेता यदि वा मृतः। स्वामी दत्त्वार्द्धमूल्यन्तु प्रगृह्णीत स्वकन्धनम्। अर्द्धं द्वयोरपहृतं तत्र स्यात् व्यवहारतः। अविज्ञातक्रये दोषस्तथा चापरिपालनम्। एतद्द्वयं समाख्यातं द्रव्यहानिकरं परम्”।

अथ क्रयनिर्णयः। मूल्यं दास्यामीति कृत्वा ग्रहणादपि क्रयसिद्धिः। तथा विवादचिन्तामणौ कात्यायनः। “पण्यं गृहीत्वा यो मूल्यमदत्त्वैव दिशं व्रजेत्। ऋतुत्रयस्योपरिष्टात्तद्धनं वृद्धिमाप्नुयात्”॥ अतएव बृहस्पतिः। “गृहक्षेत्रादिकं क्रीत्वा तुल्यमूल्याक्षरान्वितम्। पत्रं कारयते यत्तु

क्रयलेख्यं तदुच्यते"। क्रीतेऽपि समयविशेषाभ्यन्तरे पश्चात्तापादसिद्धिः। यथा मनुः। "क्रीत्वा विक्रीय वा किञ्चित् यस्येहानुशयो भवेत्। सोऽन्तर्दशाहे तत् द्रव्यं दद्याच्चैवाददीत वा"। एतत् याज्ञवल्क्येतरपरम्। यथा याज्ञवल्क्यः। "दशैकपञ्चसप्ताहमासत्र्यहार्द्धमासिकम्। बीजायो वाह्यरत्नस्त्रीदोह्या पुंसां परीक्षणम्"॥ अत्र बृहस्पतिः "अतोऽर्वाक् पण्यदोषस्तु यदि संजायते क्वचित्। विक्रेतुः प्रतिदेयन्तत् क्रेता मूल्यमवाप्नुयात्"॥ अतस्तत् द्रव्यपरीक्षणकालात्। कात्यायनः। "अविज्ञातन्तु यत् क्रीतं दुष्टं पश्चाद्विभावितम्। क्रीतं तत् स्वामिने देयं पण्यं कालेऽन्यथा न तु"। काले प्रागुक्तपरीक्षाकालाभ्यन्तरे। परीक्षे तु बृहस्पतिः। "परीक्षेत स्वयं पण्यमन्येषान्तु प्रदर्शयेत्। परीक्षितं बहुमतं गृहीत्वा न पुनस्त्यजेत्"॥ अत्र विशेषयति नारदः। "क्रीत्वा मूल्येन यो द्रव्यं दुष्क्रीतं मन्यते क्रयी। विक्रेतुः प्रतिदेयन्तत् तस्मिन्नेवाह्न्यविक्षतम्। द्वितीयेऽह्नि ददत् क्रेता मूल्यात् त्रिंशांशमाहरेत्। द्विगुणन्तु तृतीयेऽह्नि परतः क्रेतुरेव तत्"। आहरेत् दद्यात् विक्रेत्रे इति शेषः। द्विगुणं त्रिंशांशस्य इति याज्ञवल्क्यः। "राजदैवोपघातेन पण्यदोषे उपागते। हानिर्विक्रेतुरेवासौ याचितस्याप्रयच्छतः"॥ नारदः। "उपहन्येत वा पण्यं दह्येतापह्रियेत वा। विक्रेतुरेव सोऽनर्थो विक्रीयासंप्रयच्छतः। दीयमानं न गृह्णाति क्रीतं पण्यन्तु यः क्रयी। स एवास्य भवेत् दोषो विक्रेतुर्योऽप्रयच्छतः"॥

अथ प्रायश्चित्तपूर्वाह्ण कृत्यम्। शङ्खलिखितौ। "वाप्य केशान् नखान् पूर्वं घृतं प्राश्य वह्निर्निशि। प्रत्येकं नियतं कालमात्मनो व्रतमादिशेत्। प्रायश्चित्तमुपासीनो वाग्यतस्त्रिसवनं स्पृशेत्"॥ घृतप्रशंसामाह मत्स्यपुराणं "यस्मात्तेजो-

मयं ब्रह्म हृते तत्र व्यवस्थितम्। तेजोऽमृतमयं दिव्यं महापातकनाशनम्" ॥ वह्निर्निशीतिपरेणान्वयः। "व्रतं निशामुखे ग्राह्यं वह्निस्तारकदर्शनात्" इति लघुहारीतवचनैकवाक्यत्वात् प्रत्येकमित्यादि पूर्वं व्याख्यातम्। केशधारणेच्छायां द्विगुणव्रतादिमाह लघुहारीतः। "राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः। केशानां वपनं कृत्वा प्रायश्चित्तं समाचरेत् केशानां धारणार्थंस्तु द्विगुणं व्रतमाचरेत्। द्विगुणेऽपि व्रते चीर्णे द्विगुणा दक्षिणा भवेत्"। विद्वद्विप्रादीनान्तु महापातकादि दोष एव मुण्डनम्। "विद्वद्विप्रनृपस्त्रीणां नेष्यते केशवापनम्। ऋते महापातकिनो गोहन्तुश्चावकीर्णिनः" ॥ इति मिताक्षराधृतवचनात्। हारीतेन प्रायश्चित्तपूर्वाह्णे मुण्डनविधानात्। धेनुदानादावपि तथा। स्त्रीणां विशेषमाह भवदेवभट्टधृतं "वपनं नैव नारीणां नानुव्रज्या जपादिकम्। न गोष्ठे शयनं तासां न चादध्याद्ववाजिनम्। सर्वान् केशान् समुद्धृत्य छेदयेदङ्गुलिद्वयम्। सर्वत्रैव हि नारीणां शिरसो मुण्डनं स्मृतम्" ॥ पराशरस्यैतदिति मिताक्षरा। सर्वत्र इति प्रागुक्तमहापातकादिपरं न तु प्रयागपरं केशमूलान्युपाश्रित्य इति वचनात्।

अथ बाल्यादिभेदात् प्रायश्चित्तम्। तत्रोनषोडशवर्षीयस्यार्द्धम्। "अशीतिर्यस्य वर्षाणि बालो वाप्यून षोड़शः। प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो रोगिण एव च" इति विष्णुशातातपवचनात्। "पादो बालेषु दातव्यः सर्वपापेष्वयं विधिः" ॥ इति लघुहारीतवचनन्तु ऊनैकादशवर्षपञ्चवर्षाधिकबालविषयम्। यथाङ्गिराः "ऊनैकादशवर्षस्य पञ्चवर्षाधिकस्य च। चरेत् गुरुः सुहृद्वापि प्रायश्चित्तं विशुद्धये। ततो न्यूनतरस्यास्य नापराधो न पातकम्। न चास्य राजदण्डोऽपि प्रायश्चित्तं न

विद्यते" ॥ ब्रह्मपुराणे । "रोगी वृद्धस्तु पोगण्डः कुर्वन्त्यन्यैर्व्रतं सदा"। दशमस्कन्धीयद्वादशाध्यायटीकायां श्रीधरस्वामिधृतवचनम्। पोगण्डमाह। "कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि। कैशोरमापञ्चदशाद्यौवनन्तु ततः परम्" ॥ दशमावधीत्यापञ्चदशादित्येकवाक्यत्वात् ऊनैकादशवर्षेत्यूनषोड़श इत्येतयोर्दशपञ्चदशपरतेति। दशवर्षाभ्यन्तरीयस्य बालस्य पादविधानान्नास्यानुग्रहान्तरमिति प्रागेवोक्तम्।

अथ धेनुमूल्यव्यवस्था। संवर्त्तः। "प्राजापत्यव्रताशक्तौ धेनुं दद्यात् पयस्विनीम्। धेनोरभावे दातव्यं तुल्यं मूल्यं न संशयः" ॥ पयस्विनीमिति विशेषणं दुग्धोपयोगाय सा च वत्सं विना न सम्भवति। अतः सवत्साया एव दानं मुख्यं तदभावे यथोचितं तन्मूल्यं तदभावे पुराणत्रयम्। "द्वात्रिंशत्पणिका गावो वत्सः पौराणिको भवेत्" इति कात्यायनवचनात्। षट्त्रिंशत्पणमिति कृत्वा पठन्ति। "धेनुः पञ्चभिराढ्यानां मध्यानां त्रिपुराणिकी। कार्षापणैकमूल्या हि दरिद्राणां प्रकीर्त्तिता" ॥ अत्र पुराणत्रयलभ्यं गोतमोक्तं हिरण्यादिकमेव देयं तद्यथा। हिरण्यं गौर्वासोऽश्वो भूमिस्तिलाघृतमन्नमिति देयानि। एतान्येवानादेशे विकल्पेन क्रियेरन्निति अन्यथा इदमनर्थकं स्यात् इति प्रायश्चित्तविवेकः तन्मूल्यं हिरण्यं गौरित्यादिना गोविकल्पकत्वेन हिरण्यामुक्तं न तु गोमूल्यत्वेन ततश्च द्वात्रिंशत्पणिका इत्यादिवचनात् कार्षापणत्रयदानमेव युक्तम्। तत्र "ताम्रिकः वार्षिकः पणः" इति याज्ञवल्क्यवचनेन "गुञ्जाः पञ्चाद्यमाषकः। ते षोड़शाद्यः कर्षोऽस्त्री पलं कर्षचतुष्टयम्" इत्यमरसिंहोक्तेन अशीतिरक्तिकापरिमितताम्रे पणशब्दः सङ्केतितः स च तावत्संख्यकवराटकैर्लभ्यत इति वराटकेष्वपि

तथा व्यवहारः। एतन्मूलकं भविष्यमत्स्यतन्त्रयोर्वचनम्। "अशीभिर्वराटकैः पण इत्यभिधीयते। तैः षोडशैः पुराणं स्यात् रजतं सप्तभिस्तु तैः" इति गौतमोक्तपरिगणनीयनियमस्तु अनादिष्टे प्राथमिककल्पाय आदिष्टे तत्तद्‌द्रव्यप्राधान्यं हिरण्यादेरानुकल्पिकत्वमिति विशेषः। अतएव यमेन सामान्यतो दानमुक्तं यथा। "शोषणेन शरीरस्य तपसाध्ययनेन च। पापकृन्मुच्यते पापात् दानेन दमनेन च"॥ अतः कार्षापणत्रयलभ्यं रजतादि दीयते। यत्तु मिताक्षरायाम्। "गवामभावे निष्कः स्यात्तदर्द्धं पाद एव च" इति स्मरणान्निष्कादिकमुक्तं तच्छक्तमात्यपेक्षया तत्रापि "चतुःसौवर्णिको निष्कः" इति मनूक्तनिष्कस्य न ग्रहणम् अत्यन्तविसदृशमूल्यत्वात् साष्टशतसुवर्णनिष्कवत्। किन्तु दीनारनिष्कस्य ग्रहणं तथा चामरः। "साष्टे शते सुवर्णानां हेम्न्युरो भूषणे पले दीनारेऽपि च निष्कोऽस्त्री" इति दीनार उक्तो विष्णुगुप्तेन। "दीनारो रोपकैरष्टाविंशत्या परिकीर्त्तितः। सुवर्णसप्ततितमो भागो रोपक उच्यते"॥ सुवर्णस्त्वशीतिरत्तिकापरिमितं हेम। तथा च मनुः। "पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोड़श" इति अत्र काञ्चनं व्यक्तमाहामरसिंहः। "सुवर्णविस्तौ हेम्नोऽक्षः" इति। एवञ्च सप्तमांशाधिकहेमरत्तिकारोपकः तदष्टाविंशत्या द्वात्रिंशद्रत्तिकापरिमितो दीनारो निष्कः।

अथ ज्ञानकृतादिनिरूपणम्। तत्र गोबधस्य बुद्धिपूर्वकं तदा भवति यदि गां ज्ञात्वा एतां हन्मीति इच्छया हन्ति तदा कामनादारैव ज्ञानस्य प्रवृत्त्यङ्गत्वात्तदभावे त्वबुद्धिपूर्वकत्वम्। अतएव प्रवृत्त्यङ्गज्ञानस्य कामनाव्यभिचाराभावादेव। "कृच्छ्रांस्तु चतुरः कुर्य्यात् गोबधे बुद्धिपूर्वके। अमत्या च इयं कार्य्यम्" इति विश्वामित्रवचनेन ज्ञानाज्ञानाभ्यां

द्वैविध्यमुक्तम् अन्यत्र कामाकामाभ्याम् इत्युक्तम् । यथा वृद्धस्मृतिः । "कामाकामकृतं त्वेवं महापापं द्विधा मतम् । पुरुषापेक्षया चैव निष्कृतिर्द्विविधा स्मृता" ॥ इत्यञ्च गवयादिभ्रमेण यो गोवधस्तत्र गोवधस्य न ज्ञानकृतत्वं गोत्वेनाज्ञानात् यदि गोत्वेन जानन्नप्यन्योद्देशच्छिन्ननाराचादिना यदि हन्ति तदापि न ज्ञानकृतत्वं तद्विषयकहननेच्छारूपद्वाराभावात् । वधनिरुक्तिरग्निपुराणे । "स्यात् प्राणवियोगफलकव्यापारो हननं स्मृतम् । रागाद्द्वेषात् प्रमादाद्वा स्वतः परत एव वा" ॥

अथ विप्रादिस्वामिकगोवधप्रायश्चित्तम् । तत्र मनुना "गोषु ब्राह्मणसंस्थासु" इत्यनेन दण्डप्रकरणे ब्राह्मणस्वामिकत्वेन गोर्गुरुत्वमभिहितम् । नारदेन च । "देवब्राह्मणराज्ञाञ्च द्रव्यं विज्ञेयमुत्तमम् । इत्युक्तम् अतस्तद्वधे गुरुप्रायश्चित्तं युक्तम् । तदाह मनुः । "उपपातकसंयुक्तो गोघ्नो मासं यवान् पिबेत् । कृतवापो वसेद्गोष्ठे चर्म्मणा तेन संवृतः ॥ चतुर्थकालमश्नीयादक्षारलवणं मितम् । गोमूत्रेण चरेत् स्नानं द्वौ मासौ नियतेन्द्रियः ॥ दिवानुगच्छेत्तागास्तु तिष्ठन्नूर्द्ध्वं रजः पिबेत् । शुश्रूषित्वा नमस्कृत्वा रात्रौ वीरासनं वसेत् । तिष्ठन्तीष्वनुतिष्ठेत्तु व्रजन्तीष्वप्यनुव्रजेत् । आसीनासु तथासीनो नियतो वीतमत्सरः ॥ आतुरामभिशस्तां वा चौरव्याघ्रादिभिर्भयैः । पतितां पङ्कलग्नां वा सर्वप्राणैर्विमोचयेत् ॥ उष्णे वर्षति शीते वा मारुते वाति वा भृशम् । न कुर्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः ॥ आत्मानो यदि वान्येषां गृहे क्षेत्रे खलेऽथ वा । भक्षयन्तीं न कथयेत् पिबन्तं चैव वत्सकम् ॥ अनेन विधिना यस्तु गोघ्नो गामनुगच्छति । स गोहत्याकृतं पापं त्रिभिर्मासैर्व्यपोहति ॥ वृषभैकादशा गाश्च दद्यात् सुचरितव्रतः । अविद्यमाने सर्वस्वं वेदविद्भ्यो निवेदयेत्" ॥ उपपातकसंयुक्तो

गोघ्नो न तु यागाद्यर्थं गोवधकर्त्तापि अतएव सामान्यत उक्तं हारीतेन "वृथा पशुघाते प्राजापत्यम्"। इति यागाद्यर्थोऽपि गोवधः कलौ निषिद्धः। "दीर्घकालं ब्रह्मचर्य्यं धारणं च कमण्डलोः। गोत्रान्मातृसपिण्डाद्वा विवाहो गोवधस्तथा॥ नराश्वमेधौ मद्यञ्च कलौ वर्ज्यं द्विजातिभिः"॥ इति हला-युधशूलपाणिरघ्नन्दरत्नाकरधृतब्रह्मपुराणवचनात्। मद्ये नि-षेधं स्पष्टयत्युशना। "मद्यमपेयमदेयमनिर्ग्राह्यमिति"। एवञ्च दुर्गापूजादौ यन्मद्यदानमुक्तं तत्कलौतरपरम्। कृतवापः कृतसशिखवपनो कृतगवीचर्म्मा कृतपरिधानोत्तरावगुण्ठनो मासत्रयं गोष्ठे वसेत्। तत्र प्रथममासं यवान् यवागूकृतान् पिबेत्। अपरमासद्वये चतुर्थकालमश्नीयात्। पूर्वदिने उपोष्य परदिने रात्रौ भुञ्जीत। मुनिभिर्द्विरशनं प्रोक्तमिति श्रवणात्। अक्षारलवणम् अकृत्रिमलवणं मितं स्वल्पम्। मासत्रयधर्म्मानाह दिवानुगच्छेत् इति। अनुः सहार्थः। तिष्ठन्तीष्वित्यादिषु बह्वीनां धर्म्मः कार्य्यः। स चात्मक्लेशकरः वीरासनं भित्त्याद्यनाश्रित्योपवेशनम् अभिशस्ताम् अतिक्रान्तां भयैर्भयनिमित्तैः सर्वप्राणैः सर्वसामर्थ्यैः। विमोचयेत्तदपसा-रयेत्। अतएव विष्णुपुराणम्। "शमं नयति यः क्रुद्धान् सर्वबन्धुरमत्सरः। भीताश्वासनकृत् साधुः स्वर्गस्तस्याल्पकं फलम्"॥ गां न कथयेन्निवारणाभिप्रायेण पिबन्तं स्तन्यमिति शेषः। सुचरितव्रतः सम्यक्चरितव्रतः। दक्षिणार्थं वृषभ-सहितदश गा दद्यात् तदभावे स्वल्पमपि सर्वस्वं दक्षिणार्थं दद्यात्। धेनुसंकलनमाह। त्रैमासिकव्रते मासयवपानं प्राजापत्यद्वयतुल्यं यतो यमेन अस्थ्यादिभङ्गे मासार्द्धयवपान-मुक्तं तत्रैव गोभिलेन प्राजापत्यमुक्तम्। यथा भवदेवभट्टधृत-यमवचनम्। "अस्थिभङ्गं गवां कृत्वा लाङ्गूलच्छेदनं तथा।

पाटने कर्णमूलानां मासार्द्धन्तु यवान् पिबेत्"॥ स्मृतिसागरे गोभिलः। "कर्णलाङ्गूलयोश्छेदमस्थिभङ्गं विधाय च। प्राजापत्यव्रतं कुर्य्युश्चत्वारो ब्राह्मणादयः"॥ अत्र यत् शूद्रस्य द्विजतुल्यप्रायश्चित्तमुक्तं तदस्थिभङ्गादिमात्रपरं वैश्यतुल्यशूद्रमात्रपरं वा एवञ्च यत् प्रायश्चित्तविवेके मासयावकपानं क्वचित् द्वादशप्राजापत्यतुल्यमुक्तं तद् गोमूत्रमात्रसिद्धयावकपरं क्वचिच्च प्राजापत्यद्वयतुल्यं तत् सिद्धानन्तरप्रक्षिप्त-गोमूत्रपरमित्यविरोधः। मासद्वयचतुर्थकालभोजने त्रिंशदुपवासास्त्रिंशता नक्तैर्दशोपवासाः। तथा च शूलपाणिमहामहोपाध्यायैस्त्रिंशच्च निरन्तरोपवासाः पञ्चदश प्राजापत्यतुल्याः। मासोपवास धेनुसंकलने उक्ताः। अत्रैकान्तरितत्वादितिकर्त्तव्यतायोगाच्च। एकादशप्राजापत्यतुल्याः तत्र त्रिंशन्नक्तभोजनं चतुःप्राजापत्यतुल्यं मिलित्वा त्रैमासिकव्रतं सप्तदशप्राजापत्यतुल्यं तदभावे सप्तदशधेनवो देया इति बहुसम्मता व्यवस्था। भवदेवभट्टसम्मता तु द्वादशधेनव इति पूर्वोक्ता च दक्षिणा देया। तदशक्तौ एकपञ्चाशत्षट्त्रिंशद्वा कार्षापणा देया। दक्षिणायान्तु वृषभमूल्यं कार्षापणपञ्चकं गोदशकमूल्यं कार्षापणदशकमिति। पञ्चदशकार्षापणाः एतच्च ज्ञानत इति। अज्ञानतोऽर्द्धम्। ततो ब्राह्मणान् भोजयित्वा गौरेका दक्षिणा देया। "भुक्तवत्सु च विप्रेषु गां वै दद्याद्विचक्षणः। गवामभावे दातव्यं गोमूल्यञ्च न संशयः"॥ इति संवर्त्तवचनात्तन्मूल्यं कार्षापणमेकं वा दद्यात् एतच्च शस्त्रमुष्टिलोष्ट्रलगुडविषाग्न्यादिभिः प्रायिकमृत्युफलकैर्हनने बोध्यम्। तथा वृहस्पतिः। "शस्त्रादिना तु गां हत्वा मानवं व्रतमाचरेत्"। स्त्रीशूद्रबालवृद्धानामर्द्धम् एकस्योभयपरत्वे पादः। एवञ्च ब्राह्मणादीनां सगुणत्वनिर्गुणत्वादिना कालदेशादितारतम्येन च लघु-

गुरुप्रायश्चित्तान्तरं बोध्यम्। "समद्विगुणसाहस्रमानन्त्यञ्च यथा क्रमम्। दाने फलविशेषः स्यात् हिंसायां तद्वदेव हि"॥ इति दक्षवचनात्। "सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे। अधीते शतसाहस्रमनन्तं वेदपारगे"॥ ब्राह्मणब्रुवश्चाङ्गिरसोक्तः यथा। "गर्भाधानादिसंस्कारैर्युक्तश्च नियमव्रतैः। नाध्यापयति नाधीते स ज्ञेयो ब्राह्मणब्रुवः"॥

क्षत्रियसम्बन्धिन्या गोर्बधे तु देवलः। "गोघ्नः षण्मासान् तच्चर्म्मणा परिवृतो गोग्रासाहारो गोव्रती यवाशी गोभिरभिसञ्चरन् विप्रमुच्यत इति"। गोग्रासाहारो गोग्रासाहर्त्ता कर्मण्यनिति साधुः। षण्मासयावकभक्षणं द्वादशप्राजापत्यतुल्यं दक्षिणा च विशेषानुपदेशाद् यथाशक्ति देयेति। एतज्ज्ञानादज्ञानादर्द्धं स्त्रीशूद्रबालवृद्धानामर्द्धम् एकस्योभयपरत्वे पादः।

वैश्यसम्बन्धिन्या गोर्बधे तु। शातातपः। "पञ्चगव्येन गोघाती मासैकेन विशुद्ध्यति। गोमतीञ्च जपेद्विद्यां गवां गोष्ठे च संवसेत्"॥ पञ्चगव्यमाह शातातपः। "गोशकृत् द्विगुणं मूत्रं सर्पिर्विद्याच्चतुर्गुणम्। क्षीरमष्टगुणञ्चैव पञ्चगव्ये तथा दधि"॥ तथाष्टगुणम्। यमः। "आहृत्य प्रणवेनैव उत्थाप्य प्रणवेन च। प्रणवेन समालोड्य प्रणवेनैव तत् पिबेत्"॥ उत्ताप्य मिश्रीकृत्य एतद्वैकल्पिकं द्रव्यपरिमाणानन्तरम्। मन्त्रान्तरञ्च अन्यगौरवान्नोक्तम्। गोमतीविद्यामाह। प्रायश्चित्तकाण्डकल्पतरौ यमः। "गोमतीं कीर्त्तयिष्यामि सर्वपापप्रणाशिनीम्। तान्तु मे गदतो विप्राः शृणुध्वं सुसमाहिताः॥ गावः सुरभयो नित्यं गावो गुग्गुलुगन्धिकाः। गावः प्रतिष्ठाभूतानां गावः स्वस्त्ययनं महत्॥ अन्नमेव परं गावो देवानां हविरुत्तमम्। पावनं सर्वभूतानां क्षरन्ति च हवींषि च॥

हविषा मन्त्रपूतेन तर्पयन्त्यमरान्दिवि । ऋषीणामग्निहोत्रेषु गावो होमप्रयोजिकाः ॥ पावनं सर्वभूतानां गावः शरणमुत्तमम् । गावः पवित्रं परमं गावो मङ्गलमुत्तमम् ॥ गावः स्वर्गस्य सोपानं गावो धन्याः सनातनाः । नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च ॥ नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः । ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधाकृतम् ॥ एकत्र मन्त्रास्तिष्ठन्ति हविरन्यत्र तिष्ठति" ॥ मन्त्राज्ञाने मिताक्षरायां षट्त्रिंशन्मतम् । "जपहोमादि यत्किञ्चित् कृच्छ्रोक्तं सम्भवेन्न चेत् । सर्वं व्याहृतिभिः कुर्य्यात् गायत्र्या प्रणवेन च" ॥ गवां गोष्ठ इति श्रवणकुण्डलवत् तात्कालिकगोसत्त्वावबोधाय गोमतीजपसहितमासपञ्चगव्यपानं प्राजापत्यपञ्चकतुल्यम् एतदज्ञानकृते ज्ञानकृते तु द्वैगुण्यम् । स्त्रीशूद्रबालवृद्धानामर्द्धम् एकस्योभयधर्मपरत्वे पादः । शूद्रसम्बन्धिन्या गोर्वधे तु विश्वामित्रः । "कृच्छ्रांस्तु चतुरः कुर्य्यात् गोवधे बुद्धिपूर्वके । अमत्या च द्वयं कार्य्यं तदर्द्धं बालवृद्धयोः । स्त्रीशूद्रयोरेवमेतद्वधे चैव न संशयः" ॥ कृच्छ्रान् प्राजापत्यानि । तच्चतुष्टयाशक्तौ चतस्रो धेनवः । द्वादशकार्षापणा वा । एतज्ज्ञानकृते अज्ञानकृते प्राजापत्यद्वयं तदशक्तौ द्वे धेनू षट्कार्षापणा वा देयाः । स्त्रीशूद्रबालवृद्धानामर्द्धम् । एकस्योभयधर्मपरत्वे पादः । स्वामिकृतविशेषस्तु प्रायश्चित्तविवेकानुसाराद्बोध्यः । व्यवस्था तु तदुपदेशकं वस्त्रादिना परितोष्य ग्राह्या । पत्रदाने तु शूद्रेणाज्ञानकृतशूद्रस्वामिकगवीवधजन्य पापक्षयाय प्राजापत्यव्रतं प्रायश्चित्तं करणीयम् । तदशक्ता वेकधेनुदानं तदशक्तौ कार्षापणत्रयम् । दक्षिणा च यथाशक्ति दातव्या । एतत्सर्वं पूर्वदिने सशिखवपनं कारयित्वा घृतं प्राश्य उपोष्य करणीयम् । प्रायश्चित्तानन्तरं पार्वणविधिना

शुद्ध्यर्थं श्राद्धं कर्त्तव्यम्। दशान्यूनब्राह्मणेभ्यो भोज्यादिकं देयम्। एतत्सर्वं गोस्वामिनं मूल्यादिना परितोष्य करणीयम्। अमुकस्य मतमेतदेवमन्यत्राप्यूहेन लेख्यम्। विशेषदक्षिणोक्ता तु सैव लेख्या। केशरक्षणे तु प्रायश्चित्तद्वैगुण्यं दक्षिणा च द्विगुणा। योषितां मुण्डने तु अङ्गुलिद्वयपरिमितसर्वकेशाग्रच्छेदनं करणीयमिति लेख्यम्। प्रायश्चित्तकरणे तु अमुकपापक्षयकाम इदं काञ्चनमिति वाक्ये विशेषो बोध्यः। नारायणश्च स्मर्त्तव्यः। "प्रातर्निशि तथा सन्ध्या मध्याह्नादिषु संस्मरन्। नारायणमवाप्नोति सद्यः पापक्षयं नरः"॥ इति विष्णुपुराणे पापक्षयश्रुतेः। गर्भिण्यादौ तु विशेषमाह बृहस्पतिः "गर्भिणीं कपिलां दोग्ध्रीं होमधेनुञ्च सुव्रताम्। रोधादिना घातयित्वा द्विगुणं गोव्रतञ्चरेत्"॥ गर्भिणीवधे तु विशेषमाह वृद्धयमः। "गवां निपतने चैव गर्भनाशो यदा भवेत्। एकैकन्तु चरेत् कृच्छ्रं यथा पूर्वं तथा परम्"॥ कृच्छ्रपदं व्रतपरम्। द्विगुणं गोव्रतमित्येकवाक्यत्वात् "पादमुत्पन्नमात्रे तु द्वौ पादौ गात्रसम्मिते। पादोनं व्रतमाचष्टे हत्वा गर्भमचेतनम्। अङ्गप्रत्यङ्गसम्पन्ने गर्भे चेतःसमन्विते। द्विगुणं गोव्रतं कुर्य्यात् प्रायश्चित्तं विशुद्धये"॥ मध्यमवचनं भवदेवव्याख्यातम्। यथा लगुडाद्यभिघातेन गौर्जीवति गर्भमात्रपातो भवति तदोत्पन्नगर्भमात्रपाते यथोक्तप्रायश्चित्तपादाचरणम्। गात्रावयवोत्पत्तौ प्रायश्चित्तपादद्वयं सकलगात्रसम्पत्तौ चैतन्याभावे प्रायश्चित्तपादत्रयम्। अर्थाच्चैतन्ययुक्तगर्भघाते कृत्स्नमेव प्रायश्चित्तमूहनीयम्। मिताक्षरायान्तु। गर्भिणीवधे यदा गर्भोऽपि निहतो भवति तदा प्रतिनिमित्तं नैमित्तिकमावर्त्तत इति न्यायादविशेषेण द्विगुणव्रतप्राप्तौ षट्त्रिंशन्मते विशेष उक्तः। "पाद उत्पन्नमात्रे तु द्वौ पादौ दृढ़तां गते। पादोनं व्रतमुद्दिष्टं

हत्वा गर्भमचेतनम्। अङ्गप्रत्यङ्गसम्पन्ने गर्भे चेतः समन्विते। द्विगुणं गोव्रतं कुर्य्यादेषा गोघ्नस्य निष्कृतिः"॥ दोग्ध्रीं बहुक्षीराम्। बृहस्पतिः। "अतिवृद्धामतिकृशामतिबालाञ्च रोगिणीम्। हत्वा पूर्वविधानेन चरेदर्द्धं व्रतं द्विजः"। पूर्वविधानेन मन्वाद्युक्तत्रैमासिकादिना अतिवृद्धा तृणच्छेद-नासमर्था अतिकृशा कृशत्वेन दोहनवाहनायोग्या अति-बाला वर्षपर्य्यन्तं बाला तदतिक्रान्ता द्विवर्षीया। तथा च बृहदङ्गिराः। "वर्षमात्रा तु बाला स्यादतिबाला द्विवा-र्षिकी। अतः परन्तु सा गौः स्यात्तरुणी दन्तजन्मनि"॥ अतएव वक्ष्यते "द्विपादस्तु द्विहायने" इति संवर्त्तः। "व्याप-न्नानां बहूनाञ्च बन्धने रोधनेऽपि वा। भिषङ्मिथ्योपचारे च द्विगुणं गोव्रतञ्चरेत्"॥ एकप्रयत्ने निष्पन्ने बहूनां गवां बधे प्रायश्चित्तगौरवमुक्तं न तु तन्नता पापभेदाभावात्। एकप्रयत्नजन्यत्वेनैकमेव गुरुतरपापमिति प्रायश्चित्तमपि तथा। बहूनामित्येकाधिकपरम्। तदविवक्षायामपि गोद्वयबधे प्रयत्नाभेदेऽपि विशेषवचनाभावात् प्रायश्चित्त-द्वैगुण्यं युक्तम्। अपिशब्दात् गृहदाहादिना क्रमकृते तु प्रायश्चित्तावृत्तिः। यथोपपातकानुवृत्तौ यमः। "गोघ्नवद्वि-हितः कल्पश्चान्द्रायणमथापि वा। अभ्यासे तु तयोर्भूयस्ततः-शुद्धिमवाप्नुयात्"। तयोर्गोबधतदन्योपपातकयोः प्रकृति-विकृतिरूपयोः संवर्त्तापस्तम्बौ। "एकाचेद्बहुभिः क्वापि दैवा-द्व्यापादिता भवेत्। पादं पादञ्च हत्यायाश्चरेयुस्ते पृथक् पृथक्"। हत्याया यत्र यद्विहितं व्रतं तत्र तस्यैव पादं प्रत्येकं कुर्य्युः। एकाचेदित्युपलक्षणम् अतो बहुभिर्द्वयोर्बहू-नाञ्च हनने प्रतिपूरुषं पादद्वयं त्रयं वा कल्पनीयमिति मिता-क्षरा। वस्तुतस्तु एकाधिकानामिकैकपुरुषस्यैकप्रयत्नजन्य

बधे व्यापन्नानां बह्ननामिति पूर्वोक्तवचनात् एकैकपुरुषस्य द्विपादं कृत्वा प्रायश्चित्तं प्रयत्नभेदे तु गोघ्नवदित्यनेन तन्न्यूनताया अभावात् प्रत्येकं प्रतिपुरुषं द्विपादावृत्तिरिति। एतच्चाकामतो बधे द्रष्टव्यम्। दैवादिति विशेषोपादानात् कामकृते तु बह्ननामपि प्रत्येकं कृत्स्नदोषसम्बन्धात् पूर्णप्रायश्चित्तं युक्तम् सत्रिणां फलमिव प्रतिपुरुषं कृत्स्नव्यापारसमवायात्। "एकं घ्नतां बह्ननाञ्च यथोक्ताद्द्विगुणो दमः"॥ इति प्रत्येकं दण्डद्वैगुण्यदर्शनाच्चेति मिताक्षरा। वस्तुतस्तु सर्वत्र पापे "स्यात्त्वकामकृते यस्तु द्विगुणं बुद्धिपूर्वके"॥ इत्यङ्गिरो वचनेनाज्ञानात् ज्ञाने द्वैगुण्यदर्शनादत्रापि ज्ञाने द्विपाद एव युक्तः। सत्रे तु सप्तदशावरा ऋद्धिकामाः सत्रमुपासीरन्निति श्रवणात्तथेति। एकं घ्नतामिति परवचनन्तु गोबधातिरिक्तविषयम्। गोबधे एकाचेदित्युपदेशेन दण्डवत् प्रायश्चित्तानि भवन्तीत्यतिदेशानवसरात्। तदवसरत्वे प्रत्येकं पूर्णं प्रायश्चित्तद्वैगुण्यं स्यात् न पूर्णं प्रायश्चित्तमात्रम् अतएव प्रायश्चित्तविवेके एकं घ्नतां बह्ननामिति मनुष्यबधे उक्तं बह्वाभारत्युपादानात् द्वाभ्यां हनने तु प्रत्येकं सम्पूर्णप्रायश्चित्तम्।

अथैकहायनादि गोबधप्रायश्चित्तम्। वृद्धप्रचेताः। "एकवर्षे गवि हते कृच्छ्रपादो विधीयते। अबुद्धिपूर्वं पुंसः स्यात् द्विपादस्तु द्विहायने। त्रिहायणे त्रिपादः स्यात् प्राजापत्यमतः परम्"॥ इदमपि प्रायश्चित्तलाघवेन अबुद्धिपूर्वकाधमशूद्रस्वामिकबधविषयमिति प्रायश्चित्तविवेकः। तेन यत्स्वामिकबधे यत् प्रायश्चित्तं तस्यैव तत्र पादादिकमूहनीयमत एवातिबालामित्यत्र तस्यैवोक्तम् अतःपरम् चतुर्हायणे इत्यर्थः बुद्धिपूर्वे एतदेव द्विगुणमित्यर्थः।

अथ रोधादिनिमित्तक गोबधप्रायश्चित्तम्। अङ्गिराः।

"रोधने बन्धने चापि योजने च गवां रुजः। उत्पाद्य मरणं वापि निमित्ती यत्र लिप्यते। पादच्चरेद्रोधबधे द्वौ पादौ बन्धने चरेत्। योजने पादहीनं स्याच्चरेत् सर्वं निपातने"। निमित्ती लिप्यत इति यथा कथञ्चित् मरणनिमित्ततारतम्येन "यो भूय आरभते तस्मिन् फले विशेषः" इत्यापस्तम्बवचनात् पापविशेषेण लिप्यते तद्विशेषात् प्रायश्चित्तविशेषमाह पादच्चरेदित्यादि। रोधः चौणाया गोराहारप्रचारनिर्गमविरोधः। बन्धनमयथाबन्धनमकालबन्धनञ्च। योजनं हलशकटादौ योजनं तत्रातिवाहार्दिनेति शेषः। अत्रैव विषये च्यवनः। "प्राजापत्यद्वयं गोहत्याप्रायश्चित्तं रोधनबन्धनयोक्तृबधे पादद्वया नखानि लोमानि शिखावर्जं सशिखं वपनं त्रिसवनं गवानुगमनं सहशयनं सुमहत्तृणानि रथ्यासु चारयेत् व्रतान्ते ब्राह्मणभोजनमिति"। रोधनबन्धनयोक्तृबध इत्यादेरयमर्थः रोधनिमित्तकबधे प्राजापत्यस्य पादः प्रायश्चित्तं नखच्छेदनमात्रम्। बन्धननिमित्तबधे प्राजापत्यस्य द्वौ पादौ नखानां लोम्नाञ्च छेदनम्। योक्तृनिर्मित्ते च बधे प्राजापत्यपादत्रयं नखलोमशिखावर्जकेशच्छेदनञ्च। दण्डादिप्रहारबधे संपूर्णं प्राजापत्यम्। नखलोमकेशशिखाच्छेदनञ्च इति कल्पतरुः। एतद्विषय एव मिताक्षराधृतं संवर्त्तवचनम् इत्येकवाक्यत्वात्। तद्यथा। "पादेऽङ्गलोमवपनं द्विपादे श्मश्रुणोऽपि च। त्रिपादे च। शिखावर्जं सशिखन्तु निपातने"॥ अत्र प्राजापत्यस्य पादादित्वे किं मानमिति चेत्। पराशरवचनम्। "रोधने तु चरेत् पादं बन्धने चार्द्धमेव हि। योजने पादहीनं स्यात् प्राजापत्यं निपातने। कृच्छ्रमज्ञानताड़ने" इति बार्हस्पत्यात्। दण्डोऽत्र हस्तप्रमाणो ग्राह्यः। तदधिके तु द्विगुणप्रायश्चित्तविधानात्। यथाऽङ्गिराः। "अङ्गुष्ठमात्रः

स्थौल्येन बाहुमात्रः प्रमाणतः। साद्रश्च सपलाशश्च दण्ड इत्यभिधीयते। अस्मादूर्द्ध्वं प्रहारेण यदि गां विनिपातयेत्। द्विगुणन्तु भवेत्तत्र प्रायश्चित्तमिति स्थितिः" ॥ सपलाशः सपत्रः। एतद्वचनविषय एव च्यवनोक्त प्राजापत्यद्वयमिति एतच्चाज्ञानतः। यथा बृहस्पतिः। "पादश्चरेद्रोधवधे कृच्छ्रार्द्धं बन्धघातने। अतिवाहे च पादोनं कृच्छ्रमज्ञानताड़ने" ॥ अज्ञानञ्च चौणायामचीणत्वभ्रमः। चैणज्ञाने तु प्रायिक-मरणं ज्ञात्वा प्रवर्त्तकस्य चान्द्रायणपादादिकम्। यथा हारीतः। "नासाच्छेदनदाहेषु कर्णच्छेदनबन्धने। अतिदोहातिवाहाभ्यां कृच्छ्रं चान्द्रायणं चरेत्" ॥ कृत्वेति शेषः। कृच्छ्रं व्रतं तेन चान्द्रायणव्रतमित्यर्थः। इति शूलपाणि महामहोपाध्यायाः। भवदेवभट्टस्तु। निपातने कूपावटादिषु इति व्याख्यातं तदपि युक्तम् अन्यथा तत्र पातजनकभयादिदर्शकस्य प्रायश्चित्तस्यानध्यवसायापत्तेः। "यष्ट्यादिना तु हत्वा गां मानवं व्रतमाचरेत्"। रोधादिनात्वाङ्गिरसमापस्तम्बोक्तमेव चेति बृहस्पत्युक्तस्य प्रथमादि-पदामुष्टि-लोष्ट्रलगुड़विषाग्न्यादीनां प्रायिकमृत्युफलानां ग्रहणं रोधादिनेति यथा कथञ्चिन्निमित्त-मात्रस्य बन्धादेरिति शूलपाणिव्याख्यान्तराच्च। तस्मान्निपा-तनपरम् उभयपरम् एतच्च रात्रौ रक्षणार्थं रोधबन्धनव्यतिरि-क्तविषयम्। "सायं सङ्गमनार्थन्तु न दुष्येद्रोधबन्धयोः" इति अङ्गिरो वचनात्। बन्धने मिताक्षरायां विशेषमाह व्यासः। "न नारिकेलैर्न च शालतालैर्न चापि मौञ्जैर्न च बन्धशृङ्खलैः। एतैस्तु गावो न हि बन्धनीया बद्धा तु तिष्ठेत् परशुं गृहीत्वा। कुशैः काशैश्च बध्नीयात् स्थाने दोषविवर्जिते" ॥

अथापालननिमित्तगोबधप्रायश्चित्तम्। तत्र पराशरः। "शीतानिलहता चैव उद्बन्धनमृतापि वा। शून्यागाराद्युपेक्षायां

प्राजापत्यं विनिर्दिशेत्। अपालनात् प्रणश्येत्तु गौश्चरन्ती कथञ्चन। जलौघपल्वले मग्ना नागविद्युद्धताऽपि वा। श्वभ्रे वा पतिता कस्मात् श्वापदैर्वापि भक्षिता। प्राजापत्यं चरेत् कृच्छ्रं गोस्वामी व्रतमुत्तमम्। सशिखं वपनं कार्य्यं त्रिसन्ध्यमवगाहनम्। शृङ्गैर्वापि खुरैर्युक्तं लाङ्गूलश्रवणादिभिः। आर्द्रमेव हि तच्चर्म परिधाय स गां व्रजेत्। तासां मध्ये वसेद्रात्रौ दिवा ताभिः समं व्रजेत्। ब्राह्मणस्य विशेषेण तथा राजन्यवैश्ययोः। प्रायश्चित्ते ततश्चीर्णे कुर्य्यात् ब्राह्मणभोजनम्॥ अनडुत्सहितां गाञ्च दद्याद्विप्राय दक्षिणाम्"। अत्र गोस्वामीत्यभिधानात् उत्सृष्टवृषवत्सतरीषु स्वत्वाभावादपालननिमित्तकतद्वधे तदुत्स्रष्टुर्दोषो नास्ति इति प्रतीयते। तत्स्वत्वाभावेनान्येषां सम्भाव्यमानमौपादानिकस्वत्वं निराकरोति कल्पतरुधृतब्रह्मपुराणम्। "अथ वृत्ते वृषोत्सर्गे दाता वक्रोक्तिभिः पदैः। ब्राह्मणानाह यत् किञ्चित् मयोत्सृष्टन्तु निर्जने। तत् कश्चिदन्यो न नयेद्विभाज्यञ्च यथाक्रमम्। न वाह्यं न च तत्क्षीरं पातव्यं केनचित् क्वचित्"॥ वक्रोक्तिभिः काकूक्तिभिः स्वाम्यभावेनोत्-सृष्टपशोः पालननियमाभावाद्धान्यादि-भक्षणे मोच्यत्वमप्याह याज्ञवल्क्यः। "महोक्षोत्सृष्टपशवः सूतिकागन्तुकादयः। पालो येषाञ्च ते मोच्या दैवराजपरिप्लुताः"। महोक्षोऽनिर्वाय्यः महाबलीवर्दः। उत्सृष्टपशवः देवतोद्देशेन पित्रादिनिष्ठफलोद्देशेन चक्राद्यङ्कितास्त्यक्तपशवः। सूतिका अनिर्गतदशाहाः। आगन्तुका ग्रामान्तरादागताः। आदिशब्दात् उशनसोक्ताश्च यथा। "अदण्ड्या हस्तिनोऽश्वाश्च प्रजापाला हि ते स्मृताः। अदण्ड्याः काणकुण्ठाश्च वृषभः कृतलक्षणः"॥ कुण्ठः खञ्जः। अत्र काणकुण्ठशब्दाभ्यामत्यन्ताक्षम उच्यते। वृषभः कृतलक्षणः। प्रागुक्तोत्सृष्टपशुः एते सपाला विपाला वा सर्वथा

मोच्याः। तथा च मनुः। "अनिर्दशाहां गां सूतां वृषान् देवपशूंस्तथा। सपालान् वा विपालान् वा अदण्ड्यान् मनुरब्रवीत्"। एतद्भिन्नानां येषाञ्च पालोऽस्ति तेऽपि मोच्याः। अर्थात्तत्र पालो दण्डनीयः। दैवराजपरिप्लुताः। गर्जादिश्रवणात् सेनादिदर्शनाद्वा पलायिताः पशवो यदि क्षेत्रे चरन्ति तदा न दोष इत्यर्थः। पालकान्तरसत्त्वे तु मनुः। "दिवा वक्तव्यता पाले रात्रौ स्वामिनि तद्गृहे। योगक्षेमेऽन्यथा चेत्तु पालो वक्तव्यतामियात्"। दिवा पशूनां पालहस्तन्यस्तानां योगक्षेमविषये दोषे जाते पालकस्य गर्हणीयता रात्रौ पुनः पालप्रत्यर्पितानां स्वामिनां दोषः। अन्यथा यदि रात्रावपि पालहस्तगता भवन्ति तदा दोषे उत्पन्ने पाल एव गर्हणीयतां प्राप्नोति इति कुल्लूकभट्टः। स्मृतिसागरसारे वृहदङ्गिराः। "अनागतस्य चानेता आगतस्य च रक्षकः। रात्रावपि यदान्योऽस्ति तदा स्वामी न दोषभाक्" ननु दण्डप्रकरणोक्तमनुवचनं प्रायश्चित्ते कथमिति चेन्न दण्डवत् प्रायश्चित्तानि भवन्तीति श्रुतेः तथा व्यवहाराच्च। एवञ्च "यत्रापवर्त्तते युग्यं वैगुण्यात् प्राजकस्य च। तत्र स्वामी भवेद्दण्ड्यो हिंसायां द्विशतं दमः"। इति मनुवचने यत्र सारथेरकौशलात् यानमन्यथा गच्छति तत्र हिंसायामसुशिक्षित सारथिनियोगात् स्वामी द्विशतं दण्डं दाप्यः स्यादिति कुल्लूकभट्टव्याख्यानदर्शनात् अयोग्यपालकसमर्पणे स्वामिनो दोषात्तस्यैव प्रायश्चित्तमुक्तम्। "यावत् शस्यं विनश्येत्तु क्षेत्रौ तावत् फलं लभेत्। पालस्ताड्योऽथ गोस्वामी पूर्वोक्तं दण्डमर्हति" याज्ञवल्क्यवचने गवादिदोषेण यावत् शस्यं विनश्यति। तावदेव पालकात् प्राप्तव्यं पालकाशक्तौ पालकस्ताड्यः पूर्वोक्तं दण्डादिकमर्हतीति दर्शनाच्च। गोवधप्रायश्चित्ते पालकादृष्या-

सम्भवे स्वामिना द्रव्यं दत्त्वा प्रायश्चित्तं कारयितव्यं कर्त्तव्यं वा। म्लेच्छपालके स्वयं कर्त्तव्यम्। सशिखवपनमित्यत्र नैमित्तिकेन सशिखवपनेन सदा बद्धशिखेन तु इत्यस्य "गायत्र्या तु शिखां बद्धा नैरृत्यां ब्रह्मरन्ध्रतः। जुटिकान्तु ततो बद्धा ततः कर्म्म समाचरेत्"। इति ब्रह्मपुराणोक्तस्य च नित्यत्वस्य बाधो न दोषाय फलचमसेन सोमस्य बाधवत् गोदोहेन चमसस्य बाधवच्च। "सशिखं वपनं कार्य्यमास्नानात् ब्रह्मचारिणा" इति कात्यायनकृतछन्दोगपरिशिष्टेऽप्येवम्। एतदेकश्रुतिमूलकत्वात् तद्धृतपारस्करीये। पर्य्युप्तशिरसमिति सूत्रेऽपि तथैवार्थः तद्भाष्यकृता हरिशर्म्मणापि परिसर्व्वतोभावेनोप्तशिरसं मुण्डितशिरसमिति व्याख्यातम्। न च "एते लूनशिखास्तस्य दशनैरचिरोद्गतैः। कुशाः काशा विराजन्ते वटवः सामगा इव"। इति विष्णुपुराणीयेन सामगा इति विशेषणान्नान्येषां लूनशिखत्वमिति वाच्यं प्रागुक्तवचनात् सर्व्वेषां सशिखवपनप्राप्तेः विध्यन्तरकल्पनापत्तेश्च। तृणसामगयोरौपम्यन्तु हरिणसुखहेतुत्वेनाप्युक्तं तयोः सुखहेतुत्वञ्च भक्ष्यत्वेन गायकत्वेनेति शेषः। एवं प्राचीनावीतित्वादिना सदोपवीतिना भाव्यमित्यस्यापि बाध इति प्रसङ्गादुक्तम्। ब्राह्मणस्य विशेषेणेति ब्राह्मणगवानुगमनं मुख्यम् एतेनापालनकृतगोवधे प्राजापत्यं करणीयमिति श्रवेति कर्त्तव्यतापि प्राजापत्यतुल्येति पण्डितसर्व्वस्वे हलायुधः। वृषभो गौश्च दक्षिणा ब्राह्मणभोजनं विशेषयति यज्ञपार्श्वः। "गर्भाधानादिकृत्येषु ब्राह्मणान् भोजयेद्दश"। प्राजापत्यद्वयाशक्तौ धेनुद्वयं तदशक्तौ षट्कार्षापणाः। एवञ्च वृषमूल्यं पञ्च कार्षापणाः। गोमूल्यं कार्षापणैकः। शूलपाणिप्रभृतिभिस्तु इतिकर्त्तव्यतायां विशेषो नादृतः। एतच्च शूद्रस्वामिकेतरवधविषयम्। शूद्रस्वामिकस्याम्नानात् साक्षाद्वधे यत्-

किञ्चिद्दक्षिणकक्षच्छ्रद्वयस्य निबन्धृभिर्व्यवस्थापितत्वेनापालनकृतवधे तदधिकस्यायुक्तत्वात् वरं तत्तुल्यं कृच्छ्रद्वयं युक्तमुत्पश्यामः। अतएव एतद्विषय एव स्मृतिसागरसारे बृहदङ्गिराः। "अरक्षिते तु कूपादौ हते व्याघ्रादिभक्षिते। व्रतार्द्धमाचरेत् स्वामी रक्षिते नास्ति दूषणम्"॥ व्रतार्द्धं कामकृतव्रतार्द्धं नास्ति दूषणमिति यदि प्रमत्ता गौर्निवारयन्तं पालमतिक्रम्य गर्त्तकान्ताराद‍ौ म्रियते तदा नेत्यर्थः। अन्यत्र सत्येव पालके सम्यक्पालनाभावेन श्वभ्रादौ पाताद्गोमरणे प्रायश्चित्तमाह विष्णुः "पङ्कलौघवृकव्याघ्रश्वापदादिनिपातने। श्वभ्रोद्बन्धनसर्पाद्यैर्मृते पादोनमाचरेत्॥ अपालने तु कृच्छ्रं स्यात् शून्यागाराद्युपप्लवे"॥ पादोनं प्राजापत्यमेव उत्तरवचने कृच्छ्रश्रवणात्। तथा "पादस्याप्राप्तके देयो वत्से स्वामिन्यरक्षिते"। अप्राप्तके अप्राप्तदम्यावस्थे त्रिहायणपर्य्यन्ते इति यावत्। एवम्भूते वत्सेऽरक्षिते श्वभ्रपातादिना मृते सति स्वामिना प्राजापत्यपादः करणीयः। अत्र पादमात्रप्रायश्चित्तत्वात् बालत्वादिना नानुग्रहः ततश्चाप्राप्तदम्यावस्थवत्सापालननिमित्तकवधजन्यपापक्षयकाम इति प्रयोज्यम्। अत्र "विभृयाद्वेच्छतः सर्वान् ज्येष्ठो भ्राता यथा पिता। भ्राता शक्तः कनिष्ठो वा शक्त्यपेक्षा कुले स्थितिः"॥ इति नारदोक्तैकगृहिरूपतया स्थितानामविभक्तानां संसृष्टानाञ्चापालनाद्गोप्रणाशस्तत्रैकतमकृतेन प्रायश्चित्तेन सर्वेषां पापनाशः "एकपाकेन वसतां पितृदेवद्विजार्च्चनम्। एकं भवेद्विभक्तानां तदेव स्यात् गृहे गृहे"॥ इति बृहस्पतिवचनेन "भ्रातृणामविभक्तानामेको धर्म्मः प्रवर्त्तते। विभागे सति धर्मो हि भवेदेषां पृथक् पृथक्"॥ इति नारदवचनेन च एकत्रवासिनामेकतमकृतवैदिककर्म्ममात्रेण सर्वेषां फलभागित्वात्। अन्य-

वैकतमकृतपञ्चमहायज्ञैस्ताद्दृशानां सर्वेषां पञ्चसूनापापनाशो न स्यात् तदुक्तं मनुना । "अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥ पञ्चैतान् यो महायज्ञान्न हापयति शक्तितः । स गृहेऽपि वसन्नित्यं सूनादोषैर्न लिप्यते" ॥ सूनादोषैः "पञ्चसूना गृहस्थस्य चुल्ली पेषण्युपस्करः । कण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन्" इति श्लोक्तेः । सूना हिंसास्थानानि चुल्ली पाकस्थानं पेषणी दृषदुपलादि । उपस्करः सम्मार्जन्यादि । कण्डनी मुषलोदूखलादि । एताः सूनाः स्वस्वकार्य्यं प्रापयन् पापेन युज्यते पुरुष इत्यर्थः । अन्यथा च दम्पत्योर्मध्यगं धनम् इत्यनेन तत्र गवि पत्न्याः स्वामित्वात्तस्या अपि प्रायश्चित्तान्तरं स्यात् । ननु "आम्नाये स्मृतितन्त्रे च लोकाचारे च सूरिभिः । शरीरार्द्धं स्मृता जाया पुण्यापुण्यफले समा" इति बृहस्पतिवचनाज्जायापत्योर्विभागो न विद्यते तथा पुण्यापुण्यफलेष्वित्यापस्तम्बवचनाच्च । एवम्भूतविषये भर्त्तृकृतादेव प्रायश्चित्तान्नाश इति चेद् भ्रात्रादीनाम् अप्येकपाकेन वसतामिति प्रागुक्तवचनद्वयात्तथेति तु साधारणधनदानेन प्रायश्चित्तं कृतं तत्र सुतरां सर्वेषां पापक्षयः । अतएव विवादकल्पतरुप्रभृतिषु बृहस्पतिः । "बहूनां सम्मतो यस्तु दद्यादेकं धनं नरः । करणं कारयेद्वापि सर्वैरेव कृतं भवेत्" ॥ तथा च "पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः" इत्याद्युक्त पापक्षयायाश्वमेधिके पर्वणि युधिष्ठिरं प्रति व्यासवाक्यम् । "अश्वमेधो हि राजेन्द्र पावनः सर्वपाप्मनाम् । तेनेष्ट्वा वै विपाप्मा त्वं भविता नात्र संशयः" ॥ तत्रैव भगवद्वाक्यं "भीमसेनार्जुनौ चैव तथा माद्रवतीसुतौ । इष्टवन्तो भविष्यन्ति त्वयीष्टवति पार्थिव" ॥ उपसंहारेऽपि वैशम्पायनः । "गत्वा चावभृथे

राजा विपाप्मा भ्रातृभिः सह। सम्भ्राज्यमानः शुशुभे महेन्द्र-स्त्रिदशैरिव" ॥ अविभक्तानां पालकानामप्येकं प्रायश्चित्तं विभक्तानाञ्च पादं पादम् एका चेदिति प्रागुक्तत्वात् बहूनां गवामपालने तु द्विगुणं प्रायश्चित्तं व्यापन्नानां बहूनाम् इति प्रागुक्तत्वात्तत्रापि विभक्ता बहुकर्त्तृके तु द्विपादं प्रत्येकं प्रायश्चित्तमिति। गोवधे लघुगुरुप्रायश्चित्तान्तराणि यथायोग्यं द्रव्यतत्स्वामिसगुणत्वात्यन्तनिर्गुणत्वदेशकालविशेषप्रयोजका-दिभेदेन व्यवस्थेयानि।

अथ गोवधापवादः। पराशरः। "धूर्य्येषु वह्यमानेषु दण्डेनाभिहतस्य च। काष्ठेन लेष्टुना वापि पाषाणेन तु ताड़ितः। मूर्च्छितः पतितश्चैव मृतो वा सद्य एव च॥ एवं गतानां धूर्य्याणां प्रवक्ष्यामि यथाविधि। उत्थितस्तु पदं गच्छेत् पञ्च सप्त दशाथवा॥ ग्रासं वा यदि गृह्णाति तोयं वा पिबति स्वयम्। पूर्वव्याधिविनष्टानां प्रायश्चित्तं न विद्यते"॥ यदि व्याधिप्रयुक्तानां वृषाणां हलयोजनमात्रेण स्वल्पतरदण्डाघातेन वा मूर्च्छया पतनं भवति अनन्तरं गमनग्रासादौ कृते मरणं भवति तदागमनग्रासग्रहणतोयपानैस्तदानीन्तनमरणे हेत्व-भावं निश्चित्य पूर्वव्याधिविनष्टत्वं ज्ञायते। यदि तु पूर्वव्याधि-रहित एव प्रहारजनितव्याधिना ग्रासादि कृत्वापि म्रियते तदा प्रायश्चित्तमस्त्येव संवर्त्तः। "यन्त्रणे गोचिकित्सायां मूढ़गर्भ-विमोचने। यत्ने कृते विपत्तिः स्यात् प्रायश्चित्तं न विद्यते॥ औषधं स्नेहमाहारात् दद्याद्गो ब्राह्मणेषु च। प्राणिनां प्राण-हत्यर्थं प्रायश्चित्तं न विद्यते॥ दाहच्छेदशिराभेदप्रयत्नैरुपकुर्व-ताम्। द्विजानां गोहितार्थं वा प्रायश्चित्तं न विद्यते"॥ मूढ़गर्भः अन्तर्मृतगर्भः। मुहवैचित्ते इत्यनेन तथार्थत्वात्। याज्ञवल्क्यः। "क्रियमाणोपकारे तु मृते विप्रेण पातकम्। विपाके गोवृषा-

णाञ्च भेषजाग्निक्रियासु च" ॥ विशेषमाहाङ्गिराः । "शृङ्गभङ्गेऽस्थिभङ्गे च चर्मनिर्मोचनेऽपि वा । दशरात्रं चरेत् वत्सं सुस्था सा यदि गौर्भवेत्" ॥ द्विजानां गवाञ्च हितार्थमित्यर्थः । अत्र प्राणरक्षार्थमाहारादिदानैर्मरणे दोषाभावस्य वाचनिकत्वात् गललग्नानुमरणेनात्मघातादि । एवं "गोपालको गवां गोष्ठे धूमं यस्तु न कारयेत् । मक्षिकालौमनरके मक्षिकाभिः स भक्ष्यते" ॥ इति देवीपुराणानुसारादग्निं प्रज्वाल्य तत्रैव स्थितस्य दैवात्तदग्निना मरणे दोषाभावः । तत्रास्थितस्य तु अपालननिमित्तगोवधजन्यदोषः । मिताक्षरायां पराशरः । "कूपे खाते च धर्मार्थे गृहदाहे च ये मृताः । ग्रामदाहे तथा घोरे प्रायश्चित्तं न विद्यते" ॥ इदन्तु बन्धनरहितस्य पशोः कदाचित् दाहादिना मृतविषयम् । इतरत्रापस्तम्बोक्तम् । "कान्तारेष्वथवा दुर्गे गृहदाहावटादिषु । यदि तत्र विपत्तिः स्यात् पाद एको विधीयते" ॥ इति ज्ञेयम् एतद्वचनं यमस्येति भवदेवभट्टः । चिकित्सायां पापाभावो यथावदुपचारो बोध्यः । न पुनः सन्निपाताभिभूतस्योदकपानादिना । अतएव मनुः । "चिकित्सायाञ्च सर्वेषां मिथ्याप्रचरतां दमः" । काश्यपोऽप्यत्र प्रायश्चित्तमाह । "दोग्ध्री दमनातिदोहात्रासापाशदामघण्टाभरणयोजनात् । तैलपानौषधविनियोगाद्व्यापन्नानां प्रायश्चित्तं ब्राह्मणेभ्यो विनिवेद्य सशिखवपनं कृत्वा प्राजापत्यकृच्छ्रमाचरेत् । चीर्णान्ते गां दक्षिणां ब्राह्मणाय दद्यात् धेनुं तिलधेनुं वेति" । अत्र गोधेनुतिलधेनुदानानां शक्त्यपेक्षो विकल्पः । तिलधेनुमाह रत्नार्णवे वराहपुराणम् । "तिलधेनुं प्रवक्ष्यामि सर्वपापप्रणाशिनीम् । यां दत्त्वा पापकर्मापि मुच्यते नरकान्नरः ॥ चतुर्भिः सैतिकाभिश्च प्रस्थ एकः प्रकीर्तितः । ते षोडश भवेद्धेनुश्चतुर्भिर्वत्सको भवेत् ॥ इक्षुदण्ड-

मयाः पादा दन्ताः पुष्पमयास्तथा। नासागन्धमयी तस्या जिह्वा गुड़मयी तथा ॥ पृष्ठे ताम्रमयी सा स्याद्‌घण्टाभरण-भूषिता। ईदृशीं कल्पयित्वा च स्वर्णशृङ्गीं प्रकल्पयेत् ॥ कांस्योपदोहां रौप्यखुरां पूर्वधेनुविधानतः। तिलधेनुं ततो दत्त्वा द्वादश्यां नियतः शुचिः ॥ आत्मानं तारयेद् दुर्गात् नारकात् कामभाग्भवेत्" ॥ सेतिका कुड़वः। स च द्वादशप्रसृति-परिमितः। चतुर्भिरिति प्रस्थैरिति शेषः। कांस्योपदोहां कांस्यक्रोड़ाम्। एतच्च गोः शक्तिमनपेक्ष्यैव दमनादितो मरणे बोध्यम्। यत्तु व्यासेन "घण्टाभरणदोषेण विपत्तिर्यदि गोर्भवेत्। कृच्छ्रार्द्धमाचरेत्तत्र भूषणार्थं हि तत् कृतम् ॥ विरेक-वमनाभ्याञ्च संघाते योजने तथा। लता सङ्कुलपाशेन मृते पादोनमाचरेत्" ॥ इत्युक्तं तद्गोररण्यप्रवेशेन लतादिबन्धघण्टादिदोषमरणे ज्ञेयम्। पुनर्व्यासः। "औषधं लवणञ्चैव स्नेहं पिण्याकमेव च। अतिरिक्तं न दातव्यं काले स्वल्पञ्च दापयेत् ॥ अतिरिक्ते विपन्नानां कृच्छ्रपादो विधीयते। औषधे तु न दोषोऽस्ति स्वेच्छया पिबते यदि ॥ अन्यथा दीयमाने तु प्रायश्चित्तं न संशयः" ॥ अन्यथा इच्छां विनातिरिक्तौषधे। तेनानिच्छया स्वल्पदाने दोषाभावात्तथा व्यवहारः। भवदेव-भट्टहरिनाथोपाध्यायधृतं संवर्त्तवचनम्। "शृङ्गभङ्गेऽस्थिभङ्गे च कटिभङ्गे तथैव च। यदि जीवति षण्मासान् प्रायश्चित्तं न विद्यते" ॥ अत्र षण्मासोत्तरमरणे तद्दोषोपशमनाय प्राय-श्चित्तं नास्ति तदभ्यन्तरमरणे बधप्रायश्चित्तं भवति एवञ्च शृङ्ग-भङ्गादिनिमित्तकपापे पृथक् प्रायश्चित्तं न कर्त्तव्यम्। बधप्राय-श्चित्तेनैव गुरुणा प्रसङ्गात्तदपगमसिद्धेः। षण्मासोत्तरन्तु शृङ्गभङ्गादिनिमित्तकपूर्वोक्तं मासार्द्धयवपानं प्राजापत्यं वा कर्त्तव्यमिति। चर्मनिर्मोचनादिनिमित्तविहितप्रायश्चित्तमु-

क्वाऽङ्कनादौ तदपवादमाहतुः पराशराङ्गिरसौ। "अन्यत्राङ्कनलक्ष्मभ्यां वाहनिर्मोचने कृते। सायं संयमनार्थन्तु न दुष्येद्रोधबन्धयोः"॥ अङ्कनं त्रिशूलादिकरणम्। लक्ष्म स्थिरचिह्नकरणम्। वाहनिर्मोचनं वाहनादिना चर्मनिर्मोचनम्। संवर्त्तः। 'देवद्रोण्यां विहारे च कूपेष्वायतनेषु च। एषु गोषु विपन्नासु प्रायश्चित्तं न विद्यते"॥ देवद्रोणी स्वयम्भूलिङ्गाद्यवस्थानगह्वरं विहारो गवां मैथुनम् आयतनं सीमानिबन्धस्थानम्। अत्र कूपायतनकर्त्तुरेव प्रायश्चित्ताभावो न तु गोस्वामिनः। सर्वत्रैवापालने तस्य दोषश्रुतेः। स्मृतिसागरसारे गोभिलः। "मुष्कमोषकरो विप्रो व्रतं चान्द्रायणञ्चरेत्। प्रयोजकस्तु कुर्वीत व्रतस्यार्द्धं विशुद्धये॥ हलैर्वा शकटैर्वापि वाहयेत् यो वृषं स्वयम्। प्राजापत्यद्वयं कुर्य्याद्द्विगुणं योषितां गवाम्॥ वृषभन्तु समुत्सृष्टं कपिलां वापि कामतः॥ योजयित्वा हले कुर्य्यात् व्रतं चान्द्रायणद्वयम्। विक्रयैर्गां विनिमयैर्दत्त्वा गोमांसखादके॥ व्रतं चान्द्रायणं कुर्य्यात् वधे साक्षाद्वधो भवेत्"॥ मुष्कमोषकरो वीजनाशकरः। याज्ञवल्क्योक्तदण्डविधौ मृत्युलिङ्गच्छेदयोस्तुल्यत्वाभिधानात् प्रायश्चित्तेऽपि तथेति स्वरसः। यथा क्षुद्रपशूनां दुःखादौनुपक्रम्य। "लिङ्गस्य छेदने मृत्यौ मध्यमो मूल्यमेव च। महापशूनामेतेषु स्थानेषु द्विगुणो दमः"॥ मध्यमो मध्यमसाहसो दण्डः। स तु चत्वारिंशदधिकपञ्चशतपणकस्तेनैवोक्तः। यथा "साशीतिपणसाहस्रो दण्ड उत्तमसाहसः। तदर्द्धं मध्यमः प्रोक्तस्तदर्द्धमधमः स्मृतः"॥ मूल्यमिति पशुस्वामिने च मूल्यम्। महापशूनां गवाश्वादीनाम् एतेषु पूर्ववचनैतद्वचनोक्तेषु। गोमांसखादके जवनादौ। अत्र गवामपण्यत्वेन उपपातकत्वादपि चान्द्रायणं युक्तं तथाच गौतमः। "पशवश्च हिंसा संयोग

इति"। अस्यार्थः यत्र विक्रीताः सन्तः पशवो हिंस्यन्ते तत्र तेषामपथ्यत्वमिति प्रायश्चित्तविवेकः। अपथ्यानाञ्च विक्रय इति मनुनोपपातकगणने पठितम्। विष्णुना च "उपपातकिनस्त्वेते कुर्य्युश्चान्द्रायणं नराः"। इत्यनेन चान्द्रायणं विहितम्। तत्र पापस्य लघुत्वाच्चान्द्रायणपदं शिशुचान्द्रायणपरम्। तत्पादोनधेनुचतुष्टयेन संकलितं प्रायश्चित्तविवेकेन। एतद्विषय एव "चान्द्रायणमकुर्वाणाः कुर्य्युः कृच्छ्रचतुष्टयम्" इति समूलत्वे बोध्यं बधे त्वज्ञानबधोक्तं सार्द्धधेन्वष्टकम् एतदपि गुरुत्वात् ब्राह्मणस्वामिकविषयम्। ते नान्यत्र गोमांसखादकसम्बन्धि–विक्रयादिमात्रे त्वज्ञानकृततत्तत्स्वामिकबध–प्रायश्चित्तार्द्धं बधे सम्पूर्णमिति। रहः कृतेषु प्रकीर्णोपपातकानुपातकमहापातकेषु गायत्र्याः शतसहस्रायुतलक्षजपः। तथा च मिताक्षरायाम्। गायत्रीमधिकृत्य शङ्खेनोक्तम्। "शतं जप्ता तु सा देवी सर्वपापप्रणाशिनी। सहस्रं जप्ता च तथा पातकेभ्यः प्रमोचिनी ॥ दशसाहस्रजापेन सर्वकल्मषनाशिनी। लक्षं जप्ता तु सा देवी महापातकनाशिनी"॥ कल्पतरौ यमः। "गायत्र्याः पादमर्द्धं वा ऋचः सर्वर्चमेव वा। ब्रह्महत्या सुरापानं सुवर्णहरणन्तथा ॥ गुरुदाराभिगमनं यच्चान्यत् पातकं महत्। सर्वमेतत् पुनात्याह स्वयं वैवस्वतो यमः"॥ बौधायनः। "पूर्वाभिर्व्याहृतिभिः सर्वपातकेष्वाचामेत्। तस्मादेवाचमनात् सर्वस्मात् पापात् प्रमुच्यते"॥ अपहारे तु जावालः। "अश्वगोभूमिकन्याश्च हृत्वा चान्द्रायणञ्चरेत्। क्षुद्रपशूनपहृत्य प्राजापत्यं समाचरेत्"॥ चान्द्रायणे धेन्वष्टकम्। प्राजापत्ये धेनुरेका। बालादीनामर्द्धादि। "अनाहिताग्नितास्तेय ऋणानाञ्चानपक्रिया"॥ इत्यनेन मनुना उपपातकगणने महापातकानुप-

पातकास्तेयेतरस्वर्णस्तेयस्य निर्देशादावृत्तौ प्रायश्चित्तावृत्तिः स्त्रीशूद्राणामर्द्धञ्च प्रागुक्तत्वात्।

अथ निमित्तिनो नरवधापवादः। मिताक्षरायाम्। आक्रोशादिजनितमन्युनात्मानं खड्गादिना प्रहृत्य मरणादर्वाक् आक्रोशनादिकर्त्ता धनादिना सन्तोषितो यदि जनसमक्षमुच्चैः श्रावयति। नात्राक्रोशकस्यापराध इति तदा न दोषः। यथा विष्णुः। "उद्दिश्य कुपितो हत्वा तोषितः श्रावयेत् पुनः। तस्मिन् मृते न दोषोऽस्ति द्वयोरुच्छ्रावणे कृते"। द्वयोरिति बहूनामुपलक्षणम्। उच्छ्रावणम् उद्घोषः।

अथ चाण्डालाद्यन्नभक्षणप्रायश्चित्तम्। यद्यपि द्रवद्रव्यस्य कण्ठदेशादधो नयनमात्रं पानं तच्च एकस्मिन्नेव प्रयोगे अनेकधैव भवति तथापि न तथाविधोऽभ्यासोऽपेक्षितः। यतः पिबति धात्वर्थस्याभ्यासो ह्यभ्यासः। एकफलोद्देशेन प्रवृत्तकृतिव्याप्यानां चैकोपक्रमाणां व्यापारनिचयानाम् अप्येकधात्वर्थत्वम्। यथा एकफलोद्देशेनैकप्रयत्नोपक्रमाणां स्थालीमार्जनादीनाम् ओदनपरीक्षणपर्य्यन्तानां व्यापारनिचयानाम् एकपचिधात्वर्थत्वम्। यथा वा प्रहारलक्षणानां भिन्नत्वेऽपि एकफलोद्देश्यकैकप्रयत्नोपक्रमत्वेन एकमेव हन्ति धात्वर्थत्वम्। अन्यथा पशुयागे प्रतिप्रहारं प्रहृतं रक्ष इत्येवमादिमन्त्रावृत्तिप्रसङ्गात्। तेनात्रापि एकफलोद्देशेन एकप्रयत्नोपक्रमाणाम् अपि व्यवहाराणामेकस्मिन् प्रयोगे सकृत्पानत्वं नाभ्यासः। प्रयोगभेदे त्वभ्यास एवेति सिद्धमिति सुरापाने भवदेवभट्टोक्तवच्चाण्डालान्नभक्षणेऽपि सकृदभ्यासविचारः प्रयोगभेदादेवाशनभेदं व्यक्तमाह कात्यायनः। "मुनिभिर्द्विरशनं प्रोक्तं विप्राणां मर्त्यवासिनां नित्यम्। अहनि च तमस्विन्यां सार्द्धप्रहरयामान्तः"। यद्यपि अन्नादीनां कण्ठादधो नयनमेव

भक्षणं न तु निष्ठीवनाय मुखाद्यादेः कपोलधारणं तथाविधे प्रयोगाभावात् । तथापि पापविषये तथाविधानुबन्धेऽपि प्रायश्चित्तं ब्रह्मवधे तथा दर्शनात् यथा याज्ञवल्क्यः "चरेद्व्रत-महत्वापि घातार्थञ्चेत् समागतः" । अत्र हननप्रतिषेधेन तदङ्गभूताध्यवसायादेरपि प्रतिषिद्धत्वात् प्रायश्चित्तविधानं तथात्रापि भक्षणप्रतिषेधेन तदङ्गभूताव्यभिचरितास्यादिसंयो-गस्यापि प्रतिषिद्धत्वेन दोषस्य विद्यमानत्वात् भवत्येव प्राय-श्चित्तं मिताक्षरायामप्येवम् । अतएवोक्तं "जिघ्रन्न हि सुरां कश्चित् पिबतीत्यभिधीयते । यावन्न क्रियते वक्त्रे गण्डूषस्य प्रवेशनम्" इति । अत्र वक्त्रे गण्डूषस्य प्रवेशनेन पानाति-देशवद्भक्षणोद्यमेऽपि भक्षणातिदेशः । ततश्च "विप्रदण्डोद्यमे कृच्छ्रस्त्वति कृच्छ्रं निपातने" । इति याज्ञवल्क्याद्दण्डोद्यमे दण्डनिपातप्रायश्चित्तार्द्धवत् भक्षणोद्यमे कण्ठादधोनयनसम्भा-वनारहिते अर्द्धं प्रायश्चित्तं ज्ञेयम् । विवेककृतापि प्रागुक्तं चरेद्व्रतमहत्वापीत्यत्र तथा च व्यवस्थापितम् । तत्र भक्षण-प्रायश्चित्तमाहाङ्गिराः । "अन्त्यावसायिनामन्नमश्नीयाद् यस्तु कामतः । स तु चान्द्रायणं कुर्य्यात् तप्तकृच्छ्रमथापि वा । चण्डालः श्वपचः क्षत्ता सूतो वैदेहकस्तथा । मागधायो गवौ चैव सप्तैतेऽन्त्यावसायिनः" । अत्र कामत एव चान्द्रायणतप्त-कृच्छ्रयोर्विषमशिष्टत्वेन इच्छाविकल्पासम्भवात् अथापि वेत्य-नेन भवदेवभट्टोक्तसमुच्चया योगाच्च । कामतश्चान्द्रायणमका-मतस्तप्तकृच्छ्रमिति व्यवस्थितो विकल्पः । चाण्डालाद्युत्पत्ति-माह मनुः । "क्षत्रियाद्विप्रकन्यायां सूतो भवति जातितः । वैश्यान्मागधवैदेहौ राजविप्राङ्गनासुतौ । शूद्रादायोगवः क्षत्ता चण्डालश्चाधमो नृणाम् । वैश्यराजन्यविप्रासु जायन्ते वर्ण-सङ्कराः" । तथा "क्षत्तुर्जातस्तथोग्रायान्तु श्वपाक इति कीर्त्यते ।

क्षत्रियादिप्रकन्यायां क्रूराचारविहारवान्॥ क्षत्रशूद्रवपुर्जन्तु-कुण्डो नाम प्रजायते"॥ एतच्चान्द्रायणं सकृद्भोजने आपस्तम्बेन प्रमादत इत्यभिधानात्। यथा "चाण्डालान्नं यदा भुक्तं ब्राह्मणाद्यैः प्रमादतः। प्रायश्चित्तं कथं तत्र वर्णे वर्णे विधीयते॥ चान्द्रायणं चरेद्विप्रः क्षत्रः सान्तपनं चरेत्। षड्रात्रञ्च त्रिरात्रञ्च वर्णयोरनुपूर्वशः"॥ यद्यपि प्रमादोऽनवधानता इत्यमरः। तथापि सा न गृह्यते अङ्गिरसा कामत एव चान्द्रायणविधानात् अतएव प्रमादतः सकृदित्यर्थः। इति प्रायश्चित्तविवेकः। चान्द्रायणाशक्तौ धेन्वष्टकं देयम्। कापालिकान्नभोजने तन्नारीगमने च ज्ञानाज्ञानाभ्यां कृच्छ्रचान्द्रायणद्वयविधानात् यथापस्तम्बः। "कापालिकान्नभोक्तृणां तन्नारीगामिनान्तथा। ज्ञानात् कृच्छ्राब्दमुद्दिष्टमज्ञानादैन्दवद्वयम्"॥ कृच्छ्राब्दम् अब्दं व्याप्य कृच्छ्रं प्राजापत्यमित्यर्थः। अस्य प्रायश्चित्तविवेके कैवर्त्तादितुल्यत्वाभिधानात्। ज्ञानाज्ञानाभ्यामष्टधाभ्यस्तभोजने इदं प्रायश्चित्तम् अभिगमे तु द्विरभ्यस्ते ज्ञेयम्। "त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम्। त्र्यहं परन्तु नाश्नीयात् प्राजापत्यं चरन् द्विजः"॥ इति मनुवचनात् प्राजापत्यस्य द्वादशाहसाध्यत्वेन मासे सार्द्धप्राजापत्यद्वयात् वर्षे त्रिंशत्प्राजापत्यानि। तदशक्तौ त्रिंशद्धेनवः। "प्राजापत्यव्रताशक्तौ धेनुं दद्यात् पयस्विनीम्। धेनोरभावे दातव्यं तुल्यं मूल्यं न संशयः"॥ इति संवर्त्तवचनात् धेनुमूल्यन्तु कार्षापणत्रयं प्रागव्यवस्थापितम्। "स्यात्त्वकामकृते यत्तु द्विगुणं बुद्धिपूर्वके" इत्यङ्गिरोवचनात्। ज्ञानात् यत् प्रायश्चित्तम् अज्ञाने तदर्द्धप्राप्तेरत्रापि चान्द्रायणद्वये पञ्चदश धेनवः। अर्थादेकस्मिन्नष्टौ धेनवः। तन्मूल्येऽपि सार्द्धसप्तधेनुमूल्यं सार्द्धद्वाविंशतिः कार्षापणा देयाः। एवं "जलाग्न्युद्बन्धनभ्रष्टाः

प्रव्रज्यानशनच्युताः। विषप्रपतनप्रायशस्त्रघातच्युताश्च ये॥ सर्वे ते प्रत्यवसिताः सर्वधर्मवहिष्कृताः। चान्द्रायणेन शुद्ध्येयु-स्तप्तकृच्छ्रद्वयेन वा"॥ इति यमवचनाच्चान्द्रायणार्हतुल्यत्वा-च्चनूक्ततप्तकृच्छ्रे पादोनधेनुचतुष्टयं तदशक्तौ सपादैकादश कार्षापणा देया इति। एतच्च क्षत्रियादीनां पादपादहान्या। एतच्चाभक्ष्यभक्षणप्रकरणे विष्णुः। "विप्रे तु सकलं देयं पादोनं क्षत्रिये मतम्। वैश्येऽर्द्धं पादशेषन्तु शूद्रजातिषु शस्यते"॥ एवञ्चापस्तम्बोक्तं क्षत्रियादीनां सान्तपनादि आप-द्विषयम् आपद्युक्तत्वेनापि प्रायश्चित्त ह्रासदर्शनात् यथा परा-शरः। "आपत्काले तु विप्रेण भुक्तं शूद्र गृहे यदि। मनस्तापेन शुद्ध्येत्तु द्रुपदां वा शतं जपेत्"। अन्यत्र मनुना प्रायश्चित्ताधिक्य-मुक्तम्। तद्यथा। "राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम्" इत्यभिधाय "भुक्त्वा चान्यतमस्यान्नममत्या क्षपणं त्र्यहम्। मत्या भुक्त्वा चरेत् कृच्छ्रं रेतो विण्मूत्रमेव च"॥ सान्तपने धेनुद्वयं कामाकामाभ्यां सान्तपनप्राजापत्ययोर्विधानात्। यथा मनुः। "जातिभ्रंशकरं कर्म्म कृत्वान्यतममिच्छया। चरेत् सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया"॥ कृच्छ्रं व्रतम्। षड्रात्रे धेनुरेका। षड्रात्रप्राजापत्ययोस्तुल्यत्वाभिधानात्। यथा मत्तक्रुद्धातुराणामित्युक्त्वा मनुः। "भुक्त्वा चान्यतमस्यान्नममत्या क्षपणं त्र्यहम्। मत्या भुक्त्वा चरेत् कृच्छ्रं रेतो विण्मूत्रमेव च"॥ अज्ञानात् त्र्यहमुपवासं विधाय ज्ञानात् द्वैगुण्येन षड़हप्राप्तौ प्राजापत्यं विदधाति। एवं त्रिरात्रे चतुर्विंशतिः पणाः प्राजापत्यानुकल्पधेनुमूल्यार्द्धत्वात्। एवञ्च प्रायश्चित्ते शूद्रस्य त्रिरात्रोपवासविधानात्। "वैश्याः शूद्राश्च ये मोहा-दुपवासं प्रकुर्वते। त्रिरात्रं पञ्च रात्रं वा तेषां पुष्टिर्न विद्यते"॥ इति प्रायश्चित्तेतरकाम्यपरम्। पुष्टिर्व्रतफलमिति हलधरः।

मनुः "चण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च । पतत्यज्ञानतो विप्रो ज्ञानात् साम्यन्तु गच्छति" ॥ अन्त्या म्लेच्छा जवनश्वपचादयः याज्ञवल्क्यदीपकलिकायामपि । अन्तेभवा अन्त्याः यतोऽधमजातयो न सन्तीत्युक्तं प्रतिगृह्य अदृष्टार्थं त्यक्तद्रव्यं स्वीकृत्य तद्द्रव्यन्तु वैदिककर्मानर्हमपि यथा हारीतः । "पतितदुष्कृतिभ्यः प्रतिगृहीतमस्वर्ग्यमयज्ञियं न तेन पुण्यार्थमाप्नोति" मिताक्षरायां यमः "योऽदत्तादायिनोहस्तात्लिप्सेत ब्राह्मणो धनम् । याजनाध्यापनेनापि यथास्तेनस्तथैव सः" ॥ अदत्तादायिनश्चौरस्य पततीति प्रायश्चित्तेतरवैदिककर्मानधिकारी सन् नरकभागी भवति । यथा गौतमः "द्विजातिकर्मभ्यो हानिः पतनं परत्र चासिद्धिः तमेके नरकमिति" । हरिस्मरणादौ तु विशेषवचनादेवाधिकारः । तथा च नारदीयम् । "सम्यक् सन्ध्यामुपासीत त्रिकालं स्नानमाचरन् । अध्ययनाध्यापनादीनि वर्जयेत् संस्मरन् हरिम्" ॥ एवञ्च "पञ्चैतानि महापातकानि कृत्वा ब्राह्मणः सद्भिर्नानुसम्भाष्यो नानुग्राह्योऽभिशस्तः सर्वकर्मविवर्जितः पतिततमो भवति" इति देवलवचनेन महापातके पातित्याभिधानात् अत्रापि तथाविधानात् तदीयप्रायश्चित्तमङ्गिरसोक्तं षड़ब्दप्राजापत्यं युक्तम् । यथा "षड्भिर्वर्षैः कृच्छ्रचारी ब्रह्महा तु विशुद्ध्यति" । वर्षे त्रिंशत्प्राजापत्यानि पूर्वमुक्तानि षड्भिर्वर्षैः साशीतिशतं प्राजापत्यानि तदशक्तावशीत्युत्तरधेनुशतं देयम् तन्मूल्यं वा चत्वारिंशदधिकपञ्चशतकार्षापणा देया इति गुरुत्वादेतस्य भोजनप्रतिग्रहयोरज्ञानादष्टचत्वारिंशदभ्यासविषयता । यतः सकृदज्ञानात्तप्तकृच्छ्रविधानेन तत्र पादोनधेनुचतुष्टयं तस्याष्टचत्वारिंशद्गुणेन साशीतिशतं धेनवो भवन्तीति तद्भोजनस्य निन्दितान्नादनं तथा इत्यनेन उपपातकगणे

मनुना निर्दिष्टत्वात् तदभ्यासे प्रायश्चित्ताधिक्यं "गोघ्नवद्विहितः कृच्छ्रश्चान्द्रायणमथापि वा। अभ्यासे तु तयोर्भूयस्ततः शुद्धिमवाप्नुयात्"॥ इति यमवचनात् अतो न तन्मता। भोजनसाहचर्य्यात् प्रतिग्रहेऽपि तथा। अभिगमे तु सकृदज्ञानादेव पातित्यमिति प्रायश्चित्तविवेकः। गुरुश्चायं चाण्डालान्त्यस्त्रीगमनस्यानुपातकत्वात् यथा मनुः। "गुरुतल्पव्रतं कुर्य्यात् रेतः सिक्त्वा स्वयोनिषु। सख्युः पुत्रस्य च स्त्रीषु कुमारीष्वन्त्यजासु च"॥ विष्णुरपि। अन्त्यजागमनादीनुपक्रम्य। "अनुपातकिनस्त्वेते महापातकिनो यथा। अश्वमेधेन शुद्ध्यन्ति तीर्थानुसरणेन वा"॥ अश्वमेधप्रायश्चित्तन्तु राज्ञ एव तत्र तस्यैवाधिकारात् तथा चापस्तम्बः। "राजा सार्वभौमोऽश्वमेधेन यजेत नाप्यसार्वभौम इति" अश्वमेधावभृथस्नाने विप्रस्याप्यधिकारः। तथा च कल्पतरुधृतं भविष्यपुराणम्। "यदा तु गुणवान् विप्रो हन्याद्विप्रन्तु निर्गुणम्। अकामतस्तदा गच्छेत् स्नानञ्चैवाश्वमेधिकम्"॥ ततश्चावभृथस्नानं क्षत्रियविषयमिति प्रायश्चित्तविवेकोक्तं हेयम्। स्त्रिया अपि तुल्यं प्रायश्चित्तमाहाङ्गिराः। "व्रतं यच्चोदितं पुंसां पतितस्त्रीनिषेवणात्। तच्चापि कारयेत् मूढ़ां पतिता सेवनात् स्त्रियम्"॥ ज्ञाने तु तत्तुल्यतया द्विगुणव्रताचरणेऽपि न व्यवहार्य्यः। "प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत्। कामतोऽव्यवहार्य्यस्तु वचनादेव जायते"॥ इति याज्ञवल्क्यवचनात्। पापाभावे कथमव्यवहार्य्य इत्याह वचनादेवेति तथाचोक्तम्। किमिदं वचनं न कुर्य्यात् नास्ति वचनस्यातिभार इति। पापस्य हे शक्ती नरकोत्पादिका व्यवहारविरोधिका चेति। तत्रैकतरशक्तिविनाशे व्यवहारविरोधिका शक्तिरस्तीति भावः। तथा च मिताक्षरायामापस्तम्बः। "नास्मिन् लोके

प्रत्याग्रन्तिर्विद्यते कल्मषन्तु निहन्यते" इति। अतएव पापाक्षरेऽप्यव्यवहार्य्यत्वं याज्ञवल्क्योक्तम्। "शरणागतबालस्त्रीहिंसकान् संवसेन्न तु। चीर्णव्रतानपि सदा कृतघ्नसहितानिमान्"॥ अत्र च कामतो महापातकादिब्रह्मत्यापकर्त्तुरव्यवहार्य्यत्व दर्शनात् कामतो बहुगुणयुक्तशरणागतादिहन्तॄणामव्यवहार्य्यत्वं न तु हीनतरहन्तॄणाम्। अन्यथा विषमशिष्टतापत्तिः स्यात् अतएव ऋतुस्त्रीणामवध्यत्वमाह मत्स्यपुराणम्। "यदि त्वमिच्छसे वैरं पुरुषेष्वपकारिषु। स्त्रियः किमपराध्यन्ते गृहपञ्जरकोकिलाः॥ किं त्वया न श्रुतं लोके त्ववध्याः ऋतुयोषितः"॥ यद्यप्येवं तथापि स्त्रीहिंसकानिति हीनवर्णोपभुक्ताघातकेतरपरं "हीनवर्णोपभुक्ता या त्याज्या वध्यापि वा भवेत्"। इति वृहस्पत्युक्तेः "अकामतः स्त्रियं हत्वा ब्राह्मणीं वैश्यवच्चरेत्। कामतो द्विगुणं प्रोक्तं प्रदुष्टायां न किञ्चन"॥ इति व्यासोक्तेः वैश्यवत् वैश्यहत्याव्रतवत् एतेन यद्यपि व्यभिचारिस्त्रीवधे अल्पीय एव प्रायश्चित्तम्। तथापि वाचनिकोऽयं व्यवहारप्रतिषेध इति मिताक्षरोक्तं न युक्तिसहम् "केवलं शास्त्रमाश्रित्य न कर्त्तव्यो विनिर्णयः। युक्तिहीनविचारे तु धर्महानिः प्रजायते॥ पापे गुरूणि गुरूणि स्वल्पान्यल्पे च तद्विदः। प्रायश्चित्तानि मैत्रेय जगुः स्वायम्भुवादयः"॥ इति वृहस्पतिवचनात्। एवञ्च हीनवर्णोपभुक्तायाः परित्यागविधानेनात्यन्तपातित्याज्ज्ञानतस्तदुपभोक्तुः पत्युरपि गुरुपापसंसर्गित्वेन सद्यः पातित्यम्। जानन्नित्युपक्रम्य "याजनं योनिसम्बन्धं स्वाध्यायं सहभोजनम्। कृत्वा सद्यः पतन्त्येते पतितेन न संशयः"॥ इति देवलवचनात् अज्ञानतस्तु वारद्वयेन यत्तु पतितस्वस्त्रीगमनस्य लघुत्वं प्रायश्चित्तविवेककृद्भिरुक्तं तदत्याज्यापरम्। अतएव तत्रैव स्तेया-

दिना पतितेत्युपक्रम्य उक्तम्। तत्राज्ञानतो वत्सरेण पातित्वं "संवत्सरेण पतति पतितेन सहाचरन्। याजनाध्यापनाद् यौनात् एकशय्यासनाशनात्" ॥ इति हारीतवचनात्। ज्ञानतो वत्सरार्द्धेनेति। तदसंसृष्टुस्तद्दोषाभाव एव "बान्धवोऽपि पृथग् भूत्वा तत् पापं नाप्नुयात् क्वचित्" इति देवलवचनात् याज्ञवल्क्यदीपकलिकायां कृतघ्नमाह स्कन्दपुराणम्। "ब्रह्मघ्ने च सुरापे च चौरे च गुरुतल्पगे। निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः। भर्त्तृपिण्डापहर्त्ता च पितृपिण्डापहारकः। तस्माद् गृहीत्वा विद्याञ्च दक्षिणां न प्रयच्छति। पुत्रान् स्त्रियश्च यो द्वेष्टि यश्चैतान् घातयेन्नरः। कृतस्य दोषं वदति सकामात्र करोति यः। न स्मरेच्च कृतं यस्तु आश्रमान् यस्तु दूषयेत्। सर्वां स्तानृषिभिः सार्द्धं कृतघ्ना न ब्रवीन्मनुः"। तस्मात् पित्रादिगुरोः कृतस्य सत्कर्मण इति शेषः। सकामात्र करोति कृतस्य कर्त्तृनिति शेषः यत्तु विष्णुवचनम्। "चाण्डालान्नं भुक्त्वा त्रिरात्रमुपवसेत् सिद्धं भुक्त्वा पराकः" इति तद्बलाद्भोजनविषयम् इति प्रायश्चित्तविवेकः। बलात् प्रवर्त्तमानस्य विषयज्ञानमस्त्येव स्वारसिकत्वाभावान्न तथा कारित्वं किन्त्वज्ञानकृतपापात्तत्र युक्तं पापाधिक्यमित्याशयः। त्रिरात्रमामान्नविषयं परत्रसिद्धमित्युक्तेः। पराकमाह मनुः। "यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम्। पराको नाम कृच्छ्रोऽयं सर्वपापापनोदनः"। तेनात्रामान्ने सिद्धान्नप्रायश्चित्ततुरीयभागविधानात् अज्ञानादावपि तत्तुरीयकल्पनेति। पराके पञ्च धेनवः पराकस्य प्राजापत्यपञ्चकतुल्यत्वात् यथाङ्गिराः "षड्भिर्वर्षैः कृच्छ्राचारी ब्रह्महा तु विशुद्ध्यति। मासि मासि पराकेण त्रिभिर्वर्षैर्व्यपोहति"। अत्र षड्भिर्वर्षैः साशीतिशतप्राजापत्यानि पूर्वमुक्तानि। तथा प्रतिमासि एकैकपराकेण

वर्षे द्वादशपराकाः वर्षत्रये षट् त्रिंशत्पराकाः ततश्च षट्त्रिंश-त्पराकाशीत्युत्तरप्राजापत्यशतयोः प्रत्येकं ब्रह्मवधपापक्षयैक-कार्य्यकारित्वात् तुल्यत्वम्। षट्त्रिंशत् अशीत्युत्तरशतं पञ्च-गुणं भवतीति। अतः प्राजापत्यपञ्चकतुल्यं पराकः। शुष्कान्ने पक्वान्नार्द्धं प्रायश्चित्तं विष्णुधर्मोत्तरदर्शनात्। यथा "यस्तस्य भुङ्क्ते पक्वान्नं कृच्छ्रार्द्धं तस्य निर्दिशेत्। शुष्कान्नभोजिनः पादमित्याह भगवान्मनुः"॥ तस्याविज्ञातचाण्डालसहितै-कवेश्मस्थसङ्करीकरणरूप-मूलपापकर्त्तुर्द्वितीय-संसर्गिणः तथा चापस्तम्बः। "अन्त्यजातिरविज्ञातो निवसेद् यस्य वेश्मनि। स वै ज्ञात्वा तु कालेन कुर्य्यात्तत्र विशोधनम्। चान्द्रायणं पराको वा द्विजातीनां विशोधनम्। प्राजापत्यन्तु शूद्राणां तथा संसर्गदूषणे। यैस्तत्र भुक्तं पक्वान्नं कृच्छ्रं तेषां विनि-र्दिशेत्। तेषामपि च यैर्भुक्तं तेषामर्द्धं विधीयते। तेषामपि च यैर्भुक्तं कृच्छ्रपादो विधीयते"। अत्र तृतीयसंसर्गिण एव प्रायश्चित्तदर्शनात् तुर्य्यसंसर्गजदोषो नास्ति। प्रायश्चित्तविवे-कोऽप्येवम्। शङ्खः "शूद्रान्नं ब्राह्मणो भुक्त्वा तथा रङ्गावता-रिणः। चिकित्सकस्य क्रूरस्य तथा स्त्री मृगजीविनः। चाण्डा-लान्नं भूमिपान्नमजजीविश्वजीविनाम्। शौण्डिकान्नं सूति-कान्नं भुक्त्वा मासं व्रती भवेत्"। अत्राजजीविश्वजीविनामिति श्रवणात् "मार्जारकुक्कुटच्छागश्ववराहविहङ्गमान्। पोषयन्न-रकं याति तमेव द्विजसत्तम" इति विष्णुपुराणवचनमपि। जीविकार्थपोषणपरम्। तं रोमपूयवद्धं नरकम्। व्रती याव-केनेति प्रायश्चित्तविवेकः। मासयावकाहारे धेनुद्वयम् गोवधे उक्तम्। एतच्छूद्रान्नादावभ्यासानुभ्यासाभ्यां यथासम्भवविष-यम्। शौण्डिकान्नेत्वज्ञानतः सकृद्भोजने धेनुद्वयम्। यत्तु मनुवचनम्। "श्ववतां शौकिण्डानाञ्च चैलनिर्णेजकस्य च।

रजकस्य नृशंसस्य यस्य चोपपतिर्गृहे। भुक्त्वा चान्यतमस्यान्नममत्या क्षपणं त्र्यहम्" इति। त्रिरात्रोपवासविधायकं तदामात्रविषयं लघुप्रायश्चित्तत्वात् तत् वृत्तिहीनद्विजपरमिति प्रायश्चित्तविवेकः। चाण्डालान्नेन तु प्रायश्चित्तलाघवात् सकृदज्ञानादापङ्क्त्योत्तारितादिविशिष्टविषयम्। तथा चोत्तारादपि पापक्षयमाह मनुः। "अभोज्यमन्नं नात्तव्यमात्मनः शुद्धिमिच्छता। अज्ञानाद् भुक्तमुत्तार्य्यं शोध्यं वाप्याशु शोधनैः"। प्रमादाद्भुक्तं वमितव्यम्। तदसम्भवे यथोक्तप्रायश्चित्तैः शोधनीयम् वमनपक्षेऽपि अल्पप्रायश्चित्तं भवत्येव विष्णुसूत्रे तथा दर्शनात् तद् यथा। "आमश्राद्धाशने त्रिरात्रं पयसा वर्त्तेत ब्राह्मणः शूद्रोच्छिष्टाशने वमनं कृत्वा सप्तरात्रमुपवसेदिति"॥ आमश्राद्धं गर्हितैर्यत् क्रियते पयसा क्षीरेण तत्राप्यायुर्वेदोक्त परिभाषा। "पयः सर्पिः प्रयोगेषु गव्यमेवाभिधीयते। विशेषो यत्र नोक्तः स्यादेष तत्र विधिः स्मृतः"। एवम् उच्छिष्टे यः पराक उक्तोऽङ्गिरसा सोऽपि प्रागुक्तसकृदापदादिविषये बोध्यः। विष्णुनापि अनुच्छिष्टे पराकोक्तेः। तथा चाङ्गिराः। "चण्डालपतितादीनामुच्छिष्टान्नस्य भक्षणे। द्विजः शुद्ध्येत् पराकेण शूद्रः कृच्छ्रेण शुद्ध्यति"। यत्तु मिताक्षरायामापस्तम्बः। "अन्त्यानां भुक्तशेषन्तु भक्षयित्वा द्विजातयः। चान्द्रं कृच्छ्रं तदर्द्धन्तु ब्रह्मक्षत्रविशां विधिः"। चान्द्रं चान्द्रायणम्। कृच्छ्रं तप्तकृच्छ्रम् एतच्च ब्राह्मणस्य सकृदज्ञानविषयं बलात्कारानुत्तारेऽप्यन्नेतरताम्बूलाद्युत्सृष्टपरञ्च तत्राज्ञाने आपस्तम्बेन उच्छिष्टे चान्द्रायणविधानात् अङ्गिरसा अन्त्यावसायिनामित्यादि प्रागुक्तवचने सामान्यतस्तप्तकृच्छ्रविधानात् अनुच्छिष्टेऽपि तथात्वादेव सर्वत्रानुच्छिष्टादुच्छिष्टे द्वैगुण्यं बोध्यम्। प्रायश्चित्तविवेके संसर्गप्रकरणेऽप्येवं क्षत्रियविशोश्चापदि ज्ञेयम्।

भङ्गिरो वचने पतितपदस्य सर्व्वधर्मवहिष्कृतवाचिनः प्रायश्चित्तगौरवेण चाण्डालजातिसाहचर्य्येण च जवनादिम्लेच्छजातिवाचित्वं न तु ब्रह्महत्यादिपतितवाचित्वं तत्र सकृदुच्छिष्टाशने स्वल्पप्रायश्चित्तत्वात् । अतएव ब्रह्महत्यादि उच्छिष्टाशने स्नानाभ्यासत्रयादेवसाम्यं प्रायश्चित्तविवेककृद्भिः संसर्गिप्रकरणे उक्तम् । अत्र तु स्नानेन द्वादशवारात्तथेति जवनादीनान्तु सर्व्वधर्म्मराहित्यमुक्तम् हरिवंशे । "सगरस्तां प्रतिज्ञाञ्च गुरोर्वाक्यं निशम्य च । धर्मं जघान तेषां वै वेशान्यत्वं चकार ह । अर्द्धं शकानां शिरसो मुण्डयित्वा व्यसर्जयत् । जवनानां शिरः सर्व्वं काम्बोजानान्तथैव च । पारदा मुक्तकेशाश्च पह्लवाः श्मश्रुधारिणः । निःस्वाध्यायवषट्काराः कृतास्तेन महात्मना । शका जवनकाम्बोजाः पारदाः पह्लवास्तथा । कोलिसर्पाः समहिषा दर्व्वाश्चोलाः सकेरलाः । वशिष्ठवचनाद्राजन् सगरेण महात्मना" । शकानां शकदेशोद्भवानां क्षत्रियाणाम् एवं जवनादीनामिति । अत्र जवनशब्दस्तद्देशोद्भववाची चवर्ग तृतीयादिः । जवनो देशवेगिनोरिति त्रिकाण्डशेषाभिदर्शनात् । तेषां म्लेच्छत्वमप्युक्तं विष्णुपुराणे । तथा कृतान् जवनादीनुपक्रम्य ते चात्मधर्म्मपरित्यागात् म्लेच्छत्वं ययुरिति । बौधायनः । "गोमांसखादको यश्च विरुद्धं बहुभाषते । सर्व्वाचारविहीनश्च म्लेच्छ इत्यभिधीयते" । अतएव चाण्डालेन सह म्लेच्छानां साम्यमाह देवलः । "दासीकृतो बलात् म्लेच्छैश्चाण्डालाद्यैश्च दस्युभिः । अशुभं कारितः कर्म गवादिः प्राणिहिंसनम् । उच्छिष्टमार्ज्जनञ्चैव तथा तस्यैव भक्षणम् ॥ खरोष्ट्रविड्वराहाणामामिषस्य च भक्षणम् । तत् स्त्रीणाञ्च तथा सङ्गस्ताभिश्च सह भोजनम् ॥ मासोषिते द्विजातौ च प्राजापत्यं विशोधनम् । चान्द्रायणन्त्वाहिताग्नेः

पराकस्त्वथ वा भवेत् ॥ चान्द्रायणं पराकं वा चरेत् संवत्सरोषितः। संवत्सरोषितः शूद्रो मासार्द्धं यावकं पिबेत् ॥ मासं विप्रोषितः शूद्रः कृच्छ्रपादेन शुद्ध्यति" ॥ विप्रोषितो विशेषेण प्रकर्षेण उषितः। "ऊर्द्ध्वं संवत्सरात् कल्प्यं प्रायश्चित्तं द्विजोत्तमैः। संवत्सरैश्चतुर्भिश्च तद्भावं सोऽधिगच्छति। क्रासो न विद्यते तस्य प्रायश्चित्तैर्दुरात्मनः"॥ तदिह म्लेच्छचाण्डालाद्यैर्दस्युभिर्यदा नाहिताग्निर्द्विजातिरुच्छिष्टमार्जनोच्छिष्टभक्षणखरोष्ट्रविड्वराहमांसभक्षणम्लेच्छस्त्रीसंसर्गतदीयस्त्रीसहभोजनादिकुत्सितं कर्म बलात् मासैकं कारितः तदा तेन प्राजापत्यम्। साग्निना तु चान्द्रायणं कार्य्यं क्षत्रियवैश्याभ्यां पराकव्रतम् अनग्निना ब्राह्मणेन तु संवत्सरैकदास्यकरणे चान्द्रायणं कार्य्यम् इतराभ्यां पराकः। शूद्रेण तु मासैककरणे कृच्छ्रपादं संवत्सरैकदास्यकरणे मासार्द्धं यावकपानम्। संवत्सरादूर्द्ध्वं वत्सरचतुष्टयं यावत् भागह्रासेन प्रायश्चित्तमूहनीयम्। तदूर्द्ध्वं तत्समत्वेन पतितत्वात् प्रायश्चित्ताभावात् मरणमिति यत् प्रायश्चित्तविवेकोक्तं तत् पापाधिक्यसम्भवेन प्रायश्चित्तलाघवात् अनुपनीताष्टवर्षाभ्यन्तर-बालविषयम्। "चतुर्थाद्वत्सरादूर्द्ध्वमष्टमं यावदेव हि। शिशोर्व्रतं प्रकुर्वन्ति गुरुसम्बन्धिबान्धवाः" ॥ इति ब्रह्मपुराणीयमप्येतत्परमिति। अत्र जातमात्रस्याहिताग्नित्वसम्भवः तथा च जाबालः। "जाते कुमारेऽरणिं मथित्वा तस्मिन्नायुष्यहोमान् जुहोति तस्मिंश्चूडाकरणोपनयनव्रतादेशगोदानक्रियास्तस्मिन्नेवैनमुद्वाहयेयुः सशालाग्निरिति"। यत्तु कुमारवचनम्। "जातमात्रः शिशुस्तावत् यावदष्टौ समावयः। स हि गर्भैः समो ज्ञेयो व्यक्तिमात्रप्रदर्शकः॥ भक्ष्याभक्ष्ये तथा पेये वाच्यावाच्ये तथानृते। तस्मिन् काले न दोषः स्यात् स यावन्नोपनीयते" ॥ इति तदुक्तव्यति-

रिक्ताल्पपापपरम्। अष्टवर्षपरञ्चाम्। अनुपनीतस्यापि पर-स्ताद्दोषार्थम् उपनयनपदश्च पञ्चवर्षाद्युपनीतस्य वर्षकाष्टकेभ्यः प्रागपि दोषज्ञापनार्थं प्रायश्चित्तविवेकेऽपि "सुरापाननिषेधोऽयं जात्याश्रय इति स्थितिः। न पिबेद् ब्राह्मणो मद्यं निषिद्धमपि चापरम्" इति कुमारवचनान्तरदर्शनात् पूर्ववचनं मद्येतरपरम् इत्युक्तं तथा च बृहस्पतिः। "स्यात् कामाचारभक्षोक्तिः महतः पातकादृते"। ततश्च "पतितान्नन्तु यो भुङ्क्ते सप्ताहमुदके वसेत्। पानीयपानतस्यापि कुशवारि पिबेत्त्र्यहम्"॥ इत्यङ्गिरो वचनमपि। शूद्रान्नं ब्राह्मणो भुङ्क्ते इति शङ्खवचनसमानविषयम्। अतएव सप्ताहोदकवासोऽपि धेनुद्वयेन सङ्कलितः प्रायश्चित्तविवेककृतेति। एवञ्च तत्तत्पानीयपानेऽप्यज्ञानादौ तत्तद्भोजनप्रायश्चित्तपादो बोध्यः। गायत्र्यादिरहिताऽग्न्याहहारकाऽन्त्यजपुरोहितादिरूपपतितब्राह्मणान्नभक्षणपरं वा अङ्गिरो वचनं तेषां वधेऽत्यन्तलघुप्रायश्चित्तश्रुत्याऽत्यन्ताल्पप्रायश्चित्तमत्रापि। तथा च कल्पतरौ भविष्यपुराणम्। "यदात्यन्तगुणैर्हीनो गायत्र्या च विवर्जितः। निहतः कामतश्चैव तदा यत् स्यात् निबोध मे॥ हन्ता यदासमर्थश्चेत् तत्रेदं परिकल्पयेत्। वशिष्ठेन यदाख्यातं ब्रह्महत्यापोहनम्"॥ द्वादशरात्रमुपवसेदित्यर्थः। यत्तु प्रायश्चित्तविवेककृताप्यत्र "ब्रह्महा वत्सरं कृच्छ्रं चरेत् पूर्णे तु वत्सरे। हिरण्यमणिगोवृषान्नतिलभूमिसर्पींषि ब्राह्मणेभ्यो दद्यात्" इति सुमन्तूक्तप्रायश्चित्तमुक्तं तत् समर्थपरं भोजनवत्तदभिगमनरूपसंसर्गेऽप्येवम्।

अथान्त्यजस्त्रीगमनभोजनप्रायश्चित्तम्। तत्र संवर्त्तः। "नटीं शैलुषिकीञ्चैव रजकीं वेणुजीविनीम्। गत्वा चान्द्रायणं कुर्य्यात् तथा चर्म्मोपजीविनीम्। कामतस्तु यदा गच्छेच्चरे-

चान्द्रायणद्वयम्” ॥ ततश्चाज्ञानतश्चान्द्रायणं चान्द्रायणे धेनु-ष्टकम् । शैलुषिकः “दृत्यन्वेषी नटानान्तु स तु शैलूषिकः स्मृतः” । इति ब्रह्मपुराणोक्तम् इति प्रायश्चित्तविवेकः । यत्तु यमवचनं “रजकश्चर्म्मकारश्च नटो वरुड एव च । कैवर्त्तमेद-भिल्लाश्च सप्तैते चान्त्यजाः स्मृताः ॥ एतेषान्तु स्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च । पतत्यज्ञानतो विप्रो ज्ञानात् साम्यन्तु गच्छति” ॥ इति पातित्याभिधायकम् । तत्र रजकादीनां प्रागुक्तमनुवचने शौण्डिकतुल्यत्वात् । शौण्डिके प्रागुक्तशङ्ख-वचनेन मासयावकपानव्रतविधानात् । तत्र प्राजापत्यद्वय-संकलनात् । बहूनामेकधर्म्माणामिति बौधायनवचनात् । एते-ष्वपि तथाकल्पनात् अज्ञानतः सकृद्भोजने प्राजापत्यद्वयं तत-श्चाज्ञानात् यत् पातित्यमभिहितं तत् नवतिवारभोजने ज्ञेयम् । पातित्याच्च द्वादशवार्षिकप्रायश्चित्तार्हता ज्ञानतस्तु कृतेऽपि द्विगुणप्रायश्चित्तेऽव्यवहार्य्यता अन्यथा तत् संसर्गिणि प्रायश्चित्तव्यवस्था न स्यात् । प्रतिग्रहेऽप्येवम् । अभिगमने तु चतुर्विंशतिवारात्पातित्यमज्ञानात् ज्ञानात्तु साम्यमिति । चा-ण्डालस्पृष्टोदके त्वङ्गिराः । “यस्तु चाण्डालसंस्पृष्टं पिबेत्तोयमका-मतः । स तु सान्तपनं कृच्छ्रं चरेत् शुद्ध्यर्थमात्मनः” ॥ सान्त-पनमाह याज्ञवल्क्यः । “कुशोदकञ्च गोक्षीरं दधि मूत्रं शकृत् घृतम् । प्राश्यापरेऽह्न्युपवसेत् कृच्छ्रं सान्तपनं चरन्” ॥ एत-द्द्व्यहसाध्यं तदशक्तौ षडुपवासतृतीयभागात् पुराणो देयः । चाण्डालादि स्पृष्टान्नभक्षणेऽपि प्राजापत्यम् । “अमेध्यपतित-चाण्डालपुक्कशरजस्वलावधूतकुनिकुष्ठि-कुनखिस्पृष्टानि भुक्त्वा कृच्छ्रमाचरेत्” इति शङ्खवचनात् एतत् सकृदज्ञानविषयम् । एव प्रायश्चित्तमधिकृत्य “बालस्याशक्तस्य वा तत्पिताऽनुध्याय मनसा सर्वकर्माणि कुर्वीत पितुरभावे सत्याचार्य्याः” इति

पैठीनसिवचनात् । "रोगी वृद्धस्तु पोगण्ड: कुर्वन्त्यन्यैर्व्रतं सदा" इति ब्रह्मपुराणाच्चाशक्तौ प्रायश्चित्तमन्येन कार्य्यम् अनुध्याय तदीयं पापं मनसा सङ्कल्पात्यर्थः ।

तदयं संक्षेपः । चाण्डालाद्यन्नभक्षणोद्यमे कण्ठादधोनयनसम्भावनारहितेऽर्द्धं प्रायश्चित्तम् । चाण्डालाद्यन्नभक्षणे तप्तकृच्छ्रमज्ञानात्तदशक्तौ पादोनधेनुचतुष्टयम् । सपादैकादश कार्षापणा वा देयाः । चान्द्रायणं ज्ञानात् तदशक्तौ धेन्वष्टकं सार्द्धद्वाविंशति कार्षापणा वा देयाः । पराको बलात्कारे तदशक्तौ पञ्च धेनवः । पञ्चदश कार्षापणा वा देयाः । सर्वत्रोच्छिष्ट तु व्रतद्वैगुण्यम् आपदज्ञानभुक्तोत्तारिते मासयावकव्रतम् । तदशक्तौ धेनुद्वयं षट् कार्षापणा वा देयाः । तत्रोच्छिष्टान्ने पराक इति । अभ्यासभेदे त्वावृत्तिरूहनीया । शुष्कान्ने सर्वत्रार्द्धं जलामान्नयोः सर्वत्र तुरीयांशः अज्ञानतः चाण्डालस्पृष्टोदकपाने द्व्यहसाध्यं सान्तपनं तदशक्तौ कार्षापणैको देयः । अज्ञानतः चाण्डालस्पृष्टान्नभक्षणे प्राजापत्यं तदशक्तौ धेनुरेका कार्षापणत्रयं वा देयम् । एतच्च ब्राह्मणस्य क्षत्रियादीनां तु पादपादहानिः स्त्रीबालवृद्धरोगिणामर्द्धम् ।

अथ गोमांसादिभक्षणप्रायश्चित्तम् । सुमन्तुः । "गोमांसभक्षणे प्राजापत्यं चरेदिति" । इदमज्ञानतः सकृद्भोजनविषयम् एतत् प्रायश्चित्तान्ते पुनरुपनयनमाह विष्णुः । "ग्रामकुक्कुटनरगोमांसभक्षणे च सर्वेष्वेव द्विजातीनां प्रायश्चित्तान्ते पुनः संस्कारं कुर्य्यादिति" प्राजापत्ये धेनुरेका कार्षापणत्रयं वा देयम् । चाण्डालान्नभक्षणप्रकरणे उपनयनं चान्द्रायणसममिति शूलपाणि महामहोपाध्यायसङ्कलनात् संस्काराशक्तौ धेन्वष्टकं सार्द्धद्वाविंशतिकार्षापणा वा देयाः । शङ्खः । "गामश्वं कुञ्जरोष्ट्रौ च सर्वं पञ्चनखन्तथा । क्रव्यादं कुक्कुटं ग्राम्यं

कुर्य्यात् संवत्सरं व्रतम्"॥ तथेति भुक्त्वेत्यर्थः। एतच्च चिर-कालाभ्यासे संवत्सरव्रते पञ्चदश धेनवः। पञ्चचत्वारिंशत् कार्षापणा वा देयाः। अभ्यासे तु प्राजापत्यमात्रावृत्तिः। तत्तुल्यव्रतान्तरं वा। संस्कारस्तु सकृदेव। हारीतः। "मत्स्य-कण्टकशम्बूकशङ्खशुक्तिकपर्दकान्। पीत्वा नवोदकञ्चैव पञ्च-गव्येन शुध्यति"॥ नवोदकं नवखातजलं वर्षोदकञ्च। तथा च ब्रह्मपुराणम्। "नवखातजलं गावो महिष्यश्छागयोनयः। शुध्यन्ति दिवसैरेव दशभिर्नात्र संशयः"॥ मिताक्षरायां स्मृतिः। "काले नवोदकं शुद्धं न पातव्यन्तु तत् त्र्यहम्। अकाले तु दशाहं स्यात् पीत्वा नाद्यादहर्निशम्"॥ काले वर्षाकाले। शङ्खः। "स्नानमाचमनं दानं देवता पितृतर्प-णम्। शूद्रोदकैर्न कुर्वीत तथा मेघाद्विनिःसृतैः"॥ पाना-दीतरस्पर्शादौ च हरिवंशः। "अभौममम्भो विसृजन्ति मेघाः पूतं पवित्रं पवनैः सुगन्धिः" जावालः। "केशकीटावपन्नञ्च स्त्रीभिः स्पृष्टं तथैव च। स्त्रोदक्या शूद्रसंस्पृष्टं पञ्चगव्येन शुध्यति"॥ भुक्त्वेति शेषः। अवपन्नं केशादिभिः सह पक्वम्। स्त्री शूद्रा पञ्चगव्येन तन्मात्रपानेन व्रतरूपत्वात् तेन तत् पीत्वोपवसेत्। तदशक्तौ अष्टौ पणा देयाः।

अथ भार्य्यायां मातृत्वादि वदतः प्रायश्चित्तम्। यथा स्मृतिसागरे यमः। "क्रोधान्मोहाद्वदन् भार्य्यां मातरं भगि-नीमपि। प्राजापत्यव्रतं कुर्य्यात् सर्ववर्णेष्वयं विधिः"॥ त्यागानन्तरसंग्रहे मत्स्यतन्त्रं "क्रोधाद् यदि त्यजेद्भार्य्यां वयः-स्थाञ्च गुणाधिकाम्। ऋषिचान्द्रायणं कृत्वा पुनः संग्रह-मादिशेत्"॥ ऋषिचान्द्रायणमाह यमः। "त्रीं स्त्रीन् पिण्डान् समश्नीयान्नियतात्मा दृढव्रतः। हविष्यान्नस्य वै मासं ऋषिचान्द्रायणं स्मृतम्"॥ ऋषिचान्द्रायणे पादोनधेनु-

चतुष्टयम् । याज्ञवल्क्येनाप्यत्र दण्डविधानात् । प्रायश्चित्तं सूचितम् । यथा "अयुक्तं शपथं कुर्वन्नयोग्योयोग्यकर्मकृत् । वृहत्क्षुद्रपशूनाञ्च पुंस्त्वस्य प्रतिरोधकृत् ॥ साधारणस्यापलापी दासीगर्भविनाशकृत् । पितृपुत्त्रसुहृद्‌भ्रातृदम्पत्याचार्य्यशिष्यकाः॥ एषामपतितानान्तु त्यागी च शतदण्डभाक्"॥ अयुक्तं शपथं कुर्वन्निति स्वभार्य्यां प्रति यदि त्वां गच्छामि तदा मातरमेव गच्छामीत्ययुक्तशपथकर्त्तेति शूलपाणिमहामहोपाध्यायाः ।

अथोपवीतच्छेदनप्रायश्चित्तं कामरूपीयनिबन्धे स्मृतिसागरे आपस्तम्बः । "ब्राह्मणेन यदा दैवाच्छिन्नं यज्ञोपवीतकम् । मनस्तापेन शुद्धिः स्यादापस्तम्बोऽब्रवीन्मुनिः ॥ प्राणायामत्रयं कृत्वा निराहारः क्षिपेद्दिनम्" ॥ वृहन्मनुः । "उपवीतं ब्राह्मणस्य छिन्नं शूद्रेण कामतः । अन्यदादाय मन्त्रेण जपन्नुपवसेद्दिनम्" ॥ अनादेशे गायत्रीमिति वचनात् । अनिर्दिष्टे शतमिति वचनाच्छतावृत्तिगायत्रीजपं कृत्वा उपवसेत् ऋष्यशृङ्गः । "चाण्डालैः श्वपचैर्वापि छिन्नं यज्ञोपवीतकम् । मुनिभिस्तु विनिर्दिष्टं महासान्तपनद्वयम्" ॥ महासान्तपनमाह याज्ञवल्क्यः । "कुशोदकञ्च गोक्षीरं दधि मूत्रं शकृद्घृतम् । प्राश्यापरेह्न्युपवसेत् कृच्छ्रं सान्तपनं चरन् ॥ पृथक् सान्तपनद्रव्यैः षडहः सोपवासकः । सप्ताहेनैव कृच्छ्रोऽयं महासान्तपनः स्मृतः" ॥ सप्ताहसाध्यमहासान्तपनो धेनुद्वयसमान इति प्रायश्चित्तविवेकः । वृहस्पतिः । "शूद्रेण तु यदा छिन्नमुपवीतं द्विजन्मनः । दण्डं त्रिंशत् पणं दत्त्वा प्राजापत्येन शुद्ध्यति" ॥ प्राजापत्यं धेनुदानसमं तत्तुल्यं कार्षापणत्रयम् । हारीतः । "चाण्डालपुक्कश म्लेच्छान्त्यजकापालिकैस्तथा । छिन्नयज्ञोपवीतो यः सोऽतिकृच्छ्रेण शुद्ध्यति" ॥ अतिकृच्छ्रे द्वे धेनू ।

अथ रेतो मूत्रपुरीषभक्षणप्रायश्चित्तम् । बृहस्पतिः । अलेह्यानामपेयानामभक्ष्याणाञ्च भक्षणे । रेतोमूत्रपुरीषाणां शुद्धैर चान्द्रायणञ्चरेत्" ॥ गोतमः । "अमत्या पाने पयो घृतमुदकं वायुं प्रति त्र्यहं पिबेत् सतप्तकृच्छ्रः । ततः संस्कारः मूत्रपुरीषरेतसां प्राशने चैवमिति" ॥ वायुं तप्तदुग्धवाष्पम् अयं द्वादशाहसाध्यस्तप्तकृच्छ्रः । चान्द्रायणतप्तकृच्छ्रयोर्ज्ञानाज्ञानाभ्यां व्यवस्था संस्कारस्तूभयत्रैव । चान्द्रायणे धेन्वष्टकं तप्तकृच्छ्रे धेनुचतुष्टयम् । उपनयनं चान्द्रायणसमम् । प्रायश्चित्तविवेककृतापि चाण्डालान्नभक्षणप्रायश्चित्ते तथा संकलनात् । उपनयने विशेषयति मनुः । "वपनं मेखला दण्डो भैक्ष्याचार्य्यौ व्रतानि च । निवर्त्तेत द्विजातीनां पुनः संस्कारकर्मणि" ॥ स्वाध्यायाद्यपेक्षा नास्तीत्याह यमः । "विप्रस्य क्षत्रियस्यापि मौञ्जी स्यादुत्तरायणे । दक्षिणे च विशां कार्य्यं नानध्याये न संक्रमे ॥ अनध्यायेऽपि कुर्वीत यस्य नैमित्तिकं भवेत्" ॥ अपिना दक्षिणायनकृष्णपक्षयोः समुच्चयः । मलमासादिदोषोऽप्यत्र नास्ति प्रायश्चित्तरूपत्वेन प्रतिप्रसूतत्वात् । तथा च दक्षः । "नैमित्तिकानि काम्यानि निपतन्ति यथा यथा । तथा तथैव कार्य्याणि न कालस्तु विधीयते" ॥ संवर्त्तः । "विण्मूत्रभक्षणे विप्रः प्राजापत्यं समाचरेत्" ॥ एतद्बलात्कारविषय इति प्रायश्चित्तविवेकः । वस्तुतस्तु अज्ञानाद्बलात्कारे आधिक्यं प्राक् प्रतिपादितम् । अत्र ऊनैकादशवर्षीयबालविषयमिदम् । क्षत्रियादौ पादपादह्रानिः ।

अथोच्छिष्टस्य चाण्डालादिस्पर्शप्रायश्चित्तम् । आपस्तम्बः । "भुक्तोच्छिष्टस्त्वनाचान्तश्चाण्डालैः श्वपचेन वा । प्रमादात् स्पर्शनं गच्छेत् तत्र कुर्य्याद्विशोधनम् ॥ गायत्र्यष्टसहस्रन्तु द्रुपदां वा शतं जपेत् । त्रिरात्रोपोषितो भूत्वा पञ्चगव्येन

शुद्ध्यति ॥ भुक्तोच्छिष्टोऽन्त्यजैः स्पृष्टः प्राजापत्यं समाचरेत्। अर्द्धोच्छिष्टे स्मृतः पादः पादः आमाशने तथा" ॥ प्राजापत्यं स्नाने अर्द्धोच्छिष्टो येनाद्यग्रासः ग्रासे निक्षिप्तः। न तु निगीर्णः। दक्षः। पाने मैथुनसंसर्गे तथा मूत्रपुरीषयोः। संस्पर्शं यदि गच्छेत्तु यवोदकमात्यजैः सह ॥ दिनमेकं चरेन्मूत्रे पुरीषे तु दिनद्वयम्। दिनत्रयं मैथुने स्यात् पाने स्याच्च चतुष्टयम्" ॥ काश्यपः। "श्वशूकरान्त्य चाण्डालमद्यभाण्ड-रजस्वलाः। यद्युच्छिष्टः स्पृशेत्तत्र कृच्छ्रं सान्तपनं चरेत्" ॥ एतज्ज्ञानाभ्यासे सान्तपने धेनुद्वयम्। ब्रह्मपुराणे। "उच्छिष्टेन तु शूद्रेण विप्रः स्पृष्टस्तु तादृशः। उपवासेन शुद्धिः स्यात् शुना संस्पृष्ट एव वा ॥ उच्छिष्टेन तु विप्रेण विप्रः स्पृष्टस्तु तादृशः। उभौ स्नानं प्रकुर्वतं सद्य एव समाहितौ" ॥ अनुच्छिष्ट ब्राह्मणस्य नक्तमिति प्रायश्चित्तविवेकः।

अथ रजस्वलास्पर्शप्रायश्चित्तम्। काश्यपः। "रजस्वला संस्पृष्टा ब्राह्मण्या ब्राह्मणी यदि। एकरात्रं निराहारा पञ्चगव्येन शुद्ध्यति ॥ रजस्वला तु संस्पृष्टा राजन्या ब्राह्मणी तु या। त्रिरात्रेण विशुद्धिः स्यात् व्याघ्रस्य वचनं यथा ॥ रजस्वला तु संस्पृष्टा वैश्यया ब्राह्मणी च या। पञ्चरात्रनिराहारा पञ्चगव्येन शुद्ध्यति ॥ रजस्वला तु संस्पृष्टा शूद्रया ब्राह्मणी यदि। षड्रात्रेण विशुद्ध्येत्तु ब्राह्मणी कामचारतः। अकामतश्चरेदर्द्धं ब्राह्मणी सर्वजातिषु" ॥ एतेन रजस्वलायाः ब्राह्मण्याः सवर्णरजस्वलास्पर्शे एकरात्रोपवासः पञ्चगव्यपानं कामतः। अकामतस्तदर्द्धं नक्तव्रतं असवर्णरजस्वलास्पर्शे त्रिरात्रपञ्चरात्रषड्रात्रोपवासाः। अकामतस्तदर्द्धम्। एतच्चतुर्थाहानन्तरं कर्त्तव्यम्। "चाण्डालेन श्वपाकेन संस्पृष्टा चेद्रजस्वला। अतिक्रम्य तान्यहानि प्रायश्चित्तं समाचरेत् ॥

त्रिरात्रमुपवासः स्यात् पञ्चगव्येन शुद्ध्यति। तां निशां तु व्यतिक्रम्य स्नानन्तु कारयेत्" ॥ इति वचनान्तरदर्शनात् एतत् कामतः। अत्र दिनभेदोऽपि नास्ति। अज्ञाने वृहस्पतिः। "पतितान्त्यश्वपाकैस्तु संस्पृष्टा स्त्री रजस्वला। तान्यहानि व्यतिक्रम्य प्रायश्चित्तं समाचरेत् ॥ प्रथमेऽह्नि त्रिरात्रन्तु द्वितीये द्व्यहमाचरेत्। अहोरात्रं तृतीयेऽह्नि चतुर्थे नक्तमाचरेत्" ॥ चतुर्थेऽह्नीति शुद्धिस्नानात् पूर्वं व्याघ्रः। "रजस्वला यदा स्पृष्टा श्वजम्बुकखरैः क्वचित्। निराहारा भवेत्तावत् यावत् स्नानेन शुद्ध्यति" ॥ अत्रापि वृहस्पत्युक्तदिनभेदव्यवस्था। वृद्धशातातपः। "रजस्वले तु येनाग्र्यावन्योऽन्यं स्पृशतो यदि। सवर्णे पञ्चगव्यन्तु ब्रह्मकूर्चमतः परम्" ॥ पञ्चगव्यपानं व्रतरूपम्। तेनोपवासः। ब्रह्मकूर्चमाह जावालः। "अहोरात्रोषितो भूत्वा पौर्णमास्यां विशेषतः। पञ्चगव्यं पिबेत् प्रातर्ब्रह्मकूर्चविधिः स्मृतः" ॥ तदशक्तौ पुराणैकं दातव्यम्। उच्छिष्टशूद्रादिस्पर्शे वृहस्पतिः। "शुना चोच्छिष्टया शूद्रया संस्पृष्टा द्व्यहमाचरेत्। अहोरात्रं तृतीयेऽह्नि परतो नक्तमाचरेत्" ॥ परतश्चतुर्थदिने स्नायात् पूर्वमिति ज्ञेयम्। इति श्रीरघुनन्दनभट्टाचार्य्यविरचितप्रायश्चित्ततत्त्वं समाप्तम्।

# ज्योतिस्तत्त्वम्।



नमो गणेशाय।

प्रणम्य सच्चिदानन्दं भास्करं जगदीश्वरम्।
ज्योतिःशास्त्रस्य तत्त्वानि वक्ति श्रीरघुनन्दनः॥

"राश्यादिनिर्णयस्तत्र चन्द्रादेश्च प्रतिक्रिया। प्रकीर्णं सर्वतोभद्रं बालाद्युपयमस्तथा॥ गर्भाधानं सवः पुंसां सीमन्तो जातभद्रता। जातनामकनिष्क्रामक्रियान्नाशनचूड़काः॥ कर्णवेधस्तथा विद्यारम्भोपनयनिर्णयः। गृहाद्यं कृषिराकृत्यं यानं छत्रं नृपासनम्"॥

अथ राश्यादिनिर्णयः। "मेषवृषमिथुनकर्कटसिंहाः कन्यातुलाश्च वृश्चिकभम्। धनुरथ मकरः कुम्भो मीन इति च राशयः कथिताः"॥ राशिकथनम्। "अश्विन्या सह भरणी कृत्तिकापादः कीर्त्तितो मेषः। वृषभः कृत्तिकाशेषं रोहिण्यर्द्धञ्च मृगशिरसः॥ मृगशिरसोऽर्द्धं चार्द्रा पुनर्वसोस्त्रिपादं मिथुनम्। पादः पुनर्वसोरन्त्यः पुष्योऽश्लेषा च कर्कटः॥ सिंहोऽथ मघा पूर्वफल्गुनीपाद उत्तरायाः। तच्छेषं हस्ताचित्रार्द्धं कन्यकाख्यः तौलिनि चित्रार्द्धं स्वातीविशाखायाश्च पादत्रयं अलिनि विशाखापादस्तथानुराधान्विता ज्येष्ठा। मूलं पूर्वाषाढ़ा प्रथमश्चाप्युत्तरांशको धन्वी। मकरस्तत्परिशेषं श्रवणा चार्द्धं धनिष्ठायाः। कुम्भोऽथ धनिष्ठार्द्धं शतभिषापौर्वभाद्रपदत्रयम्। भाद्रपदायाः शेषस्तथोत्तरा रेवती मीनः"॥ राशिनक्षत्रभेदकथनम्। "राशिनामानि च चेट्

भस्मृत्वं गृहनाम च। मेषादीनाञ्च पर्य्यायं लोकादेव विचिन्तयेत्" ॥ राशिपर्य्यायकथनम् । "क्रिय-तावुरि-जितुम-कुलीर-लेय-पाथेय-यूक-कौर्पाख्याः । तौक्षिक आकोकेरो ह्रद्रोगश्चान्त्यभं चेत्थम्" ॥ "अरुणसित-हरित-पाटल-पाण्डु-विचित्राः सितेतरपिशङ्गौ । पिङ्गलकर्वुरबभ्रूमलिनारुचयो यथासंख्यम्" ॥ मेषादीनां वर्णभेदकथनम् । "मत्स्यौ घटी नृमिथुनं सगदं सवीणं चापीनरोऽश्वजघनो मकरो मृगास्यः । तौलीसशस्य दहनाप्लवगा च कन्या शेषाः स्वनामसदृशाः स्वचराश्च सर्वे" ॥ मेषादीनां विशेषनामकथनम् । अश्वजघनः अश्वाकारजघनो न त्वश्वारूढ़जघनः । उत्तरत्र चतुश्चरणत्वकथनात् । राश्यधिष्ठातृदेवताकथनम् । "क्रूरोऽथ सौम्यः पुरुषोऽङ्गना च ओजोऽथ युग्मं विषमः समश्च । चर-स्थिरद्व्यात्मकनामधेया मेषादयोऽमी क्रमशः प्रदिष्टाः" ॥ राशीनां क्रूरसौम्यादिविवेकः । दैवज्ञमनोहरे । "पुष्पश्च पुष्करश्चैव आधानाख्यस्तथैव च । श्रुत्या श्रुत्वा श्रुष्वा भवन्त्येते नित्यं द्वादश राशयः" ॥ पुष्पादिविवेकः । "मिथुनतुला-घटकन्या द्विपदाख्याश्चापपूर्वभागश्च । मृगधनुरार्द्धान्तार्द्धं वृषाजसिंहाश्चतुश्चरणाः" ॥ द्विपदचतुष्पदकथनम् । "कर्कट-वृश्चिकमीना मकरान्त्यार्द्धञ्च कीटसंज्ञाः स्युः वृश्चिकराशि-र्मुनिभिः सरीसृपत्वेन निर्दिष्टः" ॥ कीटसरीसृपकथनम् । "द्विपदवशगाः सर्वे सिंहं विहाय चतुष्पदाः । सलिलनिलया भक्ष्या वश्याः सरीसृपजातयः ॥ मृगपतिवशे तिष्ठन्त्येते विहाय सरीसृपान् । अकथितगृहेष्वूह्यं वश्यं जनव्यवहारतः" । सरीसृपजातय इति बहुवचनात् कीटस्यापि परिग्रहः । राशीनां वश्यावश्यकथनम् । "ग्राम्यामिथुनतुला स्त्री चापालिघटा निशासु वृषमेषौ । मकरादिमार्द्ध सिंहो वन्यौ दिवसेऽजवृषभौ

च। जलजौ कर्कटमीनौ मकरान्त्यार्द्धञ्च शिवमते कुम्भः" ॥ ग्राम्यारण्यजलजराशिकथनम्। "ह्रस्वास्तिमिगोविघटा मिथुन धनुः कर्किमृगमुख्याश्च समाः। वृश्चिककन्यामृगपतिवणिजो दीर्घाः समाख्याताः" ॥ राशीनां ह्रस्वदीर्घकथनम्। "प्रागादिकक्रुभां नाथा यथासंख्यं प्रदक्षिणम्। मेषाद्या राशयो ज्ञेयास्त्रिरावृत्तिपरिभ्रमात्" ॥ दिगधिपकथनम्। "स्वजातीयाऽनेकसंख्याप्रस्तारे वामतो गतिः। हन्तिः पूर्त्तिश्च गुणनेयुतो तन्मात्रयोजनम् ॥ यावद्धन्तुञ्च शक्नोति तावद्गच्छति हारकः। लब्धं तत्संख्यकं प्राग्घीने तन्मात्रखण्डनम्" ॥ अङ्कप्रस्तारकथनम्। "यदोदेति तदा लग्नं राशिः स्यादन्वहं क्रमात्। अयनांशाल्लग्नमानं तद्दूरमिति नोच्यते ॥ राढ़ीयश्रीनिवासोक्तं तन्मानं स्थूलतोऽत्र तु। रामाऽगवेदै ३। ४७। जलधिस्तु मैत्रै ४।१७। वाणोरसैः ५।६। पञ्चखसागरैश्च ५।४०। वाणः कुवेदै ५। ४१। विषयोऽङ्कयुग्मैः ५। २८। क्रमोत्क्रमान्मेषतुलादिमानम्। ते दण्डास्तैः पलैर्लग्नं रविभुक्तांशकाः क्रमात्। रात्रौ तत्सप्तमर्च्चांशाः प्रविष्टा दिवसे तथा। लग्नं दण्डपलं हिघ्नं तत्संख्यं क्रमतः पलम्। विपलञ्च रवेर्भोग्यमेवं कल्पनमस्तभे" ॥ लग्नविवेकः। "अर्काङ्गुला तु शूच्यग्रा काष्ठी ह्यङ्गुलमूलिका। शङ्कुसंज्ञा भवेच्चैव तच्छायां परिकल्पयेत् ॥ मध्याह्नहीनैरादित्ययुक्तैश्छायाङ्गुलैर्हरेत्। षट्पूरितदिवादण्डं लब्धं दण्डादिकं भवेत् ॥ पूर्वाह्णच्छाययातीतं पराह्णच्छाययैष्यकम्। शून्यैकरामवाणेभदिशो रुद्राः।०।१। ३।५।८।१०।११। क्रमोत्क्रमैः। आषाढादिषु मासेषु छाया माध्याह्निकी मता ॥ अयनांशजमासान्ते व्युत्क्रमेणादितो बुधैः। संख्योक्तान्यदिने भागहारे वृद्धीतरे तथा"। प्रकारान्तरन्तु। "पञ्चाब्धि रामयुग्मैकशून्यैकयुग्मवह्नयः।

चतुःपञ्चर्त्तवो ५। ४। ३। २। १। ०। १। २। ३। ४। ५। ६। माघात्छायापादा दिनार्द्धके। अयनांशजमासान्ते विपाद-गणनक्रमात्। दिने दिने भागहारो मध्यच्छायापदे मतः॥ अङ्कः षष्ट्या शक्रोव्यङ्घ्रिरङ्गुलेर्व्यङ्गुलिस्तथा। सद्यूनं द्विशतं हीनं मध्यपादैश्च षड्गुणैः। छायापादैश्च मध्योनै षड्युतैर्द्विगुणै-र्हरेत्। शाह्यमादिपदार्द्धन्तु लब्धा दण्डा गतैष्यकाः। प्राक्-पश्चिमदिनार्द्धात्तु शेषात् षष्टिगुणात् पलम्" ॥ दिवादण्डादि-ज्ञानम्। "मृगसंक्रान्तितः पूर्वं पश्चात्तारादिनान्तरे। एक-वर्षे चतुःपञ्चपलमानक्रमेण तु। षट्षष्टिवत्सरानेकदिनं स्या-दयनं रवेः। एवं चतुःपञ्चदिनमयनारम्भणं क्रमात् व्युत्क्रमेण च तद्वत् स्यादुदग्यानं रवे र्ध्रुवम्। कर्किसंक्रमणे तद्वदभितो दक्षिणायनम्। अयनांशक्रमेणैव विषुवारम्भणं तथा। रवि-संक्रान्तितो मेषतुलयोरभितः पुनः। विषुवं मीनकन्यार्द्धे त्वेकाचोन्द्रशकाब्दके। दिनमानायमीनार्द्धाम्मेषार्द्धे पालिकं शतम्। ततो वृषार्द्धपर्य्यन्तमशीतिः पलभाजिनो। मिथुनार्द्धे चतुस्त्रिंशत्पलानां वर्द्धते क्रमात्। कर्कटार्द्धन्तु षट्त्रिंशत् सिंहार्द्धन्तु द्वाशीतकम्। कन्यार्द्धञ्च द्विनवतिः क्रमात् तुष्यति वासरे। कन्यार्द्धाद्रजनीमानं बोध्यं पूर्वक्रमेण हि। दिने दिने भागहारान्मानं बोध्यं दिवानिशोः। एकमानं दण्ड-षष्ट्या त्यक्त्वान्यमाननिर्णयः। षट्षष्टिवत्सरानेवं ततः स्यात् षोड़शांशके। पुनस्तद्वत्सरांस्तद्वत् एवं सप्तदशादिके" ॥ दिन-रात्रिमानम्।

पलदण्डयोः प्रमाणन्तु। "दशगुर्व्वचरोच्चारः कालः प्राणः षड़ात्मकैः तैः पलं स्यात्ततः षष्ट्यादण्ड इत्यभिधीयते"। तेन च "माकान्ते पञ्चस्यान्ते पर्य्याकाशे देशे स्वाप्तोः कान्तं वक्रं वृत्तं पूर्णं चन्द्रं मत्वा रात्रौ चेत्। चुत्क्षामः प्राटंश्चेतश्चेतो

राहुः क्रूरः प्राद्यात्तन्मध्यान्ते सर्वंस्यान्ते मध्येकान्ते कर्त्तव्या"। मध्येकपाठात् पञ्च मष्टिपाठाद्दश:। "सामर्थ्यं तनुकल्पते समुदये वित्तं कुटुम्बं ततो विक्रान्तिं सहजं तृतीयभवने योधश्च सञ्चिन्तयेत्। बन्धुं वाहसुखालयानपि ततोधीमन्त्र-पुत्रांस्ततः षष्ठेऽथ चतविद्विषो मदगृहे कामं स्त्रियं वर्त्म च। रन्ध्रायुर्मृतयोऽष्टमे गुरुतपोभाग्यानि चित्तं ततो मानाज्ञास्पद-कर्मणां दशममे कुर्य्यात्ततश्चिन्तनम्। प्राप्तारावथचिन्तयेद्भव-गृहे व्ययक्षितु मन्त्रिव्ययौ। सौम्यस्वामियुते चणेकपचिति-रेषां चतिस्त्वन्यथा"॥ रन्ध्रं पापमिति भट्टोत्पलः। द्वादश-भावविवेकः। "अरातिव्रणयोः षष्ठे त्वष्टमे मृत्युरन्ध्रयोः। व्ययस्य द्वादशस्थाने वैपरीत्येन चिन्तनम्"॥ अरात्यादिभा-वापवादः। अर्द्धेनेन्दुर्कसौराराः पापाः सौमास्तथा परे पाप-युक्तो बुधः पापो राहुकेतू च पापदौ। पापसौम्यविवेकः। दशमे च तृतीये च पाददृष्टिरुदाहृता। अर्द्धदृष्टिश्च नवमे पञ्चमे परिकीर्त्तिता। चतुर्थेत्वष्टमे चैव पादोना परिकीर्त्तिता। सप्तमे परिपूर्णा च फलमेवं प्रकल्पते। तृतीयदशमावार्किः पश्यन् पूर्णफलप्रदः। त्रिकोणगान् गुरुश्चैव चतुर्थाष्टमगान् कुजः। सुतमदननवान्त्ये पूर्णदृष्टिः सुरारेर्युगलदशमराशौ दृष्टिपादत्रयार्हः। सहजरिपुचतुर्थेष्वष्टमे चार्द्धदृष्टिः स्थिति-भवनमुपान्त्यं नैव दृश्यं हि राहोः"। ग्रहाणां राहोश्च दृष्टिः। मेषो वृषो मृगः कन्याकर्किमीनतुलाधराः। भास्करादेर्भव-न्त्युच्चा राशयः क्रमशस्त्विमे। रविर्मेषे वृषे चन्द्रो गुरुः कर्के बुधः स्त्रियां शनिर्युक्के मृगे भौमः शुक्रो मीने च तुङ्गिनः। त्रिंशद्भागे दिशोरामा अष्टाविंशस्तिथिस्तथा। पञ्च वै सप्त-विंशाश्च विंशतिश्चोच्च संज्ञकाः। स्वोच्चाच्च सप्तमं नीचं प्राग्व-द्भावैर्विनिर्दिशेत्। उच्चान्तःसूत्रसंज्ञः स्यात् नीचान्तस्तु सुनी-

चकः। परिपूर्णवलः सूच्चे सुनीचे दुर्वलो ग्रहः। सूच्चसुनीचयोरन्तर्भाग हारात् फलं तथा"। उच्चनीचकथनम्। "सिंहो वृषश्च मेषश्च कन्या धन्वीघटो घटः। अर्कादीनां त्रिकोणानि मूलानि राशयः क्रमात्"। मूलत्रिकोण कथनम्। रविभौमजीवभार्गवशनैश्चराणां त्रिकोणभागाः स्युः। नखरविदिक् तिथिनखराश्चेन्दोर्दिग्भां शकाः सूच्चात्"॥

मूलत्रिकोणांशव्यवस्था। "उच्चं नृयुग्मं घटभं त्रिकोणं कन्यागृहं शुक्रशनी च मित्रे। सूर्य्यः शशाङ्को धरणीसुतश्च राहोरिपुर्विंशतिकः परांशः। सिंहस्त्रिकोणं धनुरुच्चसंज्ञं मीनो गृहं शुक्रशनीविपक्षौ। सूर्य्यारचन्द्राः सुहृदः समानौ जीवेन्दुजौ षट्शिखिनः परांशाः। बाहुकेत्वोरुच्चादिचेत्रं होराथ द्रेक्काणोनवांशोद्वादशांशकः। त्रिंशांशकश्च षड्वर्गास्त्वगादि प्राप्याफलप्रदाः"। इति षड्वर्गः। "कुजशुक्रबुधेन्द्वर्कसौम्यशुक्रावनीभुवाम्। जीवार्किभानुजेज्यानां चेत्राणि स्युरजादयः। विषमर्चेषु प्रथमा होराः स्युश्चण्डरोचिषः द्वितीयाः शशिनो युग्मे व्यत्ययाद्गणयेत् सदा। स्वपञ्चनवमानां ये राशीनामधिपा ग्रहाः। ते द्रेक्काणाधिपाराशौ द्रेक्काणास्त्रय एव हि। मेषकेशरिधनुषां मेषाद्याश्च नवांशकाः। मृगकन्या वृषाणाञ्च मृगाद्यास्तु नवांशकाः। तुलामिथुनकुम्भानां तुलाद्याः समुदाहृताः। कर्किवृश्चिकमीनानां कर्कटाद्या नवांशकाः। चराणां प्रथमे चांशे स्थिराणां पञ्चमे तथा। नवमे द्यात्मका नाञ्च वर्गोत्तम इति स्मृतः। स्वनवांशस्तु राशीनां वर्गोत्तम इति स्मृतः सर्वेषां मेषपूर्वाणां स्वर्चाद्या द्वादशांशकाः। कुजार्किगुरुसौम्यानां भागाः शुक्रस्य च क्रमात्। पञ्चपञ्चाष्टसप्तेषु ज्ञेयमोजःसु राशिषु। त्रिंशांशाव्यत्यया देते युग्मराशिषु कीर्त्तिताः"। इति षड्वर्गकथनम्। "अजोगो-

पतियुग्मञ्च कर्किधन्विमृगास्तथा। निशासंज्ञाः स्मृताश्चैते शेषाश्चान्ये दिनात्मकाः। निशा संज्ञा विमिथुनाः स्मृताः पृष्ठोदयास्तथा। शेषाः शीर्षोदयाश्चैते मीनश्चोभयसंज्ञकः। निशादि संज्ञाकथनम्। "षष्ठत्रिदशलाभाश्च लग्नादुपचयाः स्मृताः। पञ्चमं नवमं स्थानं त्रिकोणं केवलं स्मृतम्"। उपचयत्रिकोणकथनम्। केन्द्रं चतुष्टयं कण्टकञ्च लग्नास्तदश-चतुर्थानां संज्ञा"। केन्द्रपर्य्याय तत् स्थानयोः कथनम्। पनफरं द्वितीयाष्टपञ्चमैकादशं विदुः। तृतीयषष्ठनवमम न्त्यञ्चापो क्लिमं विदुः"। पनफरापो क्लिम तत् स्थानकथनम्। "पातालं हिवुकञ्चैव सुहृदश्चतुर्थकम्। त्रित्रिकोणञ्च नवमं दुश्चिक्यं स्यात् तृतीयकम्। धीस्थानं पञ्चमं ज्ञेयं यामित्रं सप्तमं स्मृतम्। द्युनं द्यूनं तथास्ताख्यं षट्कोणं रिपुमन्दिरम्। कर्मस्थानञ्च दशमं खं मे शूरणमास्पदम्। छिद्राख्यमष्टमं स्थानं रिप्फाख्यं द्वादशं स्मृतम्। चतुर्थमष्टमञ्चैव चतुरस्रं विदुर्बुधाः"॥ चतुर्थादिपर्य्यायः। "हेलिः सूर्य्यश्चन्द्रमाः शीतरश्मिर्हेम्ना विज्ज्ञो बोधनश्चेन्दुपुत्रः। आरोवक्रः क्रूरदृक्चावनेयः कालो मन्दः सूर्य्यपुत्रोऽसितश्च। जीवोऽङ्गिराः सुरगुरुर्वचसां पतीज्यौ शुक्रो भृगुर्भृगुसुतः सित आस्फुजिच्च। राहुस्तमो गुरुसुरश्च शिखी च केतुः पर्य्यायमन्यमुपलभ्य वदेच्च लोकात्"। ग्रहसंज्ञाकथनम्। "रक्तश्यामो भास्करो गौर इन्दुर्नात्युच्चाङ्गो रक्तगौरो महीजः। दूर्वाश्यामोज्ञो गुरुर्गौरगात्रः श्यामः शुक्रो भास्करिः कृष्णदेहः"। ग्रहाणां वर्णकथनम्। "सूर्य्यः शुक्रः क्षमापुत्रः सैंहिकेयः शनिः शशी। सौम्यस्त्रिदशमन्त्री च प्राच्यादि दिगधीश्वराः। प्राच्यां सौम्य सुराचार्य्यौ याम्यां भास्करभूमिजौ। प्रत्यक् सौरिरुदीच्यान्तु सितेन्दू दिग्बलान्वितौ"। दिग्बलिकथनम्। "भौमार्कजीवाः पुरुषाः क्लीबौ सोमजभानुजौ।

स्याख्यौ भार्गवचन्द्रौ द्वौ तत्पतित्वात्तथोच्यते"। पुंग्रहादिनि-र्णयः। "चन्द्रार्कजीवाज्ञसितौ कुजार्को यथाक्रमं सत्त्वरज-स्तमांसि। कटुलवणतिक्तमिश्रितामधुराम्लौ च कषायकोऽ-र्कतः"। गुणरसाधिपकथनम्। "ब्राह्मणे शुक्रवागीशौ क्षत्रिये भौमभास्करौ। चन्द्रो वैश्ये बुधः शूद्रे पतिर्मन्दोऽन्त्यजे जने"। जात्यधिपकथनम्। "ऋग्वेदाधिपतिर्जीवो यजुर्वेदाधिपः सितः। सामवेदाधिपो भौमः शशिजोऽथर्ववेदराट्"। वेदा-धिपकथनम्। मधुपिङ्गलदृक्चतुरस्रतनुः पित्तप्रकृतिः सवि-ताल्पकचः। तनुवृत्ततनुर्बहुवातकफप्राज्ञः शशी मृदुवाक् शुभदृक्। भूमिजस्तरुणमूर्त्तिरुदारः पैत्तिकः सुचपलकृश-मध्यः। श्लिष्टवाक् सततहास्यरुचिर्ज्ञः पित्तमारुतकफप्रकृ-तिश्च। बृहत्तनुः पिङ्गलमूर्द्धजेक्षणो बृहस्पतिः श्रेष्ठमतिः कफात्मकः। भृगुः सुखी कान्तवपुः सुलोचनः कफानिलात्मा सितवक्रमूर्द्धजः। मन्दोऽलसः कपिलदृक् कृशदीर्घगात्रः स्थूलद्विजः परुषलोमकचोऽनिलात्मा। रव्यादीनां क्रमेण स्वभावकथनं मित्राणि सूर्य्याच्छशिभौमजीवाः सूर्य्येन्दुजो सूर्य्यशशाङ्कजीवाः। आदित्यशुक्रौ रविचन्द्रभौमा बुधार्कजौ चन्द्रजभार्गवौ च। एकैकविभक्त्यन्तैः सूर्य्यादेः क्रमेण मित्र-कथनम्। "सितासितौ चन्द्रमसो न कश्चित् बुधः शशी सौम्य-सितौ रवीन्दू। रवीन्दुभौमा रवितस्त्वमित्रामित्रारिशेषस्तु समः प्रदिष्टः॥ बुधः कुजेज्यास्फुजिदर्कपुत्राः शुक्रार्कजौ भौम-सुरेज्यमन्दाः। शनिः कुजेज्यौ सुरराजमन्त्रीरव्यादितोऽमी समसंज्ञिता स्युः"॥ एकैकविभक्त्यन्तैः शत्रु समकथनम्। "चतुर्यदशवित्तान्त्यत्रिलाभस्थाः परस्परम्। तत्कालमित्राण्यु-च्चस्थः कैश्चिदुक्तोऽन्यथा रिपुः"॥ तत्कालमित्रादिविवेकः। हितसमरिपुसंज्ञा ये निसर्गे निरुक्ताः अधिहितहितमध्यास्तेऽपि

ततृकालमित्रैः। रिपुसमसुहृदाख्या ये निसर्गोपदिष्टा अधिरिपुरिपुमध्याः शत्रुभिश्चिन्तनीयाः। अधिमित्रादिकथनम्। स्वोच्चे स्थिताः श्रेष्ठबला भवन्ति मूलत्रिकोणे स्वगृहे च मध्याः। दृष्टेक्षिता मित्रगृहाश्रिता वा वीर्य्यं कनीयः समुपावहन्ति। लग्नांशाधिपयोर्यादृक् बलं तादृक् तयोरपि। पतितत्प्रियबुधसौम्योच्चस्थैर्युतवीक्षितो बली राशिः। "अल्पबलोऽन्यैर्मिश्रैर्मध्यबलः सर्व्वायुतेक्षितस्त्वबलः। जीवज्ञपतिभिर्दृष्टोयुतो वातिबली भवेत्॥ मिश्रैर्मिश्रबली ज्ञेयो राशिः पापैस्तु दुर्व्वलः। स्वोच्चत्रिकोणस्थितभस्वगृहादिवर्गसंस्थाः समे शशिसितौ विषमेऽवशेषाः। पुंस्त्रीनपुंसकखगाभमुखान्त्यमध्यसंस्थाः शुभेक्षितयुतास्थिति वीर्य्यवन्तः" ॥ ग्रहाणां बलकथनम्। मार्कण्डेयपुराणम्। "द्रव्ये गोष्ठेषु भृत्येषु सुहृत्सु तनयेषु च। भार्य्यायाञ्च ग्रहे दुष्टे भयं पुण्यवतां नृणाम्॥ आत्मन्यथाल्पपुण्यानां सर्व्वत्र वातिपापिनाम्। न कुत्रापि ह्यपापानां नराणां जायते भयम्" ॥ भविष्यपुराणम्। "अहिंसकस्य दान्तस्य धर्मार्जितधनस्य च। नित्यञ्च नियमस्थस्य सदानुग्रहिकाग्रहाः" ॥ ज्योतिषे। "रविर्मासं निशानाथः सपाददिवसद्वयम्। पक्षत्रयं भूमिपुत्रो बुधोऽष्टादश वासरान्॥ वर्षमेकं सुराचार्य्यश्चाष्टाविंशद्दिनं भृगुः। शनिः सार्द्धद्वयं वर्षं स्वर्भानुः सार्द्धवत्सरम्॥ एवं प्रमाणात् सकलाः स्वराशिं भुञ्जते ग्रहाः। वक्रशीघ्रगतिश्चेत् स्यात् भौमादिपञ्चकेऽन्यथा॥ केतूपप्लवभौममन्दगतयः षष्ठत्रिसंस्था शुभाः चन्द्रार्कावपि ते च तौ च दशमौ चन्द्रः पुनः सप्तमः। जीवः सप्तनवद्विपञ्चमगतो युग्मेषु सोमात्मजः शुक्रः षड्दशसप्तवर्जमितरे सर्व्वेऽप्युपान्ते शुभाः"। गोचरशुद्धिः। राजमार्त्तण्डे। "वक्रातिचारोपगताग्रहेन्द्रा यत्र स्थितास्तस्य फलं प्रदद्युः। अनि-

ष्टमिष्टं नियतं नराणां भौमादयो यानविवाहजन्मसु" ॥ गोचरे तु । "वक्रातिचारोपगमे ग्रहाणां अतृप्तं फलं राशिगतं वदन्ति। शुभाशुभौ जीवबुधौ न तस्मिंस्तयोस्तु पूर्वं फलमादिशन्ति। ताराबलादिन्दुरथेन्दुवीर्य्याद्दिवाकरः संक्रममाण उक्तः। ग्रहास्तु सर्वे सवितुर्बलेन मषीसुताद्याः शुभदा निरुक्ताः। नाड़ीनक्षत्र-दिवसे रविभौमशनैश्चराः। संक्रान्तिं यस्य कुर्वन्ति तस्य क्लेशोऽभिजायते। गोमूत्रसर्षपैः स्नानं सर्वौषधिजलेन च ॥ विशुद्धं काञ्चनं दद्यात् नाड़ीदोषोपशान्तये। मुरामांसी वचाकुष्ठं शैलेयं रजनीद्वयम् ॥ शठीचम्पकमुस्ताश्च सर्वौषधि-गणः स्मृतः" ॥ कषायावयवग्रहणे मत्स्यपुराणम्। "एषां पत्राणि साराणि मूलानि कुसुमानि च। एवमादीनि चान्यानि कषायाख्यो गणः स्मृतः" ॥ आयुर्वेदोक्तपरिभाषा। "अङ्गेऽप्यनुक्ते विहितन्तु मूलं भागेऽप्यनुक्ते समता विधेया। द्रव्येऽप्यनुक्ते विहितन्तु तोयं कालेऽप्यनुक्ते दिवसस्य पूर्वम् ॥ धुस्तूरबीज-सलिलैः स्नायात् संक्रान्ति शान्तये। तथा सर्वौषधीभिश्च विष्णुमन्त्रांश्च संजपेत्" ॥

अथ रविसंक्रान्तिगणनम्। "नवाष्टशक्रहीनेन शकाब्दा-ङ्केन पूरिताः। भूर्वाणचन्द्रार्केकाग्नि कुरामौ वेदयुग्मके। १। १५। ३१। ३१। २४। अङ्का अनुपलादेस्तु षष्ट्या लब्धा-ङ्कमिश्रिताः। दण्डात् खाग्नी इषेषु च। ३०। ५७। पला-ढित्वा ततः पुनः। सप्तावशिष्टा वाराः स्युस्ततो दण्डादिकाः परे। मेषसंक्रमणे भानोः सिद्धान्तस्फुटसम्मताः। भुजौ षड्-षूरामाग्नौ। २। ५६। ३३। कालो जातिर्गजावनौ। ६। २२। १८। रामश्चन्द्रोऽग्नियुग्मञ्च ३। १। २३। तर्कोऽङ्कदृक् नवा-शुगौ। ६। २९। ५९। द्वावङ्कदृक् वेदबाणा २। २९। ५४। अब्धिर्वाणशरौ सुराः। ४। ५५। ३३। षणागवेदौ शून्येन्दू।

६ । ४८ । १० । एकं शैलभुवौ शराः १ । १७ । ५ । द्वौ षड्गौ तथाकाशा । २ । २६ । ६ । षष्ठीरामाः शरावनौ । ४ । ३ । १५ । पञ्चाग्नीषु तथा रुद्रा ५ । ५३ । ११ । मेषसंक्रमवारतः । अङ्कैर्योज्या वृषादेस्तु वाराद्या संक्रमे रवेः । मृगकर्कटसंक्रान्ती द्वे तूदगदक्षिणायने ॥ विषुवती तुला मेषे गोमध्ये तथापराः । धनुर्मिथुनकन्यासु मीने च षडशीतयः ॥ वृषवृश्चिककुम्भेषु सिंहे विष्णुपदी स्मृता । मूर्ध्नि सप्तमुखे त्रीणि हृदये पञ्च विन्यसेत् ॥ त्रितयं हस्तपादेषु महाविषुवभक्रमात् । मस्तके भूपतेः सौख्यं वदने पटुता शुभे ॥ हृदये च धनाध्यक्षोऽर्थ-प्राप्तिर्दक्षिणे करे । वामे करे महद्दुःखं सुखं पादे च दक्षिणे । भ्रमणं वामपादे च कथितं विषुवत् फलम् ॥

षड्मूर्ध्नि वदने पञ्च चत्वारि हृदये तथा । त्रितयं कर-पादेषु पयो विषुवभक्रमात् । मानं मूर्ध्नि मुखे वैरं हृदये सुखसम्भवः । दोः पदोर्दक्षयोर्भोगस्त्रासश्च वामयोः स्मृभे" । जलविषुवफलम् । "शीर्षे पञ्चमुखे त्रीणि हस्तयोश्च त्रयं त्रयम् । हृदि पञ्च शशीनाभौ गुदे च पादयो रसाः । उत्तरायणभाज-स्त्रेयं स्वनक्षत्रस्थितेः फलम् । शीर्षेऽथ लाभो वदने सुखानि दक्षे करेऽङ्घ्रौ हृदये च सौख्यम् । नाभौ शुभं वामकरेऽर्थ-नाशो गुह्ये भयं वामपदे प्रवासः" । उत्तरायणफलम् । "शीर्षे त्रीणि मुखे त्रीणि हृदये पञ्च हस्तयोः । अष्टौ पादद्वयेऽप्यष्टौ दक्षिणायनभक्रमात् । शीर्षे मानं मुखे विद्या हृदये वित्त-सञ्चयः । प्रवासः स्यात् करे वामे भिक्षालाभश्च दक्षिणे । निष्फलं वामपादे च किञ्चिल्लाभश्च दक्षिणे" । दक्षिणायन-फलम् । "ऋक्षे संक्रमणं यत्र विष्णुपद्यां मुखे तु तत् । चत्वारि दक्षिणे बाहौ त्रीणि त्रीणि पदद्वये । चत्वारि वामबाहौ च हृदये पञ्च निर्दिशेत् । अक्ष्णोर्द्वयं द्वयं योज्यं मूर्ध्नि द्वौ चैककं

गुदे"। फलम्। रोगी भोगस्तथा यानं बन्धनं लाभ एव च। ऐश्वर्य्यं राजपूजा च अपमृत्युरिति क्रमात्"। विष्णुपदीफलम्। "मुखे चैकं करे वेदाः पादयुग्मे द्वयं द्वयम्। क्रोड़े वाणस्तथा वेदाः करे सव्येतरेऽपि च। द्वयं द्वयं तथा नेत्रे मस्तके त्रितयं तथा। द्वयञ्चैव तथा गुह्ये षड़शीत्यां रवेर्भे स्थिते। मुखे दुःखं करे लाभः पादयोर्भ्रमणं हृदि। कान्ता स्याद्बन्धनं वामे हस्ते स्यात् स्वीयभे नृणाम्। सम्मानं नेत्रयोश्चैव अपमानञ्च मस्तके। गुह्ये चैव भवेन्मृत्युः षड़शीतिफलश्रुतिः"। षड़शीतिफलम्। "शीर्षे चत्वारि राज्यं जलधिरपि करे दक्षिणे चापि सौख्यं चैकं कण्ठे विभूतिं मदनशरमितं वक्षसि प्रीतिसंघम्। पादस्थाः षट् च पीड़ां पुनरपि जलधिर्वामहस्ते च मृत्युं नेत्रे त्रीणि प्रदद्युः सुखमथ निजभे वाक्पतेः संक्रमर्क्षात्"। गुरुसञ्चारफलम्। गोचरपीड़ायामपि राशिर्बलिभिः। शुभग्रहैर्दृष्टः। पीड़ां न करोति तथा पापैरेवं विपर्य्यासः"। गोचरापवादः। "दिनकररुधिरौ प्रवेशकाले गुरुभृगुजौ भवनस्य मध्ययातौ। रविसुतशशिनौ विनिर्गमस्थौ शशितनयः फलदस्तु सर्वकालम्"। राशिविभागात् फलम्। "सप्तमोपचयाद्यस्थश्चन्द्रः सर्वत्र शोभनः। शुक्लपक्षे द्वितीयस्तु पञ्चमो नवमस्तथा। सितशनिकुजजीवार्कास्त इन्दुर्नराणां व्ययसुखनवमस्थोऽपीष्टदाताथ तेषाम्। खसुतनिधनगश्चेत् मृत्युपुत्रार्थगोऽपि प्रचुरशुभफलः स्यात् वामवेधेन शुद्धः"। वामवेधत्वञ्च द्यूनजन्मेति एवमन्येति वक्ष्यमाणवचनाभ्यामेकार्थत्वाद्बोध्यम्। "उपचयकरयुक्तः सव्यगः शुक्लपक्षे शुभमभिलषमाणः सौम्यमध्यस्थितो वा। सखिवशिगृहयुक्तः कारकर्क्षेऽपि चेन्दुर्जयधनसुखदाता तत् प्रवृत्तान्यथातः"। ध्रुवम उत्तरायणचारी। उपचयकरस्य पश्चाद्वर्त्ती वा अत-

एवोक्तम्। "भानां यथा सम्भवमुत्तरेण पश्चाद्ग्रहाणां यदि वा शशाङ्कः। शुभप्रदानां शुभदः प्रयाणे याम्येन यातो न शुभः शशाङ्कः। यो यस्य दशमर्क्षगः स तस्य वश्यो भवति नियमेन। स्वर्चतुङ्गमूलत्रिकोणगाः कण्टकेषु यावन्त आश्रिताः। जन्मकालवशगास्ते तु कारकाः कर्मगास्तु तेषां विशेषतः। सितपक्षादौ चन्द्रे शुभे शुभं पक्षमशुभमशुभे च। कृष्णे गोचरशुभदो न शुभः पक्षः शुभोऽतोऽन्यः"। भीमपराक्रमे। "शुक्ले पक्षे प्रतिपदि चन्द्रे शिवे शिवं पक्षम्। कृष्णे प्रतिपदि ताराशुद्धौ शुभं विदुः पक्षम्"। वादरायणः। "शीतांशुमिष्टमन्नं जनयति सततं जन्मराशौ नराणां हर्षं दैत्येन्द्रमन्त्री दिवसकरकुजौ शत्रुपक्षस्य वृद्धिम्। हानिं कुर्य्यादसूनां किरणपतिसुतो बन्धनं सोमपुत्रो नित्यं निर्वृतबुद्धिं प्रवलरिपुबलं वित्तनाशश्च जीवः। भेदं मित्रजने करोति दिनकृत् क्लेशाश्रयं चन्द्रमाः। सौरिर्वित्तविनाशमृच्छति सदा लाभं ददातीन्दुजः। हानिं भूमिसुतः करोति महतीं भोगान् भृगोरात्मजो ज्ञानं दीपयति तृतीयभवने जीवो नृणां निर्वृतिम् २। तृतीये तिष्ठन्तः खरकिरणभौमार्कतनयाः स्थिरस्थानप्राप्तिं ददति भृगुसूनुश्च परमाम्। विनाशं शत्रूणां जनयति शशी चन्द्रतनयः परं हृत्सन्तापं त्रिदशपतिमन्त्री च कुरुते। ३। सूक्ष्मां शास्त्रविरोधिकामपि धियं मूढां करोत्यङ्गिराः घोरां दुःखपरम्परां दिनकरः कुर्य्यामयं चन्द्रमाः। सौम्यो रोगविनाशमिच्छति नृणां रोगक्षयं भार्गवो भौमः शत्रुभयं चतुर्थभवने सौरिश्च वित्तक्षयम्। ४। दौर्भाग्यं शशलाञ्छनः क्षितिसुतश्चोद्विग्नतां चेतसो दोषोत्पत्तिमनुत्तमां रविसुतः स्निग्धैर्वियोगं रविः। दौर्भाग्यं विदधाति चन्द्रतनयः प्राप्तिं परां भार्गवः कुर्य्यात् पञ्चमराशिगोचरगतो जीवो नृणां निर्वृतिम्। ५। स्थिताः षष्ठे राशौ

दिनकरमहीजार्कितनया बुधश्चन्द्रश्चैवं प्रचुरधनधान्यानि ददति। समृद्धिं शत्रूणां मनसि च विषादं सुरगुरुर्भृगुर्नाशं कुर्य्यात् युवतिकृतवैरञ्च परमम्। ६। स्त्रीलाभं शशलाञ्छनोऽर्कितनयश्चोद्विग्नतां चेतसो भौमस्यापि धनक्षयं सुरगुरुर्वस्त्रादिकाः सम्पदः। सौम्यो|रोगकरो भवेत् प्रकुपितो रोगाश्रयं भार्गवः सूर्य्यस्यापि करोत्यनिष्टमतुलं राशौ स्थितः सप्तमे। ७। हुतवहभयमारश्चन्द्रजः सौख्यमुग्रं धनहरणमथार्किर्भार्गवस्यार्थलाभम्। मरणमथ पतङ्गस्याननाशं सुरेज्यः सृजति निधनसंस्थो नेत्ररोगञ्च चन्द्रः। ८। धर्म्मस्थाने दिनकरसुतो नाशमर्थस्य कुर्य्याद्रोगं सौम्यो धरणितनयोर्भार्गवस्यार्थलाभम्। त्रासं सोमो जनयति नृणां शोकविद्वेषमर्कः स्थानं मानं पशुसुतयुतञ्चापि जीवः प्रकामम्। ९। सौम्योऽन्तःशान्तिसुग्रां जनयति दशमः सूर्य्यसूनुः प्रकामां ख्यातिं भौमः समृद्धिं पशुपतिमुकुटोद्घृष्टपादः शशाङ्कः। प्राधान्यञ्चार्थलाभं दशशतकिरणः कर्म्मगः कर्म्मसिद्धिं मित्राणां दैत्यपूज्यः क्षतिमपि कुरुते प्रीतिभेदञ्च जीवः। १०। जीवावनेय रविसौरिसुरारिपूज्यश्चन्द्रश्च चन्द्रतनयश्च विधुन्तुदश्च। एकादशे च भवने सततं नराणां सौभाग्यमानधनधान्यकरा भवन्ति। ११। जीवः सहस्रकिरणस्य शनैश्चरस्य वक्रस्य वक्रचरितस्य निशाकरस्य। कुर्य्युर्वियोगवधबन्धभयं नराणां शुक्रेन्दुजौ धृतिकरौ रविसंख्यराशौ"। १२। रत्नकोषे। "स्थानं जन्मनि नाशयेद्दिनकरः कुर्य्याद्द्वितीये भयं दुश्चिक्ये श्रियमातनोति हिबुके मानक्षयं यच्छति। दैन्यं पञ्चमगः करोति रिपुहा षष्ठेऽर्थहा सप्तमः। पीड़ामष्टमगः करोति नितरां कान्तिक्षयं धर्म्मगः। कर्म्मद्धिजनकस्तु कर्म्मणो वित्तलाभकृदथायसंस्थितः। द्रव्यनाशजनितां महापदं यच्छति व्ययगतो दिवाकरः। १। जन्मन्यर्थं दिशति हिम-

गुर्वित्तनाशं द्वितीये दद्याद्द्रव्यं सहजभवने कुत्सिरोगं चतुर्थः। कार्य्यभ्रंशं तनयगृहगोवित्तलाभञ्च षष्ठो द्यूने द्रव्यं युवतिसहितं मृत्युसंस्थोऽपि मृत्युम्। नृपभयं कुरुते नवमः शशी दशधामगतस्तु महत्सुखम्। विविधमायगतः कुरुते धनं व्ययगतस्तु रुजं सधनक्षयाम्”। च। “प्रथमगृहः क्षोणीसूनुः करोत्यरिजं भयम्। क्षपयति धनं वित्तस्थाने तृतीयगतोऽर्थदः अरिभयकरः पातालेऽसून् क्षिणोति च पञ्चमो रिपुगृहगतो धत्ते वित्तं शुचं मदनस्थितः। जनयति मरणस्थः शस्त्रधारा धराजो दिशति च नवमस्थः कार्य्यपीडामतीव। शुभमपि दशमस्थो लाभगो भूमिलाभं व्ययभवनगतोऽसौ व्याध्यनर्थार्थनाशान्”। मं। “बुधप्रथमधामगो दिशति बन्धमर्थे धनं बधं रिपुभयान्वितं सहजगश्चतुर्थेऽर्थदः। अनिर्वृतिकरो भवेत् तनयगोरिगः स्थानदः करोति मदनस्थितो बहुविधां शरीरापदम्। अष्टमे शशिसुते धनलब्धिर्धर्म्मगोऽतिमहतीं तनुपीड़ाम्। कर्म्मगो सुखमथायगतोऽर्थदो द्वादशे भवति वित्तविनाशः”। बु। “भयं जन्मन्यार्य्यो जनयति धनस्थोऽर्थमतुलं तृतीयोऽङ्गे क्लेशं दिशति च चतुर्थोऽर्थविषमम्। सुखं पुत्रस्थाता शुभमपि च कुर्य्यादरिगृहे द्यूने भूभृत् पूजां धननिचयनाशञ्च निधने। धर्मगतो धनवृद्धिकरः स्यात् प्रीतिहरो दशमोऽमरपूज्यः। स्थानधनानि ददाति स चाये द्वादशगस्तनुमानसपीड़ाम्”। वृ। “जन्मन्यरिचयकरो भृगुजोऽर्थदोऽर्थे दुश्चिक्यगः सुखकरो धनदश्चतुर्थे स्यात् पुत्रगस्तनयगोऽरिमतोऽरिहृद्धैः शोकप्रदो मदनगो निधनेऽर्थदाता। जनयति विविधाम्बराणि धर्म्मेण शुभकरो दशमस्थितस्तु शुक्रः। धननिचयकरस्तु लाभसंस्थो व्ययभवनेऽपि धनागमं करोति”। शु। “वित्तभ्रंशं दिनकरतनयो जन्मराशिं

प्रपन्नश्चित्तक्लेशं द्वितीयो रिपुहननकृतं वित्तलाभं तृतीयः। पाताले शत्रुवृद्धिं सुतभवनगतः पुत्रभृत्यार्थनाशं षष्ठस्थानेऽर्थलाभं जनयति मदने दोषसंघातमार्किः। शरीरपीड़ां निधनेऽथ धर्मे धनक्षयं कर्मणि दौर्मनस्यम्। उपान्त्यगो वित्तमनर्थमन्ते शनिर्ददातीत्यवदत् सुवित्तम्" ॥ श। "जन्मान्त्यपञ्चवसुरन्ध्रचतुर्द्दिसप्तराशौ स्थितो यदि भवेदसुरः कदाचित्। अर्थक्षयं रिपुभयं बहुकार्य्यहानिं रोगप्रवासमरणाग्निभयं करोति" ॥ रा। "एकादशत्रिदशषष्ठगतो नराणां सम्मानभोगनृपमानसुखार्थदाता। आज्ञाकराश्च पुरुषाः प्रमदाश्च नित्यं सौख्यादिकं दिशति पुण्यमयश्च केतुः" ॥ के। इति ग्रहाणां गोचरफलम्।

अथाष्टवर्गः। "जन्मकालग्रहस्थित्या फलं वक्ष्ये शुभाशुभम्। स्वाद्दिनकृत् शुभदः क्षितिपक्षसमुद्रनगादिकपक्षगतो १। २। ४। ७। ८। ९। १०। ११। ऽथ विभावरिभर्त्तुस्त्र्यङ्गदशेषगतो। ३। ६। १०। ११। ऽथ कुजाद्रविव। १। २। ४। ७। ८। ९। १०। ११। दथ सोमसुतात्त्रिशरर्त्तुनवादिषु यातः। ३। ५। ६। ९। १०। ११। १२। देवगुरोर्विषयर्त्तुनवेशगतो। ५। ६। ९। ११। ऽथ सुरारिगुरोः समयाचलभास्करयातः। ६। ७। १२। तीक्ष्णमरीचिसुतादपि भास्करवत् १। २। ४। ७। ८। ९। १०। ११। अथ लग्नगृहात् त्रिकृताङ्गदशादिषु यातः"। ३। ४। ६। १०। ११। १२। रविरेखाः। ४८। "चन्द्रः शुभोऽर्कात्त्रिकालाद्रिदन्तावलाशाशिवस्थ। ३। ६। ७। ८। १०। ११। स्वतः स्वात्कुरामत्वगाशाशिवस्थः। १। ३। ६। ७। १०। ११। क्ष्माजात्त्रिवह्नोषु षड्गोदिगीशेष्वथ। २। ३। ५। ६। ९। १०। ११। ज्ञात्कुरामाब्धिबाणागदन्तावलाशाशिवस्थः। १। ३। ४। ५। ७। ८। १०। ११। जीवात्

कुदृग्वेदशैलेभकाष्ठाशिवस्थोऽथ । १ । २ । ४ । ७ । ८ । १० । ११ । शुक्राच्छिवेदेषु शैलग्रहाशाशिवस्थः ।३। ४ । ५ । ७ । ९ । १० । ११ । तीक्ष्णांशुदेहोद्भवाद्रामवाणर्त्तुशम्भुस्थितो । ३ । ५ । ६ । ११ । ऽथोदयाद्व्ययवाहर्त्तुकाष्ठाशिवस्थः" । ३ । ६ । १० । ११ । चन्द्ररेखाः । ४९ । "कुजोऽर्काच्छुभो वह्निवाणर्त्तुदिक्-शम्भुगो । ३ । ५ । ६ । १० । ११ । ऽथेन्दुतोरामकालेशग । ३ । ६ । ११ । स्वतः स्वात् कुदृग्वेदसप्ताष्टदिक्शम्भुगः स्यात् । १ । २ । ४ । ७ । ८ । १० । ११ । निशानाथपुत्राद्गुणेष्वङ्गरुद्रोप-यातः । ३ । ५ । ६ । ११ । ततोजीवतः कालकाष्ठाशिवार्कोप-यातो । ६ । १० । ११ । १२ । ऽथ देवारिपूज्यादनेहो गजेशा-र्कसंस्थः । ६ । ८ । ११ । १२ । ततः सूर्य्यपुत्रात् कुवेदागनाग-ग्रहाशाशिवस्थो । १ । ४ । ७ । ८ । ९ ।१० । ११ । ऽथ लग्नात् कुरामाङ्गदिक् शम्भुयातः" । १ । ३ । ६ । १० । ११ । कुज-रेखाः । ३९ । "ज्ञः शुभोऽर्कतः शरर्त्तुगो शिवार्कगो । ५ । ६ । ९ । ११ । १२ । ऽथ चन्द्रतो द्विवेदकालनागदिग्महेश्वरेषु गः । २ । ४ । ६ । ८ । १० । ११ । भूमिजात् कुदृक्कृतागनागगो दृगीशगः । १ । २ । ४ । ७ । ८ । ९ । १० । ११ । ततः स्वतः कुवह्निपञ्चषट्नवादिकेषु गः । १ । ३ । ५ । ६ । ९ । १० । ११ । १२ । वाक्पतेरसाष्टशम्भुसूर्य्यगो । ६ । ८ । ११ । १२ । ऽथ शुक्रतः कुवाहुवह्निवेदपञ्चनागगो शिवेषु । १ । २ । ३ । ४ । ५ । ८ । ९ । ११ । पङ्गुतः कुदृक्कृतागनागादिपञ्चकस्थितोऽथ । १ । २ । ४ । ७ । ८ । ९ । १० । ११ । १२ । लग्नतः क्षिति-द्विवेदकालनागदिक् शिवेषु गः" । १ । २ । ४ । ६ । ८ । १० । ११ । बुधरेखाः । ५५ । "सुरराजगुरुः शुभदो रवितः कुयमा-नलवेदनगादिकपञ्चगतो । १ । २ । ३ । ४ । ७ । ८ । ९ । १० । ११ । ऽथ विधोर्द्विशराचलगो शिवगो । २ । ५ । ७ । ९ । ११ ।

वसुधातनयात् कुयमाब्धिनगाष्टदशेशगतो । १ । २ । ४ । ७ । ८ । १० । ११ । ऽथ बुधात् क्षितियुग्मकृतेषु रसग्रहदिक्गिरिशोपग । १ । २ । ४ । ५ । ६ । ८ । १० । ११ । स्तदनुस्तत एकयमानलवारिधिपर्वतनागदशेशगतो । १ । २ । ३ । ४ । ७ । ८ । १० । ११ । ऽथ सिताद्यमपञ्चरसग्रहदिक्शिवगो । २ । ५ । ६ । ८ । १० । ११ । रविनन्दनतो दहनेषु रसार्कगतः । ३ । ५ । ६ । १२ । स्त्वथ लग्नगृहात् कुयमाब्धिशरर्त्तुनगदिग्गिरिशोपगतः" । १ । २ । ४ । ५ । ६ । ७ । ८ । १० । ११ । गुरुरेखाः । ५६ । "भृगुः शुभो रवेर्गजेशसूर्य्यगो । ८ । ११ । १२ । ऽथ चन्द्रतः क्षमादिपञ्चकाष्टगो शिवार्कगः । १ । २ । ३ । ४ । ५ । ८ । ८ । ११ । १२ । कुजात्त्रिवेदकालगो शिवार्कगो । ३ । ४ । ६ । ८ । ११ । १२ । ऽथ बुधात्त्रिवाणकालरन्ध्ररुद्रसंस्थितः । ३ । ५ । ६ । ८ । ११ । गुरोः शराष्टरन्ध्रदिग्महेशग । ५ । ८ । ८ । १० । ११ । स्ततः स्वतः कुपञ्चकाष्टरन्ध्रदिक् शिवोपगः । १ । २ । ३ । ४ । ५ । ८ । ८ । १० । ११ । शनेर्गुणाब्धिपञ्चनागगो दशेशगो । ३ । ४ । ५ । ८ । ८ । १० । ११ । ऽथ लग्नतः कुपञ्चकाष्टगो शिवस्थितः" । १ । २ । ३ । ४ । ५ । ८ । ८ । ११ । शुक्ररेखाः । ५२ । "शुभः पङ्गुरर्कात् क्ष्मायमाम्भोधिशैलाष्टदिक् शम्भुग । १ । २ । ४ । ७ । ८ । १० । ११ । इन्दुतो रामकालेशगतः । ३ । ६ । ११ । क्ष्मासुताद्दह्निबाणर्त्तुकाष्ठा शिवार्कोपगो । ३ । ५ । ६ । १० । ११ । १२ । ऽथ ज्ञतः कालदन्तावलादिस्थितो । ६ । ८ । ८ । १० । ११ । १२ । जीवतो वाणकालेशमार्त्तण्डयात । ५ । ६ । ११ । १२ । स्ततो दैत्यपूज्यादनेहः शिवार्कोपयातः । ६ । ११ । १२ । स्ततो वीतिहोत्रेषु कालेशयात । ३ । ५ । ६ । ११ । स्ततो लग्नतः क्ष्मागुणाम्भोधिषड्दिग्महेशस्थितः" । १ । ३ । ४ । ६ । १० । ११ । शनिरेखाः । ३९ ।

"राहुः शुभोऽर्काङ्गुजवह्निवेदर्त्तुरन्ध्रगो। २। ३। ४। ६। ८। अथ चन्द्रात् कुरामवेदाङ्ग। १। ३। ४। ६। स्ततः कुजाद्वह्निवाणाङ्गरन्ध्रगतोऽथ ३। ५। ६। ८। वुधाच्छशिपत्तवह्निवाणरन्ध्रग। १। २। ३। ४। ५। ८। स्ततो जीवाद्व्यवाहवेदाङ्गरन्ध्रग। ३। ४। ६। ८। स्ततः शुक्रात् पक्षवह्निवाणरन्ध्रगत २। ३। ५। ८। स्ततः सौरात् पञ्चवाणर्त्तुग। २। ५। ६। स्ततः स्ततः शशिवेदवाणरिपुरन्ध्रगोऽथ। १। ४। ५। ६। ८। लग्नाद्वेदरन्ध्रदिग्रुद्रसूर्य्यगतः"। ४। ८। १०। ११। १२। राहुरेखाः। ३८। "मृगेन्द्रविलासाभिधानदण्डकेन राहोरष्टवर्गः। सूर्य्यादेकद्विचतुःसप्ताष्टदशैकादशेषु। १। २। ४। ७। ८। १०। ११। सोमात्त्रिषड्दशैकादशेषु। ३। ६। १०। ११। भौमात्त्रिपञ्चषडेकादशेषु। ३। ५। ६। ११। वुधात् षडष्टनवदशैकादशेषु। ६। ८। ९। १०। ११। गुरोः पञ्चषडेकादशद्वादशेषु। ५। ६। ११। १२। शुक्रात् षडेकादशद्वादशेषु ६। ११। १२। शनेस्त्रिपञ्चाष्टदशैकादशेषु। ३। ५। ८। १०। ११। लग्नादेकत्रिचतुःषड्दशैकादशेषु"। १। ३। ४। ६। १०। ११। एवं लग्नरेखाः। ३७। "इति निगदितमिष्टं नेष्टमन्यद्विशेषादधिकफलविपाकं जन्मभात्तत्र दद्युः। उपचयगृहमित्रस्वोच्चगाः पुष्टमिष्टं त्वपचयगृहनीचारातिभे नेष्टमन्यत्। यावतो यावती रेखा ग्रहाणामष्टवर्गके। तावतीं द्विगुणीकृत्य अष्टाभिः परिशोधयेत्। अष्टोपरि भवेद्रेखा अष्टाभ्यन्तरविन्दवः। अष्टाभिस्तु समो यत्र तत्समं परिकीर्त्तितम्। रेखाग्रहाच्छुभे देया विन्दवस्त्वेतरत्र तु। रेखा विन्दु समानौ चेत् समस्तत्र निगद्यते। रेखाधिक्ये शुभं ज्ञेयं तद्वद्विन्दोरथाशुभम्। श्रीरानन्दस्तथा श्रेयो भोगो राज्यं भवेत्तथा। मलिनोऽथ विपच्चैव हानिर्मृत्युर्भवेत्तथा। इत्यादि-

रेखा ह्रासादिविन्दोः फलान्येतान्यनुक्रमात् । रेखायां वत्सरो ज्ञेयः सार्द्धसप्तदिनं समे । अष्टवर्गदशायुः स्यात् दिनं चतुर्षु विन्दुषु" ॥ इत्यायुर्दायः । इत्यष्टवर्गः । नन्दी । "अष्टवर्गशुभैः श्रीमान् कर्म्म कुर्य्यान्नभश्चरैः । गोचरश्चेत्तदप्राप्तौ तदप्राप्तौ च वेधगैः ॥ व्रतारम्भे विवाहे च यात्रायां क्षुरकर्मणि । अविशुद्धाष्टवर्गस्य समस्ता निष्फलाः क्रियाः ॥ सततं दिशति नराणां राशौ मध्येऽष्टवर्गफलं निखिलम् । भावफलं प्रथमार्द्धे दृष्टिफलान्यर्द्धभुक्तेषु" ॥ इत्यष्टवर्गार्थकथनम् ।

"लाभविक्रमषड्गतः स्थितः शोभनो निगदितो दिवाकरः । खेचरैः सुततपो जलान्त्यगैर्व्यार्किभिर्यदि न विध्यते तदा । द्यूनजन्मरिपुलाभखस्थितश्चन्द्रमाः शुभफलप्रदस्तदा । स्वात्मजान्त्यसुतिबन्धुधर्म्मगैर्विध्यते न विबुधैर्यदि ग्रहैः । विक्रमायरिपुगः कुजः शुभः स्यात्तदान्त्यसुतधर्म्मगैः खगैः । चेन्न विद्ध इन्दुसुतरप्यसौ किन्तु घर्म्मात्तृषिना न विध्यते । स्वाम्बुशत्रुसुतिस्वायगः शुभो ज्ञस्तदा न खलु विध्यते यदा । आत्मजत्रिनवकाद्यनैधनप्रान्त्यगैर्विविधुभिर्नभश्चरैः । स्वाध्यायधर्म्मतनयद्यूनस्थितो नाकनायकपुरोहितः शुभः रिपुफरन्ध्रखजलत्रिगैर्यदा विध्यते गगनचारिभिर्न हि । आसुताष्टमतपोव्ययायगो ।१।२।३।४।५।८।९।१२।११। विद्ध आस्फुजिदशोभनः स्मृतः नैधनास्ततनुकर्म्मधर्म्मधीलाभवैरिसहजस्थखेचरैः ।८।७।१।१०।९।५।११।६।३। एवमत्र खचराव्यधान्विताः सत्फलं न हि दिशन्ति गोचरे । वामवेधविधिना त्वशोभना अप्यमी शुभफलं दिशन्त्यलम् । नो विदन्ति खचरव्यधक्रमं ये ग्रहक्रमविदो हि गोचरे । ते मृषावचनभाषिणो जना यान्ति हास्यमपकीर्त्तिलाञ्छिताः" ॥ सप्तानां ग्रहाणां दक्षिणवेधवामवेधौ "उच्चसंस्थिगताः खेटा

राशिसन्धिगतास्तथा। पश्चार्द्धे: फलं दद्युर्वक्रे च विपरीतकम् ॥ लग्नेशो यदि वक्री स्यात् पुंसः कार्य्येषु वक्रता। लग्नेशेऽस्तं गते मर्त्यो कुःखादिव्याधिसंयुतः ॥ असत्फलः सौम्यनिरीक्षितश्च शुभप्रदश्चाप्यशुभेक्षितश्च। तौ निष्फलौ द्वावपि खेचरेन्द्रौ यः स्वप्रभावा स्वेन निरीक्षितश्च ॥ सुनीचगेऽस्तगेऽपि वा रिपोर्गृहे स्थिते ग्रहे। वृथाफलं प्रकीर्त्तितं समस्तमेव सूरिभिः" ॥ वराहस्तु "सूर्य्याच्छन्नद्युतिषु च दलं प्रोज्झ्य शुक्रार्कपुत्रौ"। दलं अर्द्धं फलस्येति शेषः। "जन्मराशेः शुभः सूर्य्यस्त्रिषष्ठदशलाभगः। द्विपञ्चनवगोऽपीष्टस्त्रयोदशदिनात् परः ॥ रविशुद्धौ गृहकरणं रविगुरुशुद्धौ व्रतोद्वाहौ। चौरं तारकशुद्धाशेषं चन्द्राश्रितं कर्म्म ॥ सदा सर्व्वेषु कार्य्येषु चित्तशुद्धिर्विशेषतः। सितेन्दुबुधजीवानां वाराः सर्व्वत्र शोभनाः। भानुभूसुतमन्दानां शुभकर्म्मसु केष्वपि। कुर्य्यान्मङ्गलपौष्टिकानि नृपतेर्यात्राभिषेकौ तथा ॥ सेवा भेषजवह्निकर्म्मकरणं चारोग्यकर्माणि च। विद्याशानवरव्रतानि हवनं शिल्पं रणं साहसं शिक्षालङ्करणे दिने दिनपतेर्लग्ने स्थिते वा रवौ। रक्तस्रावविषास्त्रकर्म्महुतभुक् कार्य्यं विवादं रणं कुर्य्याद्बन्धविधिं सुदुष्टदमनं सेतुप्रभेदं तथा। वृक्षच्छेदनभेदनानि मृगयां चौर्य्यं तथा साहसं सेनान्यं कृषिकर्म्मधातुकरणं भौमस्य लग्नेऽह्नि वा। स्थाप्यं समाप्यं क्रतुदामकार्य्यं गृहे प्रवेशो नगरे पुरे वा। भौमोक्तकार्य्यं गजवाजिबन्धो दिने प्रसिध्यन्ति शनैश्चरस्य" ॥

वारफलम्। "शतमुनियमशरमङ्गलरामर्त्तुषु भास्करादियामार्द्धे। प्रभवति हि वारवेला न शुभाशुभकार्य्यकरणाय" ॥ वारवेला। "कालस्य वेलारवितः शराब्धिकालानलागाम्बुधयो गजेन्दु। दिने निशायामृतुवेदनेत्रनगेषु रामाविधदन्तिनौ

च"॥ कालवेला। "वेदा ४ नङ्गेषु ५ शैला ७ मुनि ७ नयन २ रसा ६ युग्म २ षट् ६ कामबाणा ५ बाण ५ शोनाचि ३ वेदा ४ वसु ८ मुनि ७ हरदृक् ३ चाग्निवेद ४ द्वयानि २ षष्ठाष्टैकं दिनेशात् क्रमश इह दिने मन्त्रिचण्डेश्वरोक्तः पूर्व-वाराद्धयामः कुलिक इह परो मध्यमश्चेति कालः"॥ वार-कालकुलिकवेलाकथनम्। विशेषतः कुलिकवेलाप्रयोजनन्तु "जपित्वासितगुञ्जानां कुडवं कुलिकोदये"। इत्यनेन नव-दुर्गामन्त्राभिचारकर्म्मणि सारदायामुक्तम्। तट्टीकाकारराघव-भट्टस्तु। "मन्वर्कदिग्वसृतुवेदपञ्चैरर्कान्मुहूर्त्तैः कुलिका भवन्ति। दिवा निरेकैरथ यामिनीषु ते गर्हिताः कर्मसु शोभनेषु" निरेकैः पूर्वोक्तमन्वादिमुहूर्त्तैरेकोनैरित्यर्थः। "यात्रायां मरणं काले वैधव्यं पाणिपीड़ने। व्रते ब्रह्मवधः प्रोक्तः सर्वं कर्म ततस्त्यजेत्॥ शिशिरपूर्वमृतुत्रयमुत्तरं ह्ययनमाहुरहश्च तदा-मरम्। भवति दक्षिणमन्यऋतुत्रयं निगदिता रजनी मरुताञ्च सा॥ सौम्यायने कर्म्म शुभं विधेयं यद्गर्हितं तत् खलु दक्षिणे तु" सौम्यायनेन शुक्लः कृष्णो याम्यायनेन सम उक्तः। फलतः कर्मतोऽपि पञ्चयोगगर्गादिभिर्मुनिभिः। "नन्दा-भद्रा-जया-रिक्ता-पूर्णा च नाम सदृशफला। न्यूनसमेष्टाः शुक्ले कृष्णे तिथयः प्रतीपास्ताः। सदैव दर्शे पितृकर्म्म मुक्ता नान्यद्विद-ध्यात् शुभमङ्गलानि। तिथिफलम्।

"तिथ्यन्तद्वयमेको दिनवारः स्पृशति यत्र तद्भवत्यवमदिनम्। त्रिदिनस्पृक्तिथित्रयस्पर्शनादङ्कः"॥ अवमत्र्यहस्पर्शौ। कौर्मे पाद्मेऽपि। "द्वौ तिथ्यन्तावेकवारे यत्र स स्याद्दिनक्षयः"। वशिष्ठः। "एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा। तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम्"॥ साहस्रिकं फलमिति माङ्गल्येतरवैदिककर्मपरम्। "अधिमासे दिनपाते

धनुषि रवौ भानुलङ्घिते मासि। पक्षिणि सुप्ते कुर्य्यान्नो माङ्गल्यं विवाहञ्च"॥ इति भौमपराक्रमात् दिनपाते दिनक्षये। "त्र्यहस्पृशं नाम यदेतदुक्तमत्र प्रयत्नः कृतिभिर्विधेयः। विवाहयात्रा शुभपुष्टिकर्म सर्वं न कार्य्यं त्रिदिनस्पृशि तु॥ आद्यास्ततस्रः क्रियपूर्वकाणामेषां चतुर्णामपि पञ्चमी स्यात्। पराः परेषां परतस्तथैषां सक्रूरराशेरशुभा तिथिः स्यात्"॥ मेषे चेत् पापग्रहस्तदा प्रतिपद्दुष्टा वृषे चेत् द्वितीया मिथुने तृतीया कर्कटे चतुर्थी चतुर्षु पञ्चमी। एवं सिंहादौ षष्ठ्यादयः।

"अश्विनी भरणी चैव कृत्तिका रोहिणी तथा। मृगशीर्षस्तथा चार्द्रा पुनर्वसुकपुष्यकौ॥ अश्लेषा च मघा पूर्वफल्गुन्युत्तरफल्गुनी। हस्ता चित्रा तथा स्वाती विशाखा चानुराधिका॥ ज्येष्ठा मूलं तथाषाढ़े पूर्वोत्तरपदादिके। श्रवणा च धनिष्ठा च शतभिषाद्यभाद्रिका। उत्तरादिभाद्रपदा रेवती भानि च क्रमात्"॥ नक्षत्रकथनम्। "अश्वियमदहनकमलजशशिशूलभृददिति जीवफणि पितरः। योऽन्यर्य्यमदिनकृत्त्वष्टृपवनशक्राग्निमित्राः। शक्रो निरृतिस्तोयं विश्वविरिञ्चौ हरिर्वसुर्वरुणः॥ अजपादो हि व्रध्नः पूषा चेतीश्वरा भानाम्"॥ विशाखायाः शक्राग्न्योर्मिलितदैवतत्वम् अभिजितो भिन्नत्वेन अष्टाविंशतिता तच्च वक्ष्यते। नक्षत्राधिपकथनम्।

"उग्रः पूर्वमघान्तका ध्रुवगणस्त्रीण्युत्तराणि स्वभूर्वातादित्यहरित्रयं चरगणः पुष्याश्विहस्ता लघुः। चित्रा मित्रमृगान्त्यमं मृदुगणस्तीक्ष्णो हि रुद्रेन्द्रयुक्। मिश्रोऽग्निः सविशाखभः शुभकराः सर्वे स्वकृत्ये गणाः"॥ गणकथनम्। "अश्लेषवह्नियमपित्रविशाखयुक्तं पूर्वात्रयं शतभिषा च नवाप्युडूनि।

एतान्यधोमुखगणानि शिवानि नित्यं विद्यार्थभूमिखननेषु च भूषितानि" ॥ अधोमुखनक्षत्रकथनम् । "रविः स्थिरः शीतकरश्चरश्च महीज उग्रः शशिजश्च मिश्रः । लघुः सुरेज्यो भृगुजो मृदुश्च शनिश्च तीक्ष्णः कथितो मुनीन्द्रैः ॥ शशाङ्क-तारयोः शुद्धिर्विचार्य्या सर्वकर्मसु । ग्रहाणामपि सर्वेषां तच्छुद्धौ फलदातृता" ॥ श्रीपतिसमुच्चये । "ताराचन्द्रबले प्राप्ते दोषाश्चान्ये भवन्ति ये । ते सर्वे विलयं यान्ति सिंहं दृष्ट्वा गजा इव ॥ जन्मसम्पत् विपत्क्षेमः प्रत्यरिः साधको बधः । मित्रं परममित्रञ्च जन्मभाच्च पुनः पुनः ॥ सर्वमङ्ग-लकार्य्याणि त्रिषु जन्मसु कारयेत् । विवादश्राद्धभैषज्ययात्राक्षौ-रादि वर्जयेत् ॥ यात्रायां पथि बन्धनं कृषिविधौ सर्वस्य नाशो भवेत् । भैषज्ये मरणं तथा सुनियतं दाहो गृहारम्भणे ॥ क्षौरे रोगसमागमो बहुविधः श्राद्धेऽर्थनाशस्तथा । वादे बुद्धि-विनाशनं युधि भयं प्राप्नोत्ययं जन्मभे ॥ पापाख्या तु त्रिविधा पञ्चचतुर्दशविंशतिस्त्रियुता । सिद्धिफला वृद्धिकरी विनाश-संज्ञा क्रमात् कथिता" ॥

"जन्माद्यं कर्म ततोऽपि दशमं सांघातिकं षोड़शभम् । समुदयमष्टादशभं विनाशसंज्ञं त्रयोविंशम् ॥ आद्यात्तु पञ्चविंशं मानसमेवं नरः षड़्क्षः स्यात् नवनक्षत्रो नृपतिः स्वजातिदेशाभिषेकर्क्षैः" ॥ जात्यर्क्षंस्तु । "पूर्वात्रयं सानल-मग्रजानां राज्ञान्तु पौष्णेन सहोत्तराणि । सपौष्णमित्रं पितृ-दैवतञ्च प्रजापतेर्भञ्च कृषीवलानाम् ॥ आदित्यहस्ताभिजि-दश्विभानि तान्यन्त्यजातेः प्रभविष्णुतायाम्" ॥ देशभं देश-नामर्क्षम् । नाड़ीनक्षत्राणि । "ईहादेहार्थहानिः स्याज्ज-न्मर्क्षे उपतापिते । कर्मर्क्षे कर्मणां हानिः पीड़ामनसि मानसे ॥ मूर्त्तिद्रविणबन्धूनां हानिः सांघातिके तथा । संतप्ते

सामुदयिके मित्रभृत्यार्थसंक्षयः ॥ वैनाशिके विनाशः स्यात् देहद्रविणसम्पदाम्" ॥ नाडीनक्षत्रफलम् । "जातिभे कुलनाशः स्याद्बन्धनञ्चाभिषेकभे । देशभे देशभङ्गः स्यात् क्रूरैरेवं शुभैः शुभम् ॥ यस्मिन् राजाभिषिक्तो भवति तदाभिषेचनिकभम् । अ इ उ ए कृत्तिका ओ व वि वु रोहिणीत्यादिदेशभम् ॥ सर्वेषां पीड़ायां दिनमेवमुपोषितोऽनलं जुहुयात् सावित्र्या क्षीरतरोः समिद्भिरमरद्विजानुरतः" ॥

अथ ग्रहणम् । "भत्रिपादान्तरे राहोः केतोर्वा संस्थितो रविः । चतुष्पादान्तरे चन्द्रस्तदा सम्भाव्यते ग्रहः ॥ यस्मिन् ऋक्षे रविस्तस्माच्चतुर्दशगतः शशी । पूर्णिमा प्रतिपत्सन्धौ राहुणा ग्रस्यते शशी" ॥ तस्मात्तमारभ्य परतो वा । "कृष्णपक्षे तृतीयायां मासर्क्षं यदि जायते । ततस्त्रयोदशे सूर्य्यं राहुणा ग्रस्यते रविः" ॥ मासर्क्षं वैशाखज्येष्ठादौ विशाखाज्येष्ठादि एतदपि भत्रिपादान्तरे सति राहोः पादभोगश्च मासद्वयेन । "रविभौमनवांशे च निरभ्रं ग्रासमादिशेत् । बुधसौरिनवांशे च मलिनं क्षुद्रवर्षणम् ॥ गुरोरंशकमासाद्य दृश्यते सवलाहकः । शनिशुक्रनवांशे च प्रावृट् काले महज्जलम् ॥ अन्यत्राव्यक्तभूतौ तौ दृश्येते छादिताम्बरौ" ॥ तौ चन्द्रार्कौ । कृत्यचिन्तामणौ वराहः "श्वेते क्षेमसुभिक्षं ब्राह्मणपड़ाञ्च निर्दिशेद्राहौ । अग्निभयमनलवर्णे पीड़ा हुताशवृत्तीनाम् ॥ हरिते रोगोऽसुताप: शस्यानामीरितो ध्वंसः । कपिले शीघ्रगसत्त्वम्लेच्छध्वंसोऽथ दुर्भिक्षम् ॥ अरुणकिरणानुरूपे दुर्भिक्षं दृष्टयो विहगपीड़ा च । धूम्राभे क्षेमसुभिक्षमादिशेन्मन्दवृष्टिञ्च । कापोतारुणकपिले श्यामाभे च क्षुद्भयं विनिर्दिशेत्" ॥ कापोतः शूद्राणां व्याधिकरः कृष्णवर्णश्च । "विमलकमलपीताभो भवेद्वैश्यद्वेषी सुभिक्षाय । सार्चिस्स-

त्यग्निभयं गैरिकरूपे च युद्धानि ॥ दूर्वाकाण्डश्यामे हारिद्रे च विनिर्दिशेत् मरकम्। अग्निभयसम्प्रदायी पाटलकुसुमोपमो राहुः" ॥ राजमार्त्तण्डे। "सप्ताष्टजन्मशेषाङ्कचतुर्थं दशमे विधौ। त्रिजन्मनि विनिधने न कुर्य्याद्राहुदर्शनम् ॥ दृष्टस्तु जनयेद्भीतिं क्लेशं रोगं धनक्षयम्। देवात्तत्र विधुं दृष्ट्वा दद्यात् स्वर्णं द्विजातये" ॥ ग्रहणग्रहपरिपीड़ितनाड़ीनक्षत्र-दोषोपशमनाय। "सह शतपुष्पैः स्नायात् फलिनी फल-चन्दनोशीरैः"। शतपुष्पा शोलुफा इति ख्याता फलिनी प्रियङ्गुः फलं जातीफलम् उशीरम् वीरणमूलम्। "ताम्रपात्रं तिलैः पूर्णं पूर्णं वा गव्यसर्पिषा। भास्करग्रहणे दद्यात् नाड़ी-दोषोपशान्तये ॥ घृतकुम्भोपरिनिहितं शङ्खं नवनीतपूरितं दद्यात्। नाड्यादिदोषशान्त्यै द्विजाय दोषाकरग्रहणे ॥ यस्य राशौ ग्रहाः पञ्चाथवा सप्त नराधिप। ग्रहणं चन्द्र-सूर्य्यस्य ग्रहेवाष्टमसंस्थिते ॥ वलिदानं प्रकर्त्तव्यं मातॄणां पूजनं हितम्। सूर्य्यस्याभ्यर्चनं कार्य्यं शिवस्याशुभनाशनम्" ॥ वराहसंहितायां "ग्रस्तावुदितास्तमितौ शारदधान्यावनीश्वर-क्षयदौ। सर्वग्रस्तौ च दुर्भिक्षमरकदौ पापसंदृष्टौ। मुक्ते सप्ताहान्तः पांशुनिपातोऽर्थसंक्षयं कुरुते। नीहारो रोगभयं भूकम्पः प्रचुरनृपमृत्युम्। उल्कामन्त्रिविनाशं नानावर्णा-घनाशभयमतुलम्। स्तनितं गर्भविनाशं विद्युन्नृपदंष्ट्रिपरि-पीड़ाम्। परिवेशोरुक्पीड़ां दिग्दाहो नृपभयञ्च साग्नि-भयम्। रुक्षो वायुः प्रवलश्चौरसमुत्थं भयं धत्ते। निर्घातः सुरचापो दण्डश्च क्षुद्भयं स्वपरचक्रम्। ग्रहयुद्धे नृपयुद्धं केतुश्च तथैव निर्दिष्टः। अविकृतसलिलनिपातैः सप्ताहान्तः सुभि-क्षमादेश्यम्। यच्चाशुभं ग्रहणजं तत् सर्वं नाशमुपयाति। राशौ यत्र विधुन्तुदेन तरणिश्चन्द्रोऽथवा ग्रस्यते तस्मादद्भुता-

शशङ्कर रसाः कल्याणदा राशयः। मध्यस्था रविशायकाङ्क-
दशमाः सामान्यभोगप्रदा युग्माग्नी तुरगाष्टमः खलुः नृणां
यच्छन्ति नेष्टं फलम्। क्रूरग्रहे नाशितमन्वितञ्च भोक्तव्य-
मुत्पातनिपीड़ितञ्च। ऋच्चं तथोपग्रहदूषितञ्च विवर्जयेदुद्व-
हनादिकार्य्ये"। उपग्रहो वच्यते सर्व्वतो भद्रे। "विवाहे
विधवात्वञ्च गमनेन निवर्त्तनम्। कृषिश्च निष्फला ज्ञेया
वापितं न प्ररोहति। यत् किञ्चित् कुरुते कर्म्म तत् सर्व्वं
निष्फलं भवेत्। केचिदाहुर्ग्रहस्तिष्ठेत् यस्मिन् पादे शुभप्रदः।
सपादः पीड्यते शेषाः पादास्तु शुभलक्षणाः। शिवभुजगमित्र-
पितृवसुजलविश्वविरिञ्चिपङ्कजप्रभवाः। इन्द्राग्नीन्द्रनिशाच-
रवरुणार्य्यमयोनयश्चाह्नि। ६। ८। १७। १०। २३। २०। २१।
०। ४। १८। १६। १९। २४। १२। ११। रुद्रोऽजोऽहि-
र्ब्रध्नः पूषा स्वान्तकाग्निधातारः। इन्द्वदितिगुरुहरिरविल्वष्टृ-
निलाख्याः क्षणा रात्रौ। ६। २५। २६। २७। १। २। ३।
४। ५। ७। ८। २२। १३। १४। १५। अङ्कः पञ्चदशांशो-
रात्रेश्चैवं मुहूर्त्त इति संज्ञा। नक्षत्रे यद्विहितं तत् कार्य्यं
तन्मुहूर्त्तेऽपि। ववबालवकौलवतैतिलगरवणिजाः सविष्टयः
सप्त। शकुनि चतुष्पन्नागाः किन्तु घ्नश्च ध्रुवाणि करणानि।
शुक्लादितिथिशेषार्द्धात् पञ्चमे तत्तुरीयके। आद्यन्तार्द्धात्
क्रमेण स्युरष्टावृत्त्या ववादयः। एकादश्याश्चतुर्थ्याश्च शेषार्द्धे
शुक्लपक्षके। अष्टमी पौर्णमास्योश्च पूर्व्वार्द्धे विष्टिरीरिता।
कृष्णपक्षे तृतीयाया दशम्याश्च परार्द्धतः। सप्तम्याश्च चतुर्द्दश्याः
पूर्व्वार्द्धे विष्टिसम्भवः। विहाय विपरीतार्द्धाणि विष्टिं सर्व्वत्र वर्ज-
येत्। विष्टिशेषे त्रिदण्डे हि पुच्छे कार्य्यं जयावहम्"।
कर्म्मप्रकाशे। "नाद्यस्तु पञ्चवदनं गलकस्तथैकावक्षो दशैक-
सहिता नियतं चतस्रः। नाभिः कटिः षड़थ पुच्छलता च

तिस्रो विष्टेर्भुवं निगदितोऽङ्ग विभाग एषः। मुखे कार्यध्वस्तिर्भवति मरणञ्चाथ गलके धनञ्चानिर्वक्षस्यथ कटितटे बुद्धिविलयः। कलिर्नाभौदेशे विजयमथ पुच्छे च जगदुःशरीरं भद्रायाः पृथगिति फलं पूर्वमुनयः। मनुवसुमुनितिथि युगदशशिवगुणा संख्यासु तिथिषु"। १४। ८। ७। १५। ४। १०। ११। ३। पूर्वाग्नया। "आयाति विष्टिरेषा पृष्ठे शुभदा पुरस्त्वशुभदा"। पूर्वाग्नया पूर्वाग्नयादि दिङ्मुखी भवतीत्यर्थः। "एकेन हीना द्विगुणा तिथिस्तु सप्तावशिष्टं करणं ववादि। पूर्वेपरेऽप्येवमयं विशेषो द्विसंगुणा चन्द्रविवर्जिता च। किन्तु घ्नसंज्ञं करणं प्रदिष्टमादेस्तिथेरादिदले सदैव। उपान्त्यशेषे शकुनिस्तु दर्शे पूर्वे चतुष्पादपरे च नागः"। करणकथनम्। "इन्द्रकमलजमित्रार्य्यमभूश्रियः सयमाववादेः। कलिवृषफणिमारुता पतयः शकुन्यादेः"। ववाद्यधिपकथनम् "पौष्टिकस्थिर शुभानि ववाख्ये बालवे द्विज हिताद्यपि कर्मकौलवे प्रमदमित्रविधानं तैतिले शुभगताश्रयकर्म। गरे च वीजाश्रयकर्षणानि वणिज्यपि स्थैर्य्यवणिक्क्रिया च। न सिद्धिमाप्नोति कृतञ्च विष्ट्यां विषाभिघातादिषु तत्र सिद्धिः। मन्त्रौषधानि शकुनौ च सपौष्टिकानि गोवि प्रराज्यपितृकर्मचतुष्पदे तु। सौभाग्यदारुणकृति ध्रुवकर्मनागे किन्तुघ्नमाह्नि शुभपौष्टिकमङ्गलानि। विष्कुम्भः प्रीतिरायुष्मान् सौभाग्यः शोभनस्तथा। अतिगण्डः सुकर्मा च धृतिः शूलस्तथैव च। गण्डो वृद्धिर्ध्रुवश्चैव व्याघातो हर्षणस्तथा। वज्रासृक् व्यतीपातो वरीयान् परिघः शिवः सिद्धः साध्यः शुभः शुक्रो ब्रह्मेन्द्रा वैधृतिस्तथा। परिघस्य त्यजेदर्द्धं शुभकर्म ततः परम्। त्यजदौ पञ्च विष्कुम्भे सप्त शूले च नाड़िकाः। गण्डव्याघातयोः षट् च नवहर्षण वज्रयोः वैधृति व्यतिपातौ च समस्तौ परिवर्ज-

येत् । शेषा यथार्थनामानो योगाः कार्य्येषु शोभनाः । न सकलगुणसम्पन्नमप्यतेऽल्पैरप्योभिर्बहुतरगुणयुक्तं योजयेन्मङ्गलेषु । प्रभवति हि न दोषो भूरिभावे गुणानां सलिललव इवाग्नेः संप्रदीप्तेन्धनस्य । गुणशतमपि दोषः कश्चिदेकोऽतिवृद्धः क्षपयति यदि नान्यस्तद्विरोधी गुणोऽस्ति । घटमिव परिपूर्णं पञ्चगव्येन सद्यो मलिनयति सुराया विन्दुरेकोऽपि सर्वम्" ।

अथ नाम्ना नक्षत्रज्ञानार्थं शतपदचक्रमाह । "चक्रं शतपदं वक्ष्ये ऋक्षांशाक्षरसम्भवम् । नामादि वर्णतो ज्ञेया ऋक्षराश्यंशकास्तथा । तिर्य्यगूर्द्ध्वगता रेखा रुद्रसंख्या लिखेद्बुधः । जायते कोष्ठकानाञ्च शतकं १०० नात्र संशयः । अ व क ह ड़ा ऐशान्यां म ट प र ता हरिति चाग्नेय्यां न य भ ज खा नैरृत्यां ग स द च ला वायव्याम् । पञ्च पञ्च क्रमेणैव विंशवर्णान् प्रयोजयेत् । पञ्चस्वरसमा योगे एकैकं पञ्चधा कुरु । अवर्णाद्यास्त्रयो ज्ञेयाः सन्ध्यक्षर युता स्तथा । सजातीयैक्यमाश्राय पञ्चस्वरविनिर्णयः । ऋद्लृतोरप्यकारेण शेनसस्य परिग्रहः । कुर्य्यात् कुपुभुदुस्थाने त्रीणि त्रीण्यक्षराणि च । कुघङछा भवेत् स्तम्भे रौद्रे त्वीशानगोचरे । पुषणठा भवेत् स्तम्भे हस्ते चाग्नेय संज्ञके । भुधफ भवेत् स्तम्भे पूर्वाषाढे च नैरृते । दुथझञा भवेत् स्तम्भे वायव्ये भाद्र उत्तरे । एवं स्तम्भचतुष्कञ्च ज्ञातव्यं स्वरवेदिभिः । धिष्ण्यानि कृत्तिकादीनि प्रत्येकं चतुरक्षरैः । साभिजिन्त्यंशकास्तत्र शतकं द्वादशाधिकम् । यदृक्षांशककोष्ठस्थः क्रूरः सौम्योऽपि वा ग्रहः । तत्रस्थो वेधयेत् सम्यक् पुंसो नामादिमाक्षरम् । सौम्यैर्विद्धं शुभं ज्ञेयमशुभं पापखेचरैः । मिश्रैर्मिश्रफलं तत्र निर्वेधेन शुभाशुभम् । यद्वाच्यं सर्वतो भद्रे ग्रहोपग्रहवेधतः । शुभाशुभफलं सर्वं तदिहापि विचिन्तयेत् । पञ्चस्वरा अइउए ओकारास्तैर्योगे धिष्ण्यानि

नक्षत्राणि। अत्र चतुर्भिर्वर्णैरेकं नक्षत्रं यथा। अइउए ३। ववि वु। ४। वेवोककि। ५। कुघङछ। ६। केकोहहि। ७। हुहेहोड। ८। डिडुडेडो। ९। ममिमुमे। १०। मोटटिटु। ११। टेटोपपि। १२। पुषणठ। १३। पेपोररि। १४। रुरे-रोत। १५। तितुतेतो। १६। ननिनुने। १७। नोययियु। १८। येयोभभि। १९। भुधफढ। २०। भेभोजजि। २१। जुजेजोख। ०। खिखुखेखो। २२। गगिगुगे। २३। गोश-शिशु। २४। शेषोददि। २५। दुथझञ। २६। देदोचचि। २७। चुचेचोल। १। लिलुलेलो। २। ऋत्वयुक्त अकार-युक्तेन ज्ञेयः। ऌस्वेन दीर्घो ज्ञेयः तालव्यशकारेण दन्त्य सकारो ज्ञेयः। इति शतपदचक्रम्।

अथ चन्द्रताराद्यशुभप्रतीकारः। "कर्म कुर्यात् फलावाप्तेश्चन्द्रादिशोभने बुधः। सुखकाले त्विदं सर्वं नार्त्तः कालमपेक्षते॥ चन्द्रे च शङ्खं लवणञ्च तारे तिथावभद्रे सिततण्डुलांश्च। धान्यञ्च दद्यात् करणर्क्षवारे योगे तिलान् हेम[ ]णिञ्च लग्ने॥ योगस्य हेम करणस्य च धान्यमिन्दोः शङ्खञ्च तण्डुलमणी तिथिवारयोश्च। ताराबलाय लवणान्यथ गाञ्च राशेर्दद्यात् द्विजाय कनकं शुचि नाड़िकायाः"॥ वामनपुराणे। "विष्टयो व्यतीपाताश्च येऽन्ये दुर्नीतिसम्भवाः। ते नाम स्मरणाद्विष्णो-र्नाशं यान्ति महात्मनः॥ लवणैर्युवतिप्रतिमामभिनवसूर्पोदरे समालिख्य। तारादोषोपशमनाय द्विजाय दद्याद्विशुद्धये॥ एकं त्रिपञ्च सप्त द्विजाय दद्यात् पलानि लवणस्य। क्रमशो जन्मनि विपदि प्रत्यरिमरणाख्यतारासु। पलन्तु लौकिकैर्मानैः साष्टरक्तिद्विमाषकम्॥ तोलकात्रयतयं ज्ञेयं ज्योतिज्ञैः स्मृतिसम्मतम्। विपत्तारे गुड़ं दद्यात् शाकं दद्यात्त्रिजन्मनि॥ प्रत्यरौ लवणं दद्यात् निधने तिलकाञ्चनम्"॥ राजमार्त्तण्डे

ग्रहदोषे द्रव्यधारणमाह। "दोषो न स्याद्ग्रहाणामशिशिरकिरणे ताम्रमिन्दौ च शङ्खं पृथ्वीपुत्रे प्रवालं शशधरतनये शातकुम्भं भुजेन। देवाचार्य्ये च मुक्तां मणिरसुरगुरौ सीसकं सूर्य्यसूनौ राहौ सारं गिरीणां कमलजतनये राजपट्टं विभर्त्तुः"। शातकुम्भं सुवर्णम्। राजपट्टं कर्पूराणीति प्रसिद्धम्। गिरीणां सारं लौहं गिरिसारस्तु विज्ञेयो लौहे मलयपर्वते इति त्रिकाण्डशेषात्। "यद्यद्ग्रहस्य यद्द्रव्यं तत्तस्मिन् विषमे स्थिते। दद्यात् सत्कृत्य विप्रेभ्यः स्वयञ्च विभृयात् सदा" ॥ बुद्धिप्रकाशे "त्रिशूलीं चौरिकामूलं गोजिह्वां वृद्धदारकम्। ब्रह्मयष्टीं सिंहपुच्छीं वाद्यालं चन्दनं सितम् ॥ अश्वगन्धं क्रमात् सूर्य्याद्याद्दोषोपशान्तये। ताम्रादीनामभावे तु स्वयञ्च दक्षिणे भुजे" ॥ त्रिशूली विल्वः गोजिह्वा अनन्तमूलं वृद्धदारकं वीरताड़कं सिंहपुच्छी रामवासकः। "श्वेतं वासः सिता धेनुः शङ्खो वा चौरपूरितः। देयो वा रजतश्चन्द्रश्चन्द्रदोषोपशान्तये ॥ सिद्धार्थलोध्ररजनीद्वयमुस्तधान्यं लामज्जकं सफलिनी सवचा च मांसी। स्नानं कुरु ग्रहगणप्रशमाय नित्यं सर्वे रविप्रभृतयः सुमुखो भवन्ति" ॥ लामज्जकं वीरणमूलम्। "संग्रामे सङ्कटे दुर्गे चौरव्याघ्रादिपीड़िते। कान्तारे प्राणसन्देहे विषवह्निजलेषु वा ॥ राजादिभ्यश्च संत्रासे ग्रहरोगादिपीड़िते। स्मृत्वा तं पुरुषं सर्वैरापदा विप्रमुच्यते" ॥ तं नरसिंहम्। "देवब्राह्मणपूजनात् गुरुवचःसम्पादनात् प्रत्यहं साधूनामथ भाषणात् श्रुतिवचः श्रेयःकथाकीर्त्तनात्। होमादध्वरदर्शनात् शुचिमनोभावाज्जपाद्दानतो नो कुर्वन्ति कदाचिदेव पुरुषस्यैवं ग्रहाः पीड़नम्" ॥ गर्गः। "शतमिन्दुस्तयं भौमो द्वात्रिंशद्भृगुनन्दनः। पञ्चपञ्चाशतो जीवः सौरिस्तु सप्तसप्ततिः ॥ तथार्को द्वादशं बुधः षोड़शं परिकीर्त्तितम्। हरन्ति क्रूर-

खचरा ददते च शुभग्रहाः" ॥ पञ्चाशतः पञ्चसार्द्धशतद्वयमिति यावत्। अथ नवानां ग्रहाणां दानानि। "सूर्य्ये धेनुश्च ताम्रञ्च गोधूमं रक्तचन्दनम्। चन्द्रे चन्दनशङ्खौ च वस्त्रञ्च तिलतण्डुलान् ॥ कुजे वृषः प्रदातव्यो रक्तवस्त्रं गुड़ौदनम्। बुधे कर्पूरमुद्गञ्च हरिद्वस्त्रं हिरण्यकम् ॥ पीतवस्त्रद्वयं जीवे हरिद्राकनकानि च। अश्वः शुक्रे सितो देयः शुक्लधान्यानि यानि च ॥ शनौ च सतिला देया कृष्णा गौर्लौहमुत्तमम्। राहौ च महिषीच्छागौ माषाश्च तिलसर्षपाः ॥ अजामेषौ च दातव्यौ केतौ चान्नञ्च मिश्रितम्। स्वर्णं गोविप्रपूजाभिः सर्व्वेषां शान्तिरुत्तमा" ॥

तिथ्यादीनां क्रमेण बलवत्त्वं यथा "तिथिदिनकरणर्क्ष-लग्नवीर्य्यं प्रति रयमाह पराशरः क्रमेण"। रयोवेगः। "तिथि-रेकगुणा प्रोक्ता वारश्चैव चतुर्गुणः। ऋक्षं स्यात् षोड़शगुणं योगश्चैव शताधिकः ॥ सहस्रेणाधिकः सूर्य्यश्चन्द्रो लक्षगुणा-धिकः। वर्जयित्वा बलं सर्वं तस्माच्चन्द्रबलं बलम् ॥ लग्न-मात्मा चन्द्रमाश्च मनःकर्म्मफलं प्रति। तस्माल्लग्नाच्छशाङ्काच्च नराणां फलमादिशेत्" ॥ ब्रह्मसिद्धान्ते। "तिथिरेकगुणा प्रोक्ता नक्षत्रञ्च चतुर्गुणम्। करणं षड्गुणं प्रोक्तं वारश्चाष्टगुणः स्मृतः" ॥ एवञ्चाशुभचन्द्रादौ प्रतीकारविधानात् प्रभवति हि न दोषो भूरिभावे गुणानामित्याद्यभिधानात् अष्टवर्गप्रकरणे कष्टाभीष्टे तुल्यसंख्ये फले चेत् स्यातां नाशफलयोस्तत्र वाच्यः। "वाच्या पङ्क्तिर्योऽतिरिक्तस्तयोः स्यात् सर्वस्थाने कल्पनैवं प्रदिष्टा" इति वादरायणवचनात् पङ्क्तिः परीपाकः। ये ग्रहारिष्टसूचका इत्यभिधानाच्च राजमार्त्तण्डे। "चन्द्रान्त्रि-धनगाः पापाल्लग्नाद्दा निधनोपगाः। कर्त्तुश्च फलनाशः स्याद्भग्नभाण्डे पयो यथा ॥ इन्दुरष्टमगान् पापान् वर्जयेन्निधनं

विलग्नश्च चन्द्रश्च निधनसंस्थं सर्वारम्भप्रयोगेषु" इत्यादि-ज्योतिःशास्त्रोक्तनिषेधस्य न पर्य्युदासता ततोऽष्टमचन्द्रादौ तत् प्रतीकारकरजतदानादिपूर्वकं नवान्नश्राद्धादिकरणे तन्निष्पत्ति-र्भवति न तु रात्र्यादौ श्राद्धकरणे श्राद्धानिष्पत्तिरिव कर्म्मा-निष्पत्तिरिति। किन्तु यदि प्रतीकारपूर्वकं करोति न दोष-जनकम् अन्यथा अनिष्टजनकमिति अतएव ग्रहाणां सूचकत्वेन पूर्वसिद्धत्वात् पूर्वमपि प्रतीकाराय प्रायश्चित्तानुष्ठानमिति। तथोक्तं भगवत्या रुक्मिण्या भविष्यद्विवाहे श्रीभागवते। "चक्रुः सामर्ग्यजुर्मन्त्रैर्वध्वा रक्षां द्विजोत्तमाः। पुरोहितोऽथर्वविद्वै जुहाव ग्रहशान्तये॥ हिरण्यरूप्यवासांसि तिलांश्च गुड़-मिश्रितान्। प्रादाद्धेनूश्च विप्रेभ्यो राजा विधिविदां वरः"॥

"शनिचक्रं नराकारं लिखित्वा सौरिभादितः। नाम ऋक्षं भवेद्यत्र फलं तत्र शुभाशुभम्॥ एकं मुखे द्वयहस्ते चत्वारि षट् पदद्वये। हृदि पञ्च करे वामे चत्वारि मस्तके त्रयम्॥ द्वयं नेत्रद्वये गुह्ये द्वयं तत्र न्यसेद्बुधः। मुखे हानि-र्जयो दक्षे भ्रमः पादे श्रियो हृदि॥ वामे भीर्मस्तके राज्यं नेत्रे सौख्यं मृतिर्गुदे। तास्माष्टद्वादशे ऋक्षे यदा विघ्नकरः शनिः॥ तदा सौख्यं वपुस्थन्तु हृत्शीर्षे नेत्रहस्तयोः। तृती-यैकादशे षष्ठे यदा सौख्यकरः शनिः॥ तदा विघ्नः शरीरस्थो गुह्ये वक्त्रेऽङ्घ्रिवामयोः। यस्य पीड़ाकरः सौरिस्तस्य चक्रे फलन्त्विदम्। लिखित्वा कृष्णद्रव्येण तैलमध्ये क्षिपे-त्ततः॥ निक्षिप्य भूमिमध्यस्थं कृष्णपुष्पैः प्रपूजयेत्। तुष्टिं याति न सन्देहः पीड़ां त्यक्त्वा शनैश्चरः"॥

अथ प्रकीर्णकम्। "गुरोर्युगोरस्तबाल्ये वार्द्धके सिंहगे गुरौ। गुर्वादित्ये दशाहे तु वक्रे जीवाष्टविंशके॥ पूर्वराशा-वनायातातिचारिगुरुवत्सरे। प्राग्राशिगन्तृजीवस्य चातिचार-

त्रिपक्षके ॥ कम्पाद्यद्भुतसप्ताहे नीचस्थज्ये मलिम्लुचे । भानुर्लाङ्घितके मासि क्षये राहुयुते गुरौ ॥ पौषादिकचतुर्मासे चरणाङ्कितवर्षणे । एकेनाह्ना चैकदिने द्वितीयेन दिनत्रये ॥ तृतीये तु सप्ताहे माङ्गल्यानि जिजीविषुः । विद्यारम्भकर्णवेधौ चूड़ोपनयनोद्वहान् ॥ तीर्थस्नानमनाद्युक्तं तथानादिसुरेक्षणम् । परीक्षा रामयज्ञांश्च पुरश्चरणदीक्षणे ॥ व्रतारम्भप्रतिष्ठे च गृहारम्भप्रवेशने । प्रतिष्ठारम्भणे देवकूपादेः परिवर्जयेत् ॥ द्वात्रिंशद्दिवसाश्चास्ते जीवस्य भार्गवस्य च । द्वासप्ततिर्महत्यस्ते पादास्ते द्वादशक्रमात् ॥ अस्तात् प्राक् परयोः पक्षं गुरोर्वार्द्धकबालते । पक्षं वृद्धो महास्ते तु भृगुर्बालो दशाह्निकः ॥ पादास्ते तु दशाहानि वृद्धो बालो दिनत्रयम्" ॥ अत्यन्ताशक्तौ राजमार्त्तण्डे । "बाले वृद्धे च सन्ध्यांशे चतुःपञ्च त्रिवासरान् । जीवे च भार्गवे चैव विवाहादिषु वर्जयेत् ॥ बालभृगौ परिणीता युवतिरसाध्वी भवेदवश्यम् । वृद्धे तस्मिन् वन्ध्या सन्ध्यास्ते मृत्युमभ्येति ॥ एकराशौ गतौ स्यातामेकर्क्षविषयौ यदि । गुर्वादित्यौ तदा त्याज्या यज्ञोद्वाहादिकाः क्रियाः" ॥ गुर्वादित्ये दशाहे त्विति प्रागुक्तं नक्षत्रभेदविषयम् । रविग्रहयोरंशकविशेषाभ्यन्तरस्थित्या अस्तत्वमाह सूर्य्यसिद्धान्तः । "एकादशामरेज्यस्य तिथिसंख्यार्कजस्य च । अस्तांशा भूमिपुत्रस्य दशसप्ताधिकास्तथा ॥ चन्द्रो द्वादशभिः पश्चात् दृश्यः प्राग्यात्यदृश्यताम् । पश्चादस्तमयोऽष्टाभिरुदयः प्राङ्महत्तया ॥ प्रागस्ते तूदयः पश्चात् स्वल्पत्वात् दशभिर्भृगोः । एवं बुधे द्वादशभिश्चतुर्दशभिरंशकैः ॥ वक्रशीघ्रगतिश्चार्कात् करोत्यस्तमयोदयौ" ॥ क्वचित् प्रतिपच्छेषेऽपि चन्द्रदर्शनम् । "अनभ्रायाश्च शरदि हेमन्तेऽप्यतुषारिणि । रवेः सार्द्धदशांशेऽपि दृश्यतामेति चन्द्रमाः" ॥ शतानन्दः । "माघ्यां यदि मघा

मास्ति सिंहे गुरुरकारणम्" ॥ अत्रैव माण्डव्यः । "श्रुति-वेधजातकान्नप्राशनचूड़ादिकः सर्वः । रविभवनस्थे जीवे कार्य्योवर्ज्यो विवाहस्तु" ॥ रविभवनस्थे सिंहस्थे विवाहे विशेषो वक्ष्यते । भोजराजः । "एकरात्रं परित्यज्य कुर्य्यात् पाणिग्रहं ग्रहे । प्रयाणे सप्तरात्रन्तु त्रिरात्रं व्रतबन्धने ॥ अनिष्टे त्रिविधोत्पाते सिंहिकासूनुदर्शने । सप्तरात्रं न कुर्वीत यात्रोद्वाहादिमङ्गलम्" ॥ व्रतबन्धने उपनयने । भृगुः । "कम्पे राजनि सप्ताहो ब्राह्मणानां त्र्यहस्तथा । शूद्रस्यार्द्धदिनं प्रोक्तं सर्वकार्य्येषु वै भृगुः" ॥ गर्गः । "दिग्दाहे दिनमेकन्तु ग्रहे सप्तदिनानि च । भूकम्पे च समुद्भूते त्र्यहाणि परिवर्जयेत् ॥ उल्कापाते च त्रितयं धूमे पञ्चदिनानि च । वज्रपाते दिनमेकं वर्जयेत् सर्वकर्मसु" ॥ भोजराजः । "ग्रहे रविन्दोरवनिप्रकम्पे केतूद्गमोल्कापातनादिदोषे । व्रते दशाहानि वदन्ति तज्ज्ञास्त्रयोदशाहानि वदन्ति केचित्" ॥ ग्रहणकाले भूकम्पोल्कापातकरकापातवज्रपातादिसमाहारे त्रयोदशाहमशुभम् । किञ्चिदूनतत्समाहारे दशाहम् एकैकोदये त्र्यहमिति मिश्राः । काश्यपः । उल्कालक्षणम् । "बृहच्छिखा च सूक्ष्माग्रा रक्तनीलशिखोज्ज्वला । पौरुषी च प्रमाणेन उल्का नानाविधा मता" ॥

अथ निर्घातः । गर्गः । "यदान्तरीक्षे बलवान् मारुतो मरुताहतः । पतत्यधः स निर्घातो जायते वायुसम्भवः" ॥

अथ केतुः । "केतवश्च शिखावन्ति ज्योतींषि स्थिरतराण्युत्पातरूपाणि" । दीपिकायां "गुर्व्वादित्ये गुरौ सिंहे नष्टे शुक्रे मलिम्लुचे ॥ याम्यायने हरौ सुप्ते सर्वकर्म्माणि वर्जयेत्"॥ प्रतिप्रसवे न्यूनाधिकादिविरोधे राजमार्त्तण्डः । "उक्तानि प्रतिषिद्धानि पुनः सम्भावितानि च । सापेक्षनिरपेक्षाणि मीमांस्यानीह कोविदैः" ॥

अथाकालवृष्टिः। कृत्यचिन्तामणौ। "मार्गोमासात् प्रभृतिमुनयो व्यासवाल्मीकिगर्गास्त्वैत्रं यावत् प्रवर्षणविधौ नेति कालं वदन्ति। नाड़ीजङ्घः सुरगुरुमुनिर्वक्ति वृष्टेरकाले मासावेतौ न शुभफलदौ पौषमाघौ न शेषाः"॥ स्मृतिसारे ज्योतिषम्। "एकराशिस्थितौ स्यातां यदि राहुवृहस्पती। विवाहव्रतयज्ञादि तदा सर्वत्र वर्जयेत्"॥ भीमपराक्रमे। "वापीकूपतड़ागादिर्निषिद्ध सिंहगे गुरौ। मकरस्थे तु तत्-कार्य्यः न दोषः काललोपजः॥ कार्य्यं मकरगे जीवे विवाहाद्यखिलं बुधै। न तु सिंहगते जीवे कुर्वाणो मृत्युमाप्नुयात्"॥ मुहूर्त्तामृते। "अतिबलवान्न हि चन्द्रोऽनिष्टफलः कृष्ण-पक्षमोपरतः। अतिविषमगतापि तारा सितपक्षे नाशुभं कुरुते॥ ग्रहेण विद्धोऽप्यशुभान्वितोऽपि विरुद्धतारोऽपि विलो-मगोऽपि। करोति पुंसां सकलार्थसिद्धिं विहाय पाणिग्रहणं हि पुष्यः॥ पुष्यः परकृतं हन्ति न च पुष्यकृतं परः। अपि द्वादशगे चन्द्रे पुष्यः सर्वार्थसाधकः॥ ध्रुवममृतकरेऽष्टमेऽपि पुष्यो विहितमुपयाति सदैव कर्म्मसिद्धिम्"॥ वशिष्ठः। "क्षीणोऽपि यस्येह शुभक्रियासु क्रूरो विलग्ने मदनेऽथवा स्यात्। आसन्नमृत्युं तमुदीरयन्ति सन्तोऽथवा मृत्युगृहं प्रपन्नः॥ लग्नदोषाश्च ये केचित् ग्रहदोषास्तथापरे। ते सर्वे विलयं यान्ति लग्ने गुरुभृगू यदा"॥ श्रीपतिव्यवहारनिर्णये। "विष्टावङ्गारके चैव व्यतीपाते शनैश्चरे। निधने जन्मनक्षत्रे मध्याह्नात् परतः शुभम्"॥ तथा "रेवती रविवारेण हस्ता सोमेन संयुता। पुष्योऽप्यवनिपुत्रेण रोहिणी बुधसंयुता॥ स्वाती च गुरुणायुक्ता शुक्रेणोत्तरफल्गुनी। मूलन्तु पङ्गुमङ्गेन सर्वकार्य्येषु शस्यते"॥ भीमपराक्रमे। "अश्विनी सह सूर्य्येण सोमे मृगशिरास्तथा। अश्लेषा भौमवारेण बुधे हस्तः प्रको-

र्त्तितः॥ अनुराधा गुरोर्वारे विश्वदेवस्तु भार्गवे। वारुणं शनिसंयुक्तमानन्दोऽयं प्रकीर्त्तितः"॥ दीपिकायाम्। भूमिपुत्रार्कयोरश्विन्यामरुद्रावणाद्रांख्यचित्राहिमूलाग्निभिः। भार्गवैणाङ्कयोरश्वि भद्रा भवेत् फल्गुयुग्माजयुग्मोडुसंयुता। सोमपुत्रस्य वारे जया स्यान्मृगोपेन्द्रगुर्विन्द्रयाम्याभिजिद्वाजिभिः। गोष्पतेरश्वि रिक्ता च युक्ता यदा विश्वशक्राग्नियुक् पित्रादित्यम्बुभिः। सूर्य्यसुतस्य दिने यदि पूर्णा ब्रह्मदिनाधिपतिद्रविणैः स्यात् योगवरास्त्रिभिरेव समेताः सर्वसमीहितसिद्धिनियुक्ताः। त्वाम्तम्। "ध्रुवगुरुकरमूला पौष्णभान्यर्कवारे हरियुगविधियुग्मे फल्गुनौ भाद्रयुग्मे दिवसकरतुरङ्गौ शर्वरीनाथवारे। गुरुयुगनलवातीपान्त्यपौष्णानि कौजे दहनविधिशताख्या मैत्रभं सौम्यवारे। मरुदद्दितिभपुष्यामैत्रभं जीववारे भगयुग जयुगश्वोविष्णुमैत्रे सिताह्ने श्वसनकमलयोनी सौरिवारेऽमृतानि"।

अमृतम्। राजमार्त्तण्डे। "चन्द्रार्कयोर्भवेत् पूर्णा कुजे भद्रा गुरौ जया। बुधमन्दौ च नन्दायां शुक्रे रिक्तामृतातिथिः। आदित्यहस्ता गुरुपुष्ययुक्ता बुधानुराधा शनिरोहिणी च। सोमे च विष्णुः कुजरेवती च शुक्राश्विनी चामृतयोगवर्गाः। यदि विष्टिव्यतीपातौ दिनं वाप्यशुभं भवेत्। हन्यतेऽमृतयोगेन भास्करेण तमो यथा"। कस्य मते वैधृत्यादियोगहननेऽमृतयोगस्य न सामर्थ्यम्। तथा राजमार्त्तण्डः। "हन्त्यमृताख्यो योगः सर्वाण्यशुभानि हेलया नियतम्। न भवति पुनरिह शक्तो वैधृति विष्टिव्यतीपाते। वाराः क्रूरास्तिथिर्भद्रापादैकखण्डितञ्च भम्। एतत्त्रयसमायोगे त्रिपुष्करमुदाहृतम्। त्रिपुष्करे तु यत् किञ्चित् शुभं वा यदि वाशुभम्। जायते त्रिगुणं सर्वं प्राणीजातस्तु जारजः। लाभोहानिर्जयो

वृद्धि: पुत्रजन्म तथैव च। नष्टं दत्तं मृतं वापि तत् सर्वं त्रिगुणायते। सर्वदेशाविशेषेण फलं स्यात् शुभयोगजम्। अमृतं सिद्धियोगश्च यद्येकस्मिन् दिने भवेत्। तद्दिनन्तु भवेद्दुष्टं मधुसर्पिर्यथाविषम्"। वराहः। "दुःस्वप्ननाशको वारो नक्षत्रं पापनाशकम्। तिथिरायुष्करी प्रोक्ता योगो वृद्धिविवर्द्धकः। चन्द्रः करोति सौभाग्यमंशकः। शुभदायकः करणाल्लभते लक्ष्मीं यः शृणोति दिने दिने। आरूढ़ो द्विरदे रथे च तुरगे पाषाणकाष्ठादिके नौकायां तरणे उपानहि कथाशक्ते तथा क्रोधने। उच्छिष्टे दिनरात्रिविशेषसमये नक्षत्रवारादिकं दैवज्ञो न पठेत् पठेद्यदि पुनः श्रोता श्रियं नाप्नुयात्"। आलिङ्ग्ये वर्ज्यमधिकृत्य भविष्ये। "तिथिनक्षत्रयोगानां वाराणाञ्च तथा विभो। सूतको जीविकार्थञ्च यश्च मूल्येन पाठयेत्"। अतएव यमः। नक्षत्रैर्जीव्यते यश्च सोऽन्धकारं प्रपद्यते"। ज्योतिषे। "सर्वत्र कार्य्ये बुधशुक्रजीवाः केन्द्रत्रिकोणोपगताः प्रशस्ताः। तृतीयलाभारि गताश्च पापास्तिथिर्विरिक्ता शुभदस्य चाह्नः"। शतानन्दरत्नमालायाम्। "न वारदोषाः प्रभवन्ति रात्रौ विशेषतो भौमशनैश्चरार्काः। शुभपापग्रहक्षेत्रं केवलं फलदं तथा। ग्रहयुक्तेक्षिते तु स्यात् फलं तदनुसारतः। तारापतिं विलग्नं वा दुरितग्रहमध्यगम्। विवाहादिषु कार्य्येषु त्यजेच्चिरजिजीविषुः। कार्य्यारम्भे विलग्नादष्टममिन्दुं विवर्जयेत्। क्रूरं सपापं पापवर्गस्थं लग्नं चन्द्रञ्च वर्जयेत्। बलनिर्द्धारणा देव सर्वत्र फलनिश्चयः। निरंशं दिवसं विष्टिं व्यतीपातञ्च वैधृतिम्। केन्द्रं वापि शुभैर्हीनं पापाह्नमपि वर्जयेत्। नन्दाद्याः सिद्धियोगा भृगुजबुधकुजार्कीज्यवारैः प्रशस्ताः सूर्य्याशाग्निषड्दृगमुनिमिततिथयोऽर्कादिवारैः प्रदग्धाः"। राजमार्त्तण्डे। "मासारुद्रादिशो रामा षट्पञ्चमुनयस्तथा। दशान्ते

तिथयः सप्त रव्यादि सप्तभिर्ग्रहैः। द्वादश्यर्कयुता भवेदशुभदा सोमेन चैकादशी भौमे चापि युता तथैव दशमी नेष्टा तृतीया बुधे षष्ठी नेष्टफलप्रदा सुरगुरौ शुक्रे द्वितीया तथा सर्वारम्भ-विनाशविघ्नजननी सूर्य्यात्मजे सप्तमी। पापोऽर्काह्वे विशाखात्रययममुडुपस्याह्नि चित्रा चतुष्कं तोयं विश्वाभिजिद्धं त्वथ कुजदिवसे स्वत्रयं विश्वदो याह्वे मूलाविशाखा यमधनतुर-गान्त्यानिजेवेह्नि पित्रं रोहिण्यार्द्रायमेन्दूशतभमथ भृगोरह्नि-पुष्यात्रयेन्दौ सौराह्वे हस्तयुग्मार्य्यमयमजनयुक्पौष्णपुष्याश्व-नानि घण्टोऽखण्डसंयुक्ते खगहपतिदिने सौम्यवारेर्य्यमापि"। सिद्धिदग्धपापयमघण्टयोगा। "रव्यादि दिवसे युक्ता विशा-खादिचतुश्चतुः। उत्पाटाम्रत्यवः काला अस्तनानि यथाक्र-मम्"। उत्पाटादियोगः। "वाजिचित्रोत्तराषाढ़ा मूलपा-शोज्यभान्तकाः। सूर्य्यादिवारसंयुक्ता योगाः करकचाः स्मृताः"। करकचा योगः। "आदित्य भौमयोर्नन्दा भद्रा शुक्रशशाङ्कयोः। बुधे जया गुरौ रिक्ता शनौ पूर्णा च मृत्युदा। यमघण्टे त्यजेदष्टौ मृत्यौ द्वादशनाड़िकाः। अन्येषां पापयो-गानां मध्याह्नात् परतः शुभम्"। यमघण्टादीनां वर्ज्य काल-निर्णयः। राजमार्त्तण्डे "द्वितीया मीनधनुषोश्चतुर्थी वृष-कुम्भयोः। मेषकर्कटयोः षष्ठी कन्यामिथुनकेऽष्टमी। दशमी वृश्चिके सिंहे द्वादशी मकरे तुले। आद्या धनुःसु सफरीषु। परा द्वितीया एकान्तरे दिनकरे तिथयः प्रदग्धाः। कार्मुके च तथा कुम्भे मेषे युग्मे हरी घटे। एषु शुक्लाद्वितीयाद्या दग्धाः कृष्णा झषादिषु। राश्योश्चन्द्रस्य च रवेः स्थित्या वाच्यं फलं बुधैः। याः प्रोक्तास्तिथयो दग्धाः मेषादिषु च राशिषु शुक्लास्ताविषमे राशौ समे कृष्णाः प्रकीर्त्तिताः। एभिर्जातो न जीवेत यदि शक्रसमो भवेत्। विवाहे विधवा नारी यात्रायां

मरणं भवेत् । निष्फलं कृषिवाणिज्यं विद्यारम्भे च मूर्खता । गृहप्रवेशे भङ्गः स्याच्चूडायां मरणं ध्रुवम् । ऋणदाने फलं नास्ति व्रतदाने च निष्फले । शुभकर्माणि सर्वाणि नैव कुर्य्याद्विचक्षणः" ॥ उक्तराशिषु चन्द्रस्थित्या दग्धायां व्यक्तत्वं यथा "षष्ठी मेषकुलीरयोर्हिमकरे कन्यायुगे चाष्टमी सिंहे वृश्चिकराशिगे च दशमी तौ लौ मृगे द्वादशी चापे चाथ झषेऽहिका यदि वृषे कुम्भे चतुर्थी यदा दग्धाख्यास्तिथयो वदन्ति मुनयस्त्याज्या सदा कर्मसु । त्वाष्ट्रं रविमनुराधे वैश्वदेवञ्च सोमे शतभिषमपि भौमे चन्द्रजे चाश्विनी च । मृगशिरमपि जीवे सर्पदेवञ्च शुक्रे रविसुतमपि हस्ते वर्जनीयाश्च सप्त । अयोगेषु च सर्वेषु पूर्वयामं परित्यजेत् । अयोगाश्च विनश्यन्ति चन्द्रशुद्धिहता इमे । करकचामृत्युयोगाश्च दिनं दग्धं तथा परे । शुभे चन्द्रे प्रणश्यन्ति वृक्षा वज्राहता इव" । शुभचन्द्रेण करकचा शान्तिः । श्रीपतिः "विरुद्धसंज्ञास्तिथिवारयोगा नक्षत्रवारप्रभवाश्च ये वै हूनाङ्गवङ्गेषु खशेषु वर्ज्याः शेषेषु देशेषु न ते विरुद्धाः" ॥

अथ सर्वतो भद्रम् । "अथातः संप्रवक्ष्यामि चक्रं त्रैलोक्यदीपनम् । विख्यातं सर्वतोभद्रं सद्यः प्रत्ययकारकम् । ऊर्द्ध्वगा दश विन्यस्य तिर्य्यग्रेखास्तथा दश । एकाशीतिपदं चक्रं जायते नात्र संशयः । अकारादि स्वराः कोष्ठेष्वीशादौ विदिशि क्रमात् । प्रदक्षिणक्रमाज्ज्ञेया ज्योतिःशास्त्रविशारदैः । कृत्तिकादीनि धिष्ण्यानि पूर्वाशादि लिखेत्ततः । सप्त सप्त क्रमेणैव अष्टाविंशतिसंख्यया । अवकहडाः पूर्वस्यां मटपरताश्चेति दक्षिणस्यां नयभजखा वारुण्यां गशदचलाश्चोत्तरस्यां स्युः । वयस्त्रयो वृषाद्यास्तु पूर्वादि क्रमतो बुधैः । राशयो द्वादश स्थाप्या मेषान्ता दक्षमार्गतः । शेषेषु कोष्ठके-

ष्वेवं नन्दादि तिथिपञ्चकम् । वाराणां सप्तकं लेख्यं भौमाद्यं तत्तिथिक्रमात् । इत्येष सर्वतोभद्र प्रस्तावः कथितो मया । यस्मिन्नृक्षे स्थितः खेटस्ततो वेधत्रयं भवेत् । अ दृष्टिवशेनात्र वामदक्षिणसंमुखे ॥ भुक्तं भोग्यं तथाक्रान्तं विद्धं क्रूरग्रहेण भम् । शुभाशुभेषु कार्य्येषु वर्जनीयं प्रयत्नतः ॥ वक्रगे दक्षिणादृष्टिर्वामा-दृष्टिश्च शीघ्रगे । संमुखी मध्यचारे च ज्ञेया भौमादिपञ्चके ॥ सूर्य्यमुक्ता ग्रहाः शीघ्रास्तथा चार्के द्वितीयगे । समास्तृतीयगे ज्ञेया मन्दा भानौ चतुर्थगे ॥ वक्रा स्युः पञ्च षष्ठेऽर्के त्वतिवक्रा नगाष्टगे । नवमे दशमे भानौ जायते सहजा गतिः ॥ द्वाद-शैकादशे सूर्य्ये लभन्ते शीघ्रतां पुनः ॥ रविस्थित्यंशकस्त्रिंशा बधैः संख्यात्र कल्प्यते । न तु राश्यन्तरस्पर्शात् द्वितीयादिनिरू-पणम् ॥ राहुकेतू सदा वक्रौ शीघ्रगौ चन्द्रभास्करौ । गते-रेकस्वभावत्वादेषां दृष्टित्रयं सदा ॥ क्रूरा वक्रा महाक्रूराः सौम्या वक्रा महाशुभाः । स्युः सहजस्वभावस्थाः सौम्या क्रूराश्च शीघ्रगाः ॥ घङछाः षणठाश्चैव धफढाक्षभञास्तथा । एतत्त्रिकं त्रिकं विद्धं विद्धैः कपभदैः क्रमात् ॥ घङछा रौद्रगे वेधे षणठाऽस्तगे ग्रहे । धफढा पूर्वाषाढ़ायां थझञा भाद्र उत्तरे । रवौ शसौ खषौ चैव जयौ णनौ परस्परम् ॥ एकेन हि द्वयं ज्ञेयं शुभाशुभग्रहव्यधे । अवर्णादिस्वरद्वन्द्वे त्वेकवेधात् द्वयो-र्व्यधः ॥ युग्मवर्णात्मके वेधे अनुस्वारविसर्गयोः" ॥ सका-रादियुग्म–वर्णात्मकवेधवदनुस्वार–विसर्गयोरेक–वेधादुभयवेध इत्यर्थः । "कोणस्थ भटक्षयोर्मध्ये अन्त्यादिपादगे ग्रहे । अकारादिचतुष्के तु वेधः पूर्णतिथौ तथा । एकादिक्रूरवेधेन फलं पुंसां प्रजायते ॥ उद्वेगश्च भयं हानिर्व्याधिर्मृत्युः क्रमेण च । ऋक्षे भ्रमोऽचरे हानिः स्वरे व्याधिर्भयं तिथौ ॥ राशौ विद्धे महाविघ्नः पञ्च विद्धो न जीवति । एकवेधे भयं युद्धे

युग्मवेधे धनक्षयः ॥ त्रिवेधे तु भवेद्भङ्गो मृत्युर्वेधे चतुर्ग्रहैः" ॥ दृष्टित्रये उदाहरणमाह "अरण्यकारवृषभं नन्दां भद्रां तुलाश्च भम् । विशाखां हरिभं विध्येद् ग्रह आग्नेयसंस्थितः" ॥ उदाहरणान्तरमाह "वं युग्ममौस्वरं कन्या रेफं स्वातीमुकारकम् । अश्विनीं रोहिणीस्थोऽभिजिङ्गमेवं परेष्वपि ॥ यथा दृष्टफलाः क्रूरास्तथा सौम्याः शुभप्रदाः । क्रूरयुक्तः पुनः सौम्यो ज्ञेयः क्रूरफलप्रदः ॥ अर्कवेधे मनस्तापो द्रव्यहानिश्च भूसुते । रोगपीड़ाकरः सौरी राहुकेतू च विघ्नदौ ॥ चन्द्रे मिश्रफलं पुंसां रतिलाभश्च भार्गवे । बुधवेधे भवेत् प्रज्ञा जीवः सर्वशुभप्रदः ॥ स्वचक्रस्थे बलं पूर्णं पादोनं मित्रगे ग्रहे । अर्द्धं समगृहे प्रोक्तं पादं शत्रुगृहे स्थिते ॥ इदञ्च सौम्य क्रूराणां बलं स्थानवशात् समम् । एतदेव फलं विद्धि सौम्यैः क्रूरैर्विपर्य्ययात् ॥ स्थानवेधसमायोगात् यत् संख्यं जायते बलम् । तत् संख्यं वेध्यवस्तूनां फलं ज्ञेयं शुभाशुभम् ॥ दृष्टिहीने पुनर्वेधे न स्यात् किञ्चित् शुभाशुभम् । ग्रहाः सौम्यास्तथा क्रूराः वक्राः शीघ्रोच्चनीचगाः ॥ स्थानञ्च वैध्यमित्येवं बलं ज्ञात्वा फलं वदेत् । वक्रग्रहे फलं द्विघ्नं त्रिगुणं स्वोच्चसंस्थिते ॥ स्वभावजं फलं शीघ्रे नीचस्थोर्द्धफलो ग्रहः । तिथिराश्यंशनक्षत्रं विद्धं क्रूरग्रहेण यत् ॥ सर्वेषु शुभकार्य्येषु वर्जयेत्तत् प्रयत्नतः । न नन्दति विवाहे च यात्रायां न निवर्त्तते ॥ रोगार्हमुच्यते रोगी वेधवेला कृतोद्यमः । रोगकाले भवेद्वेधः क्रूरखेचरसम्भवः ॥ वक्रगत्या भवेन्मृत्युः शीघ्रे चाप्यरुजान्वितः । वेधस्थाने रणे भङ्गो दुर्गे खड्गिः प्रजायते ॥ कविप्रवेशनं तत्र योधाघातश्च तत्र वै" ॥ कविश्चौरयोद्धा । "यत्र पूर्वादिकाष्ठायां वृषराश्यादिगो रविः । सादिगस्तमिता ज्ञेया शेषास्तिस्रः सदोदिताः ॥ ईशानस्थाः स्वराः प्राच्यां ज्ञेया याम्यामथाग्निगाः । नैरृतस्थाश्च वारुण्यां

वायव्यां सौम्यगा मता: ॥ नक्षत्राणि स्वरा वर्णा राशयस्तिथयो दिश: । ते सर्वेऽस्तमिता ज्ञेया यत्र भानुस्त्रिमासिक: ॥ नक्षत्रेऽस्ते रुजा वर्णे हानि: शोक: स्वरेऽस्तगे । राशौ विघ्नस्तिथौ भीति: पश्चास्ते मरणं भवेत् । यात्रा युद्धं विवादश्च द्वारं प्रासादहर्म्ययो: । न कर्त्तव्यं शुभं चान्यदस्ताशाभिमुखं नरै: । अस्ताशायां स्थितं यस्य नाम्न: प्रथममक्षरम् । स आर्त्त: सर्वकार्य्येषु ज्ञेयो दैवहतो नर: । करौ कोष्ठे तथा द्वन्द्वे चातुरङ्गमहाबले । वर्ज्याश्चास्तं गता योधा यदीच्छेद्विजयं रणे । नक्षत्रेऽभ्युदिते पुष्टिर्वर्णे लाभ: स्वरे सुखम् । राशौ जयस्तिथौ तेज: पदाप्ति: पक्षकोदये । प्रश्नकाले भवेद्विद्धं यल्लग्नं क्रूरखेचरै: । तद्दुष्टं शोभनं सौम्यैर्मिश्रैर्मिश्रफलं भवेत् । ग्रहाविद्धन्तु यल्लग्नं फलं लग्नस्वभावत: । ज्ञातव्यमौचिते केन्द्रे भाषितं यच्चरादिकम् । शीर्षोदये सौम्य विलग्नवर्गे लग्नेऽपि वा सौम्ययुते शुभं स्यात् । अतोऽन्यथा हेतु तदन्यथात्वं मिश्रं विमिश्रैरधिकं बलाढ्यै: । केन्द्रोपगा नवम पञ्चमगाश्च सौम्या: केन्द्राष्टवर्जमशुभस्त्र्याय षष्ठसंस्था: । सर्वार्थसाधनकरा: परिपृच्छतां स्युरेभिर्विपर्य्ययगतैस्तु विपर्य्यय: स्यात् । लग्नाधिनाथो यदि केन्द्रग: स्यात् तन्मित्रमेतस्य च केन्द्रगं वा । व्ययष्टकेन्द्राण्यपहाय पापा अन्यत्र याता यदि तच्छुभं स्यात् । आद्यो लग्नाधिप: कार्य्ये लग्ने कार्य्याधिपो यदि । द्वितीयो लग्नपो लग्ने कार्य्ये कार्य्याधिपो यदि । लग्नप: कार्य्यपश्चापि लग्ने यदि तृतीयक: । चतुर्थ: कार्य्यपो स्यातां यदि लग्नपकार्य्यपौ । कार्य्यसिद्धिस्तदा ज्ञेया मित्रश्चेदधिकं मतम् । एवं दृष्टिवशाज्ज्ञेयं फलं यद्दचतुष्टयम् । पूर्णनाडीस्थितो दूतो यत् पृच्छति शुभाशुभम् । तत् सर्वं सिद्धिमाप्नोति शून्ये शून्यं समीरणे । आदौ शून्यगत: पृच्छेत् पश्चात् पूर्णां विशेद्

यदि । तदा सर्वार्थसिद्धिः स्यात् वामे वामं न संशयः । श्वास-प्रवेशकाले चेद्दूतो जल्पति वाञ्छितम् । तस्यार्थः सिद्धिमाप्नोति निर्गमे नास्ति सुन्दरम् । ऊर्द्ध्ववामाग्रतो दूतो ज्ञेयो वामपथ-स्थितः । पृष्ठे दक्षे तथाधस्ताद्दक्षवाही गतो मतः । यात्रा-दानविवाहेषु वस्त्रालङ्कारभूषणे । शुभे कर्मणि सन्धौ च प्रवेशे वामगः शुभः । कलहद्यूतयुद्धेषु स्नानभोजनमथने । व्यवहारे भये भङ्गे दक्षमाड़ौ प्रशस्यते । क्रूरैरुभयतो विद्धा यस्याक्षरतिथि स्वराः । राशिधिष्ण्यञ्च यस्यापि तस्य मृत्युर्न संशयः । मण्डलं नगरं ग्रामो दुर्गं देवालयं पुरम् । क्रूरै-रुभयतो वेधे विनश्यन्ति न संशयः । कृत्तिकायां तथा पुष्ये रेवत्याञ्च पुनर्वसौ । विद्धे सति क्रमाद्वेधो वर्णेषु ब्राह्मणादिषु । तैलं भाण्डं रसो धान्यं गजाश्वादि चतुष्पदाः । सर्वं महार्घतां याति यावत् क्रूरव्यधे स्थितम् । क्रूरवेधसमायोगे यस्योप-ग्रहसम्भवः । तस्य मृत्युर्न सन्देहो रोगाद्वाथ रणादपि । सूर्य्यभात् पञ्चमं धिष्ण्यं ज्ञेयं विद्युन्मुखाभिधम् । शून्यञ्चाष्टमगं प्रोक्तं सन्नि-पातं चतुर्दशम् । केतुमष्टादशं प्रोक्तमुल्का स्यादेकविंशतिः । द्वाविंशतितमं कम्पं त्रयोविंशञ्च वज्रकम् ॥ निर्घातञ्च चतुर्विंश-मुक्ता अष्टावुपग्रहाः । प्रस्थाने विघ्नदाः प्रोक्ताः सर्वकार्य्येषु सर्वदा ॥ जन्मभं कर्म आधानं विनाशं सामुदायिकम् । सांघा-तिकमिदं धिष्ण्यं षट्कं सार्वजनीनकम् ॥ जातिदेशाभिषे-केषु नव धिष्ण्यानि भूपतेः । वेधं ज्ञात्वा फलं ब्रूहि सौम्यैः क्रूरैः शुभाशुभम् ॥ जन्मभं जन्मनक्षत्रं दशमं कर्मसंज्ञकम् । एकोनविंशमाधानं त्रयोविंशं विनाशकम् ॥ अष्टादशञ्च नक्षत्रं सामुदायिकसंज्ञकम् । सांघातिकञ्च विज्ञेयं धिष्ण्यं षोड़श-मेव हि ॥ षट्त्रिंभं राजजातञ्च जाति नाम्ना स्वजातिभम् । देशभं देशनामर्क्षं राज्यभं चाभिषेकभम् ॥ मृत्युः स्याज्जन्मभे

विद्धे कर्मभे क्लेश एव च। आधानर्क्षे प्रवासः स्यात् विनाशे बन्धुविग्रहः॥ सामुदायिकभेरिष्टं हानि सांघातिके तथा। जातिभे कुलनाशः स्यात् बन्धनञ्चाभिषेकभे॥ देशर्क्षे देशभङ्गः स्यात् क्रूरैरेवं शुभैः शुभम्। उपग्रहसमायोगे मृत्युर्भवति नान्यथा॥ भयं भङ्गश्च घातश्च मृत्युर्भङ्गयुता मृतिः। क्रूरैरेकादिपञ्चान्तैर्युधि वेधे फलं भवेत्॥ तिथिं धिष्ण्यं स्वरं राशिं वलञ्चैव तु पञ्चमम्। यद्दिने वेधयेच्चन्द्रस्तद्दिने स्यात् शुभाशुभम्"॥

अथ बालादिचक्रम्। "ऋवर्णांश्च लृवर्णांश्च त्यक्त्वा कोष्ठेषु पञ्चसु। अकाराद्याः स्वरा लेख्या एकैकस्मिन् द्विकं द्विकम्॥ कादिहान्तान् लिखेद्वर्णान् स्वराधो ङञणोज्झितान्। तिर्य्यक् पङ्क्तिक्रमेणैव पञ्चविंशत् प्रकोष्ठके॥ अकारादिक्रमात् न्यस्य नन्दादितिथिपञ्चकम्। अर्ककुजौ विधुज्ञौ च गुरुः शुक्रः शनिस्तथा॥ वाराः कोष्ठेष्वथो लेख्या अस्वरे सप्तभानि च। पञ्च पञ्च इकारादौ रेवत्यादिक्रमेण च॥ प्रसुप्तो बोध्यते येन येनागच्छति शब्दितः। तस्य नाम्नस्त्वादिवर्णो यत्र तिष्ठेत्स्वरस्य च॥ तस्माद्बालः कुमारश्च युवा वृद्धो मृतः क्रमात्। किञ्चिल्लाभकरो बालः कुमारस्त्वर्द्धलाभदः॥ सर्वसिद्धिं युवा धत्ते वृद्धे हानिर्मृते क्षयः। यदि नाम्नि भवेद्वर्णः संयुक्ताक्षरलक्षणः ग्राह्यस्तस्यादिमो वर्णः इत्युक्तं ब्रह्मयामले॥ तिथिवारर्क्षभेदेन प्रत्येकं बालकादिना। नामवर्णादितो ज्ञेयं फलं पुंसां दिने दिने॥ तिथ्यादिमेलनवशात् फलं ज्ञेयं शुभाशुभम्। यूनि त्रये शुभं पूर्णमशुभञ्च मृतित्रये। अन्यत्राप्येवमूह्यं स्यात् शङ्करेण शुभाशुभम्"॥

अथ विवाहः। "प्रसूत्याधानतः शुद्धिर्विषमेऽब्दे समे क्रमात्। विवाहे योषितां चन्द्रार्कज्यशुद्धिर्न्तृयोषितोः॥ सभर्तृकक्रिया-

रम्भे भर्त्तुर्गोचरशुद्धित:। यातोद्वाहे गर्भजात्ये स्वशुद्धप्राप्नोति तत्फलम् ॥ प्रारभ्य जन्मसमयात् युवतेर्विवाहमोजाब्दकेषु मुनय: शुभमादिशन्ति। आधानत: प्रभृतित: समवत्सरेषु प्रोक्तास्तयोर्न शुभदस्तु विलोमवर्षे॥ अयुग्मे दुर्भगा नारी युग्मे च विधवा भवेत्। तस्माद्गर्भान्विते युग्मे विवाहे सा पति-व्रता ॥ मासत्रयादूर्द्धमयुग्मवर्षे युग्मेऽपि मासत्रयमेव यावत्। विवाहशुद्धिं प्रवदन्ति सर्वे वात्स्यादयो ज्योतिषि जन्ममासात् ॥ युग्माब्दकेषु युवतेरपि जन्ममासात्। मासत्रयं विवहने परमब्दशुद्धिं प्राहु: समस्तमुनयो विषमे तु वर्षे मासत्रयादुपरित: खलु जन्ममासात्"। राजमार्त्तण्डे। "माङ्गल्येषु विवाहेषु कन्यासंवरणेषु च। दश मासा: प्रशस्यन्ते चैत्रपौषविवर्जिता:। कन्यासंवरणे हस्तोदकविधौ दम्पत्योर्हिनवाष्टराशिरहिते दारानुकूले रवौ चन्द्रे चार्ककुजार्किशुक्रवियुते मध्येऽथवा पापयो:। त्यक्ता च व्यतिपातवैधृतिदिनं विष्टिश्च रिक्तां तिथिं क्रूराक्षायणचैत्रपौषरहिते लग्नांशके मानुषे"। योगविशेषे दोषविशेषानाह रत्नमालायाम्। "कुलोच्छेदो व्यतीपाते परिघे स्वामिघातिनी। वैधृतौ विधवा नारी विषदाहोऽतिगण्डके। व्याघाते व्याधिसंघात: शोकार्त्ता हर्षणे तथा। शूले च व्रणशूलं स्यात् गण्डे रोगभयं तथा विषकुम्भेऽप्यहिदंश: स्यात् वज्रके मरणं भवेत्। एते वै दारुणा: सर्वे दश योगा: प्रकीर्त्तिता:"। आश्वलायन:। "उदगयने आपूर्य्यमाणे पक्षे कन्यानक्षत्रे चौडकर्मोपनयनगोदान-विवाहा:" ॥ विवाह: सार्वकालिक इत्येके इति। "आषाढे धनधान्यभोगरहिता नष्टप्रजा श्रावणे वेश्या भाद्रपदे इषे च मरणं रोगान्विता कार्त्तिके। पौषे प्रेतवती वियोगबहुला चैत्रे मदोन्मादिनी अन्येष्वेव विवाहिता पतिरता नारी समृद्धा

भवेत्। हरौ प्रसुप्ते न च दक्षिणायने तिथौ च रिक्ते शशिनि-क्षयं गते। राजग्रस्ते तथा युद्धे पितॄणां प्राणसंशये। अति-प्रौढ़ा च या कन्या नानुकूलं प्रतीक्षते। अतिप्रौढ़ा च या कन्या कुलधर्मविरोधिनी अविशुद्धापि सा देया चन्द्रलग्नबलेन तु। अयनस्योत्तरस्यादौ मकरं याति भास्करः। राशिं कर्कटकं प्राप्य कुरुते दक्षिणायनम्" इति विष्णुपुराणोक्तस्य चूड़ाद्यावयनस्य परिग्रहः दिनमानादि वोधे तु सिद्धान्ताद्यनपरिग्रहः। सार्वकालिक इत्यस्य विषयमाह भुजबलभीमे। "ग्रहशुद्धिमब्दशुद्धिं शुद्धिं मासायनर्त्तुदिवसानाम्। अर्वाक्दशवर्षेभ्यो मुनयः कथयन्ति कन्यकानाम्। एतत्परन्तु विज्ञेयमङ्गिरो वचनं यथा। कालात्यये च कन्यायाः कालदोषो न विद्यते। मलमासादिकालानां विवाहाद्यो प्रयत्नतः। पुंसः प्रति सदा दोषात् सर्वदैव हि वर्ज्यता"। कृत्यचिन्तामणौ। "वापीकूपतड़ागयागगमनक्षौर प्रतिष्ठाव्रतं विद्यामन्दिर कर्णवेधन महादानं वनं सेवनम्। तीर्थस्नान विवाहदेवभवनं मन्त्रादिदेवेक्षणं दूरेणैव जिजीविषुः परिहरेदस्तंगते भार्गवे"। वृहद्राजमार्त्तण्डे। "सर्वाणि शुभकर्माणि कुर्य्यादस्तं गते सिते। विवाहं मेखला बद्धं यात्राञ्च परिवर्जयेत्"। यात्राञ्चेति चकारो वचनान्तरोक्त प्रातिस्विकनिषिद्धकर्मान्तरं समुच्चिनोति। "बाले शुक्रे वृद्धे शुक्रे नष्टे शुक्रे जीवे नष्टे। बाले जीवे वृद्धे जीवे सिंहादित्ये गुर्वादित्ये। तथा मलिम्लुचे मासि सुराचार्य्येऽति चारगे। वापीकूपतड़ागादिक्रियाः प्रागुदितास्त्यजेत्। अतीचारं गते जीवे वक्रे चैव वृहस्पतौ। कामिनी विधवा प्रोक्ता तस्मात्तौ परिवर्जयेत्। अतीचारं गतो जीवः पूर्वभं नैव गच्छति। समचारेऽपि कर्माणि नैव तत्रैव संस्थिते"। देवलः। "बाले वृद्धे तथैवास्ते कुरुते

दैत्यमन्त्रिणि। उद्वाहितायां कन्यायां दम्पत्योरेकनाशनम्। प्रागुद्गतः शिशुरहस्त्रितयं सितः स्यात्। पश्चाद्दशाहमिति पञ्चदिनानि वृद्धः। प्राक्पञ्चमेव कथितोऽत्र वशिष्ठगर्गैर्जीवस्तु पक्षमपि वृद्धशिशुर्विवर्ज्यः"। अत्यन्ताशक्तौ राजमार्त्तण्डः "बाले वृद्धे च सन्ध्यांशे चतुःपञ्च त्रिवासरान्। जीवे च भार्गवे चैव विवाहादिषु वर्जयेत्। वक्रे चैवातिचारे त्रिदशपतिगुरौ दैवपूज्ये च सुप्ते गुर्वादित्येऽधिमासे दिवसकररिपौ वाक्पतौ चैत्रपौषे। विष्ट्यां केतूद्गमे वा शरदि सुरगुरौ सिंहसंस्थे मनोज्ञे वर्षादाप्नोति चोढ़ा सुनियतमरणं देवकन्यापि भर्त्तुः" ॥ शुक्रमधिकृत्य राजमार्त्तण्डे "बाले च दुर्भगा नारी वृद्धे नष्टप्रजा भवेत्। नष्टे च मृत्युमाप्नोति सर्वमेतद् गुरावपि ॥ सिंहे गुरौ परिणीता पतिमात्मानमात्मजान् हन्ति। क्रमशस्त्रिषु पित्रादिषु वशिष्ठगर्गादयः प्राहुः। गुरौ हरिस्थे न विवाहमाहुर्हारीतगर्गप्रमुखा मुनीन्द्राः। यदा न माघो मघसंयुता स्यात् तदा तु कन्योद्वहनं वदन्ति" ॥ अत्रैव माण्डव्यः। "मघा ऋक्षं परित्यज्य यदा सिंहे गुरुर्भवेत्। तदाब्दे कन्यका चोढ़ा सुभगा सुप्रिया भवेत्" ॥ हारीतः। "अतीचारं गते जीवे वृषे वृश्चिककुम्भयोः। यज्ञोद्वाहादिकं कुर्य्यात्तत्र कालो न लुप्यते" ॥ कृत्यचिन्तामणौ। "अतीचारं गते जीवे वृषे वृश्चिककुम्भयोः। तत्र चोद्वाहिता कन्या संप्रणीयात् कुलद्वयम्" ॥ सङ्केतकौमुद्यां भीमपराक्रमे "यदातिचारं सुरराजमन्त्री करोति गोमन्मथमीनसंस्थः। न याति चेद्यद्यपि पूर्वराशिं शुभाय पाणिग्रहणं वशिष्ठः ॥ अतीचारं गते जीवे स्थिरराशौ च संस्थिते। तत्र न लुप्यते कालो वदत्येवं पराशरः ॥ वापीकूपतड़ागादिनिषिद्धं सिंहगे गुरौ। मकरस्थे तु तत् कार्य्यं न दोषः काललोपजः" ॥ यत्तु "कन्यावृश्चिक-

मेषेषु मिथुने च झषे वृषे। अतीचारेऽपि कर्त्तव्यं विवाहादि बुधैः सदा" इत्येतदमूलं द्वैतनिर्णयेऽप्युक्तं दीपिकायां "त्रिकोण-जाया धनलाभराशौ वक्रातिचारेण गुरुः प्रयातः। यदा तदा प्राह शुभे विलग्ने हिताय पाणिग्रहणं वशिष्ठः" ॥ देवीपुराणम्। "मकरस्थो यदा जीवो वर्जयेत् पञ्चमांशकम्। शेषेष्वपि च भागेषु विवाहः शोभनो मतः" ॥ भोजराजः। "यो जन्ममासे क्षुरकर्मयात्रां कर्णस्य वेधं कुरुते च मोहात्। नूनं स रोगं धनपुत्रनाशं प्राप्नोति मूढ़ो बधबन्धनानि ॥ जातं दिनं दूषयते वशिष्ठस्त्वाष्टौ च गर्गो यवनो दशाहम्। जन्माख्यमासं किल भागुरिश्च चौड़े विवाहे क्षुरकर्णवेधे" ॥ श्रीपतिसमुच्चये "स्नानं दानं तपोहोमः सर्वमङ्गल्यवर्द्धनम्। उद्वाहश्च कुमारीणां जन्ममासे प्रशस्यते" ॥ कृत्यचिन्तामणौ "जन्ममासे च पुत्राढ्या धनाढ्या च धनोदये। जन्मभे जन्मराशौ च कन्या हि ध्रुवसन्ततिः" ॥ गर्गः। "ज्यैष्ठे मासि तथा मार्गे चौरं परिणयं व्रतम्। ज्येष्ठपुत्रदुहित्रोश्च यत्नतः परिवर्जयेत्" ॥ अथ ज्येष्ठत्वमादिगर्भजातत्वं तथा च "जन्ममासि न च जन्मभे तथा नैव जन्मदिवसेऽपि कारयेत्। आद्यगर्भभवपुत्रकन्ययोः। ज्यैष्ठमासि न च जातु मङ्गलम्"। अत्र जन्ममासादौ पुत्रमात्रस्य निषेधः ज्यैष्ठमासे तु ज्यैष्ठपुत्रस्येति विशेषः। "कृत्तिकास्थं रविं त्यक्त्वा ज्यैष्ठे ज्यैष्ठस्य कारयेत्। उत्सवेषु च सर्वेषु दिनानि दश वर्जयेत् ॥ रेवत्युत्तररोहिणीमृगशिरो-मूलानुराधा-मघा-हस्ता-स्वातिषु। तौलिषष्ठमिथुनेषु च्वस्तु पाणिग्रहः। सप्ताष्टन्त्यवहिःशुभैरुडुपताविकादशद्वित्रिगे क्रूरैस्त्यायषड़ष्टगैर्न तु भृगौ षष्ठे कुजे चाष्टमे" ॥ ज्योतिर्विहितनक्षत्रादधिकं चित्राश्रवणा-धनिष्ठाश्विनीनक्षत्रपारस्करेणोक्तं यथा "कुमार्य्याः पाणिं गृह्णीयात्त्रिषूत्तरादिषु उत्तरफल्गुन्यादि-

त्रयोत्तराषाढ़ाचित्रयोत्तरभाद्रपदादित्रयेषु नवसु नक्षत्रेष्वि-त्यर्थः । भौमपराक्रमे "पूर्वात्रये विशाखायां शिवाद्ये भचतु-ष्टये । ऊढ़ा चाशुभवेत् कन्या विधवातो विवर्जयेत् ॥ विष्णु-भाद्ये त्रिके चित्रे ज्येष्ठायां ज्वलने यमे । एभिर्विवाहिता कन्या भवत्येव सुदुःखिता" ॥ एवञ्च पारस्करोक्तं यजुर्वेदि-विषयमापद्विषयं वा बोध्यम् । "आद्ये मघा चतुर्भागे नैरृतं त-स्याद्य एव च । रेवत्यन्त्यचतुर्भागे विवाहः प्राणनाशकः । कर्ण-वेधे विवाहे च व्रते पुंसवने तथा । प्राशने चाद्यचूड़ायां विद्धर्क्षं विवर्जयेत्" ॥

विद्धर्क्षन्तु "तिथि १५ अङ्ग ६ वेद ४ एक १ दश १० ऊनविंश १९ भ २७ एकादश ११ अष्टादश १८ विंश २० संख्याः । इष्टोडुना सूर्य्ययुतोडुना च योगादमूखेद्दशयोगभङ्गः"॥ कर्म्मकालीननक्षत्रसूर्य्यभुज्यमाननक्षत्रयोर्मिलने यदि पञ्चद-शाद्यन्यतमसंख्या भवति तदा न कर्म्मयोग्यमित्यर्थः । सप्तविंशाधिकत्वे सप्तविंशतिमपहाय शेषात् फलं अन्यथैक-संख्यानुपपत्तेः । अपवादस्तु । "आद्यपादे स्थिते सूर्य्ये तुरीयांशं प्रदुष्यति । द्वितीयस्थे तृतीयन्तु विपरीतमतोऽ-न्यथा" ॥ व्यक्तमाह स्वरोदये । "आद्यांशेन चतुर्थांशं चतु-र्थांशेन चादिमम् । द्वितीयेन तृतीयन्तु तृतीयेन द्वितीयकम्"॥

अत्रैव खर्जूरवेधः । तथा च रत्नमाला । "एकामूर्द्ध्वगतां त्रयोदश तथा तिर्य्यग्गताः स्थापयेत् । रेखाश्चक्रमिदं बुधैरभि-हितं खार्जूरिकं तत्र तु ॥ व्याघातादि तु मूर्ध्नि भन्तु कथितं तत्रैक्यरेखास्थयोः सूर्य्याचन्द्रमसोर्मिथो निगदिता दृक्पात एकार्गलः" ॥ व्याघातादीति व्याघातयोगसंख्याङ्कस्त्रयोदशा-ङ्कम् । तथा च हस्तादीनि नक्षत्राणि देयानीत्यर्थः ।

दीपिकायां "कृत्तिकादिचतुःसप्त रेखा राशौ परिभ्रमन् ।

ग्रहस्थेदेकरेखास्थो वेधः सप्तशलाकजः ॥ सप्त सप्त विलिखेत् प्ररेखिकास्तिर्य्यगूर्द्ध्वमथ कृत्तिकादिकम् । लेखयेदभिजिता समन्वितं चैकरेखगखगेन विध्यते ॥ वैश्वस्य चतुर्थेऽंशे श्रवणादौ लिप्तिकाचतुष्के च । अभिजित् तत्स्थे खेचरे विज्ञेया रोहिणी विद्धा" ॥ लिप्तिका दण्डः । "यस्याः शशी सप्तशलाकभिन्नः पापैरपापैरथवा विवाहे । रक्तांशुकेनैव तु रोदमाना श्मशानभूमिं प्रमदा प्रयाति" ॥ सप्तशलाकवेधः ।

अस्यापवादो यथा राजमार्त्तण्डे । "विषप्रदिग्धेन हतस्य पत्रिणा मृगस्य मांसं शुभदं च्युताहृते । यथा तथात्राप्युडुपाद एव प्रदूषितोऽप्यभिपदं शुभावहम् ॥ ऊर्द्ध्वं रेखास्थिताः पञ्च तिर्य्यक् पञ्च तथैव च । द्वे द्वे च कोणयोरेखे साभिजित् कृत्तिकादिकम् ॥ शम्भुकोणे द्वितीये तु लेखयेत् सर्वकर्माणि । क्रूरैर्भिन्नमथो सौम्यैर्नक्षत्रं परिवर्जयेत् ॥ नत्वापाते च ये दोषा ये च सप्तशलाकके । ते सर्वे प्रभवन्त्यत्र नाम्ना पञ्चशलाकके ॥ अथ चक्रान्वये कश्चित् पादवेध इहेष्यते" ॥ तदुक्तं रत्नमालायाम् । केश्चित्तत्रापीष्यते पादवेध इति । इति पञ्चशलाकचक्रम् ।

रत्नमालायाम् । "ऋक्षं द्वादशमुष्णरश्मिरवनीसूनुस्तृतीयं गुरुः षष्ठं चाष्टममर्कजस्तु पुरतो हन्ति स्फुटं न त्वया । पश्चात् सप्तममिन्दुजस्तु नवमं राहुः सितः पञ्चमं द्वाविंशं परिपूर्णमूर्त्तिरुडुपः सन्ताडयैत्नेतरत् । नत्वापातोऽयम् । "पापात् सप्तमगः शशी यदि भवेत् पापेन वा संयुतो यत्नात्तं परिवर्जयेत् मुनिमतो दोषो ह्ययं कथ्यते । यात्रायां विपदो गृहे सुतबधः चौरेषु रागोद्भवोऽप्युद्वाहे विधवा व्रते च मरणं शूलञ्च पुंस्कर्म्मणि" ।

"रविमन्दकुजाक्रान्तं मृगाङ्कात् सप्तमं त्यजेत् । विवाह-

यात्राचूड़ासु गृहकर्म्म प्रवेशने" ॥ यामित्रवेधः। "मूल-त्रिकोणनिजमन्दिरगोऽथ पूर्णो मित्रर्च्च सौम्य गृहगोऽथ तदीक्षितो वा। यामित्रवेधविहितानपहृत्य दोषान् दोषाकरः शुभमनेकविधं विधत्ते" ॥

भोजराजः। "त्रिषड्दशैकादशगो दिनेशः सुतार्थसौभाग्यशुभप्रदः स्यात्। वैधव्यदाताष्टमराशिसंस्थः शेषेषु रुग् दुःखशुचः करोति" ॥ रविशुद्धिः। "कन्यानक्षत्रशुद्धौ स्याद्विवाहः शुभकृन्नृणाम्। पश्चात् भर्त्तुर्विशुद्धा तु यात्रा पुष्पोत्सवादयः" ॥ विद्याधरीविलासे। "पुंसामर्कः स्मृतो योनिर्योषितामसृतद्युतिः। अतः पुंयोषितोः शस्तं बलमर्कशशाङ्कजम् ॥ गोचरशुद्धा विन्दुं कन्याया यत्नतः शुभं वीक्ष्य। तीक्ष्णकिरणाच्च पुंसः शेषैरबलैरपि विवाहः ॥ द्वितीयपुत्राङ्कगतः प्रभाकरः त्रयोदशाहात् परतः शुभप्रदः। न जन्मसप्तव्ययरन्ध्रगस्तथा करोति पुंसामपि तादृशं फलम्" ॥ तथा त्रयोदशाहात् परतः। "त्रयोदशदिनान्यर्को दशषड्धरणीसुतः। सार्द्धं दिनञ्च शीतांशुर्मासमेकादशं तमः ॥ सौरिः पादाधिकं वर्षं मासानष्टौ बृहस्पतिः। भवनार्द्धं भृगुः सौम्यो यावद्राश्यशुभाः फलम् ॥ कष्टं व्रतादिके दद्युर्न तथा शेषभागगाः। लग्ने तत् पञ्चमे तुर्य्ये दशमे नवमे तथा ॥ गुरुर्भृगुर्वा दोषघ्नो विवाहे वर्द्धते सुखम्" ॥ अयमेव सुतहिवुकयोगः।

"गोधूलिं त्रिविधां वदन्ति मुनयो नारी विवाहादिके हेमन्ते शिशिरे प्रयाति मृदुतां पिण्डीकृते भास्करे। ग्रीष्मेऽर्द्धास्तमिते वसन्तसमये भानौ गते दृश्यतां सूर्य्ये चास्तमुपागते च नियतं प्रावृट् शरत्कालयोः। लग्नं यदा नास्ति विशुद्धमन्यद्गोधूलिकां तत्र शुभां वदन्ति। लग्ने विशुद्धे सति वीर्य्ययुक्ते गोधूलिका नैव फलं विधत्ते ॥ नास्मिन् ग्रहा न तिथयो

न च विष्टिवारा ऋक्षाणि नैव जनयन्ति कदापि विघ्नम्। अव्याहतः सतमिव विवाहकाले यात्रासु चायमुदितो भृगुजे न योगः। मार्गे गोधूलियोगे प्रभवति विधवा माघमासे तथैव पुत्रायुर्धनयौवनेन सहिता कुम्भे स्थिते भास्करे। वैशाखे सुखदा प्रजाधनवती ज्यैष्ठे पतेर्मानदा आषाढ़े धनधान्यपुत्रबहुला पाणिग्रहे कन्यका"। विवाहपटले। "व्यूढ़ा धनुषि च कुलटा तत्पूर्वार्द्धे सतीत्यपरे जगुः"॥ ज्योतिःसारसंग्रहे "विवाहे तु दिवाभागे कन्या स्यात् पुत्रवर्जिता। विवाहानलदग्धा सा नियतं स्वामिघातिनी"॥ महाभारते। "रात्रौ दानं न शंसन्ति विना चाभयदक्षिणाम्। विद्यां कन्यां द्विजश्रेष्ठा दीपमन्नं प्रतिश्रयम्"॥ व्यासः। "रिक्तासु विधवा कन्या दर्शेऽपि स्यात् विवाहिता। शनैश्चरदिने चैव यदा रिक्ता तिथिर्भवेत्॥ तस्मिन् विवाहिता कन्या पतिसन्तानवर्जिता"॥ स्मृतिः "धर्मार्थकाममोक्षाणां दाराः संप्राप्तिहेतवः। परीक्षन्ते प्रयत्नेन पूर्वमेव करग्रहात्"॥ मनुः। "अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम्। तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत् स्त्रियम्"॥ शातातपः "हंसस्वनां मेघवर्णां मधुपिङ्गललोचनाम्। तादृशीं वरयेत् कन्यां गृहस्थः सुखमेधते"॥ भविष्ये "प्रतिष्ठिततलाः सम्यक् रक्ताम्भोजसमत्विषः। तादृग्पादाश्रया धन्या योषितां भोगवर्द्धनाः"॥ प्रतिष्ठितो भूमौ लग्नः समस्तलोऽधोभागो येषां ते तथा मनुः। "नोद्वहेत् कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम्। नालोमिकां नातिलोम्नीं न वाचालां न पिङ्गलाम्॥ नर्क्षवृक्षनदी नाम्नीं नान्त्यपर्वतनामिकाम्। न पक्ष्यहि प्रेष्यनाम्नीं न च भीषणनामिकाम्"॥ प्रतिप्रसवमाह मत्स्यसूक्ते। "गङ्गा च यमुना चैव गोमती च सरस्वती। नदीस्तासां नाम हृद्ये

मालती तुलसी अपि ॥ रेवती चाश्विनीभेषु रोहिणी शुभदा भवेत्" ॥ कृत्यचिन्तामणौ। "नेत्रे यस्याः केकरे पिङ्गले वा स्याद्‌दुःशीला श्यावलोलेक्षणा च। कूपौ यस्या गण्डयोः सस्मित योनिः सन्दिग्धां बन्धकीं तां वदन्ति" ॥ नन्दिकेश्वर-पुराणे। "श्यामा सुकेशी तनुलोमराजी सुभ्रूः सुशीला सुगतिः सुदन्ता ॥ वेदी विमध्या यदि पङ्कजाक्षी कुलेन हीनापि विवाहनीया। धृष्टा कुदन्ता यदि पिङ्गलाक्षी लोम्ना समा-कीर्णसमाङ्गयष्टिः ॥ मध्ये पुष्टा यदि राजकन्या कुलेऽपि योग्या न विवाहनीया" ॥ हारीतः। "तस्मात् कुलनक्षत्र-विज्ञानोपपन्नां वरयेत्। नक्षत्रोपपन्नां नाड़ीनक्षत्रहीनाम्"॥

नाड़ीनक्षत्रमाह स्वरोदये। "अश्विन्यादि लिखेच्चक्रं सर्पाकारं त्रिनाडिकम्। तत्र वेधवशात् ज्ञेयं विवाहादि-शुभाशुभम् ॥ त्रिनाड़ीवेधनक्षत्रमश्विन्याद्री युगोत्तराः। हस्तेन्द्रमूलवारुण्यः पूर्वभाद्रपदास्तथा ॥ याम्यः सौम्यो गुरुर्योनिश्चित्रामित्रजनाह्वयम्। धनिष्ठा चोत्तरा भद्रा मध्य-नाड़ी व्यवस्थिता ॥ कृत्तिका रोहिणी सर्पो मघा स्वाती विशाखके। उत्तरा श्रवणा पौष्णं पृष्ठनाड़ी व्यवस्थिता ॥ अश्वयादिनाड़ीवेधर्क्षे षष्ठं द्वितीयकं क्रमात्। याम्यादितुर्ष्ठ तुर्यञ्च कृत्तिकादिद्विषट्‌ककम् ॥ एवं निरीक्षयेद्वेधं कन्यामन्त्रे सुरे गुरौ। पण्य श्रीस्वामिमित्रेषु देशे ग्रामे पुरे गृहे ॥ एक-नाड़ीस्थधिष्ण्यानि यदि स्युर्वरकन्ययोः। तदा वेधं विजा-नीयात् गुर्वादिषु तथैव च ॥ प्रकटं यस्य जन्मर्क्षं तस्य जन्म-र्क्षतो व्यधः। प्रनष्टं जन्मभं यस्य तस्य नामर्क्षतो वदेत् ॥ द्वयोर्जन्मभयोर्वेधो द्वयोर्नामभयोस्तथा। नामजन्मर्क्षयोर्वेधो न कर्त्तव्यं कदाचन ॥ एकनाड़ीस्थिता चेत् स्यात् भर्त्तुर्ना-शाय चाङ्गना। तस्मान्नाड़ीव्यधो वीक्ष्यो विवाहे शुभमिच्छता॥

प्राङ्नाड्या वेधतो भर्त्ता मध्यनाड्यो भयं तथा। पृष्ठनाड़ीव्यधे कन्या म्रियते नात्र संशयः॥ एकनाड़ीस्थिता यत्र गुरुर्मन्त्रश्च देवता। तत्र द्वेषं रुजं मृत्युं क्रमेण फलमादिशेत्॥ प्रभुः पत्न्याङ्गनामित्रं देशो ग्रामः पुरं गृहम्। एकनाड़ी गता भव्या अभव्या वेधवर्जिताः"॥ प्रतिप्रसवमाह ज्योतिषे। "एकराश्यादियोगे तु नाड़ीदोषो न विद्यते"। स यथा "एकराशौ च दाम्पत्ये शुभं स्यात् समसप्तके। चतुर्थे दशमे चैव तृतीयैकादशे तथा"॥ समग्रहणाद्विषमसप्तके दोषः। तथा च। "घोटके सप्तके मेषतुले युग्मद्वयो तथा। सिंह-घटौ सदा वर्ज्यौ मृतिं तत्रात्रहोच्छिवः"॥ श्रीपतिव्यवहार-निर्णये। "सुहृदेकाधिपयोगे तारावले वश्यराशौ वा। अपि नाड्यादिवेधे भवति विवाहो हितार्थाय"॥ राजमार्त्तण्डे। "न राजयोगे ग्रहवैरिता च न तारशुद्धिर्न गणत्रयं स्यात् न नाड़ीदोषो न च वर्णदुष्टिर्गर्गादयस्ते मुनयो वदन्ति"। राजयोगस्तु एकराश्यादियोग एव तत्रैव नाड्यादिप्रतिप्रस-वात्। श्रीपतिरत्नमालायाम्। "अश्वे भाजफणिद्वयं श्व वृषभूञ्ज्र षोन्दुरुमूषिकसाखुर्गौः क्रमशस्ततोऽपि महिषौ व्याघ्रः पुनः सौरभौ"। व्याघ्रणौ मृगकुक्कुरौ कपिरथोरश्व-द्वयं वानरः सिंहोऽश्वो मृगराट् पशुश्च करटीयोनिश्च भाना-मियम्। गोव्याघ्र गजसिंहमश्वमहिषं श्वैणश्च वभ्रूरगं वैरं वानरमेषकञ्च सुमहत्तद्वद्विड़ालोन्दुरुम्। लोकानां व्यवहार-तोऽन्यदपि च ज्ञात्वा प्रयत्नादिदं दम्पत्योर्नृपभृत्ययोरपि सदा वर्ज्यं शुभस्यार्थिभिः। मकरसमेतं मिथुनं कन्या कलसौ मृगेन्द्रमीनौ च। वृषभतुले अलिमेषौ कर्कटधनुषौ च मित्र-विधौ"। षट्काष्टकाविति शेषः।

अरिषड़ष्टकमाह। "मकरः करिकुलरिपुणा कन्या

मेषेण सह ऋषस्तुलया। कर्किघटौ वृषधनुषी वृश्चिकमिथुने चारिविधौ॥ यदि कन्याष्टमे भर्त्ता भर्त्तुः षष्ठे च कन्यका। षट्काष्टकं विजानीयात् वर्जितं विदशैरपि॥ पुंसो गृहात् सुतगृहे सुतहा च कन्या धर्मे स्थिता सुतवती पतिवल्लभा च। द्विर्द्वादशे धनगृहे धनहा च कन्या रिप्फे स्थिता धनवती पतिवल्लभा च"॥ षड़ष्टकादौ तारानियममाह भीमपराक्रमः। "सौहृद्ये ह्युभयोर्द्वयोरपि तयोरैकाधिपत्येऽपि वा ताराषट्सुमितमित्रज्वलनक्षेमार्थसम्पद् यदि। षट्काष्टे नवपञ्चके व्ययधने योगे च पुंयोषितोः प्रीत्यायुः सुखबुद्धिपुष्टिजनकः कार्य्यो विवाहस्तदा"। गर्गः। "मरणं तारविरोधे ग्रहरिपुभावे चिरेण। रोगादिनरनार्य्योः षट्काष्टके वैरमवश्यं भवेदाशु"॥ व्यासः। "मैत्रादियोगेऽपि षड़ष्टकादौ ताराविपत् प्रत्यरिनैधनाख्याः। वर्ज्या विवाहे पुरुषोडुतो हि प्रीतिः परा जन्मसु तारकासु। नक्षत्रमेकं यदि भिन्नराशिर्न दम्पती तत्र सुखं लभेताम्॥ विभिन्नमृक्षं यदि चैकराशिस्तदा विवाहः सुतसौख्यदायी। एकर्क्षा च यदा कन्या राश्येका च यदा भवेत्। धनपुत्रवती नारी साध्वी भर्त्तृप्रिया सदा॥ षड़ष्टके गोमिथुनं प्रदेयं कांस्यं सरूप्यं नवपञ्चके तु। द्विर्द्वादशाख्ये कनकान्नताम्रं विप्रार्च्चनं हेम च नाड़िदोषे॥ मरणं नाड़ीदोषे कलहः षट्काष्टके विपत्तिर्वा। अनपत्यता त्रिकोणे द्विर्द्वादशे दारिद्रम्"॥

कृत्यचिन्तामणौ। "हस्ता स्वातिश्रुतिमृगशिरः पुष्यमैत्राश्विभानि पौष्णादित्ये जगुरिह बुधा देवसंज्ञानि भानि। पूर्वास्तिस्रः शिवभभरणी रोहिणी चोत्तराश्च प्राहुर्मर्त्याह्वयमुडुगणं नूनमेतं मुनीन्द्राः॥ चित्राश्लेषा निरृति पितृभे वासवं वासवर्क्षं शक्राग्न्योर्भे वरुणदहनर्क्षे च रक्षो गणोऽयम्"॥

फलमाह श्रीपतिः "स्वकुले चोत्तमा प्रीतिर्मध्यमा देवमानुषे। देवासुरे कनिष्ठा च मृत्युर्मानुषराक्षसे॥ राक्षसी च यदा कन्या मानुषश्च वरो भवेत्। तदा मृत्युर्न दूरस्थो निर्धनत्वमथापि वा"॥ राजमार्त्तण्डे। "यदि स्याद्राक्षसो भर्त्ता कन्यका मानुषी भवेत्। विवाहे सुखमाप्नोति वैपरीत्यं विवर्जयेत्"॥ युद्धजयार्णवे। "देवा जयन्ति युद्धेन सर्वथा नात्र संशयः। रक्षसां मानुषाणाञ्च संग्रामे निश्चया स्मृतिः॥ कर्किमीनालयो विप्राः क्षत्राः सिंहतुला हयाः। वैश्या युग्माजकुम्भाख्याः शूद्रा वृषमृगाङ्गनाः॥ सर्वाः परिणयेद्विप्रः क्षत्रियो नवभाग्भवेत्। षड़ाश्रयो भवेद्वैश्यस्तिस्रः शूद्रे प्रकीर्त्तिताः॥ वर्णश्रेष्ठा च या नारी हीनवर्णश्च यः पुमान्। महत्यपि कुले जाता नासौ भर्त्तरि रज्यते"॥

अथ नववध्वागमनम्। दीपिकायां "स्त्रीशुद्धरालि घटाजसंयुतरवौ काले विशुद्धे भृगुं संत्यज्य प्रतिलोमगं शुभदिने यात्रा प्रवेशोचिते। त्यक्त्वा हस्तु निरंशकं नववधूयात्राप्रवेशौ पतिः कुर्य्यादेकपुरादिषु प्रतिभृगोर्नेच्छन्ति दोषं बुधाः। पैत्रागारे कुचकुसुमयोः सम्भवो वा यदि स्यात् कालः शुद्धो न भवति यदा संमुखो वापि शुक्रः। मेषे कुम्भेऽलिनि च भवेत् भास्करश्चेत्तथापि स्वामी भद्रेऽहनि नववधूं वेशयेन्मन्दिरं स्वम्। भर्त्तुर्गोचरशोभने दिनपतौ नास्तं गते भार्गवे सूर्य्ये कीटघटाजगे शुभदिने पक्षे च कृष्णेतरे। हित्वा च प्रतिलोमगौ बुधसितौ जीवस्य शुद्धौ तथा चानीता गुणशालिनी नववधूर्नित्योत्सवा मोदते। एकग्रामे चतुःशाले दुर्भिक्षे राष्ट्रविप्लवे। पतिना नीयमानायाः पुरः शुक्रो न दुष्यति"॥ तथा "काश्यपेषु वशिष्ठेषु भृग्वादित्यङ्गिरःसु च। भारद्वाजेषु वात्स्येसु प्रतिशुक्रो न दोषभाक्"॥

औपतिसंहितायां प्रचेताः। "पुष्यादित्यसमीरणादिति वसुस्वप्युत्तरा रेवती तारानायकरोहिणीषु शुभदो मेषालिकुम्भे रवौ वारेष्विज्यसितेन्दुवित्सु शुभदे तारे प्रशस्ते विधौ कन्यामन्मथमीनतौलिमृगभे स्यादङ्गना द्व्यागमः"। नारायणपद्धतौ "वृत्ते पाणिग्रहे गेहात् पितुः पतिगृहं प्रति। पुनरागमनं बध्वा स्तद्विरागमनं विदुः"॥ ज्योतिःसारसंग्रहे "विवाहमासि प्रथमं बध्वा नागमनं यदि। तदा सर्वमिदं चिन्त्यं युग्माद्यब्दं विचक्षणैः"॥ कार्त्यचिन्तामणौ। "श्वश्रूं हन्त्यष्टमे वर्षे श्वशुरञ्च दशाब्दिके। संप्राप्ते द्वादशे वर्षे पतिं हन्ति द्विरागमे"॥ मत्स्यसूक्ते "भुङ्क्ता पितृगृहे कन्या भुङ्क्ते स्वामिगृहे यदि। दौर्भाग्यं जायते तस्याः शपन्ति कुलनायिकाः"॥

अथ प्रथमरजोयोगः। नारायणपद्धतौ। "आदित्ये विधवा नारी सोमे चैव पतिव्रता। वेश्या मङ्गलवारे च बुधे सौभाग्यमेव च॥ बृहस्पतौ पतिः श्रीमान् शुक्रे चापत्यमेव च। शनौ वन्ध्यां विजानीयात् प्रथमे स्त्री रजस्वला॥ पूर्वात्रये याम्यभुजङ्गरौद्रे वैधव्यमस्या विदधाति नूनम्। मघे सशोकाप्यथभेऽदितीशे सा वन्ध्यकीन्द्रोनलभे दरिद्रा। पुष्पं दृष्टं निन्दिते भे यदि स्यात् शान्तिं कुर्य्यादङ्गनानाञ्च पूर्वम्॥ तत्संयोगं बान्धवा वर्जयेयुर्यावद् भूयो दृश्यते शस्तभे तत्। ज्यैष्ठे स्याद्विधवा नारी आषाढ़े धनसंयुता। श्रावणे च मृतापत्या भाद्रे च बहुरोगिणी॥ आश्विने च मृतापत्या कार्त्तिके कुलनाशिनी। मार्गशीर्षे धर्म्मशीला पौषे च रतिविह्वला॥ माघे पतिव्रता नारी फाल्गुने बहुपुत्रिणी। चैत्रे च मदनोन्मत्ता वैशाखे प्रियवादिनी"॥ इति मासफलम्। "कृत्तिकादीनि ऋक्षाणि दिक्ष्वष्टसु लिखेद्बुधः। चत्वारि दिक्षु ऋक्षाणि

कोणेषु च त्रयं लिखेत्॥ पूर्वादिक्रमतो लेख्यं फलं तेनैव निर्दिशेत्। स्त्री बन्ध्या सुभगा चैव विपुत्रा पुत्रिणी तथा॥ विधवा सर्वसम्पन्ना वेश्या चेति क्रमात् फलम्। आद्ये रजसि संभूते स्त्रीणामृक्षफलं भवेत्"॥ इति नक्षत्रफलम्।

अथ गर्भाधानम्। "ज्येष्ठा मूला मघाश्लेषा रेवती कृत्तिकाश्विनी। उत्तरा त्रितयं त्यक्त्वा पर्ववर्जं व्रजेदृतौ"॥ पर्वाण्याह विष्णुपुराणम्। "चतुर्दश्यष्टमी चैव अमावास्याथ पूर्णिमा। पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च"॥ शौनकः "पुंनक्षत्राणि चैतानि तिष्यो हस्तः पुनर्वसुः। अभिजित् प्रोष्ठपच्चैवानुराधाषाढ़श्चाश्वयुक्॥ हस्तो मूलं श्रवणः पुनर्वसुर्मृगशिरस्तथा। पुष्यश्च गर्भाधानादिकार्य्येषु पुंनामार्यगणः शुभदः। रोहिण्यन्तकचित्राहिर्विशाखा शतवर्जिते। भे पुंग्रहाहे स्त्री शुद्धा फलबन्धनमिष्यते॥ पुष्यार्कचन्द्रशिवमूलपुनर्वसुः स्यादाषाढ़युग्महरिभाद्रपदद्वयञ्च। एतानि पुंसि कथितानि शुभानि भानि चान्येषु गर्भपतनादिभयञ्च भेषु। नन्दा भद्रा भवेत् पुंसि स्त्रीषु पूर्णा जया स्मृता। रिक्ता नपुंसके त्वाहुस्तस्मात्तां परिवर्जयेत्। स्त्रीणामृतुर्भवति षोड़शवासराणि तत्रादितः परिहरेच्च निशाश्चतस्रः। युग्मासु रात्रिषु नराविषमासु नार्य्यः कुर्य्यान्निषेकमथ तास्वपि पर्ववर्जम्। मूलर्क्षं स्मृतिदुष्टत्वाद्गर्भाधानेषु नेष्यते। तस्य पुंसवनादौ तु पुंस्त्वत्वे प्रयोजनम्"। यथा याज्ञवल्क्यः। "एवं गच्छन् स्त्रियं क्षामां मघां मूलाञ्च वर्जयेत्। शस्त इन्दौ सकृत् पुत्रं लक्षण्यं जनयेत् पुमान्"॥ क्षामाम् आहारलाघवादिना क्षीणाम्। फलञ्च "युग्मासु पुत्रा जायन्ते स्त्रियो युग्मासु रात्रिषु। तस्माद् युग्मासु पुत्रार्थी संविशेदार्त्तवे स्त्रियम्॥ पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः"

इति मनूक्तम् । एवञ्च "युग्मायामपि रात्रौ चेत् शोणितं प्रचुरं तदा । कन्या पुंवद्भवति शुक्राधिक्ये पुमान् भवेत् ॥ कन्यैव युग्मरात्रौ च प्राधान्यं समवायिनः । निमित्तकारणात् कालाच्छुक्रशोणितयोर्यतः ॥ पीड़ा राशौ भौमदृष्टे शशाङ्के मासं मासं योषितामार्त्तवं स्यात् । वंशे शान्तं यच्च रक्तं जवाभं तद्गर्भार्थं वेदनागन्धहीनम्" ॥ गर्भयोग्य ऋतुनिरूपणम् । "पापासंयुतमध्यगेषु दिनकृत् लग्नचपा स्वामिषु तद्यूनेषु शुभोज्झितेषु विकुजे छिद्रे विपापे सुखे । सद्युक्तेषु त्रिकोणकण्टकविधुष्वायत्रिषष्ठान्विते पापे युग्मनिशासु गण्डसमये पुंशुद्धितः सङ्गमः । मूलमघाश्विनीनामाद्यं ज्येष्ठान्त्यसर्पाणाम् । अन्त्यं गण्डपदं त्यक्त्वा षोड़शाहे ऋतौ व्रजेत् । अशक्तौ तु भुजबलभीमे "अन्त्यं पौष्णेन्द्रसर्पाणामाद्यं पित्रश्विमूलगम् । गण्डं दण्डत्रयं ख्यातं सर्वकार्य्येषु कल्पितम् । पुमान् विंशतिवर्षश्चेत् पूर्णषोड़शवर्षया । स्त्रिया सङ्गच्छते गर्भाशये शुद्धे रजस्यपि । अपत्यं जायते भद्रं तयोर्न्यूनेऽधमं स्मृतम् । मासेशैः सितकुजगुरुरविशशिसौम्यलग्नपशशीनैः कलुषैः पीड़ा गर्भस्य पीड़ितैः पतनमन्यथा पुष्टिः" ॥ कालुष्यं मासेशेन पापग्रहयोगशत्रुगृहास्थिति नीचगृहयोग उपग्रहयोगादि । मासेशजन्मनक्षत्रे पापग्रहयोगः पीड़ा येषां जन्मर्क्षाणि १६ । ३ । २० । २२ । ११ । ८ । २७ । २ । मासेशशान्त्यादौ कृते न गर्भपीड़ा । अथ प्रश्नात् पुत्रादिज्ञानम् । "विवाहलग्नं विषमर्क्षसंस्थः सौरोऽपि पुंजन्मकरो विलग्नात् । स्त्र्यादिग्रहाणामवलोक्य वीर्य्यं वाच्यः प्रसूतौ पुरुषोऽङ्गना वा"।

अथ षोड़शवर्षीया गर्भिणीचिन्ता । "या सूता षोड़शे वर्षे तत्र वा धृतगर्भिका । मृत्युस्तस्याः सपुत्रायाः पितुश्चापि च सम्मतः ॥ मांसीप्रियङ्गुरजनीगुग्गुलुर्वंशलोचना । तालिशेन

तिलालाजा गर्भिणीस्नानमुत्तमम् ॥ गौरीं संपूज्य तत्पश्चात् संक्रमेच्छिवसन्निधौ। छागी गर्भवती देया दैवज्ञायाथ गोयुगम्। कांस्यपात्रस्थितं चन्द्रं सितवस्त्राञ्जसंयुतम्। वस्त्रैः कृष्णैश्च शतपुष्पैश्चन्दनागुरुधूपकैः। कृत्वापमार्जयेन्नारीं भोजयेद् ब्राह्मणांस्ततः" ॥

अथ पुंसवनम्। "कुर्य्यात् पुंसवनं सुयोगकरणे नन्दे सभद्रे तिथौ भाद्राषाढ़नृभेश्वरेषु नृदिने वेधं विनेन्दौ शुभे। अक्षीणे नवपञ्चकण्टकगते सौम्ये शुभे वृद्धिषु स्त्रीशुद्ध्या घटयुग्मसूर्य्य-गुरुभेष्वृत्सु मासत्रये" ॥ नृदिने पुंग्रहवारे। वेधो दशयोग-भङ्गः। वृद्धिरुपचयस्थानम्।

अथ पञ्चामृतम्। "रेवत्यश्विपुनर्वसुद्वयमरुन्मूलानुराधा-मघाहस्तासूत्तरफल्गुभेषु भृगुजे जीवार्कवारे तथा। लग्नर्क्ष-डुपशोभने च नियतं संत्यज्य रिक्तां तिथिं न देयं मासि तु पञ्चमे सुकरणे पञ्चामृतं योषिताम्। दुग्धं सशर्करं चैव घृतं दधि तथा मधु। पञ्चामृतमिदं प्रोक्तं विधेयं सर्वकर्म्मसु" ॥

अथ सीमन्तोन्नयनम्। "षष्ठे मासेऽष्टमेऽङ्कौज्यकुजदिन-कृतां नन्दभद्रे तिथौ च मैत्रे मूले मृगाङ्के करपितृपवने पौष्णविष्णुत्रियुग्मे। तिष्याश्वयादित्यरौद्रे युवतिहरिझषे वृश्चिके वापि लग्ने चन्द्रे तारेऽनुकूले शुभमपि नियतं स्याच्च सीमन्तकर्म्म"। त्रियुग्मे पूर्वोत्तरत्वेन युग्मरूपासु फल्गुन्या-षाढ़भाद्रपदासु। "भृगाजरहिते लग्ने नवांशे पुंग्रहस्य च। केचिद्वदन्ति सीमन्तं तथा रिक्तेतरे तिथौ" ॥ शङ्खलिखितौ वस्त्रदानं नवबध्वै। "मघाष्टकेऽम्बुवित्तयेऽदितिद्वयै पौष्णद्वये धातृयुगे गुरूदये। मासे च षष्ठेऽथ चतुष्टये स्त्रियाः शुद्धाम्ब-मन्दाह वह्निर्धटौ शुभा" ॥ गर्भस्पन्दने सीमन्तोन्नयनं यावन्न बालप्रसव इति। भुजबले "श्रीफलञ्च करे दत्त्वा स्थित्वा

भद्रासने तथा। गृह्योदितेन होमञ्च शान्तिं चैवात्र कारयेत्॥ जर्णासूत्रेण संग्रथ्य जीवं जातिञ्च विद्रुमम्। गुवाकं रजतं हेम दद्यात् स्तनतटान्तरे॥ तत्प्रभृतिनदीतीरं देवखातोदकं त्यजेत्। सम्प्याटनं तरोर्मूलं तथा देवगृहं त्यजेत्"॥ बृह द्राजमार्त्तण्डे। "या नार्थ्यः कृतसीमन्ता प्रसूते च कदाचन। अङ्के निधाय तं बालं पुनः संस्कारमर्हति"॥ अतएव छन्दोग-परिशिष्टं "संस्कारा अतिपत्येरन् स्वकालाच्चेत् कथञ्चन। हुत्वैतदेव कुर्वीत ये तूपनयनादधः"॥ इति सामान्यत उक्तम्। देवलः "सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता"।

अथ जातभद्रादि। तत्र दन्तजन्मचिन्ता। "जातः सदन्तः पितृमातृहन्ता तातं विहन्यात् प्रथमे तु मासे। अस्त्रां द्वितीये सहजं तृतीये मासे चतुर्थे शुभकारकः स्यात्॥ मिष्टान्न-भोजी सुभगः सुताख्ये षष्ठे सुखी पण्डितकल्पबुद्धिः। ततोऽधिकः स्याद्बलवान् युनाख्ये मासेऽष्टमे वित्तसुखैर्विहीनः। सुरप्रतापी नवमे मृत्युश्च दशमे तथा॥ एकादशे द्वादशे च सुखी च सुभगी भवेत्। अष्टौ पुत्तलकान् कृत्वा सुगन्धै-र्गन्धकैस्तथा॥ स्रोतःसु संक्रमे चापि स्नापयेत् शुक्लपुष्पकैः। स्नानं संक्रमणस्याधः शम्भोर्दर्शनमन्ततः॥ होमं विप्रार्चनञ्चैव-मशुभे दन्तदर्शने"॥

प्रसवात् पूर्वं गृहसंस्कारमाह सांख्यायनगृह्यम्। "काका-दन्या मेचकधातक्या बृहत्याः कोषातक्याः कालक्लीतकस्येति मूलानि पेषयित्वा उपलेपयेद्देशं यस्मिन् प्रजायते रक्षसा-मपहत्यै" इति। काकादनी काकजङ्घा मेचकधातकी काकमोचिका कोषातकी घोषकः कालक्लीतकाः यष्टि-मधुकेति कल्पतरुः। अतएव हरिवंशे। "एष मानुष्यको यत्नो मानुषैरेव साध्यते। श्रूयतां येन देवं हि मद्विधैः प्रति-

हन्यते। मन्त्रयामैः सुविहितैरौषधैश्चैव योजितैः। यत्नेन चानुकूलेन दैवमप्यनुलोम्यते"। इत्यनुचरान् प्रति कंसवाक्यम्। "अस्ति गोदावरीतीरे जम्भला नाम राक्षसी। तस्याः स्मरणमात्रेण विशल्या गर्भिणी भवेत्। पञ्चरेखाः समुल्लिख्य तिर्य्यगूर्द्धक्रमेण हि। पदानि षड्दशापाद्य त्वेकमाद्ये मुनी त्रयम्। नवमे सप्त दद्यात्तु बाणं पञ्चदशे तथा। द्वितीयेऽष्टावष्टमे षट् दिशि द्वौ षोड़शे श्रुतिम्। एकादिना समं देयम् इच्छाद्यैाङ्कैस्त्रिकोणके। तदा द्वात्रिंशदादिः स्यात् चतुः कोष्ठेषु सर्वतः। दर्शनाद्धारणात्तासां शुभं स्यादेषु कर्म्मसु। द्वात्रिंशत् प्रसवे नार्य्याश्चतुस्त्रिंशद्रमे नृणाम्। भूताविष्टेषु पञ्चाशत् मृतापत्यासु वै शतम्। द्वासप्ततिस्तु सन्ध्यायां चतुःषष्टीरणाङ्गनि। विषे विंशो धान्यकोटेष्वष्टाविंशतिरेव च। चतुरष्टौ च बालानां रोदने परिकीर्त्तिता" भौमपराक्रमे "वाच्यं शिशोर्जन्मपितुः परोक्षं क्षपाकरे पश्यति नैव लग्नम्। चरस्थितेऽर्केऽष्टमधर्मगे वा जातः परोक्षे पितरीति वाच्यम्। लग्नस्थिते वा दिननाथभूमौ यामित्रसंस्थेऽप्यथवा महीजे। चन्द्रे च शुक्रेन्दुजमध्यगे वा विदेशसंस्थे पितरि प्रजातः। सुप्रसूतिर्भवेच्चन्द्रे शुभग्रहयुतेक्षिते। दुर्ग्रहेक्षितयुक्ते च प्रसूतिर्दुःखदा भवेत्। द्वारं वास्तुनि केन्द्रोपगात् ग्रहादसति वा विलग्नर्क्षात्। दीपोऽर्कादुदयाद्वर्त्तिरिन्दुतः स्नेहनिर्देशः। लग्ने याद्विरंशांशस्तदभिमुखं सूतिकागृहद्वारम्। वासगृहोद्यानगतं द्वारं दिग्बलिग्रहाद्बलोपेतात्। द्वादशभागविभक्ते वासगृहे व्यवस्थिते सहस्रांशौ। दीपस्वरस्थिरादिषु तथैव वाच्यः प्रसवकाले। लग्नस्य यस्तु वर्णो निर्दिष्टो वर्त्तिस्तेन निर्देश्या। यावान् भागःक्षयमुपगतो दीपवर्त्तेस्य। तस्यास्तावद्भागे क्षयमुपगते लग्नराशेः प्रसूतिः। इन्दोर्भागवशाद्राशे दीपे तैलस्य संस्थितिः। केचित्

पूर्वादिभेदेन वदन्त्येवं मनीषिणः। मेषे चापमृगेन्द्रयोः किल शिशुः प्राची शिवा जायते गोकन्या मकरेषु दक्षिणशिरा जातो भवेन्निश्चितम्। मीने वृश्चिककर्किणोर्यदि तदा कौवेर-मूर्द्धा भवेत् कुम्भर्चे घटयुग्मयोर्यदि तदा पाश्चात्यमूर्द्धा नतः। युग्मायुग्मलग्नवशात् प्रसवस्य च कारिणी। विधवा सधवा ज्ञेया क्रमात् खलु विचक्षणैः"। बृहज्जातके। "मेषकुलीर-तुलालि घटैः प्रागुत्तरतो गुरुसौम्य गृहेषु। पश्चिमतश्च वृषेण निवासो दक्षिणभागकरौ मृगसिंहौ। वास्तुदेशे प्रागादिगृह-प्रसवस्थानम्। द्वौ द्वौ राशी मेषात् पूर्वादिषु संस्थितौ गृह-विभागे। कोणेषु द्विशरीराणि लग्नस्थाने शिशोः शयनानि"। गृहस्य प्रागादिदिग्विभागे बालस्य शय्या। लग्ननवांशकतुल्य-तनुः स्यात् वीर्य्ययुतग्रहतुल्यतनुर्वा। चन्द्रमसे तु नवांशपवर्णः कादिविलग्नविभक्तभगात्रः। लग्नादयो राशयः कादिषु शिरः प्रभृतिगात्रेषु परिकल्प्य तैन तदधिपात्तदैर्घ्यादिभेदात् तद-ङ्गानां तथा। यथाह सत्यः। दीर्घपतिदीर्घगृहस्थितोऽवयव-दीर्घ कुरुते। मिश्रत्वे मिश्रफलमेवमन्येष्वाच्यम्। कट्टक्-श्रोत्रनसाकपोलहनवो वक्त्रञ्च होरादयस्ते कण्ठांशकबाहुपा-र्श्वहृदयक्रोडानि नाभिस्ततः। वस्ति शिश्नगुदे ततश्च वृषणावूरू ततो जानुनी। जङ्घाङ्घ्री ह्युभयत्र वाममुदितैर्द्रेक्काणभागै-स्त्रिधा। लग्नादयो राशयस्त्रिधा द्रेक्काणभागैस्तत्र प्रथमे शीर्षा-दयो भवन्ति ते लग्नादयः द्वितीये कण्ठादयः तृतीये वस्त्या-दयः उदितैरुदय प्राप्तैर्भुक्तैरिति यावत्। तैर्द्वादशभिः राशि-भिर्वाममङ्गमिति शेषः। अर्थात् द्वितीयादिभिर्भागैर्दक्षिणं तेन लग्नात् द्वितीयो राशिर्दक्षिणं चक्षुः द्वादशश्च वाममित्यादि ज्ञेयम्। "तस्मिन् पापयुते व्रणं शुभयुते सौम्यं हि लक्ष्मादि-शेत्। स्वर्क्षांशे स्थिरसंयुतेषु सहजः स्यादन्यथा गन्तुकः।

मन्देष्वानिलजोऽग्निशस्त्रविषजो भौमे बुधे भूभवः सूर्य्ये काष्ठ-चतुष्पदेन हिमगौ शृङ्गाब्जजोऽन्यैः शुभः"। तस्मिन् द्रेक्काणे। द्रेक्काणस्थितग्रहफलनिर्णयः। "शीर्षमुखबाहुहृदयोदराणि कटिवस्तिगुह्यसंज्ञकानि। ऊरुजानुकजङ्घे चरणाविति च राश्योऽजाद्याः। इति कालनरस्याङ्गे सदसद्ग्रहयोगतः। पुंसामपि तदङ्गेषु शुभाशुभफलं वदेत्। न लग्नमिन्दुञ्च गुरु-र्निरीक्षते न वा शशाङ्कं रविणा समायुतम्। सपापकोऽर्केण युतोऽथवा शशीपरेण जातं प्रवदन्ति निश्चयात्। भग्नपाद-र्क्षसंयोगात् द्वितीया द्वादशी यदि। सप्तमी चार्कमन्दारे जायते जारजो ध्रुवम्। जारजयोगः। "गुरुक्षेत्रगते चन्द्रे तद्युक्ते वामवेश्मनि। तद्द्रेक्काणे नवांशे वा जायते न परेण सः"। जारजयोगभङ्गः इति लग्ननिर्णयः।

"यादृक् पश्यति सौम्यस्तत्तुल्यगुणं सुतं समाधत्ते। पितृ-जननीसादृश्यं रवेः शशाङ्काच्च बलयोगात्। सत्त्वं रजस्तमो यत्तु त्रिंशांशे रविस्तादृक्"। एतेऽन्तरात्मानः स्वां प्रकृतिं जन्तोः प्रयच्छन्ति सत्त्वादिग्रहात्रिंशांशके रविस्थित्या सात्त्वि-कादिज्ञानम्। विष्णुधर्मोत्तरे। "तामसा राजसाश्चैव सात्त्विकाश्च तथा स्मृताः। मनुष्या भृगुशार्दूल वातपित्त-कफाधिकाः।

अथ गण्डयोगः। "अश्विनीमघमूलानां गण्डा आद्या-स्त्रिनाड़िकाः। अन्त्याः पौष्णोरगेन्द्राणां पञ्चैव यवना जगुः। मूलेन्द्रयोर्दिवागण्डो निशाच पितृसर्पयोः। सन्ध्याद्वये तथा ज्ञेये रेवतीतुरगक्षयोः। सन्ध्यारात्रि दिवाभागे गण्डयोगो-द्भवः शिशुः। आत्मानं मातरं तातं विनिहन्ति यथाक्रमम्। सर्वेषां गण्डजातानां परित्यागो विधीयते। तातेनादर्शनं वापि यावत् षाण्मासिको भवेत्। कुङ्कुमं चन्दनं कुष्ठं गोर-

चनमथापि वा । घृते नैवान्वितं ज्ञात्वा चतुर्भिः कलसैर्बुधः । सहस्राक्षेण मन्त्रेण बालकं स्नापयेत्ततः । पितृयुक्तं दिवाजातं मातृयुक्तञ्च रात्रिजम् । स्नापयेत् मातृपितृभ्यां सन्ध्ययोरुभयोरपि । कांस्यपात्रं घृतैः पूर्णं गण्डदोषोपशान्तये । दद्याद्धेनुं हिरण्यञ्च ग्रहांश्चापि प्रपूजयेत् । मूलायाः प्रथमे पादे पितुर्वपुः प्रणश्यति । द्वितीये नियतां पीड़ां मातुः कुर्य्यात् पितुस्तथा । तृतीये धननाशाय चतुर्थे सर्वसम्पदः । व्यत्ययेन फलं ज्ञेयमश्लेषास्वपि पूर्ववत् । वल्मीकमृत्तिकां दद्यात् नद्याश्च तटमृत्तिकाम् । गोविषाणमृदश्चैव दन्तिमृदश्च निक्षिपेत् । तीर्थाम्भःपञ्चगव्येन स्नानं मातुः पितुः शिशोः । दिवा जाता तु या कन्या निशि जातस्तु यः पुमान् । नोभयोर्गण्डदोषोऽस्ति नाचलो हन्ति पर्वतम् । दिवागण्डे निशाजातो निशिगण्डेऽथवा दिवा । नोभयोर्गण्डदोषः स्यान्नाचलो हन्ति पर्वतम्" ॥ इति गण्डनिर्णयः । "मयूरचूलिकामूलमादित्यग्रहणोद्धृतम् । बालस्य च गले बद्धं समस्तग्रहदोषहृत्" ॥ मयूरचूलिका अपामार्गः । "शङ्खोत्पलवचा कुष्ठं कृष्णलोहविधारणम् । सर्वोपद्रवतो बालं व्रजड़ादपि च रक्षति ॥ अर्कदुग्धं निशा शुण्ठी गोघृतेन विलेपनम् । सर्वोपद्रवदोषेभ्यो बालं रक्षति सन्ततम् ॥ मागधिकासैन्धवसुरभिपित्तमधुमरिचरचितमतिप्रकटम् । भूतहरमञ्जनमिदं दुर्द्धरग्रहदर्पविदारणम् ॥ सुरभिपित्तं गोपित्तं मागधिका पिप्पली । दारुहरिद्रां पुष्पे भ्रमरसेन मर्दयित्वा रचिता ॥ अञ्जनगुटिका ग्रहवृन्दवन्दिता भूतविद्रावणी भ्रमरसेन कुष्माण्डरसेन ।

अथ पताकीवेधः । "तिर्य्यगूर्द्ध्वगता रेखास्तिस्रो देयाः पताकया । युताः कार्य्या वेदविदा सर्वसङ्गतरेखया ॥ दक्षस्रोद्गतरेखातो वामं मेषादयराशयः । पश्चाद्युग्मविंशाश्च

षड्दशेन्द्राग्निसागराः ॥ कर्कटान्मीनपर्य्यन्तमङ्का देया यथाक्रमम् । बालस्य जन्मकालीनग्रहलग्नमजादिषु ॥ विन्यस्य चिन्तयेत् प्राज्ञः शुभाशुभं यथाक्रमम् । शुभदण्डयोगवेधैर्लग्नाद्बालस्य शोभनम् । पापदण्डयोगवेधैराश्यङ्का दृष्टिकालवत् । बलाधिके दिनं मध्ये मासो हीने च हायनम् । कर्किमीनधनुर्भ्याञ्च हरिः कीटघटेन च । स्त्रियास्तौलिमृगाभ्याञ्च घटे मीनेन कन्यया । धनुषो मृगकर्किभ्यां मकरे धनुषा स्त्रिया । मीने कर्कितुलाभृद्भ्यां मीनस्त्रीधनुषात्मजे । तुलाकर्किमृगेईन्द्वे कीटकुम्भझषेषु च । सिंहवद्वेध एतेषु वामदक्षिणसंमुखे । राहुकेत्वर्कसौरारैः पापैर्विद्धो युतोऽशुभः । तदन्यैर्युतविद्धस्तु लग्नराशिः शुभप्रदः । एकोनविंशतिः कर्के सिंहे सप्तदशैव तु । षट्त्रिंशदबलायाञ्च षड्विंशतिस्तुलाधरे । वृश्चिके सिंहवत् ज्ञेय मूनत्रिंशच्छरासने । षड्विंश मकरे ज्ञेयं कुम्भे सप्तदश स्मृता । नवयुग्मे तथा मीने मेषे षड्दशभिस्तथा । वृषभे च यथा सिंहे युग्मेऽङ्कहरलोचने । त्रितयाङ्कादियं संख्या दिनमासाब्दनिर्णये । एकाङ्कात् द्विगुणाङ्काद्वा क्वचित् दृष्टेश्च सम्भवः । वारेशादर्द्धयामेषु रात्रशङ्कोः पञ्चषट् क्रमात् । अधिपाः स्युर्ग्रहास्तत्र यथार्काहे भवन्ति हि । वरोज्येन्दुभृगुज्ञाजशनिसूरवयो निशि । रविशुक्रचन्द्रात्रीशशनीज्यकुजभास्कराः । दिने तूह्याः परेष्वेवं तथा न्द्रचाष्टतुर्ग्रहाः । पापदण्डे भवेद्दृष्टिः शुभदण्डे शुभं भवेत् । शुभग्रहस्य दण्डे तु कर्मारम्भाच्छुभं भवेत् । आरम्भात् पापदण्डे तु कर्म निष्फलतां व्रजेत् । यस्यार्द्धयामस्तस्यैव प्राग्दण्डः समुदाहृतः । षट्षट् परीत्य दण्डाश्च त्रयो रात्रौ मतास्तथा । आदित्ये भृगुजो बुधोऽपि च शशी सोमे शनीज्यौ कुजो भौमेऽर्कः सितसोमजौ च शशिजे सोमः शनिर्वाक्पतिः ।

जीवेऽङ्गाररवी भृगुर्भृगुसुते सौमेन्दुमार्त्तण्डजाः। काले जीवमहीजतिग्मकिरणा रात्रौ च दण्डाधिपाः। यामार्द्धाधिपसंख्यातो द्वितीयस्तु तदर्द्धतः। तदर्द्धात्तु तृतीयः स्यात्तदर्द्धात्तु तुरीयकः। अङ्गाभावे तु राहुः स्यात्तदङ्गो वसुसंख्यकः। भग्नाङ्कस्य परित्यागाद्दिवादण्डाधिपा यथा। रविदनुजबुधग्लौश्चन्द्रसुरासुरज्ञा कुजरविदनुजज्ञाः ज्ञेन्दुसुरासुराश्च। गुरुशशिरविदैत्याः शुक्रभौमार्कदैत्याः शनिकुजरविदैत्या दण्डपाद्यर्द्धयामे"। दनुजो राहुः। अर्द्धयामे। दिनार्द्धप्रहरे। शुभदण्डमाह। "शेषावर्कस्य दण्डौ सततशुभकरावादिशेषौ तथेन्दोः शेषो दण्डः कुजस्याप्यथ गुरुबुधयोराद्यमाद्यं प्रशस्तम्। आदिर्दण्डस्तथैको भृगुकुलनृपतेः सर्वकार्य्ये हि शस्तः। दण्डाश्चत्वार एते क्वचिदपि समये नैव सौरेः प्रशस्ताः। प्रतिदण्डं पलान्येषां ज्ञात्वा वाच्यं क्वचिच्छुभम्। रवौ च वेदा वसवः सुधांशौ कुजे चराणां शशिजे तथाङ्गाः। शनाद्दतुर्दिक् च वृहस्पतौ स्याद्राह्वौ तुरङ्गा भृगुजे च रुद्राः। अशुभे दण्डसंयोगे सर्वत्र पुण्यवर्जिते। बालस्य मरणं शीघ्रं यदि पापैः समन्वितम्। अशुभग्रह दण्डे तु सर्वत्र पापवर्जिते। बालस्य कुशलं सर्वं शुभैर्यदि समन्वितम्। अशुभो दण्डनाथो हि वेधश्चेत्तेन लभ्यते। मरणं तत्र वक्तव्यं बालस्य नान्यथा भवेत्। पापस्य दण्डमात्रे तु तद्योगवेधवर्जिते। बालस्य कुशलं तत्र शुभैर्यदि समन्वितम्"। इति पताकौवेधः।

"पापास्त्रिकोणकेन्द्रे सौम्याः षष्ठाष्टमव्ययगताः। सूर्य्योदये प्रसूतः सद्यः प्राणांस्त्यजति जन्तुः"। सूर्य्यरिष्टम्। "षष्ठेऽष्टमे च चन्द्रः सद्यो मरणाय पापसंदृष्टः। अष्टाभिश्च शुभैर्दृष्टो वर्षैर्मिश्रैस्तदर्द्धेन"। चन्द्ररिष्टम्। "सुतमदननवान्त्यलग्नरन्ध्रेष्वशुभयुतो मरणाय शीतरश्मिः। भृगुसुतशशिपुत्रदेव-

पूर्ण्यैर्यदि बलिभिर्न युतोऽवलोकितो वा"। पापयुतचन्द्र-रिष्टम्। "द्यूनचतुरस्रसंस्थे पापद्वयमध्यगे शशिनि जातः। विलयं प्रयाति नियतं देवैरपि रक्षितो बालः"। पापमध्यग-चन्द्ररिष्टम्। "क्षीणे शशिनि विलग्ने पापैः केन्द्रेषु मृत्यु-संस्थैर्वा। भवति विपत्तिरवश्यं जवनाधिपतेर्मतञ्चैतत्"॥ क्षीणचन्द्ररिष्टम्। "नाग ८। गो ९। सिद्ध २४। जातौ २२। इषु ५। क्ष्मा १। अब्धि ४। त्र्यक्षि २३। धृति १८। नखाः २०। क्ष्माग्नि २१। दिक् १०। चेत्यजाद्यंशे तत्तुल्याब्दैर्विधौ व्यसुः"। मेषादीनां त्रिंशांशविशेषस्थचन्द्ररिष्टम्। "भौमे विलग्ने शुभदैरदृष्टः षष्ठेऽष्टमे वार्कसुतेन युक्तः। सद्यः शिशुं हन्ति वदेन्मुनीन्द्रः स्मरे यमारौ न शुभे क्षितौ च"। त्रिविध-भौमरिष्टम्। "कर्कटधामनि सौम्यः षष्ठाष्टमराशिगोविलग्न-स्थात्। चन्द्रेण दृष्टमूर्त्तिर्वर्षचतुष्टयेन मारयति"॥ बुधरिष्टम्। "वृहस्पतिर्भौमगृहेऽष्टमस्थः सूर्य्येन्दुभौमार्कजदृष्टमूर्त्तिः। वर्षै-स्त्रिभिर्भार्गवदृष्टिहीनो लोकान्तरं प्रापयति प्रसूतम्"॥ वृह-स्पतिरिष्टम्। "रविशशिभवने शुक्रो द्वादशरिपुरन्ध्रगोऽशुभैः सर्वैः। दृष्टः करोति मरणं षड्भिर्वर्षैः किमिह विचित्रम्"॥ शुक्ररिष्टम्। "मारयति षोड़शाहात् शनैश्वरः पापवीक्षितो लग्ने। संयुक्तो मासेन वर्षाच्छुद्रस्तु मारयति"॥ त्रिविध-शनिरिष्टम्। "राहुश्चतुष्टयस्थो मरणाय वीक्षितो भवति पापैः। वर्षैर्वदन्ति दशभिः षोड़शभिः केचिदाचार्य्याः॥ घटसिंहवृश्चिकोदयकृतस्थितिर्जीवितं हरति राहुः। पापैर्नि-रीक्ष्यमाणः सप्तमितैर्निश्चितैर्वर्षैः"॥ राहुरिष्टम्। "केतुर्य-स्मिन्नृक्षेऽभ्युदितस्तस्मिन् प्रसूयते जन्तुः। रौद्रे सर्पमुहूर्त्ते वा प्राणैः संत्यजते चाशु"॥ केतुरिष्टम्। लग्ने ये द्रेक्काणा निगड़ाहिविहङ्गमपाशधरसंज्ञाः। मरणाय सप्तवर्षे क्रूरयुतान्

स्वपति दृष्टाः। द्रेक्काणरिष्टम्। "मीनकर्कटयोरन्त्यौ वृश्चिकस्याद्यमध्यमौ। सर्पास्त्वार एवैते द्रेक्काणा निगडाश्च ते॥ तुलामध्यान्तसिंहाद्य कुम्भाद्याः पश्चिमः स्मृताः। वृषाद्यमकराद्यन्ता द्रेक्काणाः पाशधारिणः॥ लग्नाधिपजन्मपती षष्ठाष्टमरिपुफगौ प्रसवकाले। अस्तमितौ मरणकरौ राशिप्रमितैर्वदेद्वर्षैः"॥ जन्मपतिर्जन्मराश्यधिपः लग्नाधिपजन्माधिपरिष्टम्। "सौम्याः षष्ठाष्टमगाः पापैर्वक्रोपगतैर्दृष्टाः। मासेन मृत्युदास्ते यदि न शुभैस्तत्र संदृष्टाः"॥ सौम्यग्रहरिष्टम्। "एकः पापोऽष्टमगः शत्रुग्टहे शत्रुवीक्षितो वर्षात्। मारयति नरं प्रसूतं सुधारसो येन पीतोऽपि"॥ पापग्रहरिष्टम्। "होरायाः सप्तमे सौरिर्हिबुकस्थश्च भास्करः। यस्मिन् योगे तु यो जातः सोऽल्पायुर्भवति प्रिये॥ वसुषष्ठगते जीवे समसप्तगते शनौ। द्वादशस्थो यदा भानुर्वर्षमेकं न जीवति॥ प्रतिपद्युत्तराषाढ़ा नवम्यामिव कृत्तिका। पूर्वभाद्रपदष्टम्यामेकादश्याञ्च रोहिणी॥ द्वादश्याञ्च यदाश्लेषा त्रयोदश्यां यदा मघा। एभिर्जातो न जीवेत यदि शक्रसमो भवेत्"॥ इति शिशुरिष्टम्।

"लग्नाच्चतुर्थगः पापो यदि स्याद्बलवत्तरः। तदा मातृवधं कुर्य्यात्तत्केन्द्रे चापरो यदि॥ केन्द्रत्रिकोणगः पापो मातृहा सप्तवासरात्। सपापात् भार्गवात् पापो हिबुके मातृनाशकृत्॥ चन्द्रमा यदि पापेन त्रयेणैवेह वीक्षितः। मातृनाशो भवेत्तस्य षष्ठः पापो भवेद् यदा"॥ इति मातृरिष्टम्। "कर्मस्थाने स्थिते सौम्ये रिपुस्थाने च चन्द्रमाः। कुजे च सप्तमस्थाने म्रियते पितृसंज्ञकः॥ तमोऽहा यदि पापेन त्रयेणैव हि वीक्षितः। शुभैरयुतदृष्टश्च पितुरप्यन्तमादिशेत्"॥ इति पितृरिष्टम्। "लग्नाच्चतुर्थो रविजोऽथ भौमः कर्मस्थितो मातृवियोगदुःखम्। ददाति शीघ्रं खलु सप्तमे च तातस्य

मृत्युं यदि लग्नसंस्थः ॥ दिवाकरेन्दोः स्मरगौ कुजार्कजौ रोगप्रदौ पुंगवयोषितस्तदा । व्ययस्थगौ मृत्युकरौ युतौ यदा तदेकदृष्टा मरणाय कल्पितौ ॥ यमवक्रौ द्युने चार्कात् पुंसो रोगप्रदौ स्त्रियाश्च चन्द्रात् । तन्मध्यगयोर्मृत्युस्तदेकयुतदृष्ट-योश्चापि" ॥ इति माता पितृद्वायोगः ।

"एकोऽपि केन्द्रभवने नवपञ्चमे वा भास्वन्मयूखविमलो-कृतदिग्विभागः । निःशेषदोषमपहृत्य शुभं प्रसूतं दीर्घायुषं विगतरोगभयं करोति" ॥ सर्वारिष्टभङ्गः । "सौम्यग्रहैरति-बलैर्विबलैश्च पापैर्लग्नञ्च सौम्यभवनं शुभदृष्टिदृष्टम् । सर्वा-पदा विरहितो भवति प्रसूतः पूजाकरः खलु यथा दुरिते-शानाम् ॥ चन्द्रः पूर्णतनुः सौम्यर्क्षगतः स्थितः शुभस्यांशे । प्रकरोति रिष्टभङ्गं विशेषतः शुक्रसंदृष्टः ॥ सौम्यद्वयान्तरगतः संपूर्णस्निग्धमण्डलः शशभृत् निःशेषरिष्टहन्ता भुजङ्गलोकस्य गरुड़ इव । स्वोच्चस्थः स्वगृहेऽपि वा स्वसुहृदां वर्गेऽपि सौम्ये-ऽपि वा संपूर्णः शुभवीक्षितः शशधरो वर्गे स्वकीयेऽपि वा । शत्रूणामवलोकनेन रहितः पापैरयुक्तो स्थितो रिष्टिं हन्ति सुदुस्तरां दिनपतिः प्रालेयराशिं यथा ॥ शुक्रः पञ्चसहस्राणि बुधः पञ्चशतानि च । लक्षमेकन्तु दोषाणां हन्याच्चैवोदिते गुरुः ॥ सप्ताष्टषष्ठाः सौम्या हरन्ति शशिनः कष्टफलम् । पापैरमिश्रचाराः कल्याणष्टतं यथोन्मादम् ॥ पक्षे सिते भवति जन्म यदि क्षपायां कृष्णे तथाहनि शुभाशुभदृष्टमूर्त्तिः । तं चन्द्रमा रिपुविनाशगतोऽपि यत्नादापत्सु रक्षति पितेव शिशुं न हन्ति । तुलाकोदण्डमीनस्थो लग्नस्थश्च शनिर्यदा ॥ सर्वारिष्टिं निह-न्त्याशु शेषे जातो भवेद्वसुः । राहुस्त्रिषष्ठलाभे लग्नात् सौम्यैर्निरीक्षितः सद्यः नाशयति सर्वारिष्टिं मारुत इव तूल-सङ्घातम् । अजवृषभकर्किलग्ने रक्षति राहुः समस्तरिष्टिभ्यः ।

पृथिवीपतिः प्रसन्नः कृतापराधं यथा पुरुषम्" ॥ भौमपराक्रमे। "निधनारिगते चन्द्रे लग्नांशं जायते यदि। अथ केन्द्रगते जीवे जीवेद्वर्षशतं नरः॥ कर्कटस्थो यदा जीवः सप्तमो भार्गवो यदि। बुधे च लग्नसंप्राप्ते शतं जीवति बालकः" ॥ इति रिष्टभङ्गः। "स्वर्चस्थैश्च चतुष्टयेऽथ बलिभिः स्वोच्चस्थितैर्वा ग्रहैः शुक्राङ्गारकमन्दजीवशशिजैरेतैर्यथानुक्रमम्। मालव्यो रुचकः शशोऽथ कथितो हंसश्च भद्रस्तथा माहात्म्यात् पुरुषाः कुलाधिकतया ख्यात्यादिभाजः सदा। विद्यावान् जनसुभगः सत्यरतो धार्मिकः सदा पुरुषः॥ बान्धवसुहृदुपकर्त्ता केन्द्रकोणे स्थिते जीवे। स्वोच्चस्थितः शुभफलं प्रकरोति पूर्णं नीचर्क्षगस्तु विफलं रिपुमन्दिरेऽल्पम्॥ पादं फलस्य हितभे स्वगृहे तथार्द्धं पादत्रयं शुभखगः स्थितवांस्त्रिकोणे। नीचर्क्षगः सकलमेव करोति दोषं नूनञ्च किञ्चिदरिभे विफलं सुतुङ्गे। पादत्रयं हितगृहे विहगः शुभोऽर्द्धं स्वर्क्षे फलञ्च चरणं स्थितवांस्त्रिकोणे" ॥ इति भावफलम्। "यत्र तत्र स्थितो भौमो गुरुणापि समायुतः। तत्रोच्चफलमाप्नोति स्वादुच्चे त्रिगुणं फलम्" ॥ राजयोगमाह। "नीचस्थिते जन्मनि यो ग्रहश्च तद्राशिनाथोऽपि तदुच्चनाथः। यदा त्रिकोणे यदि केन्द्रवर्त्ती भवेत्तदासौ नृपचक्रवर्त्ती॥ अन्धं दिगम्बरं मूर्खं परपिण्डोपजीविनम्। कुर्य्यातामतिनीचस्थौ पुरुषं शशिभास्करौ॥ वक्रिणास्तु महावीर्य्याः शुभा राज्यप्रदा ग्रहाः। पापा व्यसनदाः सर्वे कुर्वन्ति च वृथाटनम्" ॥

अथ जन्मराशिफलम्। "मेषः सौख्यमुपैति गर्वमपि गोर्नानामतिर्मन्मथे क्रूरः कर्कटके धृतिर्वनचरे कन्या च मायाविनी। सत्यं रौति तुलाप्यलौ मलिनता चापस्तु पापाश्रयो मौर्ख्यं मकरे घटे चतुरता मीने च धीरा मतिः

क्रूरः स्वल्पेऽप्यपराधे बहुवैरानुबन्धकृत्"। इष्टवियोगानिष्टप्राप्तौ चित्तस्य यथा पूर्वमवस्थानम्। अस्थिरविभूतिमित्रं चलमटनं स्खलितनियममपि चरभे। तद्विपरीतं समान्वितं दीर्घसूत्रञ्च। द्विशरीरे त्यागयुतं कृतज्ञमुत्साहिनञ्च विविधचेष्टम्। ग्राम्यारण्यजलोद्भवराशिषु जातास्तथा शीलाः। अदीर्घसूत्रश्च भवेत् सर्वकर्मसु पार्थिवः। दीर्घसूत्रस्य भूपतेः कर्मनष्टं भवेत् ध्रुवम्। रागे दर्पे च माने च द्रोहे पापे च च कर्मणि। अप्रिये चैव कर्त्तव्ये दीर्घसूत्रं प्रशस्यते"॥ इति राशिफलम्।

अथ जन्मनक्षत्रफलम्। "शतानलादित्यविशाखमैत्रशक्रोद्भवामिश्रगुणाः प्रदिष्टाः। शिवाजहस्ता हि भवाजघन्याः शेषोद्भवाः सत्पुरुषा भवन्ति॥ कालात्मा दिनकृत् मनस्तुहिनगुः सत्त्वं कुजोज्ञोवजोजीवोज्ञानसुखे सितश्च मदनो दुःखे दिनेशात्मजः। राजानौ रविशीतगू क्षितिसुतो नेता कुमारो बुधः। सूरिर्दानवपूजितश्च सचिवौ प्रेष्यः सहस्रांशुजः"॥ समुत्साहः शौर्य्यमिति भट्टोत्पल नेता सेनाध्यक्षः। "बलाबलात् ग्रहाणां स्यादात्मादीनां बलाबलम्। नृपाद्याः प्रबला कुर्य्युः स्वं रूपं शनिरन्यथा"॥

सत्याचार्य्यः। "षट्सूर्य्यस्य दशा ज्ञेयाः शशिनो दश पञ्च च। अष्टावङ्गारके प्रोक्ता बुधे सप्तदश स्मृता॥ शनैश्चरे दश प्रोक्ता गुरोरेकोनविंशतिः। राहौ द्वादशवर्षाणि भृगोरप्येकविंशतिः। दिक्षु त्रयं त्रयं ज्ञेयं विदिक्षु च चतुष्टयम्। कृत्तिकादिप्रदातव्यं दिगम्बरमता दशा॥ कृत्तिकादित्रये सूर्य्यः सोमो रौद्रचतुष्टये। मघादित्रितये भौमो बुधो हस्तचतुष्टये॥ अनुराधा त्रये सौरिर्गुरुः पूर्वचतुष्टये। धनिष्ठात्रितये राहुः शेषे शुक्रः प्रकीर्त्तितः॥ सूर्य्योपप्लव-

भौमार्किंदशातिकष्टदा नृणाम्। गुरुबुधचन्द्रशुक्राणां यथेप्सित-फलप्रदा" ॥ वराहः "स्वशाकहीनशाकाब्दात् प्रत्यब्दं पञ्च वासरान्। तिथींश्च चन्द्रशिखिनी क्ष्मागुणौ च कृताश्विनौ ॥ दण्डपलविपलान्यनुपलानि च सावने। वर्द्धयित्वा ऋचशेष-भोग्यात्तु गणनक्रमात्" ॥ अन्तर्दशाज्ञानमाह। "स्वदशाभि-र्दशां हत्वा नवभिर्भागमाहरेत्। लब्धा मासास्तु तच्छेषं पूरयित्वा तु त्रिंशता ॥ अङ्कैर्हृत्वा दिनं लभ्यं तच्छेषे षष्टि-पूरिते। नवभिश्च हृते लब्धा ज्ञेया दण्डास्तदन्तरे ॥ रवेः षड्वर्षमध्ये तु वेदा ४ मासा रवेर्निजाः। चन्द्रस्य दश मासाश्च दिक्दिनं पञ्च मासकाः ॥ कुजस्य चास्य रुद्रास्तु मासादिक्-दिवसाः शनेः। ऋतुमासाद्युविंशश्च गुरोर्वर्षाद्युविंशतिः ॥ राहोर्मासाष्टका ज्ञेया भृगोर्वर्षस्तु मासकौ। एवं ग्रहाणा-मन्येषामूह्याश्चैवान्तरोदयः ॥ यद्ग्रहस्यान्तरे यस्तु यत् संख्यं कालमाप्तवान्। तत् संख्यं स्वान्तरे तस्मै स दद्यादिति निश्चयः ॥ स्वान्तरग्रहणे स्वांशं स्वांशेन पूरयेत् सदा" ॥ दशा-फलन्तु। "उद्विग्नचित्तपरिखेदितवित्तनाशक्लेशप्रवासगद-पीड़ितपञ्चघातैः। संक्षोभितस्वजनबन्धुवियोगदुःखैर्भानोर्दशा भवति कष्टकरी नराणाम्" ॥ र। "सौख्यं विभर्ति वर-वाहनयानरत्नकीर्त्तिप्रतापबलवीर्य्यशुभान्वितञ्च। मिष्टान्नपान-शयनासनभोजनानि चान्द्री ददाति धनकाञ्चनभूमिशङ्खम्" ॥ च। "शस्त्राभिघातवधबन्धनरेन्द्रपीड़ाचिन्ताज्वरं विकलताञ्च गृहे करोति। चौराग्निदाहभयभङ्गविपत्तिरोगकीर्त्तिप्रताप-धनहा च दशा कुजस्य" ॥ म। "दिव्याङ्गनावदनपङ्कजषट्-पदत्वं लीलाविलासशयनासनभोजनञ्च। नानाप्रकारविभ-वागमकोषवृद्धिः क्षिप्रं भवेद्बुधदशासु हितार्थसिद्धिः" ॥ बु। "मिथ्यापवादवधबन्धनकार्य्यहानिमालस्ययुक्प्रियसुखद्रविणे-

विहीनः । मित्रेषु वैरमभिवाञ्छति वैरयुक्तः कष्टासु पापदशासु शनैश्चरस्य" ॥ श । "रम्यं गृहं विनयसञ्चयमानवृद्धिं प्राप्नोति सौख्यधनधान्यविभूतियोगम् । धर्मार्थकामसुखभोगबहुप्रयुक्तं यावत् वृहस्पतिदशा पुरुषो हि तावत्" ॥ वृ । "वुद्धाविहीनमतिनाशवियोगदुःखं नष्टार्थसिद्धिभयभङ्गविषार्त्तिरोगम् । सन्तापशोकपरदेशगतं करोति राहोर्दशा भवति जीवनसंशयाय" ॥ रा । "मन्त्रप्रभावनिपुणः प्रमदाविलासः श्वेतातपत्रनृपपूजितदेशलाभः । हस्त्यश्वलाभधनपूर्णमनोरथः स्यात् शौक्रीदशा भवति निश्चलराजलक्ष्मीः" ॥ शु । रवेः स्थूलदशावर्षाणि ६ । तस्यैवान्तर्दशा मासाः ४ । तत्फलम् । "उद्विग्नचित्तपरिखेदितवित्तनाशक्लेशप्रवासगदभीतिमहाभिघातान् । दुःखप्रवासवधबन्धभयानि चैव भानोर्दशा प्रकुरुते खलु राजपीड़ाम्" ॥ रर । सोमस्य मासाः १० । तत्फलम् । "मदसङ्कटसन्त्रासं स्वेच्छाहानिं धनक्षतिम् । कुरुते रजनीनाथो भानोरन्तर्दशां गतः" ॥ रच । कुजस्य मासाः ५ । दिनानि १० । फलम् । "स्वर्णप्रवालसौख्यानि रत्नानि कीर्त्तिमुत्तमाम् । ददाति भूसुतोऽभीष्टं भानोरन्तर्दशाङ्गतः" ॥ रम वुधस्य मासाः ११ । दिनानि १० । "दद्रुं विचर्चिकाञ्चैव वलदुष्टादिबाधकान् । चन्द्रजः कुरुते शोकं भानोरन्तर्दशां गतः" ॥ वुर । शनेर्मासाः ६ दिनानि २० । फलम् । "सन्तापं वित्तनाशञ्च बन्धुनाशं पराजयम् । सौरिः करोति वैकल्यं भानोरन्तर्दशाङ्गतः" ॥ रश । गुरोर्वर्षादि १ । ० । २० । "धर्मार्थकामसौख्यानि ददाति विबुधार्च्चितः । कुष्ठादिव्याधिहन्ता च भानोरन्तर्दशां गतः" ॥ रवृ । राहोर्मासाः ८ । "अशुभाशुभवोद्वेगं व्याधिभीतिसुतक्षयान् । कुरुते सिंहिकासूनू रवेरन्तर्दशाङ्गतः" ॥ ररा । शुक्रस्य वर्षं १ । मासौ २ ।

"कोष्ठग्रीवाशिरोरोगज्वरान् शूलादिदारुणान्। शोकं करोति भृगुजः सूर्य्यस्यान्तर्दशाङ्गतः" ॥ रशु। एवं रवेर्वर्षाणि। ६। चन्द्रस्य स्थूलदशावर्षाणि १५। तस्यैवान्तर्दशावर्षं २। मासः १। फलम्। "कुर्य्याद्विभूतिवरवाहनमातपत्रक्षेमप्रतापबलवीर्य्य-समन्वितानि। मिष्टान्नपानशयनासनभोजनानि चान्द्रीदशा प्रचुरकाञ्चनभूमिदात्री" ॥ चच। कुजस्य वर्षं १। मासाः ८। दिनानि १०। फलम्। "पित्तशोणितपीड़ाञ्च चौरागाञ्च भयं तथा। मङ्गलः कुरुते नित्यं विधोरन्तर्दशाङ्गतः" ॥ चम। बुधस्य वर्षं २। मासाः ४। दिनानि १०। "सर्वत्र द्रव्यलाभञ्च गजाश्वगोधनानि च। चन्द्रजः कुरुते सौख्यं विधोरन्तर्दशां गतः" ॥ चबु। शनेर्वर्षं १। मासाः ४। दिनानि २०। "बन्धु-क्लेशं नृपाद्भीतिं व्यसनं शोकशङ्कुलम्। विनाशं कुरुते शौरि-श्चन्द्रस्यान्तर्दशाङ्गतः" ॥ चश। गुरोर्वर्षं २। मासाः ७। दिनानि २०। "दानसौख्यानि सम्भोगवस्त्रालङ्कारभूषणम्। कुरुते विबुधाचार्य्यो विधोरन्तर्दशाङ्गतः" ॥ चवृ। राहो-र्वर्षं १। मासाः ८। "वह्निशत्रुभयं दुःखं शोकं बन्धुधनक्षयम्। कुरुते राहुरत्यर्थं चन्द्रपाकदशाङ्गतः" ॥ चरा। शुक्रस्य वर्षं २। मासाः ११। "सेव्यते वरनारीभिर्नरो लक्ष्मीः प्रवर्त्तते। मुक्ता-हारमणिप्राप्तिर्विधोरन्तर्गते सिते" ॥ चशु। रवेर्मासाः १०। "ऐश्वर्य्यं बहुसौख्यञ्च व्याधिनाशमरिक्षयम्। नृपतेजो रविः कुर्य्यात् विधोः पाकदशाङ्गतः"। चर। एवं चन्द्रस्य वर्षाणि १५ कुजस्य स्थूलवर्षाणि ८। तस्यान्तर्दशा मासाः ७। दिनानि ३। दण्डाः २०। "क्रूराभिघातवधबन्धभयानि धत्ते चिन्ताज्वरं विकलशून्यगृहाश्रमञ्च। चौराग्निभीतिधनहानिनरेन्द्रपीड़ाः कुर्य्याद्विनाशनिधनञ्च दशा कुजस्य" ॥ मम। बुधस्य वर्षं १। मासाः ३। दिनानि ३। दण्डाः २०। "परमैश्वर्य्य-

मतुलं नानाविधसुखाश्रयम् । करोति सोमपुत्रश्च चितिजान्तर्दशाङ्गतः" ॥ मबु । शनेर्मासाः ८। दिनानि २६। दण्डाः ४०। "रिपुचौराग्निभीतिश्च रोगमन्तरमन्तरम्। महाजनकृतो द्वेषः कुजस्यान्तर्गते शनौ" ॥ मश। गुरोर्वर्षं १। मासाः ४। दिनानि २६। दण्डाः ४०। "पुष्पधूपान्नवस्त्राद्यैर्देवब्राह्मणपूजनम्। नृपतुल्यत्वमाप्नोति कुजस्यान्तर्गते गुरौ"। मवृ। राहोर्मासाः १०। दिनानि २०। "कार्य्यार्थनाशं सर्वत्र बन्धचौरादिसाध्वसम्। कुरुते सिंहिकापुत्रो भौमस्यान्तर्दशां गतः" ॥ मरा। शुक्रस्य वर्षं १। मासाः ६। दिनानि २०। "धनवृद्धिसुखादींश्च नानावस्त्रं वरस्त्रियः। प्राप्नोति विपुलां लक्ष्मीं कुजस्यान्तर्गते भृगौ" ॥ मशु। रवेर्मासाः ५। दिनानि १०। "नानारत्नञ्च सौख्यञ्च भूमिलाभमथापि वा। नृपपूजामवाप्नोति कुजस्यान्तर्गते रवौ" ॥ मर। सोमस्य वर्षं १। मासाः १। दिनानि १०। "धनलाभं सुखं भोगं शरीरारोग्यमेव च। लोकानन्यमवाप्नोति चितिजान्तर्गते विधौ" ॥ मच। एवं कुजस्य वर्षाणि ८। अथ बुधस्य स्थूलदशा वर्षाणि १७। तस्यान्तर्दशा वर्षं २। मासाः ८। दिनानि ३। दण्डाः २०। फलम्। "दिव्याङ्गनावदनपङ्कजषट्पदत्वं लीलाविलासवरभोगसुखोदयञ्च। नानाप्रकारविभवागमकोषवृद्धिं चिप्रं सृजेद्बुधदशा विपुलाञ्च सिद्धिम्" ॥ बुबु। शनेर्वर्षं १। मासाः ६। दिनानि २६। दण्डाः ४०। "वातश्लेष्मकृता पीड़ा विरहो बन्धुभिः सह। विदेशगमनञ्चैव बुधस्यान्तर्गते शनौ" ॥ बुश। गुरोर्वर्षं २। मासाः ११। दिनानि २६। दण्डाः ४०। "व्याधिशत्रुभयैस्त्यक्तो धनाढ्यो नृपवल्लभः। लभेद्भार्य्यां सुपुत्रञ्च बुधस्यान्तर्गते गुरौ" ॥ बुवृ। राहोर्वर्षं १ मासाः १०। दिनानि २०। "बन्धुनाशं मनस्तापं देशत्यागञ्च बन्धनम्। करोति बहु-

दुःखानि बुधस्यान्तर्गतं तमः" ॥ तमो राहुः। बुरा। शुक्रस्य वर्षाणि ३। मासाः ३। दिनानि २०। "धनाढ्यं बहुपुत्रञ्च धर्मबुद्धिं धनागमम्। कुरुते दानवाचार्य्यो बुधपाकदशाङ्गत"॥ बुशु। रवेर्मासाः ११। दिनानि १०। "श्रिया परमयायुक्तं गजवाजिधनान्वितम्। प्रभाकरः करोत्याशु बुधपाकदशाङ्गतः" ॥ बुर। सोमस्य वर्षे २। मासाः ४। दिनानि १०। "कण्टकादिप्रवेशञ्च शृङ्गिभ्यो भयमेव च। निशाकरः करोत्याशु बुधपाकदशाङ्गतः" ॥ बुच। कुजस्य वर्षं १। मासाः ४। दिनानि ३। दण्डाः २०। "कफपित्तसमुद्भूतां शिरःपीड़ां भयावहाम्। मङ्गलः कुरुते शोकं बुधस्यान्तर्दशाङ्गतः" ॥ बम। एवं बुधस्य वर्षाणि १७। अथ शनेः स्थूलदशा वर्षाणि १०। तस्यान्तर्दशा मासाः ११। दिनानि ३। दण्डाः २०। "मिथ्याप्रवासवधबन्धनिराश्रयत्वं चौरादिभूपतिभुजङ्गमभीतिमुग्राम्। आशानिराससमथवार्जनकार्य्यहानिं पङ्गोर्दशा प्रकुरुते नियतं नराणाम्" ॥ शश। गुरोर्वर्षं १। मासाः ८। दिनानि ३। दण्डाः २०। "देवतानुरतं शान्तं नानाप्राप्तिं करोति च। तुङ्गसौख्यसमायुक्तं पङ्गोरन्तर्गतो गुरुः" ॥ शबृ। राहोर्वर्षं १। मासः १। दिनानि १०। "नृपाद्भयं ज्वरं घोरं दुःखञ्च प्राणसंशयम्। धनक्षयञ्च कुरुते शनेरन्तर्गतं तमः" ॥ शरा। शुक्रस्य वर्षं १। मासाः ११। दिनानि १०। "सुहृद्बन्धुधनैः पूर्णो भार्य्या वित्तसमन्वितः। स्वर्णं सुखञ्च लभते सौरस्यान्तर्गते सिते" ॥ शशु। रवेर्मासाः ६। दिनानि २०। "परदाराभिगमनं करोति खरदीधितिः। जीवनस्य च सन्देहं शनेरन्तर्दशाङ्गतः" ॥ शर। सोमस्य वर्षं १। मासाः ४। दिनानि २०। "स्त्रीनाशं कुक्षिरोगञ्च कफपित्तगदं शशी। बन्धुद्वेषञ्च कुरुते पङ्गोरन्तर्दशाङ्गतः"॥ शच। कुजस्य मासाः ८।

दिनानि २६। दण्डाः ४०। फलं "देहवैरस्यं महारोगं नाना-दुःखानि भूमिजः। धननाशञ्च कुरुते शनेरन्तर्दशाङ्गतः"॥ शम। बुधस्य वर्षं १। मासाः ६। दिनानि २६। दण्डाः ४०। "आयुरारोग्यविजयं बहुवित्तानि सोमजः। करोति चादरं लोके शनेरन्तर्दशाङ्गतः"॥ शबु। एवं शनेवर्षाणि १०। गुरोः स्थूलदशा वर्षाणि १९। तस्यैवान्तर्दशा वर्षाणि ३। मासाः ४। दिनानि ३। दण्डाः १०। "राज्यास्पदं तनयवित्तविनाशभोगान् पर्य्याप्तसौख्यधनधान्यसमाश्रयञ्च। विद्याप्रसादवररत्नसुखार्थभोगसिद्धिं दशा सुरगुरोः कुरुते श्रियञ्च"॥ वृवृ। राहोर्वर्षं २। मासः १। दिनानि १०। "बन्धुद्वेषं मृषावादं स्थानभ्रंशं निराश्रयम्। कलहं कारये-द्राहुर्गुरोरन्तर्दशाङ्गतः"॥ वृरा। शुक्रस्य वर्षाणि ३। मासाः ८। दिनानि १०। "कलहं बन्धुभिः सार्द्धं वित्तनाशं धन-क्षतिम्। स्त्रीवियोगञ्च कुरुते जीवस्यान्तर्गतः सितः"॥ वृशु। रवेर्वर्षं १। दिनानि २०। "बहुमित्रं बहुधनं सौभाग्यं राजवल्लभम्। कुरुते भास्करः शान्तिं गुरोरन्तर्दशाङ्गतः"॥ वृर। सोमस्य वर्षं २। मासाः ७। दिनानि २०। "भोगाढ्यो बहुभार्य्यश्च रिपुरोगविवर्जितः। नृपतुल्यो भवेच्चैव गुरोरन्त-र्दशाङ्गतः"॥ वृच। कुजस्य वर्षं १। मासाः ४। दिनानि २६। दण्डाः ४०। "तीव्रारोषो रिपोर्हन्ता गजवल्लीमदर्शनः। सुखसौभाग्यसंयुक्तः कुजे चान्तर्गते गुरोः"॥ वृम। बुधस्य वर्षं २। मासाः ११। दिनानि २६। दण्डाः ४०। "सुखो-ऽसुखः सुखीदुःखी शत्रुवृद्धिः पुनः पुनः। देवार्चनपरो नित्यं जीवस्यान्तर्गते बुधे"॥ वृबु। शनेर्वर्षं १। मासाः ९। दिनानि ३। दण्डाः २०। "वेश्याजनाश्रयात् सौख्यं भवे-द्वित्तविवर्जितः। लुप्तनीतिमना नित्यं गुरोरन्तर्गते शनौ"॥

वुश । एवं गुरोर्वर्षाणि १९ । राहो स्थूलदशा वर्षाणि १२ । तस्यान्तर्दशा वर्ष १ । मासाः ४ । "भार्य्यादिदूषणनिदान-विवादबन्धशस्त्राभिघातभयहीनपराक्रमश्च । अप्राप्तसौख्यधन-काञ्चनहीनदेहो राहोर्दशा भवति जीवनसंशयाय" ॥ रारा । शुक्रस्य वर्षं २ । मासाः ४ । फलम् । "शिरोरोगं कुदेहञ्च कुर्य्याद्भार्य्यांञ्च चञ्चलाम् । बान्धवैः कलहो नित्यं राहोरन्त-र्गते भृगौ" ॥ राशु । रवेर्मासाः ८ । "शिरोरोगभयं घोरं मृत्युशोकञ्च दारुणम् । वृहदग्निभयं कुर्य्याद्राहोरन्तर्गतो रविः ॥ रार । सोमस्य वर्षं १ । मासाः ८ । "स्त्रीपुत्रकलह-ञ्चैव वित्तनाशं मनःक्षतिम् । करोति क्लेशमत्यन्तं राहोरन्त-र्गतो विधुः" ॥ राच । कुजस्य मासाः १० । दिनानि २० । "विषशस्त्राग्निचौरेभ्यो नियतं दारुणं भयम् । पातस्यान्त-र्गतः कुर्य्यान्नरस्य भूमिनन्दनः" ॥ राम । बुधस्य वर्षं १ । मासाः १० । दिनानि २० । "ज्वरक्षुदक्षिपीडाञ्च कलहं स्वजनैः सह । भृत्यापत्येषु विद्वेषं कुर्य्यात् पातान्तरे बुधः" ॥ राबु । शनेर्वर्षं १ । मासः १ । दिनानि १० । "स्त्रीपुत्रैः कलहो नित्यं बान्धवैः सह वैरिता । भवेत्तु बहुधा दुःखं राहोरन्तर्गते शनौ" ॥ राश । गुरोर्वर्षं २ । मासः १ । दिनानि १० । "व्याधिदुःखभयैस्त्यक्तो देवब्राह्मणपूजकः । कार्य्य-सिद्धिर्भवेदिष्टा राहोरन्तर्गते गुरौ" ॥ राबृ । एवं राहोर्वर्षाणि १२ । शुक्रस्य स्थूलदशा वर्षाणि २१ । तस्यान्तर्दशा वर्षाणि ४ । मासः १ । फलम् । "मन्दप्रचाररुचिरप्रमदाविलास-सम्मानदाननृपपूजनकोषलाभान् । हस्त्यश्वयानपरिपूर्णमनो-रथञ्च शौक्री दशा सृजति निश्चलराजलक्ष्मीम्" ॥ शुशु । रवेर्वर्षं १ । मासौ २ । "देहस्तीव्रव्रणाक्रान्तस्तीव्रतापो-ऽधनान्वितः । त्यक्तः स्वाद्बान्धवैः सर्वैर्भार्गवान्तर्गते रवौ" ॥

शुर। सोमस्य वर्षे २। मासाः ११। "सम्मानलाभो रोगश्च कर्म्मनाशश्च नित्यशः। शुक्रस्यान्तर्गते चन्द्रे स्त्रीनाशो नियतं भवेत्" ॥ शुच। कुजस्य वर्षं १। मासाः ६। दिनानि २०। "उत्साही धनधान्याढ्यः कल्यश्च सुमनाः सुखी। भूमिलाभो भवेच्चैव शुक्रस्यान्तर्गते कुजे" ॥ शुम। बुधस्य वर्षाणि ३। मासाः ३। दिनानि २०। "सर्वत्र लभते सौख्यं मानसञ्चयभूषणम्। भार्य्या सुशीलतामेति भार्गवान्तर्गते बुधे" ॥ शुबु। शनेर्वर्षं १। मासाः ११। दिनानि १०। "शत्रुक्षयमवाप्नोति मित्रवृद्धिश्च जायते। चौरादिस्तस्य लाभः स्याच्छुक्रस्यान्तर्गते शनौ" ॥ शुश। गुरोर्वर्षाणि ३। मासाः ८। दिनानि १०। "राजपूजा सुखं प्रीतिः कन्याजननमेव च। भार्गवान्तर्गते जीवे चौरान्नष्टञ्च लभ्यते" ॥ शुवृ। राहोर्वर्षे २। मासाः ४। "बन्धनं बन्धुपुत्रादेर्वसुनाशो रिपोर्भयम्। शरीरदैन्यमाप्नोति राहावन्तर्गते भृगोः" ॥ शुरा। एवं शुक्रस्य वर्षाणि २१। इत्यन्तर्दशाफलम्।

अथ प्रत्यन्तर्दशाफलम्। "ग्रहान्तरं दिनं कृत्वा षष्टिलब्धं ध्रुवं भवेत्। ध्रुवञ्च गणयेद्धीमान् रव्यादिक्रमतो यथा ॥ रवौ च वेदा वसवः सुधांशौ कुजे च बाणा नव चन्द्रपुत्रे। शनौ रसादिक् च वृहस्पतौ च राहौ तुरङ्गा भृगुजे च रुद्राः ॥ रवेरन्तरमध्ये तु वसवश्च रवेर्निजाः। चन्द्रस्य षोड़श प्रोक्ताः कुजस्य च दश स्मृताः ॥ बुधस्य वसुचन्द्रौ च द्वादशश्च शनेः क्रमात्। गुरोश्च विंशतिश्चैव राहोश्चतुर्दश स्मृताः ॥ एष एव विधिः प्रोक्तो भृगोर्द्वाविंशतिः क्रमात्। एवं दिनानि चान्येषां ज्ञात्वा प्रत्यन्तराणि च ॥ यस्मिन् प्रत्यन्तरे यस्तु यत्संख्यं दिनमाप्तवान्। तद्दिनस्य प्रमाणेन शुभाशुभफलं वदेत्" ॥ ध्रुवाणि ध्रुवाङ्काः वेदाङ्कैः पूरयित्वा यत्संख्यं तत्संख्यादिनं रवेः प्रत्यन्तर्दशायाम् एवमन्येषां ग्रहाणामित्यर्थः।

अथ वर्षपताको। "रविश्चन्द्रः कुजः सौम्यः शनिर्जीवस्तमो भृगुः। इन्द्रेशाद्यष्टरेखासु मध्ये केतुरिमेऽब्दपाः॥ कृत्तिकादिविराड्वृत्तिर्यथा केतौ मघा भवेत्। स्वनक्षत्राद्वर्षफलं ज्ञेयं केतोः पताकया॥ रविणा भ्राम्यते देशान् सन्तापव्याधिपीड़ितः। कान्तारसङ्कटं शोकं करोति च भयान्वितम्"॥ र। "चन्द्रे तुष्टिस्तथा पुष्टिः सुखसम्पत्तिरेव च। आरोग्यं लभते नित्यं धनपुत्रसमन्वितम्"॥ च। "भौमे सदा कार्य्यहानिः क्रूरकर्म्मणि योजनम्। चर्म्मरोगो भवेत्तत्र सन्तापश्च दिने दिने"॥ म। "बुधे बोधश्च कार्य्यञ्च कन्यालाभो महासुखम्। राजसम्मानभाङ्नित्यं धनलाभो दिने दिने"॥ बु। "जीवे विद्या सुखं मानं लोकपूजाधनागमः। सर्वाङ्गाभरणं कण्ठे स्वर्णहारविभूषणम्"॥ वृ। "शुक्रः पौरुषमाख्याति पुष्टिकर्मसुखानि च। मुक्तारत्नप्रवालञ्च राजसम्मानमेव च"॥ शु। "शनौ रोगभयं शोकं बन्धनं भयमेव च। अर्थहानिं कुवाक्यञ्च प्राणनाशं करोति च"॥ श। "रक्तस्रावो भवेदङ्गे राहौ द्वेषो जनस्य च। विदेशगमनञ्चैव वह्निवारिभयं तथा"॥ रा। "राजकार्य्यभयं चौर्य्यं गृहदाहश्च बन्धनम्। केतोर्वर्षे भवेद् घातस्तेषामन्तर्दिनानि तु"॥ के। अथाब्दवर्षगणः। "दिनत्रयं विंशदण्डान् खदशाभिः प्रपूरयेत्। वर्षेश्वरात् समारभ्य नाक्षत्रिकविधानतः॥ रवेर्नखा २० चन्द्रमसः खबाणाः ५० कुजेष्टयुग्मे २८ विदिषट् च पञ्चकं ५६ शनेर्गुणाग्नी ३३ गुरुतोऽग्निकाली ६३ राहोः खवेदा ४० भृगुतः खशैलाः ७०"। राहोरित्येकदेहत्वात् केतुपरमपि तेन राहुकेत्वोर्विंशतिर्विंशतिः इति वर्षफलम्। "लग्ने द्विपापे पतितस्त्रिपापे सङ्करोऽधमः। आत्महा स्याच्चतुष्पापे भवेदेके तु वाच्यता॥ वर्गोत्तमगते चन्द्रे चतुरादिभिरीक्षिते। विलग्ने

वा नृपजन्म भवति राज्यं नृपयोगे बलयुत दशायाम् ॥ कुल-तुल्यः कुलश्रेष्ठो बन्धुमान्यो धनी सुखी । क्रमात् नृपसमो भूयात् अर्काद्यैः स्वगृहस्थितैः" ॥ नृपादियोगः । "सूर्य्या-द्व्ययगैर्व्योशिर्द्वितोयगैश्चन्द्रवर्जितैर्वेशिः । उभयस्थितैर्ग्रहैन्द्रै-रुभयचरोणामतः कथिता" ॥ व्योश्यादियोगः । "रविवर्ज्जं द्वादशगैरनफाचन्द्रात् द्वितीयगैः सुनफा । उभयस्थितैर्दुरधुरा-केमद्रुमसंज्ञितोऽन्यः" ॥ अनफादियोगः । "मन्दद्दगस्थिर-वचनः परिभूतपरिश्रमो भवेद्वोशी । उदृष्टवचाः स्मृतिमान् स्तब्धगतिः सात्विको भवेद्वेशी ॥ सुभगो बहुभृत्यधनो बन्धूना-माश्रयो नृपतितुल्यः । नित्योत्साही हृष्टो भुनक्ति भोगानुभय-चर्य्याम्" ॥ व्योश्यादिफलम् । "सच्छीलं विषयसखान्वितं प्रभुं ख्यातियुक्तमनफायां सुनफायां धीधनकीर्त्तियुक्तमात्मा-र्जितैश्वर्य्यञ्च बहुभृत्यकुटुम्बारम्भमुद्विग्नचित्तमपि दौरधुरे । भृतकं दुःखिनमधनं जातं केमद्रुमे विद्यात्" ॥ अनफादि-फलम् । "एते न च यदा योगाः केन्द्रञ्च ग्रहवर्जितं शशाङ्कस्य । केमद्रुमोऽतिकष्टः शशिनि समस्तग्रहाद्दृष्टे लग्नादतीव वसुमान् वसुमान् शशाङ्कात् सौम्यग्रहैरुपचयोपगतैः समस्तैः द्वाभ्यां समोऽल्पवसुमांश्च तदूनतायाम् अन्येषु सत्स्वपि फलेष्विदमुत्-कटेन लग्नचन्द्रोपचयस्थशुभग्रहैर्वित्तज्ञानम् । अधमसमवरि-ष्ठान्यर्ककेन्द्रादिसंस्थे शशिनि विनयवित्तज्ञानधीनैपुणानि । अहनि निशि च चन्द्रे स्वेऽधिमित्रांशके वा सुरगुरुसितदृष्टे वित्त-वान् स्यात् सुखी च । सूर्य्यकेन्द्रादिस्थानत्रयस्थचन्द्रवशेन विनयादीनामधमादिनिर्णयः । प्रायः शुभाः समेता धनभोग-यशोऽन्वितं भूपतियुष्टम् । पापाश्च दुःखतप्तं कुर्वन्त्यधनं स्वदु-र्भगं दीनम्" ॥ ग्रहयोगफलं "बुधगुरुभार्गवदृष्टो विद्वान् दीर्घायुरर्थपरिपूर्णः । सुवचाः कृशशरीरधरः सुतधनसौख्यान्वितः

ख्यातः । रविग्रमिलोङ्गितदृष्टौ जातो मलिनोऽलसश्च रोगार्त्तः । निर्धनो विरूपदेहः प्रेष्यो मूढ़ः खलोऽतिदीनश्च । जीवेक्षितः पण्डितशान्तमूर्त्तिर्वेदार्थशास्त्रागमपारदृष्टिः । दीर्घायुरत्यन्तशुचिः सुशीलो जातः सुपूर्णां भजते विभूतिम् ॥ यं पश्यति भृगुतनयो लग्ने जन्मनि कटाक्षमात्रेण । सौरिः कुलाचलकुलिशः कुत्सितकुलजोऽपि राजा स्यात् ॥ शान्तात्मा चिरजीवी च सुशीलोऽपि बहुप्रजः । शोभनाङ्गो महाप्राज्ञश्चन्द्रदृष्टौ भवेन्नरः ॥ ह्यग्रादिग्रहसंदृष्टं प्रायेण शुभावहं भवति लग्नम् । एकेनापि शुभेन न च पापैरिष्यते सद्भिः ॥ लग्ने सर्वग्रहदृष्टे नृपतुल्योऽथवा भवेत् । शुभक्षेत्रे त्विदं वाच्यं पापर्क्षे रिष्टवर्जितम् ॥ लग्ने पापग्रहे रोगी दुर्बलः शत्रुपीड़ितः । शुभेक्षिते तु तत्रैव भवेत् परवधूरतः” ॥

अथ क्रमेण लग्नदृष्टिफलम् । “स्त्रीजितो मृदुवाक्यश्च स्थूलशेफाश्च शिल्पवित् । सच्छीलश्च सुरूपश्च दुःखी सूर्य्यादिवीक्षणात् ॥ सौम्यग्रहस्य वर्गे जातः सुखभाग्विनीतरुचिराङ्गः । धीधर्मख्यातियुतो विद्वान् दीर्घायुरतिसुभगः ॥ जातश्च पापवर्गे दुःखी मलिनोऽलसश्च रोगार्त्तः । प्रैष्यः खलोऽतिदीनो मूर्खस्तेनोऽर्थहीनश्च” ॥ इति षड्वर्गफलम् ।

युद्धजयार्णवे । यस्मिन्नृक्षे स्थितो भानुस्तदादि त्रीणि मस्तके । मुखे त्रीणि तथा द्वे भे स्कन्धयोर्भुजयोरुभे ॥ द्वे हस्तयोः पञ्च हृदि नाभावेकं तथा गुदे । तथा जानुयुगे द्वे द्वे पादयोर्जलधिं न्यसेत् ॥ चरणर्क्षेषु यो जातः सोऽल्पायुर्भवति प्रिये । जानुनोर्भ्रमणाशक्तो गुह्ये स्यात् पारदारिकः ॥ नाभौ स्वल्पधनो देवि हृदये स्यान्महाधनः । पाण्योर्जातो भवेच्चौरो भुजयोर्दुःखभाजनम् ॥ स्कन्धयोर्भोगभोगी च मुखे धर्मरतो धनी । मूर्द्धि राजा भवेद्देवि बालानां जन्मतो

वदेत्" ॥ स्वरोदये । "मुखे शीर्षे शतं वर्षं भवति: स्कन्दयो-र्द्वयो: । पञ्चाशीतिर्हृदि प्रोक्ता हस्तयो: सप्तति: क्रमात् ॥ बाह्वो: षट्षष्टिवर्षाणि गुह्ये षट्षष्टिका क्रमात् । पञ्चाशत् जङ्घयो: पादे निर्धनश्चाल्पजीवन:" ॥ इति जातकचक्रम् ।

"चतुरादिभिरेकस्थै: प्रव्रज्यां स्वां ग्रह: करोति बली । बहुवीर्य्यैस्ता बह्वय प्रथमा वीर्य्याधिकस्यैव" । ग्रहै: प्रव्रज्या-योगो भवति तेषां मध्ये यो बली स स्वां प्रव्रज्यां करोतीत्यर्थ: । प्रव्रज्यायोग: । "तापसवृद्धश्रावकरक्तपटाजीविभिक्षुचरका-णाम् । निर्ग्रन्थानाञ्चार्कात् पराजितै: प्रच्युतिर्बलिभि: । रवि-स्तपस्वी चन्द्रो बृद्ध: सन्न्यासीत्यादि ज्ञेयम् । प्रव्रज्यानिर्णय: लग्ने सूर्य्येऽक्षिरोगी शशिनि बलयुती रूपवान् वित्तयुक्तो भौमे व्यङ्ग: सुवाग्मी शशधरतनये सर्वशास्त्रार्थवेत्ता । जीवे दाता पवित्र: सुकविरथ गते भार्गवे मण्डलेश: सौरौ कण्डूति-गात्रस्तमसि च नियतं वञ्चितो धर्म्महीन:" ॥ १ ॥ "वित्तेऽर्के चैव रोगी सततगदयुतो रात्रिनाथे धनाढ्यो भौमे नित्यं प्रवासी कृषिसुतधनवान् सोमपुत्रे प्रधान: । जीवे लक्ष्मीप्रमोदी विलसति भृगुजे दर्पित: श्रीनिकेत: । सौरे दीनोऽतिनित्यं तमसि च नियतं चौरिकावित्तजीवी" । २ । "भ्रातर्य्यर्के सधर्म्म: स भवति नियतं भ्रातृहा रात्रिनाथे । हिंस्रो भौमेऽनुजानां सपदि बधकरो भूमिकावृत्तिजीवी । सौम्ये सत्यस्य हन्ता भवति सुरगुरौ कामदेवस्वरूप: । शुक्रे राज्याधिकारी रविजदनुजयो-र्भ्रातृहन्ता धनाढ्य:" । ३ । "अर्के बन्धौ सुदु:खी स्वजनपरि-वृत: शीतगौ जानुरोगी । भौमे कुग्रामवासी भवति शशिसुते भ्रातृपुत्रान्वितोऽपि । जीवे रत्नोपजीवी त्रिदशरिपुगुरौ सर्व-सौख्याधिकारी । सौरौ गेहे निवासी भवति शशिरिपौ मन्द-कर्मा कुचेल:" ॥ ४ ॥ "पुत्रस्थेऽर्के नरोऽसौ प्रथमसुतहत:

सिंहराशौ सुपुत्रः। सोमे सर्वाधिकारी भवति धरणिजे पुत्रशोकाकुलोऽसौ। सौम्ये सुस्थः सुदेहः प्रचुरधनयुतो देवपूज्यः सुपुत्रःकन्यायुक्तो हि शुक्रे रविजदनुजयोः पुत्रपौत्रैर्विहीनः”।५। “षष्ठेऽर्के शत्रुशङ्कारिपुगणरहितः क्षीणचन्द्रे गतायुः। पूर्णे शत्रुघ्न इन्यात् भवति धरणिजे हीनदेहोऽतिदीनः। सौम्ये शास्त्रार्थयुक्तस्त्रिदशपतिगुरौ राज्यसौख्योपभोगी। दैत्याचार्य्येऽतिरोगी रविजदनुजयोः पापभुङ्नित्यदुःखी” ।६। “पत्नग्रामर्के च जायापतिरतिविमुखो शीतरश्मौ सुपुत्रः। सुस्थो भूयान्नरोऽसौ भवति धरणिजे हीनभार्य्यश्च नूनम्। सौम्येऽसुस्थः सुदेहस्त्रिदशपतिगुरौ शास्त्रवेत्ता शतायुः। शुक्रे पुत्रप्रमोदी रविजदनुजयोर्हीनभार्य्यश्च हीनः”।७। “मृत्यौ चार्के स्वमृत्युर्भवति च नियतं शीतरश्मौ गतायुःभूमेः पुत्रे च रोगी शशधरतनये शूलरोगी विकर्म्मा। जीवे तीर्थेषु मृत्युर्भवति भृगुसुते धार्मिकस्तीर्थगोऽसौ, सौरौ शूली गतायुर्भवति विधुरिपौ वेदमुक्तो गतायुः”।८। “धर्मे चार्के नरोऽसौ विविधधनयुतः शीतगौ पुण्यकर्मा, लक्ष्मीवान् पुण्यचेता भवति धरणिजे देववित्तापहारी। सौम्ये धर्म्मः सुशीलस्त्रिदशपतिगुरौ राजतुल्यः सुधर्मा, शुक्रे तीर्थानुरागी रविजदनुजयोः पापशीलः सुदुःखी”।९। “कर्मण्यर्के प्रतापी प्रचुरधनयुतः स्त्रीपटो क्रोधदृष्टिः, सोमे स्त्रूपान्वितोऽसौ विविधधनयुतो भूमिजे बन्धुहीनः। नित्योत्साही च सौम्ये प्रचुरधनयुतो देवपूज्योऽतिमानी,दिव्यस्त्रीशोऽपि शुक्रे नृपतिसमधनः सौरिदैत्ये सुखी च”।१०। “आये चार्के नरोऽसौ पितृधनसहितः शीतगौ चारुशीलो, भौमे नित्यं स रोगी शशधरतनये सर्वदा क्रोधयुक्तः। जीवे श्रीमान् प्रदाता करितुरगपतिर्भार्गवे शास्त्रविच्च स्त्रीरत्नादियुक्तो रविदनुजयोः क्रूरकर्मा कुचेलः।११। “अर्के संस्थे व्ययेऽसौ पुर-

धनरहित: सर्वभोगी सुदु:खी। सोमे खेदान्वितोऽसौ भवति धरणिजे द्यूतरक्तो विबुद्धि:। सौम्ये धर्मार्थकारी दिनकररहिते देवपूज्योऽतिमानी, शुक्रे शास्त्रानुरागी रविजदनुजयो: क्रूरकर्मा कुचेल:"। १२। इति लग्नादिस्थग्रहफलम्। बृहज्जातके। "तीक्ष्णांशु: शशिना समं प्रकुरुते यत्नाश्मकारं नरं भौमेनाघरतं बुधेन निपुणं सौभाग्य सौख्यान्वितं क्रूरं वाक्पतिनाऽन्यकार्य्यनिरतं शुक्रेण वङ्गायुधैर्लब्धस्वं रविजेन धातुकुशलं भाण्डप्रकारेण वा"। १। "कूटस्त्यासवदन्तपण्यमशिवं मातु: सवक्र: शशीसज्ञ: सूनृतवाक्यमर्थनिपुणं सौभाग्यकीर्त्त्यान्वितम्। विक्रान्तं कुलमुख्यमस्थिरमतिं वित्तेश्वरं साङ्गिरा: वस्त्राणां ससित: क्रयादिकुशलं सार्कि: पुनर्भूसुतम्। मूलादिस्नेहकूटे व्यवहरति वणिक् बाहुयोद्धा ससौम्ये पृथ्व्यध्यक्ष: सजीवे भवति नरपति: प्राप्तविद्यो द्विजो वा। गोपो मल्लोऽथ दक्ष: परयुवतिरतो द्यूतकृत् सासुरेज्ये दु:खार्त्तो सत्यसन्ध: सवितृतनये भूमिजे निन्दितश्च। सौम्ये रङ्गचरो बृहस्पतियुते गीतप्रियो नृत्यवित् वाग्मी भूगणप: सितेन शशिना मायापटुर्लङ्घक:। सद्विद्यो धनदारवान् बहुगुण: शुक्रेण युक्ते गुरौ। ज्ञेय:स्तब्धकरोऽसितेन घटकृज्जातोऽश्मकारोऽपि वा। असितसितसमागमेऽल्पचक्षुर्युवतिसमाश्रय संप्रवृद्धचित्त:। भवति च लिपिचित्रपुस्तकवेत्ता कथितफलै: पुरतोऽपरेऽपि कल्प्या:"। इति द्विग्रहयोगफलम्। "नानागमग्रन्थविशेषबोध व्याख्यातनामा नृपपूजितश्च"। "साधु: सधर्मा भवति लग्नस्थिते चन्द्रसुते चिरायु:। तुङ्गिफलमाह "सुविक्रम: सत्यवचा: सुरूप: प्रियंवदो धर्मपरो नरेन्द्र:। सौम्ये तु तुङ्गोपगते विलग्ने विलक्षणः कान्तिधरो गरिष्ठ:। रुचिरतर प्रमदाजनरक्ता: शुक्रे निर्मलविद्यायुक्ता:। लग्नगते

रुचिराङ्गजमूर्त्तिः धर्म्मरतः पृथुमाङ्गसवृत्तिः । प्रचण्डरूपः पुरुषः प्रलापी प्रजाधिपः स्वल्पवचाः सहिष्णुः पित्तप्रधानः प्रणतप्रियश्च बुधे विलग्ने भवति प्रजातः । शुभं वर्गोत्तमे जन्म वेशिस्थाने च सद्ग्रहे । अशून्येषु च केन्द्रेषु कारकाख्ये ग्रहेषु च" । सत्याचार्य्यः वर्गोत्तमे कुले मुख्यकारकाख्ये प्रागुक्तकारकाख्ये । "धर्म्माधिपः पश्यति धर्म्मभावं लग्नाधिपः पश्यति चेद्दिलग्नं मृत्युं यदा पश्यति मृत्युनाथस्तदा तु तीर्थे नियतं मृतिः स्यात् । षष्ठाष्टमकण्टकगोगुरुरुच्चे भौमसंज्ञलग्ने वा । शेषैर्वलैर्जन्मनि मरणे वा मोक्षगतिमाहुः" । जन्ममरणकालयोर्मोक्षनिर्णयः । "त्रयो ग्रहा यदैकत्र राशिलग्नविवर्जिता । भुक्त्वा च विविधान् भोगान् म्रियते जाह्नवीजले । सूर्य्यादिभिर्निधनगैर्हुतवहसलिलायुधज्वरामयजः । तृट्क्षुत्कृतश्च मृत्युः परदेशादौ चरादिभे निधने निधनस्थ ग्रहबलेन निर्णयानिर्णयः । यो बलवान्निधनं पश्यति तद्धातुकोपजो मृत्युः । निधनयुगाधिकविंशद्रेक्काणेशस्य मृत्युवीजम्" । ग्रहधातवश्च । "स्नायुस्थ्यसृक्त्वगथ शुक्ररसे च मज्जा मन्दार्कचन्द्रबुधशुक्रसुरेज्यभौमाः" स्नायुवस्तिबन्धनम् । "रविः पित्तो शशी वातकफात्मा पैत्तिकः कुजः । वातपित्तकफो ज्ञश्च कफौज्यौ भृगुनन्दनः । कफवातात्मको ज्ञेयः शनिर्वातात्मकस्तथा" । बलवद्ग्रहदर्शनादिभिर्निर्याणज्ञानम् । "पापद्रेक्काणे दाहो द्वाविंशे शुभद्रेक्काणे क्लेदः । शेषो मिश्रद्रेक्काणे विष्ठान्त्यो व्याड़वर्गेषु" ॥ अग्न्यादिनाशवपरिमाणज्ञानम् । "व्याड़ाः कुम्भालिमध्याद्याः कर्किमीनान्त्यसम्भवौ । सिंहाद्यन्त्यौ मृगाद्यश्च तुला मध्यान्त्यसम्भवौ" ॥ व्याड़द्रेक्काणाः । "स्त्रीपुंसोर्जन्मफलं तुल्यं किन्त्वत्र चन्द्रलग्नस्थम् । तद्बलयोगाद्वपुराकृतिः सौभाग्यमस्तमये ॥ बाल्ये विधवा भौमे पतिसंत्यक्ता दिवा-

करेऽस्तगे सौरे पापैर्दृष्टे कन्यैव जरां समुपयाति । क्रूरैरस्ते विधवा पुनर्भूः शुभाशुभैर्नारी ॥ क्रूरेऽष्टमेऽपि विधवा सत्स्वर्थे सा स्वयं म्रियते । श्रोजे लग्नेन्दोः स्त्री दुःशीला शीलसंयुता युग्मे ॥ शून्येऽबले कदर्थ्यः पतिश्चरे हस्ते प्रवासी स्यात्" ॥ इति स्त्रीणां शुभादि । भविष्ये । "यस्य पाणितले रेखा कनिष्ठामूलमुत्थिता । गतामूलं प्रदेशिन्याः सजीवेच्छरदांशतम् ॥ दक्षिणे तु कराङ्गुष्ठे यवो यस्य च विद्यते । सर्वविद्या प्रवक्ता च स भवेन्नात्र संशयः ॥ चिपिटा विरला शुष्का यस्याङ्गुल्यो भवन्ति वै । स भवेद् दुःखितो नित्यं बलहीनश्च वै गुहः ॥ श्वेतैर्नखैर्विरूक्षैश्च पुरुषा दुःखभागिनः । कुशीलाः कुनखा ज्ञेयाः कामभोगविवर्जिताः ॥ नखैस्ताम्रैस्तथैश्वर्य्यं पुष्पितैः सुभगो भवेत् । चतुरस्रमुखो धूर्त्तो मण्डलास्या शठा भवेत् ॥ अप्रजा वाजिवक्त्रा च महावक्त्रा च दुर्भगा । अधना स्त्री कृशग्रीवा दीर्घग्रीवा च बन्धकी ॥ ह्रस्वग्रीवा स्थिरापत्या स्थूलग्रीवा च दुःखिता । स्पष्टं रेखात्रयं यस्याः ग्रीवायां चतुरङ्गुलम् ॥ मणिकाञ्चनरत्नाढ्यं सा दधाति विभूषणम्" ॥ अन्यत्र तु । "तातस्यैव सुतः प्रोक्तो मेलने मध्यरेखयोः । पृथक्त्वे जारजो ज्ञेयो लक्षणैरिति निश्चितम् ॥ कनिष्ठाङ्गुलिमूले तु रेखयोर्दारनिर्णयः । रेखाभिर्बहुभिः क्लेशं स्वल्पाभिर्धनहीनता ॥ रक्ताभिः सुखमाप्नोति कृष्णाभिः प्रेष्यतां व्रजेत् । तर्जनीमूलगामिन्यां रेखायां छिद्रता यदि ॥ श्वापन्मूषिकमार्जारसर्पदष्टो भविष्यति" ॥ विष्णुधर्मोत्तरे । "दृष्टिः प्रसन्ना मधुरा च वाणी मत्तेभतुल्या च गतिः प्रशस्ता । एकैककूपप्रभवाश्च रोमाः सकृत्स्मृतं हास्यमनुत्तमञ्च ॥ श्रान्तस्य यानमशनञ्च बुभुक्षितस्य पानं तृषा परिगतस्य भयेषु रक्षा । एतानि यस्य पुरुषस्य भवन्ति काले तं धन्यमाहुरिह

वै पुरुषं द्विजेन्द्राः॥ पतिप्रिया पतिप्राणा या नारी पति-देवता। अलक्षणापि सा ज्ञेया सर्वलक्षणसंयुता॥ संक्षेपतस्ते कथितं मयैतद् यल्लक्षणं चारु नितम्बिनीनाम्। प्रायो विरूपासु भवन्ति दोषा यत्राकृतिस्तत्र गुणा वसन्ति"॥ इति देहलक्षणम्।

अथ जातकर्म्म। मनुः "प्राङ्नाभिवर्द्धनात् पुंसो जात-कर्म्म विधीयते। मन्त्रवत्प्राशनञ्चास्य हिरण्यमधुसर्पिषाम्"॥ नाभिवर्द्धनात् नाभिसम्बद्धनाडीच्छेदनात्। वर्द्धनं छेदनेऽथ द्वे इत्यमरः। बैजवापः। "जन्मनोऽनन्तरं कार्य्यं जातकर्म्म यथाविधि। दैवादतीतः कालश्चेत् अतीते सूतके भवेत्"॥ एवञ्च "मृदु ध्रुवचरक्षिप्रभेष्वेषामुदयेऽपि वा। गुरौ शुक्रेऽथवा केन्द्रे जातकर्म च नाम च"॥ इति ज्योतिःशास्त्रोक्तं दैवात्कालोत्कर्षे वेदितव्यं अनुत्कर्षेऽपि नक्षत्रादि नियमो न नैमित्तिकस्य निमित्तान्तरभावित्वेन निरवकाशत्वात्।

अथ षष्ठीपूजा। विष्णुधर्मोत्तरे। "सूतिकावासनिलया जन्मदा नाम देवताः। तासां यागनिमित्तार्थं शुद्धिर्जन्मनि कीर्त्तिता॥ षष्ठेऽह्नि रात्रियागन्तु जन्मदानाञ्च कारयेत्। रक्षणीया सदा षष्ठी निशां तत्र विशेषतः। राम! जागरणं कार्य्यं जन्मदानां तथा बलिः"॥ रामेति सम्बोधनम्। तत्राशौचान्तरदोषोऽपि नास्ति। "अशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत्। कर्त्तुस्तात्कालिकी शुद्धिः पूर्वाशौचाद्विशुध्यति"॥ इति प्रजापतिवचनात्। पुत्रजन्मेति श्रवणात् पितुरेवाशौचाभावः न तु मातुः कर्त्तुरिति पुंलिङ्गनिर्देशाच्च। कारयेदिति अन्यगोत्रजाभिप्रायेण। तत्रादौ विनायकादिसहितषोड़शमातृकापूजनम्। तथा च कृत्यचिन्तामणौ। "छागजागरणं कार्य्यं खड्गो धार्य्यः समीपतः। आवाह्य पूजयेद्देवीं

गणेशं मातरं शिशिम्" ॥ देवीं षष्ठीं गिरिं मन्थानदण्डम् । मातृनामान्याह वह्निचन्द्रपरिशिष्टम् । "गौरी पद्मा शची मेधा सावित्री विजया जया । देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥ शान्तिः पुष्टिर्धृतिस्तुष्टिरात्मदेवतया सह । आदौ विनायकः पूज्योऽन्ते च कुलदेवता" ॥ तासामभिधाय भविष्ये "पूज्याः स्थितेऽथवा कार्य्या वरदा भयपाणयः" । मातर इति सर्वासां विशेषणम् अतएव गौर्य्यै मात्रे नम इत्यादि-प्रयोगः । एता मातरो लोकमातरो ज्ञेयाः अतएव तयोर्बहु-त्वेन निर्देशः । गणेशपूजायां प्रार्थनमन्त्रो यथा । "सर्वविघ्न-हरो देव एकदन्तो गजाननः । षष्ठीगृहेऽर्चितः प्रीत्या शिशुं दीर्घायुषं कुरु ॥ आयाहि वरदे देवी महाषष्ठीति विश्रुता । शक्तिरूपेण मे पुत्रं रक्ष जागरवासरे" ॥ इति षष्ठ्या आवा-हनम् । ततः षष्ठीं पूजयेत् । "गौर्य्याः पुत्रो यथा स्कन्दः सदा संरक्षितस्त्वया । तथा ममाप्ययं बालो रक्ष्यतां षष्ठि ते नमः" ॥ इति त्रिःपूजयेदिति भोजराजः । "गणेशश्चैव नन्दा च पूतनामुखमण्डिका । विवानिका शकुनिका शुष्क-नन्दी च जृम्भिका ॥ आचार्य्यका रेवती च पिलिपिञ्जा ततः परम् । स्कन्दा च द्वादशैतेऽर्च्या रक्षार्थं मातृका ग्रहाः" ॥ कृत्यचिन्तामणौ स्तुतिः । "जय देवि जगन्मातर्जगदानन्द-कारिणि । प्रसीद मम कल्याणि नमोऽस्तु षष्ठि देवि ते" ॥ वरप्रार्थनं "रूपं देहि यशो देहि भाग्यं भगवति देहि मे । पुत्रान् देहि धनं देहि सर्वान् कामांश्च देहि मे ॥ धात्रि त्वं कार्त्तिकेयस्य महाषष्ठीति विश्रुता । त्वत्प्रसादादविघ्नेन चिरं जीवतु बालकः ॥ देवतानामृषीणाञ्च सर्वेषां हित-कारिणि । समर्पितं रक्ष पुत्रं महाषष्ठि नमोऽस्तु ते" ॥ इत्यनेन बालं व्यजनस्थं कृत्वा समर्पयेत् । मन्थानदण्डं पूजयेत् ।

"मन्थानमन्दरोऽसि त्वं मथितः सागरस्त्वया । तथा ममापि पुत्रस्य मन्थविघ्नं नमोऽस्तु ते" ॥ ततः षट्कृत्तिकाः पूजयेत् । ताश्च । "शिवा सम्भूतिनाम्नी च कीर्त्तिः सन्ततिरेव च । अनसूया क्षमा चैव षड़ेताः कृत्तिकाः स्मृताः" ॥ मार्कण्डेयपुराणम् । "अग्न्यम्बुपशुशून्ये च निर्यूपे सूतिकागृहे । अदीपशस्त्रमुषले भूतिसर्षपवर्जिते ॥ अनुप्रविश्य सा जातमपहृत्यात्मसम्भवम् । क्षणप्रसविनी बालं तत्रैवोत्सृज्यते द्विज ॥ सा जातहारिणी नाम सुघोरा पिशिताशना । तस्मात् संरक्षणं कार्य्यं यत्नतः सूतिकागृहे" ॥ यूपो बद्धछागस्तम्भः पशुश्छागः छागजागरणं कार्य्यमित्येकवाक्यत्वात् । पाद्मे "पायसं सर्पिषा मिश्रं द्विजेभ्यो यः प्रयच्छति । गृहं तस्य न रक्षांसि धर्षयन्ति कदाचन" ॥

अथ नामकरणम् । श्रुतिः । "एकादशे द्वादशे वाऽह्नि पिता नाम कुर्य्यादिति । एकादशे इति मुख्यः कल्पः असमर्थस्य क्षेपायोगादिति न्यायात् अतएव भट्टभाष्ये श्रुतिः । "न श्वः समुपासीत को हि समर्थस्य श्वो वेदेति" लिङ्गपुराणे । "श्वः कार्य्यमद्य कर्त्तव्यं पूर्वाह्णे चापराह्णिकम् । न हि प्रतीक्षते मृत्युः कृतमस्य न वा कृतम्" ॥ एतच्च परपरप्रशस्ततरतमकालोदितकर्मेतरकर्मपरम् । गोभिलः । "जननाद्दशरात्रे व्युष्टे शतरात्रे संवत्सरे वा नामधेयकरणमिति" व्युष्टे गते । गर्गः । "आदौ घोषवदक्षरं यवरलान्मध्ये पुनः स्थापयेदन्ते दीर्घं विसर्जनीयरहितं नाम प्रयत्नात् कृतम् । ऋक्षे तिष्यकराश्विसौम्यवसुभे चित्रानुराधोत्तरे पौष्णे चादितिरोहिणीषु शुभकृत् पुंसां समैरक्षरैः" ॥ दीपिकास्वरसात् स्वाती शतभिषा श्रवणा अत्र ग्राह्या गोभिलसम्मतं पूर्वार्द्धं तेन नारायणजनार्दनादि नाम कुर्य्यात् । यत्तु

नामकरणम्। "कुलदेवता नक्षत्राभिसम्बन्धं पिता नाम कुर्य्यादन्यो वा कुलवृद्धः" इति कल्पतरुधृतशङ्खलिखितवचने नाभिवादनीयं नामधेयं कल्पयित्वा देवताश्रयं नक्षत्राश्रयं गोत्राश्रयमप्येक इति गोभिलसूत्रेणोपनयनकाले च नक्षत्राभिसम्बन्धेन नामाभिधानं तत्शतपदचक्रानुसारात् स्वनक्षत्रपदानुसारात् ज्ञेयम्। पाश्चात्यानां तथैव व्यवहारः। यत्र तु न तथाकृतं तत्र नामाक्षरानुसारनक्षत्रादपि फलं ज्ञेयम्। अत्र कुलवृद्ध इति दर्शनात् संस्कारान्तरे तथैव व्यवहारः। मनुः। "स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम्। माङ्गल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत्"॥ गोभिलः। अयुग्मान्तं स्त्रीणामिति। यथा यशोदा वसुदादि। नारायणपद्धतौ। "नामकरणं स्थिरलग्ने केन्द्रपञ्चनवमस्थिते सौम्ये। त्र्यायषष्ठसमधिष्ठितपापे जीवशुक्रशशिसौम्यदिनेषु"॥ प्रसादप्राप्तनाम्नाप्येवम्। व्यासः। "न स्नायादुत्सवेऽतीते निर्वर्त्त्यापि च मङ्गलम्। अनुव्रज्य सुहृद्बन्धून् पूजयित्वेष्टदेवताः"॥

अथ निष्क्रामणम्। विष्णुधर्मोत्तरे। "चतुर्थे मासि कर्त्तव्यं शिशोर्निष्क्रमणं गृहात्"। दीपिकायाम्। "आर्द्राधोमुखवर्जितानुपहते वृक्षेष्वरिक्ते तिथौ वारे भौमशनीतरे घटतुलाकन्यामृगेन्द्रोदये। सदृष्टेऽथ चतुर्थमासि यदि वा मासे तृतीये विधावक्षीणे शुभदे शिशोरभिनवं निष्क्रामणं कारयेत्"। अधोमुखानि भानि च। "अश्लेषवह्नियमपित्र्यविशाखयुक्तं पूर्वात्रयं शतभिषा च नवाप्युडूनि। एतान्यधोमुखगणानि शिवानि नित्यं विद्याघ्र्भूमिखननेषु च भूषितानि"। चतुर्थमासीति ऋग्वेदियजुर्वेदिनोः। यथाह विष्णुः। "चतुर्थमास्यादित्यदर्शनमिति"। शौनकोऽपि। "चतुर्थे मासि पुण्यर्क्षे शुक्ले निष्क्रमणं शिशोः"। पारस्करः। "चतुर्थे

मासि निष्क्रमणिका सूर्य्यमुदीक्षयति तच्चक्षुरितीति"। माघे तृतीय इति तु छन्दोगानां गोभिलेन जननान्तरं तृतीयशुक्लपक्षतृतीयायां चन्द्रदर्शनरूपनिष्क्रामणविधानात् यथा गोभिलः। जननाद् यस्तृतीयो ज्यौत्स्नस्तत्तृतीयायामित्यादि। ज्यौत्स्नः शुक्लपक्षः। अत्रैव कृत्यचिन्तामणिः। "तस्मात् स्वस्वविधानतोऽर्कशशिनोरर्घ्यं पिता दापयेत्"। अर्घ्यमन्त्रश्च। "एहि सूर्य्य सहस्रांशो तेजोराशे जगत्पते। अनुकम्पय मां भक्त्या गृहाणार्घ्यं दिवाकर:"॥ चन्द्रार्घ्यमन्त्रश्च। "क्षीरोदार्णवसम्भूत अत्रिनेत्रसमुद्भव। गृहाणार्घ्यं शशाङ्केदं रोहिण्या सहितो मम"॥

अथान्नप्राशनम्। "ततोऽन्नप्राशनं षष्ठे मासि कार्य्यं यथाविधि। अष्टमे वाथ कर्त्तव्यं यद्वेष्टं मङ्गलं कुले"॥ षष्ठ इति मुख्यः कल्पः प्रागुक्तन्यायात्। कृत्यचिन्तामणौ। "अन्नस्य प्राशनं कार्य्यं मासि षष्ठेऽष्टमे बुधैः। स्त्रीणान्तु पञ्चमे मासि सप्तमे प्रजगौ मुनिः॥ द्वादशीं सप्तमीं नन्दां रिक्तासु पञ्चपर्व्वसु। बलमायुर्यशो हन्यात् शिशूनामन्नभक्षणम्"॥ भुजबलभीमे। "षष्ठे मासि निशाकरे शुभकरे रिक्तेतरे वा तिथौ सौम्यादित्यसितेन्दुजीवदिवसे पक्षे च कृष्णेतरे। प्राजेशादिति पौष्णवैष्णवयुगैर्हस्तादि षट्कोत्तरैराग्नेयाप्पतिमित्रभैश्च नितरामन्नादि भक्ष्यं शुभम्"॥ युगैरिति प्राजेशादौ प्रत्येकं सम्बध्यते। तथात्रापि तिथ्यादिविहृत्यर्क्षं विवर्जयेत्॥ वृषद्वन्द्वधनुर्मीनकन्यालग्नेऽन्नभक्षणम्। त्रिकोणाष्टकयुक्तान्यग्रहा यद्वत्तथा फलम्॥ दुष्टः शशधरो लग्नात् षष्ठाष्टस्थोऽन्नभक्षणे"॥ मार्कण्डेयः। "देवता पुरतस्तस्य पितुरङ्कगतस्य च। अलङ्कृतस्य दातव्यमन्नं पात्रे च काञ्चने॥ मध्वाज्यकनकोपेतं प्राशयेत् पायसं ततः। कृतप्राशनमुत्सङ्गे मातु-

र्वालस्तु तं न्यसेत्॥ देवाग्रतोऽथ विन्यस्य शिल्पभाण्डानि सर्वशः। शास्त्राणि चैव शस्त्राणि ततः पश्येत्तु लक्षणम्॥ प्रथमं यत् स्पृशेद्बालः शिल्पभाण्डं स्वयं तथा। जीविका तस्य बालस्य तेनैव तु भविष्यति"॥

अथ नवान्नम्। दीपिकायाम्। "त्रयोदशीं जन्मदिनञ्च नन्दां जन्मर्क्षतारां सितवासरञ्च। त्यक्त्वा हरीज्येन्दुकरान्त्य-मैत्रध्रुवेषु च श्राद्धविधानमिष्टम्॥ मेषूग्रा हि शिवान्येषु विभौमशनिवासरे। अन्नप्राशनवत् कुर्यान्नवान्नफलभोजनम्॥ सूर्य्ये चैव विशाखगे स्मरतिथौ पापे त्रिजन्मान्विते नन्दा मन्द-महीजकाव्यदिवसे पौषे मधौ कार्त्तिके। मेषूग्रा हि शिवेषु विष्णुशयने कृष्णे शशिन्यष्टमे श्राद्धं भोजनकं नवान्नविहितं पुत्रार्थनाशप्रदम्। ज्येष्ठाश्लेषार्द्रगे सूर्य्ये मृगनेत्रानिशात्मके। नवान्नैर्भोजनं श्राद्धं जन्मचन्द्र तिथौ न च"॥ ब्रह्मपुराणे। "प्राश्नीयाद्दधिसंयुक्तं नवं विप्राभिमन्त्रितम्"॥

अथ जन्मतिथिः। "जन्मर्क्षयुक्ता यदि जन्ममासे यस्य ध्रुवं जन्मतिथिर्भवेच्च। भवन्ति संवत्सरमेव तावत् नैरुज्यसम्मान-सुखानि तस्य। कृतान्तकुजयोर्वारे यस्य जन्मतिथिर्भवेत्॥ अनृक्षयोगसंप्राप्तौ विघ्नस्तस्य पदे पदे। तस्य सर्वौषधिस्नानं ग्रहविप्रसुरार्चनम्॥ सौरारयोर्दिने मुक्ता देयानृक्षे तु काञ्च-नम्। जन्मन्यृक्षे यदि स्यातां वारौ भौमशनैश्चरौ। मासः सकल्मसो नाम मनो दुःखप्रदायकः"॥

अथ चूडाकरणम्। मनुः। "चूडाकर्म्म द्विजातीनां सर्वेषामेव धर्म्मतः। प्रथमेऽब्दे तृतीये वा कर्त्तव्यं स्मृति-चोदनात्"॥ मात्र प्रागुक्तन्यायात् प्रथमाब्दस्य प्राधान्यं किन्तु तृतीयाब्दस्य। तथा च "चूड़ाकार्य्यं तृतीयाब्दः सर्व-गृह्यादिसम्मतः तत्कालेऽशौचवृद्धस्य मुख्य इत्यवगम्यते"॥ शङ्ख-

लिखितौ। "तृतीयवर्षे चूडाकरणं पञ्चमे वा" इति। ज्योतिषे। अयुग्माब्दे चूडाभौमशनैश्चरे। "अर्केन्दुकालशुद्धौ च जन्ममासेन्दुभेतरे। रिक्ता दर्शाष्टमौ षष्ठी प्रतिपद्वर्जिते सिते"॥ दक्षोऽपि सामान्यतो दोषमाह। "षष्ठ्यष्टमी पञ्चदशी उभे पक्षे चतुर्दशी। अत्र सन्निहितं पापं तैले मांसे भगे क्षुरे॥ मेषसिंह तुला कर्किवृश्चिकेतरलग्नके। श्रवणादित्रयस्वाती चित्रा पुष्याश्विचन्द्रमे। आदित्यरेवतीहस्ताज्येष्ठामूले च चौड़कम्। पौष्णाश्विपुष्यवसुवामवासुदेवब्रह्मार्कचन्द्रवरुणादितिचित्रभेषु। वारेषु सोमबुधवाक्पतिभार्गवाणां चौरं करोति कुशलं खलु मानवानाम्" इति वचनात् रोहिण्यामपि चूडाकरणम्। अत्रापि तिथ्यादिविद्धऋक्षं वर्जयेत्। "सूर्य्ये दक्षिणमार्गगामिनि हरौ सुप्ते निरंशे रवौ क्षीणे शीतरुचौ महीजयमयोर्वारे निशासन्ध्ययोः। भुक्तेऽभ्यक्ततनौ निषिद्धसमयेऽलङ्कारयुक्ते शिशौ क्षौराद्रोगभयं वदन्ति यवना मृत्युं तथान्ये जगुः"॥ राजमार्त्तण्डे। "मानं हरेत् क्षौरमिहायुषोऽर्कः शनैश्चरः पञ्च कुजस्तथाष्टौ। आचार्य्य भृग्विन्दु बुधाः क्रमेण दद्युर्दशैकादशसप्तपञ्च"॥ जीवादिवारे चौरं प्रशस्तम्। भोजराजः। "उत्तरशिखिसन्निधाने च चूड़ाकरणं जगुः शुभं यवनाः। चैत्रे मासि दिवाकरवारे वर्त्मनि सवितरिदिवाकरवारविनिर्मोके तु"॥ गर्गः। "जन्मर्क्षे जन्ममासे च युग्ममासे च वत्सरे। न कुर्य्यात् प्रथमं चौरं विशेषाच्चैत्रपौषयोः"॥ ज्येष्ठपुत्रकन्ययोस्तु ज्यैष्ठदशाहाभ्यन्तरे चूड़ानिषेधो विवाहप्रकरणे उक्तः। नित्यचौरे तु राजमार्त्तण्डः। "न स्नानमात्रगमनोत्सुकभूषितानामभ्यक्तभुक्तरणकालनिरासनानाम्। सन्ध्या-निशा-शनि-कुजार्कदिनेषु रिक्ते चौरं हितं प्रतिपदह्नि न चापि विष्याम्॥ प्राचीमुखः सौम्यमुखोऽपि भूत्वा कुर्य्यान्नरः क्षौरमनुत्कटस्थः।

उत्तरात्रितययाम्यरोहिणीरौद्रसर्पपितृभेषु चाग्निभे। श्मश्रुकर्म्म सकलं विवर्जयेत् प्रेतकार्य्यमपि बुद्धिमान्नरः । प्रेतकार्य्यं पतितप्रेतसम्प्रदानकदासी घटदानविषयकम्। अन्यथा वक्ष्यमाणवचनविरोधः स्यात् "चन्द्रशुद्धिर्यदा नास्ति ताराया‌श्च विशेषतः। अश्वौरिभेऽपिकर्त्तव्यं चन्द्रचन्द्रजयोर्दिने॥ मानं चौरे हन्ति गुरुः शुक्रं शुक्रो धनं रविः। आयुरङ्गारको हन्ति सर्वं हन्ति शनैश्चरः"॥ श्रीपतिरत्नमालायाम्। "आज्ञया नरपतेर्द्विजन्मनां दारकर्म्मसृतसूतकेषु च। बन्धमोक्षमखदीक्षणेष्वपि चौरमिष्टमखिलेषु चोडुषु॥ देवकार्य्ये पितृश्राद्धे रवेरंशपरिक्षये। क्षुरिकर्म्म न कुर्वीत जन्ममासे च जन्मभे"॥ वृद्धगार्ग्यः। "केशवमानन्तपुरं पाटलिपुत्रं पुरीमहिक्षत्राम्। दितिमदितिञ्च स्मरतां चौरविधौ भवति कल्याणम्"॥ अत्र क्रमो वराहपुराणे। "श्मश्रुकर्म कारयित्वा नखच्छेदमनन्तरम्"।

अथ कर्णवेधः। माण्डव्यवृहद्राजमार्त्तण्डकृत्यचिन्तामणिषु। "यदापत्यद्वयं तिष्ठेत् सम्भवोऽप्यपरस्य च। षट्कर्णं तं विजानीयात् गर्हितञ्च त्रयस्य च॥ इत्याशङ्क्य द्वयोर्मध्ये शुद्धिर्यस्याश्च वत्सरे। कर्णवेधो हितस्तस्य नात्र ज्येष्ठविचारणा॥ षट्कर्णोत्पत्तिमाशङ्क्य भानोः शुद्ध्या समेऽपि च। कर्णौ वेध्यौ न दोषः स्यात् अन्यथा मरणं भवेत्"॥ राजमार्त्तण्डे "न जन्ममासे न च चैत्रपौषे न युग्मवर्षे न हरौ प्रसुप्ते। रवौ च दुष्टे न च कृष्णपक्षे न जन्मभे कर्णविधिः प्रशस्तः"॥ दीपिकायाम्। "नो जन्मेन्दुभमास सूर्य्यरविजक्ष्माजाहसुप्ताच्युते शस्तोऽर्के लघुयुग्मविष्णुमृदुभे स्यात्युत्तरादित्यभे। सौम्यैस्त्र्यायत्रिकोणकण्टकगतैः पापैस्त्रिलाभारिगैरोजोऽब्दे श्रुतिवेध इज्यसितभे लग्ने तु काले शुभे"॥ अत्रापि तिथ्यङ्गादिविहृत्यं वर्जयेत्। गर्गः। "कर्णवेधव्रते कुर्य्यादुदङ्मार्गस्थिते रवौ। दक्षिणाशास्थिते भानौ नैव कुर्य्याद्विचक्षणः"॥

अथ विद्यारम्भः। विष्णुधर्मोत्तरे। "संप्राप्ते पञ्चमे वर्षे अप्रसुप्ते जनार्दने। षष्ठीं प्रतिपदञ्चैव वर्जयित्वा तथाष्टमीम्॥ रिक्तां पञ्चदशीञ्चैव सौरिभौमदिनं तथा। एवं सुनिश्चिते काले विद्यारम्भन्तु कारयेत्॥ पूजयित्वा हरिं लक्ष्मीं देवीञ्चापि सरस्वतीम्। स्वविद्या सूत्रकारांश्च स्वाञ्च विद्यां विशेषतः"॥ नमस्ते बहुरूपाय विष्णवे परमात्मने। स्वाहेत्यनेन हरिं त्रिःपूजयेत्। "भद्रकाल्यै नमो नित्यं सरस्वत्यै नमो नमः। वेदवेदान्तवेदाङ्गविद्यास्थानेभ्य एव च" स्वाहेति ब्रह्मपुराणीयेन च त्रिःपूजयेत्। लिखनविधिमाह नन्दिपुराणम्। 'शुभे नक्षत्रदिवसे शुभे वारे दिनग्रहे। लेखयेत् पूज्यदेवेशान् रुद्रब्रह्मजनार्दनान्॥ पूर्वदिग्वदनो भूत्वा लिपिज्ञो लेखकोत्तमः। निरोधो हस्तबाह्वोश्च मसीपत्रावधारणे"॥ मत्स्यपुराणञ्च। "शीर्षोपेतान् सुसम्पूर्णान् समश्रेणिगतान् समान्। अक्षरान् विलिखेद् यस्तु लेखकः स परः स्मृतः"॥ नाधीयीतेत्यनुवृत्तौ मनुः। "रुधिरे च स्रुते गात्रात् शस्त्रेण च परीक्षते"। रुधिरस्रवं विना शस्त्रेण क्षतमात्रेऽपि। दीपिकायाम्। "लघुचरशिवमूलाधोमुखत्वष्टृपौष्णशशिषु च हरिबोधे शुक्रजीवार्कवारे। उदितवति च जीवे केन्द्रकोणेषु सौम्यैरपठनदिनवर्जं पाठयेत् पञ्चमेऽब्दे'॥ मदनपारिजाते। "विद्यारम्भे गुरुः श्रेष्ठो मध्यमौ भृगुभास्करौ। मरणं शनिभौमाभ्यामविद्या बुधसोमयोः"॥ "विद्यारम्भः सुरगुरुसितज्ञेष्वभीष्टार्थदायी कर्त्तुश्चायुश्चिरमपि करोत्यंशुमान् मध्यमोऽत्र। नीहारांशौ भवति जड़ता पञ्चता भूमिपुत्रे छायासूनावपि च मुनयः कीर्त्तयन्त्येव माद्याः॥ रवेर्गुरोर्भृगोर्लग्ने तत् स्थेऽर्केऽपीन्दुवृद्धितः। गुर्वर्केन्दूडुशुद्धौ च विद्यारम्भः प्रशस्यते'॥ वृहस्पतिः। "प्राङ्मुखो गुरुरासीनो वरुणाभिमुखं शिशुम्।

अध्यापयेच्च प्रथमं द्विजाग्र्यैर्भिः प्रपूजितम्॥ कूर्मपुराणम्। "स्वाध्यायस्य त्रयो भेदा वाचिकोपांशुमानसाः"। शिवधर्मे। "संस्कृतैः प्राकृतैर्वाक्यैर्यः शिष्यमनुरूपतः। देशभाषाद्युपायैश्च बोधयेत् स गुरुः स्मृतः"॥ आदिः ग्रन्थकरणादिः नन्दिपुराणम्। "प्रशस्तशब्दसंयोगे कुर्य्याद्यतिविरामणम्"। विरामणं तद्दिनपाठसमाप्तिम्। "समाप्ते वाचकाभीष्टं कुर्य्यादेव विचक्षणः। सुश्रुतं सुव्रतं भूयादस्तु व्याख्या तु नित्यदा॥ लोकः प्रवर्त्ततां धर्मे राजा चास्तु सदा जयी। धर्मवान् धनसम्पन्नो गुरुश्चास्तु निरामयः॥ इति प्रोच्य यथायातं गन्तव्यञ्च विभावितैः। शिष्टैः परस्परं शास्त्रं चिन्तनीयं विचक्षणैः॥ कथावस्तुप्रसङ्गेन नानाव्याख्यानसम्भवैः। युक्तिभिश्च स्मरेद्व्याख्यां चिक्रेश्चापि स्वयं कृतैः॥ एवं दिने दिने व्याख्यां शृणुयान्नियतो नरः"॥ विष्णुपुराणम्। "पुत्रैरध्यापिता ये च ते पतन्ति स्वभोजने"। सूत उवाच। "प्रागल्भ्यहीनस्य नरस्य विद्या शस्त्रं यथा कापुरुषस्य हस्ते। न हृप्तिमुत्पादयते शरीरे अन्धस्य दारा इव दर्शनीयाः"॥ लिङ्गपुराणम्। "यो गुरुं पूजयेन्नित्यं तस्य विद्या प्रसीदति। तत्प्रसादेन यस्मात् स प्राप्नुते सर्वसम्पदः"॥ दुर्वासाः। "सन्ध्यायां गर्जिते मेघे शास्त्रचिन्तां करोति यः। चत्वारि तस्य नश्यन्ति आयुर्विद्यायशो बलम्"॥ अधीतस्यार्थिने दानमावश्यकम्। तथा च श्रुतिः। "योऽधीत्यार्थिभ्यो विद्यां न प्रयच्छेत् स कार्य्यहा स्यात् श्रेयसो द्वारमावृणुयात्"। इति। तद्दानञ्च। अध्यापनेन व्याख्यया विलिख्यार्पणेन च सम्भवतीत्यतोऽधीमद्भिर्निर्बन्धः क्रियते। तथा च विष्णुपुराणम्। "प्राणिनामुपकाराय यदेवेह परत्र च। कर्मणा मनसा वाचा तदेव मतिमान् भजेत्"॥ बृहस्पतिरपि। "अज्ञानतिमिरोपेतान्

सन्देहपटलान्वितान्। निरामयान् यः कुरुते शास्त्राञ्जन-शलाकया॥ इह कीर्त्तिं राजपूजां लभते सन्ततिञ्च सः। षाण्मासिकेऽपि समये भ्रान्तिः संजायते यतः॥ धात्राक्षराणि सृष्टानि पत्रारूढ़ान्यतः पुरा। उपदेष्टानुमन्ता च लोके तुल्य-फलौ स्मृतौ"॥ एवञ्च। एकलव्येनानुपदेष्टापि द्रोणाचार्य्यो गुरुः कृतः। अतो ग्रन्थकर्त्तुः सुतरां गुरुत्वम्। यथा महा-भारते। "अरण्यमनुसंप्राप्य कृत्वा द्रोणं महीमयम्। तस्मिन्ना-चार्य्यवृत्तिञ्च परमामास्थितस्तदा॥ इष्वस्त्रे योगमातस्थे परं नियममागतः"॥ शङ्खलिखितौ। "न वेदमनधीत्यान्यां विद्या-मधीयीतान्यत्र वेदाङ्गस्मृतिभ्यः"॥ अङ्गानि च "शिक्षाकल्पौ व्याकरणं छन्दो ज्योतिषमेव च। निरुक्तञ्चेत्यङ्गानि वेदानां गदितानि षट्"॥ स्मृतिस्तु धर्मसंहितेत्यमरः। शिष्यस्य गुरुषु ऋणित्वमाह लघुहारीतः। "एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत्। पृथिव्यां नास्ति तद्द्रव्यं यद्दत्त्वा सोऽनृणी भवेत्"॥ नन्दिपुराणे। "यश्च श्रुत्वान्यतः शास्त्रं संस्कारं प्राप्य वै दृढ़म्। अन्यस्य जनयेत् कीर्त्तिं गुरोः स ब्रह्महा भवेत्॥ विस्मरेच्च तथा मौर्ख्यात् योऽपि शास्त्रमनुत्तमम्। स याति नरकं घोरमक्षयं भीमदर्शनम्"॥ अतएव गृहस्थादी-नामपि पुनरध्ययनमाह आपस्तम्बः "यया विद्यया न विरोधेत पुनराचार्य्यमुपेत्य साधयेदिति"॥ विष्णुः। "यश्च विद्या-मासाद्य तया जीवेत् न च सा तस्य परलोकफलप्रदा भवति यश्च विद्यया परेषां यशो हन्तीति"। देवलः। "इष्टं दत्त-मधीतं यद्विनश्यत्यनुकीर्त्तनात्। श्लाघानुशोचनाभ्याञ्च भग्न-तेजो विभिद्यते॥ तस्मादात्मकृतं पुण्यं वृथा न परिकीर्त्तयेत्"॥ अनुकीर्त्तनं कथनम्। श्लाघा प्रशंसा अनुशोचनं धनव्ययेन पश्चात्तापः॥ भग्नतेजः फलजनकशक्तिहीनं वृथा रक्षादि

प्रयोजनं विना । वैष्णवामृते भविष्यपुराणम् । "उपाध्याय स्य यो वृत्तिं दत्त्वाध्यापयति द्विजान् । किन्न दत्तं भवेत्तेन धर्मकामार्थमिच्छता" ॥

अथोपनयनम् । उपनयनकालश्च । "गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनं राज्ञामेकादशे सैके विशामेके यथा कुलम् । ब्रह्मवर्चसकामस्य कार्य्यं विप्रस्य पञ्चमे" ॥ सैके द्वादशे । तत्राशक्तौ प्रायश्चित्तं कृत्वा तदुत्तरे कार्य्यम् । "गृह्योक्तकर्मणा येन समीपं नीयते गुरोः । बालो वेदाय तद्योगं बालस्योपनयं विदुः ॥ रवौ ह्रासे तथा शस्त्रहते पाठनिषेधनात् । उपनयनं तत्र स्यादिति मन्वादिसम्मतम्" ॥ कृत्यचिन्तामणौ । "जन्मोदये जन्मसु तारकासु मासेऽथवा जन्मनि जन्मभे वा । व्रतेन विप्रो न बहुश्रुतोऽपि विद्याविशेषैः प्रथितः पृथिव्याम् ॥ अस्तं गते दैत्यगुरौ गुरौ वा रूक्षेऽपि वा पापयुतेऽप्यनुक्ते । व्रतोपनीतो दिवसे प्रणाशं प्रयाति देवैरपि रक्षितो यः" ॥ उदये लग्ने व्रतेन उपनयनेन । भुजबलभीमकृत्यचिन्तामण्योः "स्वातीशक्रधनाश्विमित्रकरभे पौष्णेज्यचित्राहरिष्विन्दौ तोयपतौ भगे दितिसुते भाद्रद्वये सागरे । केन्द्रस्थे भृगुजेऽङ्गिरः शशिसुते चन्द्रे च तारे शुभे कर्त्तव्यं व्रतकर्ममङ्गलतिथौ वाराः सितार्कज्यकाः" ॥ तोयपतिः शतभिषा अदितिसुत उत्तरफल्गुनी सागर पूर्वाषाढ़ा दीपिकायाम् । "जीवार्केन्दुडुशुद्धौ हरिशयन वह्निर्भास्करे चोत्तरस्थे स्वाध्याये वेदवर्णाधिप दृढ शुभदे चौरिभे नादितौ च । शुक्रार्कज्यर्त्तलग्ने रविमदनतिथिं प्रोज्झ्य षष्ठाष्टमेन्दुं नो जीवास्तातिचारेऽर्कसितगुरुदिने कालशुद्धौ व्रतं स्यात्" ॥ रविमदनतिथिं सप्तमीं त्रयोदशीम् । कृत्यचिन्तामणौ । "माघे द्रविणशीलाढ्यः फाल्गुने च दृढव्रतः । चैत्रे भवति मेधावी वैशाखे कोविदो भवेत् ॥ ज्यैष्ठे

गच्छनमीतिस्म आषाढ़े क्रतुभाजन:। शेषेष्वन्येषु रात्रि: स्यान्निषिद्धं निग्रि च व्रतम्"॥ राजमार्त्तण्डे। "पुनर्वसौ कृतो विप्र: पुन: संस्कारमर्हति"। वृद्धगर्ग:। "स्मृतिषूक्ता-ननध्यायान् सप्तमीं च त्रयोदशीं पक्षयोर्माघमासस्य द्वितीयाम्"॥ परिवर्जयेत् चैत्रशुक्लतृतीया आषाढ़शुक्लदशमी मन्वन्तरादित्वेन निषिद्धा वैशाखशुक्लतृतीया युगादित्वेन निषिद्धेति। षष्ठ्यामशुचिरभार्य्यो रिक्तासु बहुदोषभाक्। शुक्लपक्ष एव विहित: प्रागुक्ताश्वलायनवचनात्। सामगानां कुजवारेऽप्युपनयनं श्रीपतिरत्नमालाकृत्यचिन्तामणिधृत वाक्य-वचनात् यथा। "शाखाधिपे वलिनि केन्द्रगतेऽथवास्मिं वारेऽस्य चोपनयनं कथितं द्विजानाम्। नीचस्थितेऽरिगृह-गेऽथ पराजिते वा जीवे भृगावुपनयन: स्मृतिकर्महीन:"॥ अस्य शाखाधिपस्य दीपिकायाम्। "ऋग्वेदाधिपतिर्जीवो यजुर्वेदाधिप: सित:। सामवेदाधिपो भौम: शशिजोऽथर्ववेद-राट्"। वेदाधिपकथनम्। "ब्राह्मणे शुक्रवागीशौ क्षत्रिये भौमभास्करौ। चन्द्रो वैश्ये बुध: शूद्रे पतिर्मन्दोऽन्त्यजे जने"॥ वर्णाधिपकथनम्। पराजयलक्षणं वक्ष्ये यात्रायाम्। अत्रापि विवाहवद्दशयोषभङ्गवर्जनम्। विष्णुधर्मोत्तरे। "षोड़शाब्दो हि विप्रस्य राजन्यस्य द्विविंशति:। विंशति: स चतुर्थी च वैश्यस्य परिकीर्त्तिता। सावित्री नातिवर्त्तेत अत ऊर्द्धं निव-र्त्तते"॥ अत्र षोड़शवर्षस्य उपनयनाङ्गता प्रतीयते। "पतिता यस्य सावित्री दशवर्षाणि पञ्च च। ब्राह्मणस्य विशेषेण तथा राजन्य वैश्ययो:॥ प्रायश्चित्तं भवेदेषां प्रोवाच वदतां वर:"। इति यमवचने तदनङ्गता प्रतीयते अनयोर्गर्भजन्मप्रभृतिगण-नाभ्यामविरुद्धार्थता तथा च माण्डव्य:। व्रतबन्धविवाहे च वत्सरपरिकल्पनमाहुराचार्य्या:। आधानपूर्वकमेके प्रसूति-

पूर्वं सदान्बे तु । यत्तु द्विजातुपक्रम्य पैठीनसिवचनं द्वादश-षोडश विंशतिर्वेदतोता यवत्त्कत्ता भवन्ति इति द्वादश-वर्षाद्युपरि ब्राह्मणादीनां महाव्याहृति होमप्रायश्चित्तार्थम् । षोड़शोपरि तु व्रात्यहोमादि गुरुप्रायश्चित्तार्थमिति इत्युप-नयनम् ।

अथ समावर्त्तनम् । "भौमभानुजयोर्वारे नक्षत्रे च व्रतो-दिते । ताराचन्द्र विशुद्धौ च समावर्त्तनमिष्यते" इति समा-वर्त्तनम् अथाग्निग्रहणम् । "वह्निग्रहं कुजगुरुज्ञदिनेशवारे शाद्रादि षट्सु च मृदुध्रुववह्निभेषु । कुम्भाजभांशकविलग्न-समुद्भकालं लग्नस्थशीतगुसितौ च विहाय कुर्य्यात्" ॥ अग्नि-ग्रहणशुद्धिः । अथ सन्न्यासग्रहणम् । जीवार्केन्दुविशुद्धौ ध्रुव-मृदुभगणे चोत्तरस्थे दिनेशे प्रव्रज्येशे सुवीर्य्ये स्थिरभवन-विलग्नस्थितेऽर्कज्यवारे । प्रव्रज्याख्येषु योगेष्वशुभगगनगै-र्वीर्यहीनैः सवीर्य्ये जीवे धर्मेऽम्बरे वा स्थिरभवननरांशो-दये मोक्षदीक्षा" । इति सन्न्यासकरणम् । "शुभग्रहा-र्कवारेषु मृदुक्षिप्रध्रुवेषु च । शुभराशिविलग्नेषु शुभं शान्ति-कपौष्टिकम्" ॥ शान्तिकादिशुद्धिः । ज्ञानग्रहणं रत्नमा-लायाम् । "शीतांशौ बुधराशिस्थे शुभेषूदयवर्त्तिषु । ज्ञानस्य ग्रहणं कार्य्यं हित्वा पापग्रहोदयम्" ॥ राजमार्त्तण्डे । "वसु-पुनर्वसुपूर्वभुजङ्गमैः करनिशाकरशङ्करदैवतैश्च सह वाक्पतिभिः सह चित्रायां गुणगणार्जनमेभिरभीप्सितम्" । गुणार्जन-विधिः ।

"ग्रामान्तरं रसैर्मिश्रं बाणघ्नं ऋक्षहारितम् । शेषाङ्को ग्रामराशिः स्यात् शुभाशुभकरं नृणाम् ॥ दीर्घप्रस्तारहस्ताङ्कं त्रियुतं वसु... हरेत् । तच्छेषाङ्केन बोद्धव्या वास्तुजातिर्विच-क्षणैः ॥ [illegible] जातिर्लभेत् ध्रुवम् । ब्राह्मणः

क्षत्रियो वैश्यः शूद्रश्च नीचसंज्ञकः॥ अवनो नर्त्तको ह्याड़ो भवन्त्येते यथाक्रमम्। धननाशकरो विप्रः क्षत्रियो युद्धदायकः॥ धनहा च भवेद्वैश्यः शूद्रः पीड़ाकरः स्मृतः। नीचः सम्मानदाता च अवनो धनदायकः। नित्यानन्दकरो नर्त्तो ह्याड़ी च सर्वलक्षणः"॥

अथ गृहादिः। "सुनिश्चितां मन्दिरभूमिमादौ निखाय तोयावधि यत्नस्ताम्। कुर्य्यादिशल्यामथवा नृमाणं खात्वाथवा प्रश्नवशादिहविज्ञः॥ दूर्वा प्रवालाक्षतपुष्पाणिः शुचिः शुचिं दैवविदं समेत्य। पृच्छेद्विनीतो मधुरस्वरेण शल्यस्य तत्त्वं भवने तदीशः॥ ततः प्रश्नादिमो वर्णः सन्धार्य्यो यत्नतोऽथवा। क्रमात् पुष्पापगादेव फलानां ब्राह्मणादितः॥ प्रणवो धरणीधारिणी करौ च तदनन्तरम्। न भूत्यै नम इत्येष मन्त्रो वह्निप्रियात्मकः"॥ वह्निप्रिया स्वाहा। "मन्त्रेणानेन काठिनीमभिमन्त्र्य विभाजयेत्। नवधा सदनक्षेत्रं तया पश्चाद्विलेखयेत्॥ वकचत एहाः शपया नव चेत् प्रश्नाक्षराणि जायन्ते। प्रागादिकोष्ठे नवके वर्णास्ते शल्यमाख्यान्ति॥ प्रश्ने वकारः परतो नरास्थि ब्रवीति शल्यं मरकप्रदायि। क्षीणीशदण्डोरगहेतुमृत्युप्रदं वकारः खरशल्यमग्नौ॥ याम्यां चकारः प्रवगास्थिवेश्मप्रभोर्विनाशं प्रकरोति शल्यम्। रक्षोदिशि श्वास्थिगृहस्थितानां महद्भयं वक्ति सुनिश्चितं तः। एः पाशिदिश्यस्थिशिशोर्ब्रवीति मृत्युं प्रवासाद्भयमेव शल्यम्॥ होवायुकोणे नररूपमस्थिदारिद्र्यमित्रक्षयमाविधत्ते। धनपदिशि शकारः प्राह विप्रास्थिवित्तक्षयमादथ पकारो वक्ति ऋक्षास्थिशम्भौ॥ तदिह कुलविनाशं गोधनानाञ्च हानिं वितरति गृहनाथस्यापि गुप्तस्य दैवैः। यो मध्यभागे भषितं कपालं कालायसं चाह कुलक्षयाय॥ यत्नादपास्यात्यधुना प्रमाणं सर्वत्र तथ्यं कथयामि

शल्ये । इन्द्रयचो जलेशाने शल्यं साङ्किरे कटौ । वङ्गान्त-कक्कुवेरेषु पुरुषे मध्यवातयोः" ॥ इति शल्योद्धारः ।

देवीपुराणम् । "पुरुषाधः स्थितं शल्यं न गृहे दोषदं भवेत् । प्रासादे दोषदं शल्यं भवेत् यावज्जलान्तकम् ॥ गृहा-रम्भेऽतिकण्डूतिः स्वाम्यङ्गे यदि जायते । शल्यं त्वपनयेत्तत्र प्रासादे भवनेऽपि वा" ॥ वाटीव्यवस्था हस्तोऽप्यत्र कफोन्युप-क्रममध्यमाङ्गुल्यग्रपर्य्यन्तः । मध्यमाङ्गुलीकुर्परयोर्मध्ये प्रामा-णिकः कर इत्यभियुक्तस्मरणादिति कल्पतरुरत्नाकरौ । भीम-पराक्रमे भोजराजः "स्वामिहस्तप्रमाणेन धर्मपत्नीकरेण वा । मापयेद्धर्म्मावन्तु गृहकर्मणि कोविदः ॥ रूपाष्टके ८१ विंभि-हतो भवनस्य बन्धः कर्त्तुः स्वनृचभिह युग्मशरैकनिघ्नं १५२ । एकीकृतं रसनिशाकरयुग्मभक्तशेषं ततो भवति पिण्डपदं गृहस्य । गृहभूमिसमाहृतपिण्डपदं वसुलोचनरन्ध्रगजैर्गु-णितम् । रविभूधरत्रिंशत्योगहृतं भवनायव्ययस्थिति ऋच-पदम्" ॥ रूपाष्टकैकाशीत्या विहिनतः पूरितः । भवनस्य बन्धो दीर्घप्रस्तारमिलितहस्तः स्वऋचं तत्संख्यानं युग्मशरैक-विघ्नं द्विपञ्चाशदुत्तरशतपूरितम् एकीकृतं पूर्वाङ्केन मिलितं रसनिशाकरयुग्म २१६ । भक्तशेषं षोड़शाधिकद्विशतहृता-वशिष्टं संख्यानं पिण्डपदसंज्ञं गृहस्य भवति तद्गृहभूमिसमा-हृतपिण्डपदं वसुलोचनरन्ध्रगजैः अष्टद्विनवाष्टभिर्य्यथाक्रमं गुणितं पूरितं यथाक्रमं रविभूधरत्रिंशद्योगहृतं द्वादशसप्त-त्रिंशत्सप्तविंशतिभिर्हृतं गृहस्य यथाक्रमम् आयव्ययस्थिति ऋचपदं भवतीत्यर्थः । "रुद्रहस्तमिते बन्धे भरण्या योगतो यथा । आयादयो भवन्त्येव वसुषट्तिथियुञ्जिताः" ॥ ८ । ६ । १५ । २ । अत्र यत्रचत्रं दीयते पश्चात्तदेवायातीति । यत्र तु शेषो नास्ति तत्र हारकाङ्कः शेषः "शेषाङ्केन फले बोध्ये

शेषाभावे तु द्वारकात् । अङ्कादेव फलं बोध्यमिति तत्त्वविदां मतम्" ॥ इत्युक्तत्वात् । "व्ययाधिकं न कर्त्तव्यं गृहमायाधिकं शुभम् । अष्टाविंशप्रेतभागा नरभागाश्च विंशतिः । भागा द्वादश गन्धर्वाश्चत्वारो देवतांशकाः । प्रेतभागं परित्यज्य नरभागे गृहं शुभम्"॥ सारसंग्रहे । "न कोणेषु गृहं कुर्य्यात् नाप्यन्तेनापि मध्यतः । कोणे च धनहानिः स्यादन्ते रिपुभयं भवेत् ॥ मध्ये च सर्वनाशः स्यात्तस्मादेतान्विवर्जयेत् । पूर्वप्लवो वृद्धिकरो धनदश्चोत्तरप्लवः ॥ दक्षिणप्लवतो मृत्युः धनहा पश्चिमप्लवः" ॥ वास्तुनः प्रागादिनीचत्वफलम् । "प्रागादिस्थे सलिले सुतहानिः शिखिभयं रिपुभयञ्च । स्त्रीकलहः स्त्रीदौष्ट्यं नैस्वं वित्तात्मजविवृद्धी च ॥ भवनस्य वटः पूर्वे जातः स्यात् सर्वकामिकः । उडुम्बरस्तथा याम्ये वारुणे पिप्पलः शुभः ॥ प्लक्षश्चोत्तरतो धन्यो विपरीतो विपर्य्यये । जम्बीरपूगपनसाम्रककेतकीभिर्जातीसरोजतगरपत्रमल्लिकाभिः ॥ यन्नारिकेलकदलीदलपाटलाभिर्युक्तं तदाश्रमपदं श्रियमातनोति । शोभना दाड़िमाशोकपुन्नागविल्वकेशराः ॥ रक्तपुष्पाश्च प्राज्ञः चौरिणा च पशोर्भयम् । कण्टकचारिभयं कुर्य्यात् गृहभेदञ्च शाल्मलिः ॥ कृत्तिकाद्यास्तु पूर्वादौ सप्तसप्तोदिताः क्रमात् । यद्दिक्स्थं यस्य नक्षत्रं तत्र तस्य शुभं गृहम्" ॥ स्वनक्षत्रेण गृहदिङ्निर्णयः । "वास्तु प्रमाणेन तु गात्रकेण वामेन शेते खलु नित्यकालम् । त्रिभिस्तु मासैः परिवृत्य भूमौ तं वास्तुनागं प्रवदन्ति सिद्धाः ॥ भद्रादिके वासवदिक्शिराः स्यात् मार्गादिकेषु त्रिषु याम्यमूर्द्धा । प्रत्यक्शिराः स्यात् खलु फाल्गुनादौ ज्यैष्ठादिकौबेरशिराः सनागः । मूर्द्धि खाते भवेन्मृत्युः पृष्ठे स्यात् पुत्रभार्य्ययोः । जघनेऽर्थक्षयं विद्यात् सर्वसम्पत्तथोदरे । एवं नागोऽनुसंशुद्धो हि चेद्दक्षिणपश्चिमे

शिशालं पूर्वतो हीनं कार्य्यं वा सौख्यवर्जितम् ॥ केचिद्दक्षिणभागे तु वदन्त्येकं गृहं बुधाः । ऐशान्यां देवशाला स्यात् आग्नेय्याञ्च महासनम् ॥ आयुष्करन्तु नैरृत्यां वायव्यां कोषमन्दिरम्" ॥ मत्स्यपुराणे । "चैत्रे व्याधिमवाप्नोति यो गृहं कारयेन्नरः । वैशाखे धनरत्नानि ज्यैष्ठे मृत्युस्तथैव च ॥ आषाढ़े धनरत्नानि पशुवर्जमवाप्नुयात् । श्रावणे काञ्चनं पुत्त्रान् हानिं भाद्रपदे तथा ॥ पत्नीनाश इषे मासि कार्त्तिके धनधान्यभाक् । मार्गशीर्षे तथा भक्तं पौषे तस्करतो भयम् ॥ माघे चाग्निभयं विद्यात् फाल्गुने काञ्चनं सुतान् । शुक्लपक्षे भवेत् सौख्यं कृष्णे तस्करतो भयम्" ॥ विशेषयति भोजः । "कर्किकुम्भहरिनक्रगतेऽर्के पूर्वपश्चिममुखानि गृहाणि । तौलिमेषवृषवृश्चिकजातदक्षिणोत्तरमुखानि कुर्य्यात् ॥ अन्यथा यदि करोति दुर्मतिर्व्याधिशोकधनहानिमश्नुते । मीनचापमिथुनाङ्गनागते कारयेन्न गृहमेव भास्करे ॥ न प्रधानगृहारम्भं कुर्य्यात् पौषे शुचावपि । यदि कुर्य्यात् सोऽचिरेण महतीमापदं व्रजेत्" ॥ महाभारते । "निषिद्धेऽपि हि काले तु स्वानुकूले शुभे दिने । तृणवस्त्रगृहारम्भे मासदोषो न विद्यते ॥ छेदनं संग्रहञ्चैव काष्ठादीनां न कारयेत् । श्रवणादौ बुधः षट्के न गच्छेद्दक्षिणां दिशम् ॥ अग्निपीड़ा भयं शोको राजपीड़ा धनक्षयः । संग्रहे तृणकाष्ठानां कृते वस्वादिपञ्चके ॥ चौरिवृक्षोद्भवं दारु गृहेषु न निवेशयेत् । कृताधिवासं विहगैरनिलानलपीड़ितम् ॥ गजैर्विभग्नञ्च तथा विद्युन्निर्घातपीड़ितम् । चैत्यदेवालयोत्पन्नं वज्रभग्नं श्मशानजम् ॥ देवाद्यधिष्ठितं दारु नीपनिम्बविभीतकान् । कण्टकिनोऽसारतरून् वर्जयेत् गृहकर्म्मणि ॥ वटाश्वत्थौ च निर्गुण्डीं कोविदारविभीतकौ । प्लक्षकं शाल्मलीञ्चैव पलाशञ्च विवर्जयेत् ॥ विस्तारात् द्विगुणोच्छ्रायं द्वारं कुर्य्या-

त्तथा गृहम्" ॥ गृहारम्भस्तु अवघादावप्याह राजमार्त्तण्डः । "आदित्येज्यभरोहिणी-मृगशिरश्चित्राधनिष्ठोत्तरापौष्णीविष्णु-शतानुराधपवनैः शुद्धैः सुतारान्वितैः। सौम्यानां दिवसेऽथ पापरहिते योगे विरिक्ते तिथौ विष्टित्यक्तदिने वदन्ति मुनयो वेश्मादिकार्य्यं शुभम्" ॥ मात्स्ये। "चन्द्रादित्यबलं लब्ध्वा लग्नं शुभनिरीक्षितम्। स्तम्भोच्छ्रायादिकर्त्तव्यमन्यत्र परिवर्जयेत् ॥ अश्विनीरोहिणीमूलमुत्तरत्रयमैन्दवम्। स्वातीहस्तानुराधा च गृहारम्भे प्रशस्यते ॥ वज्रव्याघातशूले च व्यतीपातेऽतिगण्डके। विष्कुम्भगण्डपरिघवर्ज्जं योगेषु कारयेत् ॥ आदित्यभौमवर्ज्यास्तु सर्वे वाराः शुभावहाः। प्रसादेऽप्येवमेव स्यात् कूपवापीषु चैव हि" ॥ कल्पतरौ देवीपुराणम्। "यस्य देवस्य यः कालः प्रतिष्ठाध्वजरोपणे। गर्त्ता पूर्शिलान्यासे शुभदस्तस्य पूजितः" ॥ यस्य देवस्य प्रतिष्ठाध्वजरोपणे यः कालः शुभदस्तस्य गर्त्तापूरशिलान्यासे स कालः पूजित इत्यर्थः। मात्स्ये। "चैत्रेऽथ फाल्गुने वापि ज्यैष्ठे वा माधवेऽपि वा। माघे वा सर्वदेवानां प्रतिष्ठा शुभदा भवेत्" ॥ प्रतिष्ठासमुच्चये ज्यैष्ठाषाढ़कयोर्वापि इत्युक्तेराषाढ़े दक्षिणायनेऽपि दुर्गाप्रतिष्ठामाह देवीपुराणम्। "महिषासुरहन्त्र्याश्च प्रतिष्ठा दक्षिणायने"। यत्तु कृत्यचिन्तामणौ। "गृहेषु यो विधिः प्रोक्तो विनिवेशप्रवेशयोः। स एव विदुषा कार्य्यो देवतायतनेष्वपि" ॥ एतत्तु मासव्यतिरिक्तशुभचन्द्रादिविषयम् अन्यथा प्रागुक्तविरोधापत्तेः। ज्योतिषे। "उग्रं विशाखामदितिञ्च शक्रं भुजङ्गमग्निञ्च विहाय गेहम्। गाम्य स्वलग्नस्थिरमन्दिरेषु कुर्य्याच्छुभैर्युक्तनिरीक्षितेषु ॥ नवग्रहा भवेयुश्च यदि केन्द्रत्रिकोणगाः। दोषस्तदा क्षयं याति तमः सूर्य्योदये यथा" ॥ राजमार्त्तण्डे। "पूर्णिमातोऽष्टमीं यावत् पूर्वास्यं

वर्जयेद् गृहम् । उत्तरास्यं न कुर्वीत नवम्यादिचतुर्दशीम् ॥ अमावास्याष्टमीमध्ये पश्चिमास्यं विवर्जयेत् । नवमीतश्च याम्यास्यं यावच्छुक्लचतुर्दशीम्" ॥ दीपिकायाम् । "गणेशं गन्धपुष्पाद्यैर्लोकपालानथ ग्रहान् । पूजयेत् क्षेत्रपालांश्च क्रूरभूतांश्च बाह्यतः । ब्रह्माणं वास्तुपुरुषं तद्गेहस्थाश्च देवताः" ॥ ताश्च शिखिप्रभृतयो यथा । "शिखि चैवाथ पर्जन्यो जयन्तः कुलिशायुधः । सूर्य्यः सत्यो भृगुश्चैव आकाशो वायुरेव च ॥ पूषा च वितथश्चैव गृहक्षतयमावुभौ । गन्धर्वो भृगुराजश्च मृगः पितृगणस्तथा ॥ दौवारिकोऽथ सुग्रीवः पुष्पदन्तो जलाधिपः । असुरः शेषपापौ च रोगो हि मुख्य एव च ॥ भल्लाटः सोमसर्पौ च अदितिश्च दितिस्तथा । आपश्चैवाथ सावित्रो जयो रुद्रस्तथैव च ॥ अर्य्यमा सविता चैव विवस्वा विबुधाधिपः । मित्रोऽथ राजयक्ष्मा च तथा पृथ्वीधरः क्रमात् ॥ आपवत्सस्तथा ब्रह्मवास्तुदेहगतास्त्विम । चरकी च विदारी च पूतना पापराक्षसी ॥ स्कन्दार्य्यमा जम्भकाश्च पिलिपिच्छस्तथाष्टमः । एतान् मत्स्यपुराणोक्तान् गृहारम्भे प्रपूजयेत्" ॥ महाकापिलपञ्चरात्रे "जलाधारगृहाद्येषु यजेद्वास्तु विशेषतः । ब्रह्माद्यादितिपर्य्यन्ताः पञ्चाशत्त्रयसंयुताः ॥ सर्वेषां किल वास्तूनां नायकाः परिकीर्त्तिताः । असंपूज्य हितान् सर्वान् प्रासादादीह कारयेत् ॥ अनिष्पत्तिर्विनाशः स्यादुभयोर्धर्मधर्मिणोः" ॥ तत्तद्देवताभेदेन बलिमन्त्रोभयविशेषानुक्ता । "स्वर्गपातालमर्त्येषु ये देवा वास्तुसम्भवाः । गृह्णन्त्विम बलिं सद्यं तुष्टायान्तु स्वमालयम् ॥ मातरो भूतवेताला ये चान्ये बलिकाङ्क्षिणः । विष्णोः पारिषदा ये च तेऽपि गृह्णन्त्विमं बलिम् ॥ पितृभ्यः क्षेत्रपालेभ्यो बलिं दत्त्वा प्रकामतः । अभावादुक्तमार्गस्य कुशपुष्पादिभिर्यजेत् ॥ आकुञ्चितकरं

वास्तुमुत्तानमसुराकृतिम्। स्मरेत् पूजासु कुद्यादिनिवेशी त्वधराननम्"॥ देवीपुराणे। "मध्यभागे ततः कुर्य्यात् वास्तुदेवस्य पूजनम्। श्रियश्च पूजनं कुर्य्याद्वासुदेवगणस्य च। गन्धार्घ्यपुष्पनैवेद्यधूपाद्यैः सुरसत्तम। ततः संपूजयेत्तस्मिन् सर्वलोकधरां महीम्॥ सुरूपां प्रमदारूपां दिव्याभरणभूषिताम्। ध्यात्वा तामर्च्चयेद्देवीं परितुष्टां स्मिताननाम्॥ ततः प्रणम्य विज्ञाप्य तन्मयत्वेन चिन्तयेत्"॥ तथा। "एवं प्रपूजिता देवाः शान्तिपुष्टिप्रदा नृणाम्। अपूजिता विनिघ्नन्ति गृहारम्भेषु कारकम्॥ गृहादेः शिल्परूपत्वात् विश्वकर्मापि पूज्यते। शिल्पाचार्य्याय देवाय नमस्ते विश्वकर्म्मणे। स्वाहा ब्रह्मपुराणीयमन्त्रेणेति मतं मम"॥ ज्योतिषे। "तद्धस्तायतमात्रगर्त्तमतुलं कर्त्तुर्विशुद्धे दिने स्नात्वा शाद्वलगोमयैः शुचितरं कृत्वाम्बुपूर्णं सुरान्। संपूज्यामलपुष्पकैर्जलघटं कृत्वाम्रशाखायुतं दद्यादर्घ्यमनेन विप्रवचसा मन्त्रेण वास्तोष्पतेः॥ वास्तोष्पते त्वमुत्तिष्ठ संसारस्थितिकारक। गृहाणार्घ्यं मया दत्तं गृहारम्भं करोम्यहम्॥ मम सर्व्वहितार्थाय विष्णुलोकाय वै नमः। गर्त्ते तस्मिन् सलिलभरिते निश्चलं वारिभर्त्तुः स्थैर्य्यं प्रकुर्य्याज्जनयति हितं दक्षिणावर्त्तयोगात्। वामावर्त्तं भवति विपदे स्वामिनाशञ्च कुर्य्यात् भूमिच्छेदाद्‌ व्रजति लघुतां वित्तनाशं लभेद्वा"॥ देवीपुराणे। "ततो गर्त्तं खनेन्मध्ये हस्तमात्रं प्रमाणतः। चतुरङ्गुलमात्रं तदधः खन्यात् सुसंमितम्। आचार्य्यः प्राङ्मुखो भूत्वा ध्यायेद्देवं चतुर्मुखम्। अर्घ्यं दद्यात् सुरश्रेष्ठ कुम्भतोयेन मन्त्रवित्। तस्मिन् शुक्लानि पुष्पाणि प्रक्षिपेदोमितिस्मरन्। तदागर्त्तं परीक्षेत दधिभक्तान्वितं क्षिपेत्। ईशाने सूत्रपातः स्यादाग्नेय्यां स्तम्भरोपणम्। द्वारं नवमभागे तु कार्य्यं वामात् प्रदक्षिणम्"।

द्वारस्य विशेषमाह "तृतीयतुर्य्ययोः प्राच्यां याम्ये तुर्य्ये च पश्चिमे। तुर्य्यपञ्चमयोः पञ्च त्रिचतुर्थेषु चोत्तरे"। वामात् प्रदक्षिणमिति गृहाभ्यन्तरे स्थित्वा ऐशान्यादिक्रमेण कार्य्य-मित्यर्थः। तत्र प्रयोगः। कृतस्नानादिः शुभे लग्ने वास्तु-दक्षिणभागे चतुरङ्गुलखातहस्तमात्रगर्त्ते बहुतरनूतनदृणगो-मयोपलिप्तजलपूरिते शालग्रामे वा गणेशादीन् प्रणवादि नमो-ऽन्तेन स्व स्व नाम्ना पूजयेत्। गणेशाय इन्द्राय वह्नये यमाय नैऋताय वरुणाय कुवेराय ईशानाय ब्रह्मणे अनन्ताय सूर्य्याय सोमाय मङ्गलाय बुधाय वृहस्पतये शुक्राय शनैश्चराय राहवे केतुभ्यः चेत्रपालेभ्यः क्रूरभूतेभ्यः ब्रह्मणे वास्तुपुरुषाय शिखिने पर्ज्जन्याय जयन्ताय इन्द्राय सूर्य्याय सत्याय भृशाय आकाशाय वायवे विष्णवे पूष्णे वितथाय गृहक्षताय यमाय गन्धर्वाय भृङ्गराजाय मृगाय पितृभ्यः दौवारिकाय सुग्रीवाय पुष्पदन्ताय वरुणाय असुराय शेषाय पापाय रोगाय अहये मुख्याय भल्ला-टाय सोमाय सर्पाय अदित्यै दित्यै आपाय सावित्रे जयाय रुद्राय अर्य्यम्णे सवित्रे विवस्वते इन्द्राय मित्राय राजयक्ष्मणे पृथ्वीधराय आपवत्साय ब्रह्मणे चरक्यै विदार्य्यै पूतनायै पाप-राक्षस्यै स्कन्दाय अर्य्यम्णे जम्भकाय पिलिपिञ्जाय वासुदेवाय। नमस्ते बहुरूपाय विष्णवे परमात्मने स्वाहा इत्यनेन पूजयेत्। श्रियै वासुदेवगणाय पृथिव्यै । ८१ । पृथिव्यर्घ्यमन्त्रस्तु। "हिरण्यगर्भे वसुधे शेषस्योपरिशायिनि। वसाम्यहं तव पृष्ठे गृहाणार्घ्यं धरित्रि मे"॥ ततः प्रणम्य प्रार्थयेत् "शुभे च शोभने देवि! चतुरस्रे महीतले। शुभदे शुभगे देवि! गृहे कार्य्याय रम्यताम्॥ अव्यङ्गे चाक्षते पूर्णे मुनेराङ्गिरसः सुते। तुभ्यं कृता मया पूजा समृद्धिं गृहिणः कुरु। वसुन्धरे वरा-रोहे स्थानं मे दीयतां शुभे॥ त्वत्प्रसादान्महादेवि! कार्य्यं

मे सिध्यतां क्रतम् । अग्निभ्योऽप्यथ सर्पेभ्यो ये चान्ये तत्समाश्रिताः । तेभ्यो बलिं प्रयच्छामि पुण्यमोदनमुत्तमम् । भूतानि राक्षसा वापि येऽत्र तिष्ठन्ति केचन ॥ ते गृह्णन्तु बलिं सर्वं वास्तुगृह्णास्यहं पुनः" । इति मन्त्राभ्यां माषभक्तबलिं दद्यात् । ततः "प्रणमेद्धृवद्रुमो मन्त्रेणानेन भक्तितः । भूतानि यानीह वसन्ति तानि बलिं गृहीत्वा विधिनोपपादितम् ॥ अन्यत्र वासं परिकल्पयन्तु क्षयन्तु तानीह नमोऽस्तु तेभ्यः" । ततस्तस्मिन् गर्त्ते दधिदूर्वापुष्पफलाक्षपल्लवमुखेनाम्बुपूर्णघटेन एषोऽर्घ्यः वास्तोष्पतये नम इत्यर्घ्यं दद्यात् । "भिल्याचार्याय देवाय नमस्ते विश्वकर्मणे" । स्वाहेत्युचार्य्य विश्वकर्मणे नम इति पूजयेत् । ततः "वास्तुदेवगणाः सर्वे पूजामादाय याज्ञिकात् । इष्टकर्मप्रसिद्ध्यर्थं पुनरागमनाय च" । क्षमध्वमिति विसर्जयेत् । ततस्तदर्घ्यजलपूरितगर्त्ते प्रणवेन शुक्लपुष्पं क्षिप्त्वा शुभाशुभं पश्येत् निश्चलं चेत् कर्त्तुः स्थैर्यं जनयति दक्षिणावर्त्तात् क्षितं वामावर्त्तात् विपदं नाशं भूमिच्छेदाच्छित्तनाशं लघुतां वा ततस्तत्र दधिदूर्वादिकं दत्त्वा मृत्तिकया गर्त्तं पूरयेत् । ततः सूत्रपाताय ईशानादि प्रदक्षिणाच्चतुरः कीलकान् "विशन्तु ते तले नागा लोकपालाश्च कामगाः । गृहे त्वस्मिंश्च तिष्ठन्तु आयुर्बलकराः सदा" इति मन्त्रेण चतुष्कोणेषु दृढं रोपयेत् । तत ईशानादिक्रमेण सूत्रेण तं वेष्टयेत् । तत आग्नेय्यां गर्त्ते गन्धपुष्पाद्यलङ्कृतं स्तम्भं रोपयेत् । तत्र मन्त्रः । "यथाचलोगिरिर्मेरुर्हिमवांश्च यथाचलः । शुभप्रदगृहस्तम्भ तथात्वमचलो भव" ॥

अथ गृहप्रवेशः । "स्थाप्यं समाप्यं क्रतुयूपकाष्टं गृहप्रवेशो गजवाजि बन्धः । ग्रामे प्रवेशो नगरे पुरे वा दिने प्रशस्तानि शनेश्वरस्य ॥ ज्येष्ठादितिभ्यां संयुक्तं गृहारम्भोदि-

तस्य यत् । सत्त्वं योजयेद्देश्मप्रवेशे दैवचिन्तकः" ॥ विष्णुधर्मोत्तरे । "गोपुच्छविन्यस्तकरः प्रविशेच्च गृहं गृही । अनुलिप्तः सुखीसग्वीसपत्नीकस्तथैव च ॥ कृत्वाग्रतो द्विजवरानथ पूर्णकुम्भं दध्यक्षताम्रदलपुष्पफलोपशोभम् । दत्त्वा हिरण्यवसनानि तदा द्विजेभ्यो माङ्गल्यशान्तिनिलयं निलयं विशेच्च"॥ महाभारते "पारावतमयूराश्च शुका वै सारिकास्तथा । गृहस्थेन सदा पोष्या आत्मनः श्रेय इच्छता" ॥ मत्स्यपुराणम् । "गोगजाश्वाविशालासु तत् पूरीषस्य निर्गमम् । अस्तं गते न कर्त्तव्यं देवदेवे दिवाकरे" ॥ गृहमुपक्रम्य गोभिलः । "वर्जयेत् पूर्वतोऽश्वत्थमक्षं दक्षिणतस्तथा । न्यग्रोधमपराद्देशादुत्तराच्चाप्युडुम्बरम् ॥ अश्वत्थोऽग्निभयं कुर्य्यात् अक्षो ब्रूयात् प्रमायुकान् । न्यग्रोधो राजसं पीड़ा कुक्ष्यामयमुडुम्बराः" ॥ अक्षः पर्कटी प्रमायुकान् प्रकृष्टपित्तानमायुः पित्तमित्यमरः । इति गृहारम्भप्रवेशौ ।

"ब्रह्मानुराधवसुतिष्यविशाखहस्तचित्रोत्तराश्विपवनादितिरेवतीषु । जन्मर्क्ष जीवबुधशुक्रदिनोत्सवादौ धार्य्यं नवं वसनमीश्वरदेवतुष्टौ । नववस्त्रपरीधानम् ॥ पुष्यार्कादितिपित्रमित्रशशभृद्दित्तध्रुवत्वष्टृषु मुक्तादन्तसुवर्णविद्रुममणीन् दध्याद्विमुद्दे हरौ । पुष्टेज्ये समये शुभे भ्रुवसुराचार्य्यादितौशेऽङ्गना नो रत्नं विभृयात् प्रवालकमणीन् शङ्कं हिता स्वामिने" । इति रत्नधारणम् । पूर्वं स्त्रीपुंसामान्येन विधाय पश्चात् स्त्रिया विशेषनिषेधः । "मूलेन्दुपूर्वात्रययाम्यपित्रासर्पाग्निशक्रानिलशूलिनश्च । खड्गादिसन्धारणमेषु कुर्य्यात् तिथौ विलग्ने च शुभे शुभाहे" इति खड्गादिधारणम् । "मैत्रेन्दुपौष्ण-पितृभादितिवाजिचित्रा-हस्तोत्तरात्रयहरीज्यविधातृभानि । एतेष्वभीष्टशयनासनपादुकादि-सम्भोगकार्य्यमुदितं

मुनिभिः शुभाहे"। श्रीपतिसंहितायाम्। "हस्तादितिश्रवगुरूत्तरेषु पौष्णाश्विमूलेन्दुभचित्रभेषु। वारेन्दुजीवेज्यसितेन्दुजानां शय्यासनादीनि हितप्रदानि"। चिन्तामणौ हारीतः। "हरिकरमरुदनुराधाविशाखपौष्णादितिद्वयोत्तरभे भोजनविधिशय्यासनभोगारम्भो हितार्थाय" इत्यलङ्कारादिधारणम्।

"पुष्या मैत्रकरोत्तरत्रवरुणश्चाख्नुपितेन्दुभैः शस्तोऽर्के शुभवारयोर्नतिथिषु क्रूरे खवीर्येषु च। पुष्णेन्दौ जलराशिगे दशमगे शुक्रे शुभांशोदये प्रारम्भः सलिलालयस्य शशदो जीवेन्दुपुत्रोदये। वारुणमूलविशाखसौम्यध्रुवहस्तपौष्णपुष्येषु। तरुगुल्मलतादीनामारोपणं प्रशस्तम्"॥ वृक्षादिरोपणम्।

अथ पुष्करिण्यारम्भः। मत्स्यपुराणे। "प्राप्य पक्षं शुभं शुक्लमतीते चोत्तरायणे। आषाढे द्वे तथा मूलमुत्तरा त्रयमेव च॥ ज्येष्ठाश्रवणरोहिण्यः पूर्वभाद्रपदे तथा। हस्ताश्विनी रेवती च पुष्यो मृगशिरस्तथा॥ अनुराधा तथा स्वाती प्रतिष्ठादिषु शस्यते"॥ अतीते प्राप्ते गत्यर्थस्य प्राप्त्यर्थत्वात्। भविष्ये। "प्रतिपच्च द्वितीया च तृतीया पञ्चमी तथा। दशमी त्रयोदशी चैव पौर्णमासी च कीर्त्तिता॥ सोमो बृहस्पतिश्चैव शुक्रश्चैव तथा बुधः। एते सौम्यग्रहाः प्रोक्ताः प्रतिष्ठायागकर्म्मणि"॥ व्यवहारसमुच्चये। "प्रतिष्ठा सर्वदेवानां केशवस्य विशेषतः। उत्तरायणमापन्ने शुक्लपक्षे शुभे दिने॥ कृष्णपक्षे च पञ्चम्यामष्टम्याञ्चैव शस्यते। द्वादश्येकादशीराका शुक्ले कृष्णे च पञ्चमी॥ अष्टमी च विशेषेण प्रतिष्ठायां हरेः शुभाः। ध्रुव लघु मृदुवर्गे वारुणे विष्णुदैवे मरुददितिधनिष्ठे शोभने वासरे च। त्रिदशमदनजन्मैकादशे शीतरश्मौ विबुधकृतिरभीष्टा नाड़िनक्षत्रहीने"॥ देवताघटनम्। प्राजेशवासव-

करादितिभाश्विनीषु पौष्णामरेज्यशशिभेषु तथोत्तरासु । कर्त्तुः शुभे शशिनि केन्द्रगते च जीवे कार्य्या हरे शुभतिथौ विधिवत् प्रतिष्ठा ॥ पुष्याश्विशक्रभमदैवतवासवेषु पौष्णानिलेशमघ-रोहिणीमूलहस्ते पौष्णानुराधहरिभेषु पुनर्वसौ च कार्य्या-भिषेकतरुभूतपतिप्रतिष्ठा" ॥ महेशादिप्रतिष्ठा । ध्रुव-मृदुनक्षत्रगणे रवि शुभवारेषु सुतिथौ दीक्षा । स्थिरलग्ने शुभे चन्द्रे कोणे शुभे गुरौ धर्मे ; दीक्षाकरणम् । भुजवले । "युगादा-वयने पुण्ये कर्त्तव्यं विषुवद्दये । चन्द्रसूर्य्यग्रहे वापि दिने पुण्येऽथ पर्वसु ॥ या तिथिर्यस्य देवस्य तस्यां वा तस्य दीक्षणे । गृह्यागमविशेषेण प्रतिष्ठा मुक्तिदायिनी" ॥ पद्मपुराणे । "प्रतिपद्धनदस्योक्ता पवित्रारोहणे तिथिः । श्रिया देव्या द्वितीया च तिथीनामुत्तमा स्मृता ॥ तृतीया त्वथवान्या च चतुर्थी तत्सुतस्य च । पञ्चमी सोमराजस्य षष्ठी प्रोक्ता गुहस्य च ॥ सप्तमी भास्करस्योक्ता दुर्गायाश्चाष्टमी तिथिः । मातृणां नवमी प्रोक्ता दशमी वासुकेस्तथा ॥ एकादशी ऋषीणाञ्च द्वादशी चक्रपाणिनः" ॥ चक्रपाणिन इति पणव्यवहार इत्यस्मात् । "त्रयोदशी त्वनङ्गस्य शिवस्य च चतुर्दशी । मम चापि मुनिश्रेष्ठ पौर्णमासी तिथिः स्मृता" ॥ इति देवप्रतिष्ठा ।

"शुभहरिधटलग्ने देवराट्युग्विशाखाविनयनविधियास्य-इन्दसर्पान्यभेषु सुकरणतिथियोगे शुक्रजीवार्कवारे तरणिघटन-मिष्टं चन्द्रताराविशुद्धौ" । नौकाघटनं "शुभाहे विष्णुयुग्मे-न्दुभगमैत्राश्विपाणिषु । चालनं घटनस्थानात् नावः शुभ-तिथीन्दुषु" ॥ निष्पन्न नौकाचलनम् । "अश्विकरेज्यसुधा-सुधानिधिपूर्वामित्रधनाच्युतभे शुभलग्ने । तारकयोगतिथी-न्दुविशुद्धौ नौगमनं शुभदं शुभवारे" ॥ नौयात्रा । हारीतः । "जन्माधाने निधनभे प्रत्यरौ च विपत्करे । यदि व्याधिः

समुत्पन्नः क्लेशाय मरणाय वा ॥ यदा तारा: शुभा: पुंसां नक्षत्रस्याशुभं फलम् । तत्र नात्यन्तिकं ज्ञेयमेवमन्यत्र पण्डितैः ॥ तद्यत्र चन्द्रमास्तस्य गोचरे चाशुभप्रदः । तदा नूनं भवेन्मृत्युः सुधासम्प्रीतदेहिनः ॥ शिखिगुणरसेन्द्रियानलशशिविषयगुणर्त्तुपञ्चमपक्षाः । विषयैकचन्द्रयुग्मार्णवाब्धिरुद्रानिलदहनाः । भूतशतपक्षवसवो द्वौ त्रिंशच्छततारकामानम्" ॥ तदनुसारेण फलकथनम् । "आर्द्रा श्लेषा स्वाती पूर्वा ज्येष्ठासु च यस्य रोगजन्म स्यात् । धन्वन्तरिणापि चिकित्सितस्य तस्यासवो न स्युः" कौशिकः । "कृत्तिकासु यदा व्याधिर्नृणां संप्रतिपादितः । नवरात्रं भवेत् पीड़ा त्रिरात्रं रोहिणीषु च ॥ मृगशीर्षे पञ्चरात्रमार्द्रायां मुच्यतेऽसुभिः । पुनर्वसौ तथा पुष्ये सप्तरात्रं विधीयते ॥ नवरात्रं तथाश्लेषे मासमेकं मघासु च । द्वौ मासौ पूर्वफल्गुन्यामुत्तरासु त्रिपक्षकम् ॥ हस्ते च सप्तमे मोक्षश्चित्रायामर्द्धमासकम् । मासद्वयं तथा स्वात्यां विशाखे दिनविंशतिः ॥ मैत्रे चैव दशाहानि ज्येष्ठायामर्द्धमासकम् । मूले न जायते मोक्षः पूर्वाषाढ़े त्रिपक्षकम् ॥ उत्तरे विंशतिर्ज्ञेया द्वौ मासौ श्रवणे तथा । धनिष्ठायामर्द्धमासं वारुण्याञ्च दशाहकम् ॥ न च भाद्रपदे मोक्ष उत्तरासु त्रिपक्षकम् । रेवत्यां दिनविंशत्या चाहोरात्रं तथाश्विनौ ॥ प्राणैर्विमुच्यते नित्यं भरण्यां नात्र संशयः । कौशिकेन समादिष्टा नक्षत्रव्याधिसम्भवाः ॥ नक्षत्रं प्रतिकर्त्तव्यं नक्षत्रपथजानता । क्षीरवृक्षस्य समिधो जुहुयाद्दस्त्रदैवते ॥ तिलमक्षतान् याम्ये घृतमेवाग्निदैवते । प्राजापत्ये जुहुयात्तु ग्राम्यवीजकरञ्जकम् ॥ सौम्ये गव्यं पयो रौद्रे सर्पिर्मधुसमन्वितम् । अदितिर्दैवता यस्य घृताक्तास्तिलतण्डुलाः ॥ पायसं सर्पिषा चैव बृहस्पत्यधिदैवते । शास्रौ-

मधिश्च पवश्च सर्पिः सर्पाधिदैवते ॥ पितरो देवता यस्य घृताक्तास्तिलतण्डुलाः । अक्षता नाज्ययुक्ताश्च भगे सर्पिस्त-थोत्तरे ॥ सावित्रे दधिहोमो त्वष्ट्रे चित्रौदनं हविः । यवाः स्वात्याञ्च होतव्याश्चन्द्राग्निभे तु पायसम् ॥ मैत्रे सर्पिस्तु जुहु-यात्तदेव चेन्द्रदैवते । यथोपपन्नमन्नञ्च जुहुयान्नैरृते तथा ॥ अब्दैवते शालिवीजं वैश्वदेवे तु रूषकम् । रक्तानां तण्डुला-नाञ्च होतव्यं विष्णुदैवते ॥ न्यग्रोधोडुम्बराश्वत्थसमिधो वसु-दैवते । वारुणे वारिजातानां पुष्पाणां होम इष्यते ॥ अजैक-पादे होतव्यं प्राजापत्येन तत्समम् । अहि व्रध्ने तु नक्षत्रे पिष्टकान्नं प्रशस्यते ॥ पौष्णे फलान्यखण्डानि हुनेदष्टोत्तरं शतम् । सावित्र्या हुतमेतत्तु ब्राह्मणाभिहितं पुरा ॥ स्नात्वा चैव तु होतव्यं सद्यो ज्वरहरं परम्" ॥ भीमपराक्रमे । "कृत्ति-कायां पिष्टकछागमुखे दध्युदकञ्च देयम् । रोहिण्यां पिष्टक-गोमुखे शाकम् ॥ मृगशिरसि पिष्टकमृगमुखे माषो देयः । आर्द्रायां पिष्टकगोमुखे रक्तम् । पुनर्वसौ पिष्टकवराहमुखे पटोलम् । पुष्ये पिष्टकछागमुखे पायसम् । अश्लेषायां पिष्ट-कवराहमुखे घृतम् । मघायां पिष्टकवानरमुखे तिलाः । पूर्वफल्गुन्यां पिष्टकनरमुखे मुद्गतिलपूपिकाः । उत्तरफल्गुन्यां पिष्टकवलीवर्दमुखे शाकम् । हस्तायां पिष्टकमहिषमुखे पुष्करमूलम् । चित्रायां पिष्टकव्याघ्रमुखे तगरपुष्पम् । स्वात्यां पिष्टकमार्जारमुखे तिलाः । विशाखायां पिष्टकव्याघ्रमुखे गुड़भक्तम् । अनुराधायां पिष्टकमृगमुखे कुलत्थम् । ज्येष्ठायां पिष्टकमूषिकमुखे धन्याकम् । मूले पिष्टकमार्जारमुखे तिलम् । पूर्वाषाढ़ायां पिष्टककुम्भीरमुखे वचा । उत्तराषाढ़ायां पिष्ट-कवृषमुखे शाकभक्तम् । श्रवणायां पिष्टकमहिषीमुखे रक्तम् । धनिष्ठायां पिष्टकनरमुखे शाकभक्तम् । शतभिषायां पिष्टक-

वानरमुखे पिप्पली। पूर्वभाद्रपदायां पिष्टकनरमुखे सिततण्डुलाः। उत्तरभाद्रपदायामप्येवम्। रेवत्यां पिष्टकनरमुखे गुड़भक्तम्"। अश्विनी भरण्योरप्येवम्। एवं नक्षत्रदोहदे कृते ज्वरो नश्यति। एतद्विधानन्तु प्रथमं गन्धपुष्पधूपदीपनैवेद्यैः सदीपमाल्यपताकैः प्रपूज्य कार्य्यम्। "उरगमर्त्ताभिषार्द्राज्येष्ठयाम्यत्रिपूर्वास्वपि च रविजभौमे चार्कवारेण योगे। यदि भवति चतुर्थी द्वादशी भूतषष्ठी निगदित इह अन्तोर्नाशकालः प्रविष्टः॥ चरराशौ विलग्नस्थे द्विदेहार्द्धे च पश्चिमे। रोगस्य प्रशमः प्रश्ने विपर्य्यासे विपर्य्ययः॥ शुभग्रहाः सौम्यनिरीक्षिताश्च विलग्नसप्ताष्टमपञ्चमस्थाः। त्रिषड्दशा येषु निशाकरः स्यात् शुभं वदेद्रोगनिपीड़ितानाम्॥ पापर्क्षेषु प्रश्नलग्ने पापसंयुतवीक्षिते। तथैव चाष्टमस्थाने रोगिणां मरणं भवेत्"॥ मरणसूचकयोगद्वयम्। "मन्दः पापसमेतो लग्नान्नवमः शुभैरयुतदृष्टः। रोगार्त्तः परदेशे चाष्टमगो मृत्युकर एव"॥ परदेशस्थस्य रोगस्थानं मृत्युस्थानञ्च। "मूलमघार्द्राश्लेषा भरणी विशाखाग्निदैवतेषु नरः। गरुड़प्रियोऽपि दष्टो न प्राप्नोति दन्दशूकेन॥ पानाञ्जनालेपनलावणैस्तु देवविषं समुत्सारयति"॥ दष्टस्य गारुड़ीमूलं यदि दृष्टमश्नामलं भवति। गारुड़ी पुनर्नवा। "अर्कजटावल्कलमसृणं चूर्णमतिशिशिरसलिलसंयुक्तम्। पीतमक्षिकमकगोनाशवृश्चिकारिविषाणां विद्रावणम्॥ श्रोषसलिलमसृणवर्त्तितकाकलिकामूलपानलेपनेन। अपसरति मण्डलिविषं मारुतविलुप्तमिव घनवृन्दम्"॥ श्रोषसलिलं काञ्जिकं काकलीमूलं गुञ्जामूलम्। "लज्जालुकामूलं नीलीमूलमातपतण्डुलजलेन। मण्डलिविषमतिविषममपि पीतं निवारयति॥ यः पिबति पुष्यदिवसे जलपिष्टं सितं पुनर्नवामूलम्। पार्श्वेनापि न खलु विचरति तस्याहि वृश्चिकौ

वर्षम्" ॥ शातातपीयकर्म्मविपाके । "महापातकजं चिह्नं सप्तजन्मसु जायते । उपपातकजं पञ्च त्रीणि पापसमुद्भवम् ॥ दुष्कर्मजा नृणां रोगा यान्ति चैव क्रमात् शमम् । जपैः सुरार्च्चनैर्होमैर्दानैस्तेषां शमो भवेत् ॥ पूर्वजन्मकृतं पापं नरकस्य परिक्षये । बाधते व्याधिरूपेण तस्य कृच्छ्रादिभिः शमः ॥ कुष्ठञ्च राजयक्ष्मा च प्रमेहो ग्रहणी तथा । मूत्रकृच्छ्राश्मरीकासा अतीसारभगन्दरौ ॥ दुष्टव्रणं गण्डमाला पक्षाघातोऽक्षिनाशनम् । इत्येवमादयो रोगा महापापोद्भवाः स्मृताः ॥ जलोदरयकृत्प्लीहशूलरोगव्रणानि च । श्वासाजीर्णज्वरच्छर्दिभ्रममोहगलग्रहाः ॥ रक्तार्वुदविसर्पाद्या उपपापोद्भवा गदाः । दण्डापतान कश्चित्र वपुः कम्पविचर्चिकाः ॥ वल्मीकपुण्डरीकाद्या रोगाः पापसमुद्भवाः । अर्श आद्या नृणां रोगा अतिपापोद्भवा मताः ॥ अन्ये च बहवो रोगा जायन्ते रोगसङ्कराः । उच्यन्तेऽथ निदानानि प्रायश्चित्तानि च क्रमात् ॥ महापापे तु सर्वं स्यात्तदर्द्धमुपपातके । दद्यात् पापे तु षष्ठांशं कल्प्यं व्याधिबलाबलम् ॥ लक्षमुच्चावचं पुष्पं प्रदद्याद्देवतार्चने । दद्याद्द्विजसहस्राय मिष्टान्नं द्विजभोजने ॥ गोदाने वत्सयुक्ता गौः सुशीला च पयस्विनी"॥ गोदानमधिकृत्यादिपुराणे । "अरोगश्चैव जायेत तेजस्वी च भवेन्नरः" ॥ मनुः । "औषधान्यगदो विद्या दैवी च विविधा स्थितिः । तपसैव प्रसिध्यन्ति तपस्तेषां हि साधनम्" ॥ अगदोनैरुज्यम् । शातातपः । "यथा निदानं दोषोत्थः कर्मजो हेतुभिर्विना । महारम्भोऽल्पके हेतावन्तिमो दोषकर्मजः" ॥ सारावल्याम् । पथ्याशिनां शीलवतां नराणां सद्वृत्तिभाजां विजितेन्द्रियाणाम् । एवं विधानामिदमायुरत्र चिन्त्यं सदा वृद्धमुनिप्रवादः" ॥ व्यक्तमाह याज्ञवल्क्यः । "वर्त्त्याधारस्नेहयोगाद् यथा दीपस्य

संस्थितिः । विक्रियापि च दृष्टैवमकाले प्राणसंशयः" ॥ यथा चाविकलवर्त्त्यादिसत्त्वे प्रचण्डवातादिना दीपनाशस्तथा सत्यप्यायुषि चाशुभकर्मवशात् नीदुर्गवत्मयुद्धापथ्यसेवित्वादिना प्राणनाश इति । आयुर्वेदे । "यथाशास्त्रञ्च निर्णीतो यथा व्याधिचिकित्सितः । न शमं याति यो व्याधिः स ज्ञेयः कर्मजो बुधैः" ॥ तच्चिकित्सायां भारतीशभट्टाचार्य्यः । "दानैर्दयादिभिरपि द्विजदेवता गोगुर्व्वर्च्चनाप्रणतिभिश्च जपैस्तपोभिः । इत्युक्तपुण्यनिचयैरुपचीयमानाः प्राक् पापजा यदि रुजः प्रशमं प्रयान्ति" ॥ अतएव हेमाद्रिधृतदानखण्डे तत्तद्रोगे तत्तद्दानाभिधानपूर्व्वकं भगवद्वाक्यम् । "सुवर्णदानं सर्व्वेषां रोगाणां शमकारणम् । तस्मात् सर्व्वप्रयत्नेन कर्त्तव्यं कमलोद्भव" ॥ कर्म्मदोषोभयजव्याधौ च । "दानादिभिः कर्म्मभिरौषधीभिः कर्म्मक्षये दोषपरिक्षये च । सिद्ध्यन्ति ये यत्नवतां कथञ्चित्तत्कर्म्मदोषप्रभवा गदास्तु" ॥ अतएवोक्तम् । "प्रायश्चित्तमकृत्वा तु कर्म्म कुर्य्यान्न किञ्चन । अनिस्तीर्णमघं यस्माद्द्विगुणं परिपच्यते" ॥ केवलदोषजे तु । "स्वहेतुदुष्टैरनिलादिदोषैरुपप्लुतैः स्वेषु परिस्थलैः । भवन्ति ये प्राणभृतां विकारास्ते दोषजा भेषजशुद्धिसाध्याः" ॥ बृहस्पतिः । "अज्ञातौषधमन्त्रस्तु यश्च व्याधेरतत्त्ववित् । रोगिभ्योऽर्थं समादत्ते सदण्ड्यश्चौरवद्भिषक्" ॥ नन्दिपुराणे । "अप्येकं नीरुजं कृत्वा जन्तुं यादृशतादृशम् । आयुर्वेदप्रभावेण किन्न दत्तं भवेद्भुवि" ॥ किन्न दत्तं भवेदिति सर्व्वदानफलं लभते इत्यर्थः । लिङ्गपुराणम् । "आयुष्ये कर्म्मणि क्षीणे लोकोऽयं दूयते मया । औषधानि च मन्त्राश्च न होमो न पुनर्जपः । त्रायन्ते मृत्युनोपेतं जरया वापि मानवम्" ॥ इति कालवाक्यम् । हरिवंशेऽपि । "दैवं पुरुषकारेण न शक्यमति-

वर्त्तितुम्" इति । "न गच्छन्ति न शृण्वन्ति न पश्यन्ति गतायुषः । दीपनिर्वाणगन्धञ्च सुहृद्वाक्यमरुन्धतीम्" ॥ विष्णुधर्मोत्तरे । "हरिं गोद्विजचन्द्रार्कसुराग्नीन् प्रतिपूज्य च । शृण्वन् मन्त्रमिमं पुण्यं विद्वान् भेषजमारभेत् ॥ ब्रह्मदक्षाश्विरुद्रेन्द्राभूचन्द्रार्कानिलानलाः । ऋषयश्चौषधिग्रामा भूतसंघाश्च पान्तु ते ॥ रसायनमिवर्षीणां देवानाममृतं यथा । स्वधेवोत्तमनागानां भैषज्यमिदमस्तु ते" ॥ स्वयं भक्षणे तु ते इत्यत्र मे इति वदेत् । अविशेषेण भक्षणेऽपि पठेत् । "हरङ्गोदये गुरुबुधेन्दुसितेषु तेषां वारे रवेश्च सुविधौ सुतिथौ सुयोगे भेषूग्रपन्नगविशाखयमेतरेषु जन्मर्क्षविष्टिरहितेष्वगदः शुभाय"॥ औषधकरणम् "चित्रायुगे विधियुगे मित्रयुगे लघुषु वारुणविष्णौ । वस्तिविरेचनवेधाः शुभदिनतिथिचन्द्रलग्नेषु"॥ वस्तिश्चर्मपुटः विरेचनं विरेकः । वेधो व्रणादिवेधः । "पौष्णाश्विनौ द्रविणशक्रसमीन्द्रपुष्याहस्तादितोन्दुहरिमूल हुताशमित्रैः । चित्रान्वितैर्भे गुरुबुधेन्दुरवीज्यवारे भैषज्यपानमचिरादपहन्ति रोगान्" ॥ उत्तरात्रयेऽपि बहुलमृगीति वचनात् । रत्नमालायाम् । द्यूनशत्रुनिधनव्ययशुद्धौ सद्ग्रहेषु नितरां बलवत्सु । आयुषश्च हितकारिणि योगे कीर्त्तिता नियतमौषधसेवा"। द्यूनादिषु पादयोगे क्षणशून्येषु आयुष्मानित्यादिनित्ययोगे । भौमपराक्रमे । "भैषज्यपाने गुरु सोमशुक्राः शुभं विलग्नं दिवसो रवेश्च । तिथावरिक्ते करणे च शस्ते योगे च लग्ने द्विशरीरसञ्ज्ञे" ॥ तत्रैव "रोहिणी चानुराधा च शस्तमौषधभक्षणे" इति वचनाद्रोहिण्यामपि । "व्यादित्येषु चरेषु शक्रादिनक्षत्पुष्योग्रचन्द्रेषु च । क्रूराहव्यतिपातविष्टिदिवसेष्विन्द्रावशस्ते तथा ॥ केन्द्रस्थेष्वशुभेष्वकामतिथिषु स्नानं गदी मुक्तितः । शस्तं तत्र न शोभनाविधिभुजङ्गर्क्षेन्दु सद्वासराः" ॥ रोगिस्नानम् । "सेवा

चक्रे सप्तशीर्षे सप्तपृष्ठे तथोदरे। पादयोः सप्त ऋक्षाणि साभिजिन्ति न्यसेद्‌बुधः॥ स्वामिभाद्गृत्यभं गण्यं भृत्यभात् स्वामिभं ततः। निष्फलं पादपृष्ठस्थे सफलं मस्तकोदरे"॥ सेवा चक्रम्। "ध्रुवलघुमृदुवर्गे वासवे विष्णुदेवे विकुजरविज-वारे केन्द्रकोणेषु सत्सु। द्वितनुवृषभपश्चास्योदये चन्द्रशुद्धौ सुतिथिकरणयोगे दर्शनं भूमिपानाम्"॥ राजदर्शनम्। मत्स्यपुराणे। "राज्ञस्तु दक्षिणे पार्श्वे वामे चोपविशेत्तथा। पुरस्तात्तु तथा पश्चात् आसनन्तु विगर्हितम्॥ स्वयं तथा न कुर्वीत स्वगुणाख्यापनं पुनः। स्वगुणाख्यापने चैव परमेव प्रयोजयेत्। परार्थमस्य वक्तव्यं सुखे चेतसि भार्गव। स्वार्थं सुहृद्भिर्वक्तव्यं न स्वयन्तु कदाचन"॥ अस्य राज्ञः। "अज्ञा-प्यमाने चान्यस्मिन् समुत्थाय त्वरान्वितः। अहं किं करवा-णीति वाच्यो राजा विजानता। नातिवक्ता न निर्वक्ता न च मात्सरिकस्तथा॥ आत्मसम्भावितश्चैव न भवेच्च कथञ्चन। आराधनासु सर्वासु भृत्यवच्च विचेष्टिते। कथासु दोषं क्षिपति वाक्यभङ्गं करोति च। विरक्तलक्षणं ह्येतदनुरक्तस्य लक्षणम्। दृष्ट्वा प्रसन्नो भवति वाक्यं गृह्णाति चादरात्। कुशलादि-परिप्रश्नो संप्रापयति चासनम्। इति रक्तस्य कर्त्तव्या सेवा रविकुलोद्भव। यदप्यल्पतरं कर्म तदप्येकेन दुष्करम्॥ पुरु-षेणासहायेन किन्तु राज्यं महत्पदम्। कामं क्रोधं मदं मानं लोभं हर्षं तथैव च। जेतव्यमरिषड्वर्गं सत्वरं पृथिवी-क्षिता। न राज्ञा मृदुना भाव्यं मृदुर्हि परिभूयते। न भाव्यं दारुणेनापि तीक्ष्णादुद्विजते जनः। अदीर्घसूत्रश्च भवेत् सर्व-कर्मसु पार्थिवः। दीर्घसूत्रस्य नृपतेः कर्म नष्टं भवेत् स्वयम्। रोगे दर्पे च मान्ये च द्रोहे पापे च कर्मणि। अप्रिये चैव कर्त्तव्ये दीर्घसूत्रः प्रशस्यते। भृत्यैः सह महीपालः परोक्षा-

मञ्च वर्जयेत्। भृत्याः परिभवन्तीह नृपं हर्षवसत्कथम्। पौरुषं दैवसम्पत्त्या काले फलति पार्थिव। त्रयमेतन्मनुष्यस्य पिण्डितं स्यात् फलावहम्। कृषेर्वृष्टिसमायोगात् दृश्यन्ते फलसिद्धयः। तास्तु काले प्रदृश्यन्ते नैवाकाले कथञ्चन"॥ महाभारते। "लाभेन हर्षयेद् यस्तु न व्यथेद् यो विमानितः। असंमूढ़श्च यो नित्यं स राजवसतिं वसेत्। बलवान् शूर अम्लानश्छायेवानुगतः सदा। सत्यवादी मृदुर्दान्तः स राजवसतिं वसेत्"॥ नयमाह हरिवंशे नारदः। "अनुक्ते वापि सुहृदा वक्तव्यं जानता हितम्। न्याय्यञ्च प्राप्तकालञ्च पराभवमजानता। वक्तव्यं सर्वदा सद्भिरप्रियञ्चापि यद्धितम्। आनृण्यमेतत् स्नेहस्य सद्भिरेवाहृतं पुरा। यस्योत्तापकरं पश्चात् आरब्धं कार्य्यमीदृशम्। आरम्भेनैव तद्विद्वान् स च बुद्धिमतां नयः। कुमित्रे सौहृदं नास्ति कुभार्य्यायां कुतो रतिः। कुतः पिण्डं कुपुत्रे तु नास्ति सत्यं कुराजनि। कुसौहृदे क्व विश्वासः कुदेशे न प्रजीव्यते। कुराजनि भयं नित्यं कुपुत्रे सर्वदा भयम्। अपकारिणि विश्रब्धं यः करोति नराधमः। अनाथो दुर्बलो यस्तु न चिरं स तु जीवति। न विश्वसेद विश्वस्ते विश्वस्ते नातिविश्वसेत्। विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति। राजसेविषु विश्वासं गर्भसङ्करितेषु च। यः करोति नरो मूढ़ो न चिरं स तु जीवति। ऋणशेषमृणाच्छेषं शेषमग्नेश्च भूमिप। पुनर्वर्द्धन्ति संभूय ततः शेषं न शेषयेत्। अद्रोहं समयं कृत्वा सुनीमामयतो हरिः। जघान् नमुचिं पश्चादपां फेनेन पार्थिव। कृत्वा सम्बन्धकं चापि विश्वसेच्छत्रुणा न हि। पुलोमानं जघानादौ जामातापि शतक्रतुः। न चासन्ने निवस्तव्यं सवैरे वर्द्धिते रिपौ। पातयेत्तं समूलं हि नदीकूलमिव द्रुमम्"। विष्णुपुराणे। "अल्पहानिस्तु सोढव्या वैरेणार्थागमं त्यजेत्।

उपायतः समारब्धा सर्वे सिध्यन्त्युपक्रमाः" ॥ ज्योतिषे ।
"अन्धकं तदनुमन्दलोचनं मध्यलोचनमतः सुलोचनम् । रोहि-
णीप्रभृतिभं चतुर्विधं नूनमत्र गणयेत् पुनः पुनः । लाभोऽन्धके
निकट एव हृतस्य चौरैर्द्रव्यस्य लब्धिरिह केकरके प्रयत्नात् ।
द्रव्यश्रुतिर्भवति मध्यमलोचनार्क्षे न प्राप्तिरुत्तमविलोचनभे
कदाचित्" । मत्स्यपुराणे । "कार्त्तवीर्य्यार्जुनो नाम राजा
बाहुसहस्रभृत् । येन सागरपर्य्यन्ता धनुषा निर्जिता मही ।
यस्तस्य कीर्त्तयेन्नाम कल्यमुत्थाय नित्यशः । न तस्य वित्त-
नाशः स्यान्नष्टञ्च लभते पुनः" ॥ कल्यं प्रातः ।

अथ परीक्षा । "नो शुक्रास्तेऽष्टमेऽर्के गुरुसहितरवौ जन्म-
मासेऽष्टमेन्दौ विष्टौ मासे मलाख्ये कुजशनिदिवसे जन्मतारासु
चाथ । नाडीनक्षत्रहीने गुरु रविरजनीमाथ ताराविशुद्धौ प्रातः
कार्य्या परीक्षा द्वितनुचरगृहांशोदये शस्तलग्ने । अष्टम्याञ्च
चतुर्दश्यां प्रायश्चित्तपरीक्षणे । न परीक्षा विवाहश्च शनिभौम-
दिने भवेत् । प्रायश्चित्तं अनुराधा श्रवणिष्ठा पुष्या हस्ता-
त्रयं तथा । ज्येष्ठावारुणपौष्णे च नाट्यारम्भे शुभोगणः" ।
नाट्यारम्भः ।

अथ कृषिकर्म । तत्र कूर्मचक्रम् । "प्राङ्मुखो भगवा-
न्देवः कूर्मरूपो व्यवस्थितः । आक्रम्य भारतं वर्षं नव भेदं
यथाक्रमम् । मध्यप्रागग्नि याम्यादि कृत्तिकादित्रयत्रयैः
क्रूरवेधयुतैस्तैस्तु पीड्यन्ते तन्निवासिनः । पूर्वापरे भवेद्वेधो-
वेधश्चोत्तरदक्षिणे । ईशानरक्षसोर्वेधो वेध आग्नेय मारुते ।
तारात्रयान्वितं तत्र सौरिं यत्नेन चिन्तयेत् । नाभिशीर्षचतु-
ष्पादकक्षपुच्छे च संस्थितम् । अतिवृष्टिरनावृष्टिः शलभा
मूषिकाः खगाः । स्वचक्रं परचक्रञ्च सप्तैते सम्भवन्ति च ।
एवं देशगृहग्रामक्षेत्रनामर्क्षतो वदेत्" ॥ तथा च "यत्र यत्र

च गच्छते दिव्यपार्थिवनाभसाः। दृश्यन्ते सुमहोत्पाताः स्वां दिशं तत्र पीड़येत्। सौरिर्बलाधिको दुष्टः स्वल्पवीर्य्यः शुभावहः। एकदा पीड़येद् यत्र भानुजः कूर्म्मपञ्चके। तत्र स्थाने महाविघ्नो जायते नात्र संशयः। दुष्टस्थाने गते चन्द्रे कर्त्तव्यं शान्तिपौष्टिकम्"। कूर्माङ्गस्थदेशानाह। "मध्ये सारस्वतामत्स्याः शूरसेनाः समाथुराः। पञ्चालशाल्वमाण्डव्यकुरुक्षेत्रगजाह्वयाः। मरुनैमिषविन्ध्याद्रिपाण्डुग्रीवाः सयामुनाः। काश्ययोध्या प्रयागश्च गया वैदेहकादयः। प्राच्यां मागधशोणौ च वारेन्द्रीगौड़राढ़काः। वर्द्धमानतमो लिप्त प्राग्ज्योतिषोदयाद्रयः। आग्नेय्यामङ्गवङ्गोपवङ्गत्रैपुरकोशलाः। कलिङ्गोड्रान्ध्रकिष्किन्ध्या-विदर्भशवरादयः। दक्षिणेऽवन्ति-माहेन्द्रमलया ऋष्यमूककाः। चित्रकूटमहारण्यकाञ्चीसिंहलकोङ्कनाः। कावेरी ताम्रपर्णी च लङ्कात्रिकूटकादयः। नैर्ऋते द्रविड़ानर्त्तमहाराष्ट्राश्च रैवतः। जवनः पल्लवः सिन्धुः पारसीकादयो मताः। पश्चिमे हैहयास्ताद्रिम्लेच्छवासशकादयः। वायव्ये गुर्ज्जराटश्च नाटजालन्धरादयः। उत्तरे चीननेपालहूनकैकेयमन्द्राः। गान्धारहिमवत्क्रौञ्चगन्धमादनमालवाः। कैलाशमद्रकाश्मीरम्लेच्छदेशाः खशादयः। ईशाने स्वर्णभौमश्च गङ्गाद्वारश्च टङ्कनः। काश्मीरब्रह्मपुरककिराताद्दरदादयः" ॥ इति कूर्मचक्रम्। देवलः। "सिन्धुसौवीरसौराष्ट्रास्तथा प्रत्यन्तवासिनः। अङ्गवङ्गकलिङ्गोड्रान् गत्वा संस्कारमर्हति" ॥ तीर्थयात्राव्यतिरेकेणेति द्रष्टव्यमिति मिताक्षरा। व्यासः। "ऊषरा बहुला भूमिः पन्थानस्तस्कराहृताः। सर्वे वाणिजिकाश्चैव भविष्यन्ति कलौ युगे ॥ शस्यानिष्पत्तिरफला तरुणा वृद्धशीलिनः। भविष्यत्यफलो हर्षः क्रोधश्च सफलो नृणाम् ॥ पुरुषाल्पं बहुस्त्रीकं तद्युगान्तस्य लक्षणम्" ॥ तत्र ग्रामादिषु

स्वनामफलम् । ज्योतिषे । "अवर्गोऽष्टाविषुः के च षट्चे वेदाष्टवर्गके । एकं ते सप्त पे वर्गे ये द्वयं शे च वह्नयः ॥ इत्य- मष्टसु वर्गेषु याः संख्याः कथिताः क्रमात् । नाम्निवर्णात् स्वराश्चैव प्रत्येकं तां प्रकल्पयेत् ॥ एकीकृत्याष्टभिर्भुक्ते शेष- संख्या ध्वजादयः । ध्वजो धूम्रश्च सिंहः श्वा वृषभो रासभो गजः ॥ ध्वाङ्क्षश्चक्रमतो ज्ञेयः फलं तत्र बलक्रमात् । ध्वाङ्क्- श्वधूम्रवृषभा गजः सिंहो ध्वजः खरः ॥ यथोत्तरबला एते ज्ञातव्याः स्वरपारगैः । प्रभौ योधे पुरे देशे मित्रनारी गृहेषु च ॥ बलात् प्रायो भवेल्लाभो न लाभो बलवर्जितात् । अ गरुड़ः क मार्जारश्च सिंहष्ट शुनीसुतः ॥ त भुजङ्गः प आखुः स्यात् य वर्गे भः श मेषकः । नामादिवर्णतो ज्ञेया अष्टौ वर्गाः क्रमादमी ॥ यद्वर्गभक्ष्यो यः प्रोक्तस्तस्मात्तस्य भवेत् क्षयः । ग्रामवर्गस्य ये भक्ष्यास्त्यज्यास्तद्ग्रामवासिनः ॥ एवं दुर्गे रणे त्यज्या न कर्त्तव्या गड़ाधिपाः । अवर्गाद्यष्टकं ज्ञेयं प्रागाद्यष्ट- दिशां क्रमात् । स्ववर्गात् पञ्चमे स्थाने खण्डिभङ्गश्च जायते" ॥ व्यासः । "धनिनः श्रोत्रियो राजा नदी वैद्यश्च पञ्चमः । पञ्च यत्र न विद्यन्ते तत्र न दिवसं वसेत्" ॥ मत्स्यपुराणे । "फाल- कृष्टे [illegible] देशे सर्व्वबीजानि रोपयेत् । त्रिपञ्चसप्तरात्रेण यत्र रोहन्ति तान्यपि । ज्येष्ठामध्याकनिष्ठाभूर्व्वर्जनीयेतरा मता" ॥

अथ लाङ्गलचक्रं स्वरोदये । "लाङ्गलं दण्डिका यूपं योक्त्रद्वयसमन्वितम् । दण्डिकादिलिखेद्भानि दिनेशाक्रान्त- भादितः ॥ दण्डिका हलयूपानां द्विद्विस्थाने त्रिकं त्रिकम् । योक्त्रयोश्च त्रिकञ्चैव मध्ये पञ्चाग्रके द्वयम् ॥ दण्डस्थे च गवां हानिर्यूपस्थे स्वामिनो भयम् । लक्ष्मीर्लाङ्गलयोक्त्रादौ चेत्रा- रम्भदिनर्च्चके" ॥ इति लाङ्गलचक्रम् ।

अथ बीजोप्तिचक्रम् । "सूर्य्यभाद्गुरगः स्थाप्यस्त्रिनाड्येका-

न्तरक्रमात् । मुखे त्रीणि गले त्रीणि भानि द्वादश तूदरे ॥ पुच्छे चतुर्वह्निः पश्च दिनभाच्च फलं वदेत् । वदने चोचकं विद्यात् गलकेऽङ्गारकस्तथा ॥ उदरे धान्यवृद्धिः स्यात् पुच्छे धान्यक्षयो भवेत् । इति रोगभयं राज्ये चक्रे वीजोप्तिसम्भवे"॥ सूर्य्यभात् सूर्य्यभुज्यमाननक्षत्रात् । त्रिनाड्येकान्तरक्रमादिति यद्यश्विन्यां रविस्तदा तामारभ्य गणयेत् । त्रिनाड़ीषु अश्विनी-भरणीकृत्तिका दत्त्वा रोहिणी वह्निः कार्य्या मृगशिरस आर्द्रा पुनर्वसु नाड़ीषु दत्त्वा पुष्यो वह्निः कार्य्यः एवं क्रमेणान्या लेख्याः । चोचकं शस्यशून्यताम् । ईतयः । "अतिवृष्टिरना-वृष्टिः शलभा मूषिकाः खगाः । प्रत्यासन्नाश्च राजानः षड़ेते ईतयः स्मृताः" ॥ इति वीजोप्तिचक्रम् ।

अथ वृषचक्रम् । "वृषचक्रं वृषाकारं सर्वावयवसंयुतम् । लिखित्वा विन्यसेद्भानि वृषनामर्क्षपूर्वकम् ॥ मुखाक्षिकर्ण-शीर्षेषु शृङ्गे स्कन्धे द्विकं द्विकम् ॥ त्रीणि पृष्ठे द्वयं पुच्छेऽष्टौ पादे तूदरे त्रिकम् । हलप्रवाहवीजोप्तिप्रारम्भादिदिनर्क्षकम् ॥ यदङ्गेषु स्थितं तस्माद्दच्मे सर्वं शुभाशुभम् । आस्ये हानिः सुखं नेत्रे कर्णे भिक्षाटनं तथा ॥ शीर्षे क्षतिस्तथा शृङ्गे सौख्यं स्कन्धे च मङ्गलम् । पृष्ठे कष्टं शुभं पुच्छे भ्रमः पादे सुखं हृदि । चन्द्रयोगादिदं प्रोक्तं वृषचक्रफलं बुधैः" ॥ इति वृष-चक्रम् ।

दीपिकायाम् । "पूर्वाग्नियाम्यफणिपित्रशिवान्यभेषु रिक्ता-ष्टमीविगतचन्द्रतिथिं विहाय । द्वाङ्गानिगोसमुदाये विकु-जार्किवारे शस्तेन्दुयोगकरणेषु हलप्रवाहः । हलप्रवाहवद्दीज-वपनस्य विधिः स्मृतः । चित्रायाश्च शुभे केन्द्रे स्थिर स्त्रमनु-जोदये" ॥ भीमपराक्रमे । "वामे कृष्णं वलीवर्द्दं दक्षिणे लोहितं न्यसेत् । उत्तराभिमुखो भूत्वा कर्षकः कृषिमारभेत् ॥

हले तु योजिते यत्र क्षेत्रे ग्रासं करोति गौः। तत्र स्याद्विगुणं शस्यमवश्यं गर्गभाषितम्" ॥ कृत्यचिन्तामणौ वलभद्रः। "सुखदः प्रतिपच्चैव द्वितीया कार्य्यसाधिनी। आरोग्यदा तृतीया च चतुर्थी कीटकृत् सदा॥ पञ्चमी श्रीपदा नूनं षष्ठी च कलहप्रिया। सप्तमी स्यानदा भोग्या वृषं हन्ति तथाष्टमी। नवमी शस्यनाशाय दशमी भूतिदा सदा। एकादशी तथा कुर्य्याद्धनं धान्यं मनोरथम्। द्वादशी प्राणसन्देहा सर्वसिद्धा त्रयोदशी। चतुर्दशी पतिं हन्ति पञ्चदश्येव निष्फला। अमावास्याष्टमी षष्ठी रिक्ता च परिवर्जयेत्। सौरिभौमदिने चैव कृष्यारम्भे धनक्षयः। प्राजेशविष्णुतिष्येषु पितृकरोत्तरेषु च अश्विनी वातपौष्णेषु मूलादितीन्दुभे तथा। वारे भानुजशुक्रे च जीवे शीतकरे तथा। लग्ने स्त्रीगोमीनयुग्मे कृष्यारम्भं शुभं विदुः। ऐशान्यां पुष्पनैवेद्यैः क्षेत्रपालञ्च पूजयेत्। सालङ्कारो हलधरः स्रग्भिश्च पूजितं हलम्। दध्याज्यमधुभिः श्रेष्ठं फालाग्रञ्च प्रलेपितम्। कर्षं प्रावर्त्तयेत् प्राज्ञो नूतनेन हलेन च। हस्ताश्विनितिष्यचन्द्रेषु ब्रह्मेन्द्रविष्णुवारुणे। वायव्येन्द्राग्निभे चैव रोहिण्यामुत्तरासु च। वारे जीवज्ञशुक्रे च सोमे दिनकरे तथा। युग्मे युवति गो मीने शस्तं स्याद्बीजवपनम्"॥ राजमार्त्तण्डे। "प्राजेशश्रवणोत्तरादिति मघा मार्त्तण्डतिष्याश्विनी पौष्णानुष्णमरीचयः शतभिषा स्वातिविशाखा तथा। जीवार्केन्दुसितेन्दुनन्दनदिने वारे स्थिरस्योदये शस्यानां वपने भवन्ति लवने शस्ते तिथौ रोपणे"। देवलः। "गुरुसोमसूर्य्यशुक्राः क्षेत्र्याः सम्पत्कराः शुभाः। बुधार्किभूमिपुत्राश्च न भवन्ति फलप्रदाः। हन्ति मेषः पशून् सर्वान् स्वभावेनाथ वृश्चिकः। कर्कटे न भवेत् सौख्यं तुलायां न प्ररोहति। केशरी शस्यघाती स्यात् पार्थिवोपद्रवं

धनुः॥ मकरे चैव कुम्भे च भयमेव विनिर्दिशेत्। गोस्त्रीमन्मथमीनेषु शस्यं सम्पद्यते महत्॥ प्रशस्ते चन्द्रतारे च शुचिः शुक्लेन वाससा। स्नात्वा गन्धैश्च पुष्पैश्च पूजयित्वा विधानतः॥ पृथ्वीञ्च ग्रहसंयुक्तां पूजयित्वा प्रजापतिम्। अग्निं प्रदक्षिणीकृत्य दीयते भूरिदक्षिणा॥ कृष्णौ वृषौ नियोक्तव्यौ नवनीतैर्घृतेन वा। मुखपार्श्वं तयोर्लिम्पात् फालाग्रं कनकैः स्पृशेत्॥ उत्तराभिमुखो भूत्वा क्षीरेणार्घ्यं प्रदापयेत्। ततः शुभकरः श्रीमान् कृषिकर्म समाचरेत्॥ वर्जयेद्भग्नशृङ्गञ्च क्षुरभग्नञ्च वर्जयेत्। विकलं छिन्नलाङ्गूलं कपिलं वृषभं तथा॥ हलप्रवाहनं कार्य्यं नीरुग्भिः कृषिकर्मकैः। हलादिभिर्दृढैः क्षेमं कुदृढैर्न शुभं वदेत्॥ वृषभा यदि मुह्यन्ति तस्य विघ्नप्रदा भवेत्"॥ कृषिरिति शेषः "तस्मात् सर्वप्रयत्नेन निर्विघ्नं कारयेत् सदा। एका जयकरी रेखा तृतीया चार्थदायिका॥ पञ्चमी या भवेद्रेखा बहुशस्यफला हि सा। अत ऊर्द्ध्वं न कर्त्तव्यं महादोषस्ततो भवेत्॥ संपूज्याग्निं द्विजं देवं कुर्य्याद्धलप्रवर्त्तनम्। हेमनिघृष्टफालाग्रं छिन्नरेखां न कारयेत्॥ स्मर्त्तव्या वसवश्चेन्द्रः पृथूरामः सचन्द्रमाः। पराशरो बलभद्रः सर्वविघ्नोपशान्तये॥ हले प्रवाह्यमाने तु कूर्म्म उत्पद्यते यदि। गृहिणी म्रियते तस्य ततोऽग्नेश्च भयं भवेत्॥ लाङ्गूलं भिद्यते चापि प्रभुस्तत्र विनश्यति। ईशाभङ्गो यदा कर्त्तुः संशयो जीवितस्य च॥ सुतनाशो युगाभङ्गे समीने म्रियते सुतः"॥ समीने योक्तबन्धनकाष्ठद्वये। "योक्तच्छेदे तु व्यासङ्गः शस्यहानिश्च जायते। हले प्रवाह्यमाने तु गौरिकः प्रपतेद् यदि॥ प्रपतेन्मुक्तमात्रस्तु बन्धनं स प्रपद्यते। ज्वरातिसाररोगेण कृषिभङ्गं विनिर्दिशेत्॥ प्रवाहमुक्तमात्रस्तु ततो गौः प्रपतेत् यदि। वत्सालोढेन नर्दन्ति

ततो शस्यं चतुर्गुणम् ॥ हेमवारिविलिप्तस्य वीजस्योन्नयतः शुचिः। इन्द्रं चित्ते निधायाथ स्वयं मुष्टित्रयं वपेत् ॥ कृत्वा चान्योन्यप्रोत्साहं नर्त्तको हृष्टमानसः। प्राङ्मुखः कलसं गृह्य इमं मन्त्रमुदीरयेत् ॥ त्वं वै वसुन्धरे सीते बहुपुष्पफलप्रदे। नमस्ते मे शुभं नित्यं कृषिं मेधां शुभे कुरु ॥ रोहन्तु सर्वशस्यानि काले देव प्रवर्षतु। कर्षकास्तु भवन्त्यग्रा धान्येन च धनेन च स्वाहा" ॥ कृत्यरत्नाकरे ब्रह्मपुराणम्। "चैत्रे च कृष्णपञ्चम्यां काश्मीरा च रजस्वला। नित्यं भवति तस्मात्तां कृत्वा शैलमयीं स्त्रियम् ॥ अभ्यङ्गवस्त्रनैवेद्यैः पूजयेच्च दिनत्रयम्। पुष्पालङ्कारधूपैश्च गोरसं वर्जयन्ति च" ॥ काश्मीरा पृथ्वी। "अष्टम्याञ्च ततः स्नाप्य ताभिरेव गृहे गृहे। सुस्नाताभिः प्रहृष्टाभिर्जीवपत्नीभिरेव च ॥ अनन्तरं द्विजः स्नाप्य सर्वौषधियुतैर्जलैः। गन्धैर्वीजैस्तथा रत्नैः फलैः सिद्धार्थकैस्तथा ॥ स्नापयित्वा च तां देवीं गन्धैर्माल्यैश्च पूजयेत्। तन्निवेदितशिष्टन्तु प्राशितव्यं गृहे गृहे ॥ अतःपरं स्नाता गर्भं गृह्णाति ऋतुमेदिनी" ॥ तथा "ब्रह्मा विष्णुश्च रुद्रश्च काश्यपः सुरभीगृहे इन्द्रः प्रचेताः पर्जन्यः शेषश्चन्द्रार्कवह्नयः ॥ बलदेवे हलं भूमिर्वृषभं रामलक्ष्मणौ। रक्षोघ्नी जानकी सीता युगं गगनमेव च" ॥ सीता लाङ्गलपद्धतिः। युगं युगकाष्ठम्। "एते द्वाविंशतिः प्रोक्ताः प्रजानां पतयः शुभाः। गोमङ्गले तु संपूज्याः कृष्यारम्भे महोत्सवे ॥ अर्घ्यैः पुष्पैश्च धूपैश्च माल्यै रत्नैः पृथक् पृथक्। हलेन वाहयेद्भूमिं स्वयं स्नातः स्वलङ्कृतः" ॥ तथा। "उप्ता वीजन्तु तत्रैव भोक्तव्यं बान्धवैः सह" ॥ वीजवपनं प्राजापत्यतीर्थेन यथा हारीतः। "कनिष्ठायाः पश्चात् प्राजापत्यमावपनं होमतर्पणे प्राजापत्येन कुर्य्यात्" इति। राजमार्त्तण्डे। "नित्यं दश हले लक्ष्मीर्नित्यं पञ्च हले

धनम्। नित्यञ्च त्रिहले भक्तं नित्यमेकहले ऋणम्" ॥ होम-तर्पणे लाजहोमसनकादितर्पणे पराशरः। "वैशाखे वपनं श्रेष्ठं मध्यमं रोहिणी रवौ। अतःपरस्मिन्नधमं न जातु श्रावणे शुभम्" ॥ ज्योतिषे। "पूर्वभाद्रपदा मूलं रोहिण्युत्तर-फल्गुनी। विशाखा शतभिषा वाथ धान्यानां रोपणे वरा ॥ सदोषा रजनीं नीलीं पुत्रवित्तैर्वियुज्यते। स्वयं जाते पुनस्ते द्वे पालयन्नैव दुष्यति ॥ आरामे गृहमध्ये वा मोहात् सर्षप-मावपन्। पराभवं रिपुर्याति ससाधनधनक्षयम् ॥ निशा नीली पलाशश्च चिञ्चा श्वेतापराजिता। कोविदारश्च सर्वत्र सर्वं निघ्नन्ति मङ्गलम्" ॥ निशा हरिद्रा। कोविदारको रक्तकाञ्चनः। "हेमाम्भसा वृक्षवीजं स्नातो मन्त्रेण रोपयेत्। वसुधेति सुशीतेति पुण्यदेति धवेति च ॥ नमस्ते शुभगे नित्यं द्रुमोऽयं वर्द्धतामिति। अरिष्टाशोकपुन्नागवकुलाम्रप्रियङ्गवः ॥ माङ्गल्याः पूर्वमारामे रोपणीया गृहेषु च। अश्वत्थमेकं पिचु-मर्दमेकं द्वौ चम्पकौ त्रीण्यथ केशराणि ॥ तालाष्टकं श्रीफल-सप्तकञ्च पञ्चाम्ररोपी नरकं न पश्येत्" ॥ दानरत्नाकरे देवी-पुराणम्। "ये च पापा दुराचाराः श्रीतरुच्छेदकारिणः। तेऽप्यवीच्यादिनरके पच्यन्ते ब्रह्मणो दिनम् ॥ मृतास्ते जीव्य-मानास्तु ब्रह्मघ्नकीर्त्तिता भुवि।' तस्मिन् देशे भयं नित्यं राजानो न चिरायुषः। न च नन्दत्ययं लोके यत्र श्रीफल-भेदिनः" ॥ श्रीतरुर्विल्वः। "लिखित्वालक्तकेनापि मन्त्रं शस्येषु बन्धयेत्। न व्याधिकीटहिंस्राणां भयं तत्र भवेत् क्वचित् ॥ सिद्धिः प्रचलतरङ्गतरलितमृदुतरसमीरण वनोद्देशे श्रीमद्रामभद्रपादाः कुशलिनः समुद्रतटे नानाशतसहस्रवान-राणां मध्ये खरनखरपञ्चोर्द्धलाङ्गूलं पवनसुतं वायुवेगं परचक्र-प्रमथनं श्रीमद्धनूमन्तमाज्ञापयन्ति अमुकस्याखण्डक्षेत्रे वाता-

भोऽम्भोगाम्भोरतीपाण्डरमुण्डोधूली शृङ्गारतल्पाक्रमरा सृता-फड़िङ्गा एलावानरा गरुड़ा इमडुकमहिषादिरोगम्। खण्ड-यतक्षणमपि विलम्बं माचरतः विलम्बं कारयत तदा शुषान् शतखण्डं कारयामोति। ग्रां ग्रीं ग्रों श्रीरामाय नमः"॥ इति शस्येषु बन्धयेत्।

अथ मुष्टिग्रहणम्। दीपिकायाम् "याम्याजपादाहि-धनानलतीयशक्रचित्रेतरेषु कुजार्कजवारवर्जम्। शस्तेन्दु-योगकरणेषु तिथौ विरिक्ते धान्यच्छिदिः स्थिरनरस्तमृगोदयेषु"॥ बलभद्रः। "रेवतीहस्तमूलेषु श्रवणे नागयाम्ययोः। पितृ-देवे तथा सौम्ये धान्यच्छेदं मृगोदये"॥

अथ धान्यच्छेदनप्रकारः। "सपत्नी माससुन्नी च यवधान्ये सकाण्डके। छिन्द्यात्तिलञ्च निष्पत्रमेतत् पाराशरं मतम्"॥ पराशरः। "न मुष्टिग्रहणं कुर्य्यात् कदाचिद्वटपौषयोः। ईशाने लवनं कुर्य्यात् सार्द्धमुष्टिद्वयं शुचिः॥ पौष्णे पुष्ये शुभाह्ने वा पूजयित्वेष्टदेवताम्। शस्यविघ्नप्रशान्त्यर्थं चैत्रे वा हव्यभोज-नम्"॥ वौधायनः। "रथाश्वगजाधान्यानां गवां चैव रजः शुभम्। अथाशस्तं समूहिन्याः श्वाजाविखरवायसाम्"॥ समूहिनी संमार्जनी। कृत्यचिन्तामणी मेधिरोपणम्। "वटश्च सप्तपर्णश्च गम्भारी शाल्मली तथा। औडुम्बरी तथा धात्री या चान्या क्षीरधारिणी॥ स्त्रीनाम्नी कर्षकैर्नित्यं मेधिः कार्य्या फलप्रदा"॥

अथ वीजसञ्चयः। "हस्ता चित्रादितिस्वातौ रेवत्यां श्रवणद्वये। स्थिरे लग्ने गुरौ शुक्रे वीजं धार्य्यं ज्ञवासरे॥ माघे वा फाल्गुने वापि सर्ववीजानि संग्रहेत्। शोषयेत्तापयेद्रौद्रे रात्रौ चोपनिधापयेत्॥ ततश्च पुटिकां बद्धा शोषयेच्च पुनः पुनः। स्थापयेच्च प्रयत्नेन यथा भूमिञ्च न स्पृशेत्॥ दीपा-

ग्निना च संसृष्टं दुष्ट्या चोपहतञ्च यत्। वर्जनीयं तथा वीजं यत् स्यात् कीटसमन्वितम्॥ याम्याग्निरुद्राहि विशाखपूर्वा-माहेन्द्रपित्रेतरभैः शुभाहे। धान्यादिसंस्थापनमेषु शस्तं मृगस्थिरद्वाङ्गगृहोदयेषु॥ सौम्यादितिमघा ज्येष्ठानुत्तरेषु च कारयेत्। मीने लग्ने शुभे चन्द्रे निर्धनक्रूरवर्जिते॥ चेमव्यं कोष्ठके धान्यं गर्गो वदति सर्वदा। धनदाय सर्वलोकहिताय देहि मे धान्यं स्वाहा॥ नम ईहायै ईहादेवी सर्वलोकवि-वर्द्धिनी कामरूपिणि धान्यं देहि स्वाहा। लेखयित्वा इमं मन्त्रं धान्यागारे विनिक्षिपेत्”॥ पुराणसर्वस्वे। “मन्त्रं लिखित्वा पत्रे च मध्ये धान्यस्य धारयेत्। पञ्चञ्च धान्यराशिस्तु मूषिकादिनिवृत्तये॥ दक्षिणदिक्षु खगमनं स्यादभिनवासु नारीषु। व्ययमपि शस्यफलानां न बुधो बुधवासरे कुर्य्यात्॥ त्रिषूत्तरे रेवत्यां धनिष्ठा वारुणेषु च। एतेषु षट्सु विज्ञेयं धान्यनिष्क्रमणं बुधैः॥ श्रवणात्रयं विशाखा ध्रुवपौष्णपुनर्व-सूनि पुष्यश्च। अश्विन्यथ ज्येष्ठा धनधान्यविवर्द्धिनी कथिता”॥ धान्यादिस्थापनम्। “कुम्भमासेऽपि सर्वेषां मन्दिराणामुप-क्रमम्। महर्षयः प्रशंसन्ति धान्यागारं विहाय च”॥ अत्र प्रयोगः। पौर्णमास्यन्तचैत्रीकृष्णपञ्चम्यां पृथ्वी रजस्वला तां दिनत्रयमेकस्मिन् पर्वताकारे उच्चप्रदेशे सधवाः स्त्रियः प्रपूजये-युरष्टम्यां तां स्नापयित्वा ताः पूजयेयुः। ततः शुभदिने वीज-वपनदिने वा सर्वौषधिगन्धवीजरत्नफलश्वेतसर्षपैः पृथ्वीं स्नाप-यित्वा गन्धादिभिः पूजयेत्। नैवेद्यशेषञ्च पश्चाद्भोक्तव्यम्। अथ हलप्रवाहदिने वीजवपनदिने च कृतस्नानादिराचान्तो गर्त्तं चेत्रे कृत्वा जलेनापूर्य्य तत्र प्रजापतिं सूर्य्यादिनवग्रहान् पृथ्वीञ्च पूजयेत्। “हिरण्यगर्भे वसुधे शेषस्योपरिशायिनि। वसाम्यहं तव पृष्ठे गृहाणार्घ्यं धारित्रि मे”॥ इति मन्त्रेण

चौरेणार्घ्यं दद्यात्। ऐशान्यां पुष्पनैवेद्यैः प्रणवादिनमोऽन्तेन ब्रह्मणे नमः नमस्ते बहुरूपाय विष्णवे परमात्मने स्वाहा इत्यनेन त्रिःपूजयेत। रुद्राय कश्यपाय सरस्वत्यै इन्द्राय तदर्घ्यमन्वस्तु। "शक्रः सुरपतिः श्रेष्ठो वज्रहस्तो महाबलः। शतयज्ञाधिपो देव तुभ्यमिन्द्राय वै नमः"॥ प्रचेतसे पर्ज्जन्याय शेषाय चन्द्राय अर्काय वह्नये बलदेवाय हलाय भूमये वृषभाय रामाय लक्ष्मणाय जानक्यै सीतायै स्वर्गाय गगनाय इति द्वाविंशतिं पूजयेत् क्षेत्रपालमग्निं द्विजञ्च पूजयेत्। अग्निं प्रदक्षिणीकृत्य ब्राह्मणाय दक्षिणां दद्यात्। आम्रपल्लवौदनदधीनि गर्त्ते निक्षिप्य मृत्तिकाभिः पूरयेत् कृष्टौ वृषौ नवनीतेघृतेन वा मुखपार्श्वयोर्निक्षिपेत्। हलप्रवाहकान् गन्धादिना भूषयित्वा हलं माल्यादिभिः पूजयित्वा दधिघृतमधुभिः फालाग्रं प्रलिप्य हेम्ना फालाग्रं घर्षयित्वा कर्षयेत् वह्नीन्द्रपृथुरामेन्दु पराशरबलभद्रान् स्मरेत्। एका तिस्रः पञ्च रेखा हलेन कार्य्याः भग्नशृङ्गखुरलाङ्गूलाः कपिलाश्च वृषा न योक्तव्या हलप्रवाहकाश्च समर्थाः कर्त्तव्याः हलानि नवानि दृढ़ानि कर्त्तव्यानि वृषभयुद्धादिकं न शुभदं वृषभाणां नर्द्दनेन चतुर्गुणं शस्यं मूत्रपुरीषोत्सर्गे तथा। बीजवपने त्विदमधिकं सुवर्णजलसंयुक्तं बीजमुष्टित्रयम् इन्द्रं ध्यायन् स्वयं प्राजापत्येन तीर्थेन वपेत् उभयत्रैव प्राङ्मुखः जलपूर्णकलसं गृहीत्वा "त्वं वै वसुन्धरे सीते बहुपुष्पफलप्रदे। नमस्ते मे शुभं नित्यं कृषिं मेधां शुभे कुरु॥ रोहन्तु सर्वशस्यानि काले देवः प्रवर्षतु। कर्षकास्तु भवन्त्वग्रा धान्येन च धनेन च" स्वाहेति प्रार्थयेत्।

अथ षष्टिसंवत्सरगणना। "शकेन्द्रकालः पृथगाकृति २२। घ्नः शशाङ्कनन्दाश्वियुगैः ४२९१ समेतः। शराद्रिवस्विन्दु

१८७५ । हृत: सलब्ध: षष्ट्यावशिष्टा: प्रभवादयोऽब्दा: । वर्ष-वर्जन्तु यच्छेषं सूर्य्यै: संपूर्य्य खोर्म्मिभि: । ६० । हृत व्युत्क्रमत: खाग्निहृतेऽशे मासकादय:" ॥ अस्यार्थ: । शाकेन्द्रकाल: शक राजाब्दकाल: पृथक् आकृतिघ्न: २२ । द्वाविंशत्या पूरित: शशाङ्कनन्दाश्वियुगैरेकनवत्यधिकशतद्वयाधिकचतु:सहस्रै: समेतोऽङ्क: शरादिवसुखिन्दुहृत: पञ्चसप्तत्यधिकाष्टादशशतैर्यावत् संख्यं हर्त्तुं शक्नोति तावता हृत: कर्त्तव्य: सलब्ध: पूर्वशकाब्द: शरेत्यादिना लब्धसंख्यया युत: कार्य्य: षष्ट्याप्तशेषे पश्चाद्देषोऽङ्क: पूर्ववत् षष्ट्याहृतलब्धस्यावशिष्टे प्रभवादय: एकावशेषे प्रभव:-द्व्याद्यवशिष्टे विभवादि: वर्षवर्जन्तु यच्छेषं वर्षातिरिक्तं शरा-दिवसुखिन्दुहृतावशिष्टं तत् सूर्य्यैर्द्वादशभि: संपूर्य्य खोर्म्मिभि: षष्ट्याहृतं व्युत्क्रमत इत्यनेन षष्टिहृतावशिष्टा: अङ्का दण्डा: षष्टिहृतलब्धांशके खाग्निहृते त्रिंशता हृतेऽवशिष्टा अंशका-लब्धा मासा: स्यु:रिति । प्रभवादि वर्षाण्युपक्रम्य "आद्या तु विंशतिर्ब्राह्मी द्वितीया वैष्णवी स्मृता । तृतीया रुद्रदैवत्या श्रेष्ठा मध्याधमा भवेत्" ॥ भविष्यपुराणे भैरव उवाच । "षष्ट्यब्दं कथयाम्यत्र क्रूरा: सौम्याश्च ये प्रिये । संवत्सरफलं मुख्यं प्रभवादौ वरानने ॥ बहुतोयास्तथा मेघा बहुशस्या च मेदिनी । बहुक्षीरास्तथा गावो व्याधिरोगविवर्जिता: ॥ प्रशान्ता: पार्थिवाश्चैव प्रभवे परिकीर्त्तिता: । १ । "सुभिक्षं क्षेममारोग्यं सर्वे व्याधिविवर्जिता: । प्रशान्ता मानवास्तत्र बहुशस्या वसुन्धरा । हृष्टास्तुष्टा जना: सर्वे विभवे च वरा-नने" । २ । "रोगा बहुविधाश्चैव मनुष्या वाजिकुञ्जरा: । सर्वे एव प्रनश्यन्ति शुक्ले वर्षे वरानने" । ३ । "उन्मत्तञ्च जगत् सर्वं धनधान्यसमाकुलम् । नित्योत्सव: प्रजावृद्धि: प्रमोदे जायते प्रिये" । ४ । "नीरोगाश्च निराबाधा मानवा विगतद्विष: ।

बहुक्षीरास्तथा गावः प्राजापत्ये वरानने"। ५। "निरातङ्कं जगत् सर्वं धनयौवनगर्वितम्। अङ्गिरसि प्रजाः सर्वा नित्योत्साहा वरानने"। ६। "सुभिक्षं क्षेममारोग्यं वर्षाकालं सुशोभनम्। शस्यवृद्धिं विजानीयात् श्रीमुखे सुरवन्दिते"। ७। "बहुक्षीरास्तथा गावो धान्यञ्च बलवत्तरम्। जायन्ते सर्वशस्यानि भावे वर्षे वरानने"। ८। महार्घं जायते सर्वं घृततैलरसादिकम्। प्रजानाञ्च भवेद्वृद्धिर्युनिसंवत्सरे शुभे। ९। "निष्पत्तिः सर्वशस्यानां मध्या धातरि कीर्त्तिता। इक्षुक्षीरगुडादीनां प्रबलत्वं वरानने"॥ १०। "सुभिक्षं क्षेममारोग्यं कार्पासस्य महार्घता। लवणं मधुगव्यञ्च ईश्वरे दुर्लभं प्रिये"। ११। "सुभिक्षं क्षेममारोग्यं प्रशान्ताः पार्थिवाः प्रिये। तस्करोपहृतं वित्तं बहुधान्ये वरानने"॥ १२। "राष्ट्रभङ्गश्च दुर्भिक्षं तस्करैश्चोपपीड़नम्। जानीयाद्विग्रहं घोरं प्रमाथिनि वरानने"। १३। "जायन्ते सर्वशस्यानि मेदिनी निरुपद्रवा। लवणं मधुगव्यञ्च महार्घं विक्रमे प्रिये"॥ १४। "कोद्रवाः शालिमुद्गाश्च अणुमाषास्तथैव च। महार्घं जायते सर्वं वृषे च सुरवन्दिते"। १५। "चनकामुद्गमाषाश्च अन्यच्च विदलं प्रिये। महार्घं जायते सर्वं चित्रभानौ वरानने"। १६। "सुभिक्षं क्षेममारोग्यं विश्वञ्च निरुपद्रवम्। व्यवहारो भवेत् हृष्टः स्वर्भानौ देवपूजिते"। १७। "अतिवृष्टिश्च जायेत धान्यस्याथ प्रपीड़नम्। शस्यं भवति सामान्यं दारुणे सुरवन्दिते"। १८। "बहुशस्यानि जायन्ते सर्वदेशे सुलोचने। सौराष्ट्रे लाटदेशे च पार्थिवे नात्र संशयः"। १९। "दुर्भिक्षं जायते घोरं सर्वोपद्रवसंयुतम्। अनावृष्टिः समाख्याता व्यये संवत्सरे प्रिये"। २०। "उद्यतो वर्षणे मेघो जलं नैवोपजायते। महार्घं सर्वजिद्वर्षे सर्वमेव वरानने"। २१। "कोद्रवाः शालि-

मुद्गाश्च कङ्गुमाषास्तथैव च। सुलभं जायते सुस्थं जगद्दे सर्वधारिणि"। २२। "अनग्निप्रबला लोका धान्यौषधिप्रपीड़नम्। जायते मानुषे कष्टं विरोधिनि न संशयः"। २३। "सर्वाः प्रजाः प्रपीड्यन्ते व्याधिः शोकश्च जायते। शिरोवच्चोऽक्षि-रोगाश्च पापाद्धि विकृते जनाः"। २४। "उपद्रुतं जगत् सर्वं तस्करैर्मूषिकैः खगैः। पीड़िताश्च प्रजाः सर्वाः देशभङ्गा खरे प्रिये"। २५। सुभिक्षं क्षेममारोग्यं शस्यं भवति शोभनम्। बहुचौरास्तथा गावो नन्दनं नन्दने प्रिये"। २६। "अल्प-तोयास्तथा मेघा वर्षन्ति खण्डमण्डले। नश्यन्ति सर्वशस्यानि विजये नात्र संशयः"। २७। "क्षत्रियाश्च तथा वैश्याः शूद्राश्च नटनर्त्तकाः। पीड़ितास्ते वरारोहे जये सर्वे न संशयः"।२८। "सरोगश्च तथा देवि दाहज्वरसमन्वितम्। अभिभूतं जगत् सर्वं मन्मथे सुरवन्दिते"। २९। "औषधान्यक्षयो देवि सर्व-शस्यमहार्घता। व्यवहाराश्च नश्यन्ति दुर्मुखे दुर्मुखाः प्रजाः"॥ ३०। "पीड्यन्ते सर्वशस्यानि देशे देशे शुचिस्मिते। हेमलम्बे प्रजाः सर्वाः चौयन्ते नात्र संशयः"। ३१। "तस्करैः पार्थिवै-श्चैव अभिभूतमिदं जगत्। अर्घो भवति सामान्यो विलम्बे तु भयं महत्"। ३२। "विषमस्थं जगत् सर्वं विरोधे भयसंप्लवम्। विकारी सर्वतोपायी मम वाक्यन्तु नान्यथा"।३३। "क्वचिद्वर्षति पर्जन्यो देशे संच्छिन्नमण्डलः। दुर्भिक्षं सर्वरीवर्षे व्यवहारो विपर्य्ययः"। ३४। "दुर्भिक्षं जायते सर्वा मेदिनी दुष्यति प्रिये। प्लवे प्लवन्ति तोयानि पीड़िता मानवा भुवि"। ३५। "सुवर्णरूप्यधान्यानि जगत् सर्वं सुशोभनम्। ब्राह्मणा वणिजस्तुष्टाः सुभिक्षे शुभकृत् प्रिये"। ३६। "सुभिक्षं क्षेम-मारोग्यं तृप्ता गोब्राह्मणाः प्रिये। सुस्थिताः शोभने वर्षे प्रजाः सर्वाः सुलोचने"। ३७। "विषमस्थं जगत् सर्वं व्याकुलं समु-]

दाहृतम्। जनानां जायते भद्रे क्रोधे क्रोधः परस्परम्" ।३८। "सर्वत्र जायते क्षेमं सर्वशस्यमहार्घता। विश्वावसौ वरारोहे कार्पासस्य महार्घता"। ३९। "पार्थिवैर्नृपसैन्यैश्च समस्तैः खण्डमण्डले। प्रपीड्यन्ते जनाः सर्वाः भयभीताः पराभवे"। ४०। "तृणधान्यानि पीड्यन्ते ग्रीष्मे वर्षति वासवाः। प्लवङ्गे पीड़िताः सर्वाः प्रजाश्च सुरवन्दिते"। ४१। "जायन्ते सर्वशस्यानि सुभिक्षं निरुपद्रवम्। सौम्यदृष्टिर्भवेद्राजा कालिके च शुभं वदेत्"। ४२। "सुभिक्षं क्षेममारोग्यं सुखञ्च निरुपद्रवम्। सौम्यदृष्टिर्भवेद्राजा सौम्ये सौख्यं प्रकीर्त्तितम्" ।४३। "तोयपूर्णो भवेन्मेघो वर्षते च दिने दिने। निरुपद्रवाश्च राजानः सर्वसाधारणे प्रिये"। ४४। "वासवो वर्षते देवि! देशे चाखण्डमण्डले। अहिच्छत्रे कान्यकुब्जे विरोधिकृषिनाशकृत्"। ४५। "अभिभूतं जगत् सर्वं क्लेशैर्बहुविधैः प्रिये। मारुतैः फलदाहैश्च परिवारिणि शोभने"। ४६। "निष्पत्तिः सर्वशस्यानां सुभिक्षं भवति प्रिये। प्रमाथिनि जलोद्गारो जलदो मोदते प्रजाः"। ४७। "निष्पत्तिः सर्वशस्यानां सर्वशस्यमहार्घता। घृतं तैलसमं याति आनन्दे नन्दिनि प्रजाः"। ४८। "कोद्रवाः शालिमुद्गाश्च पीड्यन्ते वरवर्णिनि। सर्वौषधीनि धान्यनि राक्षसे निष्ठुराः प्रजाः"। ४९। "दुर्भिक्षं जायते घोरं धान्यौषधिप्रपीड़नम्। अनले च समाख्यातं नात्र कार्य्या विचारणा"। ५०। "देशभङ्गः सुदुर्भिक्षं समासात् कथयाम्यहम्। पिङ्गले चारुपश्चाच्चि दुर्भिक्षं नर्मदातटे"। ५१। "गोमहिष्यो विनश्यन्ति ये चान्ये नटनर्त्तकाः। वासवो वर्षते देवि शस्यञ्च न हि जायते"॥ "तिलसर्षपमाषादिकार्पासानां महार्घता। गोमहिष्यः सुवर्णानि कांस्यताम्राद्यशेषतः॥ तत् सर्वं देवि विक्रीय कर्त्तव्यो धान्यसञ्चयः। तेन

धान्येन लोकोऽयं निस्तरिष्यति दुर्दिनम् ॥ पार्थिवामोषकादीना: कालयुक्ते प्रपीड़िताः"। ५२। "तोयपूर्णाः स्मृता मेघा बहुशस्या च मेदिनी। निष्ठुराः पार्थिवा देवि सिद्धार्थे च वरानने"। ५३। "अल्पतोयघनाश्चैव कीटकाः प्रबला स्मृताः। विरुद्धाः पार्थिवा देवि रौद्रे संवत्सरे प्रिये"। ५४। "दुर्भिक्षं मध्यमं प्रोक्तं व्यवहारो न वर्त्तते। भवेद्दै मध्यमा वृष्टिर्दुर्मतौ समुपस्थिते"। ५५। "दुर्भिक्षं जायते लोकाः सर्वे द्रविणवर्जिताः। प्राणिनां जायते हर्षो दुन्दुभौ वरवर्णिनि"। ५६। "महिषीगोहिरण्यादिताम्रकांस्याद्यशेषतः। तत् सर्वं देवि विक्रीय कर्त्तव्यो धान्यसञ्चयः॥ रक्ते संवत्सरे देवि क्रूरबुद्धिर्नराधिपः। मानवाः क्रूरचेष्टाश्च संग्रामे रुधिरं भवेत्"। ५७। "दुर्भिक्षं मरणं घोरं धान्यौषधिप्रपीड़नम्। पापरोगो भवेद्देवि रक्ताख्येऽमरवन्दिनि"। ५८। "रोगी मरणदुर्भिक्षं विरोधीत्तरसङ्कुलम्। क्रोधे तु विषमं सर्वं समाख्यातं हरप्रिये"। ५९। "मेदिनी लभते देवि सर्वभूतं चराचरम्। देशभङ्गश्च दुर्भिक्षं क्षये संक्षीयते प्रजाः॥ सौराष्ट्रे मालवे देशे दक्षिणे कोङ्कने तथा। दुर्भिक्षं जायते घोरं क्षये संवत्सरे प्रिये॥ कौमुदी नर्मदायाश्च यमुना नर्मदातटम्। बिन्ध्यायां सैन्धवश्चापि विनश्यति न संशयः॥ सिंहलं मध्यदेशश्च कालञ्जरं तथैव च। क्षये क्षयन्ति सर्वाणि नान्यथा वरवर्णिनि"। ६०। वराहसंहितायाम् "नक्षत्रेण सहोदयमस्तं वा याति येन सुरराजमन्त्री। तत्संज्ञं कर्त्तव्यं वर्षं मासक्रमेणैव। वर्षाणि कार्त्तिकादीनि आग्नेयाद्भद्वयानुयोगीनि क्रमशस्त्रिभञ्च पञ्चममन्त्यमुपान्त्यञ्च विज्ञेयं नक्षत्रेण गुरुभुज्यमाननक्षत्रेण। आग्नेयं कृत्तिका पञ्चमं फाल्गुनं वर्षम् अन्त्यमाश्विनम् उपान्त्यं भाद्रम्। अन्त्योपान्त्यौ त्रिभौ ज्ञेयौ फाल्गु-

नव त्रिभो मतः। शेषा मासाद्विभा ज्ञेया कृत्तिकादिव्यवस्थया। द्वे द्वे चित्रादितारायां पूर्णपर्वेन्दुसङ्गते। समाश्चैत्रादयो ज्ञेया स्त्रिभैः षष्ठान्त्यसप्तमाः" इति सङ्कर्षणकाण्डाच्च। पूर्णपर्वेन्दुसङ्गते पौर्णमासीयुते द्वे द्वे तारे तदेकवाक्यतया पूर्ववचने पौर्णमासी लाभः। यथा मासानां पौर्णमास्यां कृत्तिकादिसम्बन्धात् कार्त्तिकादित्वं तथा वर्षाणामपि गुरोः कृत्तिकादावस्तोदयसम्बन्धात् कार्त्तिकादित्वं तेन कृत्तिका रोहिण्योरेकतरस्मिन् गुरोरस्तोदयेऽन्यतरलाभे कार्त्तिकं वर्षम् एवं मार्गशीर्षादि। अत्र वर्षद्वयघटकयोर्नक्षत्रयोरेकतरस्मिन्नस्तं गतो गुरुरन्यतरस्मिन्नुदेति तत्र का गतिरिति चेत् कार्त्तिकोत्तरं मार्गशीर्षं ततः पौषमित्यादिक्रमाद्गतिरिति। फलानि च। शकटानलोपजीविकपीड़ा व्याधिशोकः वृद्धिस्तु रक्तपीतककुसुमानां कार्त्तिके वर्षे ॥ १ ॥ "सौम्येऽब्देऽनावृष्टिर्मृगाखुशलभाण्डजैश्च शस्यनाशः। व्याधिभयं मित्रैरपि भूपानां जायते वैरम्" ॥ २ ॥ "शुभकृज्जातः पौषो निवृत्तवैराः परस्परं भूपाः। द्वित्रिगुणो धान्यार्घः पौष्टिककर्मप्रसिद्धिः" ॥ ३ ॥ "पितृपूजापरिवृद्धिर्माघे हार्दश्च सर्वभूतानाम्। आरोग्यवृष्टिधान्यार्घसम्पदो वित्तलाभश्च" ॥ ४ ॥ "फाल्गुने वर्षे विद्यात् क्वचित् क्वचित् क्षेमवृष्ट्यादिशस्यानि। दौर्भाग्यं प्रमदानां प्रबलाश्चौरा नृपाश्चोग्राः" ॥ ५ ॥ "चैत्रे मन्दा वृष्टिः प्रियमन्नं क्षेममवनिपा मृदवः। वृद्धिश्च कोषधान्यस्य भवति पीड़ा च रूपवताम्" ॥ ६ ॥ "वैशाखे विगतभया धर्मपराः प्रमुदिताः प्रजाः सनृपाः। यज्ञक्रियाप्रवृत्तिर्निष्पत्तिः सर्वशस्यानाम्" ॥ ७ ॥ "ज्यैष्ठे ज्ञातिकुलधर्मश्रेणी श्रेष्ठा नृपाः स्वधर्मज्ञाः। पीड्यन्ते धान्यानि च हित्वा कङ्गुशमीजानि" ॥ ८ ॥ "आषाढ़े जायन्ते शस्यानि क्वचित् वृष्टिरन्यत्र। योग-

क्षेमं मध्यं शस्यव्ययगा भवन्ति भूपाः" ॥ ९ ॥ "श्रावणे वर्षे क्षेमं शस्यानि पाकमुपयान्ति। क्षुद्रा ये पार्थिवास्ते पीड्यन्ते ये च तद्भक्ताः" ॥ १० ॥ "भाद्रपदे वल्लीजं निष्पत्तिं याति सर्वशस्यञ्च। न भवत्यपरं शस्यं क्वचित् सुभिक्षं क्वचिच्च दुर्भिक्षम्" ॥ ११ ॥ "आश्वयुजेऽप्यजस्रं पतति जलं प्रमुदिताः प्रजाः क्षेमम्। प्राणचयः प्राणभृतां सर्वेषामर्थबाहुल्यम्" ॥ "रुद्रमैत्राङ्कतिथ्यद्रिविश्वदेवोनविंशतिः। ११। १७। ९। १५। ७। १३। १९। सप्तभिः शेषितच्छाकात् क्रमाद्वर्षादिकं वदेत्। वर्षा धान्यं तृणञ्चैव शीतं घर्मं समीरणम्। प्रजावृद्धिं तत्क्षयञ्च राजविग्रहमेव च" ॥ रुद्रमैत्राङ्कतिथ्यद्रिविश्वदेवोनविंशतिः। एकादशसप्तदशनवपञ्चदशसप्तत्रयोदशोनविंशतयः। तत्र सप्तभिर्हृते शकाब्दे एकावशेषे तद्वर्षे रुद्रसंख्या वर्षा मैत्रसंख्यं धान्यमित्यादि। मालान्यायेन रुद्रमैत्राभ्यां क्षयविग्रहौ ज्ञेयौ। एवं द्व्यवशेषे मैत्रसंख्या वर्षादि। एवमन्यत्र। "जीवार्कबुधमन्दारकाव्यचन्द्रमसः क्रमात्। राजा मन्त्री जलाधीशः शस्यपोऽद्रिहृतात् शकात्" ॥ अत्रापि मालान्यायेन सप्तहृतशकाब्दे एकावशेषे जीवो राजा अर्को मन्त्री बुधो वर्षाधिपः शनिः शस्याधिपः द्व्यवशेषे रव्यादिरेवमन्यत्र। राजफले शौनकः मार्त्तण्डे। "परिशोषमेति सलिलं सोमे पयो विस्तरं क्षौणीजेऽपि च वर्षणं कथमपि ज्ञे च प्रभूतं पयः। पृथ्वी शस्यवती गुरौ भृगुसुते शस्यञ्च नानाविधं मन्दे प्राणिकबन्धशङ्कधवला वर्षाधिपे निश्चितम्। लग्नेशो जन्मराशीशो यस्मिन् वर्षे नृपो भवेत्। उच्चस्थो वा हर्षितो वा क्रूरोऽपि शुभमादिशेत्। त्रिघ्ने शाकवर्षे तु चतुर्भिः शेषिते क्रमात् ॥ आवर्त्तं विद्धि संवर्त्तं पुष्करं द्रोणमम्बुदम्। आवर्त्तो निर्जलो मेघः संवर्त्तश्च बहूदकः ॥ पुष्करो दुष्करजलो द्रोणः शस्य-

प्रपूरकः। पूर्वाषाढ़ां गतो भानुर्जीमूतैर्यदि दृश्यते। तदा त्रयोदशाहानि मिथुनादिषु वर्षति" ॥ भुजबलभीमे। "व्रजति यदि कुजः पतङ्गमार्गे घट इव भिन्नतलो जलं ददाति अथ भवति दिवाकराग्रतश्चेत् प्रलयघनानपि शोषयत्यवश्यम्। यावन्मार्त्तण्डसूनुश्चरति धनुरथो मन्मथं मीनकन्ये तावद् भिच्च-पीड़ा भवति च मरणं चुत्पिपासादिघोरम् उर्वी निस्तूर्य्य-शब्दाशवशिरपटले नर्त्तयन्ते पिशाचाः ग्रामाः शून्या भवेयुर्नर-पतिरहिता ह्यस्थिकङ्कालमाला। वक्रं करोति रविजो धरणी-सुतो वा मूलर्क्षहस्तमघरेवतिमैत्रभेषु। छत्रोपभङ्गपतनादि च सैनिकानां सर्वत्र लोकमरणं जलधौतदेशः। यदा च सौरिः सुरराजमन्त्रिणा समेत्य तिष्ठेत् क्वचिदृचमण्डले। तदा-ङ्गवङ्गान्ध्रककोशलेषु त्रिभागशेषां कुरुते वसुन्धराम्। तिष्ठेतां यावदेकर्क्षे वाक्पत्यवनिजौ पदे। तावत् चुद्रोगसंग्रामात् प्रजानां चयमादिशेत्। आरभ्य शुक्लप्रतिपत्तिथिं मार्गात्तु चैत्रकं गर्भोनीहारजलदैरिति प्राहृट्परीक्षणम्। यन्नक्षत्रं गतवति विधौ जायते तत्र गर्भः पश्चादस्मान्नवतिशतके चाह्नि तस्य प्रसूतिः" ॥ वराहः। "पञ्चम्यादिषु पञ्चसु कुम्भोऽर्के यदि भवति रोहिणीयोगः। अधमतमाधममध्यममतिमष्ट-श्चसां पातः। प्रतिपदि मधुमासे भानुवारः सितायां यदि भवति तदा स्यान्निर्जला वृष्टिरब्दे। अविरतजलधारासान्द्र-विन्दुप्रवाहैर्धरणितलमशेषं व्याप्यते सोमवारे। अवनितनय-वारे वारिवृष्टिर्न सम्यक् बुधगुरुसितवारे शस्यमप्यत् प्रमोदः। जलनिधिरपि सौरे शुष्यते क्वाम्बुवृष्टिः सकलमिदमुदारेणाम्बु-वेद्यं पृथिव्याम्। आषाढ्यां पौर्णमास्यां सुरपतिककुभोवा-तिवातः सुवृष्टिम्। शस्यध्वंसं प्रकुर्य्यादिश दहनदिशो मन्द-वृष्टिर्यमेन। नैर्ऋत्यां निष्फला स्यात् वरुणबहुजलो वायुना

वायुकोपः कौबेर्य्यां शस्यपूर्णा भवति समुदिता मेदिनी शम्भुनापि। रवेः कर्कटसंक्रान्तौ द्रेक्काणत्रयभेदतः। आदिमध्यान्तभेदेन वर्षायाः कालनिर्णयः। त्रिंशद्योजनविस्तीर्णं शतयोजनमायतम्। आढ़कस्य भवेन्मानं मुनिभिः परिकीर्त्तितम्। युग्माजगोमीनगते शशाङ्के रवेर्यदा कर्कटकं प्रयाति। जलं शताढ़ं हरिकार्मुकेऽर्द्धं वदन्ति कन्या मृगयोरशीतिम्। कुलीरकुम्भालि तुले शशाङ्के षड्भिश्च युक्तां नवतिं वदन्ति। समुद्रे दशभागाः स्युः षड्भागाश्चापि पर्वते। पृथिव्यां चतुरो भागान् सदा वर्षति वासवः। दशादिभिस्तु भागाङ्कैः पूरयित्वा शतादिकम्। त्रिंशत्या हारलब्धाङ्काः समुद्रादौ प्रकीर्त्तिताः"। यदा। १००। तदास ५० प ३० पृ २० यदा ५० स २५ प १५ पृ १० यदा ८० स ४० प २४ पृ १६ यदा ८६ स ४८ प २८ रेखात्रयम्। पृ १८। रेखैका एवमाढ़का ज्ञेयाः। सार्द्धदिनद्वयं क्रत्वा पौषे पौषादिना बुधः। गणयेत् कालिकीं वृष्टिमवृष्टिं वानिलक्रमात्। मतान्तरञ्च चापे च मीने परिवृत्तशाके। ज्यैष्ठे शुचौ कर्कटके च सिंहे कन्यातुलायां मकरे च कुम्भे मार्गे स्वयं शुध्यति पौषमासः। शुचेर्निशांशे प्रथमेऽतिवृष्टिः शस्यानि सर्वाण्युपयान्ति सिद्धिम्। आद्ये द्वितीये तिलमुद्गमाषा भागे तृतीये खलु शारदानि। चित्रास्वातीविशाखासु ज्यैष्ठे मासि निरभ्रता। तास्वेव श्रावणे मासि यदि वर्षति वर्षति। शुचौ शुक्ले नवम्याञ्चेत् उदेत्यर्को निरभ्रकः। परिवेशो मध्यदिने चास्तं यातो घनावृतः। त्रयं द्विकमथैकं वा वृष्टिमिष्टां समादिशेत्। अश्लेषायां गतो भानुर्यदि वृष्टिं न मुञ्चति। मघापञ्चकमासाद्य करोत्येकार्णवां महीम्। चतुर्थ्यां कर्कटस्यार्के वृष्टिर्जानपदे यदि। विफलाः सर्वसंक्लेशाः कर्षकाणां भवन्ति च। दृष्टे त्र्युभागे प्रथमे सुवृष्टि-

भवेत् द्वितीये तिलकीटसर्पाः। वृष्टिस्तु मध्यापरभागहृष्टै-र्निश्छिद्रवृष्टिस्तु निशाप्रवृत्ते। स्वातीमैत्रेन्द्ररुद्रेषु प्राजापत्योत्तरासु च। सञ्चरन् जलदान् हन्ति भौमः संवर्त्तकानपि। चित्रां गते भृगौ जीवे सौरियुक्तेऽम्बु वर्षणम्। शुभायुक्तसिंह-कुजे शोषं याति महाघनः। पापवर्षशुभायुक्त तुलाशुक्रे महार्घता। प्रावृषि शीतकरो भृगुपुत्रात् सप्तमराशिगतः शुभदृष्टः। सूर्य्यसुतान्नवपञ्चमगो वा सप्तमगश्च जलागमनाय। श्रीपतिव्यवहारनिर्णये। "माघे मासि च सप्तम्यां पञ्चम्यां फाल्गुनस्य च। चैत्रस्य तृतीयायां वैशाखप्रथमेऽहनि मेघस्य गर्जितं श्रुत्वा जलदस्य च दर्शने। आरभ्य चतुरो मासान् सम्यग्वर्षति वासवः॥ सप्तम्यां स्वातियोगे यदि भवति नभो दृष्टचन्द्रार्कतारं विज्ञेया प्रावृडेषा बहुजलविपुला सर्वशस्यानु-कूला। वर्षप्रश्ने सलिलराशिमाश्रित्य चन्द्रो लग्नं यातो भवति यदि वा केन्द्रगः शुक्लपक्षे। सौम्यैर्दृष्टः प्रचुरमुदकं पापदृष्टो-ऽल्पमम्भः प्रावृट्काले सृजति हितदा चन्द्रवत् भार्गवोऽपि। प्रश्नात् सद्यो वृष्टिज्ञानम्। "यद्येकराशौ वसतः सितेन्दुजौ पयोऽतिपूर्णां कुरुते वसुन्धराम्। तयोश्च मध्ये यदि पद्म-बान्धवो न संशयं शोषमुपैति मेदिनी। विनोपघातेन पिपी-लिकानामण्डोपसंक्रान्तिरहिव्यवायः। द्रुमादिरोहश्च भुजङ्ग-मानां वृष्टिनिदानानि गवां प्लुतानि। रथ्यायां शिशवः सेतून् रवान् भेकाश्च कुर्वते पवनश्च यदा शीतो वात्यायाश्च विव-र्त्तनम्। गवां निरीक्षणं व्योम्नि तदाश्वेव प्रवर्षति"॥ भौम-पराक्रमे। "तरुशिखरेषु गताः कृकलासा गगनतलस्थिरदृष्टि-र्निपाताः। यदि गवां निरीक्षणमूर्द्ध्वं निपतति वारिपतन-मचिरेण। यदि स्थिता गृहपटलेषु कुक्कुरा रुवन्ति वा यदि विततं दिवोन्मुखाः दिवातलं मुदित पिनाकिदिङ्मुखा तथा

समा भवति जलौघसंप्लुता निदाघवातातप उष्णशीतले रटन्ति मण्डूकशिवाङ्गिचातकाः मयूरकण्ठद्युति सूर्य्यमण्डले दिनत्रयं वा विपतन्ति भूतले" ॥ बृहस्पतिः। "कुषीदं कृषिवाणिज्यं प्रकुर्वीता स्वयं कृतम्। आपत्काले स्वयंकुर्वन्नैनसा लिप्यते द्विजः॥ राज्ञे च दत्त्वा षड्भागं देवतानाञ्च विंशकम्। त्रिंशद्भागञ्च विप्राणां कृषिं दत्त्वा न दोषभाक्" ॥ तथा "मूषितं घातितं यत्र सीमायाश्च समन्ततः। अकृतोऽपि भवेत् साक्षी ग्रामस्तत्र न संशयः" ॥ हारीतः। "अष्टागवं धर्म्महलं षड्गवं जीवितार्थिनाम्। चतुर्गवं नृशंसानां द्विगवं ब्रह्मघातिनामिति विष्णुधर्म्मोत्तरे पाठः। "अङ्गः पूर्व्वे द्विग्रामं वा धुर्य्याणां वाहनं स्मृतम्। विश्रामेन्मध्यभागे च भागे चान्ते यथासुखम्" ॥ उशनाः। "गोभिः प्रणाशितं धान्यं यो नरः प्रतियाचते। पितरस्तस्य नाश्नन्ति नाश्नन्ति च दिवौकसः" ॥ ज्योतिषे। "इशपूर्वरवं मूल्यं पश्चादौ लक्षयेद्बुधः। उक्तमूले समं विद्यात्क्षेपे धान्यमधःक्रयः॥ हस्ताशतभिषा पूर्व्वादित्रयरोहिण्यः। उत्तरादित्रयकृत्तिकामूलारेवत्यः इशेत्याद्यक्षरात् सूचिताः॥ रवौ शनौ कुजे वारे पौषे दर्शो भवेद् यदि। तदा धान्यस्य मूल्यं स्यादेकद्वित्रिगुणं क्रमात्॥ दर्शे पौषस्य रात्रौ चेत् ज्येष्ठामूलाजलानि च। क्रमान्मूल्यविवृद्धिः स्यात् धान्यानां वत्सरे तथा॥ संक्रान्ति ऋक्ष तिथिवारयुक्तं द्रव्याक्षरं रामहृतं भवेत्तु। एके समर्घं समतां द्वितीये शून्ये महार्घं मुनयो वदन्ति ॥ यमाहिशक्राग्निहुताशपूर्व्वा नेष्टाः क्रये विक्रयणे प्रशस्ताः पौष्णाश्विचित्राशतविष्णुवाताः क्रये हिता विक्रयणे निषिद्धाः" ॥ विष्णुधर्म्मोत्तरे। "क्षिप्राणि यानि ऋक्षाणि चराणि च मृदूनि च। वाणिज्ये तानि शस्यन्ते तिथिं रिक्तां विवर्जयेत् ॥ प्रतिपद्द्वादशीषष्ठीनक्षत्राणि

ध्रुवाणि च। कृष्णोदे वर्जनीयानि दिनं सूर्य्यसुतस्य च" ॥ अथ-विक्रयनक्षत्राणि। "दर्शाष्टमीभूततिथिप्रजेशपूर्वोत्तराकेशव-याम्यचित्राः। क्रूराह्नविष्टिव्यतिपातयोगा नेष्टा गवां विक्रय-चालनादौ ॥ श्राजं यमद्वन्द्वमहित्रयञ्च शक्रद्वयं वायुयुगं महेशः। कार्य्यो न चैतेषु धनप्रयोगो मृदौ गणे ग्राह्यसृणं न देयम्" ॥ धनप्रयोगनिषेधः।

अथाद्भुतम्। अद्भुतसागरे आथर्वणाद्भुतवचनं प्रकृति-विरुद्धमद्भुतवचनम्। प्रकृतिविरुद्धमद्भुतमापदः प्राक् प्रबो-धाय देवाः सृजन्तीति। तेनापज्ज्ञानाय भूम्यादीनां पूर्वं स्वभावप्रच्यवो देवकर्त्तृकोऽद्भुत इति। एवञ्च बुधोदयपर्वणि ग्रहादीनां गणितागणिततत्वेन प्रकृतानामपि यदुत्पातत्वं तद्भ्रान्तं तत्कारणञ्च गर्गसंहिता-वार्हस्पत्ययोः। "अतिलोभादसत्याद्वा नास्तिक्याद्वाप्यधर्मतः। नरापचारान्नियतमुपसर्गः प्रवर्त्तते ॥ ततोऽपचारान्नियतमपवर्जन्ति देवताः। ताः सृजन्त्यद्भुतां-स्तास्तु दिव्यनाभसभूमिजान्। त एव त्रिविधा लोके उत्पाता देवनिर्म्मिताः। विचरन्ति विनाशाय रूपैः सम्बोधयन्ति च" ॥ तांश्च परं न दर्शयेदित्याह विष्णुः। "नोत्पातं दर्शयेदिति"। तत्र वेलानक्षत्रमण्डलनिरूपणम्। यथा दीपिकायाम्। "प्राग्द्वित्रिचतुर्थयामेषु द्युनिशोरङ्गतेषु सर्व्वेषु अनिलाग्निशक्र-वरुणा मण्डलपतयः शुभाशुभाभेश्च। अर्य्यम्नादिचतुष्कचन्द्र-तुरगादित्येषु वायुर्भवेत् देवेज्याजविशाखयाम्ययुगले पित्र्यद्वये चानलः। विष्ण्वादित्रयधातृमैत्रयुगलेष्विन्द्रो भवेन्मण्डलः सर्पो-पान्त्यमृगान्त्यमूलयुगले शानेष्वपामीश्वरः। पवनदहनो नेष्टौ योगस्तयोरतिदुष्करः। सुरपवरुणौ शस्तौ योगस्तयोरति-शोभनः सवरुणमरुन्मिश्रः शक्रस्तथाग्निसमायुतः। फल-विरहितः सेन्द्रो वायुस्तथाग्नियुतोऽम्बुपः। यन्मण्डलेऽद्भुतं

जातं शान्तिस्तद्देवताश्रया तथा शान्तिद्वयं कार्य्यं मण्डलद्वयजाद्भुत" ॥ विष्णुधर्म्मोत्तरे। "ग्रहर्क्षवैकृतं दिव्यमान्तरीक्षं निबोध मे। उल्कापातो दिशां दाहः परिवेशस्तथैव च॥ गन्धर्वनगरञ्चैव वृष्टिश्च विकृता तथा। एवमादीनि लोकेऽस्मिन् नाभसानि विनिर्दिशेत्। चरस्थिरभवं भौमं भूकम्पमपि भूमिजम्। जलाशयानां वैकृत्यं भौमं तदपि कीर्त्तितम्। भौमं चाल्पफलं ज्ञेयं चिरेण परिपच्यते। नाभसं मध्यफलदं मध्यकालफलप्रदम्। दिव्यं तीव्रफलं ज्ञेयं शीघ्रकारि तथैव च। शीतोष्णताविपर्य्यासो ऋतूनां रिपुजं भयम्। पुष्पे फले च विकृते राज्ञो मृत्युं तथा दिशेत्। अकालप्रभवा नार्य्यः कालातीताः प्रजास्तथा। विकृताः प्रसवाश्चैव युग्मप्रसवनं तथा। हीनाङ्गा अधिकाङ्गाश्च जायन्ते यदि वा त्रयः। पशवः पक्षिणश्चैव तथैव च सरीसृपाः। विनाशं तस्य देशस्य कुलस्य च विनिर्दिशेत्। प्रदोषे कुक्कुटारावो हेमन्ते चापि कोकिलाः। अर्कोदयेऽर्काभिमुखः श्वारावो नृभयं दिशेत्। उलूको वसते यत्र निपतेद्वा तथा गृहे। ज्ञेयो गृहपतेर्मृत्युर्धननाशस्तथैव च। गृध्रः कङ्कः कपोतश्च उलूकः श्येन एव च। चिल्लश्च चर्म्मचिल्लश्च भासः पाण्डर एव च। गृहे यस्य पतन्त्येते गेहं तस्य विपद्यते। षण्मासात्तथा वर्षान्मृत्युः स्याद् गृहमेधिनः। पत्न्याः पुत्रस्य वा मृत्युर्द्रव्यञ्चापि विनश्यति। ब्राह्मणाय गृहं दत्त्वा दत्त्वा तन्मूल्यमेव वा। गृह्णीयाद् यदि रोचेत शान्तिञ्चेमां प्रयोजयेत्; मांसास्थीनि समादाय श्मशानाद् गृध्रवायसाः। श्वाशृगालोऽथवा मध्ये पुरस्य प्रविशन्ति चेत्। विकिरन्ति गृहादौ च श्मशानं सा मही भवेत्। चौरैश्च हन्यते लोकः परचक्रसमागमः। संग्रामश्च महाघोरो दुर्भिक्षं मरकस्तथा। अद्भुतानि प्रसूयन्ते तत्र देशस्य विद्रवः। अकाले

फलपुष्पाणि देशविद्रवकारणम्" । मत्स्यपुराणे । "अतिवृष्टि-रनावृष्टिर्दुर्भिक्षादिभयं मतम् । अनृतौ तु दिनादूर्द्ध्वं वृष्टि-र्ज्ञेया भयाय च । निरभ्रे वाथ रात्रौ वा श्वेतं यस्योत्तरेण तु । इन्द्रायुधं ततो दृष्ट्वा उल्कापातं तथैव च । दिग्दाहपरिवेशौ च गन्धर्वनगरं तथा । परचक्रभयं विद्याद्देशोपद्रवमेव च" । भासो वनकुक्कुटः । कंसनिधनसूचने हरिवंशः । "वक्रमङ्गा-रकश्चक्रे चित्रायां घोरदर्शनः । चलत्यपर्वणि मही गिरीणां शिखराणि च" ॥ बाणोत्पाते स एव । "दक्षिणां दिशमा-स्थाय धूमकेतुः स्थितो भवेत् । वक्रमङ्गारकश्चक्रे कृत्तिकासु भयङ्करः" ॥ कृत्यचिन्तामणौ । "त्यक्ता शौचविवेकतत्त्व वसुधा लोकाः क्षुधापीड़िताः विप्रा वेदहतास्तथाप्रचलिता वह्लाशिनो दुःखिताः । चौणी मन्दफला नृपाश्च विकलाः संग्रामघोरा मही प्रेताघातदुरन्तपीड़िततरा देवेज्यराहूयुतौ । रक्ते शास्त्रोद्योगो मांसास्थिवशादिभिर्मरकः । धान्यहिरण्यत्वक्-फलकुसुमाद्ये वर्षिते भयं विद्यात् । अङ्गारपांशुवर्षे विनाश-मुपयाति तन्नगरम् । उपलं विना जलधरैर्विकृता वा यदा प्राणिनो वृष्ट्या । छिद्रं वाप्यतिवृष्टिं शस्यानामीति संजन-नम्" । बुधकौशिकसंवादे । "बल्वशः प्रपाते च फलं शरटस्य प्ररोहणे । शीर्षे राजश्रियोऽवाप्तिर्भाली चैश्वर्य्यमेव च । कर्ण-योर्भूषणावाप्तिर्नेत्रयोर्बन्धुदर्शनम् । नासिकायाश्च सौगन्ध्यं वक्त्रे मिष्टान्नभोजनम् । कण्ठे चैव श्रियोऽवाप्तिर्भुजयोर्विभवो भवेत् । धनलाभो बाहुमूले करयोर्धनवृद्धयः । स्तनमूले च सौभाग्यं हृदि सौख्यविवर्द्धनम् । पृष्ठे नित्यं महीलाभः पार्श्व-योर्बन्धुदर्शनम् । कटिद्वये वस्त्रलाभो गुह्ये मृत्युसमागमः । जङ्घे चार्थचयो नित्यं गुदे रोगभयं भवेत् । ऊर्वोस्तु वाह-नावाप्तिर्जानुजङ्घेऽर्थसंचयः । वामदक्षिणयोः पादोर्भ्रमणं

नियतं भवेत्। बल्त्याः प्ररोहणे चैव पतने शरटस्य च। व्यत्यासाच्च फलञ्चैव तद्वदेवं प्रजायते। बल्त्याः प्ररोहणं रात्रौ शरटस्य प्रपातनम्। निधनार्थाय भवति व्याधिपीड़ा विपर्य्ययौ। पतनानन्तरञ्चैवारोहणं यदि जायते। पतने फलमुत्सृष्ट रोहणेऽन्यत् फलं भवेत्। आरोहणञ्चोर्द्ध्ववक्त्रो ऽधोवक्त्रो च पातनम्। भवेदिष्टफलं तस्य तत्फलं जायते ध्रुवम्। स्पृष्टमात्रेण यः सद्यः सचेलं जलमाविशेत्। पञ्चगव्यप्राशनञ्च कुर्य्यादर्कावलोकनम्। बल्त्यीरूपं सुवर्णस्य रक्तवस्त्रेण वेष्टयेत्। पूजयेद्गन्धपुष्पाद्यैस्तदग्रे पूर्णकुम्भके। पञ्चगव्यं पञ्चरत्नं पञ्चामृतं स पल्लवम्। पञ्चवृक्षकषायञ्च निक्षिप्यावाहयेत्ततः। पूजयेद्गन्धपुष्पाद्यैर्लोकपालांस्तथा क्रमात्। मृत्युञ्जयेन मन्त्रेण समिद्भिः खदिरैः शुभैः। तिलैर्व्याहृतिभिर्होममष्टोत्तरसहस्रकम्"। बल्ली गृहगोधिका। मृत्युञ्जयमन्त्रस्त्र्यम्बकमन्त्र इति विद्याकरः। गर्गसंहितावार्हस्पत्ययोः। "ये तेषु शान्तिं कुर्वन्ति न ते यान्ति पराभवम्। ये तु न प्रतिकुर्वन्ति क्रियया ऽश्रद्धयान्विताः। दाम्भिकाद्वा विमोहाद्वा विनश्यन्त्येव तेऽचिरात्"। अत्र निमित्तनिश्चयवतोऽधिकारः अन्यथा दोष इत्याह मत्स्यपुराणम्। "भिन्नमण्डलवेलायां ये भवन्त्यद्भुताः क्वचित्। तत्र शान्तिद्वयं कार्य्यं निमित्ते सति नान्यथा। निर्निमित्तकृता शान्तिर्निमित्तमुपपादयेत्"। एतच्च तत्तद्विशेषविहितशान्तिविषयम्। अन्यथा वेलामण्डलसन्देहे शान्तिर्न स्यात्। अतएवोक्तं योगियाज्ञवल्क्येन। "यत्र यत्र च संकीर्णमात्मानं मन्यते द्विजः। तत्र तत्र तिलैर्होमो गायत्र्या समुदाहृतः। गायत्र्या प्रयतः शुद्धः सर्वपापैः प्रमुच्यते। शान्तिकामस्तु जुहुयात् गायत्रीमक्षतैः शुचिः। हन्तुकामस्तु नृपतेर्ष्टं तेन जुहुयात् शुचिः। सावित्र्या शान्तिहो-

मांश्च कुर्य्यात् पर्वसु नित्यशः। प्रणवव्याहृतिभ्याञ्च स्वाहान्ता- होमकर्मणि। प्रतिलोमा प्रयोक्तव्या फट्कारान्ताभिचारिके"। विश्वामित्रेणापि निमित्तसन्देहे कृच्छ्रादीन्युक्तानि यथा। "कृच्छ्रचान्द्रायणादीनि शुद्धग्रभ्युदयकारणम्। प्रकाशे च रहस्ये च संशयेऽनुक्तकेऽस्फुटे"। मार्कण्डेयपुराणम्। "दिग्- देशजनसामान्यं नृपसामान्यमात्मनि। नक्षत्रग्रहसामान्यं नरो भुङ्क्ते शुभाशुभम्। परम्पराभिरक्षाभिर्ग्रहदोषेषु जायते"। तथा। "तस्माच्छान्तिपरः प्राज्ञो लोकवादरत- स्तथा। लोकवादांश्च शान्तींश्च ग्रहपीड़ासु कारयेत्। भूदी- हानुपवासांश्च शस्तचैत्याभिवन्दनम्। कुर्य्यात् होमं तथा दानं श्राद्धं क्रोधविवर्ज्जनम्। अद्रोहं सर्वभूतेषु मैत्रीं कुर्य्याच्च पण्डितः। वर्जयेद्दुषतीं वाचमतिवादांस्तथैव च। ग्रहपूजाञ्च कुर्वीत सर्वपीड़ासु मानवः। एवं शाम्यन्त्यशेषाणि घोराणि द्विज- सत्तम। प्रयतानां मनुष्याणां ग्रहर्क्षोत्थान्यनेकशः"। लोक- वादाश्च तत्रैवोक्ता यथा। "आकाशाद्देवतानाञ्च देव्यादीनाञ्च सौहृदात्। पृथिव्यां प्रतिलोके च लोकवादा इति स्मृताः"। ते च सर्वभूतडाकिन्याद्यभिभवशान्त्यर्थं लौकिकौषधमन्त्रा- दयः विषहरीमङ्गलचण्डिकागीतादयः चैत्यवृक्षादौ क्षेत्र- पालदेवतापूजा च। तथा चापस्तम्बः। "स्त्रीभ्योऽवर- वर्णेभ्यो धर्म्मशास्त्रं प्रतीयादित्येक इति"। धर्मशेषान् श्रुतिस्मृतिसदाचारेष्वप्रसिद्धानिति नारायणोपाध्यायः। भूदो- हश्च पात्रं विना भूमौ गोस्तनं निष्पीड्य दुग्धोत्सर्गः। चैत्यः पूज्यत्वेन ख्यातो वृक्षः। तथा च बाणोत्पाते हरिवंशः। "अनेकशाखश्चैत्यश्च निपपात महीतले। अर्चितः सर्वकन्या- भिर्दानवानां महात्मनाम्"॥ उषतीमकल्याणीम्। अति- वादश्च पूज्यमतिक्रम्य भाषणम्। मत्स्यपुराणम्। "काकस्ये-

करवश्चाव: प्रभाते दु:खदायक:। काको मैथुनकासक्त: श्वेतो वा यदि दृश्यते॥ उलूको वसते यत्र निपतेद्वा तथा गृहे। ज्ञेयो गृहपतेर्मृत्युर्धननाशस्तथैव च”॥ वराहसंहितायाम्। “क्रीड़ानुरक्तो रतिमांसलुब्धो भीतो रुजार्त्त: पतितो विहङ्ग:। नासौ गृहस्थस्य विनाशहेतुर्दोष: समुत्पाद्यत आतुरार्थ्या:॥ गृहे पक्षिविकारेषु कुर्य्याच्चामरतर्पणम्। देवा: कपोता इति वा जप्तव्यं सप्तभिर्द्विजै:॥ गावश्च देया विविधा द्विजानां सकाञ्चना वस्त्रयुगोत्तरीया:। एवंकृते पापमुपैति शान्तिं मृगैर्द्विजैर्वापि निवेदितं यत्”॥ द्विजै: पक्षिभि: अपि नाऽन्यै-रपि।' भुजबलभीमे। “एकोवृषस्त्रयोगाव: समाश्वा नव दन्तिन:। सिंहप्रसूतिकाश्चैव कथिता: स्वामिघातका:”॥ मत्स्यपुराणे। “अङ्गे दक्षिणभागे तु शस्तं विष्फुरणं भवेत्। अप्रशस्तं तथा वामे पृष्ठस्य हृदयस्य च॥ लाञ्छनं पिटकं चैव ज्ञेयं विष्फुर्जितं तथा। विपर्य्ययेण विहितं सर्वं स्त्रीणां फलं तथा॥ अनिष्टचिह्नोपगमे द्विजानां कार्य्यं सुवर्णेन च तर्पणं स्यात्” सिंहप्रसूतिका गाव:। शङ्ख:। “दु:स्वप्नानिष्ट-दर्शनादौ घृतं हिरण्यञ्च दद्यादिति”। मात्स्ये। “नमस्ते सर्वलोकेश नमस्ते भृगुनन्दन। कवे सर्वार्थसिद्ध्यर्थं गृहाणार्घ्यं नमोऽस्तु ते॥ एवं शुक्रोदये कुर्वन् यात्रादिषु च कारयेत्। सर्वान् कामानवाप्नोति विष्णुलोके महीयते॥ नमस्तेऽङ्गिरसां नाथ वाक्पतेऽथ बृहस्पते। क्रूरग्रहै: पीड़ितानाममृताय नमो नम:॥ संक्रान्तावपि कौन्तेय यात्रास्वभ्युदयेषु च। कुर्वन् बृहस्पते: पूजां सर्वान् कामान् समश्नुते”॥ वैष्णवामृते व्यास:। “ग्रहयज्ञै: शान्तिकैश्च किं क्लिश्यन्ति नरा द्विज। महाशान्तिकर: श्रीमांस्तुलस्या पूजितो हरि:॥ उत्पातान् दारुणान् पुंसां दुर्निमित्ताननेकश:। तुलस्या पूजितो भक्त्या

महाशान्तिकरो हरिः” ॥ अत्र ब्रह्मपुराणीयो मन्त्रः । “नमस्ते बहुरूपाय विष्णवे परमात्मने स्वाहेति” । छन्दोगपरिशिष्टम् । “अथातो रजस्वलाभिगमने गोऽश्वभार्य्यासु गमने यमजजनने विजातीयजनने वा काककङ्कगृध्रबकश्येनभासभिक्षकपोतानां गृहप्रवेशे महिषस्योपरि विश्रामणे एषामेव क्रियमाणे गृह-द्वारारोहणे वाद्भुतेषु कल्पदृष्टेन विधिनाऽग्निमुपसमाधाय प्रायश्चित्ताज्याहुतीर्जुहोति अद्भुताय अग्नये स्वाहा सोमाय विष्णवे रुद्राय वायवे सूर्य्याय मृत्यवे विश्वेभ्यो देवेभ्यः स्वाहेति स्थालीपाकवृतान्यद्रिति” ॥ कपोतं विशेषयति शौनकः । “रक्तपादः कपोताख्यो अरण्यौकाः शुकच्छविः । स चेच्छालां विशेच्छाला समीपञ्च व्रजेद्यदि ॥ अन्येषु गृहमध्ये वा वल्मीक-स्योद्गमादिषु” ॥ कल्पदृष्टेन विधिना गृह्योक्तेन प्रायश्चित्ता-ज्याहुतीः अद्भुतदोषप्रशमनार्थाः सप्ताज्याहुतीः । अद्भुतायाग्नये स्वाहा इत्यादिमन्त्रैः तत्र स्थालीपाकेतिकर्त्तव्यतायां पायस-चरुभिरेतेभ्यो देवेभ्यो जुहुयात् । छन्दोगपरिशिष्टम् । “पश्चात् घृतपायसेन ब्राह्मणान् भोजयित्वा गोवरं दत्त्वा शान्ति-र्भवतीति गोवरं गोश्रेष्ठं दक्षिणां तां गां कृत्वा दोषशान्ति-र्भवतीति” । तथाचोक्तम् । “गौर्विशिष्टतमा लोके वेदेष्वपि निगद्यते । न ततोऽन्यद्वरं यस्मात्तस्माद्गौर्वरमुच्यते” ॥ छन्दोग-परिशिष्टम् । “यस्त्वेषामन्यतममापन्नः प्रायश्चित्तं न कुर्य्यात् तस्य गृहपतेर्मरणं सर्वस्वनाशो वा भवति तस्मात् प्रायश्चित्तं कर्त्तव्यं कर्मापवर्गे वामदेव्यगान शान्तिः शान्तिरिति” अपवर्गे समाप्तौ । वामदेव्यगानं शान्तिः कार्य्या आवृत्तिः प्रकरण-समाप्त्यर्था । वार्हस्पत्ये । “शमयन्त्या सप्ताहात् कम्पादिकृतं निमित्तमाश्वेव । अतिवर्षणोपवासव्रतदीक्षाजप्यहवनानि” ॥ वराहः । “ये च न दोषं जनयन्त्युत्पातांस्तानृतुस्वभावकृतान्

ऋषिपुत्रकृतैः श्लोकैर्विंद्यादेभिः समासोक्तैः"। तथा च मत्स्यपुराणम्। "वज्राशनिमहीकम्पसन्ध्यानिर्घातनिस्वनाः। परिवेशरजोधूमरक्तार्कास्तमयोदयाः। द्रुमेभ्योऽथ रसस्नेहमधुपुष्पफलोद्गमाः। गोपक्षिमदवृद्धिश्च शिवाय मधुमाधवे। तारोल्कापातकलुषं कपिलार्केन्दुमण्डलम्। अनग्निज्वलनं स्फोटं धूमरेणुमिवाकुलम्। रक्तपद्मारुणा सन्ध्या नभःक्षुब्धार्णवोपमम्। सरितां चाम्बुसंशोषं दृष्ट्वा ग्रीष्मे शुभं वदेत्। शक्रायुधपरीवेशौ विद्युच्छुष्कविरोहणम्। कम्पोद्वर्त्तनवैकृत्यं रसनं दारणं क्षितेः। नद्युदपानसरसां वृद्धैरा भवनप्लवाः। पतनञ्चाद्रिगेहानां वर्षासु न भयावहम्"॥ हरिवंशे वर्षावर्णनायाम्। "क्वचित् कन्दरहासाढ्यं शिलोन्ध्राभरणं क्वचित्" इति दर्शनात् वर्षासु शिलोन्ध्रोद्गमो न भयावहः। "दिव्यस्त्रीभूतगन्धर्वं विमानाद्भुतदर्शनम्। ग्रहनक्षत्रताराणां दर्शनञ्च दिवाम्बरे॥ गीतवादित्रनिर्घोषो वनपर्वतसानुषु। शस्यवृद्धिरसोत्पत्तिरपापाः शरदि स्मृताः॥ शीतानिलतुषारत्वं नर्दनं मृगपक्षिणाम्। रक्षोयक्षादिसत्वानां दर्शनं वागमानुषी॥ दिशो धूमान्धकाराश्च शलभा वनपर्वताः। उच्चैः सूर्य्योदयौ-स्तत्वं हेमन्ते शोभना मताः॥ हिमपाताभिलोत्पातविरूपाद्भुतदर्शनम्। दृष्टाञ्जनाभमाकाशं तारोल्कापातपिञ्जरम्॥ चित्रागर्भोद्भवाः स्त्रीषु गोजाश्वमृगपक्षिणाम्। पत्राङ्कुरलतानाञ्च विकाराः शिशिरे शुभाः॥ ऋतुस्वभावजा ह्येते दृष्टाः स्वर्त्तौ शुभावहाः। ऋतावन्यत्र चोत्पाता दृष्टास्ते भृशदारुणाः॥ उन्मत्तानाञ्च या गाथाः शिशूनां चेष्टितञ्च यत्। स्त्रियो यच्च प्रभाषन्ते तत्र नास्ति व्यतिक्रमः॥ पूर्वञ्चरति देवेषु पश्चाद्गच्छति मानुषान्। नादेषिता वाग्वदति सत्या ह्येषा सरस्वती"॥ वृहस्पतिः। "ज्योतिर्ज्ञानं तथोत्पात-

मविदित्वा तु ये नृणाम्। आवयन्त्यर्थलोभेन विनेयास्तेऽपि यत्नत:" ॥ विनेया दण्डनीया: ।

अथ यात्रा । मत्स्यपुराणे । "ऋक्षेषु षट्सु शुद्धेषु ग्रहेष्वनुग्रहेषु च । प्रश्नकाले शुभे जाते परान् यायान्नराधिप:" ॥ ऋक्षेषु षट्सु नाड़ीनक्षत्रेषु । दुर्ग्रहवतान्तु "अर्थो ह्यनर्थतां याति दुर्भगाणां यथा विभो । विषमे तत्समुद्भूतमस्माच्चामृतकाङ्क्षया" ॥ अस्मात् समुद्रमथनात् । भागुरि: । "दिगीशं हृदये ध्यात्वा गन्तव्याशामुख: स्थित: । अन्त:समीरणे देहप्रवेशे समुपस्थिते । स्वस्तीति दक्षिणं पादमासनादवतारयेत्"। राजमार्त्तण्डे। "व्रजेद्दिगीशं हृदये निधाय यथेन्द्रमैन्द्र्यामपरास्व तद्वत । सुशुक्लमाल्याम्बरभृन्नरेन्द्रो विसर्जयेद्दक्षिणपादमादौ । स्नात: सिताम्बरधर: सुमना: सुवेश: संपूजितोऽमरगुरुद्विजगोदिगीश: । कृत्वा प्रदक्षिणशिखं शिखिनं कृताशीर्गच्छेन्नर: शकुनसूचितकार्य्यसिद्धि:" विष्णुपुराणम् । "माङ्गल्यपुष्परत्नाद्यै: पूज्याननभिवाद्य च । न निष्क्रमेत् गृहात् प्राज्ञ: सदाचारपरो नर: ॥ गृहाद् गृहान्तरं गर्ग: सीम्न: सीमान्तरं भृगु: । शरक्षेपाद्भरद्वाजो वशिष्ठो नगराद्बहि:" ॥ यात्रानन्तरं वराह: । "संत्यजेद्भोजनागारं तथा शयनमन्दिरम् । दूरस्थं जलमध्यस्थं शयानं व्याधिपीड़ितम् ॥ गच्छन्तमपि यानस्थं ब्राह्मणं नाभिवादयेत्" ॥ बृहत्यात्रायां राजमार्त्तण्डे "प्राच्यामहानि मुनय: प्रवदन्ति सप्त याम्यामतीव शुभदानि दिनानि पञ्च । त्रीण्येव पश्चिमदिशि क्षितिनायकानां प्रस्थानकेषु दिवसत्रयमुत्तरस्याम् ॥ एतच्चायुक्तमित्याहुर्होराशास्त्रविदो बुधा: । यात्रां त्रिपञ्चसप्ताहात् पुनर्भद्रेण योजयेत् ॥ वाञ्छितार्थफलावाप्ती यात्रापरिसमाप्यते । जन्मर्क्षे चाष्टमे चन्द्रे वारे भौमशनैश्चरे ॥ प्रास्थितेऽपि न गन्तव्यमत्यन्त्यशहिते दिने । जन्मभे जन्ममासे वा योग-

च्छेदष्टमे विधौ ॥ आयुःक्षयमवाप्नोति व्याधिञ्च बधबन्धने" ॥ विष्णुपुराणम् । "वर्षातपादिके छत्री दण्डी रात्र्यटवीषु च । शरीरत्राणकामो वै सोपानत्कः सदा व्रजेत् ॥ नोर्द्ध्वं न तिर्य्यग् दूरं वा निरीक्षन् पर्य्यटेत् बुधः । युगमात्रं महीपृष्ठं नरो गच्छेद्विलोकयन् ॥ चतुष्पथान्नमस्कुर्य्यात् चैत्य वृक्षं तथैव च । प्रश्ने मनोरमाभूमाङ्गल्यद्रव्यदर्शनश्रवणे ॥ यदि वादरेण पृच्छति दैवज्ञं निर्दिशेद्विजयम्" ॥ यात्राप्रश्नविधिः । "स्तन-चरणतलोष्ठाङ्गुष्ठहस्तोत्तमाङ्गश्रवणवदन-नासा गुह्यरन्ध्राणि भूपः । स्पृशति यदि कराग्रैर्गण्डकण्ठशकं वा ध्रुतिगतिशुभ-शब्दान् व्याहरन् शास्ति शत्रून्" ॥ प्रश्ने स्पर्शादिभिर्जयज्ञानम् । व्यासः । "चिरप्रवासयात्रायां गृहे कर्णस्य वेधने । चूड़ाकृतौ प्रतिष्ठायां भानुशुद्धिर्विधीयते ॥ आरोग्यमृक्षेण धनं क्षणेन कार्य्यस्य सिद्धिं तिथिनाप्नुयाच्च । राश्युद्गमे चाध्वनिसिद्धिमाहुः प्रायः शुभानि क्षणदाकरेण" ॥ संवत्सरप्रदीपे । "सिंहे धनुषि मीने च स्थिते सप्ततुरङ्गमे । यात्रोद्वाहगृहारम्भक्षौर-कर्माणि वर्जयेत्" ॥ एष यात्राप्रतिषेधो राजेतरपरः । "मार्ग-शीर्षे शुभे मासि यायाद्यात्रां महीपतिः । फाल्गुनं वाथ चैत्रं वा मासं प्रति यथाबलम्" ॥ इति मनुवचनात् । "श्रावणे भाद्रमासे युवतिगृहगते चार्थलाभः प्रदिष्टो मासे पौषे तु यात्रा भवति नरपतेरर्थसिद्धिप्रदात्री" इति राजमार्त्तण्डाच्च । "शुक्लाद्या स्याच्छुभे चन्द्रे कुजार्कभृगुराशिगे । तत्पक्षे शुभदा यात्रा कृष्णपक्षे ततोऽन्यथा" ॥ यात्रायां पक्षशुद्धिः । "षष्ठाष्टमी द्वादशीषु न गच्छेत् त्रिदिनस्पृशि । पूर्णिमाप्रतिपद्दर्शरिक्ताव-मदिनेषु च ॥ तथा यामद्वितीयायां यात्रायां मरणं भवेत् । अजातचन्द्रा प्रतिपत्तिथिर्या सा सर्वथा सिद्धिकरी न पुंसाम् ॥ कलो न चन्द्रा प्रतिपत्तिथिर्या सा सर्वदा सिद्धिकरी नियुक्ता ।

प्रतिपत्सु प्रयातानां सिद्धिरेव न संशयः । द्वितीयायां शुभः पन्थास्तृतीयायां जयो भवेत् ॥ बधबन्धनसंक्लेशश्चतुर्थ्यां नात्र संशयः । पञ्चम्यामीप्सितार्थः स्यात् षष्ठ्यां व्याधियुतो भवेत् ॥ सप्तम्यामर्थलाभः स्यादष्टम्यामस्त्रपीड़नम् । नवम्यां मृत्युसंयोगान्न गन्तव्यं कदाचन ॥ दशम्यां भूमिलाभः स्यादेकादश्यामरोगिता । द्वादश्याञ्च न गन्तव्यं सर्वसिद्धा त्रयोदशी ॥ चतुर्दश्यां पञ्चदश्यां गमनञ्च निषेधयेत् । संत्यजेद्दिवसे यात्रां सूर्य्यावार्कीन्दुवक्रिणाम् ॥ अष्टवर्गदशापाकेष्वनिष्टफलदस्य च । सूर्य्यदिनेऽध्वनि नाशश्चन्द्रे शक्तिच्चयोऽर्थहानिश्च । ज्वलनास्रक्पित्तरुजः कौजे बुधे सुहृत्प्राप्तिः । जैवे धनजयलब्धिः शौक्रे स्त्रीवस्त्रगन्धधनलाभान् ॥ दैन्यबधबन्धरोगान् प्राप्नोति दिनेऽर्कपुत्रस्य । उपचयग्रहदिने सिद्धिः क्रूरेऽपि यायिन्यां भवति ॥ सौम्येऽप्यनुपचयस्थे न भवति यात्रा शुभा यातुः । शुक्रादित्यदिने न वारुणदिशं न ज्ञे कुजे चोत्तरां मन्देन्द्वोश्च दिने न शक्रककुभं याम्यां गुरौ न व्रजेत् ॥ शूलानीति विलङ्घ्य यान्ति मनुजा ये सौख्यवित्ताशया भ्रष्टाशाः पुनरापतन्ति यदि ते शक्रेण तुल्या अपि । दिगीशाह्ने शुभा यात्रा पृष्ठाह्ने मरणं ध्रुवम्" ॥ गर्गोऽपि । "दिगीशवारे गमनं प्रशस्तं विहाय सौम्यं यदि जीविताशया ॥ न वारदोषाः प्रभवन्ति रात्रौ विशेषतोऽर्कावनिभूशनीनाम् । गुणवति तिथौ हृत्तेऽनिष्टे दिवागमनं हितम् । निशि च भगुणैः शस्तं यानं तिथिगुणवर्जिते" ॥ भतिथिगुणवर्जिते । "भतिथि कथितान् दोषान् प्राप्नोत्यतः प्रतिलोमगः ॥ गुणमपि तयोर्यस्मात् सम्यग्जगाद भृगुमुनिः । याम्यायने निशायात्रा शुभा स्यादुत्तरे दिवा ॥ चन्द्रसूर्य्यौ मृगादिस्थौ पूर्वां यायात्तथोत्तराम् । दक्षिणां पश्चिमामाशां कर्कादौ तौ स्थितौ यदा ॥ अन्यथा बधबन्धा-

दिक्शूलमाप्नोत्यसंशयम्" ॥ योगिनी तु। "प्रतिपन्नवमी पूर्वे रामारुद्राश्च पावके। शरत्रयोदशी याम्ये वेदामासाश्च नैर्ऋते ॥ षष्ठी चतुर्दशी पश्चात् वायव्यां मुनिपूर्णिमे। द्वितीया दशमी यक्षे ऐशान्यामष्टमी कुहूः ॥ योगिनी नवदण्डास्तु शेषा वर्ज्या विशेषतः। दक्षसंमुखयोगिन्यां गमनं नैव कारयेत्। वामे शुभकरी देवी पृष्ठे सर्वार्थसाधनी" ॥ राहुभ्रमणचक्रम्। "पश्चादर्के विधौ वह्नौ सौम्यां ज्ञे वायवे कुजे। रक्षो दिशि भृगौ याम्यां गुरावीशे शनौ दिने ॥ राहुर्भ्रमति यामार्द्धदक्षगत्या च वामतः। प्रतीच्यां वह्निकोणे तु ततः सौम्यामतो नृपे ॥ ततो प्राच्यामतो वायौ तस्माद् याम्यां ततः शिवे। रवावेवमन्यवारेषूह्यमेवं क्रमेण हि ॥ द्यूते युद्धे विवादे च यात्रायां संमुखस्थितम्। राहुं विवर्जयेत् यत्नाद् यदीच्छेत् कर्मणः फलम्" ॥ राहुसांमुख्यनिषेधः। "अश्विहस्तगुरुमैत्रदेवतैः पौष्णविष्णुवसुशीतरश्मिभिः। यानमेभिरतिसुन्दरं विदुः सर्व एव मुनयस्तु नेतरैः ॥ चित्राश्लेषास्वाति विशाखा भरणी पित्र्यशक्रत्तिकाः। नातिशुभदा प्रयाणे शेषाणि शुभाशुभानि धिष्ण्यानि ॥ दग्धं शत्रुपुरं सदग्निभमुदेत्यर्को न चेदुत्तरे रोहिण्याञ्च विशाखभे च न गमः पूर्वाह्लकाले शुभः। मध्याह्ने न शिवाहिमूलवलभिद्वह्निश्वेषेऽश्विनीहस्तापुष्यमरुत्सुचित्रशशिमैत्रान्त्ये न रात्र्यादितः। रात्रेर्मध्यमसत्तु पूर्वभरणी पित्र्येषु शेषे निशी ह्यर्यादितित्रयादितिष्वपि जलं मध्याह्नरात्र्यन्त्ययोः। पुष्याहस्तमृगाच्युतेषु शुभदाः सर्वेऽपि कालास्तथा सार्वद्वारिकसंज्ञितानि गुरुभं हस्ताश्विमैत्राणि च। पूर्वार्द्धाग्निमघानुराधवसुभादीन्यत्र दण्डोऽन्तरे वायुग्न्योर्न स लङ्घ ऐक्यमनलप्राच्योस्तथान्याविदिक्। लग्ने दिग्वदनेऽतिदण्डगमनं प्राच्यादि शूलं विना

तेज्जोऽष्टाजपदं सरोजनिलयः स्यादुत्तराफल्गुनी"। प्रतिदण्ड-गमनं दण्डमुल्लङ्घ्य गमनम्। "दिशोरष्टमभागश्च विदिक्कोणश्च कथ्यते। मेषाद्यास्त्रिभ्रमाज्ज्ञेयाः प्रागादि दिङ्मुखाः ग्रहाः। शीर्षोदये समभिवाञ्छितकार्य्यसिद्धिः पृष्ठोदये विकलता चलचित्तता च। यातव्यदिङ्मुखगतस्य सुखेन सिद्धिर्वर्त्मभ्रमो भवति दिक्प्रतिलोमलग्ने। केचिदाहुर्न यायात्तु स्मृत्यां प्राच्यान्तु दक्षिणे। अश्विन्यां पश्चिमे पुष्ये नोदीच्यां हस्तभे न तु। गुरुहस्ताश्विमैत्राणि सर्वदिक्षु शुभं युजि। अतो दिग्भेददोषोऽत्र वराहादेरसम्मतः"। नैशाजाग्निविशाखवायव्यहिमघायाम्यैः पराद्धं न सच्चित्राश्लान्तकजं परप्रथमजं पित्र्यानिले चाखिले। राहुक्रूरयुगस्तसन्निधितथोत्पातप्रदुष्टं ग्रहैर्द्वाद्यैर्युग्मसहिते निशि तिथावृत्तेऽप्यनिष्टे गमः। "ऋक्षे ह्याद्यैः संयुतेऽन्तः प्रकोपो लक्ष्मीभ्रंशो राहुणार्केण योगः। केतूल्कानां पीड़िते देहनाशः क्रूरी भौमे सोष्णरश्म्यात्मजे च। उपग्रहाख्य ऋक्षेषु वर्जयेद्गमनं नृपः। उपग्रहगतस्त्रीयजन्मर्क्षे न व्रजेत् क्वचित्"। उपग्रहाश्च सर्वतो भद्रचक्रे प्रागुक्ताः। "पूर्वोक्तजन्मकर्मादि नाड़ीनक्षत्रदोषवान्। याता शत्रुवशं याति विशुद्धो शत्रुनाशकृत्। यात्रायां शोभनास्ताराः समाः कर्मान्त्यसंयुताः। यात्राभङ्गविधावसत्यथ भवेत् सोऽर्कात्रिकोणे विधौ। भौमाज्ज्ञादिषु वा बलिन्यथ सुते गन्तव्यदिक्पालतः"। सुते इत्यत्र शुभे इत्यपपाठः। "यात्रादिग्गोशात्-यदि पञ्चमेऽन्यो गृहे ग्रहो वीर्य्ययुतोऽवतिष्ठेत्। यात्रोद्यतस्तत्र न याति याता तयोर्बलीयान्नयति स्व काष्ठाम्" इत्यनेन विरोधात्। "सर्वं शुभफलं नश्येद् यात्राभङ्गे गतस्य च। व्यसनं प्राप्नोति महद्रतोपातविनिर्गतोऽथवा मृत्युम्। वैधृतिगमनेऽप्येवं वराहसर्गेऽप्युपदिशन्त्येके"। व्यसनान्याह मनुः। "काम-

जेषु प्रसक्तो हि व्यसनेषु महीपतिः। वियुज्यतेऽर्थधर्माभ्यां क्रोधजेष्वात्मनैव तु। मृगयाक्षो दिवास्वप्नः परीवादस्त्रियो मदः। तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः। पैशुन्यं साहसं द्रोह ईर्षासूयार्थदूषणम्। वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः"। तौर्य्यत्रिकं नृत्यगीतवाद्यानि त्रिणीति दश। पैशुन्यमविज्ञातपरदोषाविष्करणम्। साहसं साधोर्बन्धनादिना निग्रहः। द्रोहो जिघांसा। ईर्षा अन्यगुणासहिष्णुता। असूया परगुणेषु दोषाविष्करणम्। अर्थदूषणम् अर्थानामपहरणं देयानामदानञ्च। भौमपराक्रमे। "न विष्कुम्भो न वा गण्डो न व्यतीपातवैधृतौ। चन्द्रतारा बले प्राप्ते दोषागच्छन्त्यसंमुखाः। गरवणिजविष्टिविवर्जितानि करणानि यातुरिष्टानि। गरमपि कैश्चिन्नदितं वणिजस्तु वणिक्क्रियास्वेव। पूर्वाह्णे तूत्तरां गच्छेत् मध्याह्ने पूर्वतो व्रजेत्। अपराह्णे व्रजेत् याम्यां अर्द्धरात्रे च पश्चिमाम्। नवम्यङ्गारको विष्टिः शनैश्चरदिनं तथा। व्यतीपातो न दुष्येच्च यस्यार्को दक्षिणे स्थितः। राशौ राशौ द्वादशेन्दोरवस्थाः प्रोक्ताः कैश्चित् सूरिभिः प्रोषिताद्याः। यात्रोद्वाहाद्येषु कार्य्येषु नूनं संज्ञातुल्यं तत्फलं चिन्तनीयम्। प्रवासनष्टाख्य मृताजयाख्याहास्यारतिक्रीडितसुप्तभुक्ताः। ज्वराह्वया कम्पितमूर्च्छिते द्विषट्कसंख्या हिमगोरवस्थाः"। चन्द्रस्य द्वादशावस्थागणनमाह "अश्वरादिभुक्तोडुघटासमूहाहेदा ४ हताहाण समुद्र ४५। भुक्तात् लब्धार्कशेषे शशिनः क्रियाद्या भवन्त्यवस्था गतगम्यरूपाः। सपादाः शूलभृद्दण्डा एकावस्था भवेत्ततः। स्वलग्नहीनान्यगुणान्वितापि प्रीतिं न यात्रा मनसः करोति। स्वलङ्कृतारूपगुणान्वितापि प्रभ्रष्टशीला वनितेव पुंसः। मीने कर्किन्यलिनि च वृषे जन्मकालस्थपापे वामे वा दिग्द्युनिशा-

वलिनां जन्मलग्नाष्टमे वा। वर्गे पापानुपचयकृतां वक्रिणां पृष्ठलग्ने पापान्तःस्थे न शुभमवलं जन्मलग्नानधीने”। वामे विपरीते। “घटमिथुनकुलीराश्चापगो मीनकन्याः खलु शुभभवनत्वाद्राशयः सप्त सौम्याः। अलिधटमृगसिंहाजास्तु पापाश्रयत्वान्मुनिभिरभिहितास्ते प्रायशः क्रूरभावाः”। अन्यत्र। “लग्ने कार्मुकमेषतौलिमिथुने कार्य्यं विलग्ने नृणां पश्चास्थे मकरे तथा शनिगृहे तद्वत्फलं वृश्चिके। सिंहे वा यदि गोघटेषु गमनं सर्वार्थसिद्धिप्रदं स्यादाशापतिषु प्रयाति सकलं कन्याभषे मन्मथे”। तथा। “नेष्टं दिशन्ति मकराणि कुलीरलग्ने मेषे धटे धनुषि दीर्घकरी हि यात्रा। युग्माङ्गना झषवृषे ध्रुवमर्थलाभो ज्योतिर्विदः सकलसिद्धिमुपैति लक्ष्मीः”। यात्रायां सामान्यलग्नविवेकः “मीने च कुटिलो मार्गो भवति तदंशेऽन्यराशिलग्नेऽपि। नौयानमाप्यलग्ने कार्य्यं तेषां नवांशे वा”। दिगादि बलिनो यथा। “ऐन्द्र्यां मानुषराशयस्तु पशवो याम्ये सवीर्य्या अलिर्वारुण्यां बलयुक् तथैव बलिनः पानीयजश्चोत्तरे। सर्वे मानुषराशयो दिनबलाराात्रौ स वीर्य्याश्चतुष्पादाः शेषगणास्तथैव बलिनः सन्ध्याद्वये कीर्त्तिताः। स्वराशिलग्नाष्टमलग्नयोश्च स्वशत्रुभाच्छत्रुगृहोदये वा। तद्राशिगैर्वा गमनं विलग्ने तुल्यं नराणां विषभक्षणेन। उपचयकरस्य वर्गः क्रूरस्यापि प्रशस्यते लग्ने। चन्द्रे वाप्युक्तेन तु विपरीतस्य सौम्यस्य। याने भं जन्मराशेरुपचयमुदयारिविलाभश्च वेशिस्मितं वर्ज्यं स्वजन्मस्वतनुगृहयोर्यद्गृहैर्नोनिरंशम्। स्थानं सौम्यस्य जन्मन्यभिमतफलदस्यापि यत्र प्लवश्च याम्यां त्यक्ताभिजिद्धं शुभफलदखगेन्द्रोश्च या कालहोरा स्वाधिपतेर्दिशि राशिः प्लव इति यवनैः सदा कथितम्। तत् प्लवगो विनिहन्यादचिरेण महीपतिः शत्रून् सर्वद्वारः सर्वार्थसाधकः सर्व-

शमेषु तथेष्टः । सर्वेषां वर्णानामभिजित्संज्ञको मुहूर्त्तः स्यात् । अष्टमो दिवसार्द्धे त्वभिजित्संज्ञकः क्षणः । स ब्राह्मणो वराग्नित्वं सर्वकामफलप्रदः । चक्रमादाय गोविन्दः सर्वान्दोषान्वि-व्यन्तति । अभिजिच्च बुधे शस्तं याम्यान्तु गमने तथा । अन्य-दिग्गमने शस्तं सर्वसिद्धिप्रदायकम् । वारप्रवृत्ते घटिका द्विनिघ्नाः कालाख्यहोरा पतयः शरामाः । दिने निशाया मृत्युवाणवृत्त्या निजाह्ननाथां पतयः प्रकल्प्याः । रेखा पूर्वा-परयोर्वारः सूर्य्योदयात् परस्तात् प्राक् । देशान्तरयोजनमि-तविघटीभिः पादहीनाभिः । द्वादशाङ्गुलिकाच्छङ्कोः समरा-त्रिदिनार्द्धके । छायापादानुसारेण रेखा स्वदेशयोजनम् । सुमेर्वादिस्तु लङ्कान्ता भूमिरेखास्ति तद्गतः । रोहितकमवन्तौ च तथा सन्निहितं सरः । रेखादेशे लग्नभातामपास्य स्वदे-शजाम् । हत्वा षष्ट्या योजनानि स्वदेशान्तजानि वै । तत्काले तु नवद्वीपे दिग्बाङ्गुलशराङ्गनाः । तच्छोधनाद्भव-त्यत्र सर्विंशच्छतयोजनम् । तत्पादहीनतो दण्डाद्दश-विंशत्पलाधिका । वारप्रवर्त्तनं तस्मात् कालहोरा-विरेचनम् । दिनाधिपाद्यानिजषष्ठषष्ठाः सूर्य्यास्फुजिज्जेन्दु-शनीज्यभौमाः” ॥ कर्मान्तरे तु वारप्रवृत्तिरुदयावधिरेव तथा च सूर्य्यसिद्धान्तः । “सूतकादिपरिच्छेदो दिनमासाब्द-पास्तथा । मध्यमग्रहभुक्तिश्च सावनेन प्रकीर्त्तिता । उदया-दोदयं भानोर्भौमसावनवासराः” ॥ भौमेति पितृदेवदिन-व्यावृत्त्यर्थम् । अत्र दिनाधिपस्य रव्यादेर्भोग्यं दिनं वाररूपं सावनगणनोक्तं लोकव्यवहारोऽपि तथेति । “तिर्य्यगधः ऊर्द्ध-वदना होराः स्युः सूर्य्ययोगतः क्रमशः । वाञ्छितफलदोर्द्ध-मुखी हे शेषे चाशुभे यातुः” ॥ यात्रायां होराफलम् । “सद्ग्रहस्य च द्रेक्काणे रत्नभाण्डान्वितेऽपि वा । फलपुष्पयुते यायाच्छुभ-

ग्रहविलोकिते॥ रत्नभाण्डान्वितौ ज्ञेयौ धनुर्मध्यतुलादिमौ द्रेक्काणाः कर्कटाद्यश्च फलपुष्पयुतः स्मृतः॥ नवभागे १ तिग्मांशोर्वाहननाशो विलग्नसंग्रामे। कृच्छ्रात् खगङ्गमः प्रभावसृदुता चन्द्रांशे॥ कौजेऽग्निभयं बौधे मित्रप्राप्तिर्धना गमो जैवे। भोगविवृद्धिश्च शौक्रे भृत्यविनाशो रविसुतांशे॥ यत् प्रोक्तं राश्युदये द्वादशभागेऽपि तत् फलं वाच्यम्"॥ यच्च नवांशकविहितं तत्त्रिंशांशोदयेऽपि स्यात्। "पापः क्षीणो विधुरविदिनं यस्य जन्मर्क्षपीडा होरा जन्माष्टमगृहपतिर्जन्मभं प्रत्यनिष्टः। नीचस्थास्तं गतपरजिता लग्नजन्मेशशत्रुर्लग्ने नेष्टाः खचररहितं वक्रियुक्तञ्च केन्द्रम्"॥ यात्रायां लग्नस्थ-ग्रहनिर्णयः। शून्यकेन्द्रवक्रियुक्तकेन्द्रनिशेषिधश्च। होरालग्नम्। तथा च होराराश्यर्द्धलग्नयोः। विशाखानलतोयानि वैष्णवं भगदैवतम्। पुष्यः पौष्णं यमः सर्पो जन्मर्क्षाण्यकंतः क्रमात्"। अस्तं गतादित्यमाह। "दिवसकरेणास्तमयः समागमश्च शीत-रश्मिसहितानां कुसुतादीनां युद्धं निगद्यतेऽन्योन्ययुक्तानाम्। रश्मिर्लोहितः श्यामः पुरुषः सूक्ष्मतारकः। अपसव्यकृतो यश्च दक्षिणस्थः पराजितः। उदङ्मार्गगतिः स्निग्धो विमलो विमलप्रभः॥ वृहद्रूपोऽतिशुक्लश्च विजयी कथितो ग्रहः। विपुलः स्निग्धो द्युतिमान् दक्षिणदिक्स्थोऽपि जययुक्तः सर्वे जयिन उदक्संस्था दक्षिणदिक्स्थो जयी शुक्रः। ग्रहस्य यो यस्य हतस्य वश्याः पीडां समृच्छन्ति त एव तस्य। संग्राम-वीर्य्यस्य जये समृद्धा जयन्ति सर्वत्र मतं मुनीनाम्। क्रूरोऽप्य-नुकूलस्थः शस्तोलग्नेऽशुभोऽपि नानिष्टः। केन्द्रत्रिकोणेषु शुभाः प्रशस्तास्तेष्वेव पापा न शुभप्रदाः स्युः। पापोऽपि कामं बलवान्नियोज्यः केन्द्रेषु शून्येषु शिवा न यात्रा। स्थानेऽर्कः स्वस्य सूनोरुदयमुपगतः शस्त इन्दुः स्वकीये भौमः सौरे बुधा-

देऽथ शनिसितान्यस्य जीवोऽथ शुक्रः । सौम्यः स्वस्थानसंस्थः शनिरपि तरणे रच्चकाजन्मकाले ॥ तालः स्यात् कारको वा सुहृदपि शुभकृल्लग्नजन्मेशयोर्यः" ॥ यात्रायां लग्नस्थग्रहापवादः । तालानाह । "जन्मसमये शशाङ्काद्ये ह्युपचयस्थिताः ग्रहाः केचित् । ते सर्गे तालाख्याः क्रूराः सौम्याश्च संचिन्त्याः ॥ लालाटिनि दिगधोशे दिग्वलिविहगे ललाटगे वापि । प्रतिभृगुजे प्रतिशशिजे कालाशुद्धौ संत्यजेद् यात्राम् ॥ यात्राईलग्नं पूर्वस्यां तत्क्रमेण च खेचरान् । न्यस्य यात्राहंदिक्स्थित्या पुरः खेटान् विलोकयेत्" ॥ एतत् स्पष्टं क्रमेण यथा । "लग्नेऽर्के व्ययलाभयोर्भृगुसुते कर्मस्थिते भूमिजे राहौ धर्मविनाशयो रविसुते द्यूनेऽरिमूर्त्त्योर्विधौ । बन्धौ चन्द्रे सहजार्थयोः सुरगुरोरेवं ललाटोद्भवे योगे दिक्पतिभिः कृते चयभुजः प्रागादिकाष्ठां गताः । लग्ने सौम्यगुरूप्राच्यां याम्यां खे कुजभास्करौ ॥ पश्चिमेऽस्ते तथा सौरिं सौम्यां बन्धौ विधुं सितम् । एवं दिग्वलिनो याने त्यजेद् यत्नाल्ललाटगान् ॥ लग्ने व्यया ये दशमेऽष्टधर्मे द्यूनेऽरि मूर्त्तौर्हिवुके त्रिवित्ते । प्रतीपगा येषु सितेन्दुपुत्रौ प्राच्यादिकाष्ठासु न यातु रिष्टौ ॥ नीचगे ग्रहजिते प्रतिलोमे भार्गवे कलुषितेऽस्तगे वा । प्रस्थितो नरपतिः प्रबलो वा क्षिप्रमेव वशमेति रिपूणाम् ॥ एवंविधेऽपि शुक्रे यायाद् यदि चन्द्रजोऽनुकूलस्थः । प्रतिबुधयातस्य न परित्राणे ग्रहाः शस्ताः" ॥ राजमार्त्तण्डे । "सौम्यां लग्नगते बुधे शिवदिशं वाचस्पतावम्बरे प्राचीं तोयाकरे कुजे च दशमे याम्यां प्रयातो नरः । आग्नेयीं भृगुजे च शीतकिरणे बन्धुस्थिते वायवीं मन्दे सप्तमगे पश्चिमदिशं याति द्विषां वश्यताम् । नाशौचसूतकोत्सवदिवसाश्च यियासतां शुभदाः । उद्वेगस्तपने सुखं शशधरे रोगो महीनन्दने लाभश्चन्द्रसुते गुरौ च कथितः

शुक्रे चलत्वं ध्रुवम्। मन्दं मन्दगतेर्गतागतविधौ ज्ञेया सदा पण्डितैरात्रौ पञ्चभिरङ्कि षड्भिरुदिता यात्राद्वयामात्मिका"॥ दैवज्ञमनोहरे। "वृषादौ चन्द्रमा ज्ञेयो मेषादौ लग्नमेव हि। परियोज्य समं मिथ्या त्रिभिर्भागं हरेत्ततः॥ शून्ये मृत्युर्द्वये हानिरेकाङ्के विजयी भवेत्"॥ इत्येकाङ्गौ। भीमपराक्रमे। "दिनं तिथिं वारयुक्तं खनक्षत्राङ्कयोजितम्। सप्तभिश्च हरेद्भागं शेषे यात्रां विनिर्दिशेत्॥ प्रथमे शोभना यात्रा द्वितीये लाभकृद्भवेत्। तृतीये वित्तलाभः स्याच्चतुर्थे सिद्धिरुत्तमा॥ पञ्चमे मार्गविघ्नः स्यात् षष्ठे निधनमेव च। उक्तं प्रत्ययमुनिना शून्ये श्रीः सर्वतस्सुखी॥ अतिबलिनोन्दौ सुखगे गमनं यत्नाद्विवर्जयेत्सम्नात्। सप्तादष्ट न यायाच्चि-विधोत्पातेष्वनिष्टेषु"॥ वराहः। "देहः कोषो योऽधो वाह्यं मन्त्रः शत्रुर्मार्गोऽथायुः। कर्मप्राप्तिर्मन्त्रो यात्रालग्नाद्भावा-श्चिन्त्याः॥ चिलाभवर्जं रविसौरिभौमा विघ्नन्ति नो कर्मणि सूर्य्यभौमौ। पुष्णन्ति सौम्याः परिहाय षष्ठमस्तं भृगुर्मृत्यु-विलग्नमिन्दुः॥ केन्द्रकोणार्थगो नेष्टः क्षीणः पूर्णः शुभः शशी। सदैवत्र्यायगः शस्तो न शस्तोऽन्यारिरन्ध्रगः॥ आदित्येन्दु-महीजराहुरविजैः संप्रस्थितो लग्नगैः क्षुत्तृष्णा विषमव्यथामनु-भवेद्रोगांश्च नानाविधान्। जीवः सोमसुतस्तथैव भृगुजो यात्रोदयस्थो यदा सा यात्रा धनभोगपुत्रसुखदा पुण्यैः कृतै-र्लभ्यते। कोषस्थाने नराणामसुरगुरुबुधे धर्मकामार्थलाभो वस्त्रोत्पत्तिश्च जीवे हृदि सुखमतुलं शत्रुपक्षक्षयश्च। पङ्कु-बन्धं सुदीर्घं क्षितिसुतसहितः कोषहानिश्च भानुश्चन्द्रः कुर्य्यात् प्रयाणे प्रियजनसहितं राहुरुत्पातमुग्रम्" ॥ २ ॥ "प्रस्थाने भूमिपस्य क्षितिसुतरविजौ भानुना संप्रयुक्तौ शुक्रश्चन्द्रात्मजो वा सुरगुरुरथवा शीतरश्मिर्यदा वा। भ्रातृस्थाने स्थिताः

सुर्नरपतिगमने सर्वकामार्थसिद्धिं जित्वा शत्रूनशेषान् परिचरति रणे गोकुले पुङ्गवाभः" ॥ ३ ॥ "बन्धुस्थानगतो ददाति विपुलं भोगं गुरुर्भार्गवः शत्रूणां क्षयमीहते नरपतेः सौख्यं तथा चन्द्रजः। हानिं कोषगतां करोति रविजः स्नेहक्षयं चन्द्रमा राहुर्भूमिसुतस्तथोष्णकिरणः कुर्वन्ति दुःखं महत्"॥४॥ "जीवः पुत्रार्थलाभं जनयति भृगुजः सम्पदं स्थानलाभं प्रीतिं चैवोपपत्तिं कुमुदवनसुहृत् सूनुरर्थं प्रदत्ते। सूर्य्यश्चन्द्रोऽथ भौमो दिनकरतनयः सिंहिकासूनुयुक्तः। सर्वे ते पञ्चमस्थाः स्वसुतभयकराः पार्थिवानां भवन्ति" ॥ ५ ॥ "षष्ठस्थाने स्थिताश्चेद्दिनकरतनयो भूमिपुत्रस्तथार्कः शीतांशुर्दैत्यमन्त्री रजनिकरसुतः सैंहिकेयोऽथ जीवः। कुर्वन्त्येतेऽर्थलाभं यदपि हृदि गतं सिध्यते तच्च कार्य्यं यत्रैषा पार्थिवानां परबलमथनौ सर्वकामार्थदात्री" ॥ ६ ॥ "नेष्टाः शुक्रदिवाकरार्कतनया राहुस्तथा भूमिजः क्षिप्रं शत्रुवशं नयन्ति पुरुषं स्थाने स्थिताः सप्तमे। सौम्यो मित्रसमागमं सुरगुरुः कार्य्यार्थसिद्धिं नृणाम्। चन्द्रः श्रेष्ठफलं ददाति नियतं यात्रोद्गमे भूभुजाम्" ॥ ७ ॥ "सूर्य्यो मृत्युं विधत्ते हिमरुचिरथवा शोकमुग्रं प्रदत्ते भौमो रोगञ्च बन्धं रजनिकरसुतो भव्यदः क्लेशकश्च। मृत्युं जीवोऽष्टमस्थः खलु दनुजगुरुः सूर्य्यपुत्रश्च कुर्य्यादग्ने शस्त्राद्विषाद्वा बधमिह नियतं शस्त्रघातञ्च राहुः" ॥ ८ ॥ "शुक्रोऽतिसौख्यं नवमो बुधस्तु जीवोऽपि संरक्षयति प्रयातम्। चन्द्रार्कसौराः सह भूमिजेन कुर्वन्ति रोगान् सुबहून्नराणाम्" ॥ ९ ॥ "कर्मस्थाने स्थितोऽर्कः प्रचुरधनकरः पुष्टिदः शीतरश्मिर्जीवः संग्रामकाले भवति विजयदः सौम्यशुक्रौ तथार्थम्। नित्यं यात्रोद्यतानां भवति विजयदः सर्वकार्य्येषु भौमो राहुर्वैकृत्यमुग्रं जनयति सरुजं दीर्घवासित्वमार्किः" ॥ १० ॥ "भृगुसुतबुधजीवैश्चन्द्रसूर्य्या-

किंभौमैर्व्रजति यदि नरेन्द्रः चिप्रमेकादशस्थैः। स जयति रिपुदर्पं स्वेच्छया वैरिशङ्को विचरति गृहमध्ये सिंहपोतो यथैकः" ॥ ११ ॥ "रविसुतरुधिरार्कां बुद्धिमोहं नराणां विदधति कुमुदेष्टः स्वेषु भेदेषु भेदम्। स जयति रिपुदर्पं भृत्यहीनोऽप्यवश्यं यदि बुधगुरुशुक्रा द्वादशस्था भवन्ति" ॥ १२ ॥ "तिथ्यादिषु निषिद्धेषु चन्द्रताराविलोमतः। उषां गोधूलियोगं वा स्वीकृत्य गमनं भवेत् ॥ प्राच्यामुषां प्रतीच्याञ्च गोधूलिं वर्जयेन्नृपः। दक्षिणे चाभिजिच्चैवमुत्तरे च निशां तथा" ॥ व्यासः। "लग्नशुद्धिर्यदा नास्ति प्राप्तकालोऽतिवर्त्तते। अविशेषेण वर्णानां तदा गोधूलिरिष्यते ॥ आरक्तसन्ध्यं रजनीविरामं वदन्त्युषायोगमिह प्रवीणाः। आहुः प्रयातैः सकलार्थसिद्धिं संलक्ष्यते हस्ततलस्थितेव ॥ सन्ध्यातपारुणितपश्चिमदिग्विभावे व्योम्नि स्फुरद्विरलतारकसन्निवेशे। रुद्धे गवां खुरपुटोद्दलितैरजोभिर्गोधूलिरेष कथितो भृगुजेन योगः" ॥ सूर्य्यसिद्धान्ते। "अर्द्धास्तमयात् सन्ध्या व्यक्तीभूता न तारका यावत्। तेजः परिहानिरुषा भानोरर्द्धोदयं यावत्" ॥ एतद्वचनैकवाक्यतया सन्ध्योषयोः सन्ध्यागोधूल्योरैक्यम्। अतएवोक्तं "सन्ध्यामुहूर्त्तमाख्यातं ह्रासवृद्धौ समा स्मृता। लाभशत्रुसहजेषु यमारौ सौम्यशुक्रगुरवो बलयुक्ताः ॥ गच्छतो यदि ततोऽस्य धरित्री सागराम्बुवसना वशमेति" ॥ धरित्रीयोगः। "केन्द्रोपगतेन गुरुणा वीचिते व्ययायचतुर्थगे सिते। पापैरनवाष्टसप्तमगैर्वसुकिं न यदाप्नुयाद्गतः"॥ किंवसुयोगः। "शशिनि चतुर्थगृहं समुपेते बुधसहितेऽस्तगते भृगुपुत्रे। गमनमवाप्य पतिर्मनुजानां जयति रिपून् समरेण विनैव" ॥ विनासमरयोगः। "सितेन्दुजौ चतुर्थगौ निशाकरश्च सप्तमे। यदा तदा गतो नृपः प्रशास्त्यरीन् विना

रणात्" ॥ विनारणयोगः । "एकान्तरर्क्षे भृगुजात् कुजाद्वा सौम्यो स्थिते सूर्य्यसुताद्गुरोर्वा । प्रध्वस्यतेऽरिर्न चिराद्गतस्य वैशाधिको भृत्य इवेश्वरस्य" ॥ अरिप्रध्वंसयोगः । "गुरुरुदये रिपुराशिगतोऽर्को यदि निधनेन च शीतमयूखः । भवति गतोऽत्र शशीव नरेन्द्रो रिपुवनिताननतामरसानाम्" ॥ शशिनरेन्द्रयोगः । "लग्नारिकर्मंहिबुकेषु शुभे स्थिते च्चे द्यूनान्त्यलग्नरहितेष्वशुभग्रहेषु । यातुर्भयं न भवति प्रभवेत् समुद्रे यद्यश्मनापि किसुतारिसमागमेषु" ॥ शिलाप्रतरणयोगः । "मूर्त्तिवित्तसहजेषु संस्थिताः शुक्रचन्द्रसुततिग्मरश्मयः । यस्य यानसमये रणाग्रले तस्य यान्ति शलभा इवारयः" ॥ अरिशलभयोगः । "शुक्रवाक्पतिबुधैर्धनसंस्थैः सप्तमे शशिनि लग्नगतेऽर्के । निर्गतो नृपतिरेति कृतार्थो वैनतेयवदरीन् विनिहत्य" ॥ अरिवैनतेययोगः । "त्रिषष्ठवान्त्येष्वबलः शशाङ्कस्यान्द्रिर्बली यस्य गुरुश्च केन्द्रे । तस्यारियोषाभरणैः प्रियाणि प्रियाः प्रियाणां जनयन्ति सैन्ये" ॥ अरियोषाभरणयोगः । "वर्गोत्तमगते चन्द्रे लग्ने वा चन्द्रवर्जिते । चतुराद्यैर्ग्रहैर्दृष्टे नृपाद्वा विंशतिः स्मृताः" ॥ राजयोगः । "मेषादिद्वादशराशीनां स्वीयनवांशस्थे लग्ने चन्द्रे च यत्र कुत्रापि स्थिते चन्द्रवर्जितैश्चतुरादिभिर्ग्रहैर्वीक्षिते" ॥ अयमर्थः । द्वादशराशिषु लग्नस्य द्वादश एव स्वीयनवांशास्तत्र कुम्भं वर्जयित्वा एकादशैव स्थिता एवं चन्द्रस्यापि वृश्चिकवर्जनात् एकादशैव स्थानानि स्युरिति द्वाविंशतिः कुम्भलग्ने दोषदर्शनात् त्यागः । यथा । "न कुम्भलग्ने शुभमाह सत्यो न भागभेदान् यवना वदन्ति । वृश्चिकराशिश्चन्द्रस्य नीचगृहमिति चन्द्रपक्षे वृश्चिकवर्जनम् ॥ सर्वैर्गगनभ्रमणैर्दृष्टे लग्ने भवति महीपालः । बलिभिः शुभैः सर्वैर्विगतभयो दीर्घजीवी च" ॥ जातकोक्त-

राजयोगः। "जातकोक्तनृपयोगगतानां प्रतिदिनं राज्य-विवृद्धिः। वातघूर्णितमिवार्णवयानं ग्रावत्वं बलमुपैति विनाशम्"॥ राजयोगयात्राफलम्। "लाभार्थलग्नेषु शुभो रविश्चेद् यस्यारसौरी सहजेऽरिभे च। तस्यार्थकोषः समुपैति वृद्धिं लोभो यथा प्रत्यहमर्थवृद्धग्रा"॥ अर्थवृद्धियोगः। "लग्ने गुरुर्बुधभृगू हिवुकात्मजस्थौ षष्ठौ कुजार्कतनयौ दिनकृत्तृतीयः। चन्द्रश्च यस्य दशमो भवति प्रयातुस्तस्याभिवाञ्छितफलाप्तिरलं नृपस्य"॥ फलाप्तियोगः। "गुरौ विलग्ने यदि वा शशाङ्के षष्ठे रवौ कर्मगतेऽपुत्रे। सितज्ञयोर्बन्धुसुतस्थयोश्च यात्राजनि-त्रीव सुखानि धत्ते"॥ यात्राजनित्रीयोगः। "एकेन वा बुधबृहस्पतिभार्गवाणां योगो भवेन्नवमपञ्चमकाष्टकेषु। द्वाभ्यां वदन्ति मुनयोऽप्यधियोगमेव योगाधियोगमपरे त्रिभिरुद्दि-शन्ति। योगेन ये नृपतयोऽरिपुरं प्रयान्ति क्षेमे गते गमन-मागमनञ्च। कुर्य्युः। क्षेमं यशो विजयमर्थमथाधियोगे योगाधियोगगमने न जयन्ति रिपूम्। एकस्मिन्नपि केन्द्रे यदि सौम्येन शस्तोऽस्ति यात्रायाम्। जन्मनि कर्मगणे वा न शुभं प्राहुराचार्य्याः त्रिकोणकेन्द्रेषु भवन्ति सौम्या दुश्चिक्यलाभारि-गृहेषु पापाः। यस्य प्रयाणे तमुपैति रागाद्विपक्षलक्ष्मीरभि-सारिकेव। महीभृतां योगवशात् फलोदयो द्विजन्मना-मृक्षगुणैस्तु जायते। शतन्तुरादेः शकुनप्रभावतो जनस्य शेषस्य मुहूर्त्तशक्तितः। मक्षिकाकचसिकतानुविद्धमन्नं दुर्गन्धं क्षयकद्दूरि यच्च दग्धम्। सुस्निग्धं शुचि रुचिरं मनोऽनुकूलं स्वाद्वन्नं बहुलतिजं विजयाय यानकाले। प्राणादिष्टतं तिलोदनं मत्स्यान् क्षीरमिति प्रदक्षिणम्। भाद्या नृपतिर्यथा दिशं नक्षत्राभिहितञ्च सिद्धये"॥ एवञ्च "यात्रायां वर्जयेत् क्षौरं विवादं क्षौरभोजनम्। अक्षैः क्रीडां दिवास्वप्नं दुर्नि-

मित्तं कुभोजनम्" ॥ भोजने चौरवर्जनम् उत्तरदिगितरपरम्। पूर्वादिप्राशनविधिः। भुजबलभीमः। "सर्पिस्तिलौदन-झषैः पयसा च भुक्त्वा पूर्वादिवारगरथाश्वनरैर्गतस्य। सोढुं प्रतापमरयो न नृपस्य शक्ता गन्धद्विपस्य शलभा इव दानगन्धम्। शुभाशुभानि सर्वाणि निमित्तानि स्युरेकतः। एकतस्तु मनो यातुस्तद्वि शुद्धं जयावहम्। रिक्तः कुम्भोऽनुकूलस्थः शस्तोऽम्भोऽर्थीयियासतः। चौर्य्यविद्या वणिज्यार्थमुद्यतानां विशेषतः। मेघाः शस्ता घनास्निग्धा गजवृंहितशब्दिताः। अनुलोमातड़िच्छस्ता शक्रचापस्तथैव च। अप्रशस्ते तथा ज्ञेये परिवेशप्रवर्षणे। जलजानि च पुष्पाणि देवदूर्वार्द्रगोमयम्। कृष्यतास्त्र यवाः शस्ताः शवारुदितवर्जिताः। अनुलोमो वृषो नर्दन् धन्या गौर्महिषस्तथा। गमनप्रतिषेधाय गावः प्रत्युरसिस्थिताः। प्रागुदीच्योः शिवाः शस्ताः शान्ताः सर्वत्र पूजिताः। धूमिताभिमुखी हन्ति स्वरदीप्तादिगीश्वरान्। मुक्तिप्राप्तिश्च सूर्य्याच्च फलं दिक्षु तथाविधम्। अङ्गारदीप्तधूमिन्यस्ताश्च शान्तास्ततो परा" ॥ दग्धादि दिङ्‌निर्णयः। "विध्ययंश्चाग्रतः पक्षौ धुन्वन् ध्वांक्षो भयङ्करः। प्रत्युरस्युपसर्पंस्तु संस्पृशंश्च भयङ्करः। ध्वांक्षः पार्श्वद्वयेनापि शस्तापाचानुलोमगः। वामे शवशिवा कुम्भा दक्षिणे गोमृगद्विजाः" ॥ दीपिकायाम्। "नृहयातपवारणेभशस्त्रध्वज देहानवसूनयन् जयाय। सभयो विचरन् विना निमित्तं न शुभः श्वाभिमुखो भवन् निखनगाम्। इन्द्रोमादितास्तस्ताः कलहामिषकाङ्क्षिणः। आपगान्तरितामत्तान् ग्राह्याः शकुनाः क्वचित्। क्रोशादूर्द्धं शकुनचरितं निष्फलं प्राहुरेके। तत्रानिष्टे प्रथमशकुने मानयेत् पञ्चवद्दा। प्राणायामान्नृपतिरशुभे षोड़शैव द्वितीये प्रत्यागच्छेत् स्वभवनमतो यद्यनिष्टस्तृतीयः" ॥ मत्स्य-

पुराणे "दृष्ट्वा निमित्तं प्रथममङ्गल्यविनाशनम्। केशवं पूजयेद्विद्वान् स्तवेन मधुसूदनम्। द्वितीये तु ततो दृष्टे प्रतीपे प्रविशेद् गृहम्। एहीति पुरतः शब्दः शस्यते न तु पृष्ठतः। गच्छेति पश्चाच्छुभदः पुरस्ताच्च विगर्हितः। उत्तानशय्यासनपादुकादि निष्ठुतिदुर्दर्शनमैथुनानि। नेष्टानि शब्दाश्च तथैव यातुरागच्छति स्वप्रविशस्थिराद्याः। विसर्जयति यद्येक एकश्च प्रतिषेधति। सविरोधोऽशुभायातुर्ग्राह्यो वा बलवत्तरः। अनुलोमगते प्रदक्षिणसुरभौ देहसुखेऽनिले गतः। तिमिरालिगभस्तिमालिरप्रसभं हन्ति बलानि विद्विषाम्। ध्वजातपत्राम्बुधसन्निपातक्षितौ प्रयाणे यदि मानवानाम्। उत्तिष्ठतो वाऽसुरमिति सङ्ग यातोऽथवा तन्नृपतेः क्षयाय। पौषादि चतुरो मासान् वृष्टिं दृष्ट्वा न संव्रजेत्। यस्तु संप्रस्थितो यात्रां ब्राह्मणानुपमन्यते। स्वकीयां परकीयां वा स्त्रियं पुरुषमेव च। ताड़यित्वा तु यो गच्छेत्तदन्तं तस्य जीवितम्। यात्राकाले तु संप्राप्ते मैथुनं यो निसेवते। रोगार्त्तः क्षीणकायश्च स निवर्त्तेत वा न वा। स्नात्वा तु मैथुनं रात्रौ प्रभाते यः प्रतिष्ठते। नासौ प्रतिनिवर्त्तेत दुःखञ्च प्राप्नुयान्नरः। कटुतैलगुड़क्षीरपक्वमांसाशनन्तथा। भुक्त्वा यो यात्यसौ मोहाद्वराधितः स निवर्त्तते"। वराहपुराणे। "तृणोदकाढ्येषु वनेषु मत्ताः क्रीड़न्तु गावः स वृषाः स वत्साः। क्षीरं प्रमुञ्चन्तु सुखं स्वपन्तु शीतातपव्याधिभयैर्वियुक्ताः। इमं मन्त्रं विशुद्धात्मा जपेन्नित्यं समाहितः। गच्छन् तिष्ठन् स्वपन् जिघ्रन् भुञ्जन् क्रीड़न् समुत्सृजन्। महाभयेषु सर्वेषु विषमेषु समेषु च। प्रयाणकाले च तथा श्रोतव्यमभयप्रदम्"। मत्स्यसूक्ते "बलिकर्मणि यात्रायां प्रवेशे नववेश्मनः। महोत्सवे च माङ्गल्ये तत्र स्त्रीणां ध्वनिः शुभः"। ध्वनिरुलुध्वनिः। दीपिकायाम्। "सिद्धा-

त्मकादर्शपयोऽञ्जनानि वह्निकपश्वामिषपूर्णकुम्भाः। उष्णीष भृङ्गारनृवर्द्धमानपुंयानवीणातपवारणानि"। भृङ्गारः कनकालुका। "दधिमधुघृतरोचनाकुमार्य्योध्वजकनकाम्बुज तत्र पीठशङ्खाः। सितवृषकुसुमायुधालिमीनद्विजगणिकासुजनाश्च चारुवेशाः। ज्वलितशिखिफलाक्षतेक्षुभक्ष्यद्विरदमृदङ्गाङ्कुशचामरायुधानि। मरकतकुरुविन्दपद्मरागस्फटिकमणिप्रमुखाश्च रत्नभेदाः। स्वयमथ रचितान्य यत्नतो वा यदि कथितानि भवन्ति मङ्गलानि। स जयति सकलां ततो धरित्रीं ग्रहणश्रुगान्नभनश्रुतेरुपास्य निर्गतस्य तु द्वाराद्येः" शिरसश्चाभिघातनम्। "छत्रध्वजादि वस्त्राणां पतनञ्च तथाशुभम्। करीशगर्भिणी वापि भग्नभाण्डावलोकनम्। कार्पासौषधकष्टधान्यलवणक्लीवास्थितैलं वसापङ्काङ्गारगुड़ादिचर्मसक्तः क्लीशायः सव्याधिताः। वान्तोन्मत्तजटोन्धनं तृणतुषक्षुत्क्षामतक्रावयो मुण्डाद्यक्तविमुक्तकेशपतिताः काषायिणश्चाशुभाः। कुटुम्बकलहा गृहज्वलनमार्त्तवं योषिताम्। विड़ालसमरं क्षुतं स्खलितमम्बरादेस्तथा। दुरुक्तमतिकोपिता मद्विषयोश्च युद्धं भवेत्। प्रयाणसमये नृणामभिमतार्थविच्छित्तये"॥ यान्यत्र मङ्गलामङ्गलानि निर्गच्छतां प्रदिष्टानि। स्वप्नेऽपि तानि शुभाशुभानि विड़्लेपनं पुनर्धन्यम्। एकस्यां यदि चेद्रात्रौ शुभं वा यदि वाशुभम्"। तथा च मत्स्यपुराणे पुरूरवसा कृतम्। "कृतकृत्यो यथा कामं पूजयित्वा जनार्दनम्। स्वप्नन्तु देवदेवस्य न्यवेदयत धार्मिकः" इति। दुःस्वप्नाकथनं धन्यं पुनः प्रस्वापनन्तथा। प्रातःस्नानं तिलैर्होमो ब्राह्मणानाञ्च भोजनम्। स्तुतिश्च वासुदेवस्य तथा तस्य च पूजनम्। चक्षुस्पन्दं भुजस्पन्दं तथा दुःस्वप्नदर्शनम्। शकुनाञ्च समुत्थानमश्वत्थ शमयाशु मे। अश्वत्थरूपो भगवान् प्रीयतां मे

जनार्दनः। मन्त्रेणानेन चाश्वत्थं प्रार्थयेद्दोषसूचने। चिन्ता-दुष्टेन शोकेन व्याधिग्रस्तेन वा पुनः। कामशुष्केण चित्तेन स्वप्ने न फलभाग्भवेत्। अविज्ञातस्वरूपाणां नराणां ज्ञान-हेतवे। स्वप्ने दृष्टानि वक्ष्यामि पुण्यपापोद्भवानि च"। एव-मेषां सूचकत्वं न कारकत्वम् "आदित्यमण्डलं स्वप्ने चन्द्रं वा यदि पश्यति। व्याधिभ्यो मुच्यते रोगी अरोगी सुखमाप्नुयात्। दीपमन्नं फलं वस्त्रं कन्यारत्नं रथध्वजम्। यस्तु पश्यति स्वप्नान्ते लभते चोत्तमां श्रियम्। उपानहौ च छत्रञ्च लब्ध्वा यः प्रति-बध्यते। असिं वा निर्मलं तीक्ष्णमध्वानं तस्य निर्दिशेत्। देवताश्च द्विजा गावः पितरो लिङ्गिनः स्त्रियः। यद्वदन्ति नरं स्वप्ने तत्तथैव भविष्यति। आरोहणं गोहयकुञ्जराणां प्रासादशैलाग्रव-नस्पतीनाम्। आरुह्य नौकां प्रतिगृह्य वीणां भुक्त्वा रुदित्वा धन-मर्थलाभः। भक्षणञ्चार्द्रमांसस्य मत्स्यस्य पायसस्य च। दर्शनं रुधिरस्यापि स्नानं वा रुधिरेण च। सुरारुधिरमद्यानां पानं क्षीरस्य शोभनम्। जीवतां भूमिपालानां सुहृदामपि दर्शनम्। उरगो वृश्चिकश्चैव जलौका दृश्यते यदि। तदा पुत्रादि लाभः स्यादगम्यागमने शुभम्। सर्वाणि शुक्लानि सुशोभनानि कार्पा-सभस्मास्थिकपालवर्जम्। सर्वाणि कृष्णानि विनिन्दितानि गोहस्तिदेवद्विजवाजिवर्जम्। मरणं बन्धनं धन्यं वह्निदाहो गृहादिषु। शुक्लपीताम्बरा नारी शुक्लपीतानुलेपना। अव-गूहति यं स्वप्ने तस्य स्यात् सर्वतः सुखम्। कृष्णरक्ताम्बरा नारी रक्तकृष्णानुलेपना। अवगूहति यं स्वप्ने व्याधिं मृत्युञ्च निर्दिशेत्। वराहर्क्षखरोष्ट्राणामारोहो महिषस्य च। भक्षणं पक्षिमांसानां तैलस्य कृशरस्य च। नर्त्तनं हसनञ्चैव विवाहो गीतमेव च। तन्त्रीवाद्यविहीनानां वाद्यानामपि वादनम्। दिव्यान्तरीक्षभौमानामुत्पातानान्तु दर्शनम्। स्वप्ने पश्यति

चात्मानं रक्ताम्बरविभूषणम्। मलिनाम्बरधारित्वमभ्यङ्ग-चीरनग्नता। उत्सवाचरणं पातो दोलारोहश्च निन्दितः॥
इति स्वप्नफलम्।

"सर्वतः क्षुतमशोभनं स्मृतं गोक्षुतं मरणमेव करोति। केचिदाहुरफलं बलात् कृतं वृद्धपीनसितबालकृतञ्च॥ वित्तं ब्रह्मणि कार्य्यसिद्धिरतुलाशक्रे हुताशे भयं याम्यमग्निभयं सुरद्विषि कलिर्लाभः समुद्रालये। वायव्यां वरवस्त्रगन्धसलिलं दिव्याङ्गना चोत्तरे। ऐशान्यां मरणं ध्रुवं निगदितं दिग्लक्षणं खञ्जने। ज्येष्ठीकृते क्षुतेऽप्येवमूचुः केचिच्च कोविदाः॥"
विष्णुधर्मोत्तरे। विष्णोरित्यधिकृत्य "नाम संकीर्त्तनं नित्यं क्षुतः प्रस्खलितादिषु। वियोगं शीघ्रमाप्नोति सर्वात्मा नात्र संशयः"॥ अतएव विष्णुपुराणम्। "स्मृते सकलकल्याण-भाजनं यत्र जायते। पुरुषन्तमजं नित्यं व्रजामि शरणं हरिम्"॥ युद्धयात्रायाम्। "यत्र ऋक्षे स्थितो राहुर्वदनं तद्विनिर्दिशेत्। मुखात् पञ्चदशे ऋक्षे तस्य पृष्ठं प्रतिष्ठितम्। राहुभुक्तानि ऋक्षाणि जीवपक्षे त्रयोदश। त्रयोदशैरभो-ग्यानि मृतपक्षगतानि च॥ मृतपक्षे मुखं तस्य गुदं जीवार्द्ध-मध्यगम्। जीवपक्षे क्षपानाथे मृतपक्षे रवौ स्थिते॥ तदा रणे शुभा यात्रा विपरीते तु हानिदा। चन्द्रादित्यौ यदा युक्तौ जीवपक्षे व्यवस्थितौ॥ तत्र क्षेमं जयो लाभो यात्राकाले न संशयः। मृतपक्षे यदा काले संस्थितौ चन्द्रभास्करौ॥ तदा हानिर्भयो भङ्गो मृत्युर्यात्राफलं मतम्। जीवपक्षे स्थिते चन्द्रे कार्य्यः स्यादमृतोपमम्॥ मृतपक्षे मृतं ज्ञेयं यतश्चन्द्र-बलाबलम्। युद्धकाले यदा शीघ्रं यात्रायोगेन लभ्यते॥ उत्-पत्यौ तु तदा शीघ्रं तत्कालेन्दुदिवाकरौ। दृष्टा नाड्यो हृता धिष्ण्यैः षष्टिभागासशेषकैः॥ अश्विन्यादीन्दुभुक्तेन योगात्तत्काल-

चन्द्रमाः । यथा चन्द्रस्तथा सूर्य्यः कर्त्तव्यश्चेष्टकालिकः । अहो-रात्रस्य मध्ये तौ विभ्रान्तौ धिष्ण्यमण्डले ॥ सर्वेषु शुभकार्य्येषु यात्राकाले विशेषतः । दण्डेश्च पञ्चभीराशावेवं स्युर्द्वादश क्रमात् ॥ लग्नवद् भुक्तभाग्यस्य त्यागाच्छेषक्रमात् क्रमः" ॥ इष्टा नाड्यः कर्म्मकालीनदण्डसंख्या सूर्य्योदयावधि गतरात्रि-प्रविष्टनक्षत्रदण्डसंख्यावधि वा सप्तविंशत्या पूरिताः षष्ट्या यो लब्धः सोऽश्विन्यादिचन्द्रभुक्तहृत्या नक्षत्राङ्कयुक्तः सप्तविंशा धिकश्चेत्तमपहाय यत् संख्यानं तेन नक्षत्रं तत्र चन्द्रः । यः शेषस्तत्रोदयावधि कर्मकालीनदण्डसंख्याया गतरात्रिप्रविष्ट-नक्षत्रदण्डसंख्यायोगात् यो भवति तत्संख्यदण्डा भोग्याः । सूर्य्य-पक्षे सूर्य्यभुक्तनक्षत्राङ्कयुक्तो लब्धाङ्क इति विशेषः । "प्रवासः सुस्थता मृत्युर्हास्यं जायाज्वरोऽरतिः । नष्टता शून्यता क्रीड़ा सुप्तिर्भुक्तिश्च मेषतः । एताश्चेद्द्वादशावस्था शशाङ्कस्य दिने दिने । शुभाशुभेषु कार्य्येषु फलं नाम्यनुरूपतः" ॥ इति तत्-कालीनराहु तत्कालचन्द्रादित्यव्यवस्था च यात्रायां निर्दिष्टव्या। हरिवंशे "मरणं सहमानानां युद्धरतां विजयो ध्रुवम्" ॥ विदे-शगतभ्रात्रान्वेषणार्यं न गन्तव्यम् । यथा विष्णुपुराणम् । "ततःप्रभृति वै भ्राता भ्रातुरन्वेषणे द्विजः । प्रयातो नश्यति तथा तत्र कार्य्यं विजानता" ॥ ततः समस्तपृथिवीं द्रष्टुं गतानां हर्य्यश्वादीनां तदनुगामिनाञ्च तद्भ्रातॄणां सबलाश्वा-दीनाम् अनिवर्त्तनदर्शनात् । मत्स्यपुराणेऽपि । "ततःप्रभृति न भ्रातुः कनीयान् मार्गमिच्छति । अन्विष्य दुःखमाप्नोति तेन तत् परिवर्जयेत् ॥ तिथावरिक्ते शुभदे च चन्द्रे पापेषु केन्द्राष्टमवर्जितेषु । शाम्ये स्थिरे वा निजभे सुलग्ने गृहं विशेद्वा न निवृत्तभूपः । परविषयपुराप्तौ साधुदेवद्विजस्वं कुलजनवनिताश्च क्ष्माधिपो नोपरुन्ध्यात् । विहगतुरगशस्त्रा-

वार्त्तभौतांश्च हन्याच्छुभतिथिदिवसर्चे हृष्टसैन्यो विशेच्च । पुष्टैः शुक्रेन्दुजीवे ध्रुवलघुवलभिद्विष्णुमैत्रेन्दुपौष्णैः सल्लग्ने पापजन्मोदयपतिषु विरन्ध्रारिगेन्द्वारसौम्यैः । त्र्यायारिस्थे-रथाष्टव्ययग्टहरहितैः सद्ग्रहैः केन्द्रकोणे वीर्य्याढ्ये चत्रियांशे सुदिनतिथिशुभेन्दौ नृपस्याभिषेकः" ॥

अथ छत्रचक्रम् । "आदौ चक्रं समालिख्य छत्रत्रयं सुशोभनम् । अश्विन्यादिलिखेत्तत्र सप्तविंशतिभानि च ॥ अश्विन्याद्यं मघाद्यञ्च मूलाद्यञ्च क्रमेण तु । उत्तरे पूर्वदचे च एतच्छत्रत्रयं मतम् ॥ प्रतीचीमध्यरेखाग्रादेशान्यन्तं ह्याधिपः । आग्नेय्यन्तं नराधीशो नैर्ऋत्यन्तं गजाधिपः ॥ अश्वाध्यचो नराध्यचो गजाध्यक्षः क्रमेण तु । एषां छत्रविभागेन ज्ञातव्यञ्च शुभाशुभम् ॥ अन्येषां भूभृतामृचं यत्र छत्रे व्यवस्थितम् । तच्छत्रं तस्य भूपस्य शुभाशुभफलप्रदम् ॥ चामरं कलसी वीणा छत्रं दण्डः पतद्ग्रहः । आसनं कौलकं रज्जुर्नवभेदाः प्रकीर्त्तिताः ॥ यस्य छत्रे स्थितः सौरिः भङ्गं तस्य विनिर्दिशेत् । फलञ्च चामरादीनां प्रत्येकञ्च वदाम्यहम् ॥ चामरे चण्डता वायोरनावृष्टिस्तु जायते । दुर्भिचञ्च भवेद्घोरं प्रजापीड़ा न संशयः । कलसस्थे भवेद्युद्धं रणे भङ्गो महद्भयम् । घातपातादिकं सर्वं जायते नात्र संशयः । वीणासंस्थेऽर्कतनये पट्टराज्ञी विनश्यति । चलच्चित्तो भवेद्राजा भयभीता च मेदिनी । यदा ऋचत्रये सौरिश्छत्रे दण्डे पतद्ग्रहे । तदा तस्य भवेद्भङ्गश्छत्रस्यापि न संशयः । आसनस्थ भवेन्नाश आसनस्थे शनैश्चरे । युवराजचयः कौले बन्धनं रज्जुसंस्थिते । सौम्ययुक्तोऽतिचारस्थः शनिरुक्तफलो न हि । वक्रगः क्रूरयुक्तश्च सर्वक्रूरं करोति सः । शनिराहुकुजादित्या यदा जीवेन्दुसंयुताः । उत्तराधीशराज्ञो वै निश्चितं छत्रभङ्गदाः ।

क्रूरचतुष्टयश्चैव बुधचन्द्रेण संयुतम्। पूर्वच्छत्रविनाशाय सूचितं पूर्वसूरिभिः। एवं पापचतुष्कञ्च यदा शुक्रेन्दुसंयुतम्। दक्षिणाशापतेश्छत्रविनाशो भाषितो बुधैः। एवमन्येषु राज्येषु यत्र यस्य च सम्भवः। उक्तग्रहसमायोगाच्छत्रभङ्गं विनिर्दिशेत्। यथा दुष्टफलः सौरिस्तथा सौम्यफलो गुरुः। भौमज्ञौ गुरुराहू च रविचन्द्रौ बले समौ। यथा हानिकराः क्रूरास्तथा सौम्याः शुभङ्कराः। क्रूरयुक्तो बुधः क्रूरश्चन्द्रः पूर्णस्तथाशुभः। सौम्याः क्रूराः यदा छत्रे दृष्ट्या वै छत्रसंस्थिताः। छत्रभङ्गो भवेत्तस्य परचक्रागमेन च। नृपनामार्क्षगो राहुः केतुर्वा यदि संस्थितः। छत्रभङ्गो भवेत्तस्य विषदानेन भूपतेः॥ मृगयां साहसं यात्रां हस्त्यश्वगजवाहनम्। विग्रहञ्च त्यजेद्राजा छत्रस्थे क्रूरखेचरे॥ एवं ज्ञात्वा यदा राजा करोति ग्रहशान्तिकम्। यदुक्तं यामले तन्त्रे तेन शान्तो भवेन्नृपः"॥

अथ सिंहासनचक्रम्। "अथातः संप्रवक्ष्यामि चक्रं सिंहासनत्रयम्। सप्तविंशतिनक्षत्रैरेकैकञ्च नरात्मकम्॥ अश्विनीमघमूलाद्यं पञ्चनाड़ी विभेदतः। अश्विन्याद्युत्तरे भागे मघाद्यं पूर्वतः स्थितम्॥ मूलाद्यं दक्षिणे भागे ज्ञातव्यं नृपतित्रयम्। इतरेषु च वाद्येषु नृपनामर्क्षतो वदेत्॥ शुभाशुभमिदं सर्वं यत्र यस्य शनिः स्थितः। नाड़िकापञ्चवेधेन एकैकस्यासनं भवेत्॥ आधारमासनं पट्टं सिंहं सिंहासनन्तथा। ग्रहैर्वेधवशाज्ज्ञेयं सौम्यैः क्रूरैः शुभाशुभम्॥ ऋक्षे आधारगे राजा अभिषिक्तो यमासने। पराधीनगतं राज्यं कुरुते नात्र संशयः॥ आसनस्थेन ऋक्षेण नीतियुक्तो भवेन्नृपः। प्रधानपुरुषो देवः प्रजाशान्तिकरो भवेत्॥ पट्टऋक्षे यदा राजा उपविष्टो नृपासने। पूर्वराजस्थितैस्तुल्यश्चिरं पाल-

यते महोम्॥ सिंहरूपो भवेद्राजा सिंहचैंवासने स्थितः। संग्रामस्य प्रियो नित्यमसाध्यो मन्त्रिमण्डलैः॥ सिंहासनगते धिष्ण्ये तेजस्वी भोषणाकृतिः। चलच्चित्तो महाक्रोधी प्रजा-पोड़ाकरो नृपः॥ तत्कालेन्दुगते ऋक्षे क्रूरनिर्वेधनाड़िके। शुभावस्था शुभे लग्ने संस्थाप्यो नृप आसने॥ ईदृशे च समा-योगे उपविष्टो य आसने। उच्छाद्य शत्रुसंघातमेकच्छत्रं करोति सः॥ क्रूरग्रहगता नाड़ीमुपविष्टो य आसने। बन्धनं भूमिनाशश्च तथा मृत्युः प्रजायते॥ आधार ऋक्षगः सौरि-रनावृष्टिं करोति च। दुर्भिक्षं रौरवं तत्र प्रजापोड़ा च जायते॥ आसने च यदा सौरिर्युद्धे भङ्गप्रदा भवेत्। अथवा व्याधिपोड़ा च मनोदुःखं प्रजायते॥ पट्ट ऋक्षे यदा सौरिः पट्टराज्ञी विनश्यति। प्रियो वाथ कुमारो वा मन्त्रिबन्धु-क्षयोऽपि वा॥ सिंहे सिंहासने वापि यदा तिष्ठति सूर्य्यजः। तदा मृत्युर्न सन्देहो यदि शक्रसमो नृपः॥ शनिराहुर्कमा-हेया यदा चन्द्रेण संयुताः। यस्यासनगता एते तस्य राज्ञो भयङ्कराः॥ क्रूरयुक्तोऽथ वक्रस्तु क्रूरनाड़ीगतोऽपि वा। आसने चन्द्रयोगेन कालरूपी शनैश्चरः। एवं शुभफलं दद्या-द्देवमन्त्री न संशयः। करोति विपुलं राज्यं यस्यासनगतो गुरुः॥" इति वन्द्यघटीयहरिहरभट्टाचार्य्यात्मज-श्रीरघुनन्दन-भट्टाचार्य्यविरचितं ज्योतिस्तत्त्वं समाप्तम्।

---

# मलमासतत्त्वम्।

"प्रणम्य सच्चिदानन्दं परमात्मानमीश्वरम्। मुनीन्द्राणां स्मृतेस्तत्त्वं वक्ति श्रीरघुनन्दनः॥ मलिम्लुचे दायभागे संस्कारे शुद्धिनिर्णये। प्रायश्चित्ते विवाहे च तिथौ जन्माष्टमी-व्रते॥ दुर्गोत्सवे व्यवहृतावेकादश्यादिनिर्णये। तड़ागभवनो-त्सर्ग वृषोत्सर्गतत्त्वे व्रते॥ प्रतिष्ठायां परीक्षायां ज्योतिषे वास्तुयागके। दीक्षायामाह्निके कृत्ये क्षेत्रे श्रीपुरुषोत्तमे॥ सामश्राद्धे यजुःश्राद्धे शूद्रकृत्यविचारणे। इत्यष्टाविंशतिस्थाने तत्त्वं वक्ष्यामि यत्नतः॥ प्रणम्य भारतीकान्तमज्ञानध्वान्त-भास्करम्। सतां मुदे स्मृतेस्तत्त्वे तत्त्वं भाषे मलिम्लुचे॥ मासशब्दं तथोत्पत्तिवाक्यं दर्शादिकस्य च। प्रकृतौ विकृते-र्धर्मः पक्षादिकालनिर्णयः॥ चान्द्रसावननाक्षत्र सौराणाञ्च निरूपणम्। तथा कर्मविशेषेषु चान्द्रादिमासनिर्णयः॥ सिंहा-र्कादौ न यात्रा स्याद्दशाष्टौ व्यसनानि च। दैवस्य लक्षणं कर्मसिद्धये दैवपौरुषौ॥ कालश्च हेतवः कष्टौ रिपुरर्घ्यप्रदा-नकम्। अगस्त्यस्य मुनेर्वाच्यमुत्तरायणशुक्लयोः॥ चूड़ोप-नयनं सन्ध्याकालेऽतीतेऽपि सा भवेत्। सीमन्तोन्नयनं जाते-ऽप्युपनायोत्तरावधि॥ स्नाने च कार्त्तिकादेस्तु सौरचान्द्रवि-कल्पनम्। तदशक्तौ प्रतिनिधिर्माघस्नानविधिस्तथा॥ स्नान-तर्पणयोर्मध्ये प्रातःसन्ध्याकृतिस्तथा। पौर्णमास्यन्तमासेन मूलकानामभक्षणम्॥ सौरेण माघस्नानं नाक्षत्रस्य प्रयो-जनम्। चान्द्रसौरोक्तकार्य्याणां वाक्ये मासौ तथाविधौ॥ अन्यत्र मुख्यचान्द्रः स्याद्योल्लेखस्य साधकम्। मासशब्दस्य दर्शान्तशक्यत्वे साधकान्तरम्॥ तिथेर्लक्ष्म दिनत्वञ्च धर्म-

शास्त्रेण बाध्यता । अर्थशास्त्रस्य भोगानां विपुरुषत्वनिर्णयः ॥
त्रिंशत्तिथ्यात्मको मासो लग्नमानादिनिर्णयः । नाचक्रवत्स-
वैरायुर्न्ताह प्राक् तिथौ तथा ॥ षाण्मासिकाब्दिके श्राद्धे
चैत्रादेश्चान्द्रवाचिता । हेतुवन्न्यायचर्च्चात्र मेषादिराशिनिर्णयः ॥
शक्तिग्राहकमानञ्च चैत्रादेरब्दवाचिता । मघाज्यैष्ठौ विचारोऽत्र
संवत्सरनिरूपणम् ॥ लक्षणं मलमासस्य तद्युग्मस्यैकहायने ।
विचारः सावनाद्येन सङ्कवारप्रवर्त्तनम् ॥ क्षयमासा द्विमासत्वं
संक्षेपो मलमासके । दीक्षाकालविधानञ्च दीक्षा प्रतिप्रसूतिका ॥
शूद्रस्योङ्कारयुक्मन्त्रनिषेधश्च स्त्रिया अपि । सूतकेऽपि च
पूजादिरशौचे विष्णुकीर्त्तनम् ॥ अधिमासे विवाहादिनिषे-
धस्य निरूपणम् । सपिण्डीकरणश्राद्धात् सिद्धिः स्यादाब्दि-
कस्य च ॥ ग्रहदोःस्यफलस्यापि द्रव्यादौ पाकनिर्णयः ।
कार्ये शूद्राधिकारश्च प्रायश्चित्तं मलिम्लुचे ॥ दत्तनष्टस्वर्णदानं
गजच्छाया निरूपणम् । शूद्रस्यापि मघाश्राद्धमविभक्तैः
पृथक् क्रिया ॥ मघानिमित्तके श्राद्धे पुत्रौ पिण्डं विवर्जयेत् ।
अपिण्डकमघाश्राद्धात् पञ्चश्राद्धकृतं भवेत् ॥ पार्वणासन-
दानादौ ये चात्र त्वेति भाषणम् । पर्य्युदासो गयायान्तु काल-
दोषा प्रतीक्षणम् ॥ नवान्नश्राद्धकालश्च त्रिजन्मादिविवेचनम् ।
कालाशुद्धिविचारोऽत्र चातुर्मास्य व्रतं तथा ॥ ऋतुभेदात्तयो-
त्पाते दोषाभावविनिर्णयः । काम्यं कृष्णस्य तुष्ट्यर्थं प्रकर्त्तव्यं
मुमुक्षुणा ॥ महादानस्य गणना तथा तस्य च लक्षणम् ।
व्रतं यन्मलमासार्हं पितृपक्षमृतक्रिया ॥ अश्वयुक् कृष्णपक्षीय-
श्राद्धसम्यक् निरूपणम् । मलमासे त्वमावास्या प्रत्याब्दिकविवे-
चनम् ॥ सपिण्डनस्यापकर्षो गर्भहत्यादिहेतुकः । सन्न्यास-
प्रतिषेधश्च कलौ चक्षविप्रोभवेत् ॥ पुत्रेतरेण कर्त्तव्यमेकोद्दिष्टं
मृताहनि । न पार्वणं कदाचित्तु दर्शादिकमृतस्य च ॥ मल-

मासान्तरेऽपि स्यान्मलमासस्तताह्निकम् । निबन्धान् बहुधा-लोच्य निबध्यन्ते सतां मुदे" ॥

अथ मासशब्दम् । तत्र लघुहारीतः । "इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः । अग्नीषोमौ स्मृतो मध्ये समाप्तौ पितृसोमको" ॥ यत्र शुक्लप्रतिपदि । "तथाहि अमावास्यायाममावास्यया यजेत पौर्णमास्यां पौर्णमास्या यजेत" इति श्रुतिविहितदर्शपौर्णमासयागयोः कर्म्मस्वरूप-ज्ञापकश्रुतीश्च समामनन्ति यथा "आग्नेयाष्टाकपालोऽमावा-स्यायां पौर्णमास्याञ्चाच्युतो भवति उपांशुयाजमन्तरा यजति ताभ्यामेवाग्नीषोमीयमेकादशकपालं पौर्णमासे प्रायच्छत् ऐन्द्रं दध्यमावास्यायाम् ऐन्द्रं पयोऽमावास्यायामिति"। ताभ्याम् आग्नेयाष्टाकपालोपांशुयाजाभ्यां तेनाग्नेयाष्टाकपालोपांशु-याजाग्नीषोमीय एकादशकपालयागास्त्रयः पौर्णमास्याम् आग्नेयाष्टाकपालैन्द्र-दधि-पयो यागास्त्रयोऽमावास्यायामि-त्यर्थः । आसु श्रुतिषु अमावास्या पौर्णमासोपदानि प्रतिपत्-सहिततदुभयपराणि तत्र पूर्वयोर्यागारम्भः प्रतिपदोर्यागः तथा च "द्वे ह वै पौर्णमास्यौ द्वेऽमावास्ये तस्मात् प्रतिपद्युपवसन् यजेतापरेद्युः" । इति श्रुतिः अत्र पौर्णमास्यौ पौर्णमासौ प्रतिपदौ अमावास्येऽमावास्या प्रतिपदौ शातपथब्राह्मणेऽपि "पूर्वेद्युरग्निं गृह्णाति उत्तरमहर्यजतीति" । स्मृतयश्च यथा गोभिलः । "*पक्षान्ता उपवस्तव्याः पक्षादयोऽभियष्टव्याः*" । पारस्करः । "पक्षादिषु स्थालीपाकं श्रपयित्वा दर्शपौर्णमास-देवताभ्यो जुहोतीति" तथा कल्पसूत्रम् । "दर्शपौर्णमासाभ्यां मासं यजन्ते पक्षादौ यद्वविस्तत्सर्वंस्मिन्निति" । अस्यार्थः । यावज्जीवकयोर्दर्शपौर्णमासयोः प्रकृतीभूतयोर्विकृतीभूतौ मास-साध्यौ दर्शपौर्णमासौ कौण्डपायिनामयनीयौ पक्षादौ यष्टव्यौ ।

अत्र पञ्चादौ यद्यदविस्तत्सर्वं स्मिन्निति । नमासीत्यनेन विकृति-गतेन पञ्चादावित्यनेन प्रकृतीभूतयोरपि दर्शपौर्णमासयोः पञ्चादिकालत्वमवधारितम् । यथा ज्योतिष्टोमे । द्वादश-शतगोदक्षिणा विभागः षोड़शर्त्विजां तद्विकृतीभूते सत्रात्मके द्वादशाहसाध्ये शतेनार्द्धिनोदीक्षयन्तीत्यादिदर्शनेन निर्णी-यते । तत्र विभागं मनुरप्याह । "सर्वेषामर्द्धिनो मुख्या-स्तदर्द्धेनार्द्धिनोऽपरे । तृतीयिनस्तृतीयांशाश्चतुर्थांशैकपादिनः" । दक्षिणा गोशतविभागाय श्रौतकात्यायनोऽपि अथ द्वादशद्वाद-शाद्येभ्यः षट्षट्द्वितीयेभ्यश्चतस्रश्चतस्रस्तृतीयेभ्यस्तिस्रस्तिस्र इतरेभ्य इत्यत्र षोड़शानामृत्विजां चतुरश्चतुरः कृत्वा चत्वारो वर्गा इति तेन दर्शपौर्णमासयाजिना पञ्चादियाजिना च यत्र शुक्लप्रतिपदि इन्द्राग्नी हूयेते समासादिः मध्ये मासमध्ये कृष्णप्रतिपदि अग्नीषोमौ हूयेते इति कृत्वा स्मृतौ एवममा-वास्यायामपराह्णे पिण्डपितृयज्ञेनाचरन्तीति श्रुत्यङ्गपिण्ड-पितृयज्ञाङ्गाग्नीकरणहोमीयसोमाय पितृमते स्वाहेति मन्त्र-प्रकाश्यौ पितृसोमकौ समाप्तौ माससमाप्तौ अमावास्यायां हूयेते इति कृत्वा स्मृताविति अत्र विशेषतो मासादिमध्यान्त-कीर्त्तनात् शुक्लप्रतिपदि दर्शान्त एव मासशब्दस्याभिधेयतायां मुनेः स्वरसोऽवगम्यते सावनसौरादीनां गौणतायामपीति । अत्र "पर्वणो यस्तुरीयांश आद्याः प्रतिपदस्त्रयः । यागकालः स विज्ञेयः प्रातर्युक्तो मनीषिभिः" ॥ इति बौधायनवचनेन ऋग्वेदिनां यागकालतया बोधितोऽपि दर्शपौर्णमास्यंशोऽनि-यततया न मासादिमध्यघटकः किन्तु पूर्वोक्त श्रुत्यादेश्छन्दोग-परिशिष्टात् गर्गवचनाच्च पर्वकालकरणपक्षेऽपि प्रतिपदि समापनस्यावश्यकतया प्रतिपदेव तद्घटिकेति । तथा च छन्दोगपरिशिष्टम् । "पञ्चादावेव कुर्वीत सदा पञ्चादिक-

ञ्चरम्। पूर्वाह्न एव कुर्वीत विद्धेऽप्यन्ये मनीषिणः"॥ विद्धे द्वितीयाविद्धे पश्चादावेवेत्ययोगव्यवच्छेदपरं न त्वन्ययोगव्यवच्छेदपरम्। तथा कालादर्शकालमाधवीयप्रभृति दाक्षिणात्य वैदिकग्रन्थेषु गर्गः। "प्रतिपद्यप्रविष्टायां यदि चेष्टिः समाप्यते। पुनः प्रणीय क्रन्नेष्टिः कर्त्तव्या योगवित्तमैः"॥ प्रणीयाग्निमिति शेषः। गोभिलोऽपि। "आवर्त्तने यदा सन्धिः पर्वप्रतिपदोर्भवेत्। तदहर्याग इष्येत परतश्चेत् परेऽहनि"॥ पूर्वाह्णापराह्णद्विधाविभक्तदिनस्यावधित्वेनावर्त्तनमाह स्कन्दपुराणम्। "आवर्त्तनात्तु पूर्वाह्णो ह्यपराह्णस्ततः परम्। आवर्त्तनाद्वासरस्य छायायाः परिवर्त्तनात्"॥ प्राक् पूर्वाह्णः। अतएवोक्तम्। "अश्वत्थं वन्दयेन्नित्यं पूर्वाह्णे प्रहरद्वये। अत ऊर्द्ध्वं न वन्देत अश्वत्थन्तु कदाचन"॥ परतोऽपराह्णे। त्रिधाविभक्तदिनाभिप्राये तु लोकाक्षिः। "पूर्वाह्णे मध्यमे वापि यदि पर्व समाप्यते। तदोपवासः पूर्वेद्युस्तदहर्याग इष्यते॥ अपराह्णेऽथ वा रात्रौ यदि पर्व समाप्यते। उपोष्य तस्मिन्नहनि श्वोभूते याग इष्यते"॥ उपोष्येति नाहोरात्राभोजनपरम्। किन्तु कृतेऽग्न्याधाने देवा यजमानस्य समीपमुपवसन्तीति उपवासशब्देनाग्न्याधानमुच्यते। तैत्तिरीय ब्राह्मणे तथा श्रुतेः यथा उपास्मिन् श्वोयक्ष्यमाणे देवता वसन्ति एवं विद्वानग्निमुपस्तृणाति। वृद्धशातातपः। "सन्धिश्चेदपराह्णे स्यात् पादः प्रातः परेऽहनि। कुर्वाणः प्रतिपद्भागे तुरीयेऽपि न दुष्यति"॥ ननु चान्द्रवत् सावनादिष्वपि विष्णुधर्मोत्तरे मासपदं सङ्केतितं यथा "चन्द्रमाः कृष्णपक्षान्ते सूर्य्येण सह युज्यते। सन्निकर्षादथारभ्य सन्निकर्षमथापरम्॥ चन्द्रार्कयोर्बुधैर्मासश्चान्द्र इत्यभिधीयते। सावने च तथा मासि त्रिंशत्सूर्य्योदयाः स्मृताः॥ आदित्यराशिभोगेन सौरो मासः प्रकीर्त्तितः। सर्व्वर्क्षपरि-

वर्त्तैस्तु नाक्षत्र इति चोच्यते"॥ चन्द्रार्कयोः सन्निकर्षात् दर्शात्। अथानन्तरं प्रतिपदमारभ्य अन्यथा सन्निकर्षमारभ्येति ब्रूयात् अपरं सन्निकर्षं यावत् तावत्कालश्चान्द्रः। एतेन सन्निकर्षादि सन्निकर्षान्तो मास इति नारायणोपाध्यायमतं निरस्तम्। त्रिंशदहोरात्रात्मकः सावनः आदित्यैकराशिभोगावच्छिन्नः सौरः सप्तविंशतिनक्षत्रावच्छिन्नो नाक्षत्र इति चतुर्विधा मासाः। तथा च ब्रह्मसिद्धान्ते "चान्द्रः शुक्लादि दर्शान्तः सावनस्त्रिंशता दिनैः। एकराशौ रविर्यावत् कालं मासः सभास्करः। सर्वर्क्षपरिवर्त्तैस्तु नाक्षत्र इति चोच्यते"॥ मेवं चान्द्रसौरसावननाक्षत्र मासोल्लेखित कर्म्मसु ते कीदृशा इत्याकाङ्क्षायां विष्णुधर्मोत्तरादिवचनस्य तत्परिचायकत्वेनोपपत्तौ मासशब्दस्य तत्र तत्र शक्तिग्राहकत्वे प्रमाणाभावात्। अनेकशक्तिकल्पने गौरवात् वक्ष्यमाणयुक्तिभ्यश्च चान्द्र एव शक्तिः।

अथ कर्म्मविशेषे मासविशेषादिः। तत्र पितामहः। "आब्दिके पितृकृत्ये च मासश्चान्द्रमसः स्मृतः। विवाहादौ स्मृतः सौरो यज्ञादौ सावनो मतः"॥ प्रथमादिपरं यात्राग्रहचारपरम्। यत्कमसूर्य्यभोग्यराश्युल्लेखेन यच्च विशेष्योद्गयनादिविहितं तत्परञ्च अयनस्य सौरमासघटितत्वेन वक्ष्यमाणत्वात् तच्च चूडोपनयनादि। द्वितीयादिपदं सत्रभृतिवृद्धिप्रायश्चित्तायुर्दायाशौचगर्भाधानपुंसवनसीमन्तोन्नयननामकरणान्नप्राशननिष्क्रमणचूडादिपरम्। तत्र चूडादावेकत्रैव सौरसावनग्रहणं पश्चादुपपादयिष्यामः। तथा च विष्णुधर्मोत्तरे। "अध्वायनञ्च ग्रहचारकर्म सौरेण मानेन सदाध्यवस्येत्। सत्राण्युपास्यान्यथ सावनेन लोकश्च यस्माद्व्यवहारकर्म"॥ अध्वायनम् अध्वगमनं यात्रेति यावत्। संवत्सरप्रदीपे। "सिं हे

धनुषि मीने च स्थिते सप्त तुरङ्गमे । यात्रोद्वाहगृहद्वारक्षौर-कर्माणि वर्जयेत्" ॥ एतन्मासत्रय यात्रानिषेधो राजेतरपरः । राज्ञः कार्य्यानुरोधात् सर्वदा यात्राविधानात् । यथा मनुः । "मार्गशीर्षे शुभे मासि यायाद्यात्रां महीपतिः । फाल्गुनं वापि चैत्रं वा मासं प्रति यथाबलम् ॥ अन्येष्वपि तु कालेषु यदा पश्येत् ध्रुवं जयम् । तदा यायाद्विगृह्यैव व्यसने चोत्थिते रिपोः" ॥ व्यसनान्याह स एव । "कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः । वियुज्यतेऽर्थधर्माभ्यां क्रोधजेष्वात्मनैव तु ॥ मृगयाक्षो दिवास्वप्नः परीवादः स्त्रियो मदः । तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः ॥ पैशुन्यं साहसं द्रोह ईर्षासूयार्थदूषणम् । वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः" ॥ अक्षो द्यूतक्रीडा । तौर्य्यत्रिकं नृत्यगीतवाद्यानि त्रीणि । दश पैशुन्यमविज्ञातपरदोषाविस्करणम् । साहसं साधोर्बन्धनादिना निग्रहः । द्रोहो जिघांसा ईर्षाऽन्यगुणासहिष्णुता । असूया परगुणेषु दोषाविस्करणम् अर्थदूषणम् अर्थानामपहारः देयानामदानञ्च । अतएव दीपिकायाम् । "दैवहीनं रिपुं जेतुं यायाद्दैवान्वितो नृपः । योज्या दैवान्वितामात्या दैवहीने तथात्मनि ॥ व्यसनी विनष्टधर्मा त्रिविधोत्पातपीडितो यश्च । पुरुषः स दैवहीनः कथितो दैवान्वितोऽन्यः" ॥ अतएव याज्ञवल्क्यः । "दैवे पुरुषकारे च कर्मसिद्धिर्व्यवस्थिता । तत्र दैवमभिव्यक्तं पौरुषं पौर्वदैहिकम्" ॥ अभिव्यक्तं फलोन्मुखीभूतम् । मनुरपि । "युक्ते दैवे च युध्येत जयप्रेप्सुर्व्यपेतभीः । साम्ना दानेन भेदेन समस्तैरथवा पृथक् ॥ विजेतुं प्रयतेतारीन् न युद्धेन कदाचन । अनित्यो विजयो यस्माद् दृश्यते युध्यमानयोः । पराजयश्च संग्रामे तस्माद् युद्धं विवर्जयेत् । त्रयाणामप्युपा-

यानां पूर्वोक्तानां परिक्षये । तथा युध्येत संयत्तो विजयेत रिपून् यथा" ॥ संयत्तः सम्यक्प्रयत्नवान् । कष्टरिपुमाह स एव । "प्राज्ञं कुलीनं शूरञ्च दक्षं दातारमेव च । कृतज्ञं धृतिमन्तञ्च कष्टमाहुररिं बुधाः" ॥ कालोऽपि फलहेतुरित्याह मत्स्यपुराणम् । "दैवं पुरुषकारश्च कालश्च पुरुषोत्तम । त्रयमेतन्मनुष्याणां पिण्डितं स्यात् फलावहम् । कृषेर्वृष्टिसमायोगाद्दृश्यन्ते फलसिद्धयः । तास्तु काले प्रदृश्यन्ते नैवाकाले कथञ्चन" ॥ सत्राणि गवामयनादीनि माससंवत्सरसाध्यानि । लौकं व्यवहारकर्म्म भृतिवृद्ध्यादिकं मासेन यास्यसि मासेन दास्यसीत्यादिकम् । अगस्त्यार्घ्यं दानं सौरेण सिंहराशौ विधानात् । यथा ब्रह्मवैवर्त्ते "अप्राप्ते भास्करे कन्यां शेषभूतैस्त्रिभिर्दिनैः । अर्घ्यं दद्युरगस्त्याय गौड़देशनिवासिनः" ॥ नारसिंहे । "शङ्खे तोयं विनिक्षिप्य सितपुष्पाक्षतैर्युतम् । मन्त्रेणानेन वै दद्याद्दक्षिणाशामुखस्थितः । काशपुष्पप्रतीकाश अग्निमारुतसम्भव । मित्रावरुणयोः पुत्र कुम्भयोने नमोऽस्तु ते" ॥ प्रार्थनन्तु । "आतापिर्भक्षितो येन वातापिश्च महासुरः । समुद्रः शोषितो येन स मेऽगस्त्यः प्रसीदतु" ॥ गन्धादिकन्तु । अगस्त्याय नमः इत्यनेन देयं विशेषानुद्देशे सामान्यतः प्राप्तत्वात् दक्षिणाशामुखस्थित इति गन्धादावपि प्रयोगाङ्गकर्त्तृधर्म्मत्वात् इति रत्नाकरः । तत्पत्न्यर्घ्यमन्त्रस्तु । "लोपामुद्रे महाभागे राजपुत्रि पतिव्रते । गृहाणार्घ्यं मया दत्तं मैत्रावरुणि वल्लभे" । आश्वलायनः । उदगयाने अपूर्य्यमाणे पक्षे कल्याणे नक्षत्रे चौड़कर्म्मोपनयनगोदानविवाहाः । विवाहः सार्व्वकालिक इत्येके" । विवाहे विषयभेदमाह गृह्यपरिशिष्टम् । "धर्म्म्येष्वेव विवाहेषु कालपरीक्षणं नाधर्म्म्येषु" ॥ व्यक्तं भुजबले । "ग्रहशुद्धिमब्दशुद्धिं

मासायनर्त्तुदिवसानाम् । अर्वाक् दशवर्षेभ्यो मुनयः कथयन्ति कन्यकानाम्" ॥ ननु "चैत्रकृष्णद्वितीयायां तिसृष्वेवाष्टकासु च । मार्गे च फाल्गुने चैव आषाढ़े कार्त्तिके तथा । पक्षयो-र्माघमासस्य द्वितीयां परिवर्जयेत् । नाकालवृष्टौ कुर्वीत व्रत-बन्धशुभक्रियाम्" । इति भुजबलोक्तं कथं सङ्गच्छता उपन-यनस्याश्वलायनेनोत्तरायणशुक्लपक्षयोर्विधानात् पारस्करेणापि उदगयने आपूर्य्यमाणे पक्षे पुण्याह इति कर्म्ममात्रे परिभा-षितम् असमासकरणं गर्भाधानादिषु कालविशेषनियतेषु उदगयनादीनां यथासम्भवं नित्यत्वानित्यत्वप्रतिपादनार्थमिति हरिशर्म्मा । गोभिलेनापि "उदगयने पूर्व्वपक्षे पुण्येऽहनि प्रागावर्त्तनादह्नः कालं विद्यात्" इति यामद्वयात्मकपूर्व्वाह्णमप्य-धिकं परिभाष्य यथा देशश्चेति पुनः कृतं यथा देशमित्यनेन स्वगृह्योक्तानां प्रौष्ठपद्याम् उपकर्म्मकरणस्यामावास्यायामप-राह्णे पिण्डपितृयज्ञस्यान्यस्याप्येवंविधस्योदगयनादि विरुद्ध-विहितस्य ऋतुकालगर्भस्पन्दन–पूर्व्वकालषष्ठमासादि विहिता-नामपुंसवनसीमन्तोन्नयनादीनाञ्च दक्षिणायनादावनर्थानुप-पत्त्या ग्रहणम् । अथैवं यथा देशश्चेति सूत्रमवाच्यं तत्तद्विशेष-विधानादेव सिद्धेर्नायं दोषः । यथादिष्टकालस्य क्रियाया-मादरार्थमुक्तं तेन तत्तत्कालातिपत्तौ केषाञ्चिल्लोपः यथा अष्ट-कापिण्डपितृयज्ञादीनां। विद्याकराह्निककृत्येऽपि । "अकाले चेत् कृतं कर्म्म काले तस्य पुनः क्रिया । कालातीतञ्च यत् कुर्य्यादकृतं तद्विनिर्द्दिशेत्" । यत् कर्म्म यस्मिन् काले विहितं तत्कालाभावेऽपि नाङ्गान्तराभाव इव तत्कर्म्मानुष्ठानं नित्य-कर्म्मसु यथाशक्त्युपदेशस्य कृतिसाध्याङ्गमात्रविशेषत्वात् कालस्यानुपादेयत्वान्न तथेति। तदुक्तम् "अङ्गत्वेऽपि च कालस्य न त्यागोऽन्याङ्गवत् कुतः । अनुपादेयरूपत्वात् काले कर्म्म-

विधीयते"॥ वचनात् कालातिपत्तौ केषाञ्चित् प्रायश्चित्तं कृत्वाऽनुष्ठानं यथा सन्ध्यावन्दनादीनां तद्यथा सांख्यायनगृह्यम्। "अरण्ये समित्पाणिः सन्ध्यामुपास्ते नित्यं वाग्यत उत्तरापराभिमुखोऽन्वष्टमदिशमानक्षत्रदर्शनात् अतिक्रान्तायां महाव्याहृतीः सावित्रीः स्वस्त्ययनादि जपित्वा एवं प्रातः प्राङ्मुखस्तिष्ठन्नामण्डलदर्शनात्" इति। उत्तरापराभिमुखो वायुकोणाभिमुखः कोणं विवृणोति अन्वष्टमदिशमिति उभयदिगष्टमभागमिति यावत्। व्यासः। "सन्ध्याकाले व्यतीते तु न च सन्ध्यां समाचरेत्। गायत्रीं दशधा जप्त्वा पुनः सन्ध्यां समाचरेत्"॥ जपे स्मृतिः। "कृत्वोत्तानौ करौ प्रातः सायञ्चाधो मुखौ करौ। मध्ये तिर्य्यक्करौ प्रोक्तौ जप एव मुदाहृतः"। पितृदयितायामप्येवम्। यत्तु काशीखण्डम्। "विधिनापि कृता सन्ध्या कालातीता वृथा भवेत्। अयमेव हि दृष्टान्तो वन्ध्या स्त्री मैथुनं यथा"। इति तदकृतप्रायश्चित्तपरम्। हरिहरपद्धतौ। "यद्वागामिक्रियामुख्यकालस्याप्यन्तरालवत्। गौणकालत्वमिच्छन्ति केचित् प्राशनकर्म्मणि"। यद्वेति पक्षान्तरं प्राशनकार्य्ये मध्यकालवत् आगामिक्रियामुख्यकालस्यापि गौणकालत्वं तेन सायं सन्ध्याया रात्रिः प्रातःसन्ध्याकालश्च गौणकाल इत्यर्थः। एवमन्यत्रापि। अतएव छन्दोगपरिशिष्टम्। "संस्कारा अतिपत्येरन् स्वकालाच्चेत् कथञ्चन। हुत्वैतदेव कुर्वीत ये तूपनयनादधः"। एतदिति महाव्याहृतिहोमादिप्रायश्चित्तम्। अधः पूर्वम्। वृद्धराजमार्त्तण्डे। "या नार्य्यकृतसीमन्ता प्रसूते च कदाचन। अङ्के निधाय तं बालं पुनः संस्कारमर्हति"॥ देवलः। "सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता। यं यं गर्भं प्रसूयेत स गर्भः संस्कृतो भवेत्"॥ संस्कारक्रमनियममाह नारदः। "येषान्तु

न कृताः पूर्वं संस्कारविधयः क्रमात् । कर्त्तव्या भ्रातृभिस्तेषां पैतृकादेव तद्धनात् ॥ अविद्यमाने पित्रर्थे स्वांशादुद्धृत्य वा पुनः । अवश्यकार्य्याः संस्काराः भ्रातृभिः पूर्वसंस्कृतैः" ॥ क्रमाद् भ्रातॄणां शेषामित्यनेन प्राप्तानां संस्काराणाञ्च पौर्वापर्य्यक्रमात् भ्रातृक्रमस्तु सोदरविषयकः । विवाहे तथा दर्शनात् । कर्णवेधस्य संस्कारत्वाभावान्न तथा नियमः । बृहद्राजमार्त्तण्डकृतचिन्तामण्योर्माण्डव्यवचने तथा दर्शनात् यथा । "यदापत्यद्वयं तिष्ठेत् सम्भवोऽप्यपरस्य च । कर्णषट्कं विजानीयात् गर्हितं तत्त्रयस्य च ॥ इत्याशङ्क्य द्वयोर्मध्ये शुद्धिर्यस्याथ वत्सरे । वर्णवेधो हितस्तस्य नात्र ज्येष्ठादिभावना ॥ षट्कर्णोत्पत्तिमाशङ्क्य भानोः शुद्धा समेऽपि च । कर्णौ वेध्यौ न दोषः स्यादन्यथा मरणम्भवेत्"॥ भ्रातृभिरिति बहुवचनादन्येषां ग्रहणम् । अतएव नारायणपद्धतौ "अष्टौ संस्कारकर्म्माणि गर्भाधानमिव स्वयम् । पिता कुर्य्यात्तदन्यो वा तदभावेऽपि तत्क्रमात्"इत्यत्रान्यो वेत्युक्तम् । न च प्रागुक्तगोभिलसूत्रे उदगयनादावसमासकरणम् एकैकस्यानुगुण्यद्योतनार्थं समुच्चयोपलब्धौ महानभ्युदय इति भट्टनारायणव्याख्यानात् दक्षिणायनकृष्णपक्षयोरप्युपनयनमिति वाच्यं पूर्व्वोक्ताश्वलायनवचनेन चौड़कर्म्मोपनयनयोर्विशिष्य उदगयनशुक्लपक्षयोर्विहितत्वात् । भोजराजेनापि । "माघादिमासषट्केषु शाङ्गिणः शयनावधि । चूड़कर्म प्रकुर्व्वन्ति मुनयो व्रतमेव च" ॥ इति व्रतमुपनयनम् । कृत्यचिन्तामणौ दक्षिणायननिषेधोऽपि । "रात्रिभागः समाख्यातः स्वरांशोदक्षिणायनम् । व्रतबन्धादिकं तस्मात् चूड़ाकर्म च वर्जयेत्" ॥ तत्कथमुपनयनादिके विशिष्य मार्गादिकृष्णद्वितीयादिनिषेधः । उच्यते । दक्षिणायने वैश्यस्योपनयनविधानात् कृष्णपक्षे प्रायश्चित्ता-

त्तकोपनयनविधानाच तत्परः। न चावाप्युदगयनाद्यपेक्षा। क्षते निःसंशये पापे इत्यादिनिन्दार्थवादेन विलम्बासहत्वात् एकदिनस्योपवासेन गमयितुं शक्यत्वात्। यथा गर्गः। “विप्रस्य क्षत्रियस्यापि मौञ्जी स्यादुत्तरायणे। दक्षिणे च विशां कार्य्यं नानध्ययनसंक्रमे॥ अनध्यायेऽपि कुर्वीत यस्य नैमित्तिकं भवेत्”॥ अपिना दक्षिणायनकृष्णपक्षयोः समुच्चयः नैमित्तिकं प्रायश्चित्तरूपं पारस्करः। “विवाहोत्सवयज्ञेषु सौरं मानं प्रशस्यते। पार्वणे त्वष्टकाश्राद्धे चान्द्रमिष्टं तथाब्दिके”॥ अत्र यज्ञपदमुदगयनादिविहितपशुयागाभिप्रायं पितामहोक्त-विष्णुधर्मोत्तरोक्तसत्रपरञ्च। गर्गः। “आयुर्दायविभागश्च प्रायश्चित्तक्रिया तथा। सावनेन तु कर्त्तव्या मन्त्राणामप्युपासना”॥ सूर्य्यसिद्धान्ते। “सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा। मध्यमग्रहभुक्तिश्च सावनेन प्रकीर्त्तिता”॥ मध्यमग्रहभुक्तिर्ज्योतिर्गणनाप्रसिद्धा। याज्ञवल्क्यः। “गर्भाधानमृतौ पुंसः सवनं स्पन्दनात् पुरा। षष्ठेऽष्टमे वा सीमन्तः प्रसवे जातकर्म च॥ अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः। षष्ठेऽन्नप्राशनं मासि चूड़ा कार्य्या यथाकुलम्॥ एवमेनः शमं याति वीजगर्भसमुद्भवम्”॥ ऋतौ ऋतुकाले। यथा मनुः। “ऋतुकालाभिगामी स्यात्” इति स च कालो याज्ञवल्क्योक्तः। “षोड़शर्त्तुर्निशाः स्त्रीणां तासु युग्मासु संविशेत्”। तेन गर्भधारणयोग्यावस्थोपलक्षितः काल ऋतुः। स च रजोनिःसरणकालमारभ्य षोड़शाहोरात्रात्मकः ततश्च गर्भाधानसंस्कारोपक्रमे सावनगणनासिद्धा। पुंसवने चतुर्थे स्पन्दते ततः। इति वचनात् स्पन्दनात् पूर्वं तृतीयमासः कालः तत्र चतुर्थमासस्य सौरत्वे चान्द्रत्वे वा निषेकमासस्यापि तथात्वे तदाद्यन्तदिननिषेके सत्यधिकन्यूनकालयोर्गर्भस्पन्दन-

मनियतमापद्येत। सावने तु नियतं तेनात्रापि सावनगणना-युक्ता योषिद्व्यवहारसिद्धा च। अहन्येकादशे नाम इत्यत्रापि "अशौचव्यपगमे नामधेयम्" इति विष्णुसूत्रात्। सूतकोत्तर-दिनपरमेकादशपदं पूर्वोक्तसूर्य्यसिद्धान्तोक्तवचनेन सूतकस्य सावनदिनघटितत्वात् तदुत्तरकालस्यापि तथात्वं तस्माद्गर्भा-धानपुंसवननामकरणेषु सावनदर्शनात् तत्साहचर्य्यात् सीम-न्तोन्नयनादावपि मासवर्षगणनायां तथेति अतश्चूडोपनयना-दिषु वर्षगणना सावनेन शुभाशुभगणनन्तु सौरेणेति सिद्धम्। एवमेन इति एवमुक्तप्रकारगर्भाधानादिभिरेनः पापं वीजगर्भ-समुद्भवं शुक्रशोणितसम्बन्धं गात्रव्याधिसंक्रान्तिनिमित्तं नाशं याति नित्यत्वेऽप्यानुषङ्गिकमेतत्। उपनयनोत्तरावधिमाह याज्ञवल्क्यः। "आषोड़शाच्च द्वाविंशाच्चतुर्विंशाच्च वत्सरात्। ब्रह्मचत्रविशां काल औपनायनिकः परः"॥ आङ् अभि-विध्यर्थः। मर्य्यादाभिविधिसन्देहे वाक्यान्वितत्वेनाभिविधेरेव बलवत्त्वात् एवमेव भट्टभाष्यसरलाभवदेवभट्टमिताक्षराकुल्लूक-भट्टकल्पतरुस्मृतिसारप्रभृतयः। शूलपाणिरपि याज्ञवल्क्य-टीकायामेव किन्तु प्रायश्चित्तविवेके मर्य्यादार्थकतामाह यम-वचनात्। यथा "पतिता यस्य सावित्री दशवर्षाणि पञ्च च। ब्राह्मणस्य विशेषेण तथा राजन्यवैश्ययोः। प्रायश्चित्तं भवे-देषां प्रोवाच वदतां वरः"॥ कुल्लूकभट्टप्रायश्चित्तकल्पतरुधृत-मप्येतत्। अत्र ब्रूमः। "औपनायनिकः कालः परः षोड़श-वार्षिकः। द्वाविंशतिः परोऽन्यस्य स्याच्चतुर्विंशतिः परः" इति कल्पतरुधृतव्यासवचनं परोऽन्यः षोड़शवार्षिक षोड़शवर्षं वाप्य भूतः स्थित इति यावत्। तमधीष्टो भृतो भूतो भावीति ठक् वर्षस्या भविष्यतीति उत्तरपदवृद्धिः अधीष्टोऽध्येषणायुक्तो गुरुः भृतो भृतिक्रीतो दासः। राजमार्त्तण्डे कृत्यचिन्ता-

मयौ च मार्कण्डेयः । "विप्रस्य षोड़शाद्वर्षाद्राज्ञो द्वाविंशतेः परम् । वैश्यस्याष्टविंशकादब्दात् सावित्री पतनं भवेत्" ॥ अष्टविंशकाच्चतुर्विंशतेः । विष्णुधर्मोत्तरे । "षोड़शाब्दा हि विप्रस्य राजन्यस्य द्विविंशतिः । विंशतिः सचतुर्थी च वैश्यस्य परिकीर्त्तिता । सावित्री नातिवर्त्तेत अत ऊर्द्धं निवर्त्तते" ॥ आभ्यां षोड़शवर्षाद्युपरि यमेन पञ्चदशवर्षोपरि यत् पतनमभिहितं तद्गर्भजन्मप्रभृतिगणनाभ्यामविरुद्धम् । तथा च कृत्यचिन्तामणौ माण्डव्यः । "व्रतबन्धविवाहे च वत्सरपरिकल्पनमाहुराचार्य्याः । आधानपूर्वमेके प्रसूतिपूर्वं सदान्ये तु" ॥ एवञ्च व्यासमार्कण्डेयादिवाक्यैकवाक्यतया न्यायसिद्धतया च आषोड़शादित्यादावाङोऽभिविध्यर्थतैव तत्रापि गर्भातिरिक्ते वर्षगणनासावनेनैव । यत्तु द्विजानामुपनयनमुपक्रम्य पैठीनसिवचनम् । "द्वादश-षोड़शविंशतिस्वेदतीता अवरुद्धकाला भवन्तीति" । तत् द्वादशवर्षाद्युपरि प्रत्यवायाल्पत्वज्ञापनपरमिति शूलपाण्युपाध्यायाः अत्र महाव्याहृतिहोमः प्रायश्चित्तं तदुत्तरं व्रात्यप्रायश्चित्तमिति मैथिलास्तु । "विवाहादौ स्मृतः सौरो यज्ञादौ सावनो मतः । शेषे कर्म्मणि चान्द्रः स्यादेष मासविधिः स्मृतः" ॥ शेषे सौरादिविशेषोल्लेखरहित इत्याहुः । मङ्गावाक्यावल्यां दक्षः । "चान्द्रेण तिथिकृत्यन्तु यथाविहितमाचरेत्"। कार्त्तिकादिस्नाने च चान्द्रसौरयोर्विकल्पेनानुष्ठानं यथा कृत्यकौमुद्यां पितामहः । "कार्त्तिकस्य तु यत् स्नानं माघे मासि विशेषतः । कृच्छ्रादिनियमानाञ्च चान्द्रमानप्रमाणतः" पद्मपुराणम् "तुलामकरमेषेषु प्रातःस्नानं विधीयते । हविष्यं ब्रह्मचर्य्यञ्च महापातकनाशनम् ॥ अत्रोदितानुदितहोमवद्विकल्पेनानुष्ठानमिति हेमाद्रिः । कार्त्तिके मन्त्रस्तु । कार्त्तिकेऽहं करिष्यामि प्रातःस्नानं जनार्दन । प्रीत्यर्थं तव देवेश

दामोदर मया सह" ॥ मया लक्ष्म्या । स्कन्दपुराणे । "संप्राप्ते मकरादित्ये पुण्ये पुण्यप्रदे सदा । कर्त्तव्यो नियमः कश्चित् व्रतरूपो नरोत्तमैः" । आरब्धकार्त्तिकादिकाम्यस्नाने तु व्याध्यादिनाऽसामर्थ्ये पुत्रादिप्रतिनिधिना कारयितव्यम् । नानुकल्पविधिना । नित्यस्नान एव तद्विधानात् इति विद्याकरो युक्तश्चैतत् । "जिह्मं त्यजेयुर्निर्लाभमशक्तोऽन्येन कारयेत् । अनेन विधिराख्यात ऋत्विक् कर्षककर्मिणाम्" इति सम्भूयवाणिज्ये याज्ञवल्क्यवचनात् जिह्मो मिथ्यवञ्चकः । तं निर्लाभं कृत्वा त्यजेयुर्बहिष्कुर्य्युः । गारुड़े । "गङ्गायां येऽवगाहन्ते माघे मासि नराधिप । चतुर्युगसहस्रान्ते न पतन्ति सुरालयात् । दिने दिने सुवर्णानां सहस्रन्तु विशाम्पते । तेन दत्तं हि गङ्गायां यो माघे स्नाति मानवः" ॥ पद्मपुराणे । "मकरस्थे रवौ माघे प्रातःकाले सदा मुने । गोस्पदेऽपि जले स्नानं स्वर्गदं पापिनामपि" ॥ स्कान्दे । "मकरस्थे रवौ माघे न स्नात्यनुदिते रवौ । कथं पापैः प्रमुच्येत कथं स त्रिदिवं व्रजेत्" ॥ अनयोः सूर्य्योदयात् प्रागेव स्नानं प्रतीयते । तथा च सामान्यतः प्रातःस्नाने विष्णुः "प्रातःस्नाय्यरुणकिरणग्रस्तां प्राचीमवलोक्य स्नायात्" । दक्षोऽपि । "सन्ध्यास्नानं निशान्ते तु मध्याह्ने तु ततः पुनः" । यत्तु पद्मपुराणम् । "माघे मासि रटन्त्यापः किञ्चिदभ्युदिते रवौ । ब्रह्मघ्नमपि चाण्डालं कं पतन्तं पुनीमहे" ॥ इति तद्रटन्त्याख्यचतुर्दशीविषयम् । यथा यमः । "माघे मास्यसिते पक्षे रटन्त्याख्या चतुर्दशी । तस्यामुदयवेलायां स्नाता नावेक्षते यमम्" ॥ स्नाता स्नानकारी । "अनर्काभ्युदिते काले माघे कृष्णचतुर्दशीम् । स्नात्वा सन्तर्प्यंतु यमान् सर्वपापैः प्रमुच्यते" ॥ अनर्काभ्युदित इति ईषदर्थे नञ् अतो न उदयवेलायामित्यनेन विरोध इत्याहुस्तच्चिन्त्यं

"परवचनार्द्धयोर्मध्ये सतारव्योमकाले तु तत्र स्नानं महा-फलम्" इति समुद्रकरभाष्यधृतात्। किन्तु उदयवेलाया-मरुणोदयवेलायामित्यर्थः। किञ्चिदभ्युदिते रवावित्यनेन माघ-प्रातःस्नानकालोत्तरावधित्वमुक्तम्। तथा वराहः "तेजः परि-हानेरुषा भानोरर्द्धोदयं यावत्"। अतएव "यो माघमास्युषसि सूर्य्यकराभिताम्रे स्नानं समाचरति चारुनदीप्रवाहे। उद्धृत्य सप्तपुरुषान् पितृमातृवंश्यान् स्वर्गं प्रयात्यमरदेहधरो नरो-ऽसौ"॥ इत्यत्र ऊषसि इत्यभिधाय सूर्य्यकराभिताम्र इत्युक्तं सूर्य्योदयात् प्रागपि तत्करसम्भवात् न तु सूर्य्याभिताम्र इत्युक्तं विधिमाह पाद्मे। "माघमासमिमं पुण्यं स्नास्यहं देव माधव। तीर्थस्यास्य जले नित्यं प्रसीद भगवान् हरे॥ दुःख-दारिद्र्यनाशाय श्रीविष्णोस्तोषणाय च। प्रातःस्नानं करोम्यद्य माघे पापप्रणाशनम्॥ मकरस्थे रवौ माघे गोविन्दाच्युत-माधव। स्नानेनानेन मे देव यथोक्तफलदो भव॥ एतन्मन्त्रं समुच्चार्य्य स्नायान्मौनं समाहितः। वासुदेवं हरिं कृष्णं श्रीधरञ्च स्मरेत्ततः॥ दिवाकर जगन्नाथ प्रभाकर नमोऽस्तु ते। परिपूर्णं कुरुष्वेदं माघस्नानं महाव्रतम्"॥ चान्द्रस्नाने तु मकरार्कास्पृष्टकाले मकरस्थे रवाविति मन्त्रो न पठनीयो-ऽसमवेतार्थत्वात् प्रातःस्नानेऽपि "यथाहनि तथा प्रातर्नित्यं स्नायादनातुरः"। इति छन्दोगपरिशिष्टीयेनाहःस्नानधर्माति-देशात् सन्ध्यावन्दनोत्तरत्वं पद्मपुराणीय तदङ्गतर्पणस्य तद्यथा। "नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमिष्यते। तर्पणन्तु भवेत्तस्य अङ्गत्वेन व्यवस्थितम्"॥ नित्यं प्रात्यहिकं प्रात-र्मध्याह्नसम्बन्धिनैमित्तिकमुपरागादिनिमित्तकं काम्यं तीर्थादौ क्रियमाणम् अतएव यद्यपि स्नानाङ्गं तर्पणं तत्प्रयोगान्तर्भवि-तुमर्हति तथापि सन्ध्यानुष्ठानसत्वे तस्य वाचनिकं सन्ध्योत्तरत्वं

चन्द्रग्रहणादौ तु तदभावात् स्नानप्रयोगान्तर्गतत्वमिति छन्दोगाह्निकादयः मध्याह्नस्नानप्रयोगान्तर्गततर्पणन्तु "तर्पणन्तु शुचिः कुर्य्यात् प्रत्यहं स्नातको द्विजः। देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमम्" इति शातातपोक्त प्रधानतर्पणस्य प्रकृतीभूतं नित्याग्निहोत्रमिव सन्ध्याग्निहोमस्य तत्राकृतर्पणे सन्ध्योत्तरत्वं साक्षादुक्तम्। विकृतावपि सम्भवप्राप्तम्। यथा ज्योतिष्टोमस्येष्ट्युत्तरकालत्वं विकृतीभूतसोमेऽप्यतिदेशप्राप्तम्। किञ्च गृहमेधीय यागकालमध्ये अग्निहोत्रकाल आगते तत्पदार्थक्रमवाधेनाग्निहोत्रानुष्ठानं निर्णीतं तथा स्नानानन्तरं सन्ध्याकाल आगते तर्पणमकृत्वैव सन्ध्यानुष्ठानं युक्तमिति विद्याकरवाजपेयौ व्यवहारोऽपि तथेति माघाधिकारे गारुड़े "मातरं पितरञ्चापि भ्रातरं सुहृदं गुरुम्। यमुद्दिश्य निमज्जेत द्वादशांशं लभेत सः"॥ मार्कण्डेयः। "सितासितेषु यः स्नायात् माघे मासि युधिष्ठिर। न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि। दशकोटिसहस्राणि षष्टिकोट्यस्तथापराः॥ माघे मासि प्रयागे तु गङ्गायामुनसङ्गमे"॥ वैष्णवामृते स्कन्दपुराणम्। "पौष्यान्तु समतीतायां यावद्भवति पूर्णिमा। माघमासस्य देवेश पूजा विष्णोर्विधीयते"॥ पौर्णमास्यन्तमाघमुपक्रम्य "पितॄणां देवतानाञ्च मूलकं नैव दापयेत्। ददन्नरकमाप्नोति भुञ्जीत ब्राह्मणो यदि॥ ब्राह्मणो मूलकं भुक्त्वा चरेच्चान्द्रायणं व्रतम्। अन्यथा याति नरकं चत्वविट्शूद्र एव च"॥ तथा "वरं भक्ष्यमभक्ष्यञ्च पिवेद्वा गर्हितञ्च यत्। वर्जनीयं प्रयत्नेन मूलकं मदिरासमम्"॥ वैशाखस्नानन्तु सौरेण यथा भविष्ये "गवामर्द्धप्रसूतानां लक्षं दत्त्वा तु यत् फलम्। तत्फलं लभते राजन् मेषे स्नात्वा तु जाह्नवीम्"॥ नाक्षत्रमासप्रयोजनं विष्णुधर्मोत्तरे। "नक्षत्रसत्रायणनादि

चेन्दोर्मासेन कुर्य्याद्गणात्मकेन"। नक्षत्रसत्राणि माससाध्य-यागविशेषाणि याज्ञिकप्रसिद्धानि इन्दोरयनानि सौमायनाख्य-सत्राणि इति समयप्रकाशः। एवं जन्मनक्षत्रे शनिभौमवार-फलं नाक्षत्रमासेन योग्यत्वात् यथा दीपिकायाम् "जन्मन्यृक्षे यदि स्यातां वारौ भौमशनैश्वरौ। स मासः कल्मषो नाम मनोदुःखप्रदायकः"॥ तस्मादेभिश्चान्द्रसौरसावननाक्षत्रमा-सेषु कर्माणि विहितानि तत्परिचायकानि चन्द्रमाः कृष्ण-पक्षान्ते इत्यादि विष्णुधर्मोत्तराद्युक्तवचनानि न तु शक्ति-ग्राहकाणीति सिद्धम्। अतस्तत्तत्कर्मसङ्कल्पे "मासपक्ष-तिथीनाञ्च निमित्तानाञ्च सर्वशः। उल्लेखनमकुर्वाणो न तस्य फलभाग्भवेत्"॥ इति ब्रह्माण्डपुराणोक्तेन तत्तद्विहितमास एव निर्देश्यः। अत्र चकारद्वयश्रुतेर्मासपक्षतिथीनाञ्चेति न निमित्तविशेषणं किन्तु स्वातन्त्र्येणैव यथासम्भवमुभयोरुल्लेखः। तथा च द्वैतनिर्णये दर्शश्राद्धादौ कृष्णादिरेव मासो निर्देश्यः तस्य तत्तिथिपुरस्कारेणैव करणात् तदितरत्र सांवत्सरिकादौ शुक्लादिरेव निर्देश्यः तस्य प्रयाणतिथिकर्त्तव्यत्वेन त्रिंशत्तिथि-साधारणतया तत्तत्तिथिनियत ब्रह्मपुराणास्पर्शादित्युक्तम्। श्राद्धचिन्तामणावपि श्राद्धादिकर्म्मणि विशेषवचनं विना शुक्ला-दिरेव निबन्धृभिरादरणादित्युक्तम्। गङ्गावाक्यावल्यामपि वारुणीस्नाने मधुकृष्णात्रयोदश्यामिति वाक्यरचना। किञ्च यदि सर्वकर्म्मणि मुख्यचान्द्रेणैव वाक्यरचना स्यात्तदाश्वयुक्-कृष्णपक्षीयश्राद्धेऽपि मुख्यचान्द्रत्वेन भाद्रपदप्रयोगः सम्भवति तत्राश्वयुक्पदप्रयोगो मुनीनां व्यर्थः स्यात् तस्येदमेव प्रयोजनं यत्तेन निर्देशः। एवं विवाहादौ सौरेणाभिलापः एवञ्च सावने नाक्षत्रे च चैत्रादिनामानुल्लेखान्मुख्यचान्द्रेणैव निर्देशः अतएव स्मृतिसारे ब्रह्मपुराणम्। "तिथिकृत्ये च कृष्णादिं व्रते शुक्लादि-

मेव च। विवाहादौ च सौरादिं मासं क्वत्ये विनिर्दिशेत्" ॥ सौरः सूर्य्यसंक्रमः। संकल्पे मासादिवदस्योल्लेखोऽपि "ब्राह्मणानुपामन्त्रयेत् श्वोऽद्येति वा श्राद्धमाचरिष्ये" इति शङ्खलिखितदर्शनात्। अद्यकृष्णाष्टमीं देवीमिति वचनात् अद्यचन्द्रार्कग्रहणमिति भविष्याच्च एतेनाहः पदस्य रात्रिपरत्वाभावात् रात्रौ चेत् अस्यां रात्रौ इति वक्तव्यं नाद्येति मतं चिन्त्यं रात्रिपदोल्लेखे मानाभावात् एवमनेकाहसाध्ये कर्मणि तिथ्युल्लेखानन्तरमारभ्येत्युल्लेखः। अन्यथा तन्मासपक्षतिथिविशेषादीनां दिनान्तरासत्त्वेनानन्वयः स्यात्।

अथ दर्शान्तमासशक्यत्वे साधकान्तराणि। मत्स्यपुराणे। "प्रथमः श्वेतकल्पस्तु द्वितीयो नीललोहितः"। इत्यादि चतुर्दशकल्पानुक्त्वा "कौर्म्यः पञ्चदशो ब्रह्मन् पौर्णमासी प्रजापतेः। षोड़शो नारसिंहस्तु" इत्यादिना त्रिंशत् कल्पानुक्त्वा "पितृकल्पस्तथान्ते तु या कुहूर्ब्रह्मणः स्मृता। इत्ययं ब्रह्मणो मासः सर्वपापप्रणाशनः। आदावेव हि माहात्म्यं यस्मिन् यस्य विधीयते। तस्य कल्पस्य तन्नाम विहितं ब्रह्मणा पुरा" ॥ अत्र ब्रह्मणोदर्शान्ते मासपदशक्तेतादन्येषामपि तथैव युक्तम्। श्रुतिरपि "पूर्वः पक्षो देवानामपरः पक्षः पितॄणाम्" इति मासान्तर्गतशुक्लकृष्णपक्षावेव पूर्वापरत्वेन विदधाति। संवत्सरप्रदीपे। षट्त्रिंशन्मतं "तत्र पक्षावुभौ मासे शुक्लकृष्णौ क्रमेण हि। चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मकः। पक्षत्याद्यास्तु तिथयः क्रमात् पञ्चदश स्मृताः। दर्शान्ताः कृष्णपक्षे ताः पूर्णिमान्ताश्च शुक्लके"। पक्षतिः प्रतिपत्। अमरकोषे "पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ"। अत्र यदि दर्शान्तमात्रे मासपदस्य शक्तिर्न स्यात् तदा चान्द्रमास इत्येव विदध्यात्। मासविशेषवाचकचैत्रादयोऽपि चान्द्रे

मशा वच्यन्ते। चान्द्रे यौगिकोऽपि मासशब्दस्तथा हि मास-श्चन्द्रस्तायं वृद्धिह्रासहेतुर्नक्षत्रभोगात्मकः क्रिया प्रचयः सूर्य्य-मण्डलवियोगसंयोग इति चन्द्रवाचिहलन्तमास्शब्दादन् प्रत्य-यान्मात् सिद्धः। तथा च गदसिंहः। "मूर्द्धन्यान्तो माषो-माने व्रोह्यन्तरेऽपि निर्दिष्टः। कालविशेषे दन्त्योमाश्चन्द्र-कालयोस्तथा" इति। तिथिस्वरूपमाह सूर्य्यसिद्धान्तः। "अर्काद्विनिःसृतः प्राचीं यद्यात्यहरहः शशी। भागैर्द्वादश-भिस्तत् स्यात्तिथिश्चान्द्रमसं दिनम्"। द्वादशभिर्भागैर्यद्याति-तदेव यानं तिथिः विनिःसृत इति शुक्लपक्षतिथ्यभिप्रायेण कृष्णपक्षे विप्रकृष्टात् सन्निकर्ष इत्यपि बोध्यम्। भागस्त्रिंशां-शराशेरेकोऽंशः। तथा च हेमाद्रिसारसंग्रहयोर्विष्णुधर्मो-त्तरे। "त्रिंशांशकस्तथा राशेर्भाग इत्यभिधीयते। आदित्या-द्विप्रकृष्टस्तु भागं द्वादशकं यदा। चन्द्रमास्यात्तदा राम तिथि-रित्यभिधीयते"। तेनार्कापेक्षया चन्द्रस्य राशिद्वादशांशभो-गेन एकातिथिरेवमपरापरापि सा चैकैककलाक्रियालक्षणा। तत्र प्रथमकलाक्रियारूपा प्रतिपत् एवं द्वितीयादिः। सा च वृद्धिरूपा चेत् शुक्ला ह्रासरूपा चेत् कृष्णेति न च "अष्टमांशे चतुर्दश्याः क्षीणो भवति चन्द्रमाः। अमावास्याष्टमांशे च ततः किल भवेदनुः" इति छन्दोगपरिशिष्टवचनाच्चतुर्दश्याः शेष-यामे पञ्चदश्याः कलायाः क्षयारम्भात् एवं दर्शान्त्ययामे आद्य-कलाया उत्पत्तेर्विरोध इति वाच्यं तस्य दर्शश्राद्धार्थं पारिभा-षिकक्षयोत्पत्तिपरत्वं न तु वास्तवं स्मृतिज्योतिःशास्त्रोक्तगण-नाविरोधात् उपजीव्यगोभिलविरोधाच्च। यथा गोभिलः। "सूर्य्याचन्द्रमसोर्यः परः सन्निकर्षः सामावास्या" इति। परः सन्निकर्ष उपर्य्यधो भावापन्नसमसूत्रपातन्यायेन एकांशावच्छे-देन एकराश्यवस्थानं स च दर्शान्तक्षणेऽव्यभिचारी तथा च

विरोधे न्याययुक्तस्य प्रामाण्यमाह भविष्यपुराणम्। "स्मृत्यर्थेन विरोधे हि अर्थशास्त्रस्य बाधनम्। परस्परविरोधे तु न्याययुक्तं प्रमाणवत्" ॥ अर्थशास्त्रस्य मन्वादिप्रणीतराजनीत्यादिविषयस्य यदाह। "अनागमन्तु यद्भुक्तं पित्रा पूर्वतरैस्त्रिभिः। न तच्छक्यमपाकर्त्तुं क्रमात्त्रिपुरुषागतम्"। पित्रा पूर्वतरैः पितरमादाय पूर्वतरैरित्यर्थः। "अनागमन्तु यो भुङ्क्ते बहून्यब्दशतान्यपि। चौरदण्डेन तं पापं दण्डयेत् पृथिवीपतिः"। इत्यनयोर्धर्मशास्त्रार्थशास्त्रयोर्विप्रतिपत्तौ धर्मशास्त्रेण दण्डविधायकमर्थशास्त्रं बाध्यते ततश्च अर्थशास्त्रस्य त्रिपुरुषीयेतरपरत्वेन सङ्कोचः। बृहस्पतिः। "आहर्त्ता शोधयेद्भुक्तिमागमञ्चापि संसदि। तत्सुतो भुक्तिमेकैकां पौत्रादिषु न किञ्चन"। भुक्तिशोधनमाह कात्यायनः। "आगमो दीर्घकालश्च निश्छिद्रोऽन्यतरोज्झितः। प्रत्यर्थिसन्निधानञ्च पञ्चाङ्गो भोग इष्यते"। त्रिपौरुषे विशेषमाह व्यासः। "प्रपितामहेन यद्भुक्तं तत्पुत्रेण विना च तम्। तौ विना तस्य पित्रा च तस्य भोगस्त्रिपौरुषः"। इति प्रसङ्गादुक्तम्। वर्द्धमानोपाध्यायधृत ज्योतिर्वचनम्। "एकातिथिः क्वापि तदादि भूतातिथिस्तृतीयेति तिथिप्रबन्धः। मासः स चान्द्रस्त्रिथिनाम्नि यस्माच्चान्द्रीं कलामाप्य सदा प्रवृत्तः"। एकातिथिः प्रतिपत् तदातिभूता पञ्चदशी यदि तृतीया भवति तदा प्रतिपदादिपञ्चदश्यन्तस्त्रिंशत्तिथिसमुदाय एको मासः एवं द्वितीयादि प्रतिपदन्तस्तृतीयादि द्वितीयान्त इति तस्य चान्द्रत्वे हेतुमाह यस्माच्चान्द्रीं कलां वृद्धिक्षयार्हत्वेन प्राप्य तिथिनाम्नि तिथिसमुदायात्मके प्रवृत्तस्तिथेरेकैककलाक्रियारूपत्वात् तथा च हेमाद्रिकालमाधवीययोः स्कान्दे प्रभासखण्डम्। "अमा षोडशभागेन देवि प्रोक्ता महाकला।

संस्थिता परमा माया देहिनां देहधारिणी। अमादिपौर्ण-मास्यन्ता या एव शशिनः कलाः। तिथयस्ताः समाख्याताः षोड़शैव वरानने"। चन्द्रमण्डलस्य षोड़शभागेन परिमिता देहधारिणी आधारशक्तिरूपा अमानाम्नी महाकला प्रोक्ता क्षयोदयरहितत्वान्नित्या स्रक्सूत्रवत् सर्वानुस्यूता तदन्याः पञ्च-दशकलाः पौर्णमास्यन्ताः प्रतिपदादितिथिविशेषरूपा इति षोड़शैव कलास्तिथय इति सिद्धान्तशिरोमणौ। "तन्यन्ते कलिका यस्मात्तस्मात्तास्तिथयः स्मृताः"। कलिकाः कलाः। सूर्य्यसिद्धान्ते। "नाड़ीषष्ट्या तु नाक्षत्रमहोरात्रं प्रचक्षते। तत्त्रिंशता भवेन्मासः सावनोऽर्कोदयैस्तथा॥ ऐन्दवस्तिथि-भिस्तद्वत् संक्रान्त्या सौर उच्यते"॥ तत्त्रिंशता नाक्षत्रदिन-त्रिंशता मासो नाक्षत्रमासः। तथा त्रिंशताऽर्कोदयैस्तु राशि-विशेषावस्थानवशेन लग्नस्य यावन्ति पलविपलानि रविभोगः स्यात् तदधिकषष्टिदण्डैः सावनमहोरात्रं भवतीति तथा च सिद्धान्तसन्दर्भे "सावनं दण्डाः षष्टिरहः स्वलग्नखगुणांशाढ्या-स्तदैनभवेत्" दण्डाः षष्टिस्वलग्नखगुणांशाढ्याः सावनमह-स्तदैनञ्च तेन सावनैनयोः पर्य्यायता। ऐनमित्यनेन स्वलग्न-मित्यत्र स्वपदेन रविभुज्यमानं प्रतीयते। खगुणांशास्त्रिंशांश प्रथमान्त-तृतीयान्तपदैर्लग्नदण्ड-पलान्याह दीपिकायाम्। "रामो गवेदैर्जलधिस्तु मैत्रै र्बाणो रसैः पञ्चखसागरैश्च। बाणः कुवेदैर्विषयोऽङ्कयुग्मैः क्रमोत्क्रमान्मेषतुलादिमानम्"लग्नानां दिनभोगस्तु लग्नदण्डपलानि द्विगुणीकृतानि पलविपल-रूपाणि औत्सर्गिकाणि त्रिंशद्दिनन्यूनाधिकवशात् किञ्चि-दधिकन्यूनानि च ततश्च दिनं दिनं यानि यानि भुक्तानि तानि रव्युदयलग्नस्य राशिशेषप्रविष्टानि अवशिष्टानि दिवसी-यानि। एवं तत्तत्समलग्नपलविपलानि दिनशेषप्रविष्टानि

अवशिष्टानि रात्रिसम्बन्धीनि ज्ञात्वा आद्यन्तलग्नमानयुक्तम-ध्यलग्नपञ्चमानैर्दिनरात्रिमानान्यवधार्य प्रातःकालविभागादि-निर्णयः। अतः सावनसंवत्सरेण एकादिनाधिकवत्सरो नाक्षत्रो भवतीत्यनयोर्भेदः। नाक्षत्रमासफलन्तु। "आयुर्दाये स्मृतं प्राज्ञैर्नाक्षत्रं षष्टिनाड़िकम्" इति तद्वदिति त्रिंशता एवं यत्किञ्चित्त्रिंशत्तिथ्यात्मकोऽयं मासशब्दः प्रयुक्तः स "एकाहेन तु षण्मासा यदा स्युरपि वा त्रिभिः। न्यूनाः संवत्सरश्चैव स्यातां षाण्मासिके तदा" ॥ इति कात्यायनेनोक्तस्य "षाण्मा-सिकाब्दिके श्राद्धे स्यातां पूर्वेद्युरेव ते। मासिकानि स्वकीये तु दिवसे द्वादशापि च" इति हेमाद्रिमाधवाचार्य्यधृतपैठीन-स्युक्तवचनस्य च विषये गौणमासपरिचायकः। पूर्वोक्तयुक्त्या शुक्लप्रतिपदादेरेव मासशब्दाभिधेयत्वात् स्वकीये दिवसे मृताहे एव पूर्वतिथौ षाण्मासिकाब्दिकविधानात् एकाहेन तु षाण्मासा इत्यत्रापि तथात्वात् पूर्वमृततिथिं विहायापरमृततिथि-मादाय मासवर्षगणना प्रसिद्धा। अतएवाधिकरणस्य कर्मत्व-विवक्षया प्रागुक्तमधीष्ट इत्यादिसूत्रेण मासिकाब्दिकपद-सिद्धिः निमित्तसप्तम्यान्तु तदसम्भवात् न तथा एतेन पूर्वमृत-तिथिमादाय मासवर्षगणनेन मृततिथेः पूर्वतिथिं विहाय तत्-पूर्वदिने मैथिलानां यत् षाण्मासिकद्वयकरणन्तद्धेयमिति सिद्धान्तचिन्तामणौ चान्द्रे मासि अन्यथा व्युत्पत्तिर्दर्शिता यथा। "मस्यन्ते परमीयन्ते स्वकालाद्वृद्धिहानितः। मास एते स्मृता मासास्त्रिंशत्तिथिसमन्विताः" ॥ मासश्चन्द्रस्य वृद्धिक्ष-याभ्यां स्वकालाश्चन्द्रसम्बन्धिकाला मस्यन्त इति मासाः। तस्मात् लक्षणप्रयोगद्वयाल्लघुहारीतोक्तात् मासादिमध्यसमाप्तिकीर्त्तनात् प्रयोगोपाधिसहकृतान्मासपदस्य दर्शान्त एव मुख्यत्वं सौरादिषु लक्षणया गौण्या वा प्रयोगोपपत्तेर्न रूढ़िशक्तिकल्पनेति। तदुक्तं

भट्टपादैः "लब्धात्मिका सती रूढ़िर्भवेद्योगापहारिणी । कल्पनीया तु लभते नात्मानं योगबाधतः" ॥ न च सौरादिष्वपि चन्द्रादिक्रियाया अव्यभिचाराल्लघुहारीतोक्तवद्विष्णुधर्मोत्तराभिहितोपाधिचतुष्टयसद्भावाद्योगद्वयात् प्रवृत्तिरस्तु मासशब्दस्येति वाच्यं लघुहारीतोक्तस्यादिमध्यसमाप्तिकीर्त्तनस्वरसादुपाधित्वं विष्णुधर्मोत्तरोक्तस्य तु तथात्वाभावात् न तथात्वमिति । वस्तुतस्तु चान्द्र एव मासे चन्द्रक्रियाया वृद्धिक्षयरूपाया असाधारणत्वेन प्रवृत्तिनिमित्तत्वं सौरादौ तु सूर्य्यादिक्रियाणां तथेति । अतः कथं सौरादौ मासपदप्रयोगावसरः । तथा च शारीरकटीकायां वाचस्पतिमिश्राः असाधारणत्वेन हि व्यपदेशा भवन्ति । यथा क्षितिजलपवनबीजादिसामग्रीसमवधानजन्माप्यङ्कुरः शालिबीजजन्यत्वेन व्यपदिश्यते शाल्यङ्कुर इति न क्षित्यादिभिः तेषां कार्य्यान्तरेऽपि साधारणत्वात् तर्हि दर्शान्तवच्चन्द्रक्रियाया असाधारण्येन पौर्णमास्यन्तेऽपि कथं न प्रवृत्तिनिमित्तत्वमिति चेदुपाधित्वप्रतिपादकवचनाभावात् किन्तु ब्रह्मपुराणादौ प्रौष्ठपदं कृष्णपक्षादावश्वयुगादिप्रयोगात्तथा त्वं गौणत्वावसीयते इति । एतत् सर्वं क्रियैव काल इति मतानुसारादुक्तं तदतिरिक्तकालवादिमते तु सर्वत्र तत्तत्क्रियोपलक्षितः काल इति विशेषः । तथा च विष्णुपुराणे । "कालस्वरूपं रूपं तद्विष्णोर्मैत्रेय वर्त्तते" । विष्णुधर्मोत्तरे । "अनादिनिधनः कालो रुद्रः सङ्कर्षणात्मकः । कलनात् सर्वभूतानां स कालः परिकीर्त्तितः" ॥ कलनात् लयकरणात् । तथा च विष्णुः । "ये समर्था जगत्यस्मिन् सृष्टिसंहारकारिणः । तेऽपि कालेन लीयन्ते कालो हि बलवत्तरः" ॥

अथ चैत्रादिशब्दानां चान्द्रवाचिता । लघुहारीतः । "चक्रवत् परिवर्त्तेत सूर्य्यः कालवशादयतः । अतः संवत्सरं

श्राद्धं कर्त्तव्यं मासचिह्नितम् ॥ मासचिह्नन्तु कर्त्तव्यं पौष-माघाद्यमेव हि । यतस्तत्र विधानेन स मासः परिकीर्त्तितः"॥ चान्द्रग्रहणे हेतुवन्निगदमाह यतः सूर्य्यः कालवशाच्चक्रवत् गते-र्मन्दत्वामन्दत्वाभ्यां गच्छेत् तथा च एकराशिमुपभुञ्जानो रविर्मेषादौ मन्दगत्या कामप्येकां तिथिं हिस्पृशति तुलादौ शीघ्रगत्या कामप्येकां तिथिं न स्पृशति इति पूर्व्वस्य संशयः। उत्तरत्र कर्मणो लोपः स्यादतो मासचिह्नितं शुक्लादिमास-चिह्नितं कर्त्तव्यम् अत्र एकस्यास्तिथेर्द्दित्वलोपयोरभावात् अथातः शुक्लादित्वं कुत इति चेत् लघुहारीतेनैव इन्द्राग्नी-त्यादिना निरुपपदमासशब्दस्य शुक्लादौ सङ्केतमभिधाय चक्रवदित्यभिधानात् एतेन "पार्व्वणे त्वष्टका श्राद्धे चान्द्रमिष्टं तथाब्दिके" इति पारस्करीये पार्व्वणादिसाहचर्य्यात् आब्दिक-श्राद्धमपि कृष्णादिमासेनेति पाश्चात्यमतं निरस्तम्। हेतु-वन्निगदाधिकरणन्तु प्रमाणलक्षणे यथा हेतुर्व्वाव्यपदिश्यते इति हेतुवन्निगदः शूर्पेण जुहोति तेन ह्यन्नं क्रियते इति श्रूयते। अत्र हिशब्द श्रुतेः स्तुतौ च लक्षणाप्रसङ्गादन्नकरणत्वं शूर्प-होमे हेतुरुद्दिष्टः तथा च यद् यदन्नकरणं दर्व्यादि तेन तेन होतव्यमिति प्राप्तेराद्यान्तः शूर्पस्य होमकरणत्वं तृतीयया श्रुत्याऽवगम्यते विध्यर्थस्य च न हेत्वपेक्षा तस्मात् शूर्पस्तुतिः। यत्तु हेतौ हिशब्द श्रुतिरिति तन्न न हि साक्षाद्दर्व्यादिना शक्यमन्नं कर्त्तुम् अथ शक्यं प्रणाल्या कथं तर्हि श्रुतिः प्रवर्त्तिता हेतुवचनस्यानपेक्षप्रवर्त्तकवाक्यस्यैव श्रुतिता। तथा चाभिधातुं पदेऽन्यस्मिन् निरपेक्षरवाश्रुतिरिति। ननु शूर्पस्तुतावपि लक्षणा स्यात्। न हि तेनापि साक्षादन्नं क्रियते वाढ़ं स्तुतिर्हि अनुवादकत्वाद् यथा प्राप्तलक्षणां सहेत। न विधिरपूर्व्वार्थक-त्वात्। ततश्चात्र यस्तुपलिखनं तत्प्रमादकृतमिति मन्तव्यम्

अतएव भट्टवार्त्तिकेनापि ये हेतुर्वाक्यगद्यन्ते हिशब्दादिभिर्न तु परमार्थहेतव इत्युक्तम् । एवञ्च यद्यपि "मृताहनि तु कर्त्तव्यं प्रतिमासन्तु वत्सरम्" । इत्यादिवचनोपात्तेषु मासिकश्राद्धेषु तत्तन्मासीयतत्तत्तिथिविशेषविहितकर्मसु च हेतुर्वाक्यगदस्मिन्न-नीयः दर्शादेस्तु वचनानुपात्तत्वान्नाकाङ्क्षावसर इति । अतः सांवत्सरं श्राद्धमिति प्रदर्शनमात्रं तेन मासिकश्राद्धजन्मतिथि क्षत्यतत्तन्मासीय तत्तत्तिथिविशेषविहितकर्माण्येन्वेत्थं तत्र शुक्ला-देरविशेषात् पुनरनध्यवसायः स्यात् तन्निरासार्थमाह पौषमाघा-श्यमेव होति सपौषादिः कीदृक् तस्य चान्द्रे वा कथं शक्तिरित्य-त आह यतस्तत्र विधानेन शास्त्रेण तच्च इन्द्राग्नी इत्याद्युक्तमेवेति-श्राद्धविवेकक्षत् तत्र मनोरमं लघुहारीतोक्तौ तदुक्तवाक्यान्तरस्य हेतुत्वकल्पनाया अन्याय्यत्वात् । किन्तु विधानेन श्रुत्यादिना तथा च श्रुतिः । "सा वैशाखस्यामावास्या या रोहिण्या सम्ब-ध्यते" इति । "अश्विन्यथ भरणी बहुलापादतश्च कीर्त्तितो मेषः । वृषभो बहुलाशेषं रोहिण्यर्द्धञ्च मृगशिरसः । मृग-शिरसोऽर्द्धं चार्द्रा च पुनर्वसोश्चांशकास्त्रयो मिथुनम् । पादः पुनर्वसोरन्त्यः पुष्योऽश्लेषा च कर्कटः । सिंहोऽथ मघा पूर्व-फल्गुनीपाद उत्तरायाः । तच्छेषं हस्ताचित्रार्द्धञ्च कन्यकाख्यः । तौलिनि चित्रार्द्धं स्वातीपादत्रयं विशाखायाः । अलिनि विशा-खायाः पादस्तथानुराधान्विता ज्येष्ठा । मूलं पूर्वाषाढ़ा प्रथम-श्चाप्युत्तरांशको धन्वी । मकरस्तत्परिशेषं श्रवणापूर्वं धनिष्ठा-र्द्धम् । कुम्भोऽथ धनिष्ठार्द्धं शतभिषापादत्रयं पूर्वायाः । भाद्र-पदाशेषस्तथोत्तरारेवतीमीनः" इति । राजमार्त्तण्डोक्त वृषराशि-भोग्यरोहिणीनक्षत्रयुक्तामावास्या वैशाखस्येति प्रतिपादयन्ती श्रुतिश्चान्द्र एव शक्तिं बोधयति सौरवैशाखे तदसम्भवात् । तथा हि "सूर्य्याचन्द्रमसोर्यः परः सन्निकर्षः सामावास्या" इति

गोभिलसूत्राच्चन्द्रार्कयोरेकराश्यवस्थानममावास्येति वृषस्थरवावेव रोहिणीयुक्तामावास्याया: सम्भवात् । कृत्यचिन्तामणौ व्यास: । "मीनादिस्थो रविर्येषामारम्भप्रथमक्षणे । भवेत्तेऽब्दे चान्द्रमासाश्चैत्राद्या द्वादश स्मृता:"। येषां शुक्लप्रतिपदादि दर्शान्तानाम् आरम्भप्रथमक्षणे आद्यक्रियाद्यक्षमये मीनमेषादिस्थो रविर्भवेत् । ते वर्षे चान्द्रमासाश्चैत्रवैशाखादि द्वादशसंज्ञकत्वात् द्वादश स्मृता: । न पुनर्मलमासेऽपि संज्ञान्तरम् । किन्तु द्वितीयचैत्रादिरिति त्रयोदशापि द्वादशसंज्ञका इति व्यासेनोपदेशिकौ शुक्लादि मासे चैत्रादि शक्तिरभिहितेति । तदुक्तं "शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यत: सिद्धपदस्य वृद्धा:" । अतएव "षष्ट्या तु दिवसैर्मास: कथितो वादरायणै:" । इति एकलक्षणशालित्वे न मौणमेकत्वमुक्तं मलमासेऽपि वसन्तादेर्मासद्वयात्मकत्वार्थम् । चातुर्मास्यादि व्रतान्तरालिकमलमासकर्त्तव्यत्वार्थञ्च न तु वास्तवमेकत्वार्थं श्रुतिस्मृतिविरोधात् । तथा च श्रुति: "द्वादशमासा: संवत्सर: क्वचित्त्रयोदश मासा: संवत्सर:" इति त्रयोदशेत्यधिमासे स्मृति: । "यस्मिन्नब्दे द्वादशैकश्च यव्य:" इति । यव्यो मास इति यव्या मासा: स्वमेक: संवत्सर इति शतपथश्रुत्या यव्यस्वमेकशब्दयोर्मासवर्षपर्य्यायतोक्ता । यत्तु नृसिंहपुराणम् । "पञ्चमासान् हरौ सुप्ते देशे तत्र भयं भवेत् । ब्रह्महा च भवेद्राजा संग्रामे भयमाप्नुयात्" इति । तस्मिन्मिथुनार्कमलमासपाते तस्याप्याषाढत्वात् तत्र हरिशयने सति दोषाभिधायकं तेन तत्र कर्कटे प्रकृताषाढ़ एव हरिशयनम् । "तत्र यद्विहितं कर्म उत्तरे मासि कारयेत्" इत्येकमूलत्वात् । यत्र तु मिथुनार्के हरिशयनं तत्र कर्कटादौ मलमासपाते पञ्चमासत्वेऽपि न दोष: ।

चान्द्राषाढ़ादिष्वेव शयनादि विधानात् । तथा च मत्स्य-पुराणम् । "शेते विष्णुः सदाषाढ़े भाद्रे च परिवर्त्तते । कार्त्तिके परिबुध्येत शुक्लपक्षे हरेर्दिने" । सौरपरत्वे कर्कटादि शयनादौ सदेत्यनुपपत्तेः । ततश्च व्यासवचनान्मीनस्थरविप्रारब्धशुक्ल-प्रतिपदादिदर्शान्तश्चैत्रो मास इति एवं वैशाखादिरपि । एतेन मीनस्थरविप्रारब्धादीनां गुरुत्वान्मीनस्थरब्धादीनां लघु-त्वात् "नागृहीतविशेषणा बुद्धिर्विशेष्ये चोपजायते" इति न्यायाच्च सौर एव शक्तिरिति निरस्तं वचनस्य नातिभार इति न्यायात् । अतएव प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्य-पीत्युक्तम् अतएव सौरे कृष्णप्रतिपदादि पौर्णमास्यन्ते दाय-चैत्रादि पदप्रयोगः सगौण्या लक्षणया वा वेदितव्य इति चान्द्रवदुभयत्रोपदेशिकशक्तेरभावात् एवं नानार्थतापि न तथा चान्द्र एव चैत्रादिपदानां शक्तौ नक्षत्रेण युक्तः कालः । सास्मिन् पौर्णमासीति संज्ञायामिति सूत्राभ्यां पाणिनेः स्वरसोऽवग-म्यते । अतएव जयादित्येन परसूत्रे दशरात्रादि व्यावृत्त्यर्थं मासार्द्धमाससंवत्सराणाम् इयं संज्ञेति अभिधाय पौषमासः पौषोऽर्द्धमासः पौषः संवत्सर इत्युदाहृतम् एतत्समय प्रकाश-कृतापि लिखितं तत्र पुष्ययुक्ता पौर्णमासी पौषी सास्मिन् मासे इति पौष एवं माघादिः अभिधानञ्च "पुष्ययुक्ता पौर्ण-मासी पौषीमासे तु यत्र सा नाम्ना सपौषो माघा-द्याश्चैवमेकादशापरे" । एवमर्द्धमासेऽपि संवत्सरे तु विशेषो वराहसंहितादैवज्ञमनोहरकृत्यचिन्तामणिषु नक्षत्रेण सहोद-यमस्तं याति येन सुरमन्त्रीतत्संज्ञं वक्तव्यम् वर्षं मासक्रमे-णैव । वर्षाणि कार्त्तिकादीनि आग्नेयाद्भद्वयानुयोगीनि क्रम-शस्त्रिभञ्च पञ्चममन्त्यमुपान्त्यञ्च विज्ञेयम् । नक्षत्रेण गुरु-भुज्यमाननक्षत्रेण आग्नेयं कृत्तिका । पञ्चमं फाल्गुनं वर्षम्

अन्त्यमाश्विनम् उपान्त्यं भाद्रम्। "अन्त्योपान्त्यौ त्रिभौ ज्ञेयौ फाल्गुनश्च त्रिभो मतः। शेषामासाद्विभाज्ञेयाः कृत्तिकादि व्यवस्थया" इति वचनात्। "द्वे द्वे चित्रादि ताराणां पूर्णपर्वेन्दुसङ्गते। मासाश्चैत्रादयो ज्ञेयास्त्रिकैः षष्ठान्त्यसप्तमाः"। इति सङ्कर्षणकाण्डाच्च। पूर्णपर्वेन्दुसङ्गते पौर्णमासीसंयुते तदेकवाक्यतया पूर्ववचने पौर्णमासीलाभः यथा मासानां पौर्णमास्यां कृत्तिकादिसम्बन्धात् कार्त्तिकादित्वं तथा वर्षाणां बृहस्पतेरस्तोदयसम्बन्धात् कार्त्तिकादित्वं तेन कृत्तिकारोहिण्योरेकतरस्मिन् बृहस्पतेरस्तोदयैकतरलाभे कार्त्तिकवर्षम् एवं मार्गशीर्षादि यत्र वर्षद्वयघटकयोर्नक्षत्रयोरेकतरस्मिन्नस्तंगतो गुरुरन्यस्मिन्नुदेति तत्र का गतिरिति चेत् कार्त्तिकोत्तरं मार्गशीर्षं तदुत्तरपौषमित्यादि क्रमाद्गतिः। एव महाज्यैष्ठां ज्यैष्ठसंवत्सराभिधानम् अनया दिशा ज्ञेयम्। यथा राजमार्त्तण्डकृत्यचिन्तामण्योः "ज्यैष्ठे संवत्सरे चैव ज्येष्ठमासस्य पूर्णिमा। ज्येष्ठाभेन समा युक्ता महाज्यैष्ठी प्रकीर्त्तिता"। संवत्सरशब्दोऽत्र वर्षमात्रपर्य्यायः। न तु संवत्सर परिवत्सर इदावत्सरानुवत्सर उदावत्सरपञ्चकान्तर्गतवत्सरविशेषपरः। तदवगमकन्तु "शकाब्दात् पञ्चभिः शेषात् समाद्यादिषु वत्सराः। सम्परीदानु पूर्वाश्च तथोदापूर्वका मताः"। संवत्सरफलमुक्तं विष्णुधर्मोत्तरे। "संवत्सरे तथा दानं तिलस्य तु महाफलम्। परिपूर्वे तथा दानं यवानाञ्च द्विजोत्तमाः। इदा पूर्वेऽन्नवस्त्राणां धान्यानाञ्चानु पूर्वके। उदासंवत्सरे दानं रजतस्य महाफलम्। ज्योतिर्विदस्त्विज्यमध्यात् प्रभवादेश्च सम्भवम्। ऊचुस्तद्वत् समाद्यादि वर्षाणामपि सम्भवम्" इज्यमध्याद्गुरुमध्यभोगगणनात्। प्रभवादि वर्षषष्टिः। गङ्गावाक्यावल्यामपि ज्यैष्ठे संवत्सरे इत्येव पाठः। किन्तु ज्यैष्ठ-

संवत्सरपदार्थानभिज्ञैरेव तत्रान्यथा व्याख्यातं ज्येष्ठानक्षत्रयुक्ता यदि ज्यैष्ठी पूर्णिमा संवत्सरे स्यात् तदा महाज्यैष्ठो भवति संवत्सरस्तु संवत्सरपरिवत्सर इत्यादि पञ्चविधवत्सरेषु वत्सरविशेष इति। तत्र ज्यैष्ठ इत्यस्य संवत्सरविशेषेणस्यानर्थक्यात्। एतेन तद्दृष्ट्वा केचित् संवत्सरे यदि स्यादिति परिकल्प्य पठितमिति तद्धेयम्। तथा चाद्भुतसागरे द्वादशवर्षफलप्रस्तावे क्रमशो विष्णुधर्मोत्तरवृद्धगार्ग्यवराहसंहितावचनानि "ज्यैष्ठामूलोपगे जीवे वर्षं स्याच्छक्रदैवतम्। पीड़ाकरं धर्मभृतां सम्यक् श्रेष्ठमहीभृताम्॥ ज्येष्ठमूले च नक्षत्रे चरेद्यदि बृहस्पतिः। ऐन्द्रः संवत्सरः स स्यात् सर्वभूताशिवप्रदः"॥ शक्रदैवतं ज्यैष्ठं वर्षं ज्येष्ठायाः शक्रदैवतत्वात्। एवमैन्द्रोऽपि "ज्यैष्ठे ज्ञातिकुलश्रेणिश्रेष्ठानृपाः सर्वधर्मज्ञाः। "पीड्यन्ते सर्वधान्यानि हित्वा कङ्गुशमीजानि"। शमी शिम्बा तत्प्रभवमुद्गकलायादीनि। "माषादयः शमीधान्ये शूकधान्ये यवादयः" इत्यमरः। शेषवचनं कृत्याचिन्तामणावपि इत्यस्य चैत्रादीनां वर्षवाचित्वात् तद्व्यावृत्तये सङ्कल्पवाक्येऽप्यमुके मासीत्युच्यते। एवं पक्षपदं तिथिपदञ्च शुक्लगुणहितीयादिसंज्ञकानां व्यावृत्तये। अतएव भविष्यपुराणादौ "माघे मासि सिते पक्षे सप्तमी कोटिभास्करा"। इत्युक्तम् अतो माघशुक्लसप्तम्यामित्यादिवाक्यरचना मैथिलानां हेया। विद्याकरवाजपेयिनापि विहिताविहितत्वसन्देहे क्रममात्रविरोधिरूपादविहितकरणाद्विहिताकरणेऽपि महान् दोष इति करणमेव न्याय्यमित्युक्तम्। तदस्तु प्रकृतमनुसरामः। न च सौरेऽपि पौषमाघादौ तादृशो व्युत्पत्तिः सम्भवति। पुष्यमघादियोगस्य सौरे पौर्णमास्यामसम्भवात्तथा च गोभिलः। "सूर्याचन्द्रमसायः परो विप्रकर्षः सा पौर्णमासी" इत्यत्र

पौर्णमास्यन्तयामि सूर्य्याचन्द्रमसोः सप्तमराश्यवस्थानरूपपरम-विप्रकर्षनियमात् स च पुष्यकर्कटस्थे चन्द्रे धनुःस्थे रवौ न भवेत् षड्ष्टकेनावस्थानात् किन्तु मकरस्थे रवौ सम्भवति तत्र सप्तमेनावस्थानात् ततश्च सा व्युत्पत्तिश्चान्द्र एव पौषे न तु सौरे। तथा चान्द्र एव मासः पौषः एवं माघादिषु ज्ञेयम्। अतएव लघुहारीतेन प्रथमतः पौषमाघाद्यमेव ह्यौत्युक्तं न च चैत्रादौति पौषमाघाश्विनेषु सौरेषु सर्वथा योगासम्भवात् चैत्रादौ कदाचित् सौरेऽपि योगासम्भवात् तर्हि उक्तयोगा-द्यौगिकश्चैत्रादिशब्दोऽस्तु किं मौनस्थरविप्रारब्धेत्यादिना रूढ़ि-कल्पनया मैवम् अन्त्योपान्त्याविल्याद्युक्तप्रकारेण रोहिण्यादौ योगस्य व्यभिचारात्। न च तदत्यन्ताभावाभावरूपयोग्यता-वशादपचत्यपि सूपकारः पाचक इतिवत् अत्रापि तथास्त्विति दौचितोक्तं युक्तम् इति वाच्यं व्यक्तिभेदेन क्रत्तद्धितवाच्ययोग्य-ताभावात्तत्र योगकल्पनन्तु उदात्तादिस्वरसमेदज्ञापनाय यदुक्तं भट्टपादैः "यत्रार्थस्य विसंवादः प्रत्यक्षेणोपपद्यते। स्वरसंस्कार-मात्रार्थो तत्र स्यात् पाणिनिस्मृतिः॥ अथ सा वैशाख्या-मावास्या या रोहिण्यासम्बध्यते" इति श्रुतेर्वैशाख एक एव चान्द्रः श्रौतः सौरास्तु माघादयो द्वादशैव श्रौतास्तथा च श्रुतिः। "तपस्तपस्यौ शैशिरावृतुः मधुश्च माधवश्च वास-न्तिकावृतुः शुक्रश्च शुचिश्च ग्रैष्मावृतुः। अथैतदुदगयनं देवा-नान्दिनम्॥ नभाश्च नभस्यश्च वार्षिकावृतुः इषश्च ऊर्ज्जश्च शारदावृतुः सहाश्च सहस्यश्च हैमन्तिकावृतुः अथैतद्दक्षिणायनं देवानां रात्रिः" इति। अत्रायनस्य सौरत्वेन तद्घटकः तप-स्तपस्यादौनामपि सौरपरतेति। अतो भूयसामनुरोधेन वैशाखादयः सौरवाचिनोऽवधार्य्यन्ते मौनस्थरविप्रारब्धेत्यादौ सौरागमसापेक्षा चान्द्रावगतिरिति सौर एव मुख्य इति

जीमूतवाहनोक्तं युक्तमिति तथा च "विरोधो यत्र वाक्यानां प्रामाण्यं तत्र भूयसाम् । तुल्यप्रमाणसत्त्वे तु न्याय एव प्रवर्त्तकः" इति तत्र "सा वैशाखस्यामावास्या या रोहिण्या सम्बध्यते" इति श्रुत्या चान्द्र एवौपदेशिकी शक्तिः क्लृप्ता सौरे तु तपस्तपस्यावित्यादिश्रुत्या पर्य्यायद्वारा शक्तिः कल्प्या सा च क्लृप्तशक्तिविरोधाद्भवितुं नार्हतीति तपस्तपस्यादिरिति श्रुतेरयनारम्भकमासपरिचायकत्वमेव तथा च विष्णुपुराणं "मासः पक्षद्वयेनोक्तो द्वौ मासावर्कजावृतुः । ऋतुत्रयञ्चाप्ययनं द्वे अयने वर्षसंज्ञिते । तथा कर्कटादिस्थिते भानौ दक्षिणायनमुच्यते । उत्तरायणमप्युक्तं मकरस्थे दिवाकरे" दक्षिणमयनं गमनं रवेः । एवमुत्तरायणमिति । अतस्तस्याः शक्तिग्राहकत्वे प्रमाणाभावात् । एतन्मकरादिकर्कटाद्यर्कायननिरूपणं श्रौतस्मार्त्तकर्मार्थं धनुरर्कादौ सूर्य्यसिद्धान्ताभिहितोदगयनादिनिरूपणन्तु रविगत्यनुसारेण दिनमानादिज्ञानार्थमनयोर्न विरोधः । सौरप्रतीतिसापेक्षा चान्द्रप्रतीतिरित्यत्रापि "मीनादिस्थो रविर्येषामारम्भप्रथमक्षणे" । इत्यादिवाचनिकेऽर्थे लाघवानवकाशात् एतेन प्रयोगबाहुल्यात् सौर एव वाच्यो न तु चान्द्रः स्वल्पप्रयोगदर्शनादित्यपि परास्तम् अन्यथाऽक्षपादादिशब्दानामिन्द्रियचरणादिमात्रवाचकता स्यान्न विभीतकरथाङ्गादिवाचकत्वं तदुक्तं वार्त्तिककृद्भिः । "न चाल्पत्वबहुत्वाभ्यां प्रयोगाणां विशिष्यते । वाच्यवाचकभावोऽयमक्षपादादिशब्दवत् । विभीतकेऽप्यक्षशब्दो यद्यप्यल्पैः प्रयुज्यते । तथापि वाचकस्तस्य जायते शकटाङ्गवत्" ॥ शकटाङ्गं चक्रद्वयधारकदण्डः । श्रुतौ सौरे वैशाखादिपदानामेकैकस्य बहुप्रयोगाभावाच्च व्यक्तं ब्रह्मपुराणम् । "चैत्रे मासि जगत् ब्रह्मा ससर्ज्ज प्रथमेऽहनि । शुक्लपक्षे समग्रन्तु तदा सूर्य्योदये सति ॥

प्रवर्त्तयामास तदा कालस्य गणनामपि। ग्रहान्नाक्षत्रानृतून् मासान् वत्सरान् वत्सराधिपान्" ॥ इत्यनेन मासर्त्तुवत्सराणां चान्द्रत्वमुक्तम्। ब्रह्मसिद्धान्तेऽपि "चैत्रसितादेरुदयाद्भानो-र्वर्षर्त्तुमासयुगकल्पाः। सृष्ट्यादौ लङ्कायामिह प्रवृत्ता दिनै-र्वत्स" ॥ चैत्रसितादेश्चैत्रशुक्लप्रतिपदस्तामारभ्येत्यर्थः। दिनै-स्तिथिभिः कृत्यरत्नाकरेऽप्येवम्।

अथ मलमासः। ननु यथा सौरे तिथिद्वयलाभे कर्म्मणि संशयः। तथा चान्द्रेऽपि मलमासे सति द्विश्चैत्रादिना मृत-तिथ्यादेर्द्वित्वात् पुनरपि कर्म्मणि संशयः स्यात् अत्राप्याह लघुहारीतः। "इन्द्राग्नी यत्र हूयेते" इत्युक्ता "तमतिक्रम्य तु रविर्यदा गच्छेत् कथञ्चन। आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्रकृतः स्मृतः ॥ तस्मिंस्तु प्रकृते मासि कुर्य्यात् श्राद्धं यथा-विधि। तथैवाभ्युदयं कार्य्यं नित्यमेवं हि सर्वदा" ॥ यदा तं दर्शान्तमासमतिक्रम्य तत्पूर्वमासान्त्यक्षणवृत्तिराशिस्थः सन् सूर्य्योऽतिवाह्य गच्छेत् मासान्तरे राश्यन्तरसंयोगं गच्छेत्त-दाद्योऽतिक्रान्तो मासो मलिम्लुचो ज्ञेयः मली सन् म्लोचति गच्छतीति मलिम्लुचः अस्य मलित्वं कठशाखाश्वलायनब्राह्म-णाभ्यामग्रे स्फुटी भविष्यति। द्वितीयस्तु प्रकृतः शुद्धः कर्मार्ह-त्वात् तदेवोपपादयति तस्मिंश्चेति अत्रापि श्राद्धमित्यादिप्रद-र्शनमात्रं वक्ष्यमाणवचनजातात् ज्योतिषे। "अमावास्याद्वयं यत्र रविसंक्रान्तिवर्जितम्। मलमासः स विज्ञेयो विष्णुः स्वपिति कर्कटे"। अमावास्याद्वयम् अमावास्यान्त्यक्षणद्वयं रविसंक्रान्तिभ्यां क्रियोत्पत्तिरूपोत्तरसंयोगरूपाभ्यां यथाक्रमं वर्जितं तेन दर्शा-न्त्यक्षणद्वययोरेव क्रियोत्पत्त्युत्तरसंयोगाभ्यां यथाक्रमं संयोगि-नाधिमासः। संक्रान्तेरेकक्षणे क्रियोत्पत्तिरपरक्षणे पूर्व-संयोगनाशः उत्तरसंयोगोत्पत्तिश्चेति क्षणद्वये वृत्तित्वमिति

मीमांसकसिद्धान्तात् । एतेन क्षणचतुष्टयवादिनैयायिक-मतानुसारिणा यदत्र दूषणमुक्तं तद्धेयमिति श्राद्धविवेकेऽपि "अमावास्याद्वयं यत्र रविसंक्रान्तिवर्जितम्" इत्यत्रामावास्या-पदेन तदन्तो लक्ष्यते । संक्रान्तिशब्देन क्रियाभिधीयते प्रथमा-वास्यान्त्यक्षण प्राक् क्षण एव संक्रमणे प्रतिपदादेर्मासस्य लङ्घनं भवति तथा हि पूर्वदर्शान्तक्षण-प्राक्क्षणे संक्रमणे दर्शा-न्तक्षणे च राश्यन्तरसंयोगः अपरक्षणे च प्रतिपदारम्भे प्रतिपदा-देर्मासस्य दर्शान्तद्वयक्रोडीकृतस्य एकराश्यवस्थितेन रविणा लङ्घनं भवति पूर्वदर्शान्तक्षणे च क्रियोत्पत्तौ नैषा प्रक्रिया सम्भ-वतीत्युक्तम् । तन्मते तु अन्त्यामावास्यान्त्यक्षणे क्रियोत्पत्तौ अमावास्यान्त्यक्षणद्वयस्य रविक्रिया वर्जितत्वाभावादेकराशिस्थ-रविणा चान्द्रमासलङ्घनेऽपि मलमासाभावापत्तिरिष्टापत्तौ तु तृतीयाब्दे मलमासपातनियमभङ्गप्रसङ्गः । पूर्वमासस्य मलमासत्वाभावेऽप्यपरस्य मिथुनादिस्थरव्यारब्धत्वेन द्विरा-षाढ़त्वादि-प्रसङ्गश्च स्यादिति ततश्चामावास्याद्वयमित्यस्य पूर्वोक्तव्याख्यायामपि प्रतिपदादेरेव यथा लङ्घनं भवति तथाभि-हितम् अतो नामावास्यादित्वं तदन्तादित्वं वा मासस्य तथात्वे वर्षे षण्णां मासानां लोपः स्यात् एकस्य दर्शस्य तदन्तस्य वा मासद्वयघटकत्वे दर्शान्तक्षणे संक्रान्तौ पूर्वस्य परस्य च रविलङ्घितत्वाभावे तृतीयाब्दे मलमासपातनियमभङ्गः स्यात् तदानीं जातस्य मृतस्य वा कर्म्मणि मासविशेषानध्यवसायः स्यात् नानावचनसिद्धं प्रतिपदादित्वञ्च मासस्य व्याहन्येत । गुरुचरणास्तु "द्वे ह वै पौर्णमास्यौ द्वे अमावास्ये तस्मात् प्रतिप-द्युपवसन् यजेतापरेद्युः" इति श्रुत्या ऐन्द्राग्नेययागाङ्गतिथिधर्म-योगेनाजहत्स्वार्थलक्षणया अमावास्यापदस्य शुक्लप्रतिपद-मावास्यापरत्वं संक्रान्तिपदस्यापि राश्यन्तरसंयोगरूपफल-

परत्वमाहुः । अमावास्याद्वयमित्यनेन उपलक्षणविशेषण-भावेन पूर्वापरास्याम् अमावास्याभ्यां परिचायितः । शुक्लप्रति-पदादिदर्शान्तकालो बोध्यते इत्यपरे । तेन पूर्वामावास्याया उपलक्षणत्वे क्रियानन्वयित्वात् तद्व्यापनाभावात् । "मिथुनस्थो यदा भानुरमावास्याद्वयं स्पृशेत्" । इत्यत्रामावास्याद्वयमिति कर्मता न स्यात् । तस्यार्कौ दर्शकस्यैकराशौ दर्शद्वयातिग इत्यभिधानञ्चासङ्गतं स्यात् पूर्वामावास्याया उपलक्षणत्वे पूर्वा-मावास्यान्तक्षणवृत्तिराशिस्थः सन् सूर्य्योऽतिवाह्य गच्छेदिति लोकव्याख्याप्यनुपपन्नः स्यात् । एवमन्यान्यपि वचनानि व्याख्येयानि । गृह्यपरिशिष्टज्योतिः पराशरौ । "रविणा लङ्घितो मासश्चान्द्रः ख्यातो मलिम्लुचः । तत्र यद्विहितं कर्म उत्तरे मासि कारयेत्" । पराशरः । "पक्षद्वयेऽपि संक्रान्ति-र्यदि न स्यात् सितासिते । तदा तन्मासविहितमुत्तरे मासि कारयेत्" । अथ लङ्घनमसंक्रमणञ्च रवेस्तदा भवति यदा तन्मास तत्पूर्वमासान्त्यक्षणयोरेकराश्यवस्थितस्य तन्मासानन्त-रमेव राश्यन्तरसंयोगः न त्वेकराशिस्थितस्य मासव्यापनमात्रं तथात्वे चतुर्दश्यामेकराशौ संक्रान्तस्य प्रतिपत् प्रथमक्षणेऽपर-राशौ तत्परराशौ च द्वितीयायां प्रतिपदि वा रवेः संयोगेऽपर-स्यापि मलमासता स्यात् । अतएव ज्योतिषे "अमावास्यापरि-च्छिन्नं रविसंक्रान्तिवर्जितम् । मलमासं विजानीयाद्गर्हितं सर्व-कर्मसु । तस्यार्कौ दर्शकस्यैकराशौ दर्शद्वयातिगः" । अनेकराशि-स्थार्कस्य दर्शद्वयातिगत्वमुक्तम् । एतच्च पूर्वोपदर्शितयोर्मासयोः पूर्वस्यैव सम्भवति न परस्य । मलमासकारणन्तु ज्योतिषे । "दिवसस्य हरत्यर्कः षष्टिभागमृतौ तदा । करोत्येकमहश्छेदं तथैवैकञ्च चन्द्रमाः । एवमर्द्धतृतीयानामब्दानामधि-मासकम् । ग्रीष्मे जनयतः पूर्वं पञ्चाब्दान्ते तु पश्चिमम्" ।

मलमासस्य चान्द्रत्वात्तद्घटकाहर्दिवसपदयोरपि तथात्वात् तिथिवाचकत्वं तथा च विष्णुधर्म्मोत्तरम् । "तिथिरेकेन दिवसश्चान्द्रमाने प्रकीर्त्तितः। अहोरात्रेण चैकेन सावनो दिवसः स्मृतः"। अत्र सोमयागे सवनत्रयस्याहोरात्रसाध्यत्वात् तत्सम्बन्धिनं सावनमिति माधवाचार्य्यः। सूर्य्यसिद्धान्ते "तिथिश्चान्द्रमसं दिनम्" इति। समयप्रकाशे ज्योतिषं "तिथिः शशाङ्कदिनम्" इति एतेन विष्णुधर्म्मोत्तरवचनमात्रप्रदर्शिना वाचस्पतिमिश्रेण चान्द्रमाने तिथ्या तत्तद्दिनगणना विघटतु। दिवसपदस्य तिथिवाचकमित्यत्र न किञ्चित् प्रमाणं तर्हि सूर्य्यावच्छिन्न चतुर्यामे शक्तं तथैव वृद्धव्यवहारादित्युक्तं हेयं परार्द्धेऽपि दिवसपदस्याहोरात्रवाचित्वापत्तेर्वृद्धव्यवहाराच्छास्त्रीयपरिभाषाया वैयर्थ्यापत्त्या बलवत्त्वाच्च। तेन दिवसस्य तिथेः षष्टिभागं दण्डमेकं रविर्हरति छेदयति उत्तरे छेदमित्यभिधानात्। ततश्च ऋतौ मासद्वये षष्टिनाड़ीच्छेदादहस्तिथेश्छेदमाकर्षणं करोति। एवं चन्द्रोऽपि। एवमित्युक्तक्रमेण वर्षे द्वादशतिथ्यात्मक-कालाकर्षादर्द्धतृतीयानामब्दानामन्ते अर्द्धं तृतीयं येषां ते तथा ग्रीष्मे माधवादिषु षट्केषु पूर्वं माधवादि त्रिकपतितं पश्चाब्दान्ते तु पश्चिमं श्रावणादित्रिकपतितं मलमासञ्चन्द्रार्कौ जनयतः। ग्रीष्मे माधवादि षट्के इति यदुक्तं तद्व्यक्तमाह मिहिरः। "माधवादिषु षट्केषु मासि दर्शद्वयं यदा। द्विराषाढ़ः स विज्ञेयः शेते तु श्रावणेऽच्युतः"। द्विराषाढ़ो द्विराषाढ़ादिः। श्रावणे सौरश्रावणे। तथा च ज्योतिषे "मिथुनस्थो यदा भानुरमावास्याद्वयं स्पृशेत्। द्विराषाढ़ः स विज्ञेयो विष्णुः स्वपिति कर्कटे"। अमावास्याद्वयं तदन्यचणद्वयं स्पृशेत् संयुञ्ज्यात् न तन्मध्ये राश्यन्तरसंयोग इत्यर्थः। ननु कर्कटादित्रिकेऽधिमासपाते

तत्पूर्वं मिथुन एव हरिशयनं तत् कथं माधवादि षट्कमाले कर्कटे तत्। तथाह राजमार्त्तण्डः। "कन्यासिंहकुलीरेषु यदा दर्शद्वयं भवेत्। आगामिनि तदा वर्षे कुलीरे माधवः स्वपेत्"। माधवादित्रिकश्रावणादित्रिकाधिमासविवेचनमप्येतदर्थम् इदन्तु सार्द्धवर्षद्वयाधिमासपातमौचित्यक्रमादुक्तं क्वचित्तिथीनां ह्रासबाहुल्येन दण्डषष्ट्यधिकन्यूनदर्शनादुक्तकालन्यूनाधिककालेऽपि मलमासो भवतीति समयप्रकाशकृत्। वस्तुतस्तु वैपरीत्यं यतो न्यूनदण्डतिथेः प्रायिकत्वे तत्र तिथिचयस्य झटित्युपलभ्यमानत्वात् स्वल्पकालेन तिथ्यन्तरसम्बन्धात् शीघ्रं रविलङ्घनप्रतीतेः शीघ्रमेव मलमासो भवतीति अधिकदण्डतिथेः प्रायिकत्वे तत्र तिथिचयस्य झटित्यनुपलभ्यमानत्वेनाधिकेनैव कालेन तिथ्यन्तरसम्बन्धात् विलम्बेनैव रविलङ्घनप्रतीतेश्चिरेणैव मलमासो भवतीति तथा च विष्णुधर्मोत्तरम्। "सौरसंवत्सरस्यान्ते मानेन शशिजेन तु। एकादशातिरिच्यन्ते दिनानि भृगुनन्दन ॥ मासद्वये साष्टमासे तस्मान्मासोऽतिरिच्यते। स चाधिमासकः प्रोक्तः काम्यकर्मसु गर्हितः" ॥ इदन्तु नियतम्। एकस्मादधिमासात्तृतीयाब्देऽधिमासान्तरमिति। यद्यपि "यां तिथिं समनुप्राप्य तुलां गच्छति भास्करः। तयैव सर्वसंक्रान्तिर्यावन्मेषं न गच्छति" ॥ इति राजमार्त्तण्डवचनात्तुलादिषण्मासे तिथिवृद्व्यभावाद्वर्षे द्वादशवृद्धिरनुपपन्ना तथापि "मध्ये विषुवतोर्भानुर्यान्यहानि तु वर्द्धयेत्। तैः सङ्ख्याधिको मासः पतत्येव त्रयोदश" ॥ इति गृह्यपरिशिष्टवाक्ये विषुवतोर्मेषतुलासंक्रान्त्योर्मध्ये मेषादिषण्मास एव तिथिवृद्धिरुक्ता अहर्गणने। मेषादिषण्मासे मन्दभुक्त्या सप्तदिनवृद्धिस्तुलादौ शीघ्रभुक्त्या दिनद्वयह्रासः इति तथा च। ज्योतिःशास्त्रं "मेषादीनामहर्वृन्दं षण्णां सप्ताष्ट-

चन्द्रकम् । तुलादीनामष्टसप्तचन्द्रकन्तु लिखेत् पृथक्" ॥ चन्द्र एकः अङ्कस्य वामागतिः । इत्यङ्कविदां समयात् व्युत्क्रमेणाङ्का बोध्याः । तेन दिनवृद्धिक्रमसञ्चयाभ्यां मेषादिषट्के एव एकादशादितिथिवृद्धिः । एवञ्च "गतेऽब्दद्वितये सार्द्धे पञ्चपक्षे दिनद्वये । दिवसस्याष्टमे भागे पतत्येकोऽधिमासकः" ॥ इति राजमार्त्तण्डोक्तः सप्तदशदिनाधिकाष्टमासाधिकवर्षद्वयेऽधिमासः । स सौरे मासि सप्तदशदिनोत्तरं चान्द्रमासलङ्घना-सम्भवात् सावनमानेन ज्ञेयः । तथा च विष्णुधर्मोत्तरप्रथम-काण्डम् । "सौरेणाब्दस्तु मानेन यदा भवति भार्गव । साव-नेन च मानेन दिनषट्कं प्रपूर्य्यते" ॥ सौरसंवत्सरे दिन-षट्काधिकः सावनः संवत्सरो भवतीति । सौरमासाष्टका-धिकवर्षद्वये सप्तदशदिनानि वर्द्धन्ते । सावनक्रमेणेति पूर्वोक्त-विष्णुधर्मोत्तरोक्तसमानविषयतास्येति । यत्तु पञ्चपञ्चाश-दधिकनवशतशकाब्दे तुलासंक्रान्तिरमावास्यायां भूता ततो-ऽतिचारेण वृश्चिकसंक्रान्तिः प्रतिपदि पुनरपि ऋजुगत्या अमावास्यायां धनुःसंक्रान्तिरिति दृष्टस्तुलायामधिवासोऽन्धु-कभट्टेन लिखितः । पूर्वदर्शितविषये वृश्चिकस्यरव्युपसंक्रान्त-मार्गशीर्षलोपोऽपि । अस्मिन्नब्दे वैशाखमलमासान्तरमित्यु-क्तम् । तत् सत्यं किन्तु तुलादित्यादौ दृश्यमानोऽपि नायम-धिमासः किन्तु उत्पातादधिमाससमानधर्मायम् । अतएव तत्र प्रतिपदि वृश्चिकसंक्रान्तौ तन्मासस्य तुलास्थरव्यारब्धत्वेऽपि यां तिथिं समनुप्राप्नोति "यदा वक्रातिचाराभ्यां सूर्य्यसंक्रमणं भवेत् । क्षत्रियाणामसृग्धारां तदा वहति मेदिनी" ॥ इति ज्योतिःशास्त्रात् वृश्चिकस्थरव्यारब्धाईत्वात् । तत्रानारब्धेऽपि शङ्खवेलान्यायेन प्रत्यभिज्ञानाद्भवति मार्गशीर्षपदवाच्यता । अतिचारपदाच्च स्वस्थानमतीत्य चरतीति अमावास्यैव वृश्चिक-

रविसंक्रान्तिः स्वस्थानमवसीयते। वैशाखे तु तत्राधिमास-पातः प्रक्रतत्वात् वक्रातिचाराभ्यामिति रवेर्वक्रातिचारगत्य-सम्भवात् मन्दशीघ्रगतिभ्यामित्यर्थः। एवमाश्विनाधिमासपाते तुलादौ पुनस्तथा पाते पूर्व एवाधिमासः प्रक्रतत्वात् मोत्तरे औत्पातिकत्वात् अन्यत् सर्वं पूर्ववदिति। यदा पुनरमावा-स्यायामेव तुलासंक्रान्तिर्भूता न भूतो माधवादिषट्केऽधिमास-पातस्तदनन्तरमतिचारेण प्रतिपदि वृश्चिकसंक्रान्तौ भूतायां-मपरा अपि संक्रान्तयो विषुवपर्य्यन्तं प्रतिपद्येव भवन्ति तदा पूर्वाधिमासात् सार्द्धद्वितीयवर्षसञ्चितैरधिमासस्यावश्यम्भावात्। अन्यस्य चानुपलम्भात् तुलादित्य एवाधिमासो निर्णीयते। अतएव नाशङ्कितं कैश्चिदिदमिति कालविवेके जीमूतवाहन आह स्म जिकनोऽप्येवं युक्तश्चैतत् तथाहि ज्योतिषे "दशानां फाल्गुनादीनां प्रायो माघस्य च क्वचित्। नपुंसकत्वं भवति न पौषस्य कदाचन"॥ नपुंसकत्वं मलमासत्वम्। तथा चोक्तम्। "असंक्रान्तो हि यो मासः कदाचित्तिथिहृषितः। कालान्तरात् समायाति स नपुंसक इष्यते"॥ आश्विन्योऽपि प्रायशो न शुभः सौम्यो ज्यैष्ठस्वाषाढ़कस्तथा। मध्यमौ चैत्र-वैशाखावधिकोऽन्यः सुभिक्षकृत्"॥ सौम्यो मार्गशीर्षः अधिकोऽधिमासः। यत्तु ज्योतिःसिद्धान्तब्रह्मसिद्धान्तयोः "घटकन्यागते सूर्य्ये वृश्चिके वाथ धन्विनि। मकरे वाथ कुम्भे वा नाधिमासं विदुर्बुधाः"॥ इति तदेकवर्षे मासद्वये मल-मासपाते ज्ञेयम्। घटस्तुला एतद्विषये शीघ्र इति माधवा-दिषु षट्सु इति नियमाभिधानम्। अतएव एकवर्षीया संक्रान्तमासावधिमासभानुलङ्घितभेदेनोपात्तौ तथा च काठ-कगृह्यम्। "चूड़ां मौञ्जीबन्धनञ्च अग्न्याधेयं महालयम्। राजाभिषेकं काम्यञ्च न कुर्य्यादधिमासके॥ चूड़ां मौञ्जी-

मन्वन्तञ्च प्रत्याधेयं महालयम्। राजाभिषेकं काम्यञ्च न कुर्य्याद्भानुलङ्घिते" ॥ महालयम् कन्यार्कं श्राद्धम्। एतद्विषय एव "यावच्च कन्यातुलयोः क्रमादास्ते दिवाकरः। तावच्छ्राद्धकालः स्याच्छून्यं प्रेतपुरं तदा" ॥ इत्यत्र तु क्रमादित्यनेन तच्छ्राद्धं तुलार्के विहितम्। भौमपराक्रमेऽपि। "अधिमासे दिनपाते धनुषि रवौ भानुलङ्घिते मासि। चक्रिणि सुप्ते कुर्य्यान्नो माङ्गल्यं विवाहञ्च" ॥ दिनपाते दिनक्षये तत् स्वरूपं कौर्मे पाद्मेऽपि। "द्वौ तिथ्यन्तावेकवारे यत्र स स्याद्दिनक्षयः" ॥ वशिष्ठः। "एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा। तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम्" ॥ साहस्रिकं फलमिति माङ्गल्येतरवैदिककर्मपरम्। तथा च मत्स्यपुराणम्। "शतमिन्दुक्षये पुण्यं सहस्रन्तु दिनक्षये"। कौर्मपाद्म-वशिष्ठ-वचनैकवाक्यतया सावन-दिनव्यवहार-प्रवृत्तिः सूर्य्योदयावधिरेव सूर्य्यसिद्धान्तेऽपि "सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा। मध्यमग्रहभुक्तिश्च सावनेन प्रकीर्त्तिता"॥ अत्र दिनाधिपस्य रव्यादेर्भोग्यं दिनं वाररूपं सावनगणनोक्तं व्यवहारोऽपि तादृगेव तिथिविवेकेऽपि भवतु वारयोगे व्यस्ततिथेर्ग्रहणं तस्य दिनद्वयेऽसम्भवादित्युक्तम्। सावनदिनमाह सूर्य्यसिद्धान्तः। "उदयादोदयाद्भानोर्भौमसावनवासराः"। भौमेति पित्रादिदिनव्यावृत्त्यर्थम्। यत्तु रेखा पूर्व्वापरयोरित्यादिना ज्योतिषे वारप्रवृत्तिरुक्ता तज्ज्योतिःशास्त्रोक्तकालहोरादिज्ञापनार्थमिति ज्योतिस्तत्त्वे बहुधा विवृतम्। "नैवास्तमनमर्कस्य नोदयः सर्व्वदा सतः। उदयास्तमनाख्यं हि दर्शनादर्शनं रवेः॥ यैर्यत्र दृश्यते भास्वान् स तेषामुदयः स्मृतः" ॥ इति विष्णुपुराणात् दर्शनयोग्यकालादेव वारघटककर्मसु स एव काल इति। यत्तु घटकन्यागत इत्यनेन कन्यागते

मलमासनिषेधः। स तदुत्तरमेषगतमलमासान्तरपाते बोध्यः। अन्यत्र तु माधवादिषु षट्केषु इत्यादिवचनात् क्रमसञ्चितत्वाच्च आश्विन एव मलमासः। न तु चैत्रान्ततुलादिषु तथा च पितामहः "मासि कन्यागते भानुरसंक्रान्तो भवेद् यदि। दैवं पैत्रं तदा कर्म्म तुलार्के कर्त्तुरव्ययम्"॥ एवञ्च एकस्मिन्नब्दे मासद्वयस्य रविलङ्घने तदेकतरस्य मेषादिगतत्वे स एव मलमासः। घटकन्यागत इत्यादिवचनात् माधवादिषु षट्केषु पतितत्वाच्च। अत्रैव विषये शातातपः। "त्रयोदशाख्यं श्रुतिराह मासं चतुर्दशः क्वापि न दृष्टपूर्वः। एकत्र मासद्वितयं यदि स्याद्वर्षेऽधिकं तत्र परोऽधिमासः"॥ तथा च श्रुतिः। "द्वादशमासाः संवत्सरः". इति। कालमाधवीये जाबालिः। "एकस्मिन्नपि वर्षे च द्वौ मासावधिमासकौ। प्रकृतस्तत्र पूर्वः स्यादुत्तरस्तु मलिम्लुचः"॥ प्रकृतः शुद्धः कर्म्मार्ह इति यावत्। वर्षकृत्ये "मासद्वयस्य मध्ये तु संक्रान्तिर्न यदा भवेत्। प्रकृतस्तत्र पूर्वः स्यादुत्तरस्तु मलिम्लुचः"॥ एकस्मिन्नब्दे तस्य मासद्वयस्य रविलङ्घने तस्य मेषाद्यस्पृष्टत्वे तु पूर्व एव मलमासः क्रमसञ्चितत्वादन्यथा क्रमाभिधानमनर्थकं स्यात् कन्यागते माधवादिषट्कपतितत्वाच्च। तथा च ज्योतिः पराशरः। "कार्त्तिकादिषु मासेषु यदि स्यातां मलिम्लुचौ। सर्वकर्म्महरः प्रोक्तः पूर्वस्तत्र मलिम्लुचः"॥ राजमार्त्तण्डे। "अमावास्याद्वयं यत्र मासि मासि प्रवर्त्तते। उत्तरश्चोत्तमो ज्ञेयः पूर्वस्तत्र मलिम्लुचः"॥ न चैवं तमतिक्रम्येत्यादि लघुहारीतवाक्यमतिव्यापकमिति वाच्यं तस्यापवादानिराकृतत्वेन विशेषणीयत्वात् तस्माद् यां तिथिं समनुप्राप्येत्यादिवाक्यात्तत्तत्तिथेस्तत्तद्राशिरविसंक्रमणारम्भार्हत्वात् वक्रातिचाराभ्यां फलाभावेन तत्तन्मासानां तत्तनारम्भेऽपि शङ्कवेलान्यायेन प्रत्यभिज्ञाना-

भवति तत्तन्मासपदवाच्यतेति क्षयमासेऽपि मीनादिस्थो रविरित्यादिव्यासोक्तलक्षणस्य पूर्वोक्तविषये सङ्गतिः । यत्र तु दर्शे कन्यासंक्रान्तिर्भूता तुलासंक्रान्तिस्तु प्रतिपदि एवं प्रतिपदि वृश्चिकधनुःसंक्रान्तौ ततश्च वक्रगत्या दर्शे मकरकुम्भमीनसंक्रान्तयः प्रतिपदि मेषसंक्रान्तिस्तत्र कन्यायां मलमासः धनुषि क्षयो मीने भानुलङ्घितः । तत्र क्षयमासस्य मार्गशीर्षमात्रत्वात्तदुत्तरमासानां भानुलङ्घितावधिकानां पौषादित्वार्थं पूर्वराशिस्थरव्यारब्धत्वयोग्यतया तत्सङ्गतिः । ततश्च योग्यताश्रयणेन परस्तत्र मलिम्लुच इत्यस्य विषये सति भानुलङ्घितोत्तरक्षयमासावधिकेषु पूर्वस्तत्र मलिम्लुच इत्यस्य विषये सति भानुलङ्घितावधिकेषु क्षयमासोत्तरमासेषु तल्लक्षणस्य नाव्याप्तिः । एवञ्चौत्पातिके तदनुरोधान्न व्यवहारः किन्तु औत्सर्गिककालानुरोधादेव । तथा च संवत्सरप्रदीपे । "उत्पातेन भवेद्यस्तु कालस्यातिक्रमः क्वचित् । न तत् स्याद्व्यवहाराङ्गमित्याह भगवान् हरिः" ॥ न च वर्षद्वयात् परं तुलायाममावास्यायां वृश्चिकादिषु मेषपर्य्यन्तेषु प्रतिपदि संक्रान्तौ तुलायां कार्त्तिक एव मलमासः । तदुत्तरत्र भानुलङ्घितोत्तरवत् शङ्कवेलान्यायो नास्ति कथमिति वाच्यं क्षयमासयुताब्दे तु गत्यन्तराभावात् शङ्कवेलान्यायानुसरणं तत्सम्भवे तदनुसरणस्यान्याय्यत्वात् । यत्तु इदं वा किं यदन्यस्यां तिथौ संक्रान्तेरुपधानं स्वरूपयोग्यता पुनरन्यस्यामिति तदपि चिन्त्यं गृहस्थितदण्डे घटस्य फलोपधानं स्वरूपयोग्यता पुनरन्यस्थदण्डेऽपीति । अथ तत्र दृढदण्डत्वेन भ्रमिजननयोग्यतोभयसाधारणी विद्यते प्रकृते तु कीदृशीति चेदेकशक्तिमत्त्वेनेति ब्रूमः । सा च शक्तिः फलबलोन्नेया क्षयमासयुताब्दे तु चैत्रोत्तरावैशाखस्तदुत्तरो ज्यैष्ठ इत्यादिक्रमानुरोधेन चैत्र-

पूर्ववर्त्ती फाल्गुनस्तत्पूर्ववर्त्ती माघ इत्याद्यनुरोधेन च एवञ्च दर्शान्तस्य क्वाचिदपि शास्त्रे मासहितयत्वानभ्युपगमेन च यां तिथिं समनुप्राप्येति तत्र परोऽधिमास इति पूर्वस्तत्र मलिम्लुच इति घटकन्यागत इति उत्पातेन भवेद्यस्तु इत्यादिवचनपर्य्यालोचनया च यथायथं शास्त्रगम्यापौति। यदि जीमूतवाहनोक्तं यां तिथिं समनुप्राप्येति वचनोक्तमासयोग्यतावच्छेदकं स्यात् तदा यस्मिन्नब्दे कन्यासंक्रान्तिरमावास्यायां तुलासंक्रान्तिस्तु प्रतिपदि ततोऽमावास्यायान्तु वृश्चिकसंक्रान्तिरमावास्यायामेव मेषावधिसंक्रान्तयो भूतास्ततः प्रतिपदि वृषसंक्रान्तिर्भूता तत्राश्विनो भानुलङ्घितः कार्त्तिकः क्षयः वैशाखो मलमास इति कार्त्तिके तद्योग्यतावच्छेदकस्याभावात् लक्षणासङ्गतिः स्यात्। तथा हि तुलासंक्रान्त्यवच्छिन्नतिथित्वस्य वृश्चिकादिसंक्रान्तियोग्यतावच्छेदकत्वेनैव विधानं प्रकृते तु तन्नास्तीति। दण्डारणिमणिष्वलेऽपि वह्निजननयोग्यतायामेकधर्म्मानमत्तयैव व्यभिचाराभाव इत्युक्तम्। एवञ्च एकस्मिन्नपि पापध्वंसे प्रायश्चित्तस्यानेकधोत्कीर्त्तनमपि सङ्गच्छते। न च तत्र वैजात्येनापि सङ्गमयितुं शक्यते ध्वंसे तदभावात्। एतत् सर्वं "मीनादिस्थो रविर्येषामारम्भप्रथमक्षणे। भवेत्तेऽब्दे चान्द्रमासाश्चैत्राद्या द्वादश स्मृताः" ॥ इति व्यासवचनादवसीयते। तथा चोक्तं भट्टपादैः। "सिद्धानुगममात्रं हि युक्तं कर्त्तुं परीक्षकैः। न सर्वलोकसिद्धस्य लक्षणेन निवर्त्तनम्" इति। ननु एकस्य क्षयमासस्य मेषगतरविसंक्रान्तिः यस्मिन् शशिमासे भवति तच्चैत्रम्। एवं वैशाखाद्या वृषादिसंक्रान्तियोगेनेति ब्रह्मगुप्तप्रतिपाद्य उभयलक्षणाक्रान्तत्वादुभयमासत्वं युक्तम् इति चेन्न तस्य व्यासवचनादिविरोधात्लक्षणपरत्वासङ्गतेर्मलमासाव्यापनाच्च। न च "वत्सरान्तर्गतः

पाषो यज्ञानां फलनाशकत्। नैष्ठ नैधातुषानाद्यैः समाक्रान्तो विनामकः" इत्यादि ज्योतिःशास्त्रे षाषाढ़ादिनामशून्यत्वेन विनामकता मलमासस्योक्ता इति न तत्राव्याप्तिरिति वाच्यं द्विराषाढ़ः सविज्ञेय इत्यादिप्रयोगात् "तत्र यद्विहितं कर्म्म उत्तरे मासि कारयेत्" इत्यभिधानाच्च। तस्याषाढ़ादित्वाभावे तत्र यद्विहितमित्यनुपपन्नं स्यात् व्यासोक्तलक्षणाक्रान्तत्वाच्च। किञ्च मलमासस्याषाढ़ादिनामशून्यत्वेन तस्य वक्ष्यमाणे काठकश्रुताबितरानुपजीवतीत्यभिधानं न सङ्गच्छते। इतरोपजीवनं हि तदा भवति यदि तस्याषाढ़ादित्वं स्यादिति तर्हि विनामकत्वं कुत इति चेद्विरुद्धनामको विनामकस्तस्य मलिम्लुचादिनामकत्वात्। यद्वा सदपि नामासदेव तन्मासकर्मानर्हत्वात् रत्नकोषे तु समाक्रान्तोऽधिमासक इत्येव पाठः। क्षयमासस्य द्विमासत्वे तत्र मृतस्य कर्मण्यनध्यवसायः स्यात् किं पूर्वो मासः किं वोत्तरो मास इति। न च कपालाधिकरणन्यायात् पूर्वोमास इति वाच्यं तथात्वे तदुत्तरे मलमासपाते क्षयमासमृतस्य सप्तदशमासाद्यानुपपत्तेः। वस्तुतस्तु तत्रैव कपालाधिकरणन्यायस्य विषयो यत्र क्रमिकोपस्थितयोर्व्यक्त्योः प्रथमोपस्थितस्य ग्रहणम् यत्र तु व्यक्तभेदेन क्रमिकोपस्थित्यभावात् कथं तदवसरः। स च न्यायो दशमाध्याये चिन्तितो यथा वैष्णव्य एककपाल इति श्रुतो कपालधर्म्माकाङ्क्षायाम् आग्नेयाष्टाकपालो भवति पौर्णमास्यामिति प्रकृतियागसम्बन्धिकपालधर्म्मग्रहे यस्य कस्याप्येकस्य कपालस्य धर्मानुष्ठानोपकारसिद्धौ कस्येत्यपेक्षायां प्रथमोपस्थितत्वेन प्रथमकपालधर्मानुष्ठानमिति। न च तत्र "तिथ्यर्द्धे प्रथमे पूर्वो द्वितीयार्द्धे तदुत्तरः। मासाविति बुधैश्चिन्त्यौ क्षयमासस्य मध्यगौ"॥ इति वाक्यद्वयवस्था भविष्यतीति वाच्यम्।

इदं वाक्यं दाक्षिणात्यसंग्रहकर्त्तुरेव न तु मुनेरिति न तत्राख्या। तथात्वे षष्टिदण्डात्मिकायास्तिथेः परार्द्धस्य रात्रिपतितत्वे परमासीय पूर्वार्द्धस्य च रात्रिपतितत्वे पूर्वमासीयस्याष्टका-श्राद्धादेर्लोपः किन्तु उत्तराधिमासपते क्षयमासीयतिथिपूर्वार्द्धे मृतस्य समदशश्राद्धानुपपत्तिः। किञ्च वक्ष्यमाणकाठकश्रुतौ सोऽनायतन इत्यनेन मलमासस्याप्रतिनियतस्थानत्वात्तदन्यस्य पौषादेः प्रतिनियतस्थानत्वं प्रतीयते। तच्च पौषस्य मार्ग-शीर्षोत्तरत्वं माघपूर्ववर्त्तित्वरूपम् एवमन्यत्रापि। एकस्य द्वित्वे तन्नियमभङ्ग इति। अन्ये तु मासघटकानां त्रिंशत्तिथीनां पूर्वस्मिन्नर्द्धे पूर्वासु पञ्चदशतिथिषु पूर्वो मासः द्वितीयेऽर्द्धे परासु तासु उत्तरा इत्यर्थमुक्त्वा शुक्लपक्षमृतस्य पूर्वमासे कृष्ण-पक्षमृतस्य परे कृत्यमित्याहुः। तदतिमन्दं धनुषि क्षये पूर्वाब्दे मार्गशीर्षकृष्णपक्षमृतस्य पौषशुक्लपक्षमृतस्य च कृत्यलोपप्रसङ्गात् पूर्ववदुत्तरे मलमासपाते क्षयमासपूर्वार्द्ध-मृतस्य समदशश्राद्धानुपपत्तेश्च। केचित्तु "यस्मिन्राशिगते भानौ विपत्तिं यान्ति मानवाः। तेषां तत्रैव कर्त्तव्या पिण्ड-दानोदकक्रिया" ॥ इति वचनं क्षयमासमृततिथिविषयतया व्याख्याय तुलादौ क्षये तत्र मृतस्य सौरकार्त्तिकादावेव श्राद्ध-माहुः। तदतीव मन्दं तद्राशौ वर्षान्तरे तत्तत्तिथ्यप्राप्तौ प्रत्याब्दिकश्राद्धलोपापत्तेः। यस्मिन्राशिगते भानाविति तु आद्यसंवत्सरान्तार्धिमासविषयम्। अथ "श्राद्धविघ्ने समुत्-पन्ने मृताहाविदिते तथा। एकादश्यां प्रकुर्वीत कृष्णपक्षे विशेषतः" ॥ इत्यत्र विदेर्लाभपरत्वमभ्युपेत्यैकादश्यामेव क्वापि श्राद्धमिति चेन्न विदितपदस्य ज्ञातलब्धोभयपरत्वे वाक्यभेदापत्तेः विदितपदात् प्रयोगप्राचुर्य्येण ज्ञातस्यैव प्रथमो-पस्थितत्वात् तत्परतया औत्सर्गिकत्वादिति वदन्ति। वस्तुतस्तु

लाभार्थस्य विदेर्निष्ठायामिट्प्रतिषेधाद्विदितप्रयोगानुपपत्तेः न च तिथ्यर्द्धं इति वाक्यं क्षयमासीयजन्ममरणमासमात्रव्यवस्थापकं न तु सर्वविषयकमिति वाच्यम् अस्मिन्नर्थे प्रमाणाभावात् तस्यार्थत्वेऽपि मासद्वयघटकानां त्रिंशत्तिथीनां पूर्वार्द्धे शुक्लपक्षे पौर्णमास्यन्तपूर्वमासस्य शुक्लपक्षीयकृत्यं द्वितीयार्द्धे कृष्णपक्षे तादृशस्य परमासस्य शुक्लपक्षीयकृत्यमिति । क्षयमासस्यापि मध्ये प्रकृतमासवन्मासद्वयमिति । ततश्च जीमूतवाहनोक्त एव प्रकारः श्राद्धादौ युक्तः । अतएवात्र समयप्रकाशश्राद्धविवेकमैथिलसंग्रहकारैरपि न किञ्चिदभिहितम् । अन्नशुमलक्षणे त्वेकवर्षे संक्रान्तिशून्ययोर्मासयोरन्यतरस्य शुद्धतया तन्मासविहितकर्मार्हतायाः सर्वप्रामाणिकसिद्धतया तत्राव्याप्तिः यां तिथिं समनुप्राप्येति योग्यताविवक्षया तत्र समाधानमिति चेत्तर्हि व्यासवाक्ये तथा कल्पनया सर्वसिद्धौ किमनार्षवाक्यादरेणेति दिक् । न च "मेषादिस्थे सवितरि यो मासः प्रपूर्य्यते चान्द्रः । चैत्रादिः स तु विज्ञेयः पूर्त्तिर्द्वित्वेऽधिमासोऽन्त्यः" इति माधवाचार्य्यधृतज्योतिःशास्त्रोक्तलक्षणमादरणीयम् । तथात्वे क्षयमासस्य परमासत्वे पूर्वमासस्य लोपः स्यात् । मिथुनादौ मलमासे । "मिथुनस्थो यदा भानुरमावास्याद्वयं स्पृशेत् । द्विराषाढः स विज्ञेयः शेते तु श्रावणेऽच्युतः" । इत्याद्युक्तद्विराषाढ़ादित्वानुपपत्तिश्च स्यात् । प्रत्युतद्विर्ज्येष्ठत्वाद्यापत्तिर्भवेत्तस्मादाधुनिकज्योतिर्विद्वाक्यं पूर्वोक्तव्यासवचनविरोधादनादेयं प्रायिकत्वाभिप्रायेण वर्णनीयं वेति । क्षयमासलक्षणमाहतुर्ज्योतिःसिद्धान्त भीमपराक्रमौ । "असंक्रान्तमासोऽधिमासः स्फुटः स्यात् द्विसंक्रान्तमासः क्षयाख्यः कदाचित् । क्षयः कार्त्तिकादित्रयेनान्यदा स्यात्तदा वर्षमध्येऽधिमासद्वयं स्यात्" । असंक्रान्तत्वेनैवाधिमासस्य द्वित्वं

वस्तुतस्तु एकस्य मलमासत्वमपरस्य भानुलङ्घितत्वं पूर्वोपदर्शितकाठकगृह्यभीमपराक्रमवचनैरवधेयमिति। तदयं संक्षेपः। शुक्लप्रतिपदादिरमावास्यान्तो रविलङ्घितो मासो मलमासः स च माधवादौ औत्सर्गिकः कदाचित् कार्त्तिकादावपि प्रयत्नानिष्टत्वात् माधवादि कार्त्तिकादि षट्कयोरपि तल्लक्षणयोगे माधवादेरेव तुलादि षट्क एवोभयमासे तल्लक्षणयोगे पूर्व एव माधवादि षट्क एव आश्विनवैशाखयोस्तल्लक्षणयोगे पर एव मलमासः तद्भिन्नस्तु भानुलङ्घितः। मलमासे श्राद्धादौ दोहत्वं भानुलङ्घिते तु नैतदिति विस्तरः। यत्तु "यस्मिन्मासे न संक्रान्तिः संक्रान्तिद्वयमेव वा। मलमासः स विज्ञेयो मासे त्रिंशत्तमे भवेत्"। इति काठकगृह्ये द्विसंक्रान्तमासस्य क्षयापरपर्य्यायस्य मलमासत्वाभिधानं तदेकमात्रसंक्रान्तिरहितत्वगुणयोगाद्गौणम्। मलमासवद्विवाहाद्यनर्हत्वार्थम्। तथा च वार्हस्पत्यज्योतिर्ग्रन्थे। "एकत्र वर्षे ह्यधिमासयुग्मं यत्कार्त्तिकादित्रितये क्षयाख्यम्। तद्वर्जनीयं त्रितयं प्रयत्नाद्विवाहयज्ञोत्सवमङ्गलेषु। यस्मिन् मासे न संक्रान्तिः संक्रान्तिद्वयमेव वा। संसर्पांहस्पतीमासावधिमासश्च निन्दितः"। अत्र संसर्पोऽसंक्रान्तत्वेनाधिमासवत् सर्वकर्मानर्हतायां तदपवादेन मङ्गल्येतरकर्मार्हः सन् सम्यक् सर्पतीति माधवाचार्य्यः। अंहसः पापस्य पतिरिति तत्तथेति संसर्पांहस्पती भानुलङ्घितक्षयमासयोर्नाम्नी कठशाखाश्वलायनब्राह्मणम् "अर्द्धमासा वै अधस्तात् सन्तोऽकामयन्त मासाः स्याम इति ते द्वादशाहं क्रतुमुपायन् त्रयोदशं ब्राह्मणं कृत्वा तस्मिन् सृष्टोदतिष्ठन् तस्मात् सोऽनायतन इतरानुपजीवतीति तस्मात् द्वादशाहस्य त्रयोदशेन ब्राह्मणेन भवितव्यमिति"। अस्यार्थो जयस्वामिना व्याख्यातः। तं चार्द्धमासास्त्रयोदशं मलमासं ब्राह्मणं कृत्वा

द्वादशाहं क्रतुमुपायन् उपाहृतवन्तस्तस्मिन्मलमासे सृष्ट्वा संमार्ज्य किमित्याकाङ्क्षायाम् अरातीरित्यध्याह्रियते अरातीः पापानि संमार्ज्य उदतिष्ठन् पापभारशून्या उत्थिता अभवन्नित्यर्थः। तत्र पापनिर्माजनार्थवादात् सम्भवत्कालान्तरं कर्म तत्र न कर्त्तव्यं न तु निरवकाशमिति अर्थवादाद्विधिकल्पनायाः प्रतीतिबाधेनैवौचित्यात् अतो नित्यनैमित्तिकशान्तिकादेर्मलमासेन पर्य्युदासः सोऽनायतन इति नाप्यस्य चैत्रादिवत् प्रतिनियतस्थानमित्यर्थः। इतरानुपजीवतीति मासान्तरेषु चन्द्रक्षयवृद्धिभ्यां तस्योपजननात्। आश्वलायनब्राह्मणं "प्राच्यां दिशि वै देवा सोमं राजानमक्रीणन् तस्मात् प्राच्यां दिशि क्रीणते त्रयोदशान्मासादक्रीणन् तस्मात्त्रयोदशो मासो नानुविद्यते पापो हि सोमविक्रयीति"। अस्या यमर्थः यतोऽधिमासः सोमविक्रयी अतोऽसावितरमासवन्नानुविद्यते विद्यमानोऽपि कर्म्मानर्हत्वादसन्निवेत्यर्थः सोमविक्रय्यपि ऋत्विगन्तरवत्। अत एव पैठीनसिः।"श्रौतस्मार्त्तक्रियाः सर्वा द्वादशे मासि कीर्त्तिताः। त्रयोदशे च सर्वास्ता निष्फला इति कीर्त्तिताः॥ तस्मात्त्रयोदशे मासि कुर्य्यात्ता न कथञ्चन। कुर्वन्नरकमाप्नोति कुर्य्यादात्मविनाशनम्"॥ द्वादशे प्रकृते त्रयोदशे मलमासे अत्र यन्मलमासस्य त्रयोदशत्वमुक्तं तद्गत्या व्युत्क्रमगणनेन प्रकृतस्यैव त्रयोदशत्वं सार्व्वजिकं तथा च "क्वचित्त्रयोदशोऽपि स्यादाद्यं मुक्त्वा तु वत्सरम्" इति गृह्यपरिशिष्टं "मलं वदन्ति कालस्य मासं कालविदोऽधिकम्। नेहेतात्र विशेषेज्यामन्यत्रावश्यकाद्विधेः"॥ विशेषेज्यां वैशाखाद्युल्लेखेन विहितयागम्। आवश्यकात् निरवकाशात्। तथा च कालमाधवीये काठकगृह्यपरिशिष्टं "महालयाष्टकाश्राद्धमुपाकर्म्मादिकर्म्म यत्। स्पष्टमासविशेषाख्य विहितं वर्जयेन्मले"॥ स्पष्टमासविशेषेति चैत्रवैशाखादिमासोल्लेखेन विहितमित्यर्थः।

अथ दीक्षाकालः। सा च मलमासे न कार्य्या यथागस्त्यसंहितायाम्। "यदा ददाति सन्तुष्टः प्रसन्नवदनो मनुम्। अयमेव तथा चैवमिति कर्त्तव्यताक्रमः॥ विशुद्धदेशकालेषु शुद्धात्मा नियतो गुरुः। सङ्कल्पोपोष्यकर्त्तव्यमङ्कुरारोपणं मुने॥ कुर्य्यान्नान्दीमुखं श्राद्धमादौ च स्वस्तिवाचनम्। स्वगृह्योक्तप्रकारेण तदेतद्विदधीत वै॥ मधुमासे भवेद् दुःखं माधवे रत्नसञ्चयः। मरणम्भवति ज्यैष्ठे आषाढे बन्धुनाशनम्॥ समृद्धिः श्रावणे नूनं भवेद्भाद्रपदे क्षयः। प्रजानामाश्विने मासि सर्व्वतः शुभमेव हि॥ ज्ञानं स्यात् कार्त्तिके सौख्यं मार्गशीर्षे भवत्यपि। पौषे ज्ञानक्षयो माघे भवेन्मेधा विवर्द्धनम्॥ फाल्गुनेऽपि विवृद्धिः स्यान्मलमासं विवर्जयेत्। गुरौ रवौ दिने शुक्रे कर्त्तव्यं बुधसोमयोः॥ अश्विनीभरणीस्वातीविशाखाहस्तभेषु च। ज्येष्ठोत्तरत्रयेष्वेवं कुर्य्यान्मन्त्राभिषेचनम्॥ शुक्लपक्षे च कृष्णे वा दीक्षा सर्व्वसुखावहा। पूर्णिमा पञ्चमी चैव द्वितीया सप्तमी तथा॥ त्रयोदशी च दशमी प्रशस्ता सर्व्वकामदा। पञ्चाङ्गशुद्धदिवसे सोदये शशितारयोः॥ गुरुशुक्रोदये शुद्धे लग्ने द्वादशशोधिते। चन्द्रतारानुकूले च शस्यते सर्व्वकर्मसु॥ सूर्य्यग्रहणकालेन समानो नास्ति कश्चन। तत्र यद्यत्कृतं सर्व्वमनन्तफलदं भवेत्॥ न मासतिथिवारादिशोधनं सूर्य्यपर्व्वणि। ददातीष्टं गृह्णीत यत्तस्मिन् काले गुरोर्नृषु॥ सिद्धिर्भवति मन्त्रस्य विनायासेन सेव्यतः"॥ मनुं मन्त्रम्। अङ्कुरारोपणमागमप्रसिद्धम्। शुद्धकालत्वं दर्शयति। मधुमासेत्यादि। पञ्चाङ्गशुद्धदिवसे तिथिवारनक्षत्रकरणयोगशुद्धदिवसे। तथा च महाकपिलपञ्चरात्रम्। "एवं नक्षत्रतिथ्यादौ करणे योगवासरे। मन्त्रोपदेशो गुरुणा साधकस्य शुभावहः"॥ सोदये शशितारयोरिति जन्मचन्द्राद्यतारयोरा-

गुरुशुक्रसहिते गुरुशुक्रोदये गुरुशुक्रानस्तमये । एतत्तु समयशुद्धादर्शो लक्षणम् । द्वादशशोधिते द्वादशांशशोधिते । ज्ञानमालायाम् । "रविसंक्रमणे चैव सूर्य्यस्य ग्रहणे तथा" । तथा । "तत्र लग्नादिकं किञ्चिन्न विचार्य्यं कथञ्चन" । तत्त्वसारे । "यदैवेच्छा तदा दीक्षा गुरोराज्ञानुरूपतः । न तिथिर्न व्रतं होमो न स्नानं न जपः क्रिया ॥ दीक्षायाः कारणं किञ्चित् स्वेच्छयाप्ते तु सद्गुरौ" ॥ सिद्धमन्त्रगुरौ । दीपिकायाम् । "ध्रुवमृदुनक्षत्रगणे रविशुभवासरेषु सत्तिथौ सद्गुरौ दीक्षा स्थिरलग्ने शुभे चन्द्रे केन्द्रे कोणे शुभे गुरौ धर्मे" । ध्रुवाणि त्रीण्युत्तराणि रोहिणी च । मृदूनि चित्रानुराधा मृगशिरोरेवत्यः । केन्द्रं लग्नचतुर्थसप्तदशकम् । कोणं नवपञ्चकम् । धर्मो नवमः । वीरतन्त्रे । "रोहिणी श्रवणार्द्रा च धनिष्ठा चोत्तरात्रयम् । पुष्यः शतभिषाकेऽर्कौ च दीक्षा नक्षत्रमिष्यते" ॥ अर्कौ हस्तः । रत्नावल्यां "योगाश्च प्रीतिरायुष्मान् सौभाग्यः शोभनो धृतिः । वृद्धिर्ध्रुवः सुकर्मा च साध्यः शुक्रश्च हर्षणः ॥ वरीयांश्च शिवः सिद्धो ब्रह्मा इन्द्रश्च षोड़श" ॥ तथा "शुभानि करणानि स्युर्दीक्षायाञ्च विशेषतः । शकुन्यादीनि विष्टिञ्च विशेषेण विवर्जयेत्" ॥ शकुन्यादीनि शकुनिनागचतुष्पदकिन्तुघ्नानि । "कृष्णेऽष्टम्यां चतुर्दश्यां पूर्वपक्षदिने तथा" । कृष्णं कृष्णपक्षे । कालोत्तरे "भूतिकामैः सिते सदा" ।

अथ दीक्षायां प्रतिप्रसवः । राघवभट्टधृतसारसंग्रहे । "शिष्यस्त्रिजन्मदिवसे संक्रान्तौ विषुवायने । सत्तीर्थेऽर्कविधुग्रासे तन्तुदामनपर्वणोः ॥ मन्त्रदीक्षां प्रकुर्वाणो मासर्क्षादीन शोधयेत्" ॥ तन्तुपर्व परमेश्वरोपवीतदानतिथिः श्रावणी पूर्णिमा । दामनपर्व दमनभञ्जनतिथिश्चैत्रशुक्लचतुर्दशी । कूर्मपुराणे हिमालयं प्रति देवीवाक्यम् । "यानि शास्त्राणि

दृश्यन्ते लोकेऽस्मिन् विविधानि च। श्रुतिस्मृतिविरुद्धानि निष्ठा तेषां हि तामसी ॥ करालभैरवञ्चापि यामलं वाममाश्रितम्। एवंविधानि चान्यानि मोहनार्थानि तानि तु ॥ मया सृष्टानि चान्यानि मोहायैषां भवार्णवे"॥ तस्मात् सद्भिः श्रुतिस्मृतिविरुद्धे वर्त्मनि न कदाचित् पदं न्यस्तव्यम्। आर्य्यादिदुष्टमन्त्रप्रतीकारस्तु। "एषु दोषेषु सर्वत्र मायां काममथापि वा। जिह्वा चादौ श्रियं दद्यात् तद्दूषणविमुक्तये॥ तारसंपुटितो वापि दुष्टमन्त्रो विशुद्ध्यति। यस्य तत्र भवेद्भक्तिः सोऽपि मन्त्रोऽस्य सिद्ध्यति"॥ भुवनेश्वरीपारिजातेऽपि। "मायावीजसमायुक्तः क्षिप्रं सिद्धिप्रदो भवेत्। पिण्डस्तु केवलो मन्त्रो मायावीजोज्ज्वलीकृतः॥ मायावीजात् भवेत् प्राणो वीजञ्चैतन्यवीर्य्यवत्"॥ नारदीये। "यदृच्छया श्रुतं मन्त्रं छद्मनापि छलेन वा। पत्रेस्थितं वा गाथाञ्च तमुपेत्य त्वनर्थकृत्॥ प्रविश्य विधिवद्दीक्षामभिषेकावसानिकाम्। श्रुत्वा तन्त्रं गुरोर्लब्धं साधयेदीप्सितं मनुम्"॥ अन्यत्रापि। "दैशिकानुग्रहादेव देवता व्यक्तरूपिणी। गुर्वनुज्ञाः क्रियाः सर्वा निष्फलाः स्युर्यतो ध्रुवम्"॥ नारदीये। "कुर्व्वन्नाचार्य्यशुश्रूषां मनोवाक्कायकर्म्मभिः। शुद्धभावो महोत्साहो बोद्धा शिष्य इति स्मृतः॥ न तूपदेश्यः पुत्रस्तु व्यत्ययो वस्तुदस्तथा"॥ व्यत्ययी परस्परविद्यादायी। प्रयोगसारे। "तत्रापि भक्तियुक्ताय पुत्राय वस्तुदाय च"। अन्यत्रापि "यथा देवे तथा मन्त्रे यथा मन्त्रे तथा गुरौ। यथा गुरौ तथा स्वात्मन्येष भक्तिक्रमः स्मृतः"॥ पिङ्गलामते। "नाध्यातो नार्च्चितो मन्त्रः सुसिद्धोऽपि प्रसीदति। नाजप्तः सिद्धिदो लोके नाहुतः फलदो भवेत्॥ पूजा होमो जपं ध्यानं तथा कर्म्मचतुष्टयम्। प्रत्यहं साधकः कुर्य्यात् स्वयञ्चेत् सिद्धिमिच्छति"॥ होम-

स्वरोत्तरे। "चीर्णाचारव्रतो मन्त्री ज्ञानवान् सुसमाश्रितः। ब्रह्मनिष्ठो यतः ख्यातो गुरुः स्याद्नौतिको हि सः" ॥ एतानि राघवभट्टधृतानि।

अथ स्त्रीशूद्रयोः प्रणवयुक्तमन्त्रनिषेधः। नृसिंहतापनीये। "सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्रयोर्नेच्छन्ति। सावित्रीं प्रणवं यजुर्लक्ष्मीं यदि स्त्रीशूद्रो जानीयात् स मृतोऽधोगच्छतीति" ॥ नेच्छन्तीति पर्य्यन्तं पराशरभाष्येऽपि गोविन्दभट्टधृतम्। "स्वाहाप्रणवसंयुक्तं शूद्रे मन्त्रं ददद्द्विजः। शूद्रो निरयमाप्नोति ब्राह्मणः शूद्रतामियात्" ॥

अथ दीक्षितस्याशौचे जपाद्यधिकारः। मन्त्रमुक्तावल्याम्। "जपो देवार्चनविधिः कार्य्यो दीक्षान्वितैर्नरैः। नास्ति पापं यतस्तेषां सूतकं वा यतात्मनाम्" ॥ राघवभट्टधृतं नारदवचनम्। "अथ सूतकिनः पूजां वक्ष्याम्यागमचोदिताम्। स्नात्वा नित्यानि निर्वर्त्त्य मानस्याक्रियया तु वै ॥ वाह्यपूजाक्रमेणैव ध्यानयोगेन पूजयेत्। यदा कामी न चेत् कामी नित्यं पूर्ववदाचरेत्" ॥ यत्तु नृसिंहकल्पे। सदा मन्त्रजपमुक्त्वा "यदि स्यादशुचिस्तत्र स्मरेन्मन्त्रं न तूच्चरेत्। मनो हि सर्वजन्तूनां सर्वदैव शुचि स्मृतम्" ॥ इति तन्मूलोच्चाराद्यशौचपरम्। रामार्च्चनचन्द्रिकाधृतमन्त्रोत्तरेऽपि। "अशुचिर्वा शुचिर्वापि गच्छंस्तिष्ठन् स्वपन्नपि। मन्त्रैकशरणो विद्वान्मनसैव सदाभ्यसेत्" ॥

अथाशौचे विष्णुकीर्त्तनम्। यथा "चक्रायुधस्य नामानि सदा सर्वत्र कीर्त्तयेत्। नाशौचं कीर्त्तने चास्य स पवित्रकरो यतः" ॥ संवत्सरप्रदीपे। "न देशनियमस्तत्र न कालनियमस्तथा। नोच्छिष्टादौ निषेधोऽस्ति हरेर्नामानि लुब्धक" ॥ तेन "नाशुचिर्देवर्षिपितृनामानि कीर्त्तयेत्"। इति विष्णुनामातिरिक्तपरम्।

अथाधिमासे विवाहादिनिषेधः। भीमपराक्रमे। "अधिमासे विवाहं यात्रां चूड़ां तथोपनयनादि कुर्य्यान्न सावकाशं माङ्गल्यं न तु विशेषेज्याम्" अत्र विवाहादिकीर्त्तनं निरवकाशत्वेऽपि निषेधार्थम्। अन्यथा सावकाशमित्यनेनैव सिद्धेः। सावकाशञ्च सम्भवत्कालान्तरं कर्म्म अतो निरवकाशस्यानन्यगतिकस्य प्रतिप्रसवोऽर्थात् सूचितः। तथा च मलमासाधिकारे काठकगृह्यम्। "कालेऽनन्यगतिं नित्यां कुर्य्यान्नैमित्तिकीं क्रियाम्"। बृहस्पतिः। "नित्यनैमित्तिके कुर्य्यात् प्रयतः सन् मलिम्लुचे। तीर्थस्नानं गजच्छायां प्रेतश्राद्धं तथैव च"॥ नित्यमहरहः पुरस्कारविहितं स्नानसन्ध्यापञ्चमहायज्ञादि। काम्यमपि तथाविधसङ्कल्पितयत्किञ्चिद्द्रव्यदानशिवपूजादि। व्यक्तं भविष्ये। "कुर्य्यात् प्रात्यहिकं कर्म्म प्रयत्नेन मलिम्लुचे। नैमित्तिकञ्च कुर्वीत सावकाशं न यद्भवेत्"॥ न च नित्यपदं यदकरणे प्रत्यवायस्तत्परम्। तथात्वे गजच्छायाप्रेतश्राद्धयोरुपादानं व्यर्थं स्यात्। तथा च कालमाधवीये मत्स्यपुराणम् "वर्षे वाहरहः श्राद्धं दानञ्च प्रतिवासरम्। गोभूतिलहिरण्यानां मासेऽपि स्यान्मलिम्लुचे"॥ एवञ्च "दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः" इति याज्ञवल्क्योक्तं सङ्गच्छते। काठकगृह्यपरिशिष्टम्। "प्रवृत्तं मलमासात् प्राक् यत् कर्म्म न समापितम्। आगते मलमासेऽपि तत् समाप्यमसंशयम्"। ब्रह्मसिद्धान्ते। "आरब्धं कर्म्म यत् किञ्चित्तत् कार्य्यं हि मलिम्लुचे"। नैमित्तिकं मासदिनसंवत्सरादिविशेषनियमशून्यावश्यकर्त्तव्यकादाचित्कनिमित्तोत्पन्नम्। अतएवाचारमाधवीये बौधायनेनास्यागन्तुकत्वेनोपादानमकरणे दोषाभिधानञ्च कृतं यथा "यस्य नित्यानि लुप्तानि तथैवागन्तुकानि च। विपद्ग्रस्तोऽपि न स्वर्गं गच्छेत्तु पतितो हि

सः" ॥ तत्राभ्युदयिकादि। "नैमित्तिकमथो वक्ष्ये श्राद्धमभ्युदयार्थकम्। पुत्रजन्मनि तत् कार्य्यं जातकर्मसमं नरैः" इति मार्कण्डेयपुराणात्। अन्यदप्येवं जातकर्मसममित्यनेन नाड़ीच्छेदात् प्रागपि कर्त्तव्यतोक्ता। अभ्युदयार्थकम्। अभ्युदयप्रयोजनकम्। तथा च शातातपः। "पूर्वाह्णे दैविकं श्राद्धं कार्य्यमभ्युदयार्थिना"। तेनात्रात्मशब्दप्रयोगो भ्रान्तानामिति। जातकर्माद्यपि मलमासे कार्य्यम्। "जातकर्मान्त्यकर्माणि नवश्राद्धं तथैव च। मघात्रयोदशीश्राद्धं श्राद्धान्यपि च षोड़श॥ चन्द्रसूर्य्यग्रहे स्नानं श्राद्धं दानं तथा जपम्। कार्य्याणि मलमासेऽपि नित्यं नैमित्तिकं तथा"॥ हेमाद्रिमाधवाचार्य्यधृतयमवचनात्। मघात्रयोदशीश्राद्धस्य मलमासकर्त्तव्यतायां निरवकाशत्वं वीजं तदन्यीयमासान्तरे तदलाभात्। यत्तु गर्गवचनम्। "नामान्नप्राशनं चौड़ं विवाहं मौञ्जिबन्धनम् निष्क्रमम्। जातकर्मापि काम्यं वृषविसर्जनम्। अस्तं गते गुरौ शुक्रे बाले वृद्धे मलिम्लुचे। उपायनमुपारम्भं व्रतानां नैव कारयेत्"॥ उपायनं प्रतिष्ठा। तन्नामकरणान्नप्राशननिष्क्रमणजातकर्मणां प्रधानकालात्ययतानां वेदितव्यम्। तदाह स एव। "नाम कर्म च जातेष्टिं यथाकालं समाचरेत्। अतिपातेऽपि कुर्वीत प्रशस्ते मासि पुण्यदे"॥ स्मृतिः। "श्राद्धजातकनामानि ये च संस्कारमाश्रिताः। मलिम्लुचेऽपि कर्त्तव्या काम्या इष्टीश्च वर्जयेत्"॥ संस्कारमाश्रिताः अन्नप्राशननिष्क्रमणादयः। इति माधवाचार्य्यः। अन्त्यकर्माणि वहनदहमोदकदानपिण्डदानास्थिसञ्चयनादीनि। नवश्राद्धं "चतुर्थे पञ्चमे चैव नवमैकादशे तथा। यदत्र दीयते जन्तोस्तन्नवश्राद्धमुच्यते"॥ इति यमोक्तं तत्र चतुर्थादिग्रहणं मरणादिनावधीति। षोड़शश्राद्धानि तु। "द्वादशप्रतिमास्यानि श्राद्यं

षाण्मासिके तथा । सपिण्डीकरणञ्चैव इत्येतत् श्राद्धषोड़शम्" इति कर्मप्रदीपोक्तानि । ननु मलमासे कृते सपिण्डीकरणे किमिति प्रकृते मासि प्रतिसांवत्सरिकं न क्रियते । इति चेन्न "पूर्णसंवत्सरे श्राद्धं षोड़शं परिकीर्त्तितम् । तेनैव च सपिण्डत्वं तेनैवाब्दिकमिष्यते" ॥ इति हेमाद्रिधृतवचनात् । सकृत् कृते कृतः शास्त्रार्थं इति न्यायाच्च । एवमपकृष्य सपिण्डीकरणे मृताहे प्रत्याब्दिकं न क्रियते । सपिण्डीकरणेनैव प्रत्याब्दिकसिद्धेः । अतएव याज्ञवल्क्येन । "मृताहनि तु कर्त्तव्यं प्रतिमासन्तु वत्सरम् । प्रतिसंवत्सरञ्चैवमाद्यमेकादशेऽहनि" ॥ प्रतिसंवत्सरं श्राद्धं कर्त्तव्यमिति सामान्येनोक्तम् । न त्वेकोद्दिष्टविशेषेणेति साम्व्यादिभेदेन श्राद्धस्य नानात्वात् । एतेन सपिण्डीकरणापकर्षपक्षे वर्षान्ते सांवत्सरिकं कार्य्यं बाधकाभावादिति श्रीदत्तवाचस्पतिमिश्रोक्तं हेयम् । बालग्रहभूतग्रहनराधिपप्रबलतरशत्रुदुःसहरोगाभिभवाद्भुत-दुःस्वप्नग्रहदौःस्थ्यादिनिमित्तकं शान्तिकर्मापि मलमासे कर्त्तव्यं विष्णुनापि । "शान्तिस्वस्त्ययनैर्दैवोपघातान् शमयेत् परचक्रोपघातांश्च" इत्युक्तं मलमासेऽपि कर्त्तव्यम् । शुद्धकालप्रतीक्षायामसहत्वेनानन्यगतिकत्वात् । अतएव "आत्मानं सततं गोपायीत" इति श्रुतौ सततमुक्तम् । ग्रहदौःस्थ्यफलपाकमाह मार्कण्डेयपुराणम् । "द्रव्ये गोष्ठेषु भृत्येषु सुहृत्सु तनयेषु च । भार्य्यायाञ्च ग्रहे दुष्टे भयं पुण्यवतां नृणाम् ॥ आत्मन्यथाल्पपुण्यानां सर्व्वत्रैवातिपापिनाम् । नैकत्रापि ह्यपापानां नराणां जायते भयम्" ॥ तदयमर्थः । यस्य दीर्घजीवनादिजनकं बलवत् पुण्यमस्ति तेन तन्मरणाद्युन्मुखमपि दुष्कर्मप्रतिहन्यते तत्प्रतिहतं सत् तत्पुत्रादेस्तत् प्रतिघातकं पुण्यं नास्ति प्रत्युत तदनुगुणमेव पापमस्ति तत्र तं हित्वा तत्पुत्रादेः पीड़ामावहतीति ।

वह्नृचगृह्यपरिशिष्टम्। "यथा शस्त्रप्रहाराणां कवचं विनिवारकम्। एवं दैवोपघातानां शान्तिर्भवति वारणम्"॥ शान्तिर्धर्मद्वारा ग्रहदौःस्थ्यदुःस्वप्नादिसूचितैहिकानिष्टहेतु-दुरितनिवृत्तिः। स्वस्ति धर्मद्वाराभिप्रेतार्थसिद्धिः तस्यायनं प्रापकं यागदानादिमङ्गलहेतुगोरोचनादिद्रव्यधारणम्। आशीर्निमित्तभूताभिवादनानि च। यथा कल्पतरौ यमः। "अभिवादयेत्तु यः पूर्वमाशिषं न प्रयच्छति। तद्दुष्कृतं भवेत्तस्य तस्माद्रोगं प्रपद्यते॥ तस्मात् पूर्वाभिभाषी स्याच्चाण्डालस्यापि धर्मवित्। सुरां पिबेति वक्तव्यमेवं धर्मो न लुप्यते॥ स्वस्तीति ब्राह्मणे ब्रूयादायुष्मानिति राजनि। वर्द्धतामिति वैश्येषु शूद्रे त्वारोग्यमेव च"॥ स्वस्तीति प्रत्यभिवादनेतरपरम्। मन्वादिविरोधात्। "यत् सुखं त्रिषु लोकेषु व्याधिव्यसनवर्जितम्। यस्मिन् सर्वे स्थिताः कामाः सा स्वस्तीत्यभिसंज्ञिता"॥ आशिषः प्रकृतत्वात् सा आशीः। अङ्गिराः। "अप्रणामकृते शूद्रे स्वस्ति कुर्वन्ति ये द्विजाः। शूद्रोऽग्रे नरकं याति ब्राह्मणस्तदनन्तरम्"॥ ब्राह्मण इत्यनुवृत्तौ मिताक्षरायां हारीतः। "क्षत्रियस्याभिवादनेऽहोरात्रमुपवसेदेवं वैश्यस्यापि शूद्रस्याभिवादने त्रिरात्रमुपवसेत्" इति। अहोरात्राद्युपवासश्रवणानुन्यन्तरोक्तविप्रदशकनमस्काररूपलघुप्रायश्चित्तन्तु प्रमादादिविषयं अमकृतनमस्कृतविषयं वा। यथा मनुः। "यदि विप्रः प्रमादेन शूद्रं समभिवादयेत्। अभिवाद्य दश विप्रांस्ततः पापैः प्रमुच्यते"॥ स्मृतिः "मातुः पितुः कनीयांसं न नमेद्वयसाधिकः। नमस्कुर्य्याद् गुरोः पत्नीं भ्रातृजायां विमातरम्"॥ स्मृत्यर्थसारे। "स्त्रियो नमस्या वृद्धाश्च वयसा पत्युरेव ताः"। अतः पत्युर्वयसा ता स्त्रियो वृद्धाः अतः कनिष्ठा अपि नमस्याः। तत्राशक्त्यवन्दने हलायुधधृतम्। "चक्षुःस्पन्दं भुजस्पन्दं तथा

दुःस्वप्रदर्शनम् । अतृणाञ्च समुत्थानमश्वत्थ शमयाशु मे ॥ अश्वत्थरूपी भगवान् प्रीयतां मे जनार्दन। दृष्ट्वा तु दूरतः पापं स्पृष्ट्वा लक्ष्मीर्विवर्द्धते ॥ प्रदक्षिणे भवेदायुः सदाश्वत्थ नमोऽस्तु ते" ॥ शान्तिस्वस्त्यनयोः शूद्रस्याप्यधिकारः। तथा च अपिपालकारिकायां "स्मार्त्तं शूद्रः समाचरेत्" इति भविष्य-पुराणवचनञ्च। "चतुर्णामपि वर्णानां यानि प्रोक्तानि श्रेयसे। धर्म्मशास्त्राणि राजेन्द्र शृणु तानि नृपोत्तम ॥ विशेषतश्च शूद्राणां पावनानां मनीषिभिः। अष्टादशपुराणानि चरितं राघवस्य च ॥ रामस्य कुरु शार्दूल धर्म्मकामार्थसिद्धये। यथोक्तं भारतं वीर पराशर्य्येण धीमता ॥ वेदार्थं सकलं योज्य धर्म्मशास्त्राणि च प्रभो" ॥ तस्य संस्कारमाह यमः। "शूद्रो-ऽप्येवंविधः प्रोक्तो विना मन्त्रेण संस्कृतः। न केनचित् सम-सृजत् छन्दसा तं प्रजापतिः" ॥ तं शूद्रं ब्रह्मपुराणम्। "विवाहमात्रं संस्कारं शूद्रोऽपि लभते सदा"। मात्रशब्दोऽत्र न विवाहेतरसंस्कारनिवर्त्तकपरः किन्त्वन्यत्र मन्त्रसम्बन्ध-निषेधपरः। यमवचनेन गर्भाधानादिसंस्कारप्रतिपादनादिति शूलपाणिमहामहोपाध्यायाः। "आपक्रमेण सर्वत्र शूद्रावाज-सनेयिनः"। इति महाजनपरिगृहीतवचनात् यजुर्वेदविधि-नैव ते कर्म्म कुर्य्युः। पुराणान्याह विष्णुपुराणम्। "अष्टादश पुराणानि पुराणज्ञाः प्रचक्षते। ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतं तथा ॥ तथान्यन्नारदीयञ्च मार्कण्डेयञ्च सप्तमम्। आग्नेयमष्टमञ्चैव भविष्यं नवमं तथा ॥ दशमं ब्रह्मवैवर्त्तं लैङ्ग-मेकादशन्तथा। वाराहं द्वादशञ्चैव स्कान्दञ्चात्र त्रयोदशम् ॥ चतुर्दशं वामनकं कौर्मं पञ्चदशन्तथा। मात्स्यञ्च गारुडञ्चैव ब्रह्माण्डञ्च ततः परम्" ॥ कौर्मे "अन्यान्युपपुराणानि मुनिभिः कथितान्यपि"। तानि च नरसिंहनन्द्यादित्य कालिका-

पुराणादीनि यथा "आद्यं सनत्कुमारोक्तं नारसिंहं ततः परम्। तृतीयं वायवीयञ्च कुमारेण च भाषितम्॥ चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम्। दुर्वाससोक्तमाश्चर्य्यं नारदीयमतः परम्॥ नन्दिकेश्वरयुग्मञ्च तथैवोशनसेरितम्। कापिलं वारुणञ्चाथ कालिकाह्वयमेव च॥ माहेश्वरं तथा शाम्बं दैवं सर्वार्थसिद्धिदम्। पराशरोक्तमपरं मारीचं भास्कराह्वयम्"॥ दैवं देवीपुराणं तेन द्विजातिविहितविशेषकर्मेतरसकलस्मार्त्तकर्मणि शूद्रस्याधिकारः। अतएव भारते आनुशासनिके पर्व्वणि "अहिंसकशुभाचारो देवता-द्विजपूजकः। शूद्रो धर्मफलैरिष्टैः स्वधर्मैरेव युज्यते"॥ अतएव शूद्रानुवृत्तौ मनुः। "धर्मेप्सवस्तु धर्मज्ञाः सतां वृत्तिमनुष्ठिताः। मन्त्रवर्जं न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च"॥ ये पुनः शूद्राः स्वधर्मवेदिनो धर्मप्राप्तिकामास्त्रैवर्णिकाचारमनिषिद्धमाश्रितास्ते वक्ष्यमाण नमस्कारेतरमन्त्ररहितं कर्म कुर्वाणान प्रत्यवायिनः ख्यातिभाजश्च भवन्ति एवमेव कुल्लूकभट्टः। तथा "धर्मोपदेशं दर्पेण विप्राणामस्य कुर्वतः। तप्तमासेचयेत्तैलं वक्त्रे श्रोत्रे च पार्थिवः"॥ तथा "शक्तेनापि हि शूद्रेण न कार्य्यो धनसञ्चयः। शूद्रोऽपि धनमासाद्य ब्राह्मणानेव बाधते"॥ शूद्रस्य पूर्त्ताधिकारमाह जातूकर्णः। "वापीकूपतडागादिदेवतायतनानि च। अन्नप्रदानमारामाः पूर्त्तमित्यभिधीयते"॥ आरामः पुष्पफलोपचयहेतुर्भूभागः। "अग्निहोत्रं तपः सत्यं वेदानाञ्चानुपालनम्। आतिथ्यं वैश्वदेवञ्च इष्टमित्यभिधीयते॥ ग्रहोपरागे यद्दानं पूर्त्तमित्यभिधीयते। इष्टापूर्त्ते द्विजातीनां धर्मः सामान्य उच्यते। अधिकारी भवेच्छूद्रः पूर्त्ते धर्मे न वैदिके"॥ वैदिके वेदाध्ययनसाध्ये। अग्निहोत्रादाविति रत्नाकरः। एवं स्त्रीणामपि पूर्त्ताधिकारः। यथा नारीत्यनुवृत्तौ वृहस्पतिः।

"पितृव्यगुरुदौहित्रान् भर्त्तुः स्वस्रीयमातुलान्। पूजयेत् कव्य-पूर्त्ताभ्यां वृद्धानाथातिथीन् स्त्रियः"॥ एतेन जलाशयोत्सर्गे गौरवतरणानुमन्त्रणयोर्यजमानकर्त्तृकमन्त्रपाठः तत्रामन्त्रकतया स्त्रीशूद्रयोरनधिकारेण तद्वति यागेऽप्यनधिकारः। विशेषोपदेशविरहादिति द्वैतनिर्णयोक्तं निरस्तम्। अतएव तयोर्जलाशयोत्सर्गादिग्रहयज्ञवेदी-होमादिसमाचारः। अत्र होमो वह्नौ न साक्षात् कल्पतरुरत्नाकरधृतापस्तम्बवचनात्। तद्यथा क्षारलवणाद्युपक्रम्य "तद्धुतमहुतञ्चाग्नौ न स्त्री जुहुयान्नानुपेतः" इति अनुपेतः अनुपनीतः किन्तु ब्राह्मणद्वारा करणीयः। "श्रौतस्मार्त्तक्रियाहेतोर्वृणुयादृत्विजः स्वयम्" इति याज्ञवल्क्योक्तेः। "ऋत्विग्वादे नियुक्तौ च समौ सम्परिकीर्त्तितौ। यत्ते स्वाम्याप्नुयात् पुण्यं हानिं वादेऽथ वा जयम्"॥ इति वृहस्पत्युक्तेः। वैदिकेतरमन्त्रपाठे शूद्रादेरप्यधिकारः। वेदमन्त्रवर्जं शूद्रस्येति छन्दोगाह्निकाचारचिन्तामणिधृतस्मृतौ वेदेति विशेषणात्। "शूद्रोऽप्येवंविधः प्रोक्तो विना मन्त्रेण संस्कृतः। न केनचित् समसृजत् छन्दसा तं प्रजापतिः" इति यमस्मृतौ छन्दसा वेदेन इत्युक्तेश्च। तं शूद्रम्। पञ्चयज्ञस्नान श्राद्धेषु वैदिकेतरमन्त्रोऽपि निषिद्धः। शूद्रमधिकृत्य। "नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत्" इति याज्ञवल्क्यीयेन। "ब्रह्मक्षत्रविशामेव मन्त्रवत् स्नानमिष्यते। तूष्णीमेव हि शूद्रस्य सनमस्कारकं मतम्" इति योगियाज्ञवल्क्यीयेन श्राद्धमधिकृत्य "अयमेव विधिः प्रोक्तः शूद्राणां मन्त्रवर्जितः। अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते" इति वराहपुराणीयेन च नमस्कारेणेति तूष्णीमिति मन्त्रवर्जित इत्यभिधानात्। अभियुक्तानां मन्त्रोऽयमिति समाख्यानं मन्त्रलक्षणमिति माधवाचार्य्यः। एवञ्च "श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मण-

मग्रतः । वेदस्याध्ययनं ह्येदं तच्च कार्य्यं महत् स्मृतम्" ॥ इति मोक्षधर्मोक्तं वेदस्य शूद्रश्रावणमप्येतद्विषयम् । शूद्रस्य पुराणादेरध्ययनविधिमाह भविष्ये । "अध्येतव्यं न चान्येन ब्राह्मणं क्षत्रियं विना । श्रोतव्यमिह शूद्रेण नाध्येतव्यं कदाचन" ॥ तथा "ब्राह्मणं वाचकं विद्यान्नान्यवर्णजमादरात् । श्रुत्वान्यवर्णजाद्राजन् वाचकान्नरकं व्रजेत्" ॥ तथा "ग्रन्थार्थं बुध्यमानस्तु समग्रं कृत्स्नशो नृप । ब्राह्मणादिषु वर्णेषु अर्पयन् विधिवन्नृप ॥ य एवं वाचयेद्राजन् स ज्ञेयः सात्त्विको बुधैः" । तथा "सन्त्यज्य सर्वकर्माणि भक्तिश्रद्धासमन्वितः । सततं पूजयन् यस्तु वाचकं श्रद्धया नृप ॥ नित्यनैमित्तिके कार्य्ये गुरवे च ददत् सदा । य एवं शृणुयाद्वीरः स ज्ञेयः सात्त्विको बुधैः" ॥ गुरवे च इत्यत्र वाचकायेति । कामधेनुकल्पतरू । वाराहे अयमेवेत्यस्य शूद्रमात्रनिष्ठत्वे शूद्रस्येत्यनेनैव सिद्धेरमन्त्रस्येति विशेषणं यावदमन्त्रव्याप्त्यर्थं परिभाषार्थञ्च ततश्चामन्त्रकर्त्तृकश्राद्धहोमदानादिःकर्मसम्बन्धिमन्त्रेण विप्रो गृह्यते सम्बध्यते । स्त्रियास्त्वमन्त्रकता "अमन्त्रा हि स्त्रियो मता" इति शुद्धिरत्नाकरधृतबौधायनवचनात् । अनुपनीतस्य श्राद्धातिरिक्ते मन्त्रपाठनिषेधमाह मनुः । "नाभिव्याहारयेद् ब्रह्म स्वधानिनयनादृते । शूद्रेण हि समस्तावद्यावद्वेदे न जायते" ॥ स्वधा श्राद्धं तन्निनीयते सम्पाद्यते येन मन्त्रजातेन तस्मात् तेन स्त्रीशूद्रानुपनीतानां सर्वकर्म्मणि द्रव्यदेवतानुष्ठानादिदृष्टप्रयोजनप्रकाशाय ब्राह्मणेन मन्त्रः पठनीयः । मन्त्रपाठजन्यादृष्टसिद्धिर्नमस्कारेण यथा बृहस्पतिः । "शौचं ब्राह्मणशुश्रूषा सत्यमक्रोध एव च । शूद्रकर्म्म तथा मन्त्रो नमस्कारोऽस्य दर्शितः" ॥ शूद्राधिकारे गौतमः । "अनुमतोऽस्य नमस्कारो मन्त्रः" इति । एवं मलमासे प्रायश्चित्त-

मपि निरवकाशनैमित्तिकत्वेन कर्त्तव्यम् । "विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् । प्रायश्चित्तं यत् क्रियते तन्नैमित्तिकमुच्यते" ॥ इति वृद्धस्त्यूक्तेः । अस्य च निरवकाशत्वम् अनारब्धप्रायश्चित्तस्य भुञ्जानस्य पापवृद्धेः । तथा चाङ्गिराः । "क्षते निःसंशये पापे न भुञ्जीतानुपस्थितः । भुञ्जानो वर्द्धयेत् पापमसत्यं पार्षदि ब्रुवन्" ॥ अनुपस्थितः परिषदित्यर्थः । अतएव दक्षः । "नैमित्तिकानि काम्यानि निपतन्ति यथा-यथा । तथातथैव कार्य्याणि न कालस्तु विधीयते" ॥ नैमित्तिकानि काम्यानीति समानाधिकरणम् । निमित्तात् ग्रहदौःस्थ्यदुःस्वप्नादेः कर्त्तव्यत्वेन प्रतीतानि नैमित्तिकानि निमित्तसूचितदोषशान्तिकामनया क्रियमाणानि तान्येव काम्यानि न कालस्तु विधीयते इति उदगयनशुक्लपक्षदिनपूर्वभागादिरूपः कालो नानुरुध्यते । तेन एतद्व्यतिरिक्ते दक्षिणायनादौ निन्दिते मलिम्लुचादौ च शान्तिकं कर्त्तव्यमिति । शान्तिकपौष्टिके कामतः । तथा दत्तनष्टहिरण्यस्यादाने स्तेयत्वश्रवणादारब्धदानसम्पादकत्वाच्च मलमासेऽपि तद्देयम् । तथाच विष्णुपुराणम् । "प्रमादतस्तु तन्नष्टं तावन्मात्रं नियोजयेत् । अन्यथा स्तेययुक्तः स्याद्ब्राह्मणद्रव्ये विनाशिनि" ॥ ब्राह्मणायोत्सृष्टं ब्राह्मणसादकृतं यदि चौरादिनापक्रियते तदा तावदेव पुनरुत्सृज्य देयमिति दानसागरः । युक्तञ्चैतत्तदित्यनेन पूर्ववचनोपात्तदत्तानुकर्षात् । तद्यथा "तस्मात् सर्वात्मना पात्रे दद्यात् कनकमुत्तमम् । अपात्रे पातयेद्दत्तं सुवर्णं नरकार्णवे" ॥ किञ्चान्यथेत्यनेनैवादाने प्राप्ते त्वदत्त इति पुनरुपादानं व्यर्थं स्यात् । एतेनानुत्सृष्टहेमनाशेऽपि तावदुत्सृज्य देयमिति मैथिलोक्तं निरस्तम् । उत्सृष्टाप्रतिपादितविषयमिति चण्डेश्वरोऽपि साम्प्रदायिकास्तु । सर्वत्र एव सङ्कोचात् प्रायश्चित्त-

माचरन्ति तेषां वाक्यन्तु । अद्य प्रमादनष्टहिरण्यतुल्यहिरण्या-प्रदानजन्यपापसमपापानुत्पत्तिकाम इदं प्रमादनष्टहिरण्यतुल्य-हिरण्यमित्यादि दक्षिणा च अस्मन्मते प्रमादनष्टानन्तरम् तत्-स्रष्टाप्रतिपादितेति विशेषः । बृहस्पतिः । "नित्यनैमित्तिके कुर्य्यात् प्रयतः सन् मलिम्लुचे । तीर्थस्नानं गजच्छायां प्रेतश्राद्धं तथैव च" ॥ तीर्थस्नानमावृत्तम् । अनावृत्ते निषेधस्य वक्ष्यमाण-त्वात् । गजच्छायापदं तद्विहितकर्मपरम् । गजच्छाया वरा-होक्ता । "सैंहिकेयो यदा भानुं ग्रसते पर्वसन्धिषु । गजच्छाया तु सा प्रोक्ता तत्र श्राद्धं प्रकल्पयेत्" ॥ अत्र च राहुर्वै हस्ती-भूत्वा चन्द्रमसं ग्रसतीति श्रुतिर्मूलम् । सूर्य्यग्रहे चन्द्रग्रासस्या-वश्यक इति मूलमूलिनोर्विरोध इति मैथिलाः । तथा च विष्णु-धर्मोत्तरे । राहुं प्रति भगवद्वाक्यम् । "पर्वकाले तु संप्राप्ते चन्द्राकौं छादयिष्यसि । भूमिच्छायागतश्चन्द्रं चन्द्रगोऽर्कं कदाचन ॥ संच्छादयिष्यसि यदा तदा भावमवाप्स्यसि । स्नाने जप्ये तथा होमे दाने श्राद्धे सुरार्चने । पुण्यः स कालो भविता नित्यमेवासुरेश्वर" ॥ नित्यं मलमासादिप्रतिषिद्धकालेऽपि । वस्तुतस्तु सूर्य्यग्रहेऽपि साक्षात् श्रुतिरस्ति । तथा च समय-प्रकाशे कठब्राह्मणम् । "हस्ती वै भूत्वा स्वर्भानुरंशुभिरादित्यं तमसा पिदधातीति । अमावास्यां गते सोमे छाया या प्राङ्मुखी भवेत् । गजच्छाया तु सा प्रोक्ता तत्र श्राद्धं प्रश-स्यते" ॥ इति वचनात् अमावास्याश्राद्धं मलमासेऽपि कार्य्यं इति मैथिलोक्तं हेयम् एतद्दूषणस्य वक्ष्यमाणत्वात् । अत्र ब्रह्मपुराणोक्तगजच्छायायोगो न गृह्यते कन्यामलमासे त्रयो-दश्यां चित्रायामेव रवेरवस्थानेन तदसम्भवात् स च "योगो मघात्रयोदश्यां कुञ्जरच्छायसंज्ञितः । भवेन्मघायां संस्थे तु शशिन्यर्के करे स्थिते" ॥ करे हस्तायां तत्स्थे सूर्य्ये । मघासंस्थे

चन्द्रे चेति मघात्रयोदश्यां कुञ्जरच्छायसंज्ञितो योगो भवति। हस्तावस्थानञ्च सूर्य्यस्य कन्यादशमांशोत्तरकिञ्चिदधिकसपाद- त्रयोदशांशं यावत्। न चानेन कुञ्जरच्छाययोगः सङ्केतितो न तु गजच्छायेति वाच्यं कुञ्जरच्छायस्य गजच्छायादिका संज्ञा जाता अवेतीतच्प्रत्ययेन गजच्छायाया अपि सङ्केतितत्वात् धुस्तूरः कनकाह्वय इतिवत्। अतएव कृत्यचिन्तामणौ। "कृष्णपक्षे त्रयोदश्यां मघास्विन्दुः करे रविः। यदा तदा गजच्छाया श्राद्धे पुण्यैरवाप्यते"॥ न च मघात्रयोदश्यामित्यनेनैव सिद्धे- मघायां संस्थितेत्यधिकमिति वाच्यम्। मघात्रयोदश्यामित्ये- तावन्मात्रोक्तेस्तिथेरेकादशेऽपि मघायोगे कालान्तरेऽपि योगः स्यात् अतो मघाया वर्त्तमानत्वार्थं मघायां संस्थे शशिनीत्युक्तं तर्हि एतदस्तु किं मघात्रयोदश्यामित्यत्र मघापदोपादानमिति चेत्। "श्राद्धं तेनापि कर्त्तव्यं तैस्तैर्द्रव्यैः सुसञ्चितैः। त्रयो- दश्यां प्रयत्नेन वर्षासु च मघासु च"॥ इति ब्रह्मपुराणीय- वचनान्तरस्थ-विधिवाक्यप्राप्त-श्राद्धनिमित्तीभूतमघात्रयोदश्या- मेव फलातिशयाय कुञ्जरच्छायाख्ययोगो भवतीति न निमि- त्तान्तरम् इत्येतदर्थमेव हि अतएवोक्तवचने श्राद्धे पुण्यैरवाप्यते इत्युक्तं न तु श्राद्धाय निमित्तान्तरमिति तथा चाधिकरणमा- लायां "काम्यो गुणः श्रूयमाणो नित्यमर्थं विकृत्याभिनिविशते इति न्यायाद् यथा गोदोहगुणो नित्यं चमससाधनकमपां प्रणयनं विकृत्याभिनिविशत इत्युक्तं न तु गोदोहेन प्रणय- नान्तरम्। तेन यदा कन्यादशमांशापराह्णे मघात्रयोदशी- लाभस्तदा तत्परदिने तल्लाभेऽपि न कुञ्जरच्छाययोगः पूर्व्वदिन एव मघात्रयोदशीश्राद्धविधानात्। तथा च गृह्यपरिशिष्टम्। "ययास्तं सविता याति पितरस्तामुपासते। तिथिन्तेभ्यो- ऽपराह्णो हि स्वयन्दत्तः स्वयम्भुवा"॥ एतेन कपालाधिकरण-

न्यायादुभयदिने मध्याह्नलाभे पूर्वदिन एवैकोद्दिष्टश्राद्धमिति मैथिलमतमपास्तम् । अन्यथा आपराह्णिकपितृकृत्येऽपि तन्न्यायात् पूर्वदिन एव लाभे ययास्तमिति वचनमनर्थकं स्यात् । न चैतद्वचनमेव तन्न्यायमूलमिति वाच्यम् । अपराह्णो हीति स्वोक्तहेतुमनिगदेन पितृकृत्ये तन्न्यायानवकाशात् तस्मादापराह्णिकेतरश्राद्धेऽपि "शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः । कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः" ॥ इति विष्णुधर्मोत्तरवचनादेव व्यवस्था । तथा च कालमाधवीये व्यासः । "द्वितीयादिकयुग्मानां पूज्यता नियमादिषु । एकोद्दिष्टादि वृद्ध्यादौ ह्रासवृद्ध्यादिदेशना" ॥ एकोद्दिष्टादि वृद्ध्यादौ एकोद्दिष्टादि निमित्तीभूततिथिविशेषस्य वृद्ध्यादौ । ह्रासवृद्धौ चन्द्रस्य ताभ्यां शुक्लकृष्णपक्षौ लक्ष्येते । आदिशब्दादापराह्णिकपितृकृत्येऽस्तगामिन्येव पूर्वोक्त ययास्तमिति वचनात् । एवञ्च श्राद्धे निमित्तान्तरत्वेनानङ्गीकाराद्गौडीयमैथिलाभ्यां कुञ्जरच्छाययोगः फलातिशयार्थं इत्युक्तम् । ततश्च मघात्रयोदशी श्राद्धं कृत्वा परदिने कुञ्जरच्छाययोगे श्राद्धं कर्त्तव्यमिति वाचस्पतिमिश्रोक्तं हेयम् । एवञ्च ब्रह्मपुराणे तैस्तैर्द्रव्यैः सुसंस्कृतैरित्यभिधानात् गुणविशेषे फलविशेषः स्यात् इति न्यायाच्च यत्किञ्चिन्मधुनामिश्रमिति वचनाच्च । "प्रोष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम् । प्राप्य श्राद्धं हि कर्त्तव्यं मधुना पायसेन च" ॥ इति शङ्खवचनादौ पायसाभिधानं फलातिशयार्थम् । अतएव शातातपेन "पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च । तस्माद्दद्यात् सदोद्युक्तो विद्वत्सु ब्राह्मणेषु च" ॥ इत्यत्रान्नमात्रमुक्तम् । मनुनापि । "यत्किञ्चिन्मधुना मिश्रं प्रदद्यात्तु त्रयोदशीम् । तदप्यक्षयमेव स्याद्वर्षासु च मघासु च" । इत्यत्र यत्किञ्चिदित्युक्तम् ।

यत्किञ्चिदिति अप्रतिषिद्धमिति कुल्लूकभट्टः। याज्ञवल्क्येनापि। "यद्ददाति गयास्थश्च सर्वमानन्त्यमश्नुते। तथा वर्षात्रयोदश्यां मघासु च विशेषतः" ॥ इति तथा वर्षात्रयोदश्यां मघात्रयोदश्यां विशेषतो मघानक्षत्रयुक्तायां तस्यां यत्किञ्चिद्दीयते तत् सर्वमानन्त्यमश्नुते इति मिताक्षरा। देवलेनापि "ततोऽन्नं बहुसंस्कारं नैकव्यञ्जनवत्तरः। चूष्यपेयसमृद्धञ्च यथावदुपपादयेत्" ॥ इति समुच्चय उक्तो न व्रीहि यववद्विकल्पः। गुणप्रधानयोः समुच्चयस्यैव युक्तत्वात्। अतोऽत्र शूद्राणामप्यधिकारः। अविभक्तानामपि पृथक् मघात्रयोदश्यां श्राद्धमावश्यकम्। यथा कृत्यचिन्तामणौ। "विभक्ता अविभक्ता वा कुर्य्युः श्राद्धमदैविकम्। मघासु च तथान्यत्र नाधिकारः पृथग्विना" ॥ अदैविकं प्रत्याब्दिकेऽोद्दिष्टम्। अन्यत्र कृष्णपक्षादौ नाधिकारो न नित्याधिकारः। "सपिण्डीकरणान्तानि यानि श्राद्धानि षोड़श। पृथङ्नैव सुताः कुर्य्युः पृथग्द्रव्या अपि क्वचित्" इत्यत्रापिना समुच्चिता पृथक् द्रव्यस्य पुंसः। सपिण्डीकरणान्तानीति विशेषणात् तदुत्तरश्राद्धानां फलातिशयार्थत्वेन पृथक्त्वं प्रतीयते। एवञ्च श्राद्धाय विधिवाक्ये प्रौष्ठपद्यूर्द्धं मघात्रयादशीश्रुत्या अर्थवादात् केवलत्रयोदशीश्राद्धं निरस्तम् अर्थवादेन कृप्तविधिसम्भवे तदनुगुणैव स्तुतिः क्रियत इति मघात्रयोदशीश्राद्धे तु पुत्रवता पिण्डा न देयाः। "भौजङ्गीं तिथिमासाद्य यावच्चन्द्रार्कसङ्गमम्। तत्रापि महती पूजा कर्त्तव्या पितृदैवते। तत्र पिण्डप्रदानन्तु ज्येष्ठपुत्रो विवर्जयेत्" इति देवीपुराणात्। भौजङ्गी पञ्चमी चन्द्रार्कसङ्गमोऽमावास्या पितृदैवते मघायाम्। एवञ्चापिण्डकेन मघात्रयोदशीश्राद्धेन सपिण्डकस्याप्यश्वयुक् कृष्णपक्षश्राद्धस्य सिद्धिर्लाघवात् अपिण्डकेऽपि

पिण्डाङ्गानामपि निवृत्तिः। प्रधाननिवृत्तावङ्गनिवृत्तेर्युक्तत्वात्। अतएव हेमाद्रिनव्यवर्द्धमानधृतशातातपवचनम् "पिण्डनिर्वापरहितं यत्तु श्राद्धं विधीयते। स्वधावाचनलोपोऽत्र विकिरस्तु न लुप्यते। अक्षय्य दक्षिणा स्वस्ति सौमनस्यं तथास्त्विति"। इति भविष्यपुराणेऽपीदृग्वचनम् अक्षय्येति अक्षय्योदकदानम्। यथा छन्दोगपरिशिष्टम्। "अक्षय्योदकदानन्तु अर्घ्यदानवदिष्यते। षष्ठ्यैवनित्यं तत् कुर्य्यान्न चतुर्थ्यां कदाचन" इति न चतुर्थ्येति तस्मै ते इत्यन्तस्य निषेधः षष्ठ्यैवेत्येवकारेण गोत्रसम्बन्धनाम्नां षष्ठ्यन्तता प्रतीयते। अक्षय्यविधानात् स्वधानिषेधः। तेन "ये चात्र त्वामनुयांश्च त्वमनु तस्मै ते स्वधा" इत्यक्षय्योदकदाननिषेधः। ननु गोभिलेन ये चात्रत्वेति मन्त्रस्य तत्तत्स्थाने विशिष्योपदेशात् कथमक्षय्योदकदाने तत् प्रसक्तिरिति चेत् सत्यं "बहूनामेकधर्म्माणामेकस्यापि यदुच्यते। सर्वेषामेव तत् कुर्य्यादेकरूपा हि ते स्मृताः"। इति बौधायनेनोक्ताकाङ्क्षया प्रसक्तेः प्रागुक्तपरिशिष्टवचनेनापि प्राप्यते। ततश्च छन्दोगानामक्षय्योदकदानेतरत्र श्राद्धे कुशासनादि दाने सर्व्वत्रैवाविशेषाद् ये चात्रत्वेति पाठः विशिष्योपदेशस्तु प्रदर्शक इति अतएवानिरुद्धभट्टेनापि सर्व्वत्र वाक्ये श्राद्धविवेककृता चान्त्योत्सर्गवाक्ये ये चात्रत्वेति वाक्यं लिखितम्। न चैवं सपिण्डकेनापिण्डकसिद्धिरिति मिश्रोक्तं युक्तमिति वाच्यम्। अनयोरेकतरकरणे पिण्डदानतदभावान्यतराङ्गलोपस्यावश्यकत्वेनोभयत्रासाङ्गकरणानिष्पत्तेः। लाघवेनापिण्डकस्यैवौचित्यात्। "मघायां पिण्डदानेन ज्येष्ठपुत्रो विनश्यति" इति निन्दाश्रुतेश्च। अथ पिण्डनिषेधस्य श्राद्धाङ्गत्वे किं मानमिति चेत्। "अविच्छिन्ने कथं भावे यत् प्रधानस्य पच्यते। अविज्ञातफलं कर्म्म तस्य प्रकरणाङ्गता"॥

इति न्यायस्य भाव यदभावेऽप्यविशेषात् । अतएव षोडशि-ग्रहणाभावे क्रत्वर्थतया च याहच्छिकग्रहणप्रसक्त्यभावाविषे-धोऽयं न क्रत्वर्थः स्यादिति दायभागः । द्वैतनिर्णयेऽपि साग्नि-कौरसेन पितुः क्षयाहे पित्रादित्रिकस्य श्राद्धे कृते तत्र माता-महादीनां श्राद्धाय न पुनः पार्वणारम्भः । वाजिनवत्तस्या-नुष्ठानाप्रयोजकत्वादिति स्वोक्तेनाष्टकादौ षाट्पौरुषिकत्वेऽपि "कर्षूसमन्वितं मुक्त्वा तथाद्य श्राद्धषोड़शम् । प्रत्याब्दिकञ्च शेषेषु पिण्डाः स्युः षड़िति स्थितिः" ॥ इत्युक्त्वा क्षयाहे त्रैपुरु-षिकमात्राभिधानपरेण विरोधाच्च । मातामहादीनां श्राद्धे स्वतोऽनुष्ठानाप्रयोजकत्वञ्च । "पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम्" । इत्यनेन पितृश्राद्धाधीनप्रवृत्तेः । एतेन मघात्रयोदश्यां सपिण्डकापिण्डकोभयश्राद्धं पृथक् कार्य्यमिति निरस्तम् । न च पिण्डदानस्य श्राद्धाङ्गत्वेन प्राधान्यात् श्राद्धावृत्तिरिति वाच्यम् । "अदैवं भोजयेत् श्राद्धं पिण्डमेकञ्च निर्वपेत्" ॥ इति मनुवचने "आमश्राद्धं यदा कुर्य्याद्विधिज्ञः श्राद्धदः सुतः । न चाग्नौ करणं कुर्य्यात् पिण्डांस्तेनैव निर्व-पेत्" ॥ इति मत्स्यपुराणे "श्राद्धं सपिण्डकं कृत्वा कुलसाहस्र-मात्मना । विष्णुलोकं समुद्धृत्य नयेद्विष्णुपदं नरः" ॥ इति गयाप्रकरणीयवायुपुराणे च पिण्डातिरिक्तस्यैव श्राद्धत्वकीर्त्त-नादिति । न च "सह पिण्डक्रियायान्तु कृतायामस्य धर्मतः । अनयैवावृता कार्य्यं पिण्डनिर्वपणं सुतैः" ॥ इति मनुवचने अन्नोत्सर्गस्येति कर्त्तव्यतोपदेशात् पिण्डदानस्य प्रधानत्वमिति वाच्यं प्रागुक्तमन्वादिवचनविरोधेन पिण्डपदस्य पितृपरत्वात् । तथा च "ततः प्रभृति पितरः पिण्डसंज्ञान्तु लेभिरे" इति मत्स्यपुराणं तस्मात् पिण्डनिर्वपणं पित्रे दानमित्यर्थकम् । न चैवमष्टकादिः पित्तः क्षयतिथित्वे तत्र पार्वणे कृते निरग्ने-

नैकोद्दिष्टाचरणमिति वाच्यम्। "यद्येकदिवसे स्यातामेकोद्दिष्टन्तु पार्वणम्। एकोद्दिष्टं निवृत्त्यैव पार्वणं विनिवर्त्तयेत्" इति। नव्यवर्द्धमानधृतवचनेन प्रागेकोद्दिष्टविधानात्। नन्वेवं वृद्धिश्राद्धे कृते तद्दिने तदनन्तरमेकोद्दिष्टं पार्वणं वा भवेदिति चेन्न आभ्युदयिके नान्दीमुखविशेषणविशिष्टस्य पितुर्देवतात्वम् अन्यत्र केवलस्येति देवताभेदात् पार्वणानन्तरन्तु मार्कण्डेयपुराणेन नित्यश्राद्धे विकल्पविधानान्न नित्यश्राद्धात् पार्वणसिद्धिः। यथा मार्कण्डेयपुराणम्। "नित्यक्रियां पितॄणान्तु केचिदिच्छन्ति सत्तमाः। न पितॄणां तथैवान्ये शेषं पूर्ववदाचरेत्"॥

अथ पर्य्युदासविचारः। ननु भोजकौस्तिथिमासाद्य इत्यत्रोपजीव्य बाधभिया "रात्रौ श्राद्धं न कुर्वीत राक्षसी कीर्त्तिता हि सा। सन्ध्ययोरुभयोश्चैव सूर्य्ये चैवाचिरोदिते"॥ इतिवत् पिण्डदानं विवर्जयेदिति पर्य्युदास इति चेन्न एतस्यातिदेशलभ्यत्वेन पर्य्युदासासम्भवात्तथा हि पिण्डदानं विवर्जयेदित्यस्य पिण्डेतरं दद्यादित्यर्थत्वेऽनुवादकतापत्तिस्तदितरस्य प्रकृतिवद्विकृतिरिति न्यायलभ्यत्वात् किन्तु तदितरदानेऽपि कथं वा स न दीयते न च प्रापकविध्यभावादप्राप्तिर्विध्यभावेऽपि प्रकृतिवद्विकृति न्यायात् प्राप्तेः। एवं मघातिरिक्त पिण्डं दद्यादिति पर्य्युदासेऽपि। न चैवं रात्रादीतराभावायां श्राद्धं कुर्य्यादित्यत्र रात्रादावपि न कथं श्राद्धप्रसक्तिरिति वाच्यं न्यायविध्योरभावात्। अतएव राजमार्त्तण्डे निषेधातिक्रमादनिष्टफलमुक्तम्। यथा "संक्रान्त्यामुपवासेन पारणेन युधिष्ठिर। मघायां पिण्डदानेन ज्येष्ठपुत्रो विनश्यति"॥ सन्ध्याकालमाह वराहः। "अर्द्धास्तमयात् सन्ध्या व्यक्तीभूता न तारका यावत्। तेजः परिहानेरुषाभानोरर्द्धोदयं यावत्"॥

योगियाज्ञवल्क्यः "ह्रासवृद्धी तु सततं दिनरात्र्योर्यथाक्रमम्। सन्ध्या मुहूर्त्तमाख्याता ह्रासे वृद्धौ समास्मृता"॥ तस्मादुपर्य्यादचिरोदितकालेऽपि मुहूर्त्तमात्रं "रात्रौ श्राद्धं न कुर्वीत राहोरन्यत्र दर्शनात्। सूर्य्योदयमुहूर्त्ते च सन्ध्ययोरुभयोस्तथा"॥ इति मदनपारिजाते माधवाचार्य्यधृतशातातपवचनाच्च। एतेनाचिरोदित इत्यत्र मैथिलानां मुहूर्त्तद्वयवर्णनं हेयम्। अस्मादतिदेशस्थले न पर्य्युदासः। अतिदेशस्तूक्तस्तन्त्रान्तरे। "प्रकृतात् कर्म्मणो यस्मात्तत् समानेषु कर्मसु। धर्म्मोऽतिदिश्यते येन सोऽतिदेश इति स्मृतः"॥ न च यजतिषु ये यजामहं कुर्य्यान्नानुयाजेष्वित्यत्र क्रियान्तराभावादेकवाक्यतया उपजीव्यवाधभिया च पर्य्युदासोऽस्तु प्रकृते तु अमावास्यायां पितृभ्यो दद्याद्रात्रौ श्राद्धं न कुर्वीत इति क्रियायाः पृथगभिधानात् तयोः सार्थकत्वाय गत्यन्तराभावात् रागातिदेशवदुपजीव्यवाधोऽस्तु इति वाच्यं न्यायनये यथा करोतीत्यत्र एक इत्यादौ च प्रकृतिप्रत्यययोरेकार्थत्वेऽपि सम्भेदेनान्यतरवैयर्थ्यं तद्वदत्रापि अन्यथा नानाविधिकल्पने गौरवात्। अतएव औरसक्षेत्रजयोः साम्योरेव पार्वणं न तु क्रियाभेदेऽपि निरपेक्षेण विधिद्वयकल्पनम्। "औरसक्षेत्रजौ पुत्रौ विधिना पार्वणेन च। प्रत्यब्दमितरे कुर्य्युरेकोद्दिष्टं सुता दश" इति। "यत्र यत्र प्रदातव्यं सपिण्डीकरणात् परम्। पार्वणेन विधानेन देयमग्निमता सदा"॥ इति जावालमत्स्यपुराणवचनाभ्यामिति। किञ्च अदग्धदहनन्यायेन यावदप्राप्तं तावद्विधीयते इति "सर्वत्राख्यातसम्बन्धे श्रूयमाणे पदान्तरे। विधिशक्त्युपसंक्रान्तेः स्याद्धातोरनुवादता" इति। भट्टनये च सायं प्रातर्जुहोतीत्यनेन हवनस्याहरहः सिद्धे यथा सायं प्रातर्हवनमनूद्य दध्ना जुहोतीत्यादौ दध्यादेः करणत्वमात्रं विधेयम्।

"तद्दौरसश्चेतत्र कर्त्तृकप्रत्याब्दिकपार्वणविधिमनूद्याग्निमत्-कर्त्तृकत्वं विधीयते। एवमत्र तत्तद्विधिप्राप्तश्राद्धकरणमनूद्य रात्रीतरत्वमात्रविधेयमिति। अन्यथा प्रसज्यपक्षे "पूर्वाह्णे मातृकं श्राद्धमपराह्णे तु पैतृकम्। एकोद्दिष्टन्तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्" ॥ इति ब्रह्मपुराणोक्तवचनेन अमावास्यादि विधीनामेकवाक्यतया श्राद्धमात्रस्य दिवामात्रकर्त्तव्यत्वाभावेनैकोद्दिष्टस्य मध्याह्नमात्रकर्त्तव्यत्वे यत्रोभयदिने-मध्याह्नाप्राप्तिस्तत्र तस्य लोपे प्रत्यब्दमिति वीप्साभङ्ग-प्रसङ्गः। अपि चैवं "यस्यैतानि न दीयन्ते प्रेतश्राद्धानि षोड़श। पिशाचत्वं ध्रुवं तस्य दत्तैः श्राद्धशतैरपि"। इति यमवचनेन षोड़शश्राद्धासम्पत्त्या पित्रादीनां प्रेतत्वापरीहारा-अहानन्नर्थः स्यात्। पर्य्युदासपक्षे त्वमावास्यादिविधीनां रात्रीतरत्वेऽपराह्णादि विशेषविधीनां प्राशस्त्यपरत्वम्। तत्रा-प्येकवाक्यत्वे रात्र्यादीतरत्र विशेषणवैयर्थ्यम्। ततश्च प्रशस्त-कालं विना रात्र्यादीतरकालेऽपि श्राद्धविधानान्न श्राद्धलोपः। अतएवापकर्षे एकाहे द्वादशाथ वेति वचनमपि सङ्गच्छते। अन्यथा मध्याह्नकालमात्रपरत्वे तत्र द्वादशश्राद्धानुपपत्तेः। वस्तुतस्तु। वेदान्तकल्पतरावधिकरणमालायाञ्च पर्य्युदासा-धिकरणस्य विषयवाक्यमेवं किल श्रूयते। "आवयेति चतुर-क्षरम् अस्तु वौषड़िति चतुरक्षरं यजेति द्व्यक्षरं ये यजामहे इति पञ्चाक्षरं द्व्यक्षरो वषट्कारः एष वै सप्तदश प्रजापति-र्यज्ञे यज्ञेऽन्वायत्त इति ततो नानुयाजेषु ये यजामहं करो-तीति"। अत्र सप्तदशाक्षरो मन्त्रगणः प्रजापतित्वेन स्तूयते प्रजापतिरपि अहङ्कारैकादशेन्द्रियशब्दस्पर्शरूपरसगन्धतन्मात्र-पञ्चात्मकसप्तदशकलिङ्गशरीरसमष्टिरूपत्वात् यज्ञे यज्ञेऽन्वा-यत्तोऽनुगत इति। हि यत्किञ्चिद् यज्ञमनारभ्याधीतेन वाक्येन

सर्वयज्ञेषु मन्त्रगणो विनियुक्त इति। यजतिषु ये यजामह-करणत्वमुद्दिष्टं तदुपदिश्य चाम्नातं नानुयाजेष्विति। अत्र संशयः किं विधायकप्रतिषेधकयोरवैयर्थ्यार्थम् विधिप्रतिषेध-सन्निपाताद्विकल्पः। किं वा पर्य्युदासोऽनुयाजातिरिक्तयाजेषु ये यजामहः कार्य्य इति। नन्वेवं विषयसौन्दर्य्यात् प्राप्तस्य शास्त्रीयेण निषेधेन कथं न विकल्प इति चेत् तात्कालिकश्रेयः-साधनत्वं प्रत्यक्षबोधितं प्रतिषेधेन तु कालान्तरीयानिष्ट-हेतुत्वं ज्ञाप्यत इति विषयभेदेन तुल्यार्थोपनिपाताभावान्न विकल्प इति तर्हि कथं बाध्यबाधकतेति चेत् यदिदानीं प्रवृ-त्तस्य सुखं दृश्यते तत्तुल्यमेव चेद्दुःखं कालान्तरे भवेत्तर्हि व्यर्थोऽयं प्रतिषेधः स्यात् प्रवृत्तेर्दुःखकरत्ववत् निवृत्तेरपि सुख-विगमहेतुत्वात्। ततश्च दृष्टात् सुखात् अधिकं दुःखमाय-त्यामिति विद्वांसं विभ्यतमास्तिकपुरुषं शक्नोति रागतः प्रवृ-त्तेर्निवारयितुं बलीयान् शास्त्रप्रतिषेधः। यथा लोके भुजङ्गा-याङ्गुलिर्न देयेति प्रतिषेधस्य प्रतिषेध्यं प्रति बलवत्त्वात् इति न तथा विकल्पमर्हतीति शास्त्रीयौ तु विधिनिषेधौ तुल्यबलतया षोड़शिग्रहणाग्रहणवद्विकल्प्येते तत्र हि विधिदर्शनात् प्रधान-स्योपकारभूयस्त्वं कल्प्यते निषेधदर्शनाच्च वैगुण्येऽपि फलसि-द्धिरवगम्यते। यथाह जैमिनिः। अर्थप्राप्तवदिति चेन्न तुल्य-हेतुत्वादुभयं शब्दलक्षणम्। अस्यार्थः अर्थात् विषयसौन्द-र्य्यात् प्राप्तस्य मांसभोजनस्य यथा सर्वदा निषेधः तथा शास्त्र-प्राप्तस्यापि स भवत्विति चेन्न प्रतिषेध्यस्य प्राप्तेः प्रतिषेधस्य च तुल्यप्रमाणकत्वात्तदेव दृश्यते उभयमिति। उभयं प्रवृत्तिप्रति-षेधरूपं शब्दलक्षणं शब्दस्य प्रमाणकमित्यर्थः। यथातिरात्रे षोड़शिनं गृह्णाति नातिरात्रे षोड़शिनं गृह्णातीति षोड़शी ससोमकपात्रविशेषः। ये तु ब्रुवते याद्दच्छिक ग्रहणप्राप्तिनि-

षेधोऽयं न विधितः प्राप्तस्येति तत्र वैधग्रहणस्यावैधग्रहणनिषेधस्य च युगपदुपसंहारासम्भवात् विकल्पाभावप्रसक्तेः क्रत्वर्थतया याद्दच्छिकग्रहणप्रसक्त्यभावान्निषेधोऽयं न क्रत्वर्थः स्यात् तस्मादुक्तनयाद्विकल्प इति दायभागः। न च यागेषु ये यजामहकरणं यावद्यजति सामान्यद्वारा अनुयाजं यजति विशेषमुपसर्पति तावदनुयाजगतेन निषेधेन तन्निषिद्धमिति शीघ्रप्रवृत्तेः सामान्यशास्त्राद्विशेषनिषेधोऽयं बलवानिति वाच्यं यतो भवत्येवं विधिषु यथा ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेति तक्रविधिर्न दधिविधिमपेक्षते प्रवर्त्तितुं इह तु प्राप्तिपूर्वकत्वात् प्रतिषेधस्य ये यजामहकरणस्यान्यतोऽप्राप्तस्तन्निषेधेन निषेध्यप्राप्तौ तद्विधिरपेक्षणीयः। न च सापेक्षतया निषेधाद्विधिरेव बलीयानित्यतुल्यशिष्टतया न विकल्पः किन्तु निषेधस्यैव बाध इति युक्तं तथा सति निषेधशास्त्रं प्रमत्तगीतं स्यात्। न च तद्युक्तं तुल्यं हि साम्प्रदायिकमिति न च नान्तरीक्षेऽग्निश्चेतव्य इति वदनुवादकतास्त्विति वाच्यं तत्र ह्यन्तरीक्षेऽग्निचयनस्य शास्त्रतो रागतश्चाप्राप्तेस्तथा न चात्र ये यजामहभावास्तथा यागेषु ये यजामहविधानादनुयाजानाञ्च तद्भावान्न पर्य्युदासः। नानुयाजेष्वित्ययं यदि पर्य्युदासः स्यात्तदा सुबन्तेन सह नञो योगात् समासः स्यात् कात्यायनेन समासनियतस्य स्मृतत्वात् तस्माद्विहितप्रतिषिद्धतया विकल्प इति प्राप्तम् एवं प्राप्ते उच्यते युक्तं हि षोडशिग्रहणाग्रहणयोर्विकल्प इति न हि तत्रान्या गतिरस्ति विधिप्रतिषेधयोरुभयोरपि विशेषनिष्ठत्वेन पर्य्युदासासम्भवात्तेनाष्टदोषदुष्टोऽपि विकल्प आश्रियते पक्षेऽपि प्रमाणाभावान्माभूत् प्रमत्तगीततेति इह तु पर्य्युदासेनाप्युपपत्तौ सम्भवन्त्यां विकल्पाश्रयणं तद्युक्तं "यत एव विकल्पोऽयं प्रतिषेधे प्रस-

ज्यते। अतस्तत्परिहाराय पर्य्युदासाश्रयो वरम्" ॥ विकल्पेऽष्टौ दोषा एकादशीतत्त्वेऽनुसन्धेयाः। एवं हि तदा नञः सम्बन्धोऽनुयाजेन सह तथा चानुयाजेतरेषु ये यजामहः कार्य्य इति। ततश्चानुयाजेतरेषु इत्युक्ते के ते इति न ज्ञायते अतो पर्य्यवसितं वाक्यम्। ततश्च येऽनुयाजादन्ये ते यागा इति पर्य्यवसातुं पूर्ववाक्यमपेक्षते न पृथक् पर्य्यवस्यतीति। एवञ्च पूर्ववाक्ये ये यजामहं प्रति शेषित्वेन बोधितानां यागानामनुयाजत्वं विशेषणमज्ञातमनेन ज्ञाप्यते इति विधिशेषित्वेन प्रतिषेधाभावान्न विकल्प इति। न चाभियुक्ततरपाणिनिविरोधे कात्यायनस्य नित्यसमासवादिनः सहादित्वं सम्भवति स हि विभाषाधिकारे समासमनुशास्ति। तथा च पूर्वमीमांसायां राद्धान्ताय जैमिनिः। "अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यादिति"। एतदेव सूत्रमर्थद्वारा उत्तरमीमांसायां पठति भगवान् शङ्कराचार्य्यः अपि तु वाक्यशेषत्वादितरपर्य्युदासः स्यादिति। प्रतिषेधे विकल्पः स्यादिति। तस्मादनुयाजवर्जिते ये यजामहविधानमिति सिद्धम्। एवञ्च पूर्वोपदर्शित पर्य्युदासविषयवाक्ययोरन्वायत्त इति करोतीति क्रियाभेदमनालोच्यानुयाजवाक्ये क्रियान्तराभावादत्र पर्य्युदासता नान्यत्रेति यदुक्तं तद्धेयमिति। ततश्च यजातिषु ये यजामहं कुर्य्यान्नानुयाजेष्विति यल्लिखितं तत् श्रुत्योस्तात्पर्य्यार्थमादायेति। अतएवोक्तम्। "प्राधान्यन्तु विधेर्यत्र प्रतिषेधेऽप्रधानता पर्य्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्। अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता। प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ्"। यद्यपि पर्य्युदस्तरात्र्यादिषु श्राद्धादिकरणे विधेरौदासीन्यान्न फलं न वा प्रत्यवाय इति सिद्धान्तस्तथापि तद्विषये यच्च दोषप्रायश्चित्तयोः श्रुतिस्तत्र

तत्तच्छास्त्रानुरोधात् द्वयोरपि कल्पनम् । यथा सगोत्रादिविवाहसप्तमचन्द्रादि उपरागदर्शनादौ । ततश्च तथाविधविषये नञः पर्य्युदासप्रसज्यप्रतिषेधोभयपरत्वाद्वाक्यभेदकल्पनमपि प्रामाणिकम् । अतएव ऋतुकालाभिगमनं कुर्य्यात् पर्वणि वर्जयेदिति बृहस्पतिना ऋत्वभिगमननियमे पर्वणः पर्य्युदासे कृतेऽपि "चतुर्दश्यष्टमी चैव अमावास्या च पूर्णिमा । पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च । स्त्रीतैलमांससम्भोगी पर्वस्वेतेषु यो नरः । विण्मूत्रभोजनं नाम प्रयाति नरकं मृतः" इति विष्णुपुराणे निन्दया । "वेदोदितानां नित्यानां कर्मणां समतिक्रमे । स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम्" ॥ इति मनूक्तेन च यथाक्रमं रागप्राप्तगमननिषेधः प्रायश्चित्तञ्च सङ्गच्छते । अन्यथा तदुभयं न स्यात् । अतएव भोजराजः । "पौषे चैत्रे कृष्णपक्षे नवान्नं नाचरेद्बुधः । भवेज्जन्मान्तरे रोगी पितॄणां नोपतिष्ठते" ॥ इति रोगीति निन्दाश्रवणात् प्रसज्यता नोपतिष्ठत इति श्रवणात् पर्य्युदासतेति । यत्तु ज्योतिषे । "कर्म्म कुर्य्यात् फलावाप्त्यै चन्द्रादिशोभने बुधः । सुस्थकाले त्विदं सर्वं नार्त्तः कालमपेक्षते । चन्द्रे च शङ्खं लवणञ्च तारे तिथावभद्रे सिततण्डुलांश्च । धान्यञ्च दद्यात् करणर्क्षवारे योगे तिलान् हेममणिञ्च लग्ने" ॥ इति देवलवचनात् प्रायश्चित्तानन्तरं कर्मोपदिष्टम् । अतएव "न सकलगुणसम्पत् लभ्यतेऽल्पैरदोषैर्बहुतरगुणयुक्तं योजयेन्मङ्गलेषु । प्रभवति हि न दोषो भूरिभावे गुणानां सलिललव इवाग्नेः संप्रदीप्तेन्धनस्य" ॥ इत्यनेन "कष्टाभीष्टे तुल्यसंख्ये फले चेत् स्यातां नाशः फलयोस्तत्र वाच्यः । वाच्यापत्तिर्योऽतिरिक्तस्तयोः स्यात् सर्वस्थाने कल्पनैवं प्रदिष्टा" इति वादरायणवचनेन च प्रवर्त्तते न तत्र पर्य्युदास इति । अतो विधि-

तेतरवारादौ विवाहादिः प्रवर्त्तते अन्यत्तु शुभैभिर्भाव्यम्। मृगु-कौशिकाग्निपुराणज्योतिःपराशराः । "अनादिदेवतां दृष्ट्वा शुचः स्युर्नष्टभार्गवे । मलमासेऽप्यनावृत्तं तीर्थस्नानमपि त्यजेत्" ॥ पूर्वार्द्धस्यार्थवादत्वेन विध्याकाङ्क्षायामुत्तरार्द्धस्य-त्यजेदित्यन्वयेति उपस्थितत्वात्। द्वितीयापिना अनादि-देवतादर्शनस्य समुचितत्वाच्च । ततश्चानावृत्तिमित्यपि द्विती-यान्तत्वेन त्यजेदित्यन्वयपरत्वान्न तीर्थस्नानमात्रेऽन्वितं किन्त्व-नादिदेवतादर्शनेऽपि । ततश्च मलमासे देवदर्शनस्यानावृत्त-त्वेन वर्जनं युक्तम्। अतएव तत्रापि मलमास इवेत्यति-देशमाहुः। अन्यथा वर्जयेदित्यनेनैव सिद्धेर्मलमास इवेत्य-नर्थकं स्यात्। यथा वृद्धमनुपैठीनसिभृगवः । "बाले वा यदि वा वृद्धे शुक्रे चास्तमुपागते । मलमास इवैतानि वर्ज-येद्देवदर्शनम्" ॥ किञ्चावृत्तदेवदर्शनस्यापि निषेधे तावत्-कालमनादिदेवतानामपूज्यता प्रसज्येत। अतएव ज्योतिः-पराशरः। "अनादिदेवतार्चासु कालदोषो न विद्यते। नित्या-स्वभ्यासयोगेन तथैवैकादशीव्रते" ॥ अनादित्वञ्च पुराणभार-तादिप्रसिद्धश्रीपुरुषोत्तमश्रीविश्वेश्वरप्रभृतित्वमिति। तेनाना-वृत्तमनादिदेवतादर्शनं तीर्थस्नानञ्च शुक्रास्ते मलमासे च त्यजेत्। तीर्थचिन्तामणौ गयायां प्रतिप्रसवमाह वायु-पुराणम्। "गयायां सर्वकालेषु पिण्डं दद्याद्विचक्षणः। अधि-मासे जन्मदिने अस्ते च गुरुशुक्रयोः। न त्यक्तव्यं गयाश्राद्धं सिंहस्थे च वृहस्पतौ" ॥ ननु जन्मदिने श्राद्धनिषेधाभावात् कथं गयायां प्रतिप्रसव इति चेत्। "त्रयोदशीं जन्मदिनञ्च नन्दां जन्मर्चतारां सितवासरञ्च। त्यक्त्वा हरौज्येन्दुकरान्त्य-मैत्रध्रुवेषु च श्राद्धविधानमिष्टम्" ॥ इति दीपिकायां जन्म-दिने नवान्नादिश्राद्धनिषेधात्। हरिः श्रवणा। इज्यः पुष्यः

इन्दुर्मृगशिराः करो हस्ता अन्त्यो रेवती मैत्रोऽनुराधा ध्रुवगण उत्तरात्रयरोहिण्यः कर्माङ्गश्राद्धस्य तु प्रधानानुरोधेन कर्त्तव्यतया तत्र न निषेधः। अतएव पुंसवनादिषु नन्दादिविधानं सङ्गच्छते।

अथ नवान्नम्। "सूर्य्ये चैव विशाखगे स्मरतिथौ पापे त्रिजन्मान्विते। नन्दा मन्दमहीजकाव्यदिवसे पौषे मघौ कार्त्तिके। भेषूग्राहिशिवेषु विष्णुशयने कृष्णे शशिन्यष्टमे। श्राद्धं भोजनकं नवान्नविहितं पुत्रार्थनाशप्रदम्" ॥ सूर्य्ये चैव विशाखगे मार्गशीर्षस्य विंशतिदण्डाधिकप्रथमदिनत्रयावस्थिते सूर्य्ये स्मरतिथौ त्रयोदश्याम्। पापे पञ्चमतारात्रये। उग्रः पूर्वात्रयमघाभरण्यः। अहिरश्लेषा। शिव आर्द्रा। भोजराजः। "ब्रह्मविष्णुबृहस्पती-शशधरो मार्त्तण्डपौष्णादिती मैत्रे चित्रविशाखवायुधनभे मूलाश्विवह्नी तथा। शक्रे वारुण ऋक्षके शुभदिने श्राद्धं नवं शस्यते नन्दाभार्गवभूमिजेषु न भवेत् श्राद्धं नवान्नोद्भवम्" ॥ ब्रह्मादयश्च रोहिणीश्रवणपुष्यमृगशिरोहस्तारेवतीपुनर्वस्वनुराधाचित्राविशाखास्वाती-धनिष्ठा-मूलाश्विनीकृत्तिकाज्येष्ठाशतभिषाः। अत्र मूलाकृत्तिकाज्येष्ठाविधानात् वक्ष्यमाणाग्नेयादिनिषेधस्तु नवोदकश्राद्धपरः। उत्तरादित्रितयमपि इह ग्राह्यं ध्रुवत्वेन प्रागुक्तदीपिकाकारवचनेन श्राद्धविधानात् वक्ष्यमाणदेवलवचनाच्च। "अश्लेषा कृत्तिका ज्येष्ठा मूलाजपदकेषु च। भृगुभौमदिने रिक्तातिथौ नाद्यान्नवौदनम्" ॥ अजपदं पूर्वभाद्रपदा एतद्वचनन्तु श्राद्धानधिकारिभक्षकमात्रपरम्। अन्यथा "प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम्। ब्रह्मचारी भवेत्तान्तु रजनीं ब्राह्मणैः सह" इति याज्ञवल्क्योक्तस्य श्राद्धदिनमात्रकर्त्तव्योद्दीच्याङ्गस्य श्राद्धावशिष्टप्रतिपत्तिरूपभक्षणस्य नियमितस्य ज्येष्ठामूलयोः सर्वदा

बाधापत्त्या मुख्यकल्पे क्वचिदपि नवान्नश्राद्धं न स्यात् अन्यत्र तु प्रतिपाद्यगुणभूतत्वात् । प्रतिपत्तेर्गुणभूतस्य च प्रधानाप्रयोजकत्वात् उपवासाद्यनुरोधेन विशिष्टाभावस्य क्वचित्कत्वान्न सर्वदा बाधः । तन्नियमे किं मानमिति चेदापस्तम्बवचनम् । तद्यथा श्राद्धशेषमधिकृत्य "सर्वस्मात् ग्रासावरार्द्धमश्नीयात्" इत्यत्र भूरिद्रव्यकृतत्त्ववाचिसर्वशब्दश्रुतेः अन्यथा तदर्थं स्यात् । व्यक्तमाह नव्यवर्द्धमानधृतशिवरहस्यम् । "श्राद्धं कृत्वा तु यः शेषं नान्नमश्नाति मन्दधीः । लोभान्मोहाद्भयाद्वापि तस्य तन्निष्फलं भवेत्" ॥ ब्रह्मपुराणे वराहः । "वृश्चिके शुक्लपक्षे तु नवान्नं शस्यते बुधैः । अपरे क्रियमाणं हि धनुष्येव कृतं भवेत् । धनुषि यत् कृतं श्राद्धं मृगनेत्रासु रात्रिषु । पितरस्तत्र गृह्णन्ति नवान्नामिषकाङ्क्षिणः" ॥ अपरे कृष्णपक्षे । मृगो नेता प्रापयिता यासां रात्रीणामिति व्युत्पत्त्या । नक्षत्रान्नेतुरित्यनेनाद्विधानात्तत्पदं सिद्धम् । ततश्च मृगशिरः पूर्वार्द्धेन वृश्चिकशेषभागे रात्रयारम्भाच्चत्वारिंशद्दण्डावशिष्टषड्रात्रयो मृगनेत्रा इति । ज्योतिषे । "नवान्नं नैव नन्दायां न च सुप्ते जनार्द्दने । न कृष्णपक्षे धनुषि तुलायां नैव कारयेत्" ॥ इति न च सुप्ते जनार्द्दन इत्याश्विनशुक्लपक्षेतरपरम् । आश्विनाधिकारे । "शुक्लपक्षे नवं धान्यं पक्वं ज्ञात्वा सुशोभनम् । गच्छेत् चैत्रो विधानेन गीतवाद्यपुरःसरः" ॥ इति ब्रह्मपुराणे श्राद्धविधानात् । भोजराजः । "पौषे चैत्रे कृष्णपक्षे नवान्नं नाचरेद्बुधः । भवेज्जन्मान्तरे रोगी पितॄणां नोपतिष्ठते" ॥ अत्र धनुषीत्येकवाक्यत्वात् धनुषीति धनुःस्थार्कपरं साहचर्य्याच्चैत्रोऽपि सौरः । एवञ्च तुलायामित्यपि तुलार्कपरम् । यद्यपि "व्रीहिपाके कर्त्तव्यं यवपाके च पार्थिव । न तावाद्यौ महाराज विना श्राद्धं कथञ्चन" ॥ इति विष्णु-

धर्मोत्तरवचने श्राद्धं प्रति व्रीहियवपाकयोर्निमित्तत्वं प्रतीयते। तथापि "नवोदके नवान्ने च गृहप्रच्छादने तथा। पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च॥ तस्माद्दद्यात् सदोद्युक्तो विद्वत्सु ब्राह्मणेषु च"॥ इति शातातपवचने पूर्व्वोक्तबहुषु वचनेषु च नवान्नस्य श्रुतेर्नवान्न सत्वेनैवोभयसाधारणं निमित्तत्वं लाघवात्। अभिलापवाक्ये नवान्नागमननिमित्तमिति नियोज्यं न तु यवान्नागमनादि अन्नञ्च शूकधान्यतण्डुलविकार-विशेष इति प्रायश्चित्तविवेकः। शूकधान्यविवेकोत्वमरः। "माषादयः शमीधान्ये शूकधान्ये यवादयः"॥ इति शमी शिम्बा व्रीहिपाके यवपाके चेत्युभयोपादानं श्राद्धद्वयार्थम्। नन्वेवं व्रीहियवपाककालवन्नवान्ने चेत्यस्य। "वृश्चिके शुक्ल-पक्षे च नवान्नं शस्यते बुधैः" इति वचनादय मप्यपरः काल इति चेन्न नवोदके नवान्ने चेत्यादौ सदेति श्रवणान्नित्यत्वे न व्रीहियवपाकयोरपि विष्णुवचनेन नित्यत्वाभिधानात् तयो-रेकवाक्यतया। यथा "अमावास्यास्तिस्रोऽन्वष्टकामाघीप्रौष्ठ-पद्युर्द्ध्वं कृष्णत्रयोदशी व्रीहियवपाकौ चेति। एतांस्तु श्राद्ध-कालान् वै नित्यानाह प्रजापतिः। श्राद्धमेतेष्वकुर्व्वाणो नरकं प्रतिपद्यते"॥ वृश्चिके शुक्लपक्षे च इति तु धनुरादिपर्य्युदस्ते-तरगौणकालमध्ये वृश्चिकस्य प्राशस्त्यमात्रार्थम्। न तु श्राद्धा-न्तरार्थमिति "शरद्वसन्तयोः केचिन्नवयज्ञं प्रचक्षते। धान्य-पाकवशादन्ये श्यामाको वनिनः स्मृतः"॥ इत्यनेन शरद्-वसन्तविहितनवशस्येष्टेः। "श्यामाकैर्व्रीहिभिश्चैव यवैरन्योन्य-कालतः। प्राग्यष्टुं युज्यतेऽवश्यं नत्वनाग्रयणात्ययः"॥ इति कालान्तरदर्शनात्। श्राद्धेऽपि तथेति। एवमेव श्राद्धचिन्ता-मणिकृत्यतत्त्वार्णवौ। आग्रयणं नवशस्येष्टिः। नवोदके वर्षोपक्रमे आर्द्राश्लेषावधिति यावत्। "प्रावृट्काले समायाते

रौद्र ऋक्षगते रवौ । नाड़ीवेधसमायोगे जलयोगं वदाम्यहम्”॥ इति रुद्रजामलात् । रौद्रमार्द्रा । अतएव नवीनवर्द्धमानधृतम् । “आर्द्रादितो विशाखान्तं रविचारेण वर्षति” । तस्याश्च प्रथमपादेऽम्बुवाची । यथा राजमार्त्तण्डे । मृगशिरसि निवृत्ते रौद्रपादेऽम्बुवाची । “ऋतुमति खलु पृथ्वी वर्जयेद्बीजहानि । यदि वपति कृषाणः चेत्रमासाद्य बीजं न भवति फलयोगः शस्य चाण्डालपाकः” ॥ ज्योतिषे “तस्मिन् वारे महस्रांशुर्यत्काले मिथुनं व्रजेत् । अम्बुवाची भवेत्तत्त्वं पुनस्तत् कालवारयोः” ॥ एतच्च प्रायिकं मलमासतत्त्वे । “धरण्या मृत्युमत्याश्च भूमिकम्पे तथैव च । अन्तरागमने चैव विद्यां नैव पठेन्नरः” ॥ अन्तरागमने गुरुशिष्ययोर्मध्ये पश्वादिगमने । पशूनाह प्रायश्चित्तविवेकपैठीनसिः । “ग्राम्यारण्याश्चतुर्दश । गोश्वाविरजोऽश्वतरोगर्दभो मनुष्यश्चेति सप्तग्राम्याः पशवः । महिषवानर ऋक्षसरीसृपरुरुपृषतमृगाश्चेति सप्तारण्याः पशवः” । इति तेन मनुष्यान्तरागमनेऽपि दोषव्यवहारः अनुज्ञापि न दोषः । “नाग्निब्राह्मणयोरन्तरे व्यपेयात् न गुरुशिष्ययोरनुज्ञया तु व्यपेत्” इति मदनपारिजातधृतवशिष्ठवचनात् । तथा “आर्द्रायाः प्रथमे पादे क्षीरं पिबति यो नरः । अपि रोषान्वितस्तस्य तक्षकः किं करिष्यति” ॥ नवान्नश्राद्धे भक्षणस्य न निमित्तत्वम् । किन्तु नवान्नागमनस्यैव । “नक्षत्रग्रहपीड़ासु दुष्टस्वप्नावलोकने । इच्छाश्राद्धानि कुर्वीत नवशस्यागमे तथा” ॥ इति विष्णुपुराणात् । गोभिलभट्टभाष्ये श्रुतिः “गृहमेधी व्रीहियवाभ्यां शरद्वसन्तयोर्यजेत श्यामाकैर्वनी वर्षा स्वापत्कल्पेऽन्येन पुरातनैर्वा” इति । श्राद्धचिन्तामणौ च हारीतः । “गृहमेधी शरद्वसन्तयोर्व्रीहियवाभ्यां यजेत वनी वर्षासु श्यामकैरापत्कल्पे-

ऽन्यैः पुरातनैर्वा" इति एतच्छ्राद्धासंस्कृतधान्यजातेन श्राद्धान्तरं निषिद्धम् । तथा च श्राद्धाधिकारे वराहपुराणम् । "अकृताग्रयणश्चैव धान्यजातं द्विजोत्तम । राजामाषाननूंश्चैव मसूरांश्च विवर्जयेत्" ॥ अतः संस्कृतधान्यालाभे प्रेतश्राद्धं दुग्धादिनापि कार्य्यं प्रकृतौ तथा दर्शनात् । यथा ब्रह्मपुराणम् । "पयोमूलफलैः शाकैः कृष्णपक्षे च सर्वदा । पराधीन प्रवासी च निर्धनो वापि मानवः । मनसा भावशुद्धेन श्राद्धे दद्यात्तिलोदकम्" ॥ अथ नवान्नश्राद्धाधिकारिणामेव तथा नियमः तदनधिकारिणान्तु विधवावदकृताग्रयणेनापि प्रेतश्राद्धमिति । एवं भोजनेऽपि । तथा च "दत्त्वैव ब्राह्मणेभ्यश्च हुत्वा वा वैश्वदेविकम् । अन्यो नवान्नमश्नीयादिति बौधायनोऽब्रवीत्" ॥ इति रेणुकाचार्य्येनव्यवर्द्धमानधृतवचनम् । अन्यो नवान्नश्राद्धकरणासमर्थः । देवीपुराणम् । "नवं कृषरपूपाणि पायसं मधुषर्पिषी । वृथामांसं न चाश्नीयात् पितृदेवविवर्जितम्" ॥ नवं नवान्नम् । शङ्कः । "वृथाकृषरसंयावपायसा पूपसष्कुलीः । भुक्त्वा त्रिरात्रं कुर्वीत व्रतमेतत् समाहितः" ॥ तेन देवपितृतिथिवर्जं कामतः सकृदमीषां भक्षणे त्रिरात्रं कृषरादिसाहचर्य्येण नवान्नेऽपि तथा । विष्णुपुराणम् । "प्राश्नीयाद्दधिसंयुक्तं नवं विप्राभिमन्त्रितम्" । प्रागुक्तदीपिकावाक्ये जन्मदिनजन्मर्क्षताराानिषेधात् । "नन्दायां भार्गवदिने त्रयोदश्यां त्रिजन्मनि । अत्र श्राद्धं न कुर्वीत पुत्रदारधनक्षयात्" ॥ इत्यत्र त्रिजन्मनीत्यस्य जन्मतिथिजन्मताराजन्मराशिरूप इत्यर्थः । हलायुधोऽप्येवम् । प्रागुक्तत्रयोदशीं जन्मदिनञ्च नन्दामित्यत्र दिनपदं तिथिपरं तिथिसन्देशपाठात् त्रिजन्मनि त्रिजन्मनक्षत्रमिति व्याख्यानं गुरुचरणानामपि प्रामाणिकम् । राजमार्त्तण्डात् यथा तारा-

प्रकरणे। "सर्वमङ्गलकार्य्याणि त्रिषु जन्मसु कारयेत्। विवादश्राद्धभैषज्ययात्राक्षौराणि वर्जयेत्"॥ दीपिकायां मैत्रे श्राद्धविधानाद्दारुणगणे यन्मैत्रमिति पठितं तदनुराधा इति व्याख्यातञ्च वाचस्पतिमिश्रेण तद्धेयम्। अतएव श्राद्ध-विवेककृता। "दारुणञ्चोरगं रौद्रमैन्द्रं नैरृतमेव च"। ऐन्द्रं ज्येष्ठेति लिखितम्। एवञ्च "नक्षत्रेऽपि न कुर्वीत यस्मिन् जातो भवेन्नरः। न प्रौष्ठपदयोः कार्य्यं न चाग्नेये च भारत। दारुणेषु च सर्वेषु प्रत्ययौ च विवर्जयेत्"॥ इति श्राद्धाधिकारि महाभारतवचनं तत्प्रदर्शनमात्रम्। त्रिषु जन्मसु एव पूर्वं निषिद्धत्वात् प्रौष्ठपदा पूर्वभाद्रपदा द्वितारकत्वात् द्विवचनम् इति श्राद्धविवेककृत्। ततश्च यत् वाचस्पतिमिश्रेणाभिहितं प्रौष्ठपदौ पूर्वभाद्रपदोत्तर-भाद्रपदौ इत्यत्रापि हेयम्। एतत्तारायाः पुंसि प्रयोगोऽप्य-साधुः स्त्रियां शेषाः। इति वक्ष्यमाणत्वात् "समधिनिष्ठाः स्युः प्रौष्ठपदाभाद्रपदास्त्रियः" इत्यमरकोषाच्च। पूर्वभाद्र-पदाया एव श्राद्धमधिकृत्य विष्णुधर्मोत्तरेण उग्रत्वेन निषे-धाच्च। यथा "नक्षत्राणि तथैवात्र दारुणोग्राणि वर्जयेत्। नचोत्तरभाद्रपदाया अपि उत्तरात्रितय रौद्ररोहिणीयाम्य सर्प-पितृभेषु चाग्निभे। श्मश्रुकर्म सकलं विवर्जयेत् प्रेतकार्य्य-मपि वृद्धिमान्नरः" इति वचनान्निषेध इति वाच्यं तैरेव धृत-देवलवचनविरोधात् यथा "उत्तराश्रवणातिष्यो मृगशीर्षः प्रजापतिः। हस्तः शतभिषक्स्वातीचित्रापित्र्यमथाश्विभम्। नक्षत्राणि प्रशस्तानि सदैवैतानि पैतृके। अपराणि च ऋक्षाणि उच्यन्ते कारणैः क्वचित्"। उत्तरास्तिस्र इति कल्पतरुः। अपराणि धनिष्ठादीनि कारणैर्मघाऽमावास्या-योगादिभिः। पूर्वलिखितदीपिकावचने ध्रुवत्वेन उत्तरा-

विधानाच्च। ततश्च देवलादिवचनविरोधात् प्रेतकार्य्यमिति न प्रेतश्राद्धपरं किन्तु पतितप्रेतसम्प्रदानकदासीघटोदकदान-परम्।

अथ समयाशुद्धिः। ज्योतिःपराशरः। "अग्न्याधेयं प्रतिष्ठाञ्च यज्ञदानव्रतानि च। देवव्रतवृषोत्सर्गचूड़ाकरण-मेखलाः॥ माङ्गल्यमभिषेकञ्च मलमासे विवर्जयेत्। बाले वा यदि वा वृद्धे शुक्रे चास्तमुपागते॥ मलमास इवैतानि वर्जयेद्देवदर्शनम्। पक्षं वृद्धस्तु पूर्वेण दशाहं पश्चिमेन तु॥ प्रत्यग्बालो दशाहन्तु पूर्वेण च दिनत्रयम्"॥ पूर्वेणेति प्रातः प्रातः पूर्वदिशि दृष्टा रविकिरणाच्छन्नतया न दृश्यते चेद्गुरु-स्तदा प्रागस्तमितः तत्रास्तमितात् प्राक् पक्षं वृद्धः। पश्चिमे-नेति। एवं सायं सायम् अपरदिशि दृष्टा रविकिरणाच्छन्न-तया न दृश्यते चेद्गुरुस्तदा प्रत्यगस्तमितस्तत्रास्तमितात् प्राक् दशाहं वृद्धः। "द्वात्रिंशद्दिवसाश्चास्ते जीवस्य भार्गवस्य च। द्वासप्ततिर्महास्ते तु पादास्ते द्वादशक्रमात्"॥ इति ज्योतिर्विदुक्तकालानन्तरमपरदिशि दृश्यते चेत्तदा दशाहं प्रत्यग्बालः पूर्वदिशि चेत्तदा दिनत्रयं प्राग्बाल इति भङ्ग्यन्त-रेणाह। "पक्षं वृद्धो महास्ते तु बालश्चात्र दशाह्निकः। पादास्ते तु दशाहानि वृद्धो बालो दिनत्रयम्"॥ अत्र मल-मासादिकीर्त्तनं पुण्येतरकालोपलक्षणम्। "बहूनामेकधर्मा-णामेकस्यापि यदुच्यते। सर्वेषामेव तत् कुर्य्यादेकरूपा हि ते स्मृताः"॥ इति बौधायनवचनात्। अतएव प्रतिप्रसवे कालदोषो न विद्यते इति सामान्यत उक्तम्। तथा च गोभिल-पारस्कराभ्यां कर्म्मणः कालपरिभाषायाम् उदगयने पूर्वपक्षे पुण्ये-ऽहनि प्रागावर्त्तनादह्नः कालं विद्यादिति उदगयने आपूर्य्य-माणपक्षे पुण्याहे इति सूत्राभ्याम् अह्नो वासरस्य पुण्यत्वमुक्तम्।

६९

अथ "विहितक्रियया साध्यो धर्मः पुंसो गुणो मतः। प्रतिषिद्धक्रियासाध्यः सगुणोऽधर्म उच्यते"॥ इति तान्त्रिकैरभिहितम्। "चिरध्वस्तं फलायालं न कर्मातिशयं विना" इत्यनेन काम्यस्थलेऽपूर्वं शक्तिकल्पनावश्यकत्वेनान्यत्रापि। "स्थालीस्थास्तण्डुला एते सर्वे विक्लित्तिभागिनः। समकालाग्निसंयोगभागित्वात् प्रतिपन्नवत्" इति स्थालीपुलाकन्यायेन वैदिकलिङ्त्वावच्छेदेनापूर्वं शक्तिकल्पनात्। प्रतिपन्नं हस्तमर्दनादिना स्फुटितत्वेन ज्ञातम्। कार्य्यनियोगापूर्वशब्दैरुच्यमानो धात्वर्थसाध्य स्वर्गादिफलसाधनात्सगुणो धर्म इति प्रभाकरैरभिहितम्। तत्कथमङ्गः पुण्यत्वमिति चेत् तज्जननयोग्ये भाक्तोऽयं पुण्यशब्दः। तथा च भट्टवार्त्तिकम्। "द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते। तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता। श्रेयः साधनता ह्येषां नित्यं वेदात् प्रतीयते। ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः" इति। ताद्रूप्येण स्वरूपत्वेन। तच्च पुण्यत्वं यथा रिक्तादिदोषरहितत्वं शोभनचन्द्रादित्वञ्च तथा मलिम्लुचादिदोषरहितत्वमपि। तथा च रत्नाकरादिधृतं न्यायरत्नवाक्यम्। पुण्ये शुद्धे तच्च मलिम्लुचगुरुशुक्रबाल्यवृद्धास्तमयसिंहमकरान्यतरगुरुस्थिति पूर्वराश्यनागतातिचारिगुरुकवत्सरपूर्वराशिसङ्क्रमिष्यमाणातिचारिगुरुकपक्षत्रयवक्रिगुरुकाष्टाविंशतिवासरकम्पाद्यद्भुतोत्तरसप्ताहसिंहादित्यगुर्वादित्यपौषादिमास–चतुष्टयान्यतमैकद्वित्रितदधिकान्यतमदिनवृत्त्याकालिकावृष्ट्युत्तर एकत्रिसप्ताहान्यतमदिर्नानिषिद्धसमयान्यसमयत्वमिति। एषु प्रमाणं वक्ष्यामः। अत्र नव्यवर्द्धमानः। एकद्वित्रितदधिकान्यतमदिनवृत्त्या कालिकवृष्ट्युत्तरैकत्रिसप्ताह इत्यत्र उत्तरदिनत्वस्य पूर्वदिननिरूप्यत्वात् उत्तरत्वपूर्वत्वयोर्विरुद्धतया नानात्वात्।

अतोऽग्रिमदिनादित्वप्राप्तिरिति जीवमिश्रेणाभिहितम्। न चैकमेकदिनं वृष्ट्यवच्छेदानवच्छेदाभ्यां भिन्नमिति वाच्यं विशेष्यीभूतदिनस्यैकत्वेन प्रत्यभिज्ञानविरोधेन उपाधिमात्र-भेदात् अन्यथा अग्रावच्छिन्नवृक्षान्मूलावच्छिन्नवृक्षस्याभेदेनैता-न्याभावस्याव्याप्य वृत्तित्वप्रसङ्गादित्याह। तत्र वृष्टिदिनोत्त-रदिनस्य निषेधविषयत्वे वृष्टिदिनस्य कर्मार्हता स्यात्। तस्मात् विशेष्याया वृष्टेरेवोत्तरत्वम्। न तु तदवच्छेदकदिनस्यापीति। तेनैकस्मिन् दिने वृष्ट्या तद्दिनमात्रत्यागः द्वितीयदिनादौ तु अन्तिमदिनमारभ्य त्र्यहसप्ताहयोस्त्यागः। तथा च व्यासः। "नो सन्ध्या गर्जिते प्राहुर्व्रतोपनयनं बुधाः। न च वृष्टावथा-काले वृष्ट्या वा सप्तवासरान्"॥ आसप्तवासरासरानित्यत्र उपस्थितत्वाद्वृष्टिकालमादाय सप्ताहगणना आसप्तवासरानिति अधिकसंख्या व्यवच्छेदार्थम् एतेन विध्यनुवादभिया अधिक-संख्या निरस्ता। अत्र वृष्ट्युत्तरमेव सप्ताहत्यागः एतद्वचनन्तु तृतीयादिदिवसीयाकालवृष्ट्यभिप्रायेण। "अतो दिनेनैकदिनं त्याज्यं द्वितीयेन दिनत्रयम्। तृतीयेन च सप्ताहं त्यजेदकाल-वर्षणे"॥ इति न्यायरत्नपरिगृहीतवाक्येऽपि दिनेन दिन-वृत्तिवर्षणेन एवं द्वितीयेनेत्यादौ ज्ञेयम्। अतएव न्यायरत्ने-ऽपि वृष्ट्युत्तरत्वमुक्तं न तु वृष्टियुक्तदिनोत्तरत्वमिति। एका-दिदिनवृत्तित्वविशेषणं दिनाल्पत्व बहुत्वज्ञापनार्थमिति श्रीप-तिव्यवहारनिर्णये। "आकालिकीं वृष्टिमवेक्ष्य गत्वा पदं न गच्छेच्छुभमात्मनोच्छन्। चौरं व्रतञ्चापि शुभाभिलाषी कदापि नैवं मनसापि कुर्य्यात्"॥ अत्र नो सन्ध्या गर्जित इति आकालिकी वृष्टिमवेक्ष्य इत्यादिश्रवणात्। "व्रतेऽह्नि पूर्वसन्ध्यायां वारिदो यदि गर्जति। व्रतन्तत्र तु नैव स्यादिति धर्मो व्यवस्थितः"॥ इति वचने पूर्वपदमपि कारणताग्राहक-

त्वेन परसन्ध्याव्यावर्त्तकम् । अन्यथा संक्रान्तिवन्नाविनिमित्त-त्वेन परसन्ध्यायां गर्जितेऽपि व्रतवैगुण्यं स्यात एतेन पूर्वदिने सायंसन्ध्यागर्जनेऽपि परदिने व्रतनिषेध इति मैथिलमतं चिन्त्यमिति । सप्तम्यर्थानुपपत्तेः । गीतायां "मयैवैते पूर्वं निहता निमित्तमात्रं भव सव्यसाचिन्" इतिवत् स्वरूपाख्यान-परं वा पूर्वपदं कामरूपीयनिबन्धेऽप्येवम् । योगीश्वरः । "चतुर्मासे निवृत्ते तु चक्रपाणौ समुत्थिते । अकालवृष्टिं जानीयात् यावन्न सुप्यते हरिः" ॥ अत्र यावद्विष्णुमहोत्सव इति जीमूतवाहनः पठति महोत्सवः फाल्गुनी पूर्णिमा इति व्याख्याति च । कृत्यचिन्तामणिभोजराजव्यवहारसमुच्चय-श्रीधरसमुच्चयेषु । "पौषादिचतुरो मासान् ज्ञेया वृष्टिरका-लजा । व्रतयज्ञादिकं तत्र वर्जयेत् सप्तवासरान् ॥ मार्गा-न्मासात् प्रभृतिमुनयो व्यासवाल्मीकिगर्गास्त्रैवं यावत् प्रवर्षण-विधौ नेति कालं वदन्ति । नाड़ीजङ्घः सुरगुरुमुनिर्वक्ति वृष्टेरकालो मासावेतौ न शुभफलदौ पौषमाघौ न शेषाः" मार्गादित्यवधौ पञ्चमी नाभिविधौ व्यासवाल्मीकिगर्गा इत्यत्र व्यासवाल्मीकिशिष्या इति जीमूतवाहनः पठति । एतानि राजमार्त्तण्डकृत्यचिन्तामणौ च । एवं पक्षत्रये व्यवस्थिते येन सर्वपरिग्रहः स्यात् तस्यैव ग्रहणमिति न्यायेनाद्यः पक्षः श्रेयान् तदुत्तरन्तु पक्षद्वयमापदत्यन्तापद्विषयमेवमन्यत्रापि । अतएव राजमार्त्तण्डे । "उक्तानि प्रतिषिद्धानि पुनःसम्भावि-तानि च । सापेक्षनिरपेक्षाणि श्रुतिवाक्यानि कोविदैः" इति शेषचरणे मीमांस्यानीह कोविदैरिति कृत्यचिन्तामणौ पाठः । यद्वा "स्पष्टस्य तु विधेर्नान्यैरुपसंहार इष्यते" । इति न्यायेन दोषातिशयार्थं एव सामान्यनिषेधे विशेषनिषेधः तत्रापि विशेष उक्तो वृहस्पतिना "वृष्टिः करोति दोषं ताव-

आकामसम्भवा राज्ञः। यावन्न भवति याने नरपशुचरणा- ङ्किता वसुधा"। काश्यपः "ऋच्चैकमन्दिरगतौ यदि जीव- भानू शुक्रोऽस्तगः सुरवरेज्यगुरुश्च सिंहे। नारभ्यते व्रतविवाह गृहप्रतिष्ठा चौरादिकर्म गमनागमनञ्च धीरैः"। ऋच्चैक- मन्दिरगताविति विशिष्टं न पृथक्। तथा च। "एकराशि- गतौ स्यातामिकर्चविषये यदि। गुर्वादित्यौ तदा त्याज्या यज्ञोद्वाहादिकाः क्रियाः"। चातुर्मास्यव्रते तु प्रतिप्रसवमाह महाभारते। "चातुर्मास्यव्रतारम्भमस्तगेऽपि गुरौ भृगौ। खण्डे वापि तिथौ कुर्य्यात् एवमेव समापनम्"। वराहपुराणे। "आषाढ़शुक्लद्वादश्यां पौर्णमास्यामथापि वा। चातुर्मास्य- व्रतारम्भं कुर्य्यात् कर्कटसंक्रमे। अभावेऽपि तुलार्केऽपि मन्त्रेण नियमं व्रती। कार्त्तिके शुक्लद्वादश्यां विधिवत्तत् समापयेत्"। महाभारते। "चतुर्द्धापि हि यच्चीर्णं चातुर्मास्यव्रतं नरः। कार्त्तिके शुक्लपक्षे तु द्वादश्यां तत् समापयेत्"। अत्र द्वादश्यां यत्समापनमुक्तं तत् द्वादश्यारम्भपक्ष एव। कर्कटसंक्रमण- तुलासंक्रमारम्भयोस्तु वृश्चिकार्के हरेरुत्थाने सति तद्विषयञ्च अन्यथा तुलार्के समापने कर्कटसंक्रमणारम्भे आषाढ़ारम्भे च चातुर्मास्यानुपपत्तेः। तुलार्कसमारम्भे तुलार्कव्याप्त्यनुप- पत्तेश्च। अतएव पौर्णमास्यारम्भपक्षे तत्रैव समापनमुक्तम्। तथा च मत्स्यपुराणम्। "आषाढ़ादि चतुर्मासं प्रातःस्नायी भवेन्नरः। विप्रेभ्यो भोजनं दत्त्वा कार्त्तिक्यां गोप्रदो भवेत्"। तत्र मन्त्रानाह सनत्कुमारः। "इदं व्रतं मया देव गृहीतं पुरतस्तव। निर्विघ्नां सिद्धिमाप्नोतु प्रसन्ने त्वयि केशव। गृहीतेऽस्मिन् व्रते देव यद्यपूर्णे त्वहं म्रिये। तन्मे भवतु संपूर्णं त्वत्प्रसादाज्जनार्दन"। समाप्तौ तु "इदं व्रतं मया देव कृतं प्रीत्यै तव प्रभो। न्यूनं संपूर्णतां यातु त्वत्प्रसादाज्जना-

र्दन"। तुलार्कमात्रेऽप्येवं कर्त्तव्यं वर्षकृत्ये नारदीयम्। "अन्नतेन क्षिपेद् यस्तु मासं दामोदरप्रियम्। तिर्य्यक्योनिमवाप्नोति सर्वधर्मवहिष्कृतः। व्रतोपवासनियमैः कार्त्तिको यस्य गच्छति। देवो वैमानिको भूत्वा स याति परमां गतिम्"। गोविन्दमानसोल्लासे नारदीयम्। "न मत्स्यं खादयेन्मांसं न कौर्म्यं नान्यदेव हि। चाण्डालो जायते राजन् कार्त्तिके मांसभक्षणात्। अमांसाशी भवेद्यस्तु गां स दद्याच्च दक्षिणाम्"। तथा "नित्यस्नाने हविर्दद्यान्निःस्नेहे घृतशक्तवः"। नित्यस्नाने प्रातःस्नाने घृतशक्तवो दक्षिणा देया। तथा "आमिषस्य परित्यागी सवत्सा कपिला तथा। एकान्तरे त्वजा देया फलाहारे च शालयः। शाकाहारे घृतं दद्यात् पात्रं राजतमेव हि। सर्वेषामप्यभावे तु यथोक्तकरणं विना। विप्रवाक्यात्तथा सुभ्रु व्रतस्योद्यापलक्षणम्। तथा विप्रवचो यस्तु गृह्णाति मनुजः शुभे। अदत्त्वा दक्षिणां वापि स याति नरकं ध्रुवम्"। विप्रवाक्यमच्छिद्रावधारणं तदपि दक्षिणारूपं किञ्चिद्दत्त्वा ग्राह्यम्। तथा "निष्पावान्राजमाषांश्च सुप्ते देवे जनार्दने। यो भक्षयति राजेन्द्र चाण्डालादधिको हि सः। कार्त्तिके तु विशेषेण राजमाषांश्च वर्जयेत्। निष्पावान्मुनिशार्दूल यावदाहूत नारकी। कदम्बानि पटोलानि वृन्ताकसहितानि च। न त्यजेत् कार्त्तिके मासि यावदाहूत नारकी। एतानि भक्षयेद् यस्तु सुप्ते देवे जनार्दने। शतजन्मार्जितं पुण्यं दहते नात्र संशयः"। निष्पावः श्वेतशिम्बिरिति वर्षकृत्यं निष्पावः शिम्बिसदृशो दक्षिणापथे प्रसिद्ध इति कल्पतरुः। पटोलानि फलानि नपुंसकनिर्देशात्। अन्यत्र "पटोलस्तिक्तकः पटुः" इत्यमरकोषे पुंसि निर्दिष्टः। केचित्तु कड़म्बानि इति पठन्ति। कड़म्बानि कलम्बीत्वेन प्रसिद्धानीति व्याख्यान्ति च। यद्यपि

"न वटप्लक्षोडुम्बरनीपदधित्थमातुलङ्गानि वा भक्षयेत्" इति हारीतेन सामान्यतः कदम्बं निषिद्धं तथाप्यत्राधिकदोषाय पुनर्निषिद्धं मातुलङ्गं बीजपूरकमिति कल्पतरुः। महाभारते। न भीगादीनृपानुपक्रम्य "एतैरन्यैश्च राजेन्द्रैः पुरा मांसं न भक्षितम्। शारदं कौमुदं मासं ततस्ते स्वर्गमाप्नुयुः। कौमुदन्तु विशेषेण शुक्लपक्षं नराधिप। वर्जयेत् सर्वमांसानि धर्मो ह्यत्र विधीयते"। कौमुदं कार्त्तिकम्। ब्रह्मपुराणे कार्त्तिकमधिकृत्य "एकादश्यादिषु तथा तासु पञ्चसु रात्रिषु। दिने दिने च स्नातव्यं शीतलासु नदीषु च। वर्जितव्या तथा हिंसा मांसभक्षणमेव च"। मांसभक्षणनिषेधे कार्त्तिकमासतच्छुक्लपक्षतत् पञ्चदिनानि शक्ताशक्तभेदात् पापतारतम्यात् वा निषिद्धानि। ब्रह्माण्डपुराणे। "तुलायां तिलतैलेन सायंसन्ध्या समागमे। आकाशदीपं यो दद्यात् मासमेकं निरन्तरम्। सश्रीकाय श्रीपतये स श्रीमान् भुवि जायते। दामोदराय नभसि तुलायां लोलया सह। प्रदीपन्ते प्रयच्छामि नमोऽनन्ताय वेधसे। इति मन्त्रेण यो दद्यात् प्रदीपं सर्पिरादिना। आकाशे मण्डपे वापि स चाक्षयफलं लभेत्। विष्णुवेश्मनि यो दद्यात् कार्त्तिके मासि दीपकम्। अग्निष्टोमसहस्रस्य फलं प्राप्नोति मानवः"॥ विद्यापतिकृतवर्षकृत्ये कल्पलतायाञ्च गार्ग्यः। "जीवादित्ये बाले शुक्रे ऊर्द्धं दशाहान्माङ्गल्यं प्रतिष्ठां खातञ्च कुर्य्यात्"। माङ्गल्यं विवाहादि। खातं पुष्करिण्यादि। राजमार्त्तण्डे हारीतः। "यात्रां चूडां विवाहं श्रुतिविवरविधिं ग्रामसद्मप्रवेशं प्रासादोद्यानहर्म्यान् सुरनरभवनारम्भविद्याप्रदानम्। मौञ्जीबन्धं प्रतिष्ठां मणिवरकनकाधारणं कुर्वते ये। मृत्युस्तेषाञ्च सिंहे गुरुदिनकरयोरेकराशिस्थयोश्च"। सिंहे गुरुदिनकरयोः सिंहस्थे

गुरौ रवौ च एकराशिस्थयोर्युगपत्तयोरेव तेषाञ्च सिंह इत्यत्र तेषां हरीज्य इति पाठान्तरम्। हरीज्ये सिंहे। बृहस्पतौ। सोमशेखराख्यनिबन्धे। "वापीकूपतड़ागयागगमनक्षौरप्रतिष्ठा-व्रतं विद्यामन्दिरकर्णवेधन महादानं वनं सेवनम्। तीर्थ-स्नानविवाहदेवभवनस्नानादिदेवेक्षणं दूरेणैव जिजीविषुः परि-हरेदस्तं गते भार्गवे"। दीपिकायाम्। "गुर्वादित्ये गुरौ सिंहे नष्टे शुक्रे मलिम्लुचे। याम्यायने हरौ सुप्ते सर्वकर्माणि वर्जयेत्"॥ सर्वकर्माणीति वचनान्तरोक्तप्रातिस्विकनिषिद्ध-कर्मपरं लाघवात् अन्यथा अतिप्रसङ्गापत्तेः। बृहद्राज-मार्त्तण्डः। "यात्रा-विवाह-व्रतबन्धवेश्मप्रासाद-चूड़ाकरणं हितैषी। नष्टे भृगौ नोपदिशेन्नराणां देवप्रतिष्ठामपि कर्ण-वेधम्। हित्वाद्यं शुभकर्माणि कुर्य्यादस्तमिते सिते। विवाहं मेखलाबन्धं यात्राञ्च परिवर्जयेत्"॥ अत्र यात्राञ्चेति चकारः पूर्ववचनोपात्तमुन्यन्तरोक्तप्रातिस्विकनिषिद्धकर्माणि समुच्चि-नोति। "बाले शुक्रे वृद्धे शुक्रे नष्टे शुक्रे जीवे नष्टे बाले जीवे जीवे सिंहे सिंहादित्ये जीवादित्ये। तथा मलिम्लुचे मासि सुराचार्य्येऽतिचारगे। वापीकूपतड़ागादिक्रियाः प्रागु-दितास्त्यजेत्"॥ एवञ्च कालाशुद्धौ विद्यारम्भं न कुर्य्यात् तद्विधानञ्च विष्णुधर्मोत्तरे। "संप्राप्ते पञ्चमे वर्षे अप्रसुप्ते जनार्दने। षष्ठीं प्रतिपदञ्चैव वर्जयित्वा तथाष्टमीम्॥ रिक्तां पञ्चदशीञ्चैव सौरिभौमादिनन्तथा। एवं सुनिश्चिते काले विद्यारम्भन्तु कारयेत्। पूजयित्वा हरिं लक्ष्मीं देवीञ्चापि सरस्वतीम्। स्वविद्यासूत्रकारांश्च स्वाञ्च विद्यां विशेषतः"॥ बृहस्पतिः। प्राङ्मुखो गुरुरासीनो वरुणाभिमुखं शिशुम्। अध्यापयेच्च प्रथमं द्विजाशीर्भिः प्रपूजितम्"॥ अत्राधीतस्य दानमावश्यकम्। तथा च श्रुतिः। "योऽधीत्यार्थिभ्यो विद्यां

न प्रयुञ्जीत स कार्य्यहा स्यात् श्रेयसो ह्यारमाहुणयात्" इति तद्दानञ्च "अध्यापनेन व्याख्याय प्रतिलिख्यार्पणेन च। सम्भवत्यतो धौमद्भिर्निबन्धः क्रियतेऽपि च" इति॥ एवमेव सरला। एवं शिष्यस्यापि गुरुषु दानत्वमाह लघुहारीतः। "एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत्। पृथिव्यां नास्ति तद्द्रव्यं यद्दत्त्वा सोऽनृणी भवेत्"॥ लिङ्गपुराणे। "यश्च श्रुत्वान्यतः शास्त्रं संस्कारं प्राप्य वै शुभम्। अन्यस्य जनयेत् कीर्त्तिं गुरोः स ब्रह्महा भवेत्॥ विस्मरेच्चाथवा मौख्यात् योऽपि शास्त्रमनुत्तमम्। स याति नरकं घोरमक्षयं भीमदर्शनम्"॥ राजमार्त्तण्डे देवलः। "बाले वृद्धे तथैवास्ते कुरुते दैत्यमन्त्रिणि। उद्वाहितायां कन्यायां दम्पत्योरेकनाशनम्"॥ अस्तक इति शेषः। राजमार्त्तण्डे। "सिंहे गुरौ परिणीता पतिमात्मानमात्मजान् हन्ति। क्रमशस्त्रिषु पित्रादिषु वशिष्ठगर्गादयः प्राहुः"॥ पित्रादिषु सिंहघटकमघापूर्वफल्गुन्युत्तरफल्गुनीप्रथमपादेषु। प्रतिप्रसवमाह शातातपः। "माघ्यां यदि मघा नास्ति सिंहे गुरुरकारणम्"। तत्रैव हेमाद्रिधृतमाण्डव्यवचनम्। "श्रुतिवेधजातकान्नप्राशनचूडादिकः सर्वः। रविभवनस्थे जीवे कार्य्यो वर्ज्यो विवाहस्तु"॥ माघ्यां मघायोगे तु ऋक्षेकमन्दिरगतावित्यादिना सर्वकर्म निषेधात्। अथैवं विवाहोऽपि श्रूयते। तथा च राजमार्त्तण्डे दक्षः। "गुरौ हरिस्थे न विवाहमाहुर्हारीतगर्गप्रमुखा मुनीन्द्राः। यदा न माघी मघसंयुता स्यात् तदा च कन्योद्वहनं वदन्ति"॥ इत्यञ्च माघ्यां मघायोगाभावेऽपि श्रुतिवेधादिमघास्थेऽपि गुरौ भवति विवाहस्तु गुरोर्मघा परित्यागादेव तथा च माण्डव्यः। "मघा ऋक्षं परित्यज्य यदा सिंहे गुरुर्भवेत्। तत्राब्दे कन्यका चोढा सुभगा सुप्रिया भवेत्"॥ वात्स्यायनः। "यात्रो-

द्वाहप्रतिष्ठादिग्टहचूड़व्रतादिकम्। यत्नतो वर्जयेच्चैव जीवे वक्रातिचारगे। कीर्त्तिभङ्गः प्रतिष्ठायां भयं चौरात्तथाध्वनि। चूड़ोद्वाहे भवेन्मृत्युर्व्रते हानिर्भयं ग्टहे। अतिचारे त्रिपक्षः स्यात् वक्रे पक्षचतुष्टयम्। न कुर्य्यात्तत्र यात्रादिगुरोर्वक्रातिचारयोः"। गर्गः। "गुरोर्वक्रातिचारे च वर्जयेत्तदनन्तरम्। यज्ञव्रतविवाहादावष्टाविंशतिवासरान्"। माण्डव्यः। "यदा वक्रातिचाराभ्यां राशिं गच्छति वाक्पतिः। दिनानि सप्तविंशानि त्यक्त्वा कर्म्म समाचरेत्"॥ अत्रापि पूर्वः पूर्वः पक्षः श्रेयान् राशिं राश्यन्तरम् अन्यथा व्यर्थं स्यात्। अतएव न्यायरत्नेनापि पूर्वराशिगमिष्यमाणातिचारगुरुके इत्युक्तम्। वृहद्राजमार्त्तण्डे। "वक्रातिचारोपगताः कुजाद्या यद्यन्यराशौ परिवर्जनीयाः। यथाक्रमस्थाः स्वग्टहस्थिता वा न वर्जनीया यवना वदन्ति"॥ व्यवहारसमुच्चये कृत्यचिन्तामणौ च हारीतः। "कृत्वातिचारं यदि पूर्वराशिं नायाति मन्त्री विबुधाधिपानाम्। यानं विवाहं व्रतबन्धगेहं सर्वं तदा हन्ति मतं मुनीनाम्॥ अतिचारं गते जीवे वृषे वृश्चिककुम्भयोः। यज्ञोद्वाहादिकं कुर्य्यात्तत्र कालो न लुप्यते"॥ कृत्यकल्पलतायां वाचस्पतिमिश्रैः "पूर्वराशिं यदा त्यक्त्वा अपूर्णे वत्सरे गुरुः। लुप्तकालः स विज्ञेयः परगेहं गतो यदा॥ मीने मेषे वृषे चैव तथा मिथुनकन्ययोः। अतिचारान्न दोषः स्यान्नियतं काललोपजः"॥ द्वैतनिर्णये। "कन्यावृश्चिकमेषेषु मन्मथे च झषे वृषे। अतिचारेषु कर्त्तव्यं विवाहादि बुधैः सदा" इति अमूलकमित्युक्तम्। वराहसंहितायाम्। "अतिचारं गते जीवस्तत्रैव कुरुते स्थितिम्। तदा महातिचारः स्यात् लुप्तसंवत्सरक्रियः॥ अतिचारेण यो राशिर्लङ्घितो देवमन्त्रिणा। तदाद्यो वत्सरो लुप्तो योऽनर्हः सर्वकर्म्मसु॥ तत्र वर्षे कर्म्मणो

लुप्तत्वात् वक्रगो लुप्त इति तदाह योऽनर्हं इति। भुजबल-भीमादिनिबन्धेषु। "शुभं भवनमासाद्य यदातिक्रमते गुरुः। अत्र संवर्द्धिता कन्या सुखं भर्त्तुः प्रमोदते"। दीपिकायाम्। "त्रिकोणजाया धनलाभराशौ वक्रातिचारेण गुरुः प्रयाति। यदा तदा प्राह शुभे विलग्ने हिताय पाणिग्रहणं वशिष्ठः"॥ त्रिकोणं नवपञ्चकम्। जायासप्तमं धनं द्वितीयं लाभ एकादशगृहम्। रत्नकोषे। "पञ्चो दशाहानि तथा त्रिपञ्चौ मासविभागः खलु षट् च मासाः। एषोऽति-चारः कथितो ग्रहाणां भौमादिकानां परतस्तु चारः"॥ प्रतिष्ठाकाण्डकल्पतरौ देवीपुराणम्। "यदा जीवे स्थिते सिंहे तथैव मकरस्थिते। देवारामतड़ागादिपुरोद्यानगृहाणि च॥ विवाहादिमहाभाग भयदानि विनिर्दिशेत्॥ यदा द्वादशगे जीवे अष्टमेवाथ भास्करे। प्रतिष्ठा कारिता विष्णो-र्महाभयकरी मता"। कृत्यचिन्तामणौ देवीपुराणम्। "सिंह-संस्थं गुरुं शुक्रं सर्वारम्भेषु वर्जयेत्। आरब्धस्य न सिद्धेरत महाभयकरं भवेत्॥ कूपारामतड़ागेषु पुरोद्यानगृहेषु च। सिंहस्थं मकरस्थञ्च गुरुं यत्नेन वर्जयेत्॥ कारको व्रजते नाशं सन्तानः क्षीयतेऽचिरात्"। गुणिसर्वस्वे। मकरगुरौ प्रवर्त्तकं नरसिंहपुराणम्। "विवाहो नैव कर्त्तव्यः सिंहसंस्थे गुरौ यदा। मकरस्थे च तत्कार्य्यं कल्याणं सर्वतो बुधैः"। तथा देवीपुराणम्। "मकरस्थो यदा जीवो वर्जयेत् पञ्चमांशकम्। शेषेष्वपि च भागेषु विवाहः शोभनो मतः"। एत-द्वाक्यं व्यवहारपरिगृहीतमिति कृत्यचिन्तामणिः। एतेनैतद-नाकरं भवति किन्तु मैथिलानामनाचारः इति स्वरसोऽव-गम्यते। अतएव रत्नावल्यादिषु नीचस्थ गुरावेव दोष उक्तः। गुरोर्नीचस्थत्वमपि त्रिंशांशमकरराशेः पञ्चांशं यावदिति

ज्योतिस्तत्त्वे ज्ञेयम् । रत्नावल्याम् । "नीचस्थः सिंहगो वा यदा भवति गुरुः सूर्य्यरश्मौ च लीनः । संयुक्तो वा यदि स्यात् दशशतदृष्टिना चोग्ररूपोऽथ बालः । यात्रा गेहं विवाहो व्रतममरगृहं यज्ञचूड़ादि सर्वं वापी चोद्यानकूपं न भवति शुभदं यद् यदिष्टञ्च लोके" । श्रीपतिरत्नमालायां कृत्यचिन्तामणौ च वात्स्यः । "शाखाधिपे वलिनि केन्द्रगतेऽथवास्मिन् वारेऽस्य चोपनयनं कथितं द्विजानाम् । नीचस्थितेऽरिगृहगेऽथ पराजिते वा जीवे भृगौ व्रतविधिः स्मृतिकर्म्महीनः" । अस्य शाखाधिपस्य तेन सामगानां कुजवारेऽप्युपनयनं सामवेदाधिपो भौम इत्युक्तत्वात् । कामरूपीय निबन्धे स्मृतिसागरे देवीपुराणम् । "मकरस्थो यदा जीवस्तदा त्रिंशद्दिनं त्यजेत् । त्यक्त्वा तु षष्टिदिवसं कुर्य्यात् कर्माणि मानवः" । रायमुकुटज्योतिःकालकौमुद्याम् । यत्तु "मकरस्थं गुरुं यत्नात् सिंहवत् परिवर्जयेत् । देवारामतड़ागेषु पुरोद्यानगृहेषु च" । इत्यादि देवलवचनं तदपि सिंहवत् परिवर्जयेदित्यनेन यथा सिंहस्थस्य गुरोस्त्यज्यता तथा मकरस्थस्यापीति गम्यते । सिंहस्थगुरोर्मघायुक्तमाघ्यां सत्यामेव त्याज्यता अतो मकरस्थस्यापि गुरोस्तस्यामेव त्याज्यता इत्यवगम्यते । अतएव देवीपुराणम् । "यथा जीवस्थिते सिंहे तथैव मकरस्थिते" । इत्यत्र यथा तथोपादानं तदपि देशविशेष एव दूषणम् । तथा हि "गण्डक्या उत्तरे तीरे गिरिराजस्य दक्षिणे । सिंहस्थं मकरस्थञ्च गुरुं यत्नेन वर्जयेत्" । अतएवान्यदेशाभिप्रायेण । भौमपराक्रमे । "वापीकूपतड़ागादि निषिद्धं सिंहगे गुरौ । मकरस्थे तु तत्कार्य्यं न दोषः काललोपजः । कार्य्यं मकरगे जीवे विवाहाद्यखिलं बुधैः । न तु सिंहगते जीवे कुर्य्याद्विप्रः कथञ्चन" । अत्र पूर्वोक्तनरसिंहपुराणवचने मकरस्थमाते

विवाह उक्तः । अतएव तत्सारभूतं व्यवहारमात्रं विवक्षितं श्रीपतिनात्मबुद्धेरिति प्रतिज्ञाय समयाशुद्धौ मकरस्थवृहस्पति-दोषमनभिधाय केवलमुपनयने नीचस्थवृहस्पनिषिद्धः । एतेन द्वैतनिर्णये श्रीपतिसंहितायां व्यवहारोपवृंहितमेव वचनं न च व्यवहारविरुद्धमिति । एतेन मकरस्थगुर्वादौ विवाहादि-विधायकं वचनं तदाचारविरुद्धादनादरणीयम् । इति वाच-स्पतिमिश्रोक्तं हेयम् । प्रतिष्ठाव्यतिरिक्तमकरस्थगुरुकर्म्मनि-षेधकश्रीपतिग्रन्थविरुद्धात् । अथ तन्निषेधकमुनिवचनानि प्रामाणिकान्तरधृतत्वादुपादेयानीति चेत् तर्हि प्रतिप्रसव-वचनान्यपि तथा । एवञ्चातिचारविवाहादिनिषेधकवचनानि श्रीपतिना लिखितानि न तु तदपवादकानीति । तेन तान्य-प्रामाणिकानीति यदुक्तं तदपि हेयम् । प्रकृते पूर्व्वोक्तयुक्ते-स्तौल्यात् । भुजबलभीमे । "जीवोऽर्केण युतः करोति मरणं बालांशुको भागुरिः । नष्टञ्चैकगतो वदन्ति यवनाः पाद-स्थितो देवलः । प्रायो गर्गपराशरादिमुनयो नेच्छन्ति चास्तं गते तस्मादस्तमिते सुरेन्द्रसचिवे नेष्टं विवाहादिकम्" ॥ श्रीपतिरत्नमालायाम् । "प्रागुद्गतः शिशुरहस्त्रितयं सितः स्यात् पश्चाद्दशाहमितपञ्चदिनानि वृद्धः । प्राक्पक्षमेव कथितो-ऽत्रिवशिष्ठगर्गैर्जीवस्तु पक्षमपि वृद्धशिशुर्विवर्ज्यः" । वृद्धशिशु-लगन्तेति क्वचित् पाठः । सितः शुक्रः इह पश्चाद्दिशि । राजमार्त्तण्डे । "भवेत् सन्ध्यागतः पश्चात् अस्तमेष्यन् दिन-त्रयम् । दिनानि पञ्च पूर्व्वेण तत्कृते कर्म्म वर्जयेत् । बाले वृद्धे च सन्ध्यांशे चतुःपञ्चदिवासरान् । जीवे च भार्गवे चैव विवाहादिषु वर्जयेत् । बाले वृद्धे च सन्ध्यायां नष्टे च भृगु-नन्दने । दुर्भगा चासती वन्ध्या मृत्युयुक्ता फलं क्रमात् । बाले च दुर्भगा नारी वृद्धे नष्टप्रजा भवेत् । नष्टे च मृत्यु-

माप्नोति सर्वमेवं गुरावपि" ॥ इह वे पञ्च दिनत्वकीर्त्तनमप्याद्विषयम् । ज्योतिःपराशरेण । भृगोः पादास्तेऽपि दशाहविधानात् एवं गुरावपि । रत्नमालायां पञ्चविधानात् तयोर्मते न सन्ध्यायाः पृथङ्निर्देशोऽपि वृद्धत्वेनव तद्ग्रहणात् । दीपिकायाम् । "गुर्वादित्ये गुरौ सिंहे नष्टे शुक्रे मलिम्लुचे । याम्यायने हरौ सुप्ते सर्वकर्माणि वर्जयेत्" ॥ तत्रैव "नो शुक्रास्तेऽष्टमेऽर्के गुरुसहितरवौ जन्ममासेऽष्टमेन्दौ विष्टौ मासे मलाख्ये कुजशनिदिवसे जन्मतारासु चाथ । नाडीनक्षत्रचीने गुरुरविरजनीनाथताराविशुद्धौ प्रातः कार्य्या परीक्षा स्थितनुचरग्रहांशोदये शस्तलग्ने" ॥ ज्योतिषे । "सिंहस्थे मकरस्थे च जीवे चास्तमिते तथा । सिंहस्थे तु रवौ नैव परीक्षा शस्यते बुधैः" ॥ गर्गः । "दाहे दिशाञ्चैव धराप्रकम्पे वज्रप्रपातेऽथ विदारणे वा । धूमे तथा पांशुकरप्रपाते न कारयेन्माङ्गलिकादि कार्य्यम् । उल्कापाते च निर्घाते तथैवाकालवर्षणे । छिद्रे सूर्य्ये विनिर्दिष्टे न कुर्य्यान्मङ्गलक्रियाम् । धूमकेतौ समुत्पन्ने ग्रहणे चन्द्रसूर्य्ययोः ॥ ग्रहाणां सङ्करे चैव न कुर्य्यान्मङ्गलक्रियाम् । द्विसूर्य्यं वा त्रिसूर्य्यं वा दृष्ट्वा गगनमण्डले । रात्रौ शक्रधनुश्चैव मङ्गलानि विवर्जयेत् । दिग्दाहे दिनमेकञ्च ग्रहे सप्तदिनानि च । भूमिकम्पे च सप्त ते त्र्यहाणि परिवर्जयेत् । उल्कापाते च त्रितयं धूमे पञ्चदिनानि च । वज्रपाते दिनमेकं वर्जयेत् सर्वकर्मसु" ॥ काश्यपः । "हस्वच्छिन्ना च सूक्ष्माग्रा रक्तनीलशिखोज्ज्वला । पौरुषी च प्रमाणेन उल्का नानाविधा स्मृता ॥ यदान्तरीक्षे बलवान् मारुतो मरुताहतः । पतत्यधः स निर्घातो जायते वायुसम्भवः" ॥ सशब्द इति शेषः । भोजराजः । "ग्रहे रवीन्दो रवनिप्रकम्पे केतूद्गमोल्कापतनादिदोषे । व्रते दशा-

हानि वदन्ति तज्ज्ञास्त्रयोदशाहानि वदन्ति केचित्"॥ केतवश्च शिखावन्तो ज्योतींषि स्थिराण्युत्पातरूपाणि। ग्रहणकाले भूकम्पोल्कापातवज्रपातादिदोषसमाहारे त्रयोदशाहम् अशुद्धम्। किञ्चिदूनतत्समाहारेऽपि दशाहम्। ग्रहणाद्येकैकदोषे त्र्यहमिति वाचस्पतिमिश्राः। अत्र स्मृतिसागरधृतसारसंग्रहे। राज्यादिकमहासिद्धौ यज्ञदानतपःसु च। होमस्वाध्याययोश्चैव वर्जयेद्दशरात्रकम्॥ लक्षहोमे महादाने वर्जयेत् सोमके मखे। तपःस्वाध्याययोश्चैव चिरारम्भे त्रयोदश"॥ इति व्यवस्था अन्यत्र। "उल्कापाते भुवः कम्पे अकालवर्षगर्जिते। वज्रकेतूद्गमोत्पाते ग्रहणे चन्द्रसूर्य्ययोः॥ प्रयाणन्तु त्यजेत् क्षत्रः सप्तरात्रमतः परम्। ब्राह्मणः क्षत्रियो वैश्यस्त्यजेत् कर्म त्रिरात्रकम्॥ शूद्रस्त्यक्त्वा चैकरात्रं सर्वकर्म समाचरेत्"॥ पराशरः। "प्रयाणे सप्तरात्रं स्यात् त्रिरात्रं व्रतबन्धने। एकरात्रं परित्यज्य कुर्य्यात् पाणिग्रहं ग्रहे"॥ भृगुः। "कम्पे राजनि सप्ताहो ब्राह्मणानां त्र्यहस्तथा। शूद्रस्यार्द्धदिनं प्रोक्तं सर्वकार्य्येषु वै भृगुः"॥ शूद्रस्यापद्विषयम्। कम्प इत्युपलक्षणम्। ग्रहणादावप्येवमेवान्यत्रैकत्र पठितत्वात्। भोजदेवव्यवहारसमुच्चये। "सर्वं कार्य्यं न कुर्वीत गुरौ सिंहेऽस्तगेऽपि च। व्रतदीक्षे न कुर्वीत तमोयुक्ते बृहस्पतौ"॥ तमोयुक्ते राहुयुक्ते। व्रतदीक्षे इति नित्येतरकर्मोपलक्षणम्। तथा च स्मृतिसागरसारे ज्योतिषम्। "एकराशौ स्थितौ स्यातां यदि राहुबृहस्पती। विवाहव्रतयज्ञादि सर्वन्तत्र विवर्जयेत्"॥ मलमासाद्युपक्रम्य भविष्ये। "ऋक्षभेदेऽप्येकराशौ सम्पर्कौ यदि वानयोः। गुरोः राहोरपि तथा त्यजेद्विद्वान्न संशयः"॥ अत्र गुरोर्लज्जितत्वं हेतुः। तद्यथा "यत्र यत्र स्थितो जीवस्तमोयोगेन लज्जते। उपहासाय किं न स्यादसत्सङ्गो मनो-

षिणाम्" ॥ इति । "अनिष्टे त्रिविधोत्पाते सिंहिकासुनु-दर्शने । सप्तरात्रं न कुर्वीत यात्रोद्वाहादिमङ्गलम्" ॥ इति दीपिकायामनिष्टमित्यभिधानात् । अनिष्टजनकोत्पात एव सर्वकर्मानधिकारः । पूर्वलिखितभोजराजवचनेऽपि । "केतू-द्गमोल्कापातनादिदोषे" इति दोषजनक एव तथोपरागे मण्ड-लतः शुभेऽपि यात्रानिषेधाय सिंहिकेति पृथगुपादानम् । अत्र विवाहादावपि सप्तरात्रनिषेधात् पराशरोक्तस्वल्पकालनिषेध आपद्विषयः । तेनानिष्टजनके भूमिकम्पादौ न दोषः । अतएव षट्कालिकायाम् । वराहेण उत्पातप्रकरणे प्रायः पदमभि-हितम् । तथा च यः प्रकृतिविपर्य्यासः प्रायः संक्षेपतः स उत्पातः चितिव्योमदिव्यजातो यथोत्तरं गुरुतरो भवति प्राय इति ऋत्वादिप्रयुक्तविपर्य्यासव्यावृत्त्यर्थं यदाह "ये च न दोषं जनयन्त्युत्पातास्तान् ऋतुस्वभावकृतान् । ऋषिपुत्रैः कृतैः श्लोकैर्विद्यादेतैः समासोक्तैः । तथा च मत्स्यपुराणम् "वज्रा-शनिमहीकम्पे सन्ध्या निर्घातनिस्वनाः । परिवेशरजो धूम-रक्तार्कास्तमयोदयाः ॥ द्रुमेभ्योऽथ रसस्नेहमधुपुष्पफलोद्गमाः । गोपच्चिमदवृद्धिश्च शिवाय मधुमाधवे ॥ तारोल्कापातकलुषं कपिलार्केन्दुमण्डलम् । अनग्निज्वलनं स्फोटं धूमरेणुनिरा-कुलम् । रक्तपद्मारुणासन्ध्या नभःक्षुब्धार्णवोपमम् ॥ सरिता-ञ्चाम्बुसंशोषं दृष्ट्वा ग्रीष्मे शुभं वदेत् । शक्रायुधपरीवेशो विद्युच्छुष्कविरोहणम् ॥ कम्पोद्वर्त्तनवैकृत्यं रसनं दारणं चितेः । नद्युदपानसरसां वृद्ध्युद्धाभिरणप्लवाः ॥ पतनञ्चाद्रि-गेहानां वर्षासु न भयावहम् । दिव्यस्त्रीभूतगन्धर्वविमाना-द्भुतदर्शनम् ॥ ग्रहनक्षत्रताराणां दर्शनन्तु दिवाम्बरे । गीत-वादित्रनिर्घोषो वनपर्वतसानुषु । शस्यवृद्धौ रसोत्पत्तिरपापाः शरदि स्मृताः । शीतानिलतुषारत्वं नदनं मृगपक्षिणाम् ।

रत्नौ यज्ञादि सत्त्वानां दर्शनं वागमानुषी। दिशो धूमान्धकाराश्च शलभा वनपर्वताः उच्चैः सूर्य्योदयास्तत्वं हेमन्ते शोभना मताः। हिमपाता निलोत्पात विरूपाद्भुतदर्शनम्। दृष्टाञ्जनाभमाकाशं तारोल्कापातपिञ्जरम्। चित्रागर्भोद्भवा स्त्रीषु गोजाश्व मृगपक्षिणाम्। पत्राङ्कुरलतानाञ्च विकाराः शिशिरे शुभाः। ऋतुस्वभावजा ह्येते दृष्टा स्वर्त्तौ शुभावहाः। ऋतावन्यत्र चोत्पाता दृष्टास्ते भृशदारुणाः। उन्मत्तानाञ्च या गाथा शिशूनाञ्चेष्टितञ्च यत्। स्त्रियो यच्च प्रभाषन्ते तस्य नास्ति व्यतिक्रमः। पूर्व्वञ्चरति देवेषु पश्चाद्गच्छति मानुषान्। नादेशिता वाग्वदति सत्याह्येषा सरस्वती"। अतएव मनुनापि। "निर्घाते भूमिचलने ज्योतिषाञ्चोपसर्पणे। एतानाकालिकान् विद्यादनध्यायानृतावपि"। अत्रानध्ययनार्थं मृतावपीत्युक्तम्। उत्पाते दोषभङ्गमाह श्रीपतिव्यवहारनिबन्धे। "अथ दिवसत्रयमध्ये मृदुजलपतनं यदा स्यात् तदोत्पातदोषं शमयेदित्याहुराचार्य्याः"॥ वार्हस्पत्ये "शमयन्त्याशमाहात् कम्पादिकृतं निमित्तमाश्वेव। अतिवर्षणोपवासव्रतदीक्षाजप्यहवनानि"। विष्णुधर्मोत्तरे। "शेतेऽत्र चतुरो मासान् यावद्भवति कार्त्तिकः। विशिष्टा न प्रवर्त्तन्ते तदा यज्ञादिकाः क्रियाः। नाभिषेच्यो नृपश्चैत्रे नाधिमासे कदाचन। सुप्ते च तथा कृष्णे विशेषात् प्रावृषि द्विज"। भविष्योत्तरे। "सुप्ते मयि जगन्नाथे केशवे गरुड़ध्वजे। निवर्त्तन्ते क्रियाः सर्व्वाश्चातुर्व्वर्ण्यस्य भारत। विवाहव्रतबन्धादि चूड़ासंस्कारदीक्षणम्। यज्ञगृहप्रवेशादि दानार्चनप्रतिष्ठनम्। पुण्यानि यानि कर्माणि वर्जयेद्दक्षिणायने"। सर्व्वास्तत्तद्वाक्यगणिताः पूर्व्वप्रातिस्विकोक्ताः। एवं पुष्णातीति। अन्यथा विशेषवचनवैयर्थ्यादिति वदन्ति। भोजराजः।

"वापी-तड़ाग-गृह-गोपुर-देवसद्म-प्रासादवारिमठकूपविवाहचै-त्यान्। कर्त्तुं यथागमविधानविधिर्विधाता प्रोक्तस्तथैव कथ-यामि समासतोऽहम्। सुप्ते हरौ प्रकटशेषफणोपधाने लक्ष्मी-कराब्जपरिमार्जितपादपद्मे। मीने रवौ धनुषि चास्तमिते तथेज्ये वास्तुक्रियाविधिरसौ मुनिभिर्निषिद्धः"। इज्यो गुरुः। नारदः। "वापीकूपतडागादि प्रतिष्ठायज्ञकर्म च। न कुर्य्या-न्मलमासे च महादानव्रतानि च"। दानपदं सामान्यदान-परमिति वदन्ति। तथा च स्मृतिः। "अस्ते सन्ध्यागते बाले भृगौ मासि मलिम्लुचे। देवतादर्शनं दानं महादानं विवर्जयेत्"। लघुहारीतः। "भृगावस्ते गुरौ सिंहे गुर्वा-दित्ये मलिम्लुचे। त्यजेत् दानं महादानं व्रतं देवविलो-कनम्"। एतद्वचनद्वयं कालविवेकेऽपि। अत्र दानमहा-दानयो रुपादानात्। किन्त्वियान् विशेषः। मरीचवच-नोक्तरोगादौ दानमेव प्रतिप्रसूतं न तु महादानमिति। नारा-यणोपाध्यायस्तु। मुमुक्षुणा त्वनभिसंहितफलदानम्। मल-मासेऽपि कर्त्तव्यमेव महादानन्त्वनभिसंहितफलमपि नेत्याहुः। कृत्यचिन्तामणौ। दानमित्यत्र यानमिति पठन्ति। यानं यात्रामित्यर्थः। प्रागुक्तज्योतिः पराशरवचने मलमासनिषि-द्धगणे दानपदं महादानपरमिति शूलपाणिः। अत्राकालि-कमनध्याय इति स ज्योतिः स्यादनध्याय इति वचनयोः सन्ध्यागर्जनप्रकरणीययोर्विरोधः शक्ताशक्तभेदेन परिहरणीय इति केचित् उल्कासहचरितत्वेन महागर्जनविषयम् आका-लिकमिति। यथा मनुः। "विद्युत्स्तनितवर्षेषु महोल्का-नाञ्च संप्लवे" इति वस्त्वर्थः। एतद्वचनं तिथितत्त्वे विवृतम्। कालाकालविषय इति हलायुधः। गर्जादि समाहारविषय-माकालिकमित्यपरे। आकालिकं निमित्तमारभ्या परदिने

तत्कालपर्य्यन्तं सज्योतिः सौरनक्षत्रान्यतरज्योतिषा सह वर्त्तन्ते दिनमात्रं रात्रिमात्रञ्चेत्यर्थः।

अथ रोगी दानादि। शातातपीयकर्मविपाके। "महापातकजं चिह्नं सप्तजन्मसु जायते। उपपापोद्भवं पञ्च त्रीणि पापसमुद्भवम्। दुष्कर्मजा नृणां रोगा यान्ति चैव क्रमाच्छमम्। जपैः सुरार्चनैर्होमैर्दानैस्तेषां शमो भवेत्। पूर्वजन्मकृतं पापं नरकस्य परिक्षये। बाधते व्याधिरूपेण तस्य कृच्छ्रादिभिः शमः। कुष्ठञ्च राजयक्ष्मा च प्रमेहो ग्रहणी तथा। मूत्रकृच्छ्राश्मरीकासा अतिसारभगन्दरौ। दुष्टव्रणं गण्डमाला पक्षाघातोऽक्षिनाशनम्। इत्येवमादयो रोगा महापापोद्भवाः स्मृताः। जलोदरयकृत् प्लीह शूलरोगव्रणानि च। श्वासाजीर्णज्वरच्छर्दिभ्रममोहगलग्रहाः। रक्तार्बुदविसर्पाद्या उपपातोद्भवा गदाः। दण्डापतानकश्चित्रवपुःकम्पविचर्चिकाः। वल्मीकपुण्डरीकाद्या रोगाः पापसमुद्भवाः"। तथा "अर्श आद्या नृणां रोगा अतिपापाद्भवन्ति हि। अन्ये च बहुधा रोगा जायन्ते रोगसङ्कराः। उच्यन्ते हि निदानानि प्रायश्चित्तानि च क्रमात्। महापापेषु सर्वं स्यात् तदर्द्धमुपपातके। दद्यात् पापेषु षष्ठांशं कल्प्यं व्याधिबलाबलम्। लक्षमुद्धावचं पुष्पं प्रदद्याद्देवतार्चने। दद्यात् द्विजसहस्राय मिष्टान्नं द्विजभोजने। गोदाने च सवत्सा गौः सुशीला च पयस्विनी"। गोदानमधिकृत्यादि पुराणम्। "अरोगश्चैव जायेत तेजस्वी च भवेन्नरः"। मनुः। "औषधान्यगदो विद्या दैवी च विविधा स्थितिः। तपसैव प्रसिध्यन्ति तपस्तेषान्तु साधनम्"। अगदो नैरुज्यम्। शातातपः। यथा निदानं दोषोत्थः कर्मजो हेतुभिर्विना। महारम्भोऽल्पके हेतावन्तिमो दोषकर्मजः"। सारावल्याम्। "पथ्याशिनां शीलवतां नराणां सद्वृत्तिभाजां

विजितेन्द्रियाणाम्। एवं विधानामिदमायुरत्र चिन्त्यं सदा वृद्धमुनिप्रवादः"। अत्रमाह याज्ञवल्क्यः। "वर्त्त्याधार स्नेह-योगाद् यथा दीपस्य संस्थितिः। विक्रियापि च दृष्टैवमकाले प्राणसंशयः"। यथात्वविकलवर्त्त्यादि सत्त्वे प्रचण्डवातादिना दीपनाशस्तथा सत्यप्यायुषि अशुभकर्मवशाच्छोकादुर्गवर्त्मयुद्धा-पथ्याशित्वादिना प्राणनाश इति। आयुर्वेदे। "यथा शास्त्रञ्च निर्णीतो यथा व्याधि चिकित्सितः। न शमं याति यो व्याधिः स ज्ञेयः कर्मजो बुधैः"। तत् चिकित्सायां भीषटाचार्य्यः "दानैर्दयादिभिरपि द्विजदेवतागोगुर्व्वर्चनप्रणतिभिश्च जपैस्त-पोभिः। इत्युक्त पुण्यनिचयैरुपचीयमानाः प्राक्पापजा यदि रुजःप्रशमं प्रयान्ति"। अतएव हेमाद्रिकृतदानखण्डे तत्त-द्रोगे तत्तद्दानाभिधानपूर्व्वकं भगवद्वाक्यम्। "सुवर्णदानं सर्व्वेषां रोगाणां नाशकारणम्। तस्मात् सर्व्वप्रयत्नेन कर्त्तव्यं कमलोद्भव"। कर्म्मदोषोभयजन्यव्याधौ च। "दानादिभिः कर्म्मभिरोषधीभिः कर्म्मक्षये दोषपरिक्षये च। सिध्यन्ति ये यत्नवतां कथञ्चित् ते कर्म्मदोषप्रभवा गदास्तु"। अतएवोक्तम्। "प्रायश्चित्तमकृत्वा तु कर्म्म कुर्य्यान्न किञ्चन। अनिस्तीर्णमघं यस्मात् द्विगुणं परिपच्यते"। केवलदोषजे तु। "स्वहेतुदुष्टै-रनिलादिदोषैरुपप्लुतैः स्वेषु परिस्खलद्भिः। भवन्ति ये प्राण-भृतां विकारास्ते दोषजा भेषजशुद्धिसाध्याः"।

अथ मुमुक्षुकृत्यम्। मनुः। "इह चामुत्र वा काम्यं प्रवृत्तं कर्म्म कीर्त्तते। निष्कामं ज्ञानपूर्व्वन्तु निवृत्तमुपदिश्यते। प्रवृत्तं कर्म्म संसेव्य देवानामेति सार्ष्टिताम्। निवृत्तं सेव्यमा-नन्तु भूतान्यत्येति पञ्च वै"। कामनापूर्व्वकं कर्म्म शरीर प्रवृत्ति-हेतुत्वात् प्रवृत्तं तदेव कर्म्म कामनारहितम्। पुनर्ब्रह्मज्ञाना-भ्यासपूर्व्वकं संसारनिवृत्तिहेतुत्वात् निवृत्तमुच्यते। सार्ष्टितां

समानगतिताम् । ऋषेर्गत्यर्थात् पञ्चभूतान्यत्येति अतिक्रामति मोक्षं प्राप्नोतीत्यर्थः । विष्णुपुराणम् । "विप्रेष्टफलदा काम्या निष्कामाणां विमुक्तिदा"। भगवद्गीतापि । "युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् । अयुक्तः कामकारेण फले सक्तो निबध्यते"। युक्त ईश्वराय कर्माणि न फलाय इत्येवं समाहितः। फलं त्यक्त्वा कर्माणि कुर्वन्निति शेषः। शान्तिं मोक्षाख्यां नैष्ठिकीं निष्ठायां भवाम्। सत्त्वशुद्धिज्ञानप्राप्तिसर्वकर्मसन्न्यासज्ञाननिष्ठाक्रमेणेति वाक्यमिति शेषः। अयुक्तस्तद्वहिर्मुखः कामकारेण कामप्रेरिततया कामतः प्रवृत्तेरिति यावत्। फले सक्तः मम फलाय इदं कर्म करोमीत्येवं फले सक्तो नियतं बन्धं प्राप्नोति तथा चार्जुनं प्रति भगवद्वाक्यम् । "मयि सर्वाणि कर्माणि संन्यस्याध्यात्म चेतसा। निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः"। सन्न्यस्य निक्षिप्य समर्प्य इति यावत्। अध्यात्म चेतसा विवेकबुद्ध्या अहंकर्त्ता ईश्वराय भृत्यवत् करोमीत्यनया बुद्ध्या निराशीस्त्यक्तकामसङ्कल्पः। अतएव निर्ममो ममतारहितः। विगतज्वरः विगतसन्तापः। व्यक्तमाह स एव। "यत् करोषि यदश्नासि यत् जुहोषि ददासि यत्। यत् तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम्"। विष्णुपुराणे। "कर्माण्यसङ्कल्पित तत् फलानि सन्न्यस्य विष्णौ परमात्मरूपे। अवाप्य तां कर्ममहीमनन्ते तस्मिंल्लयं ते त्वमलाः प्रयान्ति"। तां कर्ममहीं भारतवर्षरूपाम्। एकादशस्कन्धे। "वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितुमीश्वरे। नैष्कर्म्यां लभते सिद्धिं रोचनार्था फलश्रुतिः"। वेदोक्तमेव कुर्वाणो न तु निषिद्धम्। ननु कर्मणि क्रियमाणे तस्मिन्नासक्तिस्तत् फलञ्च स्यात् न तु नैष्कर्म्यरूपा फलसिद्धिः। अतएवाह निःसङ्ग इति अनभिनिवेशितवान् ईश्वरेऽर्पितुं

न फलोद्देशेन। अथ फलस्य श्रुतत्वात् कर्मणि कृते फलं भवत्येव इत्यत आह रोचनार्था इति। कर्मणि रुच्युत्पादनार्था अतएव भवेव "फलश्रुतिरियं नृणां बाश्रयो रोचनं परम्। श्रेयो विवक्षया प्रोक्ता यथा भैषज्यरोचनम्। उत्पन्नेव हि कामेषु प्राणेषु स्वजनेषु च। आसक्तमनसो मर्त्या आत्मनोऽनर्थहेतुषु। न तानविदुषः स्वार्थं भ्राम्यतो वृजिनाध्वनि। कथं युञ्ज्यात् पुनस्तेषु तांस्तमो विशतो बुधः। एवं व्यवस्थितं केचिदविज्ञाय कुबुद्धयः। फलश्रुतिं कुसुमितां न वेदज्ञा वदन्ति हि"॥ इयं फलश्रुतिर्न श्रेयः परमपुरुषार्थपरा न भवति किन्तु बहिर्मुखानां मोक्षविवक्षया अवान्तरकर्मफलैः कर्मसु रुच्युत्पादनमात्रम्। यथा भैषज्ये औषधे रुच्युत्पादनम्। यथा "पिब निम्बं प्रदास्यामि खलु ते खण्डलड्डुकान्। पित्रैव मुक्तः पिबति तिक्तमप्यतिबालकः"॥ अत्र तिक्तनिम्बादिपानस्य न खलु खण्डादिलाभ एव प्रयोजनम्। किन्त्वारोग्यम्। तथा वेदोऽप्यवान्तरफलैः प्रलोभयन् मोक्षायैव कर्माणि विधत्ते। ननु कर्मकाण्डे मोक्षस्य नामापि न श्रूयते कुत एवं व्याख्यायते। यथा श्रुतस्येवाघटनादित्याह उत्पन्नेति द्वाभ्याम् उत्पत्त्या स्वभावत एव कामेषु पश्वादिषु प्राणेषु आयुरिन्द्रियबलवीर्य्यादिषु स्वजनेषु पुत्रदारादिषु। परिपाकतो दुःखहेतुषु अतस्तान् स्वार्थं परमसुखमविदुषः अजानतो यतो न तान् प्रह्वीभूतान् बुधो वेदो यद्बोधयति तदेव श्रेय इति विश्वसितानित्यर्थः तानेवं भूतान् वृजिनाध्वनि पापे वर्त्मनि देवादियोनौ भ्राम्यतः। पुनस्तमो भूतवृक्षादियोनौ विशतः पशुकाम इति चायुरिन्द्रियादिकाम इति च पुत्रादिकाम इति च कथं पुनस्तेषु स्वयं बुधो वेदो युञ्ज्यात्। तथासत्यनाप्तः स्यादिति भावः। कथं तर्हि कर्म-

मीमांसकाः कर्मफलपरतां वदन्ति तत्राह एवमिति व्यवस्थितम्। वेदस्यार्थाभिप्रायमविज्ञाय कुसुमिताम् अवान्तरफलरोचनतया रमणीयां परमफलश्रुतिं वदन्ति कुतस्ते कुबुद्धयः। तदाह हि यस्मात् वेदज्ञा व्यासादयः तथा न वदन्तीति अतएव निष्कामकर्मणात्मज्ञानमित्युक्तम्। यथा "अयमेव क्रियायोगो ज्ञानयोगस्य साधकः। कर्मयोगं विना ज्ञानं कस्यचिन्नैव दृश्यते" ॥ सोऽपि दुरितक्षयद्वारा न साक्षात्। तथा च "ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः। श्रुतिस्तमेव वेदार्थवचनेन ब्राह्मणा विविदिषन्ति ब्रह्मचर्य्येण तपसा दानेन श्रद्धया यज्ञेनानश्नेन चेति" तमात्मसाक्षात्कारम्। अतएव यज्ञादीनां ज्ञानशेषताश्चावधार्य्य निष्कामेषु कर्मसु प्रवर्त्तते। पण्डितेनापि मूर्खः काम्ये कर्मणि न प्रवर्त्तयितव्यः। इत्याह षष्ठस्कन्धे। "स्वयं निःश्रेयसं विद्वान् न वक्त्यज्ञाय कर्म हि। न राति रोगिणेऽपथ्यं वाञ्छतेऽपि भिषक्तमः" ॥ राति ददाति। समयप्रदीपे श्रीदत्तः। "दासीं दासमलङ्कारमन्नं षड्रससंस्कृतम्। पुरुषोत्तमस्य तुष्ट्यर्थं प्रदेयं सार्वकालिकम्। यद्यदिष्टतमं लोके यच्चाप्यस्ति गृहे शुचि। तत्तद्धि देयं तुष्ट्यर्थं देवदेवस्य चक्रिणः" ॥ इदं दानं ब्राह्मणसम्प्रदानकमेव विष्णुप्रीतिमुद्दिश्य एवं सर्वत्र दाने विष्णुप्रीतेः सामान्यतः श्रवणात्। विष्णुप्रीतौ देवताधिकरणन्यायविरोध इति चेन्न स्वर्गवदधिकारिविशेषणत्वेन तत्स्वप्रसाधनादित्याह। ब्राह्मणसम्प्रदानकत्वे किं प्रमाणमिति चेत् वामनपुराणे तत्तन्मासभेदेन तत्तद्दानमभिधाय "विष्णोः प्रीत्यर्थमेतानि देयानि ब्राह्मणेष्वथ। देयानि विप्रमुख्येभ्यो मधुसूदनतुष्टये" ॥ इति चाभिधाय दासीं दासमिति वचनद्वयाभिधानात्। तथा विष्णुधर्मोत्तरेऽग्निपुराणे च। "यत्र यत्र भवेत् प्रीतिर्विषयेभ्यो

महामुने। तत्तमच्युतमुद्दिश्य विप्रेभ्यः प्रतिपादयेत्"॥ विष्णुधर्मोत्तरतृतीयकाण्डे तु विष्णुसम्प्रदानकमेव दानम्। "विष्णोः शङ्खप्रदानेन वारुणं लोकमाप्नुयात्"॥ इत्यादिना "चीरपल्लवसंयुक्तान् कलसान् सुविभूषितान्। दत्त्वा वै देवदेवाय वाजिमेधफलं भवेत्"॥ इत्यन्तेन तत्तत्फलं तत्तद्दानमभिधायोक्तम्। "अकामः सात्त्विको लोको यत्किञ्चिद्विनिवेदयेत्। तेनैव स्थानमाप्नोति यत्र गत्वा न शोचते॥ धर्मवाणिजिका मूढाः फलकामा नराधमाः। अर्चयन्ति जगन्नाथं ते कामानाप्नुवन्त्यथ। अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्॥ पङ्क्त्यां प्रतीच्छते देवः सकामेन निवेदितम्। मूर्द्ध्नि प्रतीच्छते दत्तमकामेन द्विजोत्तमैः"॥ इति वामनपुराणवचने सार्द्धकालिकमित्यनेन मलमासादावपि विष्णुप्रीत्यर्थं देयम्।

अथ महादानलक्षणम्। मत्स्यपुराणे। "अथातः संप्रवक्ष्यामि महादानस्य लक्षणम्"। इत्यभिधाय। "आद्यन्तु सर्वदानानां तुलापुरुषसंज्ञितम्। हिरण्यगर्भदानञ्च ब्रह्माण्डं तदनन्तरम्। कल्पपादपदानञ्च गोसहस्रञ्च पञ्चमम्। हिरण्यकामधेनुश्च हिरण्याश्वस्तथैव च। पञ्चलाङ्गलकञ्चैव धरादानं तथैव च। हिरण्याश्वरथस्तद्वत् हेमहस्तिरथस्तथा। द्वादशं विष्णुचक्रञ्च ततः कल्पलतात्मकम्। सप्तसागरदानञ्च रत्नधेनुस्तथैव च। महाभूतघटस्तद्वत् षोडशः परिकीर्त्तितः"॥ अत्र सामान्यलक्षणं सूक्तजपाङ्गकदानं महादानम्। विनायकादिपञ्चाशद्देवताहोमाङ्गकं वा। तथा च मत्स्यपुराणम्। विनायकादिग्रहलोकपालवस्वष्टकादित्यमरुद्गणानाम्। ब्रह्माच्युतेशानवनस्पतीनां स्वमन्त्रतो होमचतुष्टयं स्यात्। जप्यानि सूक्तानि तथैव चैषामनुक्रमेणापि यथा स्वरूपम्" इत्यादिना सूक्तजपहोमाङ्गयोश्च विधिः प्रत्येकं षोड़शतुलापुरुषप्रधाना-

न्युद्दिश्योक्तो न तु महादानत्वेन उद्दिश्येति। अतो नेतरेतराश्रयत्वम्। न तु कुण्डमण्डपेतिकर्त्तव्यतायोगित्वं जिज्ञासीयलक्षणमचलमठदानेऽपि गतत्वात्। एवञ्च "कनकाश्वतिलानागादासीरथमहीगृहाः। कन्या च कपिला धेनुर्महादानानि वै दश"। इति कूर्मपुराणोक्तं महादानपदं गौणम्। अन्यथा महाशक्तिकल्पनापत्तेः। कनकादि साधारणानुगतैकरूपाभावाच्च। न वैपरीत्यम्।

अथ मलमासकर्त्तव्यव्रतम्। चातुर्मास्यव्रतमाषाढ़ाद्युल्लेखेन विहितं यत् तदप्यारब्धं मलमासे कार्य्यम्। आषाढ़ादि प्रतिदिनकर्त्तव्यत्वेन निरवकाशात्। "षष्ट्या तु दिवसैर्मासः कथितो वादरायणैः" इति ज्योतिःशास्त्रे पितामहेन एकमासत्वाभिधानाच्च। यच्च "संवत्सरन्तु यः पूर्णमेकभक्तेन तिष्ठति"। इत्यादौ माघाद्यनुल्लिखित संवत्सरव्रतमारब्धं तन्मलमासेऽपि कर्त्तव्यम्। "क्वचित्त्रयोदशमासाः संवत्सरः" इति श्रुतेः। यच्च प्रतिमासविहितं न माघाद्युल्लेखेन तन्मलमासेऽपि कर्त्तव्यम्। तथा च रम्भातृतीयाव्रते शिववरचनम्। "मासे मलिम्लुचेऽप्येवं यजेद्देवीं सशङ्कराम्। किन्तु नोद्यापनं कार्य्यमित्याह भगवान् शिवः"। उद्यापनं प्रतिष्ठा। व्रतारम्भोऽपि निषिद्धः। पूर्वनिरुक्तवाक्यवचनात्। जैष्ठादिमासविशेषविहितं सावित्रीव्रतादिकन्तु सावकाशत्वान्मलमासे न कार्य्यम्। प्रकृत एव जैष्ठादौ कर्त्तव्यमिति।

अथ पितृपक्षकृतक्रिया। हेमाद्रिकालमाधवीयसंग्रयोर्नागरखण्डम्। "आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे। यो वै श्राद्धं नरः कुर्य्यादेकस्मिन्नपि वासरे॥ तस्य संवत्सरं यावत् तृप्ताः स्युः पितरो ध्रुवम्। नभो वाथ नभस्यो वा मल-

मासो यदा भवेत्॥ सप्तमः पितृपक्षः स्यादन्यश्चैव तु पञ्चमः"॥ अत्र सप्तमस्य पितृपक्षत्वात्। "षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः" इत्यनेन त्रिंशता तिथिभिः पक्षत्वात् सप्तमस्य पञ्चमत्वाच्च। तदब्दे तत्र मृतस्य। "सपिण्डीकरणादूर्द्ध्वं यत्र यत्र प्रदीयते। तत्र तत्र त्रयं कुर्य्यात् वर्जयित्वा मृताहनि॥ अमावास्यां क्षयो यस्य प्रेतपक्षेऽथवा पुनः। सपिण्डीकरणादूर्द्ध्वं तस्योक्तः पार्व्वणो विधिः"। इति शङ्खोक्तेन प्रत्याब्दिकं पार्व्वणविधिना कर्त्तव्यम्। न तु मलमासभाद्रकृष्णपक्षमृतस्य वर्षान्तरेऽश्वयुक्कृष्णपक्षेऽपि पार्व्वणं तस्य प्रेतपक्षमृतत्वाभावात् किन्त्वेकोद्दिष्टम् अत्र पार्व्वणो विधिः पार्व्वणेतिकर्त्तव्यताकैकोद्दिष्टविधिरिति नव्यवर्द्धमानप्रभृतयः तन्न पूर्व्ववचनोक्तत्रैपुरुषिकस्य मृताहे पर्य्युदस्तस्य पार्व्वणो विधिरित्यनेन प्रतिप्रसवात्। "अपुत्रा ये मृताः केचित्" इत्यत्र पार्व्वणनिषेधानुपपत्त्या कर्षूसमन्वितमित्यत्र षट्पुरुषनिषेधेन च त्रैपुरुषिकत्वलाभाच्च। तस्मात्त्रैपुरुषिकं युक्तमिति। एवममावास्यादिमरणनिमित्तेन मातुरपि प्रत्याब्दिकं पार्व्वणविधिनैव; "अपुत्रा ये मृताः केचित् स्त्रियो वा पुरुषाश्च ये। तेषामपि च देयं स्यात् एकोद्दिष्टं न पार्व्वणम्"॥ इत्यापस्तम्बवचने अपुत्रा इति विशेषणोपदानात् सपुत्राणां पार्व्वणाभ्यनुज्ञानात्। एतच्च मातृप्रभृतित्रयदैवतं कार्य्यम्। मात्रे पितामह्यै प्रपितामह्यै पूर्व्ववद्ब्राह्मणान् भोजयित्वा इत्यन्वष्टकायां तथा दर्शनात्। मलावसानदिननिमित्तत्वेन पार्व्वणविधानात् छन्दोगैरपि मात्रादित्रिकाणां श्राद्धं कार्य्यम्। "न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते"। इति छन्दोगपरिशिष्टेन विशेषतः प्रतिप्रसवात् एवं सपिण्डीकरणेऽपि। एतच्च मातापित्रोरेव। तथा हेमाद्रिधृतकात्यायनवचनम्। "सपिण्डीकर-

णादूर्द्ध पित्रोरेव हि पार्वणम् । पितृव्य भ्रातृमातॄणामेकोद्दिष्टं सदैव तु" ॥ मातृपदं सपत्नीमातृपरम् । पितृव्यादिसमभिव्याहारात् अत्र मातृपदस्य राजदन्तादित्वात् परनिपातः । अत्रानुज्ञाग्रहणाभिलापस्तु । अद्येत्यादि पितुरमावस्याक्षयनिमित्तक-पार्वणविधिक-सांवत्सरिक-श्राद्धार्थम् । अमुकगतस्य पितुरमुकदेवशर्म्मणोऽमुकगोत्रस्य पितामहस्यामुकदेवशर्म्मणोऽमुकगोत्रस्य प्रपितामहस्यामुकदेवशर्म्मणः पार्वणविधिकसांवत्सरिकश्राद्धे कर्त्तव्ये पुरूरवोमाद्रवसोर्विश्वेषां देवानां पार्वणविधिकश्राद्धं दर्भमयब्राह्मणयोरहं करिष्ये । एवमन्यत्राप्यूह्यम् । एवञ्च सप्तमस्य पितृपक्षत्वादश्वयुक्कृष्णपक्षीयश्राद्धं मलमासे न कार्य्यम् ।

अथाश्वयुक्कृष्णपक्षश्राद्धम् । ब्रह्मपुराणम् । "अश्वयुक्कृष्णपक्षे तु श्राद्धं कुर्य्याद्दिने दिने । त्रिभागहीनं पक्षं वा त्रिभागन्त्वर्द्धमेव वा" ॥ दिनपदं तिथिपरं तत्तत्कर्म्मनिमित्तपौर्णमास्यन्तचैत्रादिद्वादशमाससम्बन्धित्वात् तिथिश्चान्द्रमसं दिनमित्यादिप्रागुक्तत्वाच्च । अर्द्धमेवेति अर्द्धं कुर्य्यादेव इति नियमश्रुतेरर्द्धस्यावश्यकत्वम् । तच्च त्रिभागस्यैव अर्द्धत्वे सम्भवति न तु पक्षस्य तथात्वे त्रिभागकरणे अर्द्धमेवेति नियमानुपपत्तेः । त्रयाणां पूरणो भागस्त्रिभागस्त्रिभागहीनः पूर्वत्रिभागहीनः त्रिभागः परस्त्रिभागः । तथा च विष्णुधर्मोत्तरे । "उत्तरादयनात् श्राद्धे श्रेष्ठं स्याद्दक्षिणायनम् । चातुर्मास्यञ्च तत्रापि प्रसुप्ते केशवे हितम् । प्रौष्ठपद्याः परः पक्षस्तत्रापि च विशेषतः । पञ्चम्यूर्द्ध्वञ्च तत्रापि दशम्यूर्द्ध्वमतोऽप्यति । मघायुक्ता न तत्रापि शस्ता राजंस्त्रयोदशी" । एवञ्च प्रतिपदादिपञ्चदशक षष्ठ्यादिदशक एकादश्यादिपञ्चक त्रयोदश्यादित्रिकतिथिस्वरूपकल्पचतुष्टयविधानात् । प्रागुक्तनागरखण्डे यत्सकृच्छ्राद्धविधानं

तत् कन्यास्थरविनिमित्तकम्। "अनेन विधिना श्राद्धं त्रिरब्दस्येह निर्वपेत्। कन्याकुम्भवृषस्थेऽर्के कृष्णपक्षे च सर्वदा"॥ इति मत्स्यपुराणीयैकवाक्यत्वात्। तत्रैव आषाढ़ीयपञ्चमपक्षसम्बन्धे अतीव प्राशस्त्यं तथा आदिपुराणम्। "पञ्चान्तरेऽपि कन्यास्थे रवौ श्राद्धं प्रशस्यते। कन्यां गते पञ्चमे तु विशेषेणैव कारयेत्"॥ न तु पञ्चमपक्षेऽपि सकृद्विधानम्। तथात्वे अर्द्धमेवेति नियमभङ्गप्रसङ्गः। अत्र त्रिभागादिकल्पः शक्त्यपेक्षया। अन्यथा सम्भवति लघूपाये गुरूपायत्वेनानुष्ठानलक्षणमप्रामाण्यं स्यात् पक्षादिविधेः। न च तत एव फलभूमा: एका देया तिस्रो देयाः षड्देया इतिवत् कल्पा इति वाच्यं नित्यत्वादिति श्राद्धचिन्तामणिः। तन्न नित्यत्वेऽपि सन्ध्यावन्दने सूर्य्योपस्थानमुपक्रम्य कात्यायनः। "तद्संयुक्तपार्ष्णिर्वा एकपादर्द्धपादपि। कुर्य्यात् कृताञ्जलिर्वापि ऊर्द्ध्ववाहुरथापि वा"॥ अत्र च गुरुलघुप्रयत्नसाध्यानां कथं विकल्प इत्याह स एव। "यत्र स्यात् कृच्छ्रभूयस्त्वं श्रेयसोऽपि मनीषिणः। भूयस्त्वं ब्रुवते तत्र कृच्छ्रात् श्रेयो ह्यवाप्यते"॥ नित्येऽप्यायास-बाहुल्यादुपात्तदुरितक्षयाणामानुषङ्गिक-फलानाञ्च भूयस्त्वसम्भवादिति भावः। तद्वदत्रापि तारतम्येन फलभूम्नः कल्पनीयत्वम्। न तु शक्त्यपेक्षया। तथात्वे "प्रभुः प्रथमकल्पस्य योऽनुकल्पे न वर्त्तते। न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम्"॥ इत्यनेन शक्तस्य हीनकल्पकरणे फलानुदयः स्यात्। यत्तु "श्राद्धेषु विपन्नानां जलाग्निभृगुपातिनाम्। चतुर्दश्यां भवेत् पूजा अमावास्यान्तु कामिकी"॥ इति कन्यागतापरपक्षप्रकरणस्थदेवीपुराणवचनेन विशेषविधिमहिम्ना अर्थादन्येषां तत्र पूजानिषेधाच्चतुर्दशीवर्जनमुक्तम्। तच्चिन्त्यम्। न ह्येतद्वचनादन्येषां श्राद्धं निषिध्यते। परि-

संख्याप्रसङ्गात् किन्तु शस्त्रादिहतानां भ्रात्रादीनां तत्र श्राद्धं विधीयते। श्राद्धविवेकेऽपि ब्रह्मपुराणे प्रायोऽनशनेत्यादिना सकलकृष्णपक्षीयचतुर्दश्यां श्राद्धमभिधाय तदाश्विने "तर्पणीयास्तु चतुर्दश्यां लुप्तपिण्डोदकक्रियाः" इति पुनरभिधानं तच्छस्त्रहतभ्रात्रादिविषयमित्यन्तेनोक्तम्। द्वैतनिर्णयेऽपि। इदं हि वाक्यममावास्यान्तु कामिकीत्युपसंहाराच्च चतुर्दश्यां शस्त्रहतानां नित्यतां विधत्ते न त्वशस्त्रहतानां श्राद्धमपि निषेधति। उभयपरत्वे वाक्यभेदापत्तेरित्युक्तम्। "कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम्। श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः"। इति मनूक्तसामान्यकृष्णपक्षचतुर्दशीनिषेधोऽपि नात्र सम्बध्यते। अश्वयुक्कृष्णपक्षीयविशेषविधौ दिने दिने इति वीप्साया चतुर्दश्याः श्राद्धविषयत्वेन द्रागालिङ्गनात्। अन्यथा वीप्सां विहाय दिन इत्येव विदध्यात्। तेनैव सकृत्करणभङ्गात्। अन्यथा दिन इत्यपि व्यर्थं स्यात्। प्रकरणभेदाच्च। तथा च मीमांसासूत्रम्। "प्रकरणान्यत्वे प्रयोजनान्यत्वम्" इति पाश्चात्यनिर्णयामृतकालमाधवीययोरेतन्न्यायमूलं कार्ष्णाजिनिवचनम्। "नभस्यस्यापरे पक्षे श्राद्धं कुर्य्याद्दिने दिने। नैव नन्दादिवर्जं स्यान्नैव वर्ज्या चतुर्दशी"॥ नभस्यस्येति मुख्यचान्द्रेण। अतएव हृद्राजमार्त्तण्डे मत्स्यपुराणवचनम्। "कन्यां गते सवितरि दिनानि दश पञ्च च। पार्वणेन विधानेन श्राद्धं तत्र विधीयते"॥ इति न चैतल्लक्ष्मीधराद्यलिखितत्वादमूलमिति वाचस्पतिमिश्रोक्तं युक्तम्। भोजदेवलिखनादेवास्य समूलत्वात्। न च लक्ष्मीधरेणाप्येतन्निर्मूलमिति लिखितम्। एतेन श्राद्धाय प्राप्तसामान्यकृष्णपक्षकल्पचतुष्टयविधानं न त्वश्वयुक्कृष्णपक्षत्वेन निमित्तान्तरमित्यपि निरस्तम्। ब्रह्मपुराणे

प्रकरणभेदात् सामान्यकृष्णपक्षाश्वयुक्कृष्णपक्षश्राद्धयोरकरणे निन्दाद्वयश्रवणाच्च। अन्यथा एकत्रोभयमभिधाय एकैव निन्दा विधीयते। एतेनैव "ऊर्द्ध्वञ्चतुर्थ्यायदहः सम्पद्यते" इति कात्यायनवचनात् यत् सङ्कल्करणं तत्पक्षचतुष्टयावरुद्धाश्विनापरपक्षेतरापरपक्षविषयम्। सामान्यविशेषन्यायादुक्तम्। तद्धेयम्। अन्यथा ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय इत्यत्रापि तक्रावरुद्धकौण्डिन्याय दधिवन्निमित्तान्तरेऽपि काञ्चनादि न देयं स्यात्। अश्वयुक्कृष्णपक्षीयाष्टमी त्रयोदश्योश्चतुर्थ्यष्टका मघात्रयोदशी श्राद्धान्तरनिमित्तत्वेन भवन्मतेऽपि प्राप्तत्वात्। तदितरदिनेष्वेवाश्वयुक्कृष्णपक्षकल्पचतुष्टयविधानं स्यात्। न च दिने दिने इति वीप्सयेति न तथेति वाच्यम् अत्रापि "मासि मासि वोऽशनम्" इति श्रुतेः। वो युष्माकं पितृणामिति शेषः। तस्मात् प्रकरणभेदेन निमित्तभेदादेकत्रैवाश्वयुक्कृष्णपक्षे विधिद्वयप्रवृत्तिः। पक्षचतुष्टयान्यतमकरणे तस्मादेव सिद्धिः। एतदकरणेऽपि सामान्यमासविहितं भवत्येवेति। अत्रैककल्पाश्रयणे तदनिर्वाहे सति कल्पान्तराश्रयणम्। व्रीहियववदुदितहोमवच्च। इति यदुक्तं तदपि चिन्त्यम्। कल्पचतुष्टयविधानेनारम्भान्तरसम्भवात्। अन्यथैकादशे द्वादशे पिता नाम कुर्य्यादिति श्रुतेरेकादशेऽह्नि नामकरणे आरब्धे तत्र राजादिकृतविघ्ने द्वादशाहेऽपि तत्करणं स्यात्। तथा द्वादशाहे सपिण्डने आरब्धे एकद्वित्र्यादिमासिके कृतेऽनन्तरं विघ्ने तदानीं तत्कल्पासमापनात् भवन्मते च कल्पान्तराकरणे पित्रादीनां प्रेतत्वपरीहारो न स्यादिति। किन्त्वेकं कर्म्म यवेनारभ्य वैकल्पिकेन व्रीहिणा न समाप्यते इति दृष्टान्तार्थः। तथैकस्मिन् कल्पे आरब्धे तत्र विघ्ने अनन्तरदिने सन्ध्यावन्दनादिवत् किमिति न क्रियते। इति

चैव। एकतिथ्यकरणे प्रतितिथिकर्त्तव्यकल्पसमापनाभावात् अत्र कल्पान्तरोक्तो युक्तः। सन्ध्यावन्दने तु कल्पान्तराभावान्न तथेति। इत्यप्यारब्धकल्पेऽप्यशक्ता अन्येन कार्य्यः। तथा च याज्ञवल्क्यः। "जिह्मं त्यजेयुर्निर्लाभमशक्तोऽन्येन कारयेत्। अनेन विधिराख्यात ऋत्विक्कर्षिककर्मिणाम्"॥ विद्याधरधृतम्। "तीर्थे तिथिविशेषे च गङ्गायां प्रेतपक्षके। निषिद्धे दिने कुर्य्यात्तर्पणं तिलमिश्रितम्"॥ तिथिविशेषे अमावास्यायाम्। स्मृतिः "रविशुक्रदिने चैव द्वादश्यां श्राद्धवासरे। सप्तम्यां जन्मदिवसे न कुर्य्यात्तिलतर्पणम्"॥ मत्स्यपुराणे। "सप्तम्यां निशि संक्रान्त्यां रविशुक्रदिने तथा। श्राद्धे जन्मदिने चैव न कुर्य्यात्तिलतर्पणम्"॥ श्राद्धे अमावास्याश्राद्धभिन्ने। "नीलषण्डविमोक्षेण अमावास्यां तिलोदकैः। वर्षासु दीपदानेन पितॄणामनृणो भवेत्"॥ इति मात्स्यात्। प्रतिप्रसवमाह स्मृतिः। "अयने विषुवे चैव संक्रान्त्यां ग्रहणेषु च। उपाकर्म्मणि चोत्सर्गे युगादौ मृतवासरे॥ रविसंक्रान्तिवारेऽपि न दोषस्तिलतर्पणे"॥ स्कन्दपुराणे। "तीर्थमात्रे तु कर्त्तव्यं तर्पणं सतिलोदकैः। अन्यथा तर्पयेद्यस्तु विष्ठायां स कृमिर्भवेत्॥ विशेषतस्तु जाह्नव्यां सर्वदा तर्पयेत् पितॄन्"॥ स्मृतिः। निषिद्धदिनमासाद्य यः कुर्य्यात्तिलतर्पणम्। रुधिरं तद्भवेत्तोयं दाता च नरकं व्रजेत्"॥ एतच्च तीर्थव्यतिरिक्तजले "यो नित्यं तर्पयेत्तीर्थे पितॄन् कृष्णतिलोदकैः। सबन्धान् मोचयित्वा तु स्वयं ब्रह्मपुरं व्रजेत्"॥ इति कात्यायनवचनात्। उक्तस्कन्दपुराणीयवचनाच्च। संवत्सरप्रदीपे। "अमावास्यास्तु कन्यार्के तीर्थप्राप्तौ तथा नृप। कृत्वा श्राद्धं विधानेन दद्यात् षोड़शपिण्डकम्"॥ इति वायुपुराणीयस्तत्प्रयोगास्तिथितत्त्वेऽनुसन्धेयः। भृगुः। "वृद्धिश्राद्धं तथा सोममग्न्याधेयं महालयं

राजाभिषेकं काम्यञ्च न कुर्य्याद्भानुलङ्घिते" । वृद्धिश्राद्धमिति सावकाशवृद्धिश्राद्धविषयम् । निरवकाशस्य पूर्वं व्यवस्थापितत्वात् ।

अथामावस्या । कुथुमिः । "संवत्सरातिरेको वै मासो यः स्यात्त्रयोदशः । तस्मिंस्त्रयोदशे श्राद्धं न कुर्य्यादिन्दुसंक्षये" ॥ संवत्सरप्रदीपस्मृतिरत्नाकरयोः । "एकराशिस्थिते सूर्य्ये यदि दर्शद्वयं भवेत् । दर्शश्राद्धं तदादौ स्यान्न परत्र मलिम्लुचे" ॥ यत्तु "जातकर्मणि यत् श्राद्धं दर्शश्राद्धं तथैव च । मलमासेऽपि तत् कार्य्यं व्यासस्य वचनं यथा" ॥ इति व्यासवचनं तत् पिण्डपितृयज्ञाख्यश्राद्धपरम् । समाप्तौ पितृसोमकावित्यभिधाय तमतिक्रम्य तु रविरित्यनेन मलमासाभिधायकेन मलमासप्राप्तपितृयज्ञैकमूलत्वात् । न पार्वणश्राद्धपरम् । "असंक्रान्तेऽपि कर्त्तव्यमाब्दिकं प्रथमं द्विजैः । तथैव मासिकं पूर्वं सपिण्डीकरणं तथा" ॥ इति लघुहारीतवचने मासिकं पूर्वमित्यभिधानेन सपिण्डीकरणात् परं मासिकं कृष्णपक्षीयपार्वणं निवर्त्तते इत्यवगतेः । प्रथमाब्दिकात् पूर्वं मासिकमिति समयप्रकाशव्याख्यानेऽपि तथैवार्थः । अन्यथा पूर्वमासिकवत् परमासिकदर्शश्राद्धस्यापि करणे पूर्वपदवैयर्थ्यापत्तेः । "सपिण्डीकरणादूर्द्ध्वं यत् किञ्चित् श्राद्धिकं भवेत् । इष्टं वाप्यथ वा पूर्त्तं तन्न कुर्य्यान्मलिम्लुचे" इति वचनान्तरेण प्रतिषेधाच्च । अथ वा व्यासवचनं भानुलङ्घितक्षयमासाभिप्रायम् । तयोरपि पूर्वलिखितकाठकगृह्येन मलमासप्रयोगात् । तयोर्द्विःकार्त्तिकत्वाद्यभावात् । "तत्र यद्विहितं कर्म उत्तरे मासि कारयेत्" । इत्यस्याविषयत्वम् । मुख्यमलमासे आषाढादेर्द्वित्वात् । तत्सम्भवः । एतेनापरे त्विति कृत्वा कुथुमिवचने "तस्मिंस्त्रयोदशे श्राद्धं न

कुर्य्यादिन्दुसंक्षये"। इति पठित्वा व्यासवचनविरोधात् न कुर्य्यादित्योर्पातिष्ठते इति काश्मीरपाठो ज्यायानिति हेमाद्रिणा-भिहितं यत् तद्धेयम्। समयप्रकाशकृतापि। अमावास्या-मृतस्य तु मध्ये मलमासपातेऽपि तत्र न मासिकम् इत्यभिधाय पूर्वोक्तकुथुमिवचनं साधकत्वेनाभिहितं यत्तदपि हेयम्। तद्वचने अमावास्यामृतस्येति विशेषतोऽभिधानात्। न च "अब्दमम्बुघटं दद्यात् अन्नञ्चामिषसंयुतम्। संवत्सरे विवृ-द्धेऽपि प्रतिमासञ्च मासिकम्"। इति कुथुमिवचनान्तराभि-हितप्रेतमासिकवृद्धिनिषेधार्थं तद्वचनमिति वाच्यम्। तत्परत्वे प्रमाणाभावात्। किन्तु मलमासे प्रेतमासिकवृद्धिः पितृमा-सिकन्तु नास्तीति वचनयोरर्थः। पूर्वलिखितहारीतवचनार्थ-समः। यत्तु तस्मिंस्त्रयोदशं श्राद्धमिति पठितम् अमावा-स्यायां मृताहे मलमासे मासिकं न कुर्य्यादन्यत्र तु मलमासे प्रेतमासिकवृद्धिरिति। न चामावास्यायां पार्वणनिषेध इति वाच्यं पुरुषभेदेन तस्यानियतसंख्यात्वात्त्रयोदशत्वानुपपत्तेः। पर्वचाग्रयणन्तथेति अमावास्यानिमित्तकस्य प्रतिप्रसवाच्च। इति जीमूतवाहनव्याख्यातं तदपि चिन्त्यम्। अमावास्या-मृतस्येतिविशेषाभावेन तदर्थकल्पने प्रमाणाभावात्। अमावा-स्यापार्वणस्य पुरुषभेदेनानियतसंख्यात्तत्त्रयोदशत्वानुपपत्त्य-भिधानञ्च न सङ्गच्छते। यतो भवन्मतेऽपि एकद्वित्र्यादि मासिकानन्तरमासिकस्य त्रयोदशत्वानुपपत्तेः। अथ तत्र वत्सरापेक्षया पणपूरणन्यायेन त्रयोदशत्वमिति चेत् "अनेन विधिना श्राद्धं कुर्य्यात् संवत्सरं सकृत्। त्रिश्चतुर्वा यथाशक्ति मासे मासे दिने दिने"। इति देवलवचनेन संवत्सरे प्रतिमासं श्राद्धविधानात् तदपेक्षया अमावास्या श्राद्धस्यापि तन्न्याया-त्त्रयोदशत्वमिति। इन्दुसंक्षय इत्यभिधानादपि तन्निमित्तक

प्रशस्तश्राद्धमेवावगम्यते। न प्रेतश्राद्धमिति पर्वचाग्रयणञ्च-थेति। अत्र साग्निमात्रकर्त्तव्याग्रयणसाहचर्य्यात् पर्वपदं दर्शयागपरम्। पिण्डपितृयज्ञपरञ्च। न पार्वणश्राद्धपरम्। तस्य कृष्णपक्षनिमित्तकत्वेन पर्वनिमित्तत्वाभावात्। पूर्वोक्ता-तत्श्राद्धप्रतिषेधकनानावचनविरोधाच्च। अतएव मुन्यन्तरै-र्नानादेशीयसंग्रहकृद्भिरप्यमावास्यामृतस्यैव विशेषो नाभि-हितः। श्राद्धविवेककृद्भिरपि मलमासे पार्वणाभावो बहुप्रब-न्धेरुक्तः।

अथाधिमासे प्रत्याब्दिकादिविचारः। लघुहारीतः। "प्रत्यब्दं द्वादशे मासि कार्य्या प्रेतक्रिया बुधैः। क्वचित्त्रयो-दशेऽपि स्यादाद्यं मुक्ता तु वत्सरम्"। प्रत्याब्दिकी या प्रेत-क्रिया सा द्वादशे मासि कार्य्या इत्युत्सर्गः। अत्र प्रेतपदं प्रमीतमात्रपरम्। क्वचिन्मलमासे पतिते त्रयोदशेऽपि मासे कार्य्याः। आद्यं सांवत्सरिकं द्वादश एव मलमासेऽपि कार्य्यं नत्वेकादशमासाभ्यन्तरे मलमासेऽपि तथात्वे द्वादशे मासि मृतातिथ्यलाभात्। सपिण्डनानुपपत्तेः। अतएव द्वैतनिर्णये एतद्विषये विष्णुधर्मोत्तरेण त्रयोदशे मासिकश्राद्धमुक्तम्। यथा "संवत्सरस्य मध्ये तु यदि स्यादधिमासकः। तदा त्रयोदशे मासि कार्य्या प्रेतस्य वार्षिकी"। सत्यव्रतेनापि। "संवत्स-रस्य मध्ये तु यदि स्यादधिमासकः। तदा त्रयोदशं श्राद्धं कार्य्यं तदधिकं भवेत्"। लघुहारीतः। "असंक्रान्तेऽपि कर्त्तव्यमाब्दिकं प्रथमं द्विजैः। तथैव मासिकं पूर्वं सपिण्डी-करणन्तथा"। असंक्रान्ते रवौ मलमासे इत्यर्थः। आब्दिकं प्रथमं तच्च न्यूनाब्दिकं सपिण्डीकरणस्य पृथङ्निर्देशात्। ततश्च "गर्भे वार्द्धुषिकत्वे च मृतानां पिण्डकर्म्मसु। सपिण्डी-करणे चैव नाधिमासं प्रचक्षते"। इति यत् पुनःसपिण्डी-

करणमभिहितं तन्मलमासेऽपि गर्भाधानपुंसवनादिनिमित्त-सपिण्डीकरणापकर्षार्थम् ।

अथ सपिण्डनापकर्षविचारः । अत्र केचित् । "यद्-दूर्वा वृद्धिरापद्येत" इति गोभिलसूत्रेण । "प्रेतसंस्कारकर्माणि यानि श्राद्धानि षोडश । यथा कालन्तु कार्य्याणि नान्यथा मुच्यते ततः" । इति लघुहारीतवचनादन्यथानुपपद्यमान-वृद्धर्थमेवापकर्षो बोध्यते । गर्भाधानादि संस्कारा अन्नप्राश-नान्ता निरवकाशाः । "नैमित्तिकानि काम्यानि निपतन्ति यथा यथा । तथा तथैव कार्य्याणि न कालस्तु विधीयते" । इत्यनेन तुल्यन्यायात्तन्मध्ये करणेऽप्यन्यथोपपन्ना इति । न चैवं चूड़ाकरणादीनामपि तुल्यन्यायतयानुष्ठाने यदर्व्वेति निर्विषयं स्यादिति वाच्यम् । अधिमासके याचां विवाहं चूड़ां तथोपनयनादि कुर्य्यान्न सावकाशं माङ्गल्यं न तु विशे-षिज्याम् इत्यादौ निरवकाशत्वेन संस्कारमात्रस्य कर्त्तव्यतायां चूड़ाकरणादीनां शृङ्गग्राहिकतया निषेधावगमात् । "कर्क्के-कमन्दिरमतौ यदि जीवभानू शुक्रोऽस्तगः सुरवरैकगुरुश्च सिंहे । नारभ्यते व्रतविवाहगृहप्रतिष्ठा चौरादिकर्मगमना-गमनञ्च धीरैः" । इत्यादौ सर्व्वत्र कालाशौचे चूड़ाकरणादीनां विशेषतो निषेधावगमाच्च । अन्नप्राशनान्तस्य क्वाप्यनुल्लेखात् नानास्मृतीनां मूलभूततत्तत्पदवन्नानाश्रुतीनां कल्पनायाश्च गौरवात् । कालाशौचे चूड़ादि न कार्य्यमिति । नैमित्ति-कानि काम्यानीत्यस्यापवादकचूड़ादौ निषेधः । तथा च मत्तागुरौ प्रेतीभूते किं सपिण्डनमपकर्षणीयम् । किं वा चूड़ादेः स्वकालबाधेन कालान्तरे तत्करणीयम् इत्याकाङ्क्षायां यदर्व्वेति वचनं सविषयमेव कुतो निर्विषयता । न चाकृत-सपिण्डनस्य वृद्धिश्राद्धाभावात् तत् पूर्व्वेषाञ्च "ब्राह्मणादिहते

ताते पतिते सङ्गवर्जिते। व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ"। इति परिगणितनिमित्तव्यतिरेकेण प्रकरणात् वृद्धिश्राद्धस्य का गतिरिति वाच्यम्। "न तत् पूर्वं यतः प्रोक्तः सपिण्डनविधिः क्वचित्। वृद्धिश्राद्धस्य लोपः स्यादुभयोरपि पक्षयोः"। इति वल्लोप एव न चाङ्गवाधात् संस्काराणां वैगुण्य-मिति वाच्यं तत्तदेवाङ्गवोधकविधीनां तदितरपरत्वादिति। अन्यथा गर्भाधानादि निमित्तत्वेनाप्यपकर्षे मन्त्राविप्लवापत्तेः। इत्याहुस्तच्चिन्त्यम्। "सपिण्डीकरणादूर्द्धं प्रेतः पार्वणभुग्भ-वेत्। वृद्धीष्टापूर्त्तयोग्यस्तु गृहस्थस्य ततो भवेत्"। इति मत्स्यपुराणवचनान्महागुरौ प्रेतीभूते वृद्धिकर्म न युज्यते इति वचनाच्च महागुरुप्रेतीभावमात्रे वृद्धिकर्मानधिकारात् निरव-काशवृद्ध्यर्थमेवापकर्षो युक्तः। न च नैमित्तिकानीत्यादि दक्षवचनात् प्रतिप्रसव इति वाच्यम्। तस्य कालाशुद्धेः प्रति-प्रसवरूपत्वात्। न च महागुरुप्रेतीभावस्य कालाशुद्धित्वम्। "प्रमीतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत्। नापि दैवं नवा-पैत्रं यावत् पूर्णो न वत्सरः"। इति तल्लिखितदेवीपुराणवच-नेन देहाशुद्ध्यभिधानात्। अतएव वलिवैश्वदेवाग्न्याधाना-रम्भे प्रतिप्रसवमाह छन्दोगपरिशिष्टम्। वलिकर्म प्रक्रम्य "एतद्गृहपतौ प्रेते कुर्य्यादेकादशेऽहनि। प्रागेवैकादशात् श्राद्धात् सद्योजागरणादिकम्"। एतद्वलिकर्म्म तद्युगनद्ध-वाहित्वात् वैश्वदेवस्यापि ग्रहणम्। एकादशाहात् एकाद-शाहक्रियमाणात्। जागरणादिकम् अग्न्याधानाङ्गम्। वस्तु-तस्तु कालाशौचन्तु तदेव यत् सर्वान् पुरुषान् प्रति समानम्। यथा मलमासादि अन्यथा दशाहाशौचस्यापि कालाशौचत्वे तत्रापि नैमित्तिकानीतिवचनात् पुंसवनादि स्यात्। यदप्य-भिहितं न तत् पूर्वमित्यनेन केवल वैश्वदेवाग्न्याधानसहित-

वैश्वदेवौ महागुरुनिपाते वृद्धिश्राद्धं विना करणीयौ। तथा गर्भाधानाद्यन्नप्राशनान्ताः कर्त्तव्या इति तदपि न समीचीनम्। यथा यावद्वचनं हि वाचनिकम् इति न्यायात्तत्र तथास्तु। अत्र तु तथाविधवचनाभावात् कथं वृद्धिश्राद्धं विना अन्नप्राशनान्तकर्म्मसिद्धिः। अतएव निर्णयामृते अन्नप्राशनाद्यर्थः सपिण्डीकरणापकर्ष इत्यभिहितम्। एतेन यदप्युक्तं गर्भाधानादिनिमित्तेनाप्यपकर्षे महाविप्लवापत्तेरिति तदपि चिन्त्यम्। यतो यत्र गर्भाधाने वृद्धिश्राद्धमपि तत्र सुतरामपकर्षव्यवहारः। यत्र तु छन्दोगानां नास्ति वृद्धिश्राद्धं तत्रापि वृद्धिश्राद्धाभावे नैव न व्यवह्रियते इति किन्तु तत्राप्यपकर्षो युज्यते। गर्भाधानस्य वृद्धिरूपत्वादिति। ननु निष्क्रमणान्नप्राशनयोः कथं वृद्धिश्राद्धमिति चेत् निष्क्रमणस्य गोभिलेनोक्तत्वात्। सर्व्वाण्येवान्वाहार्य्यवन्तीत्यनेन तत्र वृद्धिश्राद्धसिद्धेः। अन्नप्राशने च शौनकः। "अथ पुण्येऽह्नि षष्ठे तु मासेऽन्नप्राशनं भवेत्। कृत्वाभ्युदयिकं श्राद्धं दधिमध्वाज्यसंयुतम्"॥ मत्स्यपुराणे। "अन्नप्राशे च सीमन्ते पुत्रोत्पत्तिनिमित्तके। पुंसवने निषेके च नववेश्मप्रवेशने॥ देववृक्षजलादीनां प्रतिष्ठायां विशेषतः। तीर्थयात्रा वृषोत्सर्गे वृद्धिश्राद्धं प्रकल्पयेत्"॥ राजमार्त्तण्डे कृत्यचिन्तामणौ च। "सुतोत्पत्तौ तथा श्राद्धमन्नप्राशनिके तथा। चूडाकार्य्ये व्रते चैव नाम्नि पुंसवने तथा॥ पाणिग्रहे प्रतिष्ठायां प्रवेशे नववेश्मनः। एतद्वृद्धिकरं नाम गृहस्थस्य विधीयते"॥ एतेन "नामकर्माणि बालानां चूडाकर्मादिके तथा"। इति विष्णुपुराणवचने चूडाकर्मादिक इत्यादिपदात् उपनयनपरिग्रहः। तेन चूडाकरणात् प्राक् निष्क्रमणान्नप्राशनयोराभ्युदयिकं न कार्य्यम्। नामकरणे तु विशेषोपदेशादेव कर्त्तव्यता। न

चादिपदस्य प्रकारार्थत्वात् निष्क्रमणादावपि कर्त्तव्यता नामकर्म्मणः पृथगुपादानवैयर्थ्यापत्तेः। इति वाचस्पतिमिश्रोक्तं निरस्तम् एवं "अनाश्रमी न तिष्ठेत्तु क्षणमात्रमपि द्विजः"। अथ "आश्रमेण विना तिष्ठन् प्रायश्चित्तीयते त्वसौ। जपे होमे तथा दाने स्वाध्याये वा रतः सदा। नासौ फलमवाप्नोति कुर्वाणोऽप्याश्रमाच्युतः"॥ इति दक्षवचनादपि आत्मविवाहार्थमपकर्षो युक्तः। कन्याया अलाभ एव यथा कथञ्चित् स्थितिरुक्ता पैठीनसिना। यथा "अलाभे चैव कन्यायाः स्नातकव्रतमाचरेत्"। भविष्ये। "चत्वारिंशद्वत्सराणां साष्टानाञ्च परे यदि। स्त्रिया वियुज्यते कश्चित् स तु रण्डाश्रमी मतः॥ अष्टचत्वारिंशदब्दं वयो यावन्न पूर्य्यते। पुत्रभार्य्यावियुक्तस्य नास्ति यज्ञेऽधिकारिता"॥

अथ सन्न्यासनिषेधविचारः। तत्राश्रमानाह पराशरभाष्ये ब्रह्मपुराणम्। "चत्वार आश्रमाश्चैव ब्राह्मणस्य प्रकीर्त्तिताः। गार्हस्थ्यं ब्रह्मचर्य्यञ्च वानप्रस्थं त्रयो मताः॥ क्षत्रियस्यापि कथिता आश्रमास्त्रय एव हि। ब्रह्मचर्य्यञ्च गार्हस्थ्यमाश्रमं द्वितयं विशः। गार्हस्थ्यमुचितन्त्वेकं शूद्रस्य क्षणमाचरेत्"॥ क्षणमुत्सवरूपम्। यत्तु "प्रव्रज्यावसिता यत्र त्रयोवर्णा द्विजातयः। निर्वासं कारयेद्विप्रं दासत्वं क्षत्रवैश्ययोः"॥ इति कात्यायनेनोक्तं तद्युगभेदादविरुद्धम्। प्रव्रज्यावसिताः प्रव्रज्याच्युताः। अतएव "अश्वमेधं गवालम्भं सन्न्यासं पलपैतृकम्। देवरेण सुतोत्पत्तिं कलौ पञ्च विवर्जयेत्"॥ इति कलौ सन्न्यासनिषेधकं क्षत्रियवैश्यविषयमिति। एवञ्च "आत्मन्यग्नीन् समाधाय ब्राह्मणः प्रव्रजेत् गृहात्" इति मनुवचनस्य "ब्राह्मणः क्षत्रियो वाथ वैश्योऽपि प्रव्रजेद् गृहात्"। इति विश्वरूपलिखितस्य च युगभेदादविरोधे सम्भवति शूलपाणियाज्ञवल्क्य-

टीकायां शेषवचनानामाकराभिधानं ज्ञेयम् । तत्कृतप्रायश्चित्त-विवेकधृतपूर्वोक्तकात्यायनवचनविरोधः स्यात् । मिताक्षरा-यान्तु । ब्राह्मणाः प्रव्रजन्तीति श्रुतेः अग्रजन्मन एवाधिकारो न द्विजातिमात्रस्य । अन्ये तु त्रैवर्णिकानां प्रकृतत्वात् । त्रयाणां वर्णानां वेदानधीत्य चत्वार आश्रमा इति सूत्रकार-वचनात् द्विजातिमात्रस्याप्रवृत्तिरिति लिखितम् ।

अथापुत्रस्य मृताहे न पार्वणम् । प्रचेताः । "प्रेतमासस्य यः पक्षस्तत्तिथौ प्रतिवत्सरम् । यावत् स्मरति पौत्रोऽपि एक-मुद्दिश्य दापयेत्" ॥ प्रेतमासस्य मृतमासस्य एकमुद्दिश्येति श्रवणात् अमावास्यामृतस्यापि पौत्रादिना पार्वणं न कर्त्तव्यम् । तथा चापस्तम्बः । "अपुत्रा ये मृताः केचित् स्त्रियो वा पुरु-षाश्च ये । तेषामपि च देयं स्यात् एकोद्दिष्टं न पार्वणम्" ॥ अतएव जावालेन प्रत्याब्दिकम् औरसक्षेत्रजाभ्यामेव पार्वणं कर्त्तव्यमेव । यथा "औरसक्षेत्रजौ पुत्रौ विधिना पार्वणेन च । प्रत्यब्दमितरे कुर्य्युरेकोद्दिष्टं सुता दश" ॥

अथाधिमासे मृतस्याधिमासे प्रत्याब्दिकं कर्त्तव्यम् । "मलि-म्लुचेऽपि संप्राप्ते ब्राह्मणो म्रियते यदि । ऊनाभिधेयो मासो-ऽसौ कथं कुर्य्यात्तदाब्दिकम् ॥ यस्मिन्नाभिगते भानौ विपत्तिः स्यात् द्विजन्मनः । तस्मिन्नेव प्रकुर्वीत पिण्डदानोदकक्रियाः" इति व्यासवचनान्मलमासमृतस्य सौरेणैव प्रत्याब्दिकं सदा कर्त्तव्यमिति समयप्रकाशकृत् । तन्न पूर्वोक्तयुक्त्या तुलादिषट्के यदि मलमासस्तदा मृतस्याब्दान्तरे कदाचिन्मृताहाप्राप्तौ श्राद्धलोपापत्तेश्च । किन्तु व्यासवचनं तन्मासस्य पुनर्मल-मासत्वे तत्रैव श्राद्धं नोत्तर इति विधायकम् । "मलमास-मृतानान्तु श्राद्धं यत् प्रतिवत्सरम् । मलमासेऽपि कर्त्तव्यं नान्येषान्तु कदाचन" । इति कालमाधवीयधृतपैठीनसि-

वचनैकमूलत्वात् । एवञ्च "जातकर्म्मणि यत् श्राद्धं नवश्राद्धं तथैव च । प्रतिसंवत्सरं श्राद्धं मलमासेऽपि तत् स्मृतम् । प्रतिसंवत्सरं श्राद्धमशौचात् पतितञ्च यत् । मलमासेऽपि तत्कार्य्यमिति भागुरिभाषितम्" ॥ इति वाचस्पतिमिश्रधृतमेतद्विषयं बोध्यम् । ऊनाभिधेयमिति ऊनमभिधेयं यस्य तत्तथा इति । तद्दिनामकत्ववद्व्याख्येयम् । "विरुद्धं गुरुवाक्यस्य यदत्र भाषितं मया । तत् क्षन्तव्यं बुधैरेव स्मृतितत्त्वं बुभुत्सया" ॥

इति वन्द्यघटीयश्रीहरिहरभट्टाचार्य्यात्मजश्रीरघुनन्दन-
भट्टाचार्य्यविरचिते स्मृतितत्त्वे
मलमासतत्त्वं सम्पूर्णम् ।



# संस्कारतत्त्वम्।



प्रणम्य सच्चिदानन्दं भुक्तिमुक्तिप्रदायकम्। संस्कारतत्त्वं तत्प्रीत्यै वक्ति श्रीरघुनन्दनः। अथ संस्काराः। तत्र हारीतः। "गर्भाधानवदुपेतो ब्रह्मगर्भं सन्दधाति पुंसवनात् पुंसीकरोति फलस्थापनात् मातापितृजं पाप्मानमपोहति रेतो रक्तगर्भोपघातः पञ्चगुणो जातकर्म्मणा प्रथममपोहति नामकरणेन द्वितीयं प्राशनेन तृतीयं चूड़ाकरणेन चतुर्थं स्नापनेन पञ्चमम् एतैरष्टाभिः संस्कारैर्गर्भोपघातात् पूतो भवतीति"। गर्भाधानवत् गर्भाधानविधिना विष्णुर्योनिं कल्पयत्वित्यादिना। उपेत स्त्रियमुपगतः। ब्रह्मगर्भं संदधातीति ब्रह्म वेदः तद्ग्रहणयोग्यं गर्भं सन्दधाति संजनयति पुंसीकरोति अव्यक्तलिङ्गं गर्भं पुमांसं पुत्रं विन्दस्वेति मन्त्रलिङ्गात्। फलस्थापनात् फलस्थापनाङ्कसीमन्तोन्नयनात्। मातापितृजं मातापितृद्वारा जातं गर्भस्थस्याश्रयसंस्कारद्वारैतेऽपत्यसंस्काराः। उपघातः पापसंहः पञ्चगुणः पञ्चप्रकारः। उपपातकः। जातिभ्रंशकरसङ्करीकरणापात्र-करण-मलिनीकरणरूपपापपञ्चकसंक्रान्त इति। स्नानञ्चात्र समावर्त्तनरूपमिति कल्पतरुः। अत्र दृष्टान्तमाहाङ्गिराः। "चित्रं कर्म यथानेकैरङ्गैरुन्मील्यते शनैः। ब्राह्मण्यमपि तद्वत् स्यात् संस्कारैर्विधिपूर्वकैः"। संस्काराणां नित्यत्वात् प्रतिनिधिमप्याह स्मृतिः। "अष्टौ संस्कारकर्माणि गर्भाधानमिव स्वयम्। पिता कुर्य्यात्तदन्यो वा तदभावेऽपि तत्क्रमात्"।

अथ अग्निस्थापनम्। अत्राग्निसाध्यसंस्कारे छन्दोगानां

तद्विधिमाह गोभिलः । "अनुगुप्ता अप आहृत्य प्रागुदक् प्रवणं देशं समं वा परिसमूह्य उपलिप्य मध्यतः प्राचीं रेखामुल्लिख्य उदीचीञ्च संहतां पश्चात् मध्ये प्राचीस्तिस्र उल्लिख्याभ्युक्षयेत् लक्षणावृदेषा सर्वत्रेति" । अनुगुप्ता आच्छादिताः । पतितादिभिरदृष्टा इति यावत् । प्राङ्नीचादिफलमाह गृह्यासंग्रहे गोभिलपुत्रः । "प्राङ्नीचं ब्रह्मवर्चस्यमुदङ्नीचं यशोत्तमम् । पित्र्यं दक्षिणतो नीचं प्रतिष्ठालम्भकं समम्" । यशोत्तममित्यत्र सान्ता अप्यदन्ता इत्युक्तेरदन्तोऽपि यशशब्दः गयाशिर इतिवत् । परिसमूह्य सर्वतः कुशैः पांश्वादिकमपसार्य्य उत्तरस्यान्दिशि सार्द्धहस्तोपरि क्षिपेत् । परिसमूह्य वितस्तित्रये उत्तरत उत्करं करोतीति हरिशर्म्मवचनात् । तत उपलेपनं तत्र कारणमाह गृह्यासंग्रहः । "इन्द्रेण वज्राभिहतः पुरा वृत्रो महासुरः । मेदसा तस्य संक्लिन्ना तदर्थमुपलेपयेत्" इति मध्यतः स्थण्डिलाभ्यन्तरे दक्षिणांशेन तु मध्यांशे उदग्गतैकविंशत्यङ्गुलरेखानुरोधात् । अन्यथा "कुशैः संमार्जयेद्भूमिं शुद्धामादौ शुचिस्ततः । हस्तमात्रां चतुरस्रां गोमयेनोपलेपयेत्" इति भारद्वाजीयहस्तप्रमाणस्थण्डिले तदनुपपत्तेः । प्राचीं प्राग्गताम् उदीचीञ्च संहतां पश्चादिति । प्राग्गतायाः पश्चिमे भागे संलग्नामुदगग्रां मध्ये उदग्गतायाः प्राचीं प्रागग्रास्तिस्रो रेखा उल्लिख्याभ्युक्षयेदिति । रेखाश्च उत्थितमृत्तिकोद्धरणपूर्व्वकमभ्युक्षयेत् । उल्लिख्योद्धृत्याभ्युक्षयेदिति कात्यायनसूत्रात् । उत्करप्रक्षेपदेशमाह गृह्यासंग्रहः । "उत्करं गृह्यरेखाभ्योऽरत्निमात्रे निधापयेत् । द्वारमेतत् पदार्थानां प्रागुदीच्यां दिशि स्मृतम्" इति । परिसमूहनादि परिषेकान्तं कर्म्म लक्षणसंज्ञकम् । तस्य लक्षणस्यावृत् प्रक्रिया सर्व्वत्र यत्र यत्राग्निप्रणयनं तत्र तत्र बोध्या । रेखाप्रमाण-

माह छन्दोगपरिशिष्टे कात्यायनः। "दक्षिणे प्रागग्रतायास्तु प्रमाणं द्वादशाङ्गुलम्। तन्मूललग्नायोदीची तस्या एवं नवोत्तरम्। उदग्गतायाः संलग्नाः शेषाः प्रादेशमात्रिकाः। सप्त सप्ताङ्गुलांस्त्यक्त्वा कुशेनैव] समुल्लिखेत्"। नवोत्तरं नवाधिकं द्वादशाङ्गुलमेकविंशत्यङ्गुलमित्यर्थः। शेषा उक्तरेखयोरवशिष्टास्तिस्रः कुशेनेति सर्वत्राभिसम्बध्यते। एवकारेण शाखान्तरोक्तस्फ्यव्यावृत्तिः। रेखाणां देवतावर्णांश्चाह स्मृतिः। "प्रागग्रता पार्थिवी स्यादाग्नेयी चाप्युदग्गता। प्राजापत्या तथा चैन्द्री सौमी च प्राक्कृताः स्मृताः। पार्थिवी पीतवर्णा स्यादाग्नेयी लोहिता भवेत्। प्राजापत्या भवेत् कृष्णा नीला चैन्द्री प्रकीर्त्तिता। श्वेतवर्णेन सौमी स्यात् रेखाणां वर्णलक्षणम्"। अग्निस्थापनपर्य्यन्तं सव्यहस्तप्रादेशस्य विधानमाह गृह्यासंग्रहः। "सव्यं भूमौ प्रतिष्ठाप्य प्रोल्लिखेद्दक्षिणेन तु। तावन्नोत्थापयेत् पाणिं यावदग्निं निधापयेत्"। मानकर्त्तारमाह छन्दोगपरिशिष्टे कात्यायनः। "मानक्रियायामुक्तायामनुक्ते मानकर्त्तरि। मानकृद् यजमानः स्याद्विदुषामेष निश्चयः"। अङ्गुष्ठाङ्गुलिमानमाह स एव। "अङ्गुष्ठाङ्गुलिमानन्तु यत्र यत्रोपदिश्यते। तत्र तत्र वृहत् पर्वग्रन्थिभिर्मिनुयात् सदा"। यजमानासन्निधौ होमे तु साधारणाङ्गुलिमानं यथा कपिलपञ्चरात्रम्। "अष्टभिस्तैर्भवेत् ज्येष्ठं मध्यमं सप्तभिर्यवैः। कन्यसं षड्भिरुद्दिष्टमङ्गुलं मुनिसत्तमैः"। तैः प्रक्रम्यमानयवैः। कन्यसं कनिष्ठम्। मानन्तु पार्श्वेन। "षड्यवाः पार्श्वसम्मिताः" इति कात्यायनवचनात्। अग्निस्थापनमन्त्रमाह गोभिलः। ओम् भूर्भुवः स्वरित्यभिमुखमग्निं प्रणयन्तीति। अग्निमभिमुखं होत्रभिमुखम्। प्रणयन्ति रेखोपरि स्थापयन्ति। प्राञ्चं नीत्वातत्रैस्थापयन्तीति

हरिशर्म्मधृतवचनात्। तत्प्रकारमाह गृह्यासंग्रहे। "शुभं पात्रन्तु कांस्यं स्यात् तेनाग्निं प्रणयेद्बुधः। तस्याभावे शरावेण नवेनाभिमुखञ्च तम्। सर्वतः पाणिपादान्तः सर्वतोऽक्षिशिरो मुखः। विश्वरूपो महानग्निः प्रणीतः सर्वकर्म्मसु"। एवञ्चाग्नि प्रणयनानन्तरं सर्वत इत्यस्य पाठो युज्यते प्रणीत इति मन्त्रलिङ्गात् अन्यथा स्थापनानन्तरमेतदभिधानं व्यर्थं स्यात्। ताम्रपात्रमप्याह देवीपुराणम्। "ताम्रपात्रे शरावे वा आनयित्वा हुताशनम्। अग्निप्रणयनं कुर्य्यात् यजमानसुखावहम्" इति। अत्रिरपि। "पात्रान्तरेण पिहिते ताम्रपात्रादिके शुभे। अग्निप्रणयनं कुर्य्यात् शरावे तादृशेऽपि वा"॥ यत्तु "शरावे भिन्नपात्रे वा कपाले वील्मुकेऽपि वा। नाग्निप्रणयनं कुर्य्यात् व्याधिहानिभयावहम्"॥ इति स्मृतिसागरधृतवचनं तत् मुख्यकांस्यादिमये सद्भावे निषेधकमिति राघवभट्टः। छन्दोगपरिशिष्टम्। "जातस्य लक्षणं कृत्वा तं प्रणीय समिध्य च। आधाय समिधञ्चैव ब्राह्मणमुपवेशयेत्"॥ जातस्यारण्याद्युत्पन्नाग्नेः इति साग्निकपरं प्रागुक्तरेखादि। तमग्निं क्रव्यादमग्निं प्रहिणोमि दूरं यमराज्यं गच्छतुरिप्रवाह इति मन्त्रेण तस्याग्नेः क्रव्यादांशं मन्त्रलिङ्गात् दक्षिणस्यां दिशि क्षिप्त्वा प्रणीय उक्तप्रकारेण स्थापयित्वा यद्यग्निस्थापनानन्तरं कर्म्मकाले हृष्यादि शङ्कया संस्कृताग्निरन्यत्रानीयते तदा पुनर्भूसंस्कारः कर्त्तव्यः। समूह्य उपलिप्य उल्लिख्य उद्धृत्याभ्युक्षयेत् एष संस्कारोऽनुगतोऽग्नौ भूय इति गृह्यान्तरात्। समिध्य ज्वालयित्वा समिधं तत्र तूष्णीं दत्त्वा वक्ष्यमाणक्रमेण ब्राह्मणमुपवेशयेत्। समिल्लक्षणं तत्रैव। "नाङ्गुष्ठादधिका न्यूना समित्स्थूलतया क्वचित्। न निर्मुक्तत्वचा चैव न स

कोटौ न पाटिता ॥ प्रादेशमात्रविकाराना न तथा स्याद्वि-शाखिका । न सपत्रा न निर्वीर्य्या होमेषु च विजानता" ॥ विशाखिका विविधशाखायुक्ता । एवं समित्प्रक्षेपपूर्वकं स्वयं होता वा कृता कृतावेक्षणादिकर्मकरणाय ब्राह्मणमुपवेशयेत् । तदुक्तं गृह्यासंग्रहे । "हुते च व्यवहारे च प्रव्रते यज्ञकर्म्मणि । यानि पश्यन्त्युदासीनाः कर्त्ता तानि न पश्यति ॥ एकः कर्म-नियुक्तः स्यात् द्वितीयस्तन्त्रधारकः । तृतीयं प्रश्नकं ब्रूयात्ततः कर्म समाचरेत्"॥ प्रव्रते प्रकृष्टव्रते । एतद्वचनद्वैतीयिके पूर्ववचने-नोदासीना इति विशेष उक्तः । कर्मनियुक्त आचार्य्यः स च ब्रह्माङ्कके होमकर्मणि ब्रह्मा । स्वयं होमाकरणे होतापि स्वयं प्रधानकर्माकरणे प्रतिनिधिरपि । तन्त्रधारकः पुस्तक-धारकः । प्रश्नवक्ता सदस्यः ।

अथ वरणविधिः । तेषामाचार्य्यादीनां होमसाध्ये कर्मणि होमारम्भात् पूर्वमानत्यर्थं यजमानेन स्वयं वरणं कार्य्यम् । "दानवाचनान्वारम्भणवरणव्रतप्रमाणेषु यजमानं प्रतीयात्" इति हरिशर्मधृतकात्यायनसूत्रात् तत्र ब्रह्मवरणं प्रथमतः । ज्योतिष्टोमे ब्रह्मोद्गातृहोत्रध्वर्य्युत्यादिक्रमदर्शनेनान्यत्राका-ङ्क्षया दृष्टकल्पनाया न्याय्यत्वात् सुगतिसोपानप्रभृतयोऽप्येवम् । वरणन्तु गन्धादिदानद्वारा प्रीतिमुत्पाद्य कर्मणाय प्रेरणम् । तत्र च "सर्वत्र प्राङ्मुखो दाता ग्रहीता च उदङ्मुखः" इति वचनात् यजमानस्य प्राङ्मुखत्वम् आचार्य्यादीनामुदङ्मुखत्वं प्रतीयते वरणविधिमाह कात्यायनः । आसनमाहार्य्याह "साधु-भवानास्तामर्चयिष्यामो भवन्तम्" इति । आसनमाहार्य्यानीय संस्थाप्याह साधुभवानास्तामिति । साध्वहमास इति प्रति-वचनम् अर्चयिष्यामो भवन्तमिति पुनरुक्तोऽर्चयेति प्रतिवचनं सामर्थ्यादिति हरिशर्मा ।

अथ ब्रह्मस्थापनम्। तच्च होतृकर्त्तृकमेव। अग्निमुपसमाधाय दक्षिणतो ब्रह्मासनमास्तीर्य्ये इति कात्यायनेनैककर्त्तृकत्वाभिधानात्। ब्रह्मोपवेशनप्रकारमाह गोभिलः। "अग्रेणाग्निं परिक्रम्य दक्षिणतोऽग्नेः प्रागग्रान् कुशानास्तीर्य्य तेषां पुरस्तात् प्रत्यङ्मुखस्तिष्ठन् सव्यस्य पाणेरङ्गुष्ठेनोपकनिष्ठया चाङ्गुल्या ब्रह्मासनात्तृणमभिसंगृह्य दक्षिणापरमष्टमदेशं निरस्यति। निरस्तः परावसुः" इति। अप उपस्पृश्याथ ब्रह्मासनमुपविशति आवसोः सदने सीदामीति अग्न्यभिमुखो वाग्यतः प्राञ्जलिरास्ते आकर्मणः पर्य्यवसानात् "भाषेत यज्ञसंसिद्धिं नायज्ञियां वाचं वदेत् यद्ययज्ञियां वाचं वदेत्तदा वैष्णवीमृचं यजुर्वा जपेत् अपि वा नमो विष्णवे इत्येवं ब्रूयात् यद्युवा उभयं चिकीर्षेद्धौत्रं ब्रह्मत्वञ्चैतेन कल्पेन छत्रमुत्तरासङ्गं सोदककमण्डलुं दर्भवटुं वा ब्रह्मासने निधाय तेनैव प्रत्यावृत्यान्यथा चेष्टेदिति"। अस्यार्थः। अग्रेण पूर्वदिशा प्रदक्षिणेनाग्निं गत्वा अग्नेर्दक्षिणस्यां दिशि प्रागग्रान् दर्भानास्तीर्य्यान्यच्चेष्टेदिति वक्ष्यमाणेन सम्बन्धः। न तु निरस्यतीत्यनेन। अत्र ब्रह्मेतिकर्त्तृनिर्देशात् न च ब्रह्मेत्यासनेन सम्बन्धः उपवेशनात् पूर्वं तत्सम्बन्धाभावात् अतो दर्भास्तरणान्तं याजमानिकम्। तत्र ब्रह्मासनस्थाने आस्तरणात् पूर्वं वारिधारामाह गृह्यासंग्रहः। "उदग्धारामविच्छिन्नामग्निमारभ्य दक्षिणाम्। दद्यात् ब्रह्मासनस्थाने सर्वकर्मसु नित्यशः"॥ अत्र तु धारासहितमुदकपात्रं गृहीत्वा अग्नेरुत्तरतः प्रभृतिदक्षिणदेशं गत्वाऽरत्निमात्रान्तरिते देशे पूर्वाभिमुखं वारिधारादानमिति विशेषो भवदेवभट्टोक्तः ब्रह्मा तु तेषां पुरस्तात् आस्तृतकुशानां पूर्वदिग्भागे तिष्ठन् अनुपविष्टः सव्यस्य वामस्य उपकनिष्ठया अनामिकया आसनात् यजमानास्तृतात् तृणं

कुशपत्रं गृहीत्वा दक्षिणापरं दक्षिणपश्चिमदेशम् अन्वष्टमम् उभयदिगष्टमभागं नैऋतमिति यावत् निरस्तः परावसुरित्यनेन प्रक्षिपतीति अप उपस्पृश्य दक्षिणपाणिना जलं स्पृष्ट्वा अथानन्तरमासने ब्रह्मासनत्वेन कल्पिते उपविशति आवसोः सदने सीदामीति मन्त्रेण एवमेव भट्टनारायणव्याख्यानात् तेषां पुरस्तादित्यादि आवसोः सदने सीदेत्यन्तं यजमानकर्त्तृकं सीदामीति प्रतिवचनं ब्रह्मकर्त्तृकमिति भवदेवभट्टकल्पनं कल्पनमेव सीदेति सूत्रानुपात्ताच्च। भाषेत यज्ञसंसिद्धिम् इति होत्रान्यथा क्रियमाणे कर्मणि तत्सिद्ध्यर्थम् एतदेवं कुरु एतत् कृत्वा एतत् कुरु इत्यादि भाषेत अचाप्ययज्ञियाम् असंस्कृतां वदेद्यदि तदा वैष्णवी ऋक् इदं विष्णुरिति यजुर्विष्णोर्विराडमसीत्यादि नमो विष्णवे इति प्रकारत्रितयान्यतमप्रकारं प्रायश्चित्तमिति। यज्ञवेत्यग्नौ उत्तरासङ्गमुत्तरीयं दर्भवटुः कुशमयब्राह्मणः। स चापरिमितकुशदलैर्भवतीति भट्टभाष्यात् एकपञ्चाशतान् कुशानित्यपि भवदेवभट्टलिखनाच्च। दलैर्व्यवक्ष्यते तत्रापरिमितसंख्यात्वमाह छन्दोगपरिशिष्टम्। "यज्ञवास्तुनि मुष्ट्याञ्च स्तम्बे दर्भवटौ तथा। दर्भसंख्या न विहिता विष्टरास्तरणेष्वपि" इति। एतच्छन्दोगपरम्। अन्येषां शान्तिदीपिकायाम्। "सप्तभिर्नवभिर्वापि सार्द्धद्वितयवेष्टितम्। ओङ्कारेणैव मन्त्रेण द्विजः कुर्य्यात् कुशद्विजम्"॥ कर्मोपदेशिन्यान्तु नवभिरित्यत्र पञ्चभिरिति पाठः। एतदेकवाक्यतया "द्विरावृत्याथ मध्ये वै अर्द्धवृत्यान्तदेशतः। ग्रन्थिः प्रदक्षिणावर्त्तः स ब्रह्मग्रन्थिसंज्ञकम्" इति कालिकापुराणोक्तव्याख्येयम्। रत्नाकरे गृह्यासंग्रहपरिशिष्टम्। "ऊर्द्धकेशो भवेद् ब्रह्मा लम्बकेशस्तु विष्टरः। दक्षिणावर्त्तको ब्रह्मा वामावर्त्तस्तु विष्टरः"॥ एतेनैवेत्येवकारः स्वयं कर्त्तृकपक्षे आवसोः सदने सीदा-

मौत्यस्य मन्त्रस्य क्वच प्रतिषेधोऽर्थः। स्वयञ्चेदुभयं कुर्य्यादिति छन्दोग-परिशिष्टात्। कृताकृतावेक्षणवत् स्वयं तत्कुशोपवेशनस्य कर्त्तव्यत्वात् कुशमयब्राह्मणादिप्रतिनिधिना तदुपपत्तेः तेनैव पूर्ववत्कर्म नेति भट्टभाष्यम्। अथेति विशिष्टमानन्तर्यं द्योतयति तच्च द्रव्यानुपर्यीगक्रमेणाग्नेरुत्तरतः उदगग्रान् पूर्वक्रमेणासाद्य वीक्ष्य प्रोक्ष्य चेति। अथानन्तरमन्यद्वक्ष्यमाणं कर्म्म चेष्टेत् कुर्य्यात् यजमानः। परस्मैपदं छन्दोवत्सूत्राणि भवन्तीत्युक्तेः।

अथ द्रव्यासादनम्। तत्र कात्यायनः। "प्राक्स्थमुदगग्नेरुदगग्रं समीपतः। तत्तथासादयेद्द्रव्यं यद्यथा विनियुज्यते"॥ इति भट्टभाष्ये धृतञ्च। "द्रव्याणामुपक्लृप्तानां होमीयानां यथाक्रमम्। सादयन् वीक्षणं कुर्य्यादद्भिरभ्युक्षणं तथा"॥ छन्दोगपरिशिष्टम्। "आज्यस्थाली च कर्त्तव्या तैजसद्रव्यसम्भवा। माहेयी वापि कर्त्तव्या नित्यं सर्व्वाग्निकर्म्मसु"॥ अथ यदि प्रकृतकर्म्मणि चरुहोमस्तदा अस्मिन्नेव समये चरुं श्रपयेत्। गोभिलेन ब्रह्मस्थापनानन्तरं तद्विधानात्।

अथ चरुविधानम्। तत्र गोभिलः। "अथोदूखलमुषले प्रक्षाल्य सूर्पञ्च पश्चादग्नेः प्रागग्रान् कुशानास्तीर्य्य उपसादयति अथ हविर्निर्वपेदिति। व्रीहीन् यवान् वा कांस्येन चरुस्थाल्या वा अमुष्मैत्वाजुष्टं निर्वपामीति देवतानामोद्देशः सकृद्यजुषा द्विस्तूष्णीम् अथ पश्चादवहन्तुमुपक्रमते दक्षिणोत्तराभ्यां पाणिभ्यां त्रिःफलीकृतांस्तण्डुलांस्त्रिर्देवताभ्यः प्रक्षालयेत् द्विर्मनुष्येभ्यः सकृत् पितृभ्य इति पवित्रान्तर्हितांस्तण्डुलानावपेत् कुशलशृतमिव स्थालीपाकं श्रापयेत् प्रदक्षिणमुदायुवन् शृतमभिघार्य्य उदगुद्वास्य प्रत्यभिघारयेदिति"॥ अस्यार्थः उपसादयति स्थापयति देवतानामोद्देशं देवतानामो-

ख्यारणं यथा स्यात्तथा अमुष्मैत्वायुष्टं निर्वपामीत्यनेन उदूखलोपरि व्रीह्यादीन् कांस्यादिना सकृन्निर्वपेत् । अत्रामुष्मा इत्यत्र चतुर्थ्यन्तनामोच्चारणम् । अतएव कात्यायनः । असाविति नाम गृह्णाति । नारायणीयेऽपि "अदःपदं हि यद्रूपं यत्र मन्त्रे हि दृश्यते । साध्याभिधानं तद्रूपं तत्र स्थाने नियोजयेत्" । अतोऽदःपद एव नामोहो न तु विरूपाक्षजपादाविदमित्यादौ । एतच्चाग्नये त्वायुष्टं निर्वपामीति सामगानाम् । यजुः प्रयोगो गोभिले निर्वापमात्रश्रुतेः यजुर्वेदिकसमन्त्रकग्रहणप्रोक्षणे सामगेन न कार्य्ये । यजुः परिभाषामाह जैमिनिः । "शेषे यजुःशब्दः इति शेषे मन्त्रभिन्ने मन्त्रजाते । ततश्च यन्मन्त्रजातं प्रश्लिष्टपठितं गानपादभेदरहितं तद् यजुरिति बहुदैवत्ये च बहुदेवतानामभिः प्रत्येकं निर्वापः । अत्रनिर्वापो मन्त्रेणैव होमोऽपि पृथक् निर्वापपरिमाणन्तु होमसंख्या शेषश्चेत्यनुसारेणेत्याह छन्दोगपरिशिष्टम् । "देवतासंख्यया गृह्यनिर्वापांश्च पृथक् पृथक् । तूष्णीं द्विरेव गृह्णीयाद्धोमश्चापि पृथक् पृथक् । यावता होमनिर्वृत्तिर्भवेद्वा यत्र कीर्त्तिता । शेषश्चैव भवेत् किञ्चित्तावन्तं निर्वपेच्चरुम्" । यद्यपि देवतासंख्ययेति वचनं चरुः समसनीयो य इत्युपक्रम्य पठितं तथाप्याकाङ्क्षाया लाघवेन चरुसामान्यपरमिति । चरुविधौ तु विद्याकरवाजपेयौ । यत्र प्रयोजनाभावनिश्चयस्तत्रैव तदुपादानादि लोपः । यत्रानुष्ठानवेलायामेव पुरुषदोषेण प्रयोजनाभावो ज्ञायते तदा प्राक् तन्निश्चयात् शास्त्रप्रापितः पदार्थो नियमापूर्वमात्रार्थमनुष्ठेय इति । अतएव यदा त्वालस्यादिना व्रीह्यादिस्थाने तण्डुला गृहीताः तदापि अवघातादि समाचरन्ति याज्ञिकाः पठन्ति च । "घाते न्यूने तथा छिन्ने सान्नाय्ये मान्त्रिके तथा । यत्र मन्त्राः प्रयोक्तव्या मन्त्रा यत्रार्थ-

साधकाः" । मान्त्रिके मन्त्रसाध्ये अवघातादौ । न्यूने तत्-काले मन्त्रपाठाभावेऽपि यज्ञकाले मन्त्राः पाठ्याः । अस्मिंस्तु मन्त्रार्थज्ञानस्य नास्त्युपयोगः । इत्थमेवेदानीं प्रयोगानुष्ठानमाह चरुस्थालीयपरिमाणमाह छन्दोगपरिशिष्टम् । "तिर्य्यगूर्द्ध्वसमिन्मात्रा दृढ़ा नातिहृस्वमुखी। मृण्मय्यौडुम्बरी वापि चरुस्थाली प्रशस्यते"। गर्भप्रस्तारदैर्घाभ्यां प्रादेशप्रमाणा चरुस्थाली औडुम्बरी ताम्रमयी एषा पायसचरावपि न निषिद्ध। "पयानुद्धृतसारस्य ताम्रपात्रे न दुष्यति" इति स्मृतिसागरधृतवचनाच्च । अतएव सारदातिलके । "ततश्च संस्कृते वह्नौ गोक्षीरेण चरुं पचेत् । मन्त्रेण क्षालिते पात्रे नवे ताम्रमयादिके"। दक्षिणोत्तराभ्यामिति दक्षिण उत्तरत उपरि ययोः पाण्योस्ताभ्यां मुषलं गृहीत्वा इति शेषः । त्रिःफलीकृतान् त्रिधा वितुषीकृतान् कण्डलप्रच्छटनाभ्यामिति शेषः । पवित्रान्तर्हितान् पवित्रम् अन्तर्हितं व्यवहितं येषां तान् । तेन चरुस्थाल्यामुत्तराग्रं पवित्रं निःक्षिप्य तण्डुलान् निक्षिपेत् । कुशलशृतमिवेति कुशलेन पाकनिपुणेन शृतं यथा न दग्धं नातिक्लिन्नं न मन्द-पक्कं तथा स्थालीपाकं यथा स्यात्तथा श्रपयेत् । अतएव छन्दोगपरिशिष्टम् । "स्वशाखोक्तचरुः स्विन्नो ह्यदग्धोऽकठिनः शुभः । न चातिशिथिलः पाको न च वीतरसो भवेत्" । वीतरसो गालितमण्डः । प्रदक्षिणमुदायुवन्निति प्रदक्षिणा-वर्त्तं यथा स्यात्तथा मेक्षणेन ऊर्द्ध्वमीषन्मिश्रयन् । युमिश्रणे इत्यस्य रूपमेतत् । शृतमित्यभिघार्य्येति स्फुटितम् । चरु-माज्यश्रवणाप्लाव्य उदगग्नेरुत्तरस्याम् उत्तार्य्य प्रत्यभिघारयेत् पुनर्घृतेन तथा सेचयेत् । वृषोत्सर्गे तु अभिघारणद्वयात् पूर्वं ज्वलदङ्गारेण विद्योतनद्वयमाह छन्दोगपरिशिष्टम् । "अधि-श्रृतमवद्योत्य सुश्रृतञ्चाभिघारयेत् । घृतेन सेचयेत् पश्चात्

पुनरेवाभिवारयेत्" । मेक्षणादीनाह छन्दोगपरिशिष्टम् । "इध्मजातीयमिध्मार्द्धप्रमाणं मेक्षणं भवेत् । वृत्तं वाङ्गुष्ठ पृथ्व-ग्रमवदानक्रियाक्षमम्" । इध्मार्द्धप्रमाणं प्रादेशद्वयमिध्मस्य प्रमाणं परिकल्पितमिति । तदर्द्धं एषैव दर्वी विशेषस्तु महा-स्रुवे । "दर्वीद्व्यङ्गुलपृथ्वग्रा तुरीयेण तु मेक्षणम् । मुषलो-दूखले वार्क्षे स्वायते सुदृढे तथा । इच्छाप्रमाणे भवतः शूर्पं वैणवमेव च" । अत्र तिर्य्यगूर्द्धत्यादि वैणवमेव चेत्यन्तेन चर्वङ्ग-मभिधाय भूमिजपपरिसमूहनहस्तविन्यासं कुर्य्यादित्युक्तम् ।

अथ भूमिजपादिविधानं तदाह चतुर्थे प्रथमकाण्डिकायां गोभिलः । "पश्चादग्नेर्भूमौ न्यञ्चौ पाणी प्रतिष्ठाप्य" इति । भूमिर्भूमिजामहइति वस्वन्तं रात्रौ धनमिति दिवेति इदमिति मन्त्रं वस्वन्तं विन्दते वसु इति रात्रौ दिवा क्रियमाणे कर्म्मणि धनमित्यन्तं जपेत् । विन्दते धनमिति । अत्र विन्यासे विशेषमाह छन्दोगपरिशिष्टं "दक्षिणं वामतो बाह्यमात्माभि-मुखमेव च । करं करेण कुर्वीत करणे न्यञ्च कर्म्मणः । कृत्वा-ग्न्यभिमुखौ हस्तौ स्वस्थानस्थौ सुसंहतौ । प्रदक्षिणं तथा-सीनः कुर्य्यात् परिसमूहनम्" । करेणेति षष्ठ्यर्थे तृतीया । दक्षिणहस्तमधोमुखं तथाविधवामहस्तस्य पृष्ठोपरि भावे न विपर्य्यस्तमात्माभिमुखं भूमिजपे कुर्य्यादित्यर्थः । अग्न्य-भिमुखौ नात्माभिमुखौ स्वस्थानस्थौ न तु भूमिजपवद्द्व्यस्तौ सुसं-हतौ विस्तृतलग्नौ तथा चाग्नेः परिसमूहनं विक्षिप्तावयवानाम् एकीकरणरूपं सुकरं स्यात् । एवमेव भट्टनारायणोपाध्यायौ । एतेन च दक्षिणहस्तेन कुशान् गृहीत्वेति भवदेवभट्टलिखनं निष्प्रमाणम् । इमं स्तोममर्हते इति तृचेन परिसमूहेदिति सूत्रस्य भाष्येयम् एतदनुसारादेव ब्रह्मस्थापनानन्तरं भूमिजप-परिसमूहनादीति भवदेवभट्टवीरेश्वरोक्तं युक्तम् । भट्टभाष्ये

तु भूमिजपं वृश्चेन परिसमूहनं कुर्य्यात् पश्चाद्ब्रह्मोपवेशन-मिति। सरलापरिशिष्टप्रकाशयोस्तु भूमिजपानन्तरं चतुश्र-पणमित्युक्तम् ।

अथास्तरणम् । "अग्निमुपसमाधाय कुशैः समस्तं परि-स्तृणुयात् पुरस्ताद्दक्षिणतः उत्तरतः पश्चादिति सर्वतास्त्रिवृतं पञ्चावृतं वा बहुलमयुग्ममसंहतं प्रागग्रैर्मूलान्यच्छादयन्" इति अस्यार्थः उपसमाधाय ज्वालयित्वा समस्तं सर्वतः पुर-स्तादित्यनेन क्रमेण सर्वतः सर्वासु दिक्षु त्रिवृतं पञ्चावृतं वा बहुलं बहुलक्षणकम् अयुग्मं युग्मभिन्नम् असंहतमसंलग्नं पृथक् पृथक् त्रिवृतं पञ्चावृतं वेत्यनेन अयुग्मे सिद्धे अयुग्ममित्येकावृत-स्याप्राप्त्यर्थम् । तथा च गृह्यान्तरम् । "सकृत्त्रिर्वा प्रतिदिशं प्रदक्षिणमग्निं परिस्तृणातीति" एवमेव भट्टनारायणचरणाः । तत्र सकृदावृतमशक्तविषयम् । "पूर्वास्तृतावृतानां मूलानि पश्चादावृताग्रैश्छादयन् परिस्तृणुयात्" । एवञ्च "प्रतिदिशं दर्भत्रयेणावृतानि कृत्वा तेषां मूलानि तथैवाच्छाद्य तेषां मूलानि तथैवाच्छादयेत् ततो दशदिक्षु स्वस्तिकान् दद्यात्" इति भवदेवभट्टः ।

अथ विंशतिकाष्ठिकाः । गोभिलः । "अथेध्मान् कल्पयेत् खादिरान् पालाशान् वेति" । तत्र छन्दोगपरिशिष्टम् । "प्रादेशद्वयमिध्मस्य प्रमाणं परिकीर्त्तितम् । एवंविधाः सुरे-वेध्मसमिधः सर्वकर्मसु ॥ समिधोऽष्टादशेध्मस्य प्रवदन्ति मनीषिणः । दर्शे च पौर्णमासे च क्रियास्वन्यासु विंशतिः" ॥ इति । विंशतिकाष्ठिकारूपसमिधामङ्गहोमादिषु निषेधस्त-त्रैव "अङ्गहोमसमित्तन्त्र शोष्यन्त्याख्येषु कर्मसु । येषाञ्चैत-दुपर्य्युक्तं तेषु तत् सदृशेषु च ॥ अक्षभङ्गादिविपदि जलहोमा-दिकर्म्मणि । होमाहुतिषु सर्वासु नैतेष्विध्मो विधीयते" ॥

अङ्गहोमाः सीमन्तोन्नयनचूडाकरणादौ विहिताः तेषु अन्य-सीमन्तोन्नयनादेः प्रधानत्वात् । तथा द्विविधा होमा याज्ञिक-प्रसिद्धाः चिप्रहोमास्तन्त्रहोमाश्च । तत्र चिप्रहोमाः चिप्रं हूयन्त इति व्युत्पत्त्या सायं प्रातर्होमादयः तन्त्रहोमाश्च परि-समूहनवर्हिरास्तरणाद्यङ्गविस्तारयुक्ताः । अत्र ये समिद्धवि-स्कास्तन्त्रहोमाः यश्च सुखप्रसवार्थं शोष्यन्ती होमस्तेषु येषाञ्च वैश्वदेव सायं प्रातर्होमादीनामेतद्‌ध्माख्यं द्रव्यम् उपरि पश्चात् अथ इध्मानुकल्पयेत इत्यनेन सूत्रेणोक्तं तेषु वा तत्सदृशेषु चिप्र-होमेषु इध्मस्य निवृत्तिर्भवेदिति । अक्षभङ्गादिविपदि विवाहो-त्तरगोभिलोक्तयानकालीनाक्षभङ्गादिविपन्निमित्तहोमो जल-होमादिकर्मस्विति । "लौकिके वैदिके चैव हुतोच्छिष्टे जले चिप्तौ । वैश्वदेवश्च कर्त्तव्यः पञ्चसूनापनुत्तये" ॥ इत्याद्युक्त-जलचिप्तादिहोमेषु सोमरसाहुतिषु ।

अथाज्यसंस्कारः । गोभिलः । "वर्हिःसु स्थालीपाक-मासाद्य इध्ममग्नावाधायाज्यं संस्कुरुते । आस्तीर्णकुशेषु चरुं निधाय समिधमग्नावाधाय ज्वलनार्थत्वाद‌मन्त्रकम्" ॥ तथा च कात्यायनः । "इध्मोऽप्येधार्थमेवाग्ने र्हविराहुतिषु स्मृतः" । आज्यमाह गृह्यासंग्रहे । "अग्निना चैव मन्त्रेण पवित्रेण च चक्षुषा । चतुर्भिरेव यत् पूतं तदाज्यमिति च स्मृतम् ॥ घृतं वा यदि वा तैलं पयो वा दधिकावकम् । आज्यस्थाने नियुक्तायामाज्यशब्दो विधीयते" ॥ एतद्वचनं यज्ञपार्श्वीय-मपि । संस्कारविधिमाह गोभिलः । "ततः एव वर्हिषः प्रादेशमात्रे कुरुते ओषधिमन्तर्धायाच्छिनत्ति न नखेन पवि-त्रेणौ वैष्णव्यौ" इति । तत आस्तृतात् प्रादेशमात्रे विस्तत-तर्जन्यङ्गुष्ठप्रमाणे । द्विवचनं दलापेचं "न त्वनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च । प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्र-

चित्" ॥ इति कात्यायनोक्तद्विदलपवित्रस्य द्वित्वं तथात्वे प्रादेशमात्रे इति व्यर्थं स्यात् अतएव कात्यायनोक्तेनैवाज्यस्योत्पवनार्थं यत्तद्व्येतावदेव तु द्वयत्र एकत्वेन निर्दिष्टम् । अनन्तर्गर्भिणम् अन्तर्गर्भस्याभावोऽनन्तर्गर्भं तद्युक्तम् अन्तर्गर्भशून्यमित्यर्थः । "अनन्तर्गर्भिणौ यौ तु कुशौ प्रादेशसम्मितौ । अनखच्छेदिनौ साग्रौ तौ पवित्राभिधायकौ" ॥ इति शौनकवचनेकवाक्यत्वात् । अत्र दूर्वेऽपि कुशवदप्रयोगः । ओषधिमन्तर्धाय शौचादिनान्तरा कृत्वा । गोभिलः । "अथैने अद्भिरनुमार्ष्टि विष्णोर्मनसा पूतेस्थ" इति । एने पवित्रे । सव्येन मूलप्रादेशे गृहीत्वा दक्षिणेनानुमृज्यात् विष्णोरिति मन्त्रेण । गोभिलः । "संपूयोत्पुनात्युदगग्राभ्यां पवित्राभ्याम् अङ्गुष्ठाभ्यामुपकनिष्ठाभ्यामभिसंगृह्य प्राक्शस्त्रिरुत्पुनाति देवस्त्वा सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः स्वाहा" इति सकृत् जुहुयात् द्विस्तूष्णीमिति । संपूयप्रकृतमाज्यं "पवित्रमन्तराकृत्वा स्थाल्यामाज्यं समावपेत्" इत्येवं वक्ष्यमाणविधिना संपूयेति भट्टभाष्यम् । संपूय मक्षिकाद्यपनीयेति सरला उत्पुनात्यूर्द्ध्वं शोधयेत् । तत्प्रकारमाह उदगग्राभ्यामिति । अङ्गुष्ठाभ्यामित्यादौ द्विवचनं पाणिद्वयार्थम् । एवमनेन प्रकारेणाभिसंयुज्य प्रकृते पवित्रे प्राक्शः प्रागग्रं त्रिरुत्पुनाति अग्नौ वारत्रयं घृतं निक्षिपति । तत्प्रकारमाह मन्त्रेण सकृत् द्विस्तूष्णीम् । गोभिलः । "अथैने अद्भिरभ्युक्ष्य अग्नावप्युत्सृजेदिति" । अपिरेवार्थे अथानन्तरमेवाभ्युक्ष्य एने पवित्रे सव्येन गृहीत्वा दक्षिणेनाभ्युक्ष्य । गोभिलः । "अथैतदाज्यमधिश्रित्य उदगुद्वासयेदेवमाज्यसंस्कारोऽपि भवतीति" । आज्यं तद्घृतपात्रम् अधिश्रित्य अग्नेरुपरिकृत्य उदक् उत्तरतः उद्वासयेदवतारयेत् यत्रैवाज्यसंस्कारस्तत्रैवायं

कत्य इति अत्र गर्भपात्रसंस्कारवत् सकृत् संस्कृताज्यपात्रे यानि निःक्षिप्यन्ते तेषां संस्कारान्तरो नास्तीत्याह गृह्या-संग्रहः। "यथा सीमन्तिनी नारी पूर्वगर्भेण संस्कृता। एवमाज्यस्य संस्कारः संस्कारविधि चोदितः"॥ आश्वलायन-गृह्यपरिशिष्टम्। "सीमन्तोन्नयनं प्रथमे गर्भे सीमन्तोन्नयन-संस्कारो गार्भपात्रसंस्कारः"। इति श्रुतिरिति। गर्भपात्रयो-रयं गार्भपात्रः गर्भपात्रस्य तदाधारस्य स्त्रिया इति कल्पतरुः। हारीतः। "सकृच्च संस्कृता नारी सीमन्तेन कुलस्त्रियः। यं यं गर्भं प्रसूयन्ते स गर्भः संस्कृतो भवेत्" इति। गोभिलः। "पूर्व-माज्यमपरस्थालीपाकः"। इति। अत्र पूर्वापरदेशे स्थित्याज्य-स्थालीपाकयोस्तथा व्यपदेशः तेन तौ पूर्वापरयोः स्थाप्यौ तत्र प्रथमतोऽग्नेरुत्तरस्यामासादनं ततः कर्म्मकाले सौकर्य्यायाग्नेः पश्चात्। तथा च गृह्यान्तरम्। "होलग्न्योरन्तरा आज्य-हविषी आसादयेदिति"।

अथ स्रुवादिलक्षणम्। छन्दोगपरिशिष्टम्। "होमपात्र-मनादेशे होमद्रव्यो स्रुवः स्मृतः"। तथा "खादिरो वाथ पालाशो द्विवितस्तिः स्रुवः स्मृतः। स्रुग्बाहुमाला विज्ञेया वृत्तस्तु प्रग्रहस्तयोः"॥ खदिरकाष्ठनिर्मितः पलाशकाष्ठ-निर्मितो वा प्रगृह्यतेऽस्मिन्निति प्रग्रहो दण्डः। स च वर्त्तुलः। "स्रुवाग्रे घ्राणवत् खातं द्व्यङ्गुष्ठपरिमण्डलम्। जुह्वाख्यानं शराववत्खातं सनिर्वाहं षड़ङ्गुलम्। स्रुवाग्रे नासारन्ध्रवत् मध्यस्थितमर्य्यादम् अङ्गुष्ठद्वयमितवर्त्तुलम्। जुह्वास्तु खातं शरावाकारं निःशेषबहुलसाधनतया निर्वाहपदवाच्यप्रणाली-सहितं षड़ङ्गुलं जानीयात्। "तेषां प्राक्शः कुशैः कार्य्यः संप्रमार्गो जुह्वता। प्रतापनञ्च लिप्तानां प्रक्षाल्योष्णेन वारिणा"॥ स्रुवस्तु चोर्य्यत्तिभेदाद्बहुवचनम्। पूर्वाभिमुखं

मार्जनं कुशैः कार्य्यम् । घृतादिलेपवतान्तूष्णेन वारिणा प्रक्षालनपूर्व्वकमग्नौ प्रतापनं कार्य्यम् । लेपरहितानान्तु प्रतापनं दर्भैः सम्मार्जनमभ्युक्षणम् । पुनः प्रतापनमुत्तरतो निधानञ्च कुर्य्यात् तथा च कात्यायनः । "स्रुवं प्रतप्य दर्भैः संमृज्याभ्युक्ष्य पुनः प्रतप्य निदध्यात्" इति आज्यादिसंस्कारं वारत्रयं कुर्य्यादिति भवदेवभट्टः । हरिशर्म्मणाप्येतत् प्रकरणे सकृन्निर्वेति वचनादित्युक्तम् । होमकाले पञ्चाङ्गुलांस्त्यक्त्वा शङ्खमुद्रया धार्य्यः स्रुवः "पञ्चाङ्गुलान् वहिस्त्यक्त्वा धारयेच्छङ्खमुद्रया" इति वचनात् । पाण्याहुतौ तु गोभिलः । "उत्तानेनैव हस्तेन ह्यङ्गुष्ठाग्रेण पीड़ितम् । संहताङ्गुलिपाणिस्तु वाग्यतो जुहुयाद्धविः" ॥ तत्र परिमाणे कात्यायनः । "पाण्याहुतिर्द्वादशपर्वपूरिकाकंशादिना चेत् स्रुवमात्रपूरिका । दैवेन तीर्थेन च हूयते हविः स्वंगारिणि स्वर्च्चिषि तच्च पावके" ॥ अशक्तौ तु स्मृतिः । "आर्द्रामलकमानेन कुर्य्याद्धोमहविर्वलीन् । प्राणाहुतिवलिश्चैव मृदं गात्रविशोधिनीम्" ॥ कात्यायनः : "यो नर्च्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः । मन्दाग्निरामयावी च दरिद्रश्च स जायते ॥ तस्मात् समिद्धे होतव्यं नासमिद्धे कदाचन । आरोग्यमिच्छतामायुः श्रियमात्यन्तिकीं तथा ॥ जुह्वंश्च हुतौ चैव पाणिसूर्पस्फ्यदारुभिः । न कुर्य्यादग्निधमनं न कुर्य्याद्व्यजनादिना ॥ मुखेनैव धमेदग्निं मुखाद्ध्येषोऽध्यजायते" ॥ नाग्निं मुखेनेति च यत् लौकिके योजयन्ति तत् । हि यस्मात् मुखात् मुखपठितमन्त्रात् एष संस्कृतोऽग्निः । ततश्च लौकिक इति तदितराग्निपरम् एतेन लौकिक इति श्रौताग्निभिन्नपरमिति मैथिलोक्तं हेयम् । जुह्वंश्च हुते चैवेत्यनेनोपक्रमवचनेन संस्क्रियमाणसंस्कृताग्न्योरेव पाणिसूर्पादिनिषेधमुखेन मुखधमनस्य विहितत्वात् तद्-

व्यतिरिक्तस्यैव लौकिकशब्देनाभिधारणविधेरौचित्यात् आहि-तत्वस्यानुपस्थितेश्च एवमेव गुरुचरणाः । यत्तु अग्निस्तु नाम-धेयादौ होमे सर्वत्र लौकिके"इति छन्दोगपरिशिष्टवचने नाम-करणाद्यर्थमग्नेर्लौकिकत्वमुक्तं तन्न । स्वेऽग्नावन्यहोमः स्या-दिति तस्यैव वचनान्तरेण साग्नेः पितुः स्वीयाग्नौ तत्करण-निषेधात् लौकिकाग्न्यन्तरमादाय तत्कर्त्तव्यताविधायकं न तु तदग्नेः संस्कारान्तरमपि लौकिकत्वप्रतिपादकमिति । गोभिलः । "अग्निमुपसमाधाय परिसमूह्य दक्षिणजान्वक्तो दक्षिणेनाग्निं अदितेऽनुमन्यस्वेति उदकाञ्जलिं सिञ्चेत् अनुमते अनुमन्यस्वेति पश्चात् सरस्वत्यनुमन्यस्वेति उत्तरतः देवसवितः प्रसुवेति प्रद-क्षिणमग्निं पर्य्युक्षेत् सकृत्त्रिर्वा पर्य्युक्षणान्तान् व्यतिहरन्नति-पर्य्युक्षणहोमीयमिति अग्निमुपसमाधाय काष्ठादिना प्रज्वाल्य परिसमूह्य विक्षिप्तावयवान् एकीकृत्य दक्षिणजान्वक्तो भूमि-गतदक्षिणजानुः दक्षिणेनाग्निम् अग्नेर्दक्षिणे अदितेऽनुमन्य-स्वेति मन्त्रेण उदकाञ्जलिं प्राग्गतं सिञ्चेत् अनुमत इत्यादिना । अग्नेः पश्चादुदगन्तं सिञ्चेत् सरस्वत्यनुमन्यस्वेति आदिनाऽग्ने-रुत्तरतः प्राग्गतं सिञ्चेत् । देवसवितः प्रसुवयज्ञमित्यादिना प्रदक्षिणोऽग्निर्यथा स्यात्तथा उदकाञ्जलिना सिञ्चेत वेष्टयेत् त्रिर्वेति फलभूमार्थं तत्र मन्त्रस्त्रिधोच्चार्य्यः मुख्यावृत्तौ गुणा-वृत्तेर्युक्तत्वात पर्य्युक्षणान्तानिति बहुवचनं त्रित्वपक्षे दण्डवदु-दकधारादिष्वादिरप्यन्तो भवतीति अतियुवन् अन्तद्वयं मिश्री-कुर्वन् होमीयं होतव्यं पर्य्युक्षन् तज्जलेन स्पर्शयन्" इति । वेष्टनप्रकार उक्तः ।

अथ विरूपाक्षजपः । चतुर्थप्रपाठकीयप्रथमकाण्डिकायां गोभिलः । "वैरूपाक्षः पुरस्ताद्धोमानामिति" । विरूपाक्ष-शब्दो विद्यतेऽत्र इति वैरूपाक्षः ओम्भूर्भुवः स्वरोमित्यादिको

मन्त्रः । होमानां वक्ष्यमाणप्रागुक्तनित्यनैमित्तिकानां पुर-स्तात् जप्यः । अस्य क्षिप्रहोमे पर्युदासमाह छन्दोगपरि-शिष्टम् । "न कुर्यात् क्षिप्रहोमेषु द्विजः परिसमूहनम् । विरूपाक्षञ्च न जपेत् प्रपदञ्च विवर्जयेत्" ॥ क्षिप्रहोमेषु अब्राह्मकेषु सायं प्रातः शोष्यन्तो होमादिषु ब्राह्मण इमं स्तोम-मर्हते इत्यादि मन्त्रकरणकपरिसमूहनं न कुर्यात् । विरू-पाक्षप्रपदौ च त्यजेत् । प्रपदविधानमप्याह गोभिलः । "काम्येषु च प्रपदः तपश्च तेजश्चेत्यादिकः । च एवार्थे तत्र विरूपाक्षजपात् पूर्वं तत् पाठमाह स एव । तपश्च तेजश्चेत्यादि जपित्वा प्राणानायम्य तन्मना वैरूपाक्षमावृत्तो च्छ्वसेत् । तपश्च तेजश्चेत्यादि जपित्वा वायुधारणपूर्वकं यं कञ्चिदर्थं साधयितु-कामस्तन्मनास्तद्ध्यायन् विरूपाक्षमन्त्रं जप्त्वा वायुं रेचयेत् । अथ यदि काम्यकर्मार्थं कुशण्डिका तदा प्रपदजपानन्तरम् इति भवदेवभट्टः । नित्यनैमित्तिकयोर्नास्य पाठः । ततः सर्वकर्म-साधारणं विरूपाक्षजपान्तं कर्म ।

अथ प्रकृतं कर्म । तत्र वह्नेर्नामानि गृह्यासंग्रहे । "लौकिके पावको ह्यग्निः प्रथमः परिकल्पितः । अग्निस्तु मारुतो नाम गर्भाधाने विधीयते ॥ पुंसवने चन्द्रमाश्च शुङ्गाकर्मणि शोभनः । सीमन्ते मङ्गलो नाम प्रगल्भो जातकर्मणि ॥ नाम्नि स्यात् पार्थिवो ह्यग्निः प्राशने च शुचिस्तथा । सत्यनामा च चूडायां व्रतादेशे समुद्भवः । गोदाने सूर्य्यनामा च केशान्ते ह्यग्नि-रुच्यते ॥ वैश्वानरो विसर्गे तु विवाहे योजकः स्मृतः । गोदाने गोदानाख्यसंस्कारे । "चतुर्थ्यान्तु शिखी नाम धृतिरग्निस्तथा-परे" । अपर धृतिहोमादौ । "प्रायश्चित्ते विधुश्चैव पाकयज्ञे तु साहसः । लक्षहोमे तु वह्निः स्यात् कोटिहोमे हुताशनः ॥ पूर्णाहुत्यां मृड़ो नाम शान्तिके वरदस्तथा । पौष्टिके बलदश्चैव

क्रोधोऽग्निश्चाभिचारके कोष्ठे तु जठरो नाम क्रव्यादो मृतभक्षणे। आहूय चैव होतव्यं यो यत्र विहितोऽनलः"। प्रायश्चित्ते प्रायश्चित्तात्मकमहाव्याहृतिहोमादौ। पाकयज्ञे पाकाङ्गकहोमे वृषोत्सर्गगृहप्रतिष्ठाहोमादौ। पौष्टिके दुर्गोत्सवाङ्गहोमादौ ततश्चामुककर्मणि अग्ने त्वममुकनामासि इति नाम कृत्वा "पिङ्गभ्रूश्मश्रुकेशाक्षः पीनाङ्गजठरोऽरुणः। छागस्थः साक्षसूत्रोऽग्निः सप्तार्चिः शक्तिधारकः"। इत्यादित्यपुराणीयं ध्यानं कृत्वा अमुकाग्ने इहागच्छेत्यावाह्यामुकाग्नये नम इति पूजयेत्। "संपूजयेत्ततो वह्निं दद्याच्चैवाहुतीः क्रमात्" इति मार्कण्डेयपुराणात्। चरुहोमे विशेषमाह गोभिलः। "पर्युक्ष्य स्थालीपाके आज्यमानीयमेक्षणेनोपघातं होतुमेवोपक्रमते" इति अदितेऽनुमन्यस्वेत्येवं पर्युक्ष्य। स्थालीपाके चरौ। आज्यं प्रक्षिप्य मेक्षणेनोपघातम् उपहत्यावदाय। होतुमेवोपक्रमते आरभते। उपघातमिति हिंसार्थाच्चैककर्मकादित्यनेन हतोयस्योपपदेन न मासिङ्गम् एवकारकरणमुपघातहोमे अभिघारणाद्यङ्गप्रतिषेधार्थम्। होतुमेवोपक्रमते नान्यतः। उपघातहोमलक्षणमाह गृह्यासंग्रहे। "पाणिना मेक्षणेनाथ स्रुवेणैव तु यद्धविः। हूयते चानुपस्तीर्य उपघातः स उच्यते। यद्युपघातं जुहुयाच्चरावाज्यं समापयेत्। मेक्षणेन तु होतव्यं नाज्यभागौ न स्विष्टिकृत्"। बहुदैवत्यचरुहोमे तु उपघातहोम एव। "चरौ तु बहुदैवत्ये होमस्तस्योपघातवत्" इति परिशिष्टप्रकाशवचनात् ततः प्रकृतहोमात् परापरयोस्तूष्णीं समित्प्रक्षेपमाह छन्दोगपरिशिष्टम्। "समिधादिषु होमेषु मन्त्रदैवतवर्जिता। पुरस्ताच्चोपरिष्टाच्च इन्धनार्थं समिद्भवेत्"। स्मृतिः। "मन्त्रेणोङ्कारपूतेन स्वाहान्तेन विचक्षणः। स्वाहावसाने जुहुयाद्ध्यायन् वै मन्त्रदेवताम्"। स्वाहान्तमन्त्रे

स्वाहान्तरं नास्तीति सरला। भट्टभाष्ये मन्त्रतन्त्रप्रकाशे च। "नमोऽन्तेन नमो दद्यात् स्वाहान्ते हिठमेव च। पूजायामाहुतौ चापि सर्वत्रायं विधिः स्मृतः"। हिठः स्वाहा इत्यागमविदः। गोभिलः। "आज्याहुतिष्वाज्यमेव संस्कृत्योपघातं जुहुयान्नाज्यभागौ न स्विष्टिकृत्। आज्याहुतिष्वनादेशे पुरस्ताच्चोपरिष्टाच्च महाव्याहृतिहोमः यथा पाणिग्रहणे तथा चूड़ाकर्मण्युपनयने गोदाने" इति आज्यमेव यथोक्तेन विधिना संस्कृत्य उपघातं स्रुवेणोपहत्य जुहुयात् आज्यमात्रकहोमेषु आज्यभागस्विष्टिकृतामतिदेशप्राप्तानां निषेधः एवमाज्यमात्रकहोमेषु हुतिहोमादिषु अनादेशे यत्र पुंसवनशुङ्गाकर्म सीमन्तोन्नयनचूड़ाकरणादिषु पश्चादग्ने उदगग्रेषु दर्भेष्वित्यादिनाऽग्निग्रहणं प्राप्तं विशिष्टहोमो नोपदिष्टः तत्र प्रधानकर्मणोऽभिमर्षणादेः पुरस्ताच्चोपरिष्टाच्च महाव्याहृतिभिः भूर्भुवः स्वरिति तिसृभिर्होमः कार्य्यः यथा पाणिग्रहण इति यथा पाणिग्रहणे महाव्याहृतिः पृथक् समस्ताभिश्चतुर्थीमिति गोभिलसूत्रेण यथा पाणिग्रहणे चतस्रस्तथा चूड़ादिषु संस्काररूपेषु पूर्वं पश्चाच्चतस्रश्चतस्रः महाव्याहृत्याहुतयः स्युरिति। चरुहोमानन्तरन्तु गोभिलेन महाव्याहृतिभिराज्येन जुहुयादिति सूत्राच्चोरुहोमे पश्चान्महाव्याहृतिहोमः कर्त्तव्यो न तु पूर्वमिति। गोभिलः। "यद्युवा उपस्तीर्णाभिघारितं जुहुपेदाज्यभागावेव प्रथमं जुहुयात्। चतुर्गृहीतमाज्यं गृहीत्वा पश्चावर्त्तन्तु भृगूणामग्नये स्वाहा इत्युत्तरतः सोमायेति दक्षिणतः प्राक्शो जुहुयादिति स्रुवेण स्रुचियदाज्यं प्रथमं गृह्यते तदुपस्तीर्णं यद्धविर्गृहीत्वा अनन्तरमाज्यं दीयते तदभिघारितं यदि तथाविधं होतुमिच्छेत्तदाज्यभागावेव प्रथमं जुहुयात्। स्रुचा होमस्तु अनेन गृहीतं जुह्वा जुहोतीति गृह्यान्तरात्

स्रुवेण स्रुचि चतुर्वा गृहीतमाज्यम्। भृगूणां भृगुगोत्राणामिति सरला। पञ्चार्षेयाणामिति गृह्यान्तरात् भार्गवप्रवराणामिति भट्टभाष्यम्। भृगुगोत्राणां भार्गवप्रवराणामिति भवदेवभट्टः। तेषां पञ्चवारं तथा गृहीत्वा अग्नये स्वाहेत्यनेनाग्नेर्मध्यदेशादुत्तरे प्राञ्चु स्रुधारया जुहुयात् उत्तरभागीयं दक्षिणे सौम्यं मध्येऽन्याहुतयः" इति सांख्यायनसूत्रात् तथैव दक्षिणभागे। सोमाय स्वाहेति जुहुयात्। ततः प्रकृतदेवता चरुहोमानन्तरं स्विष्टिकृद्धोममाह गोभिलः। "अथ स्विष्टिकृत उपस्तीर्य्याभ्योत्तरपूर्वार्द्धात् सकृदेव भूयिष्ठं हविरभिघारयेत् यद्यवापञ्चावर्त्ती स्यात् हविरुपस्तीर्य्यावदाय हविरवघारयेत् न प्रत्यनक्त्यवदानस्थानं यातयामतायै अग्नये स्विष्टिकृते स्वाहेत्युत्तरपूर्वार्द्धे जुहुयात् महाव्याहृतिभिराज्येनाभिजुहुयात्। प्राक् स्विष्टिकृत आवापोगणेष्वेकं परिसमूहनम् इध्मो वर्हिः पर्य्युक्षणमाज्यभागो सर्वेभ्यः समवदाय सकृदेव सौविष्टिकृतं जुहोति हुत्वेतम्प्रेक्षणमनुहरेदिति। स्विष्टिकृदर्थं स्रुचिष्टतस्रुवं दत्त्वा चरोरुत्तरपूर्वार्द्धादीशानकोणरूपान्मेक्षणेन बहुतरमेकवारं गृहीत्वा स्रुचि स्थापयित्वा वारद्वयं घृतेन सेचयेत् पञ्चावदानपक्षे घृतस्रुवद्वयेनोपस्तरणं सकृद्विनिक्षेपः पुनर्घृतेनाभिसेचनद्वयमिति। अत्र मेक्षणाक्षतस्थानं घृतेन प्लावयेत् पुनर्यागार्थमेव तत् ततश्च यागायोग्यतारूपयातयामतायामपि न दोष इत्यर्थः। ततोऽग्नये स्विष्टिकृते स्वाहेत्यनेन ईशानकोणे जुहुयात्। ततो भूर्भुवः स्वरिति तिसृभिर्महाव्याहृतिभिर्होमः। अस्य चरुहोमे पश्चादुद्देशान्न प्राक्करणमिति। आ उप्यत इत्यावापः प्रधानहोमः स तु स्विष्टिकृद्धोमात् प्राक् न तु पश्चादित्यर्थः। एवञ्च मुख्यहोमे त्वकृते यदि चरुर्नष्टो दुष्टो वा तदाऽन्यः पाच्यः मुख्ये कृते यदि नाशदुष्टौ

स्यातां तदाज्येनैव स्विष्टिकृद्धोम इति सरला। गणेषु एक-दानेकयागेषु एकमेव न प्रत्येकं परिसमूहनादि उपलक्षणत्वा-दुदूखलमुषलाद्यपि एवं स्विष्टिकृद्धोमोऽपि सकृदुपलक्षणमेतत् महाव्याहृत्यापीति सरला। अनुहरेत् अग्नौ क्षिपेत् एवमुक्त-प्रकारेण यथायथं समापयेत्।

अथोदीच्यम्। अत्र गोभिलः। "समिधमाधायानुपर्युक्ष्य तथैवोदकाञ्जलीन् सिञ्चेत् अन्वमंस्था" इति मन्त्रे विशेषः।

अथ प्रायश्चित्तम्। होमानन्तरं कर्म्मवैगुण्यसमाधानार्थं प्रायश्चित्तं गोभिलानुक्तमपि तत्परिशिष्टोक्तं कुर्य्यात् तद्यथा "यत्र व्याहृतिभिर्होमः प्रायश्चित्तात्मको भवेत्। चतस्रस्तत्र विज्ञेयाः स्त्रीपाणिग्रहणे यथा॥ अथवा ज्ञातमित्येषा प्राजा-पत्यापि वाहुतिः। होतव्या त्रिविकल्पोऽयं प्रायश्चित्तविधिः स्मृतः"॥ यत्र प्रायश्चित्तरूपो महाव्याहृतिहोमो विधीयते तत्र चतस्र आहुतयो होतव्याः। यथा विवाहे तथा च गोभिलः। "महाव्याहृतिभिः पृथक् समस्ताभिश्चतुर्थीमिति"। अस्यार्थः। भूराद्याभिर्व्यस्ताभिस्तिसृभिस्तिस्र आहुतीः भूर्भुवः स्वः स्वाहेति समस्ताभिश्चतुर्थीं जुहुयात् अपि वा। अथवा अज्ञातं यदनाज्ञातमिति मन्त्रेणाहुतिर्होतव्या प्रजापतये स्वाहेति वा प्रायश्चित्तविधिर्विकल्पत्रयवान् मुनिभिः स्मृतः इत्यनेन पक्षान्तरं निरस्तम्। ततश्च भवदेवभट्टोक्तप्रायश्चित्ता-त्मकशाट्यायनहोमो निष्प्रमाणः भट्टनारायणैर्गोभिलभाष्ये तदप्रमाणीकृतत्वात्। ततश्च प्रायश्चित्तहोमार्थं सङ्कल्प्य अग्ने त्वं विधुनामासीति नाम कृत्वावाह्य संपूज्य समिधं प्रक्षिप्य "आज्यद्रव्यमनादेशे जुहोतिषु विधीयते" इति छन्दोगपरि-शिष्टात्। आज्यद्रव्यकहोमत्वेन पूर्वापरं महाव्याहृतिहोमः। तथा च गोभिलः। "आज्याहुतिष्वनादेशे पुरस्ताच्चोपरि-

ष्टाश्च महाव्याहृतिहोम इति"। एवञ्च तिसृभिर्महाव्याहृतिभिर्हुत्वा व्यस्तसमस्ताभिः प्रायश्चित्तरूपाश्चतस्र आहुतीर्हुत्वा तिसृभिर्महाव्याहृतिभिर्हुत्वा समित्प्रक्षेपेण प्रायश्चित्तं समापयेत् ।

अथ यज्ञवास्तुकरणम् । गोभिलः । "समिधमाधायानुपर्य्युक्ष्य यज्ञवास्तु करोति तत एव बर्हिषः कुशमुष्टिमादायाज्ये हविषि वात्रिरवदध्यादग्राणि मध्यानि मूलानि अक्तं रिहानाव्यन्तु वय इति । अथैनमद्भिरभ्युक्ष्याग्नावपवर्जयेत् । यः पशूनामित्यादि इत्येतद् यज्ञवास्तु इत्याचक्षत इति" समिधादानानुपर्य्युक्षणयोः सिद्धयोः पुनर्वचनं क्रमार्थम् । यज्ञवास्तु इति वक्ष्यमाणस्य कर्म्मणो नामधेयम् । कथं करोतीत्यत आह तत इति । ततस्तस्मादेव बर्हिष आस्तृतकुशात् कुशमुष्टिमादायाज्येऽवदध्यात् मज्जयेत् न चेदाज्यमवशिष्टं हविषि चरावादध्यात् अग्रादिप्रदेशम् अक्तमिति मन्त्रेण स्थानभेदान्मन्त्रावृत्तिः । अथानन्तरमेवामुष्यन एवं कुशमुष्टिमद्भिः प्रणीताद्भिरभ्युक्ष्याग्नावपवर्जयेत् दाहयेत् यः पशूनामिति मन्त्रेण तत एव बर्हिष इत्यारभ्य यदुक्तं तद्यज्ञवास्त्विति वृद्धाः कथयन्ति । एतत् प्रयोजनन्तु प्रतिपत्तिकर्म्मत्वेऽपि तद्व्यनाशे एतत् कर्म्माप्राप्तावपि यज्ञो यस्मिन् वसतीति व्युत्पत्तिप्रतिपाद्यार्थसिद्ध्यर्थं कुशान्तरमुष्टिमादाय तत्कर्त्तव्यमिति एवमेव भट्टभाष्यम् ।

अथ पूर्णाहुतिः । तत्र पूर्णाहुत्यां मृडो नामेति प्रागुक्तवचनात् मृडनामानमग्निमावाह्य संपूज्य दद्यादुत्थाय पूर्णां वै नोपविश्य कदाचनेति भविष्याग्निपुराणाभ्यामुत्थाय पूर्णाहुतिं कुर्य्यात् ।

अथ वन्दनादिकर्म । तत्र वशिष्ठः । "ऐशान्यामाहरेद्भस्म

स्रुवाग्रेण स्रुवेण वा । वन्दनं कारयेत्तेन शिरः कण्ठांशकेषु च ॥ कश्यपश्चेति मन्त्रेण यथानुक्रमयोगतः । ततः शान्तिं प्रकुर्वीत अवधारणवाचनम् ॥ दक्षिणा च प्रदातव्या ग्रहाणाञ्च विसर्जनम्" ॥ शान्तिः सामगानां वामदेव्यगानम् । तथा च गोभिलः । "अपवृत्ते कर्म्मणि वामदेव्यगानं शान्त्यर्थमिति"। अपवृत्ते समाप्ते । गानाशक्तौ त्रिधा पाठमाह छन्दोगपरिशिष्टम् । "पर्य्युक्षणञ्च सर्व्वत्र कर्त्तव्यमदितेऽन्विति । अन्ते च वामदेव्यस्य गानमित्यथवा त्रिधा" ॥ गानं कुर्य्यात्त्रिरभिधेति वा पाठः । अवधारणमच्छिद्रावधारणम् । "अच्छिद्रामिति यद्वाक्यं वदन्ति क्षितिदेवताः । प्रणम्य शिरसा ग्राह्यमग्निष्टोमफलैः समम्" ॥ इति शातातपपराशरवचनात् । अवधारणं तच्च दक्षिणादानानन्तरं कर्त्तव्यं न तु पाठक्रमादरः । "वृथा विप्रवचो यस्तु गृह्णाति मनुजः शुभे । अदत्त्वा दक्षिणां वापि स याति नरकं ध्रुवम्" ॥ इति नारदीयात् । अतएव भवदेवभट्टेनापि वामदेव्यगानानन्तरं दक्षिणाभिहिता न त्वच्छिद्रावधारणात् परम् । होमदक्षिणा च स्वयं होतृपक्षे ब्रह्मणे देया । ब्राह्मणे दक्षिणा देया यत्र या परिकीर्त्तिता । कर्म्मान्तेऽनुच्यमानायां पूर्णपात्रादिका भवेत्" ॥ इति छन्दोगपरिशिष्टात् । गोभिलेनापि दर्शादियागमभिधाय पूर्णपात्रं दक्षिणा तं ब्रह्मणे दद्यादित्युक्तम् । ब्रान्तलेऽपि पुंस्त्वं छान्दसम् एतदनुसारात् कर्मान्त इति ब्रह्मसाध्यहोमान्तपरं न तु परिशिष्टप्रकाशोक्तनामकरणादिप्रधानकर्मान्तपरम् अतः प्रधानकर्म्मदक्षिणां कर्मोपदेष्ट्रे आचार्य्याय दद्यात् । यजमानेतरहोतृपक्षे तु ब्रह्महोतृभेदेन दक्षिणा विशेषानुपादाने होमदक्षिणैव ब्रह्महोतृभ्यां ग्रहीतव्या । स्वयमेव होतृब्रह्मकरणे अन्यस्मै दद्यात् "विदध्याद्धौत्रमन्यश्चेद्दक्षिणार्द्धहरो भवेत् ।

असमर्थश्चेदुभयं कुर्य्यादन्यस्मै प्रतिपादयेत्" ॥ इति छन्दोगपरिशिष्टात्। पूर्णपात्रलक्षणन्तु गृह्यासंग्रहद्वयपार्श्वपरिशिष्टप्रकाशयोः। "अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ तु पुष्कलम्। पुष्कलानि च चत्वारि पूर्णपात्रं विधीयते" ॥ अत्र षट्पञ्चाशदधिकशतद्वयमुष्टिमितं पूर्णपात्रम्। असम्भवे तु छन्दोगपरिशिष्टम्। "यावता बहुभोक्तुश्च तृप्तिः पूर्णेन जायते। नावरार्द्धं ततः कुर्य्यात् पूर्णपात्रमिति स्थितिः" ॥ अवरार्द्धं न्यूनम्। ततः प्रागुक्तनारदीयाच्छिद्रावधारणं कुर्य्यात्। ततः साङ्गतार्थं तद्विष्णोरिति मन्त्रेण विष्णुं स्मरेत् "प्रमादात् कुर्वतां कर्म्म प्रच्यवेताध्वरेषु यत्। स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः॥ तद्विष्णोरिति मन्त्रेण स्नायादप्सु पुनः पुनः। गायत्री वैष्णवी ह्येषा विष्णोः संस्मरणाय वै" ॥ इति याज्ञवल्क्यात्। ततो "गच्छध्वममराः सर्वे गृहीत्वार्च्चां स्वमालयम्। सन्तुष्टा वरमस्माकं दत्त्वेदानीं सुपूजिताः" ॥ इति विष्णुधर्मोत्तरीयेण विसर्जयेत्। अत्र सामान्यनिर्देशात् वशिष्ठवचने ग्रहाणामित्युपलक्षणम्। ततः "प्रीयतां पुण्डरीकाक्षः सर्वयज्ञेश्वरो हरिः। तस्मिंस्तुष्टे जगत्तुष्टं प्रीणिते प्रीणितं जगत्" ॥ इति मत्स्यपुराणीयं पठेत् इति सर्वहोमसाधारणेति कर्त्तव्यता।

अथ विवाहः। तत्र पूर्वं यदि वाग्दानं क्रियते यदा अद्येत्यादि अमुकगोत्रस्यारोगिणोऽव्यङ्गस्यापतितस्याक्लीवस्याविवाहामुकगोत्रामुकीं देवीं कन्यां दातुं तवाहं प्रतिजाने इति पिता ब्रूयात्। अस्मिन् कालेऽग्निसान्निध्ये स्नातः स्नाते ह्यरोगिणि "अव्यङ्गेऽपतितेऽक्लीवे पिता कन्यां प्रदास्यति" इति। पितुरसन्निधाने भ्रात्रादिभिरेवं प्रतिज्ञा कर्त्तव्या तत्सान्निधाने तु पूर्वोक्तं वाक्यम्। पितुरभावे कर्त्रन्तरस्यापि

ज्योतिषे । "गुरोर्भृगोरस्तबाल्ये वार्द्धके सिंहगे गुरौ । वक्रि-जीवेऽष्टविंशेऽङ्कि गुर्वादित्ये दशाह्निके ॥ पूर्वराशावनायाता-तिचारिगुरुवत्सरे । प्राप्याग्निमन्तृजीवस्य चातिचारे त्रिपक्षके ॥ कम्प्याद्यद्भुतसप्ताहे नीचस्थेज्ये मलिम्लुचे । भानुलङ्घितके मासि क्षये राहुयुते गुरौ ॥ पौषादिकचतुर्मासे चरणाङ्कितवर्षणे । एके-नाङ्का चैकदिने द्वितीयेन दिनत्रये ॥ तृतीयेन तु सप्ताहे मङ्ग-ल्यानि जिजीविषुः । विद्यारम्भकर्णवेधौ चूडोपनयमौञ्जकान् ॥ तीर्थस्नानमनाद्यन्तं तथानादिसुरेक्षणम् । परीक्षारामयज्ञांश्च पुरश्चरणदीक्षणे ॥ व्रतारम्भप्रतिष्ठे च गृहारम्भप्रवेशने । प्रतिष्ठा-रम्भणे देवकूपादेर्वर्जयन्ति च"॥ आश्वलायनः । "उदगयने आपू-र्य्यमाणे पक्षे कल्याणे नक्षत्रे चूडोपनयनगोदानविवाहाः" । विवाहः सार्वकालिक इत्येके । आपूर्य्यमाणे पक्षे शुक्लपक्षे । दशवर्षाभ्यन्तर एवोदगयनाद्यपेक्षामाह भुजबलभीमः । "अष्ट-शुद्धिमल्पशुद्धिं मासायनर्त्तुदिवसानाम् । अर्वाक् दशवर्षेभ्यो मुनयः कथयन्ति कन्यकानाम् । एतत् परन्तु विज्ञेयमङ्गिरो वचनं यथा । कालात्यये च कन्यायाः कालदोषो न विद्यते । मलमासादिकालानां विवाहाद्ये प्रयत्नतः । पुंसः प्रति सदा दोषात् सर्वदैव हि वर्ज्यता । रेवत्युत्तररोहिणीमृगशिरा-मूलानुराधामघाहस्तस्वातिषु तौलिषष्ठमिथुनेषूद्यत्सु पाणि-ग्रहः । सप्ताष्टान्त्यवहिः शुभैरुडुपतावेकादशद्वित्रिगे क्रूरै-स्त्र्यायषडष्टगैर्न तु भृगौ षष्ठे कुजे चाष्टमे" ॥ पारस्करः । "कुमार्य्याः पाणिं गृह्णीयात् त्रिषु त्रिषूत्तरादिषु" । स्वातौ मृगशिरसि रोहिण्यां वेति । त्रिषु त्रिषूत्तरादिषु नवस्वित्यर्थः । एतद्वचनाच्चित्रश्रवणधनिष्ठाश्विनीनक्षत्राणि लभ्यन्ते । "आद्ये मघाचतुर्भागे नैरृतस्याद्य एव वा । रेवत्यन्ते चतुर्भागे विवाहः प्राणनाशकः" ॥ सप्तशलाकवेधमाह दीपिका ।

"कृत्तिकादिचतुःसप्तरेखाराशौ। परिभ्रमन् ग्रहखेदेकरेखास्थो वेधः सप्तशलाकजः। वेधस्य चतुर्थे अंशे श्रवणाद्यौ लिप्तिका-चतुष्टये च अभिजित् तत्स्थे खचरे विज्ञेया रोहिणीविद्धा"॥ अभिजिति खचरेऽधिकदोषार्थमाह रोहिणीति नैतद्दर्शना-श्रुतिवेधो निषिद्धः। "चन्द्रातिरिक्तखचरेर्यद्यत्र वेधसम्भवः। चिताभूमिं तदा नारी भर्त्रा सह विशेद्ध्रुवम्" इति माण्डव्य-विरोधात्। दीपिकायां "कर्णवेधे विवाहे च व्रते पुंसवने तथा। प्राशने चाद्यचूडायां विद्धर्क्षं विवर्जयेत्"॥ तद्रूपं दशयोगभङ्गमाह। "तिथ्यङ्गवेदैकदशोनविंशभैकादशाष्टा-दशविंशसंख्याः। इष्टोडुना सूर्ययुतोडुना च योगादमूस्वेदश-योगभङ्गः"॥ राजमार्त्तण्डः। "दम्पत्यो र्द्विनवाष्टराशिरहिते दारानुकूले रवौ चन्द्रे चार्ककुजार्किशुक्रवियुते मध्येऽथ वा पापयोः। त्यक्त्वा च व्यतिपातवैधृतिदिनं विष्टिञ्च रिक्तां तिथिं क्रूराह्वायनचैत्रपौषरहिते लग्नांशके मानुषे। पापात् सप्तमगः शशी यदि भवेत् पापेन युक्तोऽथ वा। यत्नेनापि विवर्जये-न्मुनिमते दोषो ह्ययं कथ्यते। यात्रायां विपदो गृहे सुतवधः चौरे च रोगोद्भवो वैधव्यं विवहे व्रते च मरणं शूलञ्च पुंस्कर्मणि"॥ अयं यामित्रवेधः। अस्यापवादमाह। "मूल-त्रिकोणनिजमन्दिरगोऽथ तदौच्चितौ वा। यामित्रवेधवि-हितानपहाय दोषान् दोषाकरः सुखमनेकविधं विधत्ते"॥ व्यासः। "रिक्तासु विधवा कन्या दर्शेऽपि स्याद्विवाहिता। शनैश्चरदिने चैव यदि रिक्तातिथिर्भवेत्। तस्मिन् विवाहिता कन्या पतिसन्तानवर्द्धिनी"॥ स्वरोदये। "त्रिनाडीवेधनक्षत्र-मश्विन्यार्द्रायुगोत्तरा-हस्तेन्द्र-मूलवारुण्यः पूर्वभाद्रपदास्तथा याम्यसौम्यौ गुरुर्योनिचित्रामित्रजलाह्वयम्। धनिष्ठा चोत्तरा भाद्रा मध्यनाडी व्यवस्थिता। कृत्तिका रोहिणी सर्पो मघा

स्वातीविशाखके उत्तरा श्रवणा पौष्णा पृष्ठनाड़ी व्यवस्थिता । प्राङ्नाड्या विध्यते भर्त्ता मध्यनाड्योभयं तथा । पृष्ठनाड़ीव्यधे कन्या म्रियते नात्र संशयः । प्रनष्टं जन्मभं यस्य तस्य नामर्चतो वदेत् । द्वयोर्जन्मभयोर्वेधे न कर्त्तव्यं कदाचन । एकराश्यादियोगे तु नाड़ीदोषो न विद्यते" ॥ तद्यथा । "एकराशौ च दम्पत्योः शुभं स्यात् समसप्तके । चतुर्थे दशमे चैव तृतीयैकादशे तथा" ॥ अन्यज्ज्योतिस्तत्त्वेऽनुसन्धेयम् । अत्र च । "स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्म्मसु । पिण्डानोद्वहनात्तेषां तदभावेऽपि तत्क्रमात्" ॥ इति छन्दोगपरिशिष्टात् । "कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः । नामकर्मणि वालानां चूड़ाकर्मादिके तथा । सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने । नान्दीमुखं पितृगणं पूजयेत् प्रयतो गृही" इति विष्णुपुराणाच्च । कन्यापुत्रविवाहे पिता नान्दीमुखं कुर्य्यात् पितुर्देशान्तरस्थत्वादित्वे अन्येनापि प्रतिनिधिना नान्दीमुखश्राद्धं कर्त्तव्यम् । तदभावे पितुर्नाशे पातित्यादिना श्राद्धानधिकारित्वे वा तत्क्रमात् तस्य संस्कार्य्यस्य क्रमात् तेन स्वयं तदन्यो वा तत्पितृभ्यस्तन्मातामहेभ्यश्च श्राद्धं कुर्य्यात् । एतत् प्रपञ्चितं श्राद्धतत्त्वोद्वाहतत्त्वयोः । विष्णुः । "व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्च्चने जपे । आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् । आरम्भो वरणं यज्ञे सङ्कल्पो व्रतजापयोः । नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिष्क्रिया" ॥ व्रतममावास्यादि आदिपदात् सायंप्रातर्होमपरिग्रहः । "प्रवृत्तं मलमासात् प्राक् यत् कर्म्म न समापितम् । आगते मलमासेऽपि तत् समाप्यं न संशयः" इति काठकगृह्यपरिशिष्टम् । आरब्धविवाहादिकं मलमासेऽपि कार्य्यम् अनारब्धं न कार्य्यम् । "अधिमासके विवाहं यात्रां चूड़ां तथोपनयनादि । न कुर्य्यान्न

सावकाशमकृत्यं न तु विशेषितव्यामिति" भीमपराक्रमात् । अत्र विवाहादिकीर्त्तनं निरवकाशमपि निषेधार्थम् अन्यथा सावकाशमित्यनेनैव सिद्धेर्वैयर्थ्यात् सावकाशस्य सम्भवत् कालान्तरमतो निरवकाशस्याप्यनन्यगतिकस्य प्रतिप्रसवोऽर्थात् सूचितः । जातकर्मादौ प्रतिप्रसवमाह स्मृतिः । "आद्ये जातकनामानि ये च संस्कारमाश्रिताः । मलिम्लुचेऽपि कर्त्तव्याः काम्या इष्टीर्विवर्जयेत्" इति संस्कारा अन्नप्राशननिष्क्रमणादय इति माधवाचार्य्यः । यत्तु "नामान्नप्राशनं चौड़ं विवाहं मौञ्जिबन्धनम् । निष्क्रमं जातकर्माणि काम्यं वृषविसर्जनम् । अस्तं गते गुरौ शुक्रे बाले वृद्धे मलिम्लुचे । उपायनमुपारम्भं व्रतानां नैव कारयेत्" इति गार्ग्यवचनं नामकरणादीनां वर्जनमुक्तं तन्नामकरणान्नप्राशनजातकर्मणामेकादशद्वादशप्रधानकालाकृतानां यद्वागामिक्रियामुख्येत्यादिवचनात् । अन्तरालकर्त्तव्यानां न सावकाशं मकृत्यमित्युक्तविषयकाणां वेदितव्यं तदाह स एव । "नामकर्म च जातस्य यथाकालं समाचरेत् । अतिपातेऽपि कुर्वीत प्रशस्ते मासि पुण्यदे" ॥ तथा गर्भाधानपुंसवनसीमन्तोन्नयनानि कार्य्याणि "गर्भे वार्द्धुषि कृत्ये च नाधिमासं विदुर्बुधाः" इति मनुवचनात् । मत्स्यसूक्ते । "भूकम्पादेर्न दोषोऽत्र वृद्धिश्राद्धे कृते सति" । एतदनन्तरं क्षौरं कर्त्तव्यम् । "आज्ञया नरपतेर्द्विजन्मनां दारकर्ममृतसूतकेषु च । बन्धमोक्षमथ दीक्षणेष्वपि क्षौरमिष्टमखिलेषु चोडुषु" इति श्रीपतिरत्नमालोक्तेः । तदनन्तरं कृतोद्वर्त्तस्नाने जामातरि गृहप्राङ्गनमागते तस्य गन्धपुष्पादिवरणम् । दानवाचनान्नारम्भणवरणप्रमाणेषु यजमानं प्रतीयात्" इति हरिशर्म्मधृतवचने वरणप्रदानपरिणयनशुचिपरिकर्म्माभिषेककर्माणि शुभदे तिथौ विलग्ने

न भवन्ति चिरात्स्वल्पपुण्यानामिति दीपिकायाञ्च वरणश्रुतेः। एतदनन्तरं वरकन्ययोः पुष्पमालाद्युत्सवेन साम्प्रत्याचरण-रूपसुखचन्द्रिकामाह हरिवंशे। "आशीर्भिर्वर्द्धयित्वा तु देवर्षिः कृष्णमब्रवीत्। अनिरुद्धस्य वीर्य्याढ्यो विवाहः क्रियतां विभो। जम्बूलमालिकां द्रष्टुं श्रद्धा हि मम जायते"। तामाह हारावली "जम्बूलमालिका कन्या वरयो-र्मुखचन्द्रिका"। दक्षिणात्यास्तु "आसने शयने दाने भोजने वस्त्रसंग्रहे। विवादे च विवाहे च युतं सप्तसु शोभनम्"। मत्स्य-सूक्तं "बलिकर्मणि यात्रायां प्रवेशे नववेश्मनः। महोत्सवे च मङ्गल्ये तत्र स्त्रीणां शुभध्वनिः"। स्त्रीणां ध्वनिः उलुउलुध्वनिः गीतं वा। मत्स्यपुराणम्। "मङ्गल्यानि च वाद्यानि ब्रह्म-घोषञ्च गीतकम्। ऋद्ध्यर्थं कारयेद्विद्वानमङ्गलविनाशनम्"।

अथार्हणम्। तत्र दानात् पूर्वमर्हणमाह मनुः। "आच्छाद्य चार्चयित्वा च श्रुतशीलवते स्वयम्। आहूय दानं कन्याया ब्राह्मो धर्म्मः प्रकीर्त्तितः"। आच्छाद्य रक्तवासोभ्यां कन्यां शुक्लवासोभ्यां वरं परिधाप्य तच्च वरणदत्तवस्त्राभ्यामेव निष्पन्न-मिति न पुनर्दीयते। अर्चयित्वा कन्यामलङ्कारादिना वरञ्च गोभिलोक्तप्रकारादिना। तथा च चतुर्थप्रपाठके दशमका-ण्डिकायां गोभिलः। उत्तरतो गां बध्वाऽवतिष्ठेत् अर्हणा पुत्रवाससा इति अर्हणीयदेशस्योत्तरस्यां दिशि गां स्त्रीगवीम्। पुत्रवाससेति माता रुद्राणामिति मन्त्रलिङ्गात् बध्वा उपस्थानं कुर्य्यात्। तस्या एव गोरन्यस्या अश्रवणात् अर्हणा पुत्रवाससा इति मन्त्रेणार्हणीयानामुपवेशने मन्त्रमाह स एव। इदमह-मिमां पद्यां विराजमन्नाद्यायाधितिष्ठामि इति प्रतिष्ठमानो जपेद् यत्रैवमर्हयन्तः स्युः। इदमहमिति प्रतिष्ठमान ऊर्द्ध्वं स्ति-ष्ठन् जपेत्। जामाता यत्र देशे। एवं जामात्रादिकं अर्हयन्तः

पूजयन्तः सम्प्रदानादिकाः स्युः। तेन इदमहमिति मन्त्रं तिष्ठन् पठित्वा जामाता आसने उपविशति। अर्हणप्रकारमाह स एव। "विष्टरपाद्यार्घ्याचमनीयमधुपर्कान् एकैकशस्त्रिस्त्रिर्निवेदयेरन्निति"। विष्टरस्तु सार्द्धहितयवामावर्त्तवलिताधोमुखाग्रा असंख्यातदर्भाः। तथा च गृह्यासंग्रहः। "ऊर्द्धकेशो भवेद् ब्रह्मा लम्बकेशस्तु विष्टरः। दक्षिणावर्त्तको ब्रह्मा वामावर्त्तस्तु विष्टरः"। इति छन्दोगपरिशिष्टम्। "दर्भसंख्या न विहिता विष्टरास्तरणेष्वपि"। एवञ्च "पञ्चाशद्भिर्भवेद् ब्रह्मा तदर्द्धेन तु विष्टरः"। इति यदि समूलं तदा व्याख्यन्तरीयम्। एतेन विष्टरे पञ्चविंशतिसंख्या भवदेवभट्टोक्ता निरस्ता। एवं विष्टरग्रहणं हस्ताभ्यामपि यदुक्तं तदपि निरस्तम्। "यत्रोपदिश्यते कर्म्म कर्त्तुरङ्गं न चोच्यते। दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः" इति छन्दोगपरिशिष्टात्। पाद्यं पादक्षालनार्थमुदकम्। तथा चामरः। "पाद्यं पादाय वारिणि। अर्घ्यं दध्यक्षतसुमनोयुक्तं जलम्। साक्षतं सुमनोयुक्तमुदकं दधिमिश्रितम्। अर्घ्यं दधिमधुभ्याञ्च मधुपर्को विधीयते"। इति भट्टभाष्यधृतवचनात्। आचमनीयमाचमनार्थमुदकम्। दधिमधुमात्रेण मधुपर्काभिधानं घृतासम्भवपरम्। तत्सम्भवे गोभिलः। मधुपर्कं दधिमधुघृतं पिहितं कांस्यस्थं कांस्येनेति। पूर्ववचने पात्रानुपदेशात् कांस्यपात्रं विनापि मधुपर्को दीयते। तान् पञ्च विष्टरादीन् द्रव्यविशेषान् एकैकशः प्रत्येकं त्रिस्त्रिःप्रतिपादनकालेऽर्हणकर्त्तारो निवेदयेरन् ज्ञापयेयुः। विष्टरादीनि निवेदनीयानि। त्रिरुक्त्वा प्रतिगृह्यतामिति सकृत् सर्वत्र वाक्यशेषं कुर्य्यात्। पाद्या इति अपसम्बन्धात् स्त्रीबहुवचनमिति सरला तत्र। वीक्षणविधौ तन्मन्त्रे च अप इति श्रुत्या ग्रहणे

तथा कल्पनानुपपत्तेः। "पादार्थमुदकं पाद्यं केवलं तोयमेव तत्। तत्तैजसेन पात्रेण शङ्खेनापि निवेदयेत्" इति कालिकापुराणात् "पाद्यं पादाय वारिणि" इत्युक्तेश्च। अतएव भट्टभाष्ये पाद्यं पाद्यं पाद्यमित्युक्तं विवाहानन्तरमर्हणमुक्ता गतेष्वित्येक इति वक्ष्यमाणसूत्रेण गोभिलोऽप्यागमनमात्र एव वरार्हणमुक्तवान्। तत्रैक इत्यनेन बहुवादिसम्मतत्वात् तत्काले वरार्हणं व्यवह्रियते तत्प्रकारमाह। या ओषधीरित्यदश्च विष्टरमास्तीर्य्याप्युपविशति या ओषधीरित्यनया ऋचा। उदञ्च मुदगग्रं विष्टरमास्तीर्य्य उपविशति। पादयोरन्यमधआस्तीर्य्य उपरिपादौ तूष्णीं कुर्य्यादिति सरला। भट्टभाष्ये। ततः पादोपवेशने भवदेवमन्त्रलिखनं प्रमाणशून्यम्। ततः पाद्यजलप्रेक्षणमाह स एव। यतो देवीवित्यपः प्रेक्षेत। यतो देवीरिति मन्त्रेणापः पादप्रक्षालनमुदकं प्रेक्षेत। गोभिलः। "सव्यं पादमवनेनिजे" इति सव्यं पादं प्रक्षालयेत्। "दक्षिणं पादमवनेनिजे" इति दक्षिणं प्रक्षालयेत्। तत्र जलाञ्जलिनिक्षेपं कुर्य्यात् एवं दक्षिणेऽपि। गोभिलः। पूर्वमन्यमपरमन्यमित्युभौ शेषेण पूर्वमन्यमपरमन्यमुभाविति मन्त्रेण पूर्वप्रक्षालनावशिष्टजलाञ्जलिक्षतेन उभयपादप्रक्षालनं कुर्य्यात्। गोभिलः। "अन्नस्य राष्ट्रिरसि" इति इत्यर्घ्यं प्रतिगृह्णीयात् कांस्यपात्रेण दध्यक्षतादियुक्तं जलरूपमर्घ्यम् अन्नस्य राष्ट्रिरसीति मन्त्रेणाञ्जलौ गृहीत्वा शिरसि दद्यात् तथा च भट्टभाष्ये शूलपाणिधृतवचनात्। "कांस्येन वार्हणीयस्य निनयेदर्घ्यमञ्जलौ"। गोभिलः। यशोऽसीत्याचमनीयमाचामेत्। यशोऽसीति मन्त्रमुच्चार्य्याचमनीयं जलमाचामेत्। तच्च सकृन्मन्त्रेण ब्राह्मतीर्थेन भक्षयित्वा द्विस्तूष्णीं भक्षयेत् तत इन्द्रियाण्युपस्पृशेत्। गोभिलः। "यशसो यशोऽसीति मधुपर्कं

गृह्णीयात्"। यशसो यशोऽसीति मन्त्रेण गृह्णीयात्। तथा "यशसो भक्ष्योऽसि महसो भक्ष्योऽसि श्रीभक्ष्योऽसि श्रियं मयि धेहीति" त्रिःपिबेत्। तूष्णीं चतुर्थमिति मन्त्रं प्रतिपानं पठित्वा वारत्रयं पिबेत् चतुर्थममन्त्रकं पिबेत्। इदानीं पानव्यवहाराभावात् जिघ्रति। तत आचम्य गोमोचणं कारयेत्। तथा च गोभिलः। आचान्तोदकाय गौरिति नापितस्त्रिर्ब्रूयात्। मुञ्च गां वरुणपाशाद्द्विषन्तं मेऽभिधेहि इति तं जह्यमुष्य चोभयोरुत्सृज गामत्तु तृणानि पिबतूदकं ब्रूयात्। माता रुद्राणामनुमन्त्रयेदिति"। आचान्तोदकाय कृताचमनाय प्रकृतत्वाद्वराय। सप्तम्यर्थे चतुर्थी तेन वरे आचान्ते नापितः प्रकृताया गोः समीपेऽवस्थितो गौरिति ब्रूयात्। एवं नापितेनोक्ते तं श्रावयति वरो मुञ्च गामित्यादि। अत्र मेऽभिधेहीति शब्दप्रक्षेपात् मेऽभिधेहीति इत्येवप्रयोगः न तु निराकाङ्क्षीकरणाय मोचये बन्धुरिति। अमुष्य इत्यनेन कन्यादातुर्नाम निर्देश इति भट्टभाष्यम्। ततश्च भवदेवभट्टेन यदभिधेहीति अत्रेति पदं न लिखितम् अमुष्येत्यनूहेन लिखितं कन्यादानानन्तरञ्च गौरित्यादि गवामन्त्रणपर्य्यन्तं लिखितं तद्धेयं भट्टभाष्यादिविरोधात् प्रमाणाभावाच्च। अर्हणादित्वेन कन्यादानात् पूर्वमेव गोमोचनस्य युक्तत्वात्। मनुवचने अर्हयित्वेत्यनेन अर्हणानन्तरमेव कन्यादानविरोधाच्च।

अथ विवाहपरिपाटी। तत्र गोभिलः। "पुण्ये नक्षत्रे दारान् कुर्वीत"। पुण्ये दोषरहिते नक्षत्रे ज्योतिःशास्त्रोक्तप्रशस्ते रोहिण्यादौ सपिण्डादिदोषरहितां कन्यां स्वीकारेण दारान् पत्नीं कुर्वीतेति। एवम् "उदगयने आपूर्य्यमाणे पक्षे पुण्येऽहनि प्रागावर्त्तनादह्नः कालं विद्यादिति" तस्यैव सूत्रान्तरेण पुण्येऽहनीत्यनेनैव वारतिथिनक्षत्रयोगानां शुभसूचक-

त्वप्राप्तौ विवाहे पुष्ये नक्षत्रे इति पुनर्विधानमितरापेक्षया नक्षत्रस्य प्राधान्यद्योतनार्थम्। अत्र च विवाहात् पूर्वं ज्ञातिकर्त्तृकसमन्त्रककन्याभिषेकरूपस्य ज्ञातिकर्म्मणो भट्टभाष्येण काम्यत्वाभिधानेन इदानीं तथा नाचरणात् तत्प्रमाणं न लिखितम्। कल्पतरुरत्नाकरयोर्गृह्यपरिशिष्टम्। "कन्यां वरयमाणानामेष धर्म्मो विधीयते। प्रत्यङ्मुखा वरयन्ति प्रतिगृह्णन्ति प्राङ्मुखाः"॥ वरयन्ति गोत्रप्रवराभिधानपूर्वकं ददति प्रतिगृह्णन्तीति श्रवणात्। अतएव "सर्वत्र प्राङ्मुखो दाता गृहीता च उदङ्मुखः। एष एव विधिर्दाने विवाहे च व्यतिक्रमः"॥ इति प्रत्यङ्मुखः सम्प्रदाता प्रतिग्रहीता प्राङ्मुखः। तथा च "प्राङ्मुखायाभिरूपाय वराय शुचिसन्निधौ। दद्यात् प्रत्यङ्मुखः कन्यां क्षणे लक्षणसंयुते" ॥ इति वचनाच्च। भवदेवीयसम्बन्धविवेके प्रवराभिधानमाह भविष्यपुराणम्। "तुलापुरुषदाने च तथैव हाटकाचले। कन्यादाने तथोत्सर्गे कीर्त्तयेत् प्रवरादिकम्"॥ हरिशर्म्मधृतम् आश्वलायनगृह्यपरिशिष्टम्। "शिवदत्तप्रपौत्री ब्रह्मदत्तपौत्री विष्णुदत्तपुत्री यज्ञदत्ता कन्या शिवमित्रप्रपौत्राय राममित्रपौत्राय विष्णुमित्रपुत्राय रुद्रमित्राय तुभ्यं सम्प्रदत्तेति"। सम्प्रदत्ता इत्यत्र दृष्टार्थत्वात् पुंवचसां क्तप्रत्ययार्थो विवक्षितत्वेन सम्प्रददे इत्येवप्रयोगः। तथा च व्यासः। "नामगोत्रे समुच्चार्य्य प्रदद्यात् श्रद्धयान्वितः। परितुष्टेन भावेन तुभ्यं सम्प्रददे इति"॥ स्वगामिफले तुभ्यं सम्प्रददे इति परगामिफले तु अहमस्मै ददानीति एवमाभाष्य दीयते इति छन्दोगपरिशिष्टदर्शनात् ददानीति वाच्यम् उभयपदिदाधातोः फलवत् कर्त्तर्य्यात्मनेपदम् अफलवत् कर्त्तरि परस्मैपदमिति पाणिनिश्रुतेः। अतएव आत्मनेपदपरस्मैपदयोरात्मनेपरस्मै इति समाख्या

सङ्गच्छते। ददानीत्यस्य दद इति वर्त्तमानार्थता। अतएव सकृदाह ददानीति मनुनाप्युक्तं सङ्गच्छते। अनुमतिग्रहणार्थ-प्रार्थनार्थत्वे तु सकृत्त्वाभिधानमप्रयोजकमिति। श्राद्धादौ फलभागिनां गोत्राद्युल्लेखदर्शनात् तदितरत्रापि तदुल्लेखाचारः। छन्दोगपरिशिष्टेऽहं पददर्शनादहं पदप्रयोगोऽपि। एवं श्राद्धे "अमुकामुकगोत्रैतत्तुभ्यमन्नं स्वधा नमः" इति ब्रह्मपुराण-दर्शनात्। देय विशेषणत्वेनैतच्छब्दप्रयोग इति। तत्र कन्या वरकुलयोः पाठक्रमात् ऋष्यशृङ्गोक्तशाब्दक्रमस्य बल-वत्त्वात् वरकुलाभिधानानन्तरं कन्याकुलाभिधानसमाचारः। तथा च हेमाद्रिधृतम् ऋष्यशृङ्गवचनम्। "वरगोत्रं समु-च्चार्य्य प्रपितामहपूर्वकम्। नाम संकीर्त्तयेद्विद्वान् कन्यायाश्चैव मेवहि" ॥ इति धनञ्जयकृतसम्बन्धविवेकपरिशिष्टीयम्। "नान्दीमुखे विवाहे च प्रपितामहपूर्वकम्। वाक्यमुच्चारये-द्विद्वानन्यत्र पितृपूर्वकम्। एतदेव त्रिरुच्चार्य्य कन्यां दद्यात् यथाविधि" ॥ नान्दीसमृद्धिरिति कथ्यते इति ब्रह्मपुराणात् नान्दीमुखे पुत्रादिसमृद्धिप्रधानरूपे विवाहे। विशेषणन्तु विवाहादेव पुत्रादिलाभविशेषज्ञापनाय। चस्त्वर्थं अन्यत्र प्राप्तपित्रादिक्रमव्यवच्छेदाय। नान्दीमुखपदस्य श्राद्धपरत्वे अनेकवचनप्राप्तपितृपूर्वकाभिलापबाधापत्तेश्च। ज्योतिःसार-समुच्चये। विवाहे तु दिवाभागे कन्या स्यात् पुत्रवर्जिता। विवाहानलदग्धा सा नियतं स्वामिघातिनी" ॥ अतएव महाभारते। "रात्रौ दानं न शंसन्ति विना चाभयदक्षिणाम्। विद्यां कन्यां द्विजश्रेष्ठा दीपमन्नं प्रतिश्रयम्"॥ अभयदक्षिणाम् अभयदानम्। प्रतिश्रयः प्रवासिनामाश्रयः। विवाहे रात्रौ दानान्तरमप्याह देवलः। "राहुदर्शनसंक्रान्ति विवाहात्यय-वृद्धिषु। स्नानदानादिकं कुर्य्युर्निशि काम्यव्रतेषु च" ॥ ग्रहादि-

दोषशान्त्यर्थं दानादिकन्तु विवाहात् प्रागेव कर्त्तव्यम्। भगवत्या रुक्मिण्या विवाहे तथा दर्शनात्। तथा च भारते। "चक्रुः सामग्र्ययुर्मन्त्रैर्बध्वा रक्षां द्विजोत्तमाः। पुरोहितोऽथर्ववित्‌ वै जुहाव ग्रहशान्तये॥ हिरण्यरूप्यवासांसि तिलांश्च गुड़मिश्रितान्। प्रादाद्धेनूश्च विप्रेभ्यो राजा विधिविदां वरः"॥ ततो जोटकादिदोषे तत्तत् सूचनीयपापक्षयकाम इति वक्तव्यम्। अतएव दीपिकायां ये ग्रहारिष्टसूचका इत्युक्तम्। संवर्त्तः। "तां दत्त्वा च पिता कन्यां भूषणाच्छादनासनैः। पूजयन् स्वर्गमाप्नोति नित्यमुत्सवहृत्तिषु"॥ विष्णुपुराणञ्च। "विशिष्टफलदा कन्या निष्कामाणां विमुक्तिदा"॥ निष्कामाणां मुक्तिप्रतिकूलकामेन रहितानाम्। तेन विष्णुप्रीतिकामनया दानेन दोषः। "देयानि विप्रमुख्येभ्यो मधुसूदनतुष्टये" इति वामनपुराणे सामान्यतोऽभिधानात्। एवं पितृद्दे शेऽपि दानम्। तथा च विष्णुपुराणीयपितृगाथा। "रत्नवस्त्रमहीयानसर्वभोगादिकं वसु। विभवे सति विप्रेभ्यो योऽस्मानुद्दिश्य दास्यति"॥ याज्ञवल्क्यः। "ब्राह्मो विवाह आहूय दीयते शक्त्यलंकृता। तज्जः पुनात्युभयतः पुरुषानेकविंशतिम्॥ इत्युक्त्वा चरतां धर्मं सह या दीयतेऽर्थिने। सकायः पावयेत्तज्जः षड्वंश्यांश्च सहात्मना"॥ पुनाति पित्रादीन् पापात् नरकाच्च समुद्धरति पुत्रादीन् निष्पापान् जनयति आत्मानमपि निष्पापं करोति। सह धर्मं चरतामिति नियमं कृत्वा कन्या दीयते सकायः कः प्रजापतिर्देवताऽस्येति प्राजापत्यनामक इत्यर्थः। "आच्छाद्य चार्चयित्वा च श्रुतशीलवते स्वयम्। आहूय दानं कन्याया ब्राह्मो धर्मः प्रकीर्त्तितः"। अत्र यद्दानपदं तद्दीयते यस्मै ग्रहणाय इति व्युत्पत्त्या कृत्यल्युटो बहुलमिति ल्युटासिद्धमिति ग्रहणपरं न तु भाव-

साधनं तथात्वे दातुरेव विवाहकर्त्तृत्वापत्तेः। अत्र प्रत्ययार्थ-ग्रहणनिमित्तीभूत-प्रकृत्यर्थत्यागेन सहैककर्त्तृकत्वमाह्वानस्य स्थितादिपदाध्याहारेण वा व्यक्तम्। हरिवंशीयत्रिशङ्कूपाख्याने। "पाणिग्रहणमन्त्राणां विघ्नं चक्रे सदुर्मतिः। येन भार्य्या हृता पूर्वं कृतोद्वाहा परस्य वै"॥ कृतोद्वाहा भार्य्या पाणिग्रहात् पूर्वं कृतेत्यर्थः। एवं "पाणिग्रहिका मन्त्रा नियतं दारलक्षणम्। तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे"॥ इति मनुवचनं विवाहगतसंस्कारविशेषार्थम् अतएव निष्ठेत्युक्तम्। तथा च रत्नाकरः। "पाणिग्रहणिका मन्त्रा विवाहकर्म्माङ्गभूताः" इति मनुः। "ज्ञातिभ्यो द्रविणं दत्त्वा कन्यायै चैव शक्तितः। कन्याप्रदानं स्वाच्छन्द्यादासुरो धर्म उच्यते" इति। कन्याप्रदानं कन्यायाः स्वीकरणमिति कुल्लूकभट्टः। स्वाच्छन्द्यात् स्वेच्छया। दानाधिकारमाह याज्ञवल्क्यः। "पिता पितामहो भ्राता सकुल्यो जननी तथा। कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः। अप्रयच्छन् समाप्नोति भ्रूणहत्या मृतावृतौ। गम्यन्त्वभावे दातॄणां कन्या कुर्य्यात् स्वयंवरं" तथेत्यनेन नारदोक्त मातामहाद्याः सूचिताः। तथा च नारदः। "पिता दद्यात् स्वयं कन्यां भ्राता वानुमतः पितुः। मातामहो मातुलश्च सकुल्यो बान्धवस्तथा। माता त्वभावे सर्वेषां प्रकृतौ यदि वर्त्तते। तस्यामप्रकृतिस्थायां कन्यां दद्युः सनाभयः"। बान्धवः पितामहः याज्ञवल्क्यैकवाक्यत्वात्। अत्र सकुल्यमातामहयोर्नारदोक्त क्रमो न ग्राह्यः पाठक्रमाच्छाब्दक्रमस्य बलवत्त्वात्। तस्यामित्यनेन मातुरुपस्थितत्वात्। सनाभय इत्यनेन मातामहमातुलेतरसकुल्य उच्यते। प्रकृतिस्थः पातित्यादिदोषरहितः। देयद्रव्यस्य प्रेक्षणस्पर्शनं आह हारीतः। "तस्मादद्भिरवोक्ष्य दद्यादालभ्य चेति"। कालिकापुराणम्।

"यस्य यद्दीयते वस्त्रमलङ्कारादि किञ्चन। तेषां दैवतमुच्चार्य्य कृत्वा प्रोक्षणपूजने"। सम्प्रदानार्चनमाह मनुः। "योऽर्चितं प्रतिगृह्णाति दद्यादर्चितमेव वा। तावुभौ गच्छतः स्वर्गं नरकन्तु विपर्य्यये"। योऽर्चापूर्वकमेव ददाति यश्च प्रतिग्रहीताऽर्चापूर्वकमेव दातुः प्रतिगृह्णाति तावुभौ स्वर्गं गच्छतः। अनर्चितदानप्रतिग्रहणे तु नरकमिति कुल्लूकभट्टः। ततश्चार्चितमित्यस्य क्रियाविशेषणत्वात् पुरुषार्चापि प्रतीयते। अतएव देयब्राह्मणौ संपूज्य दद्यादिति मैथिलैरुक्तम्। सम्प्रदानकरे जलपूर्वकं दानमाहापस्तम्बः। "सर्वाण्युदकपूर्वाणि दानानीति"। गौतमः। "अन्तर्जानुकरं कृत्वा सकुशन्तु तिलोदकम्। फलाग्रमभिसन्धाय प्रदद्यात् श्रद्धयान्वितः"। कन्याया दैवतं प्रतिग्रहप्रकारमाह विष्णुधर्मोत्तरम्। "कन्यादासस्तथा दासी प्राजापत्याः प्रकीर्त्तिताः"। प्राजापत्याः प्रजापतिदैवताकाः तथा "भूमेः प्रतिग्रहं कुर्य्यात् भूमेः कृत्वा प्रदक्षिणम्। करे गृह्य तथा कन्यां दासीदासौ द्विजोत्तमाः"। करे गृह्य करं गृहीत्वा। तदाहादित्यपुराणम्। "ओङ्कारमुच्चरन् प्राज्ञो द्रविणं यत्नमोदनम्। गृह्णीयाद्दक्षिणे हस्ते तदन्ते स्वस्ति कीर्त्तयेत्"। ओङ्कारस्य स्वीकारार्थत्वात् तेनैवात्र ग्रहणमुक्तम्। तथा च ओमित्यभ्युपगमे इति शाब्दिकाः स्वस्तीति दात्रभिमतलाभाविष्काराथम्। तथा चामरः स्वस्त्याशीः क्षेमपुण्यादाविति" मार्कण्डेयपुराणम्। "दातुरिष्टमभिध्यायन् प्रतिगृह्णादलोलुपः"। विष्णुधर्मोत्तरे। "द्रव्यस्य नाम गृह्णीयाद्ददानीति ततो वदेत्। तोयं दद्यात्तथा दाता दाने विधिरयं स्मृतः। प्रतिग्रहीता सावित्रीं सर्वत्रैव च कीर्त्तयेत्। ततस्तु सार्द्धं द्रव्येण तस्य द्रव्यस्य दैवतम्। समापयेत्ततः पश्चात् कामस्तुत्या प्रतिग्रहम्"। व्यासः। "श्रद्धा-

युक्तः शुचिर्दान्तो दानं दद्यात् सदक्षिणम् । अदक्षिणन्तु यद्दानं तत्सर्वं निष्फलं भवेत् । दक्षिणाभिरुपेतं हि कर्म्म सिध्यति मानवे । सुवर्णमेव सर्वासु दक्षिणासु विधीयते" । सुवर्णं काञ्चनमात्रं नपुंसकनिर्देशात् ।

अथ पाणिग्रहणम् । तत्र गोभिलः । "पाणिग्रहणे पुरस्ताच्छालाया उपलिप्तेऽग्निरुपसमाहितो भवति" । पाणिग्रहणे कर्त्तव्ये गृहसमीपदेश उपसमाहितः स्थण्डिले रेखादि विरूपाक्षजपान्तं कर्म कृत्वा प्रकृतकर्मार्थं योजकनाम्नावाहनेन समाहितोऽग्निर्भवति । गोभिलः । "अथ जन्यानामेको ध्रुवाणामपां कलसं पूरयित्वा सहोदकुम्भः प्रावृतो वाग्यतोऽग्रेणाग्निं परिक्रम्य दक्षिणत उदङ्मुखोऽवतिष्ठते" । अग्निस्थापनानन्तरं वरस्य सहायानां मध्ये एकोऽगाधजलेन घटं पूरयित्वा गृहीतकुम्भो वस्त्राच्छादितदेहः प्रदक्षिणेनाग्निं वेष्टयित्वाऽग्निब्रह्मणोर्दक्षिणस्यान्दिशि उदङ्मुखोऽवतिष्ठते" । अवपूर्वस्तिष्ठतिरनुपविष्टतां बोधयति गोभिलः । "प्राजनेनान्यः" इति । प्रतोदेन सह कुम्भधारिवदागत्य कुम्भधारिणः प्रागन्योऽवतिष्ठते । गोभिलः "शमीपलाशमिश्रान् लाजांश्चतुरञ्जलिमात्रान् सूर्पेणोपसादयन्ति पश्चादग्नेः" इति । शमीछदपत्रमिश्रितान् चतुरञ्जलिपरिमितान् लाजान् अग्नेः पश्चात् सूर्पस्थान् स्थापयन्ति बहुवचनात् कर्त्तुरनियमः । "अक्षतास्तु यवाः प्रोक्ता धाना भृष्टा भवन्ति ते । भृष्टास्तु व्रीहयो लाजा घटीखण्डिक उच्यते" । गोभिलः । तथा दृशत् पुत्रश्च । दृशत् शिला पेषणाधाररूपा पुत्रः पेषणकरणरूपप्रस्तरस्तदुभयं पूर्ववदुपसादयन्तीत्यर्थः ।

अथ यस्याः पाणिं ग्रहीष्यन् भवति सशिरस्का साप्लुता भवति । यस्याः कन्याया जामाता पाणिं ग्रहीष्यन् भवति

पाणिग्रहणं करिष्यतीत्यर्थः। अथ तदारम्भदिने चारोहणाना-नन्तरम् अविधवाहृतमङ्गलोदकैः सा स्नाता भवति तथा आहु-तेन वसनेन पतिः परिदध्यात् या अकृन्तन्नित्येतयर्चा। आहत-स्वरूपमाह। "ईषद्धौतं नवं शुभ्रं सदशं यन्न धारितम्। आहतं तद्विजानीयात् सर्वकर्मसु पावनम्"। ईषत् सूक्ष्मम्। न धारितं न परिहितम् एवंभूतेन वस्त्रेण या अकृन्तादिति मन्त्रेण परिधत्स्वेति श्रुतेः परिदध्यादित्यन्तर्भूतणिजर्थः। तेन परिधापयेदित्यर्थः। एवञ्च परिधापनानुरोधेन वध्वा उत्थि-तत्वं प्रतीयते। अतएव कटबर्हिषोर्मध्ये प्रापणानन्तरं वर-दक्षिणे उपविशतीत्युक्तम्। एतदधरीयवस्त्रपरिधापने उत्तरत्र प्रावृतमित्यनेनोत्तरीयलाभात् स्त्रीपरिधाने शुक्लमित्यविव-क्षितम्। "धारयेदथ रक्तानि नारी चेत् पतिसंयुता। विधवा च न रक्तानि कुमारी शुक्लवाससी" इति मत्स्यपुराणात्। परि-धानप्रकारमाहतुः शङ्खलिखितौ। "न नाभिं दर्शयेत् कुल-वधूरागुल्फाभ्यां व्यासः परिदध्यात् न स्तनौ विवृतौ कुर्य्यात्" इति। वासो विन्यासविशेषस्तु तत्तद्देशाचारादवगन्तव्यः। रत्नाकरोऽप्येवम्। गोभिलः। "परिधत्तधत्तवाससेति प्रावृतां यज्ञोपवीतिनीम् अभ्युदानयन् जपेत् सोमोऽददद्गन्धर्वायेति"। प्रावृतां यज्ञोपवीतिनीं यज्ञोपवीतवत् कृतोत्तरीयपरि-धानात्। तथोक्तं विद्याकरवाजपेयिधृतवचनेन यथा स्मृतिः। "यथा यज्ञोपवीतञ्च धार्य्यते च द्विजोत्तमैः। तथा सन्धार्य्यते यत्नादुत्तराच्छादनं शुभम्"। न तु यज्ञोपवीतिनीमित्यनेन स्त्रीणामपि कर्माङ्गत्वेन यज्ञो-पवीतधारणमिति हरिशर्मोक्तं युक्तम्। स्त्रीणां यज्ञोप-वीतधारणानुपपत्तेः सरलाभट्टभाष्ययोरप्येवम्। ततो वधू-र्दक्षिणश्रवणं स्पृशेत्। "क्षुते निष्ठीविते वान्ते परिधानेऽश्रु-

मोचने। कर्म्मस्थ एषु नाचामेत् दक्षिणं श्रवणं स्पृशेत्" इति स्मृतेः। अभ्युदानयन् अग्नेरभिमुखीमानयन् जपेत्। सोमिऽर्ददिति मन्त्रं पतिः पठेत्। गोभिलः। "पश्चादग्नेः संवेष्टितं कटमेवं जातीयं वान्यं पदा प्रेरयन्तीं वाचयेत्। प्रमे पतियानः पन्थाः कल्पतामिति"॥ अग्नेः पश्चाद्वीरणरचितं कटं तज्जातीयमन्यग्रथितं वा वस्त्राच्छादितं पादेन प्रेरयन्तीं वधूं प्रमे पतियान इति वाचयेत् पतिः। स्वयं जपेदजपन्त्यां प्राप्या इति वर्हिषोऽन्तं कटान्तं प्रापयेत्। पूर्वकटान्ते दक्षिणतः पाणिग्राहस्योपविशति। प्रमे इति मन्त्रं वाक्यात् लज्जया वाऽजपान्त्यां वध्वां स्वयमेव पतिः पूर्वमेव मन्त्र प्रमे इति स्थाने प्राप्या इत्यूहं कृत्वा जपति। अन्तशब्दः समीपवचनः। तेन कटवर्हिषोः समीपदेशम् अन्तरालरूपं प्रापयेत्। पत्युर्दक्षिणतः कटस्य पूर्वभागे कन्या उपविशति। दक्षिणेन पाणिना दक्षिणमंशमन्वारब्धायाः षड़ाज्याहुतीर्जुहोति अग्निरेतु प्रथम इत्येतत् प्रभृतिभिरिति। अन्वारब्धाया इति कर्त्तरि क्तः। सप्तम्यर्थे षष्ठी। तेन पत्युर्दक्षिणस्कन्धं दक्षिणहस्तेनान्वारब्धायां संलग्नायां सत्याम् अग्निरेतु इत्यादि षड्भिर्मन्त्रैः षड़ाज्याहुतीर्जुहोति वरः महाव्याहृतिभिः पृथक्समस्ताभिश्चतुर्थीं महाव्याहृतिभिर्भूर्भुवः स्वरिति तिसृभिः प्रत्येकमाज्याहुतीर्जुहुयात्। हुत्वोपेत्य अवतिष्ठत इति हवनानन्तरम् उपेत्याञ्जलिं बध्वा वधूवरावुपतिष्ठतः। अंशस्पर्शनात् कन्यायाः होमानुकूल चेष्टावत्त्वात् समानकर्त्तृकत्वेन क्त्वा। अनुपृष्ठं पतिः परिक्रम्य दक्षिणत उदङ्मुखोऽवतिष्ठते बध्वञ्जलिं गृहीत्वा। अनुपृष्ठं पृष्ठं लक्षीकृत्य परिक्रम्य गत्वा तेन कन्यायाः पश्चाद्गमना तस्या दक्षिणं गत्वा वध्वञ्जलिं दक्षिणहस्तेन गृहीत्वा उदङ्मुखोऽवतिष्ठेत्। एषोऽञ्जलिः ग्रहणपर्य्यन्तं

स्थास्यति एतेन कन्यायाः प्राङ्मुखत्वमायाति। ततश्चाञ्जल्या लभनान्तरं पाणिग्रहणपर्य्यन्तं कन्यालभनं पतिर्न त्यजेत्। तथा च भट्टभाष्यधृतं गृह्यान्तरम्। "हुत्वाज्यमथ जायाया-मन्वारभ्याञ्जलिम्पतिः। न विमुञ्चेदनापत्सु यावत् पाणिग्रहो जपः" इति। "पूर्वा माता लाजानादाय भ्राता वा वधू-माक्रामयेत्। अश्मानं दक्षिणेन प्रपदेन पाणिग्रहो जपति इममश्मानमारोह इति"। पूर्वदेशस्थाया वध्वा एव माता तथैव भ्राता अन्यो वा ब्राह्मणः प्रागासादितान् लाजान् सूर्प-स्थान् गृहीत्वा वधूं दृषत्पुत्र दक्षिणपदाग्रेण क्रामयेत्। तदाक्रामणकाले इममश्मानमारोह इति। वरो जपेत्। सकृत् संगृहीतं लाजाञ्जलिं भ्राता वध्वञ्जलावावपति तं सोपस्तीर्णाभिघारितमग्नौ जुहोत्यवच्छिन्दत्यञ्जलिम् इयं नार्य्युपब्रूते इति एकवारम् अविक्षेपेण सम्यग्गृहीतं लाजाञ्जलिं वध्वञ्जलौ उपस्तीर्णाभिघारितमिति सिद्धये उपस्तरणाय वरो घृतस्रुवं वध्वञ्जलौ ददातीति। ततो वध्वा माताभ्राताऽन्यो वा ब्राह्मणो लाजान् ददाति तदुपर्य्यभिघारणाय घृतस्रुवद्वयं ददाति वरः" इति। चतुरावर्त्तपक्षे भृगुगोत्रो भार्गवप्रवर-श्चेत्तदा पञ्चावर्त्ताय उपस्तरणे घृतस्रुवद्वयमिति विशेषः। एवमुपस्तीर्णाभिघारितं लाजाञ्जलिभेदमकुर्वतो वरेण इय-मिति मन्त्रलिङ्गादि यं नार्य्युपब्रूते इति पठिते वधूः सुसमिद्धे-ऽग्नौ जुहुयात्। अर्य्यमणं नुदेवं पूषणमित्युत्तरयोः। उत्तरयो-स्तथाविधयोर्लाजहोमयोः। अर्य्यमणं नुदेवं पूषणं नुदेव-मित्येतौ मन्त्रौ यथासंख्यं नियोक्तव्यौ हुते पतिर्यथेतं परिक्रम्य प्रदक्षिणमग्निं परिणयति मन्त्रवान् वा ब्राह्मणः कन्यला पित्रभ्य इति"। हुते लाजाञ्जलौ मन्त्रवान् ब्राह्मणः पतिर्यथा-पूर्वम् इतं गतं तथैव परिक्रम्य वध्वाः पश्चिमेन प्रत्याहृत्य

प्रदक्षिणं यथा स्यात्तथा यातीति। मन्त्रलिङ्गाय कन्यला पितृभ्य इति मन्त्रं पठन् मधूमग्निं परिणयति परिसर्वतो-भावेन नयेत् प्रदक्षिणं कारयेदित्यर्थः। यत्तु सरलायां पत्यु-रशक्तौ अधीतवेदोऽन्यो वा परिणयतीत्युक्तं तन्मन्त्रलिङ्गविरो-धादप्रवदारापरिग्रहीतत्वाच्च हेयम्। अत्राग्निप्रदक्षिणे ला-जादीनां प्रदक्षिणमाह भट्टभाष्यधृता स्मृतिः। "लाजानाज्यं स्रुवं कुम्भं प्राजनाश्मानमेव च। प्रदक्षिणानि कुर्य्यातां दम्पतीनविनाग्निकम्" ॥ परिणीता तथैवावतिष्ठते यथा-क्रामति तथा जपति तथावपति तथा जुहोति एवं त्रिःपरि-णीता वधूस्तथैवानुपृष्ठगमनेन भर्त्रा गृहीताञ्जलिका प्राङ्मुखी अवतिष्ठते। तथैव यथापूर्वं तेनैव प्रकारेणाक्रामति अश्मानं दक्षिणप्रपदेन तथा जपति पाणिग्रहे इममश्मानमिति तथा-वपति वध्वञ्जलौ सकृद्गृहीतलाजानामञ्जलिं तथा जुहोति उपस्तीर्णाभिघारितम् अविच्छिन्दत्यञ्जलिम् एवमनेन प्रका-रेण त्रिकृत्वः प्रथमेन सह त्रित्वम्। उत्तरयोरित्यनेन द्वयोरेव मन्त्रोपदेशात्। सूर्पेण शेषमग्नावावाप्य प्रागुदीचीमत्युत्-क्रामन्त्येकमिष इति दक्षिणेन प्रक्रम्य सव्येनानुक्रामन्तौ ताञ्चा-क्रममाणां पतिर्मा सव्येन दक्षिणमाक्रमेति ब्रूयात्। एवं सप्तपदाक्रमणे पाणिग्राहस्तथैवावतिष्ठते इति। सूर्पस्योत्तरार्द्धे घृतस्रुवं दत्त्वा तदुपरि लाजशेषं निधाय तदुपरि घृतस्रुवद्वय-मिति चतुरावर्त्तपक्षे। पञ्चावर्त्तपक्षे तु स्रुवद्वयोपरि लाज-शेषदानमिति शेषः। ततश्च। अग्नये स्विष्टिकृते स्वाहेति सूर्पेण जुहुयात् एतदनन्तरं सरलोक्तं वामदेव्यगानं न युक्तं प्रमाणानुपदेशात्। लाजक्षेपानन्तरं प्रागुदीचीदिशमाभि-मुख्येन दक्षिणपादपुरःसरेण गच्छ मावामपुरःसरेणेत्युक्त्वा एक-मिष इत्यादिसप्तभिर्मन्त्रैर्यथाक्रमं सप्तसु स्थानेषु वधूर्दक्षिण-

पादेन गत्वा तद्देशे वामपादेन न गच्छेत्। एवं षट्सु स्थानेषु मन्त्रेज्जामाता। एतदनन्तरं सखा सप्तपदीत्यनेन प्रार्थनं भवदेवभट्टोक्तं गुणविष्णुनापि लिखितो मन्त्रो व्याख्यातश्च ईक्षकान् प्रति मन्त्रयते सुमङ्गलीरियं वधूरिति विवाहं द्रष्टुमागतान् सुमङ्गलीरिति मन्त्रेण जामाता प्रार्थयेत्। अपरेणाग्निमौदकोऽनुसंव्रज्य पाणिग्राहं मूर्द्धदेशेऽवसिञ्चति तथेतरां समञ्जन्तु इत्येतयर्चा। औदको गृहीतोदककुम्भः पूर्वस्थापितः सोऽग्नेः प्रादक्षिण्येन पश्चादागत्य समञ्जयन्त्वेतया ऋचा मन्त्रलिङ्गाद्दरेण जप्यमानया मन्त्रान्ते कर्मादिसन्निपात इति न्यायात् मन्त्रान्तरमभिषिञ्चेत् तथा तेनैव प्रकारेण भेदोपादानेन इतरां वरेतरां वधूं पृथगभिषिञ्चेत् इतरयासमस्याभिधानं स्यात्। तथाच गृह्यसूत्रम्। भेदे मन्त्रावृत्तिरसन्निपातत्वात् एवमेव भट्टभाष्यम्। एतेन करणमन्त्रत्वात् कुम्भधारिणोऽयं पाठ्यः न सिच्यमानस्य माविति तु युवयोरित्यर्थे छान्दसो व्यत्ययः इति सरलोक्तं मन्त्रलिङ्गाद्दर एवाभिषिञ्चतीति वीरेश्वरोक्तञ्च नोपादेयं व्यवहारविरोधात्। अवसिक्तायाः सव्येन पाणिनाञ्जलिमुपोद्गृह्य दक्षिणेन पाणिना दक्षिणं पाणिं साङ्गुष्ठमुत्तानं गृहीत्वा एताः षट्पाणिग्रहणीया जपति गृभ्णामि त इति। कन्यावसेचनस्य प्राक् प्राप्तत्वेनावसिक्ताया इति पुनरुपादानम् अवसेचनस्थानस्थाया एव हस्तग्रहणार्थम्। उपउद्गृह्य उपसामीप्ये तेन मणिबन्धसमीपे ग्रहणमर्यादामेन उत्तरतः साङ्गुष्ठदक्षिणस्य दक्षिणेन ग्रहणाभिधानात्। उद्गृह्याञ्जलिसक्ताग्राद्दक्षिणपाणिं विच्छिद्य वध्वा उत्तानं साङ्गुष्ठं दक्षिणं पाणिं दक्षिणेन पाणिना गृहीत्वा गृभ्णामि ते इत्यादि षडृचः पतिर्जपति। साङ्गुष्ठमित्यनेन तर्जन्यादीनां ग्रहणम् उत्तानमित्यनेन करस्य पृष्ठग्रहणं प्रतीयते। समासासूद्दहन्ति प्रागुदीच्यां

दिशि ब्राह्मणकुलमभिरूपम्। समस्तासु पाणिग्रहणक्रियासु सतीषु ऐशान्यां दिश्यवस्थितं विद्यातपःसंयुक्तं ब्राह्मणकुलं वधूमुत्थाप्य नयेयुः तदभावे स्थानान्तरस्थितं तदभावे वेद्यवस्थितम्। तथा च गृह्यान्तरम्। अथोत्तरविवाहः प्रागुदीच्यामन्यत्र वा ब्राह्मणकुलं मन्त्रवदीति वेद्यां वेति। भट्टभाष्येऽप्येवम्। इदानीन्तु गोभिलोक्त ब्राह्मणगृहगमनाभावात् भवदेवेन तथा न लिखितं किन्तु वेदिस्थब्राह्मणसमीपस्यापि शास्त्रार्थत्वात् सुकरत्वाच्च तत्कर्म्म युज्यते तत्राग्निरूपसमाहितो भवति। लक्षणं कृत्वा तत्र ब्राह्मणगृहे अभ्युक्षरः स्थापितो भवति तत्रैव वक्ष्यमाणं कर्म्म कुर्य्यात्। इदानीन्तु तथाविधानाचरणात् वेद्यामेव पूर्व्वस्थापिताग्नेः पश्चात् कर्म्म कर्त्तव्यं न लग्न्यन्तरस्थापनम्। तथा च भट्टभाष्ये। वेद्यामेव चेत्तन्त्रेण स्यात्। ततश्च गणेष्वेकं परिसमूहनमिति वचनात् प्रधानमेव तत् कुर्य्यादित्युक्तम्। अपरेणाग्निमानडुहं लोहितं चर्म्म प्राग्ग्रीवमुत्तरलोमास्तीर्णं भवति। अग्नेः पश्चाद्दिशि रक्तं प्राग्ग्रीवं पूर्व्वशिरस्कम् उपरि लोमवृषचर्म्म उपवेशनार्थमास्तृतं भवति लोहिताभावेऽन्यवर्णमपि चर्म्मणः प्राधान्यात् तस्य गुणत्वादिति भट्टभाष्यम्। इदानीन्तु "यत्राधर्म्मश्चतुष्पादः स्याद्धर्मः पादविग्रहः। कामिनस्तमसाच्छन्ना जायन्ते यत्र मानवाः। अहङ्कारगृहीताश्च प्रक्षीणस्नेहबान्धवाः। विप्राः शूद्रसमाचाराः सन्ति सर्व्वे कलौ युगे"। इति मत्स्यपुराणोक्त कलियुगस्वभावेन सम्यग्धर्माचरणरहितेनापि चर्मोपवेशनाद्यङ्गाभावेऽपि कर्म्मणः प्राधान्यादाज्यहोमादिकं क्रियते। गोभिलः। "तस्मिन्नेनां वाग्यतामुपवेशयन्ति सा खल्वस्तु एवमानस्त्वदर्शनात्"। प्रोक्ते नक्षत्रे षड़ाज्याहुतीर्जुहोति लेखासन्धिष्वेतत् प्रभृतिभिः। आहुते

७६

राहुतेस्तु सम्पातं मूर्ध्नि वध्वा अवनयेत्। आहुतेराहुती-हुतायाः स्रुवात् संलग्नः पततीति"। सम्पातोऽत्र घृतविन्दुः तं प्रतिवारं वध्वा शिरसि निदध्यात्। हुत्वोत्थाय उपनिष्क्रम्य ध्रुवं दर्शयति। ध्रुवमसि ध्रुवाहं पतिकुले भूयासम् अमुष्यासाविति पतिनाम गृह्णीयादात्मनश्च। प्रकृतहोमानन्तरं परिवृताद्बहिर्वधूं नीत्वा ध्रुवमसीति मन्त्रं पाठयन्। ध्रुवं नक्षत्रविशेषं दर्शयति पतिः। अमुष्यासाविति अत्र षष्ठ्यन्तप्रथमान्तत्वेन पत्युरात्मनामोच्चारयेत् अरुन्धतीच रुन्धाहमस्मीति। एवञ्च सप्तर्षिनिकटवर्त्तिनीं सूक्ष्मां तारां रुन्धाहमस्मीति मात्रमन्त्रेण पश्येत्। न तु प्रागुक्तवदूहितेन। अथैनामनुमन्त्रयते ध्रुवाद्यौरित्येतयर्चा। अरुन्धती दर्शनानन्तरं ध्रुवाद्यौरिति पत्नीं वोधयेत् पतिः। अनुमन्त्रिता गुरुं गोत्रेणाभिवादयेत् सोऽस्यावाग्विसर्गः। गुरुं पतिं "पतिरेको गुरुः स्त्रीणाम्" इति वचनात्। गोत्रेण पतिगोत्रेण "स्वगोत्राद्भ्रश्यते नारी विवाहात् सप्तमे पदे। पतिगोत्रेण कर्त्तव्या तस्याः पिण्डोदकक्रिया" इति वचनात्। एतेन पितृगोत्रेण भर्त्तुरभिवादनं सरला भवदेवभट्टाभ्यामुक्तं हेयम्। अभिवादयेत् मनूक्तप्रकारेणाभिवादनं कुर्य्यात्। अभिवादने प्रत्यभिवादनस्यावश्यकत्वात् तदुक्तं प्रत्यभिवादनमपि क्रियते। तथा च मनुः। "अभिवादात् परं विप्रो ज्यायांसमभिवादयन्। असौ नामाहमस्मीति स्वं नाम परिकीर्त्तयेत्। भोःशब्दं कीर्त्तयेदन्ते स्वस्य नाम्नोऽभिवादने। नाम्नां स्वरूपभावो हि भोभावो ऋषिभिः स्मृतः। आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने। अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः"। अभिवादात् परं भो अभिवादये इत्युच्चारणानन्तरममुकोऽहमस्मीत्यत्र स्वकीयं नाम परिसर्वतोभावेन देवशर्म-

पुत्रेण कीर्त्तयेत्। अत्राभिवादये इति विशेषलाभो गोतमवचनात् यथा स्वं नाम प्रयोज्याह स्वयमभिवादय इति। अथायमित्यभिधानात् मनुवचनेऽयमित्यर्थेऽस्मीत्यव्ययं तेनाहमस्मीत्यव्ययं पुरोवर्त्तीत्यर्थः। एवञ्चाभिवादात् परमित्यनेनाभिवादय इत्यनन्तरप्राप्तस्य नामकीर्त्तनस्य मनूक्तस्य विरोधाद्गोतमोक्ताभिवादय इत्यन्तपाठो न ग्राह्यः। "वेदार्थोपनिबन्धृत्वात् प्राधान्यं हि मनोः स्मृतम्। मन्वर्थविपरीता या सा स्मृतिर्न प्रशस्यते" इति बृहस्पतिवचनात् ततश्च कुल्लूकभट्टशूलपाण्युपाध्यायप्रभृतिभिः स्वनामादावभिवादय इति लिखितं युक्तम्। सरलाभवदेवभट्टप्रभृतिभिरन्ते लिखितं हेयम्। अभिवादने क्रियमाणे स्वीयनाम्नोऽस्मीत्यस्यान्ते समीपेऽभिवाद्य सम्बोधनाय भोःशब्दं कीर्त्तयेद् यतः। संबोध्यनाम्नां स्वरूपभावः प्रवृत्तिनिमित्तम् आत्मामात्रनिष्ठो यो धर्मः स एव भोभावः भोःशब्दस्य प्रवृत्तिनिमित्तधर्मो मुनिभिरुक्तः तेन संबोध्यनामस्थानीयं भोरिति। ततश्चाभिवादयेत्वामसुकशर्माहमस्मि भो इत्यादिकं प्रयोज्यम् आयुष्मानित्यभिवादने कृते प्रत्यभिवादयित्वा अभिवाद्यायुष्मान् भव सौम्येति वाच्यः अस्य संबोध्यमानस्य नाम्नः शर्मादियुक्तस्यान्ते यः स्वरः स पूर्वाक्षरः न विच्छिन्नो वर्णागमः स एव प्लुतो वाच्यः त्रिमात्रकोऽनेनोच्चार्य्यः। "एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते। त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनञ्चार्द्धमात्रकम्" इत्युक्तेः। तेनायुष्मान् भव सौम्यामुकदेवशर्म्मन् एवमेव कुल्लूकभट्टः। एवञ्चाभिवादनेऽस्मीत्यस्य प्रत्यभिवादने च सौम्येत्यस्य नाम्नश्च यदनभिधानं भवदेवभट्टग्रन्थे तन्न युक्तम्। मनुविरोधात्। अभिवादने यः पादग्रहणविन्यासविशेषो मनुना विहितः स इह वध्यस्तथानाचरणान्नाभिहितः। सोऽस्याबाग्विसर्गः स

एवाभिवाद एवास्या वध्वः वाग्विसर्गः वाक्प्रसरणं तस्मात् पूर्वं मौनम् इदानीं मौनत्याग इति तावुभौ ततः प्रभृति त्रिरात्र-मक्षारलवणाशिनौ ब्रह्मचारिणौ भूमौ सह शयीयाताम्। विवाहात् प्रभृति दम्पती दिनत्रयं क्षारलवणवर्जितं भुञ्जानौ मैथुनमकुर्वाणौ सहैव शयीयातां भूमाविति खट्वादेः प्रतिषेधार्थं न तु प्रस्तरकम्बलादीनामपीति। अथार्हणमित्याहुः। अस्मिन्न-वसरे कन्या पित्रा विष्टरादिदाने नार्हणं कर्त्तव्यं स्वागतेष्वित्येके विवाहार्थमागतमात्रेष्वेवार्हणमित्येके इदानीं बहुवादिसम्मत-मेव व्यवह्रियते। हविष्यान्नं प्रथमं परिजपितं भुञ्जीत। तत्र श्वशुरगृहे यदन्नं प्रथमं भुञ्जीत तन्माषकोद्रवादिरहितं वक्ष्य-माणान्नपाशेनेति मन्त्रेणाभिमन्त्रितं श्वो भूते वा समशनीयं स्थालीपाकं कुर्वीत। यदि विवाहे यज्ञादिना महानिशा भूता तत्परदिने सम्यगशनार्थं क्रियते इति समशनीयं स्थालीपाकं कुर्वीत। तस्य देवताग्निः प्रजापतिर्विश्वेदेवा अनुमतिरिति। तस्य समशनीयस्थाल्याख्या देवताः। असमासकरणं पृथङ्निर्वा-पहोमार्थं मिश्रणेन चायं होमः बहुदैवतत्वात् देवदत्तविशेषस्यैव भोजनीयत्वात् होमदेवतानां प्राधान्यात् त्रिःप्रक्षालनम् उद्धृत्य स्थालीपाकं व्युह्यैकदेशं पाणिनाभिमृषेदन्नपाशेन मनुनेति। उद्धृत्य पात्रान्तरे कृत्वा स्थालीपाकशेषं व्युह्यान्यपात्रे निधाय एकदेशं न सर्वमपि भाण्डस्थितमिति अन्नपाशेन मनुनेति मन्त्रत्रयेण असावित्यत्र सम्बोधनविभक्त्या भार्य्या नाम प्रयोज्यमिति भट्टनारायणैरुक्तम्। ततश्च यदसावित्येव भव-देवभट्टेनानूहेन मन्त्रेणोक्तं गुण-विष्णुनाऽसावित्यहमिति व्याख्यातं तदयुक्तं भट्टभाष्यविरोधात् त्वेति युष्मत्पदप्रयोगात् सम्बोधनार्थं वधूनामप्रयोगस्य युक्तत्वाच्च। किन्त्विदानीं सम-शनीयचरुहोमाकरणाद्भवदेवभट्टेन न समशनीयचरुहोमादिकं

लिखितं मयापि प्रयोगेन लिखनीयमिति। भुक्तोच्छिष्टं वध्वै प्रदाय यथार्थं गौर्दक्षिणा इति पतिः परिजपितमन्नं स्वयं किञ्चिद्भुक्त्वा उच्छिष्टमुच्चरितं वध्वै जायायै प्रदाय दत्त्वा तदर्थमन्यदपि भुक्त्वाचम्य यथार्थं वामदेव्यगानान्तं कृत्वा गौर्दक्षिणा ब्राह्मणे देया। यद्यशक्तेः कुलाचाराद्वा तद्दिन एव धृतिहोमादिचतुर्थीहोमान्तं कर्म्म क्रियते तदाऽभिमन्त्रितं कदलादिकं समाघ्राय वधूमाघ्रापयेत् ततो वामदेव्यगानान्तं कुर्य्यात्।

अथ यानारोहणादि। तत्र गोभिलः। "यानमारोहन्त्यां शाल्मलिमित्येतामृचं जपेत्" प्रकृतत्वात् पाणिग्राहको जपेत् एतामित्यवाच्यमिति चेन्न यथा प्राप्तविश्वादियानेऽप्येतामेव-भूतामेव जपेत्। नासमवेतार्थपदस्य लोपमूहनं वा कुर्य्या-दिति। अध्वनि चतुष्पथान् प्रतिमन्त्रयेत् नदीश्च विषमाणि च महावृक्षान् श्मशानञ्च माविदन् परिपन्थिनः" इति मार्गे गच्छंश्चतुष्पथानुद्दिश्य भाषेत विषमाण्युच्चनीचत्वेन चौर-व्याघ्रादिभयाद्वा विषमाणि अक्षभङ्गेऽनडुहिमोचे यानविप-र्य्यासे यत्रागतं पूर्वं तत् त्यक्त्वाऽन्यत्र याने वा अन्यासु चौर-व्याघ्रोपद्रवकृतापत्सु यमेवाग्निं नयन्ति तमिन्धनेनादिना संधुक्ष्य भूरादिभिराज्येन हुत्वाऽन्यदक्षादिकं योजयित्वा यत्ते-चिदतिस्रिय इत्यृचा आज्येनाभ्युक्षयेत् वामदेव्यं गीत्वारोहेत्। पाणिग्राहको वामदेव्यं गीत्वा यानं वधूमारोपयेदिति। अक्षभङ्गादिनिमित्तहोमस्य इदानीं तथाचाराभावात् भवदेव-भट्टेन लिखितं मयापि प्रयोगेन लेख्यं प्राप्तेषु वामदेव्यं वरः वध्वाः पतिः गृहं प्रथमप्राप्तौ वामदेव्यं गीत्वा प्रवेशयेत्। गृहङ्गतां पतिपुत्रशीलसम्पन्ना ब्राह्मण्यो वरोऽप्यानडुहे चर्मणि उपवेशयन्तीह गावः प्रजायध्वमिति। शीलमाचारः सम्पन्ना

युक्ता यानादवतार्य्य वृषचर्मादौ इह गाव इति मन्त्रेण भर्त्रा जप्यमानेन गायत्र्या वा स्थापयन्ति तस्याः कुमारमुपस्थ आदध्युः। तस्या वध्वाः कुमारम् अकृतचौड़ं बालकम् उपस्थे क्रोड़े उपवेशयेयुः। ब्राह्मण्यस्तस्मै शकलोटान् अञ्जलौ आवपेयुः फलानि वा कुमाराय शालुकानि कदल्यादिफलानि वा ब्राह्मण्योऽञ्जलौ दद्युः। शके कर्दमे लुटन्तीति शकलोटाः कन्दकाः। उत्थाप्य कुमारं धृवा आज्याहुतीर्जुहोतीति। अष्टाविह धृतिधुवा आवश्यकाः। कथञ्चिद्गृहगमनाभावेऽपि श्वशुरगृहनिवासेऽपि अवश्यं होतव्या इति। अत्र इह धृति स्वाहा इति इत्यादिप्रयोगः। न तु स्वाहायोगे चतुर्थी धृतिहोमेन प्रयुज्यात्। गोनामसु तथाष्टसु चतुर्थ्यामर्घ्यं इत्येतद्गोनामसु हि क्रुयते इति छन्दोगपरिशिष्टात्। धृतिहोमे धृत्यष्टकहोमे समाप्तासु समिधमाधाय यथा वयसं गुरून् गोत्रेणाभिवाद्य यथार्थं समाप्तासु धृत्याज्याहुतिषु समिधमाधाय समिधं प्रक्षिप्य यथावयसं वयोऽधिकक्रमेण गुरून् वृद्धान् गोत्रेण स्वगोत्रेणाभिवाद्य पादवन्दनं कृत्वा वधूमप्येवं कृत्वा यथार्थं प्रायश्चित्तहोमादिकमुदीच्य कर्म समापयेत् एवमुभयकर्तृकाभिवादनं भट्टभाष्योक्तत्वात् यदि त्वशक्तेः कुलाचाराद्वा तद्दिन एव चतुर्थी होमः क्रियते तदा तत् समाप्तावेवोदीच्यं कर्मतन्त्रेण कर्त्तव्यम्। गोभिलः। "अथातश्चतुर्थीकर्मविवाहतिथ्यनन्तरं चतुर्थ्यां तिथौ वक्ष्यमाणं कर्म वर्त्तिष्यत" इति वाक्यार्थः। अतः शब्दो हेत्वर्थे यत एतदकरणे यास्याः पापी लक्ष्मीरित्यादिदोषः शरीरान्नापैति तत एतदवश्यं कर्त्तव्यम् अग्निमुपसमाधाय प्रायश्चित्ताहुतीर्जुहोति अग्ने: प्रायश्चित्त इति चतस्रः अग्निमुपसमाधाय विवाहाग्निमिन्धनेन सन्धुक्ष्य प्रायश्चित्तलिङ्गैर्मन्त्रैराज्याहुतीर्जुहोति अग्ने: प्रायश्चित्त इति मन्त्रेण

चतुश्चतुरिति वीप्सा बोध्या वक्ष्यमाणपरिशिष्टस्वरसात् प्रथमाहुतिर्यथा पठितेन मन्त्रेणैव भवति अन्यासु तिसृष्वग्निपदस्थाने वायुचन्द्रसूर्य्याः क्रमशः कार्य्याः एतावानेव विशेषः शेषं पूर्ववत् एवं चतसृष्वप्याहुतिषु पापीरिति स्यात् कुतः प्रथमस्यैव मन्त्रस्याभ्यासोपदेशात् तस्य चाग्नेः स्थाने वायुचन्द्रसूर्य्या इत्येतावता विशेषोक्तत्वात् समस्य पञ्चमीं बहुवद्गृह्य तथैव समस्य बहुवदग्निवायुचन्द्रसूर्य्या इत्यादि पञ्चमीमाहुतीं जुहुयादिति अत्रापि वीप्सा बोध्या जुहोति कथनादत्रापि पापी लक्ष्मीरित्यादिवदेव द्रष्टव्यं द्वितीयपञ्चके पतिघ्नीति विशेषः शेषं पूर्ववत् तृतीये आहुतिपञ्चके अपुत्रेति विशेषः। चतुर्थेऽपसव्येति विशेषः। एतत् स्पष्टयति छन्दोगपरिशिष्टे कात्यायनः। "मन्त्राम्नायेऽग्नय इत्येतत् पञ्चकं लाघवार्थिभिः पठ्यते तत् प्रयोगे स्यान्मन्त्राणामेव विंशतिः। अग्निस्थाने वायुचन्द्रसूर्य्यान् बहुवद्यूह्य च। समस्य पञ्चमीमूहे चतुश्चतुरिति श्रुतिः। प्रथमे पञ्चमे पापी लक्ष्मीरिति पदं भवेत्। अपि पञ्चसु मन्त्रेषु इति मन्त्रविदो विदुः। द्वितीये च पतिघ्नी स्यादपुत्रेति तृतीयके। चतुर्थेऽपसव्येति इति आहुतिविंशकम्"॥ गोभिलः। आहुतेराहुतेस्तु सम्पातमुदपात्रेऽवनयेत्। जलपात्रे क्षिपेदित्यर्थः। तेन एनां सकेशनखामभ्यज्य क्रामयित्वा प्लावयन्ति तेनाज्यमिश्रजलेन एनां वधूं स्रचयित्वा सकेशनखामिति सर्वहोमाद्यङ्गार्थं क्रामयित्वाऽग्निस्थानाद्देशान्तरं गमयित्वा प्लावयन्ति स्नापयन्ति बहुवचनादनियतः कर्त्ता। ऊर्द्ध्वं त्रिरात्रात् सम्भव इत्येके"। प्रकृतात्त्रिरात्रादूर्द्ध्वं सम्भवः संयोगो मैथुनं कर्त्तव्यमित्येके आचार्य्या मन्यन्ते।

अथ गर्भाधानम्। गोभिलः। "यदा ऋतुमती भवति उपरतशोणिता तदा सम्भवकालः"। ऋतुः प्रजाजननयोग्य-

कालः तन्निमित्तेन नैमित्तिकं गमनं कार्य्यम् अकुर्वतः प्रत्य-वायानियमः "ऋतुमतीन्तु यो भार्य्यां सन्निधौ नोपसर्पति। अवाप्नोति स मन्दात्मा भ्रूणहत्यामृतावृतौ" इति स्मृतेः। ज्यौतिषे। "ज्येष्ठामूलामघाश्लेषारेवतीकृत्तिकाश्विनौ। उत्तरा-त्रितयं त्यक्ता पर्ववर्जं व्रजेदृतौ"॥ विष्णुपुराणम्। चतु-र्दश्यष्टमी चैव अमावास्याथ पूर्णिमा। पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च"॥ याज्ञवल्क्यः। "षोड़शर्त्तुर्निशाः स्त्रीणां तासु युग्मासु संविशेत्"। अत्र षोड़शाहोरात्रात्मककालस्य सावनत्वात् पुंसवननामकरणयोरपि सावनगणनायायुक्तत्वाच्च संस्कारमात्रे सावनगणनया व्यवहारश्च तथा च याज्ञवल्क्यः। गर्भाधानमृतौ पुंसः सवनं स्पन्दनात् पुरा। षष्ठेऽष्टमे वा सीमन्तः प्रसवे जातकर्म च। अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः। षष्ठेऽन्नप्राशनं मासि चूड़ा कार्य्या यथा-कुलम्। एवमेनः शमं याति बीजगर्भसमुद्भवम्"॥ चतुर्थे स्पन्दते तत इति वचनात् स्पन्दनात् पूर्वमासत्रयं पुंसवन-कालः। अत्र चतुर्थमासस्य सौरत्वे चान्द्रत्वे वा निषेककाम-स्यापि तथात्वे तदाद्यन्तदिननिषेके सति अधिकन्यूनकालयो-र्गर्भस्पन्दनमनियतमापद्येत सावने तु नियतं तेनात्र सावन-गणना युक्ता योषिद्व्यवहारसिद्धा च। अहन्येकादशे नाम इत्यत्रापि अशौचव्यपगमे नामधेयमिति विष्णुसूत्रात्। सूत-कोत्तरदिनपरमेकादशदिनपदम्। "सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा। मध्यमग्रहभुक्तिश्च सावनेन प्रकीर्त्तिता" इति सूर्य्यसिद्धान्तवचनेन सूतकस्य सावनदिनघटितत्वात् तदुत्तरदिनस्यापि तथात्वम् अतो दिनमासवर्षगणना सावने-नेति। शुभाशुभविवेचनन्तु सौरेण ज्योतिःशास्त्रात्। अतएव पितामहः। "विवाहादौ स्मृतः सौरो यज्ञादौ सावनो मतः"।

अत्र द्वितीयादिशब्दात् संस्कारपरिग्रहः। "गर्भाधाने सदा ग्राह्या वारा भौमरवीज्यकाः"। गोभिलः। "दक्षिणेन पाणिना उपस्थमभिस्पृशेत्। विष्णुर्योनिं कल्पयत्वेतयार्चा गर्भं धेहि सिनी च समाप्यर्चौ सम्भवतः। कुत्सितदेशस्य सव्येन पाणिना शौचदर्शनात् तद्वारणाय दक्षिणेनेति। उपस्थं योनिं स्पृशेत् विष्णुरिति मन्त्रेण प्रथमं ततो गर्भं धेहि सिनीवालीत्यादि-मन्त्रेण च। मन्त्रान्ते कर्मादिसन्निपात इति न्यायात् पाठा-नन्तरं स्पर्शः न तु भवदेवभट्टोक्तं स्पृशन् जपति। ऋचौ समाप्यैव संयोगं कुरुतः न मध्ये वामदेव्यजपः। देवलः। "सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता"। तेन गर्भाधान-पुंसवनसीमन्तोन्नयनानि सकृदेव कर्त्तव्यानि। छन्दोगपरि-शिष्टम्। "विवाहादिकर्मगणो य उक्तो गर्भाधानं शुश्रुम यस्य चान्ते। विवाहादावेकमेवात्र कुर्यात् श्राद्धं नादौ कर्मणः कर्मणः स्यात्"। विवाहादि गर्भाधानान्तकर्मसु एकमेव श्राद्धं न तु प्रतिकर्मादौ एकेनैव श्राद्धेन कृतेन सर्वाणि श्राद्ध-वन्तीति। अन्तशब्दोऽत्रावयवार्थः दशान्तःपट इतिवत् समीपार्थे उपलक्षणं स्यात्। ततश्च विशेषणोपलक्षणसन्देहे विशेषणत्वेन ग्रहणं कार्य्यान्वितत्वात्। यत्तु "निषेककाले सोमे च सीमन्तोन्नयने तथा। ज्ञेयं पुंसवने चैव श्राद्धं कर्माङ्गमेव च"॥ इत्यनेन भविष्यपुराणेन श्राद्धं कर्माङ्गत्वेन विहितं तच्छन्दोगेतरपरम्। अतएव भवदेवभट्टेनापि न लिखितम्। अत्र श्राद्धोत्तरगमनेऽपि न दोषः उक्तभविष्य-पुराणात्। "नित्ये नान्दीमुखश्राद्धे कृते दानाद्यवर्जनम्" इति वचनान्तराच्च।

अथ पुंसवनम्। गोभिलः। "तृतीयस्य गर्भमासस्यादिम-देशे पुंसवनस्य कालः"। गर्भे सति तृतीयमासस्य आदिमदेशे

दशमदिनाभ्यन्तरे ज्योतिःशास्त्रोक्तकाले पुंसवनं कार्य्यम्। प्रातःसशिरस्काप्लुता पश्चादग्नेरुदगग्रेषु कुशेषु प्राङ्मुख्युपविशति आप्लुता स्नाता पश्चात् पश्चिमदिशि प्राङ्मुखी उपविशति पत्युर्दक्षिणतः दक्षिणतः पाणिग्राहकस्योपविशतीत्यन्यत्र दर्शनात्। पश्चादित्यभिधानात् अग्निस्थापनं लभ्यते। तत्-सार्थकत्वाय "आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते। मन्त्रस्य देवतायाः प्रजापतिरिति स्थितिः" इति छन्दोगपरिशिष्टोक्त-द्रव्यादि लभ्यते। जुहोतिषु हवनेषु। मन्त्रस्यानादेशे प्रजा-पतिः प्राजापत्यो मन्त्रः। समन्त्रः व्याहृत्यात्मकः। ततश्च विरूपाक्षजपान्तां कुशण्डिकां समाप्य समिदाक्षेपादिमहा-व्याहृतिभिर्होमं कृत्वा प्रजापतिदैवताकसमस्तमहाव्याहृति-होमं कुर्य्यात्। ततः प्रकृतं कर्म्म। तत्र गोभिलः। "पश्चात् पतिरवस्थाय दक्षिणेन पाणिना दक्षिणमंसमन्ववमृष्यानन्तर्हितं नाभिदेशमभिमृशेत् पुमांसौ मित्रावरुणावित्येतयर्चा उपा-विष्टाया वध्वाः पश्चिमदेशं गत्वानुपविष्टः पतिर्दक्षिणहस्तेन तूष्णीं तस्या दक्षिणस्कन्धमवमृष्य वस्त्राद्यव्यवहितं नाभिं पुमांसाविति मन्त्रेण स्पृशेत् अथ यथार्थम् अनन्तरं वामदेव्य-गानान्तं समापयेत् यदि त्वशक्तेर्देशाचारात् कुलाचाराद्वा एकस्मिन् दिने द्वितीय पुंसवनमपि क्रियते तदा गणेष्वेकं परिसमूहनम्"। इध्मो वर्हिः पर्य्युक्षणमाज्यभागः सर्वेभ्यः समवदाय सकृदेव सौविष्टकृतं जुहोतीति गोभिलसूत्रा-न्तरात्। उभयकर्मान्ते वामदेव्यगानाद्युदीच्यं कर्म्म कर्त्तव्यम् अतएव सरलायां दिनद्वये भट्टभाष्यभवदेवयोरेकदिने उभय-करणं लिखितम्। अथापरम् अथ प्रथमपुंसवनसमाप्ति-कालानन्तरं तदानीमपरमन्यत् पुंसवनं कार्य्यं प्रागुदीच्यां दिशि न्यग्रोधशुङ्गामुभयतः फलामस्रामामकृमिपरिसृष्टां

भिःसप्तभिर्यवैर्माषैर्वा परिक्रीय उत्थापयेत्। यवासि सोमो सोमाय त्वावक्ष्ये परिक्रीणामि यवासि वारुणी वारुणाय त्वावक्ष्ये परिक्रीणामि यवासि वसुभ्यः वसुभ्यस्त्वापरिक्रीणामि यवासि रुद्रेभ्यो रुद्रेभ्यस्त्वापरिक्रीणामि यवासि आदित्येभ्य आदित्येभ्य-स्त्वापरिक्रीणामि यवासि मरुद्भ्यो मरुद्भ्यस्त्वापरिक्रीणामि यवासि विश्वेभ्यो देवेभ्यस्त्वापरिक्रीणामि ओषधयः सुमनसो भूत्वा अस्यां वीर्यं समाधत्त इयं कर्म्म करीष्यतीत्युत्थाप्य तृणैः परि-धायाहृत्य वेद्यायसीं निदध्यात्। वटतरोः पूर्वस्यां दिशि शुङ्गा-मुकुलितप्लवः। "लताग्रः पल्लवो गूढः शुङ्गेति परिकीर्त्त्यते। पतिव्रता व्रतवती ब्रह्मबन्धुस्तथाश्रुतः" इत्युक्तेः। अश्रुतो वेदहीनः तां फलयुगलयुतामम्लानां क्रिमिभिरव्याप्तां त्रिराहृत्तैः सप्तभिर्यवैर्माषैर्वा त्रिराहृत्तैः क्रीत्वा गृह्णीयात्। क्रयश्च हृक्षस्वामिनो न हृक्षात् तेन हृक्षस्वामिने यवा माषा वा देयाः यवसीत्यादि सप्तभिर्मन्त्रैः। प्रतिमन्त्रञ्च गुड़कत्रयं दद्यात्। ओषधय इति मन्त्रेणोत्थाप्य च तृणैर्वेष्टयित्वा आनीयाकाशस्थां निदध्यात्। दृषदं प्रक्षाल्य ब्रह्मचारीव्रतवती वा ब्रह्मबन्धुः कुमारी वा अप्रत्याहरन्ती पिनष्टि दृषदं शिलां पेषणार्थत्वेन अपुत्रां कुमारी अनूढ़ा व्रतवती पतिव्रता अप्रत्याहरन्ती तिर्य्यक्पुत्रकेण पेषणमकुर्वती किन्तूर्च्छ्रितपुत्रकेण पुनः पुनः पेषणं कुर्वती प्रातः सशिरस्काप्लुता उदगग्रेषु कुशेषु प्राक्-शिराः संविशति शेते शेषं सुगमम्। पश्चात् पतिरवस्थाय दक्षिणस्य पाणेरङ्गुष्ठेनोपकनिष्ठयाऽङ्गुल्या। अभिसंगृह्य दक्षिणनासिकाग्रेण तस्या नयेत्। पुमानग्निः पुमानिन्द्र इत्येतयर्चा। पश्चाद्वध्वाः पश्चिमदिशि उपकनिष्ठयानामिकया तेनाङ्गुष्ठानामिकाभ्याम्। पिष्टां शुङ्गां वस्त्रबद्धां गृहीत्वा निःपीड्य दक्षिणनासारन्ध्रे क्षिपेत् पुमानग्निरिति मन्त्रेण।

अथ यथार्थम् अनन्तरं दक्षिणाद्युदीच्यं कर्म कुर्य्यात् । पुंसवन-कर्माधानकर्त्तुरसन्निधानेऽन्येनापि कर्त्तव्यम् । "अष्टौ संस्कार-कर्माणि गर्भाधानमिव स्वयम् । पिता कुर्य्यात्तदन्यो वा तस्याभावेऽपि तत्क्रमात्" ॥ इति स्मृतेः । भुजवले । "सुफलञ्च करे कृत्वा स्थिरे तन्नासने तथा । गृह्योदितेन होमञ्च शान्तिञ्चैव च कारयेत् ॥ ऊर्णासूत्रेण संग्रथ्य जीवं जातीञ्च विद्रुमम् । गुवाकं रजतं हेम दद्यात् स्तनतटान्तरे ॥ ततः प्रभृति नदीतीरं देवखातोदकं त्यजेत् । सन्ध्याटनं तरोर्मूलं तथा देवगृहं त्यजेत्" ॥

अथ सीमन्तोन्नयनम् । यदि पुंसवनं न कृतं तदा तस्मि-न्नेव दिने प्रायश्चित्तात्मकमहाव्याहृतिहोमं कृत्वा पुंसवनं कृत्वा सीमन्तोन्नयनं कार्य्यम् । तथा च नारदः । "येषान्तु न कृताः पूर्वं संस्कारविधयः क्रमात् । कर्त्तव्या भ्रातृभिस्तेषां पैतृकादेव तद्धनात् ॥ अविद्यमाने पित्रर्थे स्वांशादुद्धृत्य वा पुनः । अवश्यकार्य्याः संस्कारा भ्रातृभिः पूर्वसंस्कृतैः" ॥ क्रमात् भ्रातॄणां संस्काराणाञ्च पौर्वापौर्य्यक्रमात् भ्रातृक्रमस्तु सोदरविषयः । विवाहे तथा दर्शनात् । छन्दोगपरिशिष्टम् । "देवतानां विपर्य्यासे जुहोतिषु कथं भवेत् । सर्वं प्रायश्चित्तं कृत्वा क्रमेण जुहुयात् पुनः ॥ संस्कारा अतिपत्येरन् स्वकालाच्च कथञ्चन । हुत्वेतदेव कुर्वीत ये तूपनयनादधः" ॥ एतदित्यनेन सर्वं प्रायश्चित्तमनुकृष्टं तच्च प्रागेव विवृतम् । उभयकरणे तन्त्रेणैव मातृकापूजादि । "गणशः क्रियमाणे तु मातृभ्यः पूजनं सकृत् । सकृदेव भवेत् श्राद्धमादौ न पृथगा-दिषु" ॥ इति छन्दोगपरिशिष्टात् । गोभिलः । अथ सीमन्त-करणं प्रथमे गर्भे चतुर्थे मासि षष्ठेऽष्टमे वा । अथ पुंसवना-नन्तरं सीमन्तः केशरचनाविशेषः । वाशब्देकार्थान्न चतुर्थादि-

मासानां तुल्यवद्विकल्पः किन्तु पूर्वपूर्वकालः प्रशस्तः समर्थस्य क्षेपायोगादिति न्यायात्। ततो नवमासादौ प्रायश्चित्तं कृत्वैव कर्त्तव्यम्। प्रथमगर्भे इत्युपादानात्। यदि कथञ्चिद-कृत एतस्मिन् संस्कारे गर्भनाशे पुनर्गर्भोत्पत्तौ अयं काल-नियमो न किन्तु गर्भस्पन्दने सीमन्तोन्नयनं यावन्न बालप्रसवः इति प्राङ्लिखितोक्तकालो ग्राह्यः। रुद्रराजमार्त्तण्डे। "यानार्य्यकृतसीमन्ता प्रसूते च कथञ्चन। अङ्के निधाय तं बालं पुनः संस्कारमर्हति। षष्ठे मासेऽष्टमेऽर्कौज्यकुजदिन-कृतां नन्दे सभद्रे तिथौ मैत्रे मूले मृगाङ्के करपितृपवने पौष्ण-विष्णुद्वियुग्मे। पुष्याश्वादित्यरौद्रे युवतिहरिझषे वृश्चिके वापि लग्ने चन्द्रे तारानुकूले शुभमपि नियतं स्याच्च सीमन्त-कर्म। मृगाजरहिते लग्ने नवांशे पुंग्रहस्य च। केचिद्वदन्ति सीमन्तं तथा रिक्तेतरे तिथौ"। गोभिलः। "प्रातः सशिर-स्काप्लुतोदगग्रेषु दर्भेषु प्राच्युपविशति उक्तार्थमेतत्। पश्चात् पतिरवस्थाय युगमन्तमौडुम्बरं शलाटुग्रथ्नमावध्नाति अयमूर्जा-वतो वृक्ष इति"। अग्नेः पश्चात् पतिः स्थित्वा युगानि फलानि यस्मिन् शलाटुग्रथ्नं नीलस्तवके सयुगमान् मतुवन्तम्। तथा च भट्टनारायणधृतं छन्दोगपरिशिष्टम्। "शलाटु नीलमित्युक्तं ग्रथ्नस्तवक उच्यते। कपुष्णिकाभितः केशा मूर्द्ध्नि पश्चात् कपुष्णिकः"॥ इति एतद्वचनं नारायणोपाध्यायेन धृतम्। उडुम्बरभवमौडुम्बरम्। अयमूर्जावतो वृक्ष इति मन्त्रेण भार्य्यायाः कण्ठे बध्नाति। अथ सीमन्तमूर्द्ध्वं नयति भूरिति दर्भपिञ्जलीभिरेव प्रथमं भुव इति द्वितीयं स्वरिति तृतीयम्। अथानन्तरं यत्र सिन्दूरं स्त्री ददाति तं सीमन्तं ललाटोर्द्ध्वं नयति भूरिति मन्त्रेण दर्भपिञ्जलीभिस्तिसृभिः एकवारकर-णाद् यावन्त्युन्नयनानि तावतीभिरेव तिसृभिरित्यर्थः। प्रथमा-

द्विपदानि तु व्याहृतीनां पिञ्जलीनाञ्च पृथग्विनियोगार्थम्। पिञ्जलीपवित्रम्। तथा च छन्दोगपरिशिष्टम्। "अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च। प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्। एतदेव हि पिञ्जल्या लक्षणं समुदाहृतम्" ॥ गोभिलः। "अथ वीरतरेण येनादितेरित्येतयर्चा"। वीरस्तरन्त्यनेन युद्धमिति वीरतरः शरः। तथा च छन्दोगपरिशिष्टम्। "श्वाविच्छलाका शलली तथा वीरतरः शरः। तिलतण्डुलसम्पाकः कृषरः सोऽभिधीयते ॥ ततः शरेण येनादितेरिति मन्त्रेण सीमन्तमूर्द्ध्वं नयति इति पूर्वसूत्रादनुवर्त्तते। अथ पूर्णेन सूत्रं चात्रेण वाकाइमित्येतयर्चा। चात्रं टकुः। तेन सूत्रपूर्णेन वाकाइमिति मन्त्रेण सीमन्तमूर्द्ध्वं नयतीति शेषः त्रिःश्वेतया शलल्या यास्तेवाकेसुमतय इति स्थानत्रितये शल्केन शेजाजन्तु कण्टकेन यास्ते इति मन्त्रेण सीमन्तमूर्द्ध्वं नयतीति शेषः। कृषरस्थालीपाक उत्तरघृतस्तमवेक्षयेत्। कृषर उक्तः स्थालीपाकश्चरुः स उपरिदत्तघृतस्तं वध्वाः प्रदर्शयेत् स्थालीपाकपदं चरुस्थाल्यां कृषरस्य श्रपणार्थं मनुष्यार्थत्वात् द्विःप्रक्षालनम्। ततश्च यः कश्चिन्महानसे श्रपयित्वा स्थापयेत्। किम्पश्यसीत्युक्त्वा प्रजामिति वाचयेत् किं पश्यसीति परिरुक्ता प्रजामित्यादिमन्त्रं गर्भिणीं वाचयेत्। तमवेक्षितकृषरम्। वीरसूर्जीवसूर्जीवपत्नीति ब्राह्मण्यो मङ्गल्यादिभिर्वाग्भिरुपासीरन्। वीरान् विक्रान्तान् पुत्रान् सूत इति वीरसूस्त्वं भवेति वाक्यशेषः। प्रतिपदं स्यात् जीवतो दीर्घायुषः पुत्रान् सूत इति जीवसूः जीवतः पत्नी जीवपत्नी अविधवेत्यर्थः। एवं प्रकाराभिर्वाग्भिरनुनयेयुः। ततश्च महाव्याहृतिभिर्हुत्वा औडुम्बरफलस्तवकं कण्ठे बध्वा प्रजामिति वाचयेदित्यन्तं तन्त्रं कृत्वा व्याहृतिभिर्होमादितन्त्रं समापयेत्। ततो ब्राह्मण्य उपासीरन्।

अथ शोष्यन्तीहोमः। अथानन्तरं शोष्यन्तीं शूलापन्नाम् आसन्नप्रसवां ज्ञात्वा होमः शोष्यन्तीहोमः कर्त्तव्य इति शेषः। सुप्रसवे प्रतिष्ठते वस्तौ परिस्तीर्य्याग्निमावाज्याहुतीर्जुहोति या तिरश्चीत्येतयर्चा। विपश्चित् पुच्छमभवत् इति वस्तिर्योनिद्वारं वस्तौ स्थिते गर्भे प्रतीत्युपसर्गः। परिस्तीर्य्याग्निमिति समिद्धे पुनर्वचनं परिसंख्यानार्थं परिस्तरणमात्रमेव न तु ब्रह्मोपवेशनाद्यपीति। ततश्च क्षिप्रहोमः परिस्तरणाज्यसंस्कारावेकत्राधिकौ अल्पत्वात् कालस्य। या तिरश्चीत्याभ्यां जुहोति। पुमानजं जनयिष्यते असौ नामेत्येतस्मिन् सर्वनाम्नि देवदत्तशर्म्मा नाम स्वाहा इत्येवम्।

अथ जातकर्म्म। गोभिलः। "यदास्मै कुमारं जातमाचक्षीरन् अथ ब्रूयात् काङ्क्षत नाभिकृन्तनेन स्तनप्रतिधानेन चेति"। अस्मै पित्रे पुत्रं जातं कथयेयुः शिष्यादयः। नाभिकृन्तनेन स्तनप्रतिधानेन काङ्क्षत इति पिता ब्रूयात्। नाभिच्छेदनमकृत्वा स्तनपानप्रतिषेधेन च बालकं प्रतिपालयत। ततः पिता परिहितवस्त्रसहितः स्नायात्। "जाते पुत्रे पितुः स्नानं सचैलन्तु विधीयते"। इति संवर्त्तात्। ततः पुत्रजन्मनिमित्तं वृद्धिश्राद्धं तन्त्रेण कुर्य्यात्। "नैमित्तिकमथो वक्ष्ये श्राद्धमभ्युदयार्थकम्। पुत्रजन्मनि तत्कार्य्यं जातकर्मसमं नरैः॥ इति मार्कण्डेयपुराणात्। "सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने। नान्दीमुखं पितृगणं पूजयेत् प्रयतो गृही"॥ इति विष्णुपुराणवचनाच्च। साङ्गश्राद्धकरणाशक्तौ धनोत्सर्गमात्रं कर्त्तव्यम्। मिताक्षरायां पितामहः। "अशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत्। कर्त्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः"॥ तात्कालिकी पुत्रजन्मनिमित्तकालिकी। दानदर्पणे वराहपुराणं "यावत्कालं सुते जाते न नाड़ी छिद्यते

पुनः । चन्द्रसूर्य्योपरागेण तमाहुः समयं समम्" ॥ कल्प-चिन्तामणौ देवलः । "जाते पुत्रे पिता श्रुत्वा सचेलं स्नान-माचरेत् । ब्राह्मणेभ्यो यथाशक्ति दत्त्वा बालं विलोकयेत्" ॥ गर्गः । "श्रुत्वा बालस्य वै जन्म कृत्वा वेदोदिताः क्रियाः । अच्छिन्ननालं पश्येत्तं दत्त्वा रुक्मं फलान्वितम्" ॥ पुनः स्नानमाहादिपुराणम् । "सूतके तु मुखं दृष्ट्वा जातस्य जनक-स्ततः । कृत्वा सचेलं स्नानन्तु शुद्धो भवति तत्क्षणात्" ॥ गोभिलः । "व्रीहियवौ पेषयेत्तयैवावृता यथाशुक्लां व्रीहिः शरत् पक्वधान्यं तदभावे हैमन्तिकं धान्यं यवाभावे गोधूमाः" । तथा च छन्दोगपरिशिष्टम् । "यथोक्त वस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत् । यवानामिव गोधूमा व्रीहिणामपि शालयः" ॥ उभयालाभे प्रत्येकम् । "यथा लाभोपपन्नं वा रोप्येषु तु विशे-षतः" ॥ इति याज्ञवल्क्यवचने पात्रे तद्दर्शनात् । अत्राप्य-शक्त्या तथा कल्पते वटशुङ्गा पेषणे वा परिपाटौ तयावापि पेषयेत् । दक्षिणस्य पाणेरङ्गुष्ठेनोपकनिष्ठया चाङ्गुल्याऽभि-संगृह्य कुमारस्य जिह्वां निर्माष्टि इयमाज्ञेति । पिष्टौ व्रीहि-यवौ दक्षिणहस्तानामिकाङ्गुष्ठाभ्यां गृहीत्वा कुमारस्य रसनायां निदधाति इयमाज्ञेति मन्त्रेण तथैव मेधाजननं सर्पिः प्राशये-ज्जातरूपेण चादाय कुमारसुखे जुहोति मेधान्ते मित्रावरुणा-मित्येतयर्चा सदसस्पतिमिति च । तथैव दक्षिणहस्तानामि-काङ्गुष्ठाभ्यां धृतेन जातरूपेण काञ्चनेन घृतं गृहीत्वा मेधाजननं घृतम् । शिशोरास्ये संदधाति प्रत्येकमृग्भ्यां जुहोतीत्यनेन मन्त्रस्य स्वाहान्तत्वं प्राशयेदित्यनेन मुखाधिकरणत्वं कृन्तत-नाभिमिति ब्रूयात् स्तनञ्च प्रतिधत्तेति छन्ननिषेधविधिरयं नाभिशब्दो नाभिनिकटनाड़ीपरः स्तनपदं तत्क्षीरपरम् अत ऊर्द्ध्वमसमालभ्भनमाद्दशरात्रात् जातकर्मण उपरि प्रसंख्यः ।

दशमदिनं व्याप्य अभिविधावां जातकर्म कृत्वा न स्नानाद्दैता सद्यो जाते एनो नास्तीति वचनादिति सरला।

अथ नामकरणम्। तत्र गोभिलः। "जननाद्दशरात्रे व्युष्टे शतरात्रे वा संवत्सरे वा नामधेयकरणम्"। व्युष्टे गते। तथा च श्रुतिः। "एकादशे द्वादशे वाहनि पिता नाम कुर्य्यात्" एकादश इति मुख्यकल्पः। समर्थस्य क्षेपायोगात् इति न्यायात्। अतएव भट्टभाष्ये श्रुतिः। "नश्वः समुपासीत कोऽसमर्थस्य श्वो वेदेति"। एतच्च प्रशस्ततरतमपरपरकाल-कर्मेतरपरम्। अथ यस्तत् करिष्यन् भवति पश्चादग्नेरुदग-ग्रेषु दर्भेषु प्रागुपविशति। अग्नेरिति जन्म गृहाभ्यन्तरे अन्यथा चन्द्रदर्शनात् प्राक् तद्वहिर्गमनं स्यात्। य इत्यनेन पितुर-भावेऽन्योऽप्यधिकारी। अथ माता शुचिना वस्त्रेण कुमार-माच्छाद्य दक्षिणत उदञ्चं कर्मकर्त्रे प्रयच्छति उदक्शिरसमनु-पृष्ठं परिक्रम्योत्तरत उपविशति उदगग्रेषु कुशेषु आच्छाद्य आःक्षौमदर्ये तेन मुखवर्जं छादयित्वा दक्षिणतः पत्युर्दक्षिणतः स्थित्वा उदञ्च मुत्तानम् अनुपृष्ठं कर्त्तुः पश्चिमदेशं परिक्रम्य गत्वा। अथ जुहोति प्राजापतये तिथये नक्षत्राय देवतायै" इति। तिथये नक्षत्राय कुमारस्येति शेषः। देवतायै तिथि-नक्षत्रयोरित्यर्थः। तथा च बह्वृचगृह्यम्। "तन्मध्ये जुहु-यात् यस्मिन् जातः स्यात् इति"॥ तिथयः प्रतिपदाद्याः तद्देवताः ब्रह्मत्वष्टृविष्णुयमसोमकुमारमुनिवसुपिशाचधर्म-रुद्रवायुमन्मथयक्षपितरः। पौर्णमास्यां विश्वेदेवाः। एषां होमे विशेषमाह छन्दोगपरिशिष्टम्। "नामधेये मुनिवसुपिशाचा-बहुवत्सदा। यक्षाश्च पितरो देवा यष्टव्या तिथिदेवताः"॥ तेन मुन्यादयो बहुवचनान्ता होतव्या इति शेषाः एकवचनान्ता होतव्याः। नक्षत्राण्यश्विन्यादीनि। देवता ज्योतिषि अश्वि-

यमित्यादि। अत्राभिजितो भिन्नत्वात् अष्टविंशतिहोमे तु नाभिजितो ग्रहणम् उत्तराषाढ़ात्वेन श्रवणात्वेन च तदभिधानात्। तेन विरिञ्चिग्रहणम्। नक्षत्रहोमे छन्दोगपरिशिष्टम्। "आग्नेया द्वेऽथ सर्पा द्वे विशाखा द्वे तथैव च। आषाढ़ा द्वे धनिष्ठा द्वे अश्विन्या द्वे तथैव च। द्वन्द्वान्येतानि बहुवदृक्षाणां जुहुयात् सदा"॥ द्वन्द्वद्वयं द्विवच्छेषमवशिष्टान्यथैकवत्। कृत्तिका द्वे विशाखा द्वे आषाढ़ाद्वे धनिष्ठा द्वे एतानि द्विकानि द्विकानि ओम् कृत्तिकाभ्यः स्वाहा रोहिणीभ्यः स्वाहा इत्यादि बहुवचनयुक्तानि जुहुयात् शेषं द्वन्द्वद्वयं भाद्रपदद्वयं फल्गुनीद्वयञ्च द्विवचनयुक्तं जुहुयात् शेषाण्येकवचनयुक्तानि तद्देवता होमेऽपि विशेषः। "देवता अपि हूयन्ते बहुवत् सर्पवस्तपः। देवाश्च पितरश्चैव द्विवद्‌ब्रह्माश्विनौ तथा"॥ देवा विश्वेदेवाः। गोभिलः। "तस्य च मुख्यान् प्राणान् स्पृशन् कोऽसि कतमोऽसि इत्येतम्मन्त्रं जपति आहस्पत्यं मासं प्रविशासावित्यन्ते च मन्त्रस्य घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानान्तकृतं नाम दध्यात्"। कुमारस्य मुखभवान् वायून् प्राणनिर्गमोपायभूतान् छिद्रविशेषसममुखमक्षिणी नासिके कर्णाविति आभिमुख्येन स्पृशन् काऽसीति मन्त्रं जपेत् आहस्पत्यं मासं प्रविशासावित्यत्रासाविति मन्त्रान्ते चासाविति च पदद्वयस्थाने सम्बोधनान्तं नामोच्चारयेत्। कीदृशं कवर्गादि पञ्चकतृतीयादिवर्णान्यतमवर्णाद्यन्तरस्थं यरलवाद्यन्यतमवर्णमध्यं दीर्घं द्विमात्रम्। आकारादि अभिनिष्ठानो विसर्गः। एतदुभयान्यतरं यस्यान्ते अर्थादसंबुद्धिप्रथमान्तप्रयोगः। अन्यविभक्तेरसम्भवात् कृतं कृदन्तं यथा बलिध्वंसो विश्वम्भर इत्यादि। तथा च गर्गः। "आदौ घोषवदक्षरान् यरलवान् मध्ये पुनः स्थापयेत् अन्ते दीर्घविसर्जनीयसहितं

नाम प्रयत्नात् कृतम् । ऋचे तिष्यकराश्विसौम्यवसुभे चित्रा-नुराधोत्तरे पौष्णे चादितिरोहिणीषु शुभकृत् पुंसां समैर-क्षरैः" । गोभिलः । "एतदतद्धितम् । एतन्नाम तद्धित-रहितम् एतच्च स्वगृह्योक्तत्वात् प्रशस्तपरं कुलदेवानक्षत्राभि-सम्बद्धं पिता नाम कुर्य्यात् तदन्यो वा कुलवृद्धः" इति कल्प-तरुशङ्कलिखितवचनान्नामान्तरकरणव्यवहारः । अत्र नक्षत्र-सम्बन्धेन नामकरणं शतपदचक्रानुरोधात् स्वनक्षत्रपादानु-सारेण तच्च देवशर्म्माद्युपपदान्तत्वेन कर्त्तव्यम् । तथा च विष्णुपुराणम् । "ततश्च नाम कुर्वीत पितैव दशमेऽहनि । देवपूर्वं नराख्यं हि शर्म्म वर्म्मादि संयुतम्" इति । नरमाचष्टे इति नराख्यं नरनाम देवात् पूर्वं तच्च विशिष्टं शर्म्मयुतम् । "शर्मा देवश्च विप्रस्य वर्मा त्राता च भूभुजः । भूतिर्गुप्तश्च वैश्यस्य दासः शूद्रस्य कारयेत्" । इति यमवचने समुच्चयोप-लब्धः "शर्मान्तं ब्राह्मणस्य स्यात्" इति शातातपीयेन शर्मा-न्तता च । गोभिलः । "अयुग्दान्तं स्त्रीणाम्" । अयुक् अयुग्माक्षरं दान्तं यथा यशोदा इत्यादि । "देवं गुरुं गुरु-स्थानं चैत्रं चेत्राधिदेवताम् । सिद्धं सिद्धाधिकारांश्च श्रीपूर्वं समुदीरयेत्" । इति राघवभट्टधृतप्रयोगसारदर्शनात् । स्वर्ग-गामित्वादिना सिद्धः अधिकारो येषां नराणामित्यनेन जीवतां श्रीशब्दादित्वं नाम्नो न मृतानां तथेति शिष्टाचारः । गोभिलः । "मात्रे चैव प्रथमं नामधेयमाख्याय यथार्थम् उदीच्यं वामदे-व्यगानान्तं कुर्य्यात् गौर्दक्षिणा सा च प्रधानस्य नामकर्मणः" ।

अथ निष्क्रमणम् । गोभिलः । "जननाद्यस्तृतीयो-ज्योत्स्नस्तस्य तृतीयायां प्रातः सशिरस्कं कुमारमाप्लाव्यास्त-मिते सूर्य्ये वीते लोहिते अञ्जलिकृतः पितोत्तिष्ठते" । कुमा-रस्य जननमारभ्य योज्योत्स्नो वृद्धियुक्तः पक्षस्तस्य तृतीया-

तिथौ प्रातः सशिरस्कं कुमारं स्नापयित्वा प्रातर्न मध्याह्नादौ अस्तमिते सूर्य्ये विगते रश्मिमात्रस्थे काले सन्ध्योपरमे अञ्जलिकृतः बहुव्रीह्याहिताग्निगणपाठात् कृताञ्जलिरुपतिष्ठते चन्द्राभिमुख ऊर्द्ध्वस्तिष्ठेत्। अथ माता शुचिना वस्त्रेण कुमारमाच्छाद्य दक्षिणे उदञ्चं पित्रे प्रयच्छति उदक्शिरसम् उदञ्चमुत्तानमिति भट्टभाष्यम्। उत्तरां गच्छन्तमिति सरला। अनुपृष्ठं परिक्रम्योत्तरतः अवतिष्ठते पत्युः पृष्ठस्य पश्चादुपक्रम्य सा उत्तरस्यां तिष्ठेत् पश्चिमाभिमुखी अथ जपति यत्ते सुसीमे हृदयमिति यथायं न प्रमीयते पुत्रोजनित्र्या अधीति उदञ्चं मात्रे प्रदाय यथार्थं मातर्य्युद्गतायां पिता यत्त इत्यादि पुत्रोजनित्र्या अधीत्यन्तमन्त्रद्वयं जप्त्वा उत्तानमुत्तरां गच्छन्तमुदक्शिरसं कुमारं मात्रे दत्त्वा वामदेव्यगानान्तं कुर्य्यात्। कृत्यचिन्तामणिः। "स्वस्वविधानतोऽर्कंशशिनोरर्घ्यं दापयेत्" अर्कार्घं स्तु छन्दोगेतरपरः। चन्द्रार्घं स्तु क्षीरोदार्णवसम्भूतेत्यादि। तत्र हविश्श्राद्धमाह गोभिलः। "सर्वाण्येवान्वाहार्य्यवन्ति"। एतद्गृह्योक्ते कर्म्मणि सर्वाण्येवान्वाहार्य्यवन्ति। अन्वाहार्य्यं नान्दीमुखश्राद्धं दक्षिणा च तदुभययुक्तानि। तथा च गृह्यान्तरम्। "यच्छ्राद्धं कर्मणामादौ या चान्ते दक्षिणा भवेत्। आमावास्यं द्वितीयं यदन्वाहार्य्यं विदुर्बुधाः"। मातृपूजानन्तरमाक्रियमाणत्वात् श्राद्धस्य प्रधानकर्मानन्तरमाक्रियमाणत्वाद्दक्षिणायाः पिण्डपितृयज्ञानन्तरमाक्रियमाणत्वादमावास्याश्राद्धस्यान्वाहार्य्यत्वम्। न च द्वहत् पत्रसुद्रपश्वस्वस्त्यर्थं परिविश्यतोः। "सूर्य्येन्द्वोः कर्मणोये तु तयोः श्राद्धं न विद्यते"। इति छन्दोगपरिशिष्टाच्चान्द्रकर्मत्वेन श्राद्धपर्य्युदासः कल्पतरुप्रभृतिभिरुक्तो युक्त इति वाच्यम्। पूर्वाह्णानवलोकनात्। अतएव द्वष्व इरेति पञ्चम्यां इति प्रकृते द्विती-

यथा ऋचा आदित्ये परिविश्यमाने अच्चततण्डुलान् जुहुयात् प्रवस्स्वस्त्ययनकामः तृतीयया चन्द्रमसीति तिलतण्डुलान् जुद्रपशुस्वस्त्ययनकामः इति सूत्राभ्याम्। परिविशति सूर्य्ये स्वस्त्यर्थादि प्रवद्दाध्वनस्वस्त्ययनार्थं चन्द्रे च परिविशति अज-मेषादि जुद्रपशुस्वस्त्ययनार्थं होमकर्मद्वयमुक्तं तयोः श्राद्धं नास्तीति परिशिष्टप्रकाशः। श्राद्धविवेकोऽप्येवम्। गोभिलः। "अथ ये अतऊर्द्धं ज्यौत्स्नः पचः प्रथमोद्दिष्टा एव तेषु पितो-पतिष्ठते अपामञ्जलौ पूरयित्वाभिमुखश्चन्द्रमसां यददश्चन्द्रम-सीति स ऋचु जुहुयात्"। द्विस्तूष्णीम् उत्सृज्य यथार्थं कियदधि अत ऊर्द्धं ज्योत्स्ना स्वेतत् कर्म्म संवत्सरम्। तृतीय-शुक्लपचादूर्द्धं शुक्लपचेषु प्रथमोद्दिष्टे तृतीयायां तिथौ वत्सर-पर्य्यन्तं चन्द्राभिमुखः पिता सजलश्चन्द्रायाञ्जलिम्। ओम्यदद-श्चन्द्रमसीति मन्त्रेण दद्यात्। प्रथमोदित एवेति भट्टभाष्ये पाठः। तस्माते प्रथमोदिते चन्द्रमसि प्रतिपदि द्वितीयायां वेति व्याख्यातञ्च। ततो वामदेव्यगानमच्छिद्रावधारणं कुर्य्यात्।

अथान्नप्राशनम्। यद्यपि गोभिलगृह्ये अन्नप्राशनसंस्कारो नाभिहितः तथापि "अन्नस्य प्राशनं कार्य्यं मासि षष्ठाष्टमे बुधैः। स्त्रीणान्तु पञ्चमे मासि सप्तमे प्रजगौ मुनिः"। इति कृत्यचिन्तामणिधृतवचनेन सर्वशाखिकर्त्तृकत्वेनाकाङ्क्षितः। "यन्नाम्नातं स्वशाखायां परोक्तमविरोधि च। विद्वद्भिस्तदनु-ष्ठेयमग्निहोत्रादिकमवत्" इति छन्दोगपरिशिष्टादन्यशाखोक्त-प्रकारेण छन्दोगेन कर्त्तव्यः। पूर्वापरेति कर्त्तव्यताकलापस्तु स्वगृह्यानुसारेण कार्य्यः। इति भट्टनारायणप्रभृतयः भुजबल-भीमे। "षष्ठे मासि निशाकरे शुभकरे रिक्तेतरे वा तिथौ सौम्यादित्यसितेन्दुजीवदिवसे पचे च कृष्णेतरे। प्राजेशादिति-

पौष्णाश्विन्यौ त्रयुगैर्हस्तादि षट्कोत्तरैराग्नेयाप्यतिपित्रभेषु निर्गमनादिभक्ष्य शुभम्"। युगैरिति प्राजेशादौ प्रत्येकं सम्बध्यते। ज्योतिश्चिन्तामणौ। "द्वादशी सप्तमी नन्दा रिक्तासु पञ्चपर्वसु। बलमायुर्यशो हन्याच्छिशूनामन्नभक्षणम्"। भुजबलभीमे। "वृषहन्द्वधनुर्मीनकन्यालग्नेऽन्नभक्षणम्। त्रिकोणाष्टशुभागान्तेषु ग्रहा यद्वद्यत्तथा फलम्। दुष्टः शशधरो लग्नात् षष्ठाष्टस्थोऽन्नभक्षणे"। मत्स्यपुराणे "अन्नप्राशे च सीमन्ते पुत्रोत्पत्तिनिमित्तके। पुंसवने निषेके च प्रवेशे नववेश्मनः। देववृक्षजलादीनां प्रतिष्ठासु विशेषतः। तीर्थयात्रावृषोत्सर्गे वृद्धिश्राद्धं प्रकीर्त्तितम्"। मार्कण्डेयः। "देवतापुरतस्तस्य पितुरङ्कगतस्य। अलङ्कृतस्य दातव्यमन्नं पात्रे च काञ्चने॥ मध्वाज्यकनकोपेतं प्राशनं शंसते ततः। कृतप्राशनमुत्सङ्गे मातुर्बालन्तु तं त्यजेत्॥ देवाग्रतोऽथ विन्यस्य शिल्पभाण्डादिसर्वशः। शस्त्राणि चैव शास्त्राणि ततः पश्येत्तु लक्षणम्॥ प्रथमं यत् स्पृशेद्बालः शिल्पभाण्डं स्वयं तथा। जीविका तस्य बालस्य तेनैव तु भविष्यति"॥

अथ चूडाकरणम्। गोभिलः। अथातस्तृतीये वर्षे चूडाकरणम्। जननानन्तरं वर्त्तमानतृतीये वर्षे चूडाकरणमुदगयनादीनां समुच्चये बोद्धव्यम्। कपुष्णिका कपुच्छलाख्यः केशचूडा तासां वक्ष्यमाणविधिना संस्कारकरणम्। चूडाकरणं कर्मणो नामधेयम्। अयं कालो मुख्यः श्रुत्युक्तत्वात्। अत्रासामर्थ्येऽन्योऽपि कालः। यथा मनुः। "चूडाकर्म्म द्विजातीनां सर्वेषामेव धर्मतः। प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिदर्शनात्" इति। शङ्खलिखितौ। "तृतीये वर्षे चूडाकरणं पञ्चमे वेति"। ज्योतिषे। "अयुग्माब्दे तथा मासि चूडा भौमशनीतरे। अर्केन्दुकालशुद्धौ च जन्ममासेन्दुभाहते। रिक्ता

दर्शाष्टमीषष्ठीप्रतिपद्वर्जिते सिते"॥ सिते शुक्लपक्षे। दक्षः। "षष्ठ्यष्टमीपञ्चदशी उभे पक्षे चतुर्दशी। अत्र सन्निहितं पापं तैले मांसे भगे क्षुरे॥ श्रवणादित्रयस्वातीचित्रापुष्याश्वि-चन्द्रभे। आदित्यरेवतीहस्तज्येष्ठामूले च चौड़कम्"॥ तुला-मेषसिंहकर्किवृश्चिकेतरलग्नके। अत्रापि तिथ्यङ्गादिविशुद्धिं विवर्जयेत्। "सूर्ये दक्षिणमार्गगामिनि हरौ सुप्ते निरंशे रवौ क्षीणे शीतरुचौ महीजयमयोर्वारे निशासन्ध्ययोः। भुक्तोऽभ्यक्ततनौ नियुद्धसमयेऽलङ्कारयुक्ते शिशौ क्षौराद्रोगभयं वदन्ति जवना मृत्युं तथान्ये जगुः"॥ भोजराजः। "उत्तर-वर्त्मनि सवितरि चूड़ाकरणं जगुः शुभं जवनाः। चैत्रे मासि दिवाकरवारे शिखिसन्निधाने च"॥ रविवारेतरत्र गर्गः। "जन्मर्क्षे जन्ममासे च युग्मे मासि च वत्सरे। न कुर्यात् प्रथमं क्षौरं विशेषाच्चैत्रपौषयोः"॥ ज्योतिषे। "कृत्तिकास्थं रविं त्यक्त्वा ज्येष्ठे ज्येष्ठस्य कारयेत्। उत्सवानि च कार्याणि दिग्दिनानि च वर्जयेत्"॥ गोभिलः। "पुरस्ताच्छालाया उपलिप्तेऽग्निरुपसमाहितो भवतीति"। व्यक्तार्थमेतत्। गोभिलः। "तत्रैव तान्युपक्लृप्तानि भवन्ति"। अत्र उपलिप्ते देशे उपक्लृप्तानि अग्निसमीपे आसादितानि। तान्याह। एकविंशतिदर्भपिञ्जूल्यः उष्णोदककंसश्चौडुम्बरः क्षुरः। आ-दर्शो वा क्षुरपाणिर्नापित इति दक्षिणतः पिञ्जूल्यः पवित्राणि तानि सप्तसप्तकृत्वा स्थानत्रये स्थाप्यानि। उष्णोदकं कंस-स्मिन् उष्णोदककंसः। उडुम्बरस्यायमौडुम्बरस्ताम्रमयः क्षुरः तदभावे आदर्शो दर्पणम्। दक्षिणतोऽग्नेरिति शेषः। आसा-दनञ्च पूर्वस्मिन् पूर्वस्मिन्। गोभिलः। "आनडुहो गोमयः कृशरस्थालीपाको वृथापाक इत्युत्तरतः"। आनडुहो वृषजातः वृथापक्वो होमानुपयुक्तत्वात् संस्काररहितः। एतदुभयं प्राक्-

संस्थमुत्तरतः कृसं भवतीति ब्रीहियवैस्तिलमाषैरिति पृथक्-पात्राणि पूरयित्वा पुरस्तादुपनिदध्युः। इत्यद्वयबलात् ब्रीहि-यवैर्मिश्रैः पात्रद्वयं पूरयित्वा पुरस्तादग्नेः पुरतः स्थापयेत्। एवं तिलमाषैरिति करणात् एषामलाभेऽन्येनापि पूरणमिति भट्टभाष्यम्। इत्यादिबहुवचनान्ता गणस्य संसूचका इति अत्र बीजं बहुवचनादनियतकर्तृकमासादनम्। गोभिलः। "कृषरो नापिताय सर्वबीजानि चेति"। निवृत्ते कर्म्मणि कृषरो ब्रीह्यादिपात्राणि च नापिताय देयानि प्रतिपत्ति-स्त्वासादनप्रसङ्गादत्रोक्ता। अथ माता शुचिना वस्त्रेण कुमारमाच्छाद्य पश्चादग्नेरुदगग्रेषु दर्भेषु प्राच्युपविशति"॥

अथाज्यसंस्कारानन्तरम्। प्राची प्राङ्मुखी। अथ यस्तत् करिष्यन् भवति पश्चात् प्राङ्मुखोऽवतिष्ठते। अथ शब्दः किञ्चित् कर्म्म स्मारयति तच्च कर्म्म यथा पाणिग्रहणे तथा चूडाकर्म्मणीति वचनात् चूडाकर्मणः पुरस्तादुपरिष्टाच्चतस्रो महाव्याहृतयो भवन्तीति भट्टनारायणः। पाणिग्रहणे तु महाव्याहृतिभिः पृथक् समस्ताभिश्चतुर्थीमिति गोभिल-दर्शनात् व्यस्तसमस्तमहाव्याहृतिहोम उक्तः। तेन यश्चूडां करोति स व्यस्तसमस्तमहाव्याहृतिहोमानन्तरं गृहीत-कुमारायाः पश्चात् प्राङ्मुख ऊर्द्धस्तिष्ठति। अथ जपति आयमगात् क्षुरेणेति सवितारं मनसा ध्यायन् नापितं प्रेक्ष-माणः। अथ ऊर्द्धावस्थानानन्तरमेवायमगात् इति मन्त्रं सवितारं ध्यायन्। पितरश्चावलोकयन् जपति। उष्णेन वाय उदकेनेधीति वायुं मनसा ध्यायन् उष्णोदकं संप्रेक्षमाणः। वायुं ध्यायन् उष्णोदकपूर्णं कंसपात्रञ्चावलोकयन् उष्णेन वाय इति मन्त्रं जपेत्। गोभिलः। "दक्षिणेन पाणिना अप आदाय दक्षिणां कपुष्णिकाम् उन्दयति आप उन्दन्तु जीवसे

इति"। कांसपात्राद्दक्षिणेन पाणिना अप आदाय कुमारस्य दक्षिणकपुष्णिका मुन्दयति क्लेदयति। कं शिरः शीतातपादिरक्षणेन पुष्णाति इति कपुष्णिका शिरस उभयपार्श्वस्थकेशजटिका उच्यते। उक्तञ्च। "कपुष्णिकाऽभितः केशा मूर्ध्नि पश्चात् कपुच्छलमिति"। गोभिलः। "विष्णोर्दंष्ट्रोऽसीति औडुम्बरं क्षुरं प्रेक्षेत आदर्शं वा"॥ औडुम्बरं ताम्रं तदलाभे दर्पणं पश्येत् विष्णोर्दंष्ट्रोऽसीति मन्त्रेण। ओषधे त्रायस्वैनमिति सप्तदर्भपिञ्जूलीर्दक्षिणायां कपुष्णिकायामभिशिरोऽग्रा निदधाति। आसादितदर्भपिञ्जूलीमध्यात् सप्तपिञ्जूलीर्गृहीत्वा दक्षिणायां कपुष्णिकायाम् ओषधे त्रायस्वैनमिति मन्त्रेण स्थापयति। अभिशिरोऽग्राः शिरसोऽभिमुखाग्रा ऊर्द्ध्वमूलाधोऽग्रा इत्यर्थः। गोभिलः। "ता वामेनाभिगृह्य दक्षिणपाणिना औडुम्बरं क्षुरं गृहीत्वा दर्शं वा निदधाति संलग्नं धारयति। येन पूषा बृहस्पतिरिति प्राञ्चं प्रोहत्य अप्रच्छिन्दन् सकृत् यजुषा द्विस्तूष्णीम्"॥ येन पूषेत्यनेन मन्त्रेण वारत्रयं प्राञ्चं प्राग्गतं क्षुरं कपुष्णिकादेशे प्रोहति प्रेरयति। अप्रच्छिन्दन् केशच्छेदकुर्वन् एकवारं मन्त्रेण वारद्वयं तूष्णीम् अप्रच्छिन्दन्निति क्षुरपक्षे। गोभिलः। "अथायसेन प्रच्छिद्यानडुहे गोमये निदधाति"। अनन्तरं लौहक्षुरेण कपुष्णिका केशान् दर्भपिञ्जूलीसहितान् छित्वा ताभिः सह वृषगोमये निदध्यात्। गोभिलः। "एतयैवावृता कपुच्छलम्"। अनयैवावृता परीपाट्या कपुच्छलं संस्कुर्य्यात् अवटस्योपरि उन्नतशिरोऽवयवः कपुच्छलम्। गोभिलः। "एतयोत्तरां कपुष्णिकाम्"। एतया प्रक्रियया वामां कपुष्णिकां छिन्द्यात्। गोभिलः। "उन्दन् प्रभृतिष्वेवाभिनिवर्त्तयेत्। क्लेदनादिकर्म्म पुनः कुर्य्यात्"॥ उन्दौ क्लेदने। उभाभ्यां पाणिभ्यां मूर्द्धानं परिगृह्य जपेत्

त्र्यायुषं जमदग्नेरिति मूर्धानं कुमारस्य। एतयैवावृता स्त्रिया-स्तूष्णीं मन्त्रेण तु होमः। आवृता प्रक्रियया तूष्णीमनन्तरोक्ताः सर्वे संस्कारा मन्त्रवर्जं भवन्ति। "अमन्त्रिका तु कार्य्येयं स्त्रीणामावृदशेषतः" इति मनुवचनात्। तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः" इति याज्ञवल्क्यवचनाच्च। होमस्तु मन्त्रेण तु शब्दस्यार्थे तेन वृद्धिश्राद्धञ्च मन्त्रवदेव भवतीत्यर्थः। गोभिलः। "उदगग्नेरुत्सृप्य कुशली कारयन्ति यथा गोत्रकुलकल्पम्" उदक् उत्तरतः उत्सृप्य गत्वा कुमारं कुशलीकारयन्ति नापितहस्तेन मुण्डयन्ति यथा गोत्रकुलाचारस्तथा। राजमार्त्तण्डः। "प्राचीमुखः सौम्यमुखोऽपि भूत्वा कुर्य्यान्नरः चौरमनुत्कटस्थः"। ब्रह्मगर्गः। "केशवमानर्त्तपुरं पाटलिपुत्रं पुरीमहिच्छत्राम्। दितिमदितिञ्च स्मरतां चौरविधौ भवति कल्याणम्"। "गोभिलः। आनडुहे गोमये केशान् कृत्वा अरण्ये गत्वा निखनन्ति"। वृषगोमये सर्वान् केशान् अवस्थाप्यारण्यं नीत्वा निखनन्ति बहुवचनादनियतकर्त्तृकत्वं स्तम्बे हैके निदधाति। ह इति निपातः। एके आचार्य्याः व्रीहियवादिस्तम्बे निदधाति तान् केशान् प्रक्षिपन्तीत्यर्थः। यथार्थं गौर्दक्षिणा। यथार्थमुदीच्यं व्यस्तसमस्तमहाव्याहृतिहोमादि वामदेव्यगानान्तं कर्म्म समापयेत् दक्षिणा देया प्रधानकर्म्मणामित्यर्थः।

अथोपनयनम्। अत्र गोभिलः। "गर्भाष्टमेषु ब्राह्मणमुपनयेत्। गर्भैकादशेषु क्षत्रियं गर्भद्वादशेषु वैश्यम्। आषोड़शाद्ब्राह्मणस्यानतीतः कालो भवति आद्वाविंशात् क्षत्रियस्य आचतुर्विंशाद्वैश्यस्य अत ऊर्द्ध्वं पतितसावित्रीका भवन्ति। नैतानुपनयेयुर्नाध्यापयेयुर्न एभिर्विवाहयेयुः"। गर्भवर्षमष्टमं येषां वर्षाणां तानि वर्षाणि गर्भाष्टमानि तेषु गर्भाष्टमेषु वर्त्त-

धानं ब्राह्मणमुपनयेत्। अध्यापनार्थमाचार्य्यसमीपं नीयते येन कर्म्मणा तदुपनयनमिति कर्म्मणो नामधेयं तेन कर्म्मणा योजयेत्। "गृह्योक्तकर्म्मणा येन समीपं नीयते गुरोः। बालो वेदाय तद्योगात् बालस्योपनयं विदुः" इति स्मृतेः। आषो-डशादित्यभिविधावाङ्। तथा च विष्णुधर्मोत्तरम्। "षोड-शाब्दो हि विप्रस्य राजन्यस्य द्विविंशतिः। विंशतिः सचतुर्थी च वैश्यस्य परिकीर्त्तिता। सावित्री नातिवर्त्तेत अत ऊर्द्धं निवर्त्तते" ॥ अत्र षोडशवर्षाणामुपनयनाङ्गता प्रतीयते। "पतिता यस्य सावित्री दशवर्षाणि पञ्च च। ब्राह्मणस्य विशेषेण तथा राजन्यवैश्ययोः॥ प्रायश्चित्तं भवेदेषां प्रोवाच वदतां वरः" इति यमवचनेन तद्दनङ्गता प्रतीयते। अनयो-र्गर्भजन्मगणनाभ्यामविरुद्धता। तथा च माण्डव्यः। "व्रत-बन्धविवाहे च वत्सरपरिगणनमाहुराचार्य्याः। आधानपूर्वमेके प्रसूति पूर्वं सदान्ये तु"। यत्तु द्विजानामित्युपक्रम्य पैठीनसि-वचनम्। "द्वादशषोडशविंशतिर्वेदतीता। अवरुद्धकाला भवन्तीति"। तद्वादशवर्षाद्युपरि ब्राह्मणादीनां महाव्याहृति-होमरूपप्रायश्चित्तार्थं षोडशवर्षोपरि गुरुप्रायश्चित्तमिति। तथा च शङ्खलिखितौ। "व्रात्यश्चान्द्रायणञ्चरेत् गोप्रदानञ्च कुर्य्यात् चान्द्रायणाशक्तौ धेन्वष्टकं तन्मूल्यं वा सार्द्धद्वाविंशति-कार्षापणाः गोमूल्यं कार्षापण एकः मिलित्वा सार्द्धं त्रयो-विंशतिकार्षापणा देयाः" ॥ पितृमातृरहितस्य निःस्वस्य देशोपप्लवादिना पतितसावित्रीकस्य वा विषये तु मनुविष्णू। "येषां द्विजानां सावित्री नानूच्येत यथाविधि। तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेत्"। कृच्छ्रं प्राजापत्यम्। तत्त्रयाशक्तौ धेनुत्रयं तन्मूल्यं नवकार्षापणा वा देयाः प्रकृत-प्रायश्चित्तान् प्रत्याह नैतानित्यादि। तत्र बहुवचनं तत्कर्त्तृ-

संसर्गिणां प्रायश्चित्तदर्शनार्थम्। तथा च स्मृत्यन्तरम्। "व्रात्याचार्य्यस्य भुक्त्वान्नं कृच्छ्रपादेन शुध्यति। यश्चोपनयते व्रात्यान् त्रिभिः कृच्छ्रैः स शुध्यति"॥ भुजबलभीमकृत्यचिन्तामण्योः। "स्वातीशक्रधनाश्विमित्रकरभे पौष्णोज्यचित्राहरिष्वेन्दौ तोयपतौ भगे दितिसुते भाद्रद्वये सागरे। केन्द्रस्थे भृगुजेऽङ्गिरः शशिशुभे चन्द्रे च तारे शुभे। कर्त्तव्यं व्रतकर्म्म मङ्गलतिथौ वाराः सितार्केज्यकाः"॥ अदितिसुत उत्तरफल्गुनी सागरः पूर्वाषाढ़ा। दीपिकायाम्। "जीवार्केन्दुभृगुद्धौ हरिशयनवह्निभास्करे चोत्तरस्थे स्वाध्याये वेदवर्णाधिप इह शुभदे चौरभे नादितौ च। अर्कशुक्रार्केज्यदेलग्ने रविमदनतिथिं प्रोज्झ्य षष्ठाष्टमिन्दुं नो जीवास्तातिचारे सितगुर्वादिने कालशुद्धौ व्रतं स्यात्"। रविमदनतिथिं सप्तमीत्रयोदशीं षष्ठाष्टमिन्दुं लग्नापेक्षया। प्रोज्झ्य त्यक्त्वा कृत्यचिन्तामणौ। "माघे द्रविणशीलाढ्यः फाल्गुने च दृढ़व्रतः। चैत्रे भवति मेधावी वैशाखे कोविदो भवेत्॥ ज्यैष्ठे गहननीतिज्ञ आषाढ़े क्रतुभाजनः। शेषेष्वन्येषु रात्रिः स्यान्निषिद्धं निशि च व्रतम्" राजमार्त्तण्डे। "पुनर्वसौ कृतो विप्रः पुनः संस्कारमर्हति"। आश्वलायनः। "उदगयने आपूर्य्यमाणे पक्षे कल्याणे नक्षत्रे चूड़ोपनयन-गोदानविवाहाः। विवाहः सार्वकालिक इत्येके"। आपूर्य्यमाणे पक्षे शुक्लपक्षे। गृह्यगर्गः। "स्मृतिसूक्तानानध्यायान् सप्तमीञ्च त्रयोदशीम्। पञ्चयोर्माघमासस्य द्वितीयां परिवर्जयेत्"। श्रीपतिव्यवहारसमुच्चये। "कार्त्तिकस्याश्विनस्यापि फाल्गुनाषाढ़योरपि। कृष्णपक्षे द्वितीयायामनध्यायं विदुर्बुधाः"॥ भुजबलः। "चैत्रकृष्णाद्वितीयायां तिसृष्वेवाष्टकासु च मार्गे च फाल्गुने चैव आषाढ़े कार्त्तिके तथा। पञ्चयोर्माघमासस्य द्वितीयां परिवर्जयेत्। नाकालवृष्टौ कुर्वीत व्रतबन्धशुभ-

क्रियाम्” उपनयने उत्तरायणशुक्लपक्षयोर्विधानात् कार्त्तिकादौ कृष्णपक्षे च द्वितीयाया निषेधः पुनःसंस्कारसद्देतौ-त्युक्तप्रायश्चित्तरूपोपनयनपरः। वैश्योपनयनपरश्च। तथा च गर्गः। “विप्रस्य क्षत्रियस्यापि मौञ्जी स्याद्दक्षिणायने। दक्षिणे च विशां कार्य्यं नानध्याये न संक्रमे। अनध्यायेऽपि कुर्वीत यस्य नैमित्तिकं भवेत्”। अपिना दक्षिणायनकृष्णपक्षयोः समुच्चयः। नैमित्तिकं प्रायश्चित्तरूपम्। चैत्रशुक्लतृतीया आषाढ़शुक्लदशमी मन्वन्तरादित्वेन निषिद्धा वैशाखशुक्ल-तृतीया युगादित्वेन निषिद्धा। “षष्ठ्यामशुचिरुग्भार्य्यो रिक्तासु बहुदोषभाक्”। सामगानां कुजवारेऽप्युपनयनं शाखाधिपत्वात्। तथा च “शाखाधिपे बलिनि केन्द्रगतेऽथ वास्मिन् वारेऽस्य चोपनयनं कथितं द्विजानाम्। नीचस्थिते-ऽरिगृहगेऽथ पराजिते वा जीवे भृगावुपनयनः स्मृतिकर्म-हीनः” अस्य शाखाधिपस्य। कृत्यचिन्तामणौ। “जन्मोदये जन्मसु तारकासु मासेऽथ वा जन्मनि जन्मभे वा। व्रतेन विप्रो न बहुश्रुतोऽपि विद्याविशेषैः प्रथितः पृथिव्याम्। अस्तं गते दैत्यगुरौ गुरौ वा चन्द्रेऽपि वा पापयुतेऽप्यनुक्ते। व्रतोपनीतो दिवसैः प्रणाशं प्रयाति देवैरपि रक्षितो यः”। उदये लग्ने व्रतेन उपनयनेन। गोभिलः। “यदहरुपैष्यन् माणवको भवति प्रागेवैनं तदहर्भोजयन्ति कुशलीकारयन्त्याप्लावयन्त्यलंकुर्वन्त्याहतेन वाससा समाच्छादयन्ति”। यदहर्यस्मिन्नहनि उपैष्यन् उपनयनं कारयिष्यन् माणवक उद्यतो भवति। माणवकोऽन-धीतवेदः। “अनृचो माणवको ज्ञेय एनःकृष्णमृगः स्मृतः। रुरुगौरमृगः प्रोक्तः स्मरः शल उच्यते”। प्राक् प्रातः। तच्च “चतस्रो घटिका प्रातररुणोदय उच्यते” इति ब्रह्मवैवर्त्तो-क्तम्। अत्र घटिका दण्डः। “त्रियामां रजनीं प्राहुस्त्यक्त्वा-

द्यन्तचतुष्टयम्। नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते"। इति तत्रैवोक्तेः। भोजयन्ति क्षीरादिकमिति शेषः तथा च ब्रह्मचारिकाण्डे कल्पतरुधृतशङ्खलिखितौ। "पयो यवाग्वा-मिक्षाहारा: क्रमशो द्विजातीनाम्"। कुशलीकारयन्ति मुण्डयन्ति आप्लावयन्ति स्नपयन्ति आहतेना सूदितेन वाससा वक्ष्यमाणेनाच्छादयन्ति परिधापयन्ति। अत्रैकवचनादध-रीयमेतत्। उत्तरीयन्तु उपरिष्टादजिनं वक्ष्यते। क्षौमं शाणं वा ब्राह्मणस्य कार्पासं क्षत्रियस्य आविकं वैश्यस्य"। क्षुमा अतसी तस्या इदं क्षौमं मसरादि। शाणं शणतन्तुभवं तदुभयं ब्राह्मणस्य। गोभिल:। "ऐणेयरौरवाजानि अजि-नानि"। एण: कृष्णमृग: रुरुर्गौरमृग: अज: छाग: यथाक्रमं द्विजानामेतान्यजिनानि। गोभिल:। "मुञ्जकाशताम्न्यो-रसना:"। मुञ्ज: शर: ताम्न: शणस्तद्भवा रसना मेखला ताम्नौ। तथा च मनु:। "मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्य्या विप्रस्य मेखला। क्षत्रियस्य च मौर्वीज्या वैश्यस्य शणतान्तवी। मुञ्जालाभे तु कर्त्तव्या कुशश्मान्तकवल्वजै:। त्रिवृताग्रन्थि-नैकेन त्रिभि: पञ्चभिरेव वा"। गोभिल:। "पार्णवैल्वा-श्वत्थदण्डा:"। पार्ण: पालाश:। मनु:। "ब्राह्मणो वैल्व-पालाशौ क्षत्रियो वाटखादिरौ। वैणवौदुम्बरौ वैश्यो दण्डा-नर्हन्ति धर्मत:"। गृह्ये पार्णमात्रस्य ब्राह्मणे विधानात् प्रतिगृह्येप्सितं दण्डमिति मनुवचनान्तरे एकवचनश्रुतेरनेक-दण्डधारणं न तु द्वन्द्व निर्देशाद्दण्डद्वयधारणम्। मनु: "केशा-न्तिको ब्राह्मणस्य दण्ड: कार्य्य: प्रमाणत:। ललाटसम्मितो राज्ञ: स्यात्तु नासान्तिको विश:। ऋजवस्ते तु सर्वे स्युरव्रणा: सौम्यदर्शना:। अनुद्वेगकरा नृणां सत्वचो नाग्निदूषिता:"। अलाभे वा सर्वाणि सर्वेषाम्। स्वस्य स्वस्यालाभे सर्वाणि

सीमादीनि सर्वेषां ब्राह्मणादीनाम् । गोभिलः । "पुरस्ता- च्छालाया उपलिप्तेऽग्निरुपसमाहितो भवति । स्पष्टार्थमेतत् । गोभिलः । "अग्ने व्रतपते इति हुत्वा पश्चादग्नेरुदगग्रेषु दर्भेषु प्रागग्राचार्य्योऽवतिष्ठते । व्याहृतिभिराहुति चतुष्टये हुते अग्ने व्रतपते" इति पञ्चाहुतीर्हुत्वा आचार्य्यः पश्चादुदग्रेषु कुशेषु प्राङ्मुख ऊर्द्ध्वस्तिष्ठेत् । अत्र हुत्वाचार्य्य इत्येककर्त्तृकत्वादेष एव हुत्वातिष्ठेत् । होमकरणत्वान्मन्त्राणां होमकर्त्तुराचार्य्यस्य मन्त्रपाठो न माणवकस्य । यत्र च ब्रह्मचारिणामुच्चारणं तत्र ब्रह्मचर्य्यमागामिति वाचयतीति वचनादग्ने व्रतपते व्रतं चरिष्यामीति मन्त्रलिङ्गेषु ऋत्विक्स्थानीयत्वान्माणवकस्य मन्त्रैरग्न्यादिप्रार्थना ब्रह्मचर्य्यं नाचार्य्यस्य । तथा च । "यां वै काञ्चन ऋत्विज आशिषमाशासते सा यजमानस्यैव" इति श्रुतेः । तत्र ऋत्विक् यजमानपदयोराचार्य्यमाणवकपरत्वे प्रमाणाभावात् । अतएव भट्टभाष्यम् । होमेन सहाचार्य्य- सम्बन्धः कुतो हुत्वाचार्य्योऽवतिष्ठते इति क्त्वा प्रत्यययोगात् मन्त्रन्तु माणवको जपेत् कुतो मन्त्रलिङ्गात् । व्रतञ्चरिष्या- मीत्याद्युत्तमपुरुषप्रयोगोऽन्यथानुपपद्यते । गोभिलः । "अन्त- रेणाग्न्याचार्य्यौ माणवकोऽञ्जलिकृतोऽभिमुख आचार्य्य उदग- ग्रेषु दर्भेषु अग्न्याचार्य्ययोर्मध्ये आचार्य्याभिमुखः सन्नवतिष्ठते इति योज्यम् । तस्य दक्षिणतोऽवस्थाय मन्त्रवान् ब्राह्मणो- ऽपामञ्जलिं पूरयति उपरिष्टादाचार्य्यस्य तस्य माणवकस्य दक्षिणस्यां दिश्यवस्थितो ब्राह्मणोऽधीतवेदः सलिलाञ्जलिं माणवकस्य पूरयित्वा उपरिष्टात् पश्चादाचार्य्यस्याञ्जलिम् । गोभिलः । "प्रेक्ष्यमाणो जपत्यागन्त्रा समगन्महीति" । कं प्रेक्ष्यमाणः कोजपति । माणवकं प्रेक्ष्यमाण आचार्य्य आगन्त्रा समगन्महीति मन्त्रं जपति । स्वस्तिसञ्चरतादयमिति मन्त्र-

लिङ्गात्। गोभिलः। "आचार्य्यो ब्रह्मचर्य्यमागामिति वाचयति"। आचार्य्यो माणवकं पाठयतीत्यर्थः। कोनामासीति नामधेयं पृच्छति तस्याचार्य्योऽभिवादनीयम्। नामधेयं कल्पयित्वा देवताश्रयं नक्षत्राश्रयं गोत्राश्रयं वा इत्येके। अभिवादनीयम् अभिवादननिमित्तं नाम कल्पयित्वा तदानीमेवाचार्य्यः कोनामासीति पृच्छेत्। तच्च देवताश्रयं कृष्णादिनक्षत्राश्रयं शतपदचक्रोक्तजन्मकालीननक्षत्रपादात् ज्ञेयम्। गोत्राश्रयं शाण्डिल्यादि। गोभिलः। "उत्सृज्यापामञ्जलिमाचार्य्यो दक्षिणेन पाणिना दक्षिणं साङ्गुष्ठं गृह्णाति। देवस्य ते सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यांऽस्तं गृह्णाम्यसौ" इति जलाञ्जलिं त्यक्त्वा गुरुर्दक्षिणेन ब्रह्मचारिदक्षिणपाणिमङ्गुष्ठेन सह गृह्णाति देवस्य इति मन्त्रेण। असाविति सम्बोधनविभक्त्या माणवकस्य नाम गृह्णीयात् इदानीं गृहीतमाणवकहस्तस्याचार्य्यस्याग्निस्ते हस्तमग्रहीदिति मन्त्रपाठे प्रमाणं गोभिले नास्ति अन्यत्र बोध्यम्। गोभिलः। "अथैनं प्रदक्षिणमावर्त्तयति सूर्य्यस्यावृतमन्वावर्त्तं वासाविति। तद्दक्षिणमेवैनं प्रत्यङ्मुखं सन्तं प्रादक्षिण्येन प्राङ्मुखं करोति सूर्य्यस्येति मन्त्रेण। अत्राप्यसावित्यत्र सम्बोधनान्तनामग्रहः। दक्षिणेन पाणिना दक्षिणमंशमवमृश्य अनन्तर्हितं नाभिदेशमभिस्पृशेत् प्राणानां ग्रन्थिरसीति प्रदक्षिणावर्त्ते माणवके प्राङ्मुखावस्थिते आचार्य्योऽस्य दक्षिणमंशं स्पृष्ट्वा अव्यवहितां नाभिं प्राणानामिति मन्त्रेण स्पृशेत्। अत्राप्यमुमिति पदस्थाने द्वितीयान्तं नाम प्रयोज्यम्। गोभिलः। "उत्सृप्य नाभिदेशमभुत्र"। इति जपेदिति वाक्यशेषः। उत्सृप्य करं सर्पतेर्गत्यर्थत्वात् ऊर्द्ध्वं करमुत्सृप्य ऊर्द्ध्वं नीत्वा नाभिदेशं समीपार्था द्वितीया नाभिदेशसमीप एव उदरे करमवस्थाप्याः

भुव इति जपेत् । कुतो मन्त्रलिङ्गात् अभुवशब्देन जठरोऽग्नि- रुच्यते । तस्मान्नाभेरुत्सृप्य करं नाभिदेशसमीप एव उदरं जठराग्निस्थानमालभ्याभुव इति जपेत् । इति भट्टभाष्यदर्श- नात् वायुर्देवता इति भवदेवगुणविष्णूक्तं निरस्तम् अद्दर्वविभ- क्तिव्युत्पत्त्या अभुव इति समाख्या । अत्राप्यमुमिति पदस्थाने द्वितीयान्तं नाम प्रयोज्यम् उत्सृप्य हृदयदेशं कृशन् इति । जठरादुत्सृप्य ऊर्द्धं नीत्वा करं हृदयमालभ्य कृशन् इति जपेत् । कृशनशब्देन हृदय एव पुरुषोयत उच्यते अतो हृदय- देशमालभ्य जपतीति तदधिष्ठानत्वात् पुरुषस्य । तथा च श्रुतिः । "स एवैष आस्वादयतीति" । अत्राप्यमुमिति पदस्थाने द्वितो- यान्तं नाम प्रयोज्यम् । दक्षिणेन पाणिना दक्षिणमंशमा- लभ्य प्रजापतये त्वा परिददाम्यसाविति । अंशं माणवकस्येति शेषः । आलभ्य स्पृष्ट्वा प्रजापयेत्वेति जपेत् । असाविति स्थाने सम्बोधनान्तनामग्रहणम् । गोभिलः । "सव्येन सव्यं देवाय त्वा सवित्रे परिददाम्यसाविति वामेन पाणिना ब्रह्म- चारिणः सव्यमंशं स्पृष्ट्वा देवायत्वेति जपेत् । अत्रासाविति स्थाने सम्बोधनान्तं नाम प्रयोज्यम् । गोभिलः । "अथैनं संप्रेषयति ब्रह्मचार्य्यसाविति" । समिधमाधेहि आपोशानं कर्म्म कुरु मा दिवास्वाप्सीरित्यपि सर्वत्र ओम्वाढमिति च ब्रूयात् । "यदुद्यति अस्तमिते समिधमादधाति तदिदमा- दिश्यते यच्च सायं प्रातः समिधमाधेहि" इति श्रुतावुक्तं तस्मादत्र तदवगिष्यते पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधाति इति तदिदमादिश्यते सायं प्रातर्भोजनयोरपि पुरस्ताच्चोपरि- ष्टाच्च पृथक्मन्त्राभ्यामापोशानं हे ब्रह्मचारिन्निति । मन्त्रौ तु शाख्यन्तरादुपादेयौ । अमृतोपस्तरणमसि स्वाहेति पुरस्तात् अमृतापिधानमसि स्वाहेति उपरिष्टात् इति यद्विहितं कर्म

तत्तत् कुरु मा दिवास्वाप्सीः दिवा स्वप्नमाकार्षीरित्यर्थः। माणवकः सर्वेष्वेव प्रैषेषु बाढ़मोमिति वा प्रतिवचनं दद्यात्। तथा च छन्दोगपरिशिष्टम्। "ब्रह्मचारिसमादिष्टे गुरुणा व्रतकर्मणि। वाढ़मोमिति वा ब्रूयात् तत्तथैवानुपालयन्"॥ गोभिलः। "उदगग्नेरुत्सृत्य प्रागाचार्य्यं उपविशति उदगग्रेषु दर्भेषु" स्पष्टार्थमेतत्। प्रत्यङ्माणवको दक्षिणजान्वक्तोऽभिमुखमाचार्य्यमुदगग्रेषु दर्भेषु प्रत्यङ्मुखो माणवको दक्षिणजानु अक्तं तं भूमौ यस्य स आचार्य्याभिमुखं यथा स्यात्तथा उपविशति इति पूर्वेणान्वयः। उत्तरत एवाग्नेः अथैनं त्रिःप्रदक्षिणं मुञ्जमेखलां परिहरन् वाचयति। इयं दुरुक्तं परिवाधमाना ऋतस्य गोपृ्त्रीति च। अथ तथैवोपविष्टं माणवकम् इयं दुरुक्तं परिवाधमाना इति ऋतस्य गोपृत्रीति च मन्त्रद्वयं कटिदेशस्य मौञ्जमेखलां वारत्रयं परिधापयन् वाचयति। अत्र परिधानस्यावृत्तावपि सत्यां सकृदेव मन्त्रपाठः। एकद्रव्ये कर्म्मावृत्तौ सकृदेव मन्त्रवाचनं कुर्य्यादिति वचनात्। मुञ्जालाभे कुशेनेति प्रागुक्तं गृह्यामुक्तमपि। यज्ञोपवीतमस्मिन्नेव समये परिधापयेत्। मेखलामन्तरं कार्पासमुत्तरीयं स्यात् विप्रस्योर्द्ववृत त्रिवृदिति मनूक्तेः। पवित्रं चास्मै प्रयच्छतीति जातूकर्णात्। यज्ञोपवीतिनं कुर्य्यादिति सांख्यायनाच्च। "मेखलामजिनं दण्डमुपवीतं कमण्डलुम्। अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत्"॥ इति मनुवचनेन नोपवीताजिनयोरपि धारणे समन्त्रतावधारणादिगृह्ये तदनुपदेशात् शाखान्तरादुपादद्यात्। यज्ञोपवीतमसि यज्ञस्य त्वोपवीतेनोपनेष्यामि इति भट्टभाष्यम्। अस्मिन्नेवावसरे अजिनमुत्तरीयमित्यापस्तम्बः। अजिनञ्च कृष्णसारचर्म्म प्रागुक्तत्वात्। अजिनग्रहणमन्त्रस्तु ओम् मित्रस्य चक्षु·

वैरणं बलीयस्तेजो यशश्चि स्थविरं समृद्धमनापतस्य वसनं जविष्णूपवीतं वाष्टाजिनं दधेयमिति तैत्तिरीयशाखापठितो द्रष्टव्य इति भट्टभाष्यम्। एवञ्च दण्डाजिनोपवीतानि मेखला-ञ्चैव धारयेत् इति याज्ञवल्क्यवचनं द्रव्यधारणविधायकम् । एतदनन्तरमाचमनं कुर्य्यात् । यज्ञोपवीतिना आचान्तोदकेन कृत्यमिति गोभिलसूत्रात् आचामेदित्यनुवृत्तौ "शिखां बद्धा वसित्वा द्वे निर्णिक्ते वाससी शुभे । तूष्णीम्भूत्वा समादाय नो गच्छन् विलोकयन्" ॥ इति देवलवचनाच्च। हरिशर्मा-ऽप्येवम् । गोभिलः । अथोपसीदत्यधीहि भोः सावित्रीं मे भवाननुब्रवीत्विति" । अनन्तरं तथैवोपदिष्टो माणवक उप-सीदति कृताञ्जलिपुट आचार्य्ये गतचक्षुरुपसन्नो भवति। अधीहि भोरित्यादि मन्त्रेण अधीहि अध्यापय सावित्रीं सवितृदेवताकां गायत्रीम् । भोरित्याचार्य्यं सम्बोधनम् । भट्टभाष्येऽप्येवम् । तस्मा अन्वाह पच्छः अर्द्धर्चशः ऋक्शः इति । तस्मै माणवकाय अन्वाह अनुब्रूयात् पूर्वं तावत् पच्छः पादशः ततोऽर्द्धर्चशः तत ऋक्शः । ऋक्श इत्यत्र सर्वामिति पाठः सरलायाम् । महाव्याहृतीश्च विहृताः ओङ्कारान्ताः विहृताः पृथक्कृताः ओङ्कारान्ता इत्यत्र भूरोमिति भट्ट-भाष्यम् । भूरिति भवदेवभट्टः । उभयमतग्राही वीरेश्वरस्तु ओम्भूरोमिति अन्ता अवसानभूताः । वार्क्षमस्मै दण्डं प्रयच्छन् वाचयति सुश्रव सुश्रुवसं माकुर्विति वार्क्षं पलाशादि-भवं दण्डं माणवकाय ददत् सुश्रवेति पाठयति । अथ भैक्ष्य-ञ्चरति । अथ शब्दस्तूष्णीमादित्योपस्थानमग्निप्रदक्षिणञ्च शंसति । "प्रतिगृह्येप्सितं दण्डमुपस्थाप्य भास्करम् । प्रदक्षिणं परीत्याग्निं चरेद्भैक्ष्यं यथाविधि" ॥ इति मनुवचनात् । भिक्षासमूहं भैक्ष्यं तच्चरति आचरति इत्यर्थः । मातरमेवाग्रे

ये चान्ये सुहृदो यावन्तो वा सन्निहिताः स्युः। याचते इत्यध्याहार्य्यम्। सुहृदे स्निग्धहृदये स्वस्रादौ तथा च मनुः "मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम्। भिक्षेत भिक्षां प्रथमां याचैनं नावमानयेत्"॥ सन्निहितास्तद्गृहस्थाः न तु प्रतिगृहं गत्वा। भवति भिक्षां देहीति ब्राह्मणभिक्षा-प्रयोगः। तथा च मनुः। "भवत् पूर्वं चरेत् भैक्ष्यमुपवीती द्विजोत्तमः। भवन्मध्यन्तु राजन्यो वैश्यस्तु भवदुत्तरम्॥ आदि-मध्यावसानेषु भवच्छब्दोपलक्षिता। ब्राह्मणक्षत्रियविशां भैक्ष्यचर्य्या यथाक्रमम्"॥ इति याज्ञवल्क्यवचनाच्च। आचार्य्याय भैक्ष्यं प्रणिवेदयते वेदयति समर्पयति भोरिति। आचार्य्याय निवेद्य प्रति गृह्णीयादिति गृह्यान्तरवचनात्। भैक्ष्यं भोरिति निवेदनमन्त्रः। भैक्ष्यस्य संस्कारार्थत्वात् आचार्य्याय निवेद्य स्वयं तदेव भुञ्जीत। तथा च मनुः "समाहृत्याथ तद्भैक्ष्यं यावदन्नममायया। निवेद्य गुरवेऽश्नीयात् आचार्य्यः प्राङ्मुखः शुचिः"॥ आचार्य्याय माणवकाय भैक्ष्यं प्रदाय कर्मशेषं समापयेत् इति तच्च सावित्र्या चरुहोमादिवक्ष्यमाणतत्तद्-ग्रन्थात् तिष्ठत्यहः शेषं वाग्यतः। माणवकोऽहः शेषं संयत-वागास्ते। अस्तमिते समिधमादधाति अग्नये समिधमहार्षं-मिति। अस्तं गते सूर्य्ये समिधं प्रादेशमात्रमग्नये समिध-महार्षमित्यनेनादधाति इयमेवातः प्रधानाहुतिः। ततश्चास्याः पुरस्तादुपरिष्टाच्च समिद्भवतीति। उक्तञ्च। "समिधादिषु होमेषु मन्त्रदैवतवर्जिता। पुरस्ताच्चोपरिष्टाच्च इन्धनार्थं समिद्भवेत्"। समिद्धोमश्च सायं प्रातः कर्त्तव्यः तथा च मनुः। "दूरादाहृत्य समिधः सन्निदध्याद्विहायसि। साय प्रातश्च जुहुयादाहिताग्निरतन्द्रितः॥ समिदाधानानन्तरञ्चाग्निम-भिवादयेत्। तथा च गृह्यान्तरम्। उभयत्राग्निं समिध्य

गोत्रनामनी प्रोच्याभिवाद्यावाचार्य्यमभिवादयेत्। उभयत्र सायं प्रातः। अभिवाद्यम्मिमित्यन्वयः। त्रिरात्रमक्षारलवणाशी भवति। स्पष्टार्थम्। तस्यान्ते सावित्रचरुः। तस्य उपनयनरूपव्रतस्य न तु सन्निधानात्त्रिरात्रस्य अव्यक्तशब्दस्य प्रधानेन सह सम्बन्धदर्शनात्। अन्यथा तस्यान्त इत्यवचनीयं स्यात्। अस्यान्त इति वक्तुं युक्तम्। भट्टभाष्येऽप्येवम्। ततश्चतुर्थेऽहनि सावित्रचरुरिति भवदेवभट्टोक्तं चतुर्थेऽह्नि सावित्रचरुः कार्य्य इति सरलोक्तञ्च ज्ञेयम्। सवितास्य देवता इति सावित्रः यथार्थं गौर्दक्षिणा। यथार्थम् उदीच्यं महाव्याहृत्यादि कर्म। इयं दक्षिणा उपनयनकर्मणः न तु सावित्रचरोः प्रधानस्य उपनयनकर्म्मणो दक्षिणान्तरानभिधानात्। अतएव उपनयनान्तरमाचार्य्याय वरो दक्षिणा इति गृह्यान्तरमिति सरला। वरोगौः। तथा चोक्तम्। "गौर्विशिष्टतमा लोके वेदेष्वपि निगद्यते। न ततोऽन्यद्वरो यस्मात्तस्माद्गौर्वर उच्यते"॥ इदानीमुपनयनातिरिक्तव्रताचरणादन्यद्व्रतादि न लिखितम्। भवदेवभट्टेनापि न लिखितम्। गोभिलः। "सर्वत्राचार्षं तदशकं तेनारात् सत्यमुपागामिति" विशेषः। सर्वत्र सर्वेषां व्रतानामन्ते अयं मन्त्रे विशेषः। यत्र चरिष्यामि तत्राचार्षमिति। यत्र तच्छकेयमित्यत्र तदशकमिति। यत्र तेनर्ध्यासमिधामि तत्र तेनारात् समिधमिति यत्र उपैमीति तत्र उपागामिति। कर्म्मक्रमस्तु। उपनयनव्रतान्ते सावित्रचरुहोमः। ततः स्विष्टिकृद्धोमः। प्राक्स्विष्टिकृदावाप इति सूत्रात्। ततोऽग्ने व्रतपते व्रतमचार्षं तत्ते प्रब्रवीमि तदशकं तेनारात् समिधमहमनृतात् सत्यमुपागां स्वाहेत्येवमुक्त्वा होमकर्मसमाप्तौ दक्षिणा गोदानमिति भट्टभाष्यम्। एतेन ब्रह्मचारिणां जपमात्रं न होमो वचनाभावात्। स्वाहान्तानामपि

होमदैवत इत्यादीनां होमदर्शनमिति सरलोक्तं ज्ञेयम् । अग्ने व्रतपते इति हुत्वा पश्चादुदगग्रेषु गर्भेषु प्रागाचार्य्योऽवतिष्ठते इति प्रागुक्तसूत्रे अग्ने व्रतपते इत्यादिमन्त्रस्तु चरिष्यामीत्यादिपदस्थाने अचार्षमित्यादिपदोहमात्रोक्तेन होमादेः प्राप्तेः । तन्मतेऽप्यचार्षमित्यस्य ब्रह्मचारिपाठवत् पूर्व्वत्रापि चरिष्यामीति मन्त्रलिङ्गसार्थकत्वाय ब्रह्मचारिपाठो युक्तः । एवञ्चाग्ने व्रतपते व्रतमचार्षमित्यादिहोमः समावर्त्तनमध्ये भवदेवभट्टोक्तो न युक्तः । व्रतञ्चरिष्यामीत्यारम्भवत् व्रतमचार्षमित्यस्यापि व्रतसमापकत्वे तस्यैवान्तताया एव युक्तत्वात् ।

अथ समावर्त्तनम् । ज्योतिषे । "भौमभानुजयोर्वारे नक्षत्रे च व्रतोदिते । ताराचन्द्रविशुद्धौ च समावर्त्तनमिष्यते"॥ गोभिलः । "अथाप्लवनम्" । अथ व्रतानन्तरमाप्लवनं स्नानं कुर्य्यादिति शेषः । उत्तरतः पुरस्ताद्वाचार्य्यकुलस्य परिव्रतं भवति । आचार्य्यगृहादुत्तरस्यां पूर्व्वस्यां वा स्नानार्थमावृतं स्नानं कुर्य्यात् । तत्र प्रागग्रेषु दर्भेषु उदगाचार्य्य उपविशति तत्रावृते उदक् उदङ्मुखः प्राक् ब्रह्मचार्य्युदगग्रेषु दर्भेषु । प्राक् प्राङ्मुख उपविशतीत्यन्वयः । सर्व्वौषधिविफाण्टाभिरद्भिर्गन्धवतीभिः शीतोष्णाभिराचार्य्योऽभिषिञ्चेत् । सर्व्वौषधयश्च "व्रीहयः शालयो मुद्गा गोधूमाः सर्षपास्तिलाः । यवाश्चौषधयः सप्त विपदोघ्नन्ति धारिताः"॥ इति छन्दोगपरिशिष्टोक्तास्ताभिः सह या आपो विफाण्टा विपक्का उष्णीकृतास्ताः सर्व्वौषधिविफाण्टास्ताभिर्गन्धवतीभिश्चन्दनादिगन्धद्रव्ययुक्ताभिः शीतोष्णाभिः शीतोदकमिश्रिताभिरिति भट्टभाष्यम् । स्वयमिव तु मन्त्रवर्णो भवति । इव शब्द एवार्थे । स्वयमेव ब्रह्मचारी आत्मानमभिषिञ्चेत् आचार्य्यकर्त्तृकाभिषेकस्तु परमतो यतो मन्त्रवर्णा भवन्ति । मन्त्रवर्णोऽभिषेकमन्त्रलिङ्गं तच्च तेनाह-

मामभिषिञ्चामि इति तेन मामभिषिञ्चितमिति च । तद्विधि-
माह येऽप्स्वरन्तरग्नयः प्रविष्टा इत्यपामञ्जलिमवसिञ्चति।
येऽप्स्वरन्तरग्नय इति मन्त्रेण कासामपामञ्जलिं ब्रह्मचारी
अवसिञ्चति । क्व भूमौ कुतः अवसिञ्चति वचनात् । तथान्त्य-
स्याभितान् सृजामीति यदपामिति मन्त्रस्याभितान् सृजामीति
मन्त्रलिङ्गद्वयाच्च सर्वाधारत्वेन प्राप्तायां भूमौ त्यजति । यदपां
घोरं यदपां क्रूरं यदपामशान्तमिति च । अपामञ्जलिमव-
सिञ्चतीति वर्त्तते चकारात् । यो रोचनस्तमिह गृह्णामीत्या-
त्मानमभिषिञ्चति । प्रकृतानामपामञ्जलिना यो रोचन इति
मन्त्रेण ब्रह्मचारी आत्मानमभिषिञ्चति । ओम् यशसे तेजसे
इति च । आत्मानमभिषिञ्चतीति वर्त्तते । तूष्णीं चतुर्थम् ।
आत्मानमभिषिञ्चतीति वर्त्तते । अभिषेकः शिरसि कर्त्तव्यः
शिरः प्रधानमङ्गानामिति वचनात् । उपोत्थायादित्यमुप-
तिष्ठेत उद्यन् भ्राजभृष्टिभिरित्येतत् प्रभृतिमन्त्रेण । आचार्य्य-
समीपादुत्थाय उद्यन्नित्येतत् प्रभृतिमन्त्रेण मा हिंसीरित्यन्त-
मन्त्रेणादित्यमुतिष्ठेत उपात्मन्त्रेण चेत्यात्मनेपदम् । मेखला-
मवमुञ्चते उदुत्तमं वरुणमिति अवमुञ्चते अधस्तादवतारयति
अवशब्दोऽधस्तादर्थे । ब्राह्मणान् भोजयित्वा स्वयं भुक्त्वा
केशश्मश्रु रोमनखानि वापयती शिखावर्जम् । भोजयित्वा
स्वयं भुक्त्वा नापितेन मुण्डयीत । अत्र शिखावर्जमिति वच-
नात् प्राक् सशिखं वपनमिति दर्शयति । तच्चोक्तम् । सशिखं
वपनं कार्य्यमास्नानात् ब्रह्मचारिणामिति । स्नात्वालङ्कृत्या-
हते वाससी परिधाय स्रजमावध्नीत श्रीरसि मयि रमस्वेति ।
अलङ्कृत्य कुण्डलादिनात्मानं योजयित्वा आहते । "ईषद्धौतं
नवं शुभ्रं सदशं यन्न धारितम् । आहतं तद्विजानीयात्
सर्वकर्मसु पावनम्" ॥ इति वशिष्ठोक्तलक्षणे ईषत् सूक्ष्मम् ।

न धारितं न परिधानादिकृतम्। स्रजं ग्रथितपुष्पं अवध्नीत शिरसीति शेषः। श्रीरसीति मन्त्रेण नेत्रीस्थे नियतं मामित्युपानहौ। अवध्नीतेत्यनुवर्त्तते। उपानहौ चर्मपादुके योग्यत्वात् पादयोः गन्धर्वोऽसीति मन्त्रेण वैणवं दण्डं गृह्णाति वैणवं वंशप्रभवं गन्धर्वोऽसीति मन्त्रेण। आचार्य्यं सपरिषत्कमभ्येत्याचार्य्यपरिषदमीक्षतो यक्षमिव चक्षुषः प्रियो वोभूयासमिति। सपरिषत्कं शिष्यादिसभासहितम् अभ्येत्याभिमुख्येन गत्वाचार्य्यं परिषदञ्चेक्षते यक्षमिति मन्त्रेण। उपोपविश्य मुख्यान् प्राणान् संस्पृशन् ओष्ठापिधानानकुलीति उपाचार्य्यसमीपे मुख्यान् प्राणान् मुखप्रभवान् वायून् संस्पृशन् स्नातकः। ओष्ठापिधानमिति मन्त्रं जपेत्। अत्रैनमाचार्य्योऽर्हयेत् अत्रावसरे एवं स्नातकं विवाहोक्तवरार्हणविधिनाऽर्चयेत्। तदशक्तौ गन्धपुष्पाभ्याम्। गोयुक्तं रथमुपक्रम्य पक्षसी कूवरवाकूराभिमृषेत्। वनस्पतिविड्वोङ्गि भूया इति। पक्षसी चक्रे। कूवरं रथिकस्थानं वाकूरं रथरेखेत्यर्थः। वनस्पतीति मन्त्रेणाभिमृषेत्। स्पृशेत्। आस्था ते जयतु जेत्वानीत्यातिष्ठति। रथमारुह्य आस्था ते जयतु जेत्वानीति वनस्पते इत्यादि मन्त्रस्य चतुर्थपादेनातिष्ठति उपविशति प्राग्वा उदग्वाभिप्रयाय प्रदक्षिणमावृत्य उपयाति। तेन रथेन प्राङ् खो वा प्रयाय प्रकर्षेण गत्वा उपयाति आचार्य्यसमीपमागच्छति। उपयातायार्घ्यमिति कौहलीयाः। उपयातायाचार्य्यसमीपमागतायार्घ्यं देयमिति कौहलीया आचार्य्या आहुः। रथाभावेऽपि मन्त्रपाठाचारः चरुकरणे तण्डुलादाववघातादिवत्। अस्य कर्मणः समावर्त्तनसंज्ञापि। "गुरुणानुमतः स्नात्वा समावृत्तो यथाविधि। उद्वहेत द्विजो भार्य्यां सवर्णां लक्षणान्विताम्" इति मनूक्तेः। स्पष्टं शौनककारिकायाम्। "कुर्वीत द्वयमेवैत समावर्त्तन सञ्ज्ञकम्"।

अथ नवगृहप्रवेशकर्म । ज्योतिषे । "ज्येष्ठापुनर्वसु युतं गृहारम्भोदितञ्च यत् । तत् सर्वं योजयेद्वेश्मप्रवेशे दैवचिन्तकः" । गृहारम्भे मत्स्यपुराणम् । "चन्द्रादित्यबलं लब्ध्वा लग्नं शुभनिरीक्षितम् । स्तम्भोच्छ्रायादिकर्त्तव्यमन्यत्र परिवर्जयेत् । अश्विनीरोहिणीमूलमुत्तरात्रयमैन्दवम् । स्वातीहस्तानुराधा च गृहारम्भे प्रशस्यते । वज्रव्याघातशूले च व्यतीपातातिगण्डयोः । विष्कुम्भगण्ड परिघवर्जं योगेषु कारयेत् । आदित्यभौमवर्जन्तु सर्वे वाराः शुभावहाः" । राजमार्त्तण्डः । "आदित्येज्यभरोहिणीमृगशिरश्चित्राधनिष्ठोत्तरा । पौष्णं विष्णुगतानुराधपवनैः शुक्रैः सुतारान्वितैः । सौम्यानां दिवसेऽथ पापरहिते योगे विरिक्ते तिथौ । विष्टित्यक्तदिने वदन्ति मुनयो वेश्मादिकार्य्यं शुभम्" । ज्योतिषे । "उग्रं विशाखामदितिञ्च शक्रं भुजङ्गमग्निञ्च विहाय गेहम् । प्राग्वत्सलग्नस्थिरमन्दिरेषु कुर्य्याच्छुभैर्युक्तनिरीक्षितेषु । कृत्वाग्रतो द्विजवरानथ पूर्णकुम्भं दध्यक्षताम्रफलपुष्पदलोपशोभम् । दत्त्वा हिरण्यवसनानि तथा द्विजेभ्यो मङ्गल्यशान्तिनिलयं निलयं विशेच्च" । विष्णुधर्मोत्तरे । "गोपुच्छविन्यस्तकरः प्रविशेच्च गृहं गृही । अनुलिप्तः सुखी स्रग्वी सपत्नीकस्तथैव च" । गोभिलः । "मध्येऽग्निमुपसमाधाय कृष्णेन गवा यजेताजेन वा श्वेतेन सपायसानां पायसेन वा । गव्ये गृहस्य उपसमाधाय कुशण्डिकोक्तविधिनाग्निं स्थापयित्वा । पायसेन वा केवलेन रसमाज्यं मांसं पायसमिति संयूयाष्टगृहीतं गृहीत्वा जुहुयात् । वास्तोष्पते इति प्रथमा वामदेव्यर्च्चा महाव्याहृतयः प्रजापतये इत्युत्तरोया रसं घृतं मांसं संयूय मिश्रयित्वा केवलपायसं वा अष्टगृहीतं केवलमिच्चणेनाष्टवारान् गृहीत्वा वास्तोष्पते प्रतिजानीहि मन्त्रेण प्रथमाहुतिः ।

वामदेव्यर्चस्तिस्रस्ताभिस्तिस्रः महाव्याहृतिभि-स्तिस्रस्ताभिस्तिस्रः महाव्याहृतिभिस्तिस्रः प्रजापतये इत्येका प्रथमोत्तरीया इति आहुतिभेदार्थम्। तत्र शब्दोऽप्यत्र देवताहोममन्त्रेभ्यो ज्ञेयाः। यावत्यस्तास्तावतीरहिंस्य निर्वापः ताश्चाद्यस्य वास्तोष्पतिः। वामदेव्यर्चामिन्द्रः महाव्याहृतीनामग्निवायुसूर्य्याव्याहृतीनाञ्च सर्वेषामार्षस्यैव प्रजापतिः। "अग्निर्वायुस्तथासूर्य्यो बृहस्पतिरपांपतिः। इन्द्रश्च विश्वेदेवाश्च देवताः समुदाहृताः" इति संवर्त्तवचनात्। एतेन महाव्याहृतीनां पृथिव्यादि वाचकत्वात्। पृथिव्याद्यादेवता इति भूस्त्वाभुवस्त्वास्वस्त्वा इति च सरलादर्शनात् भवदेवभट्टेनापि यत् भूस्त्वाजुष्टमित्यादि लिखितं तद्धेयम्। तस्यैव स्थानान्तरे महाव्याहृतिहोमलिखने अग्न्यादीनां देवतात्वमिति लिखनात् प्रजापतिरुक्त एव। सूत्रे केवल पायसपक्षे च ओम् वास्तोष्पतये त्वाजुष्टं निर्वपामीति व्रीह्यादिकमादाय एवमिन्द्राय इति त्रिभिः। अग्नये वायवे सूर्य्याय प्रजापतये इत्यष्टौ निर्वापाः। ततः। सिद्धचरौ घृतस्रुवौ दत्त्वा मेक्षणेनाष्टौ प्रधानहोमाः। शेषं स्थालीपाकाद्गृहीत्वा बलीन् हरेत्। प्रदक्षिणं प्रतिदिशमवान्तरदेशेष्वानुपूर्वेण व्यतिहरन्। हुत्वेति क्रमप्राप्तेऽप्यानन्तर्य्यार्थम्। तेन प्रधानाहुतीर्हुत्वा स्विष्टकृद्धुत्वैव बलीन् हरेत् हुतशेषेणैव तदभावे पायसेन प्रतिदिशं सर्वासु दिक्षु क्रमेणाव्यवधानं कुर्वन्। यदि मुख्यचतुर्दिक्षु दत्त्वा विदिक्षु दीयते तदा व्यवधानता स्यात्। इन्द्रायेति पुरस्तात् वायवे इत्यवान्तरदेशे यमायेति दक्षिणतः पितृभ्य इत्यवान्तरदेशे वरुणायेति पश्चात् महाराजायेत्यवान्तरदेशे सोमायेत्युत्तरतः महेन्द्रायेत्यवान्तरदेशे वासुकये इत्यधस्तात् ऊर्द्ध्वं नमो ब्रह्मणे इति दिवि बलीन् हरेदिति पूर्वसूत्रेणान्वयः।

अन्यत् सुगमम्। नमस्कारेण बलीन् दद्यात् स च मन्त्रान्ते प्रयोज्यः पितृभ्य इत्यत्र षष्ठीं कुर्य्यात् "अमुष्मै मम इत्येवं बलिदानं विधीयते। बलिदानप्रदानार्थं नमस्कारः क्रतो यतः। स्वधाकारः पितृणान्तु हन्तकारो नृणां यतः। स्वधाकारेण निनयेत् पित्र्यं बलिमतः सदा"। इति छन्दोगपरिशिष्टात्। अधस्तान्नीचप्रदेशे। दिवि आकाशे। "विश्वेभ्यश्चैव देवेभ्यो बलिमाकाश उत्क्षिपेत्"। क्रमस्तु अग्निस्थापनादि प्रधान-होमान्तं कृत्वा बलीन् हरेत्। ततः स्विष्टकृदादि वामदेव्य-गानान्तं कृत्वा दक्षिणां दद्यात् इति।

अथ ग्रहयज्ञः। दीपिकायाम्। "शुभग्रहार्कवारेषु मृदु-क्षिप्रध्रुवेषु च। शुभराशिविलग्नेषु शुभं शान्तिकपौष्टिकम्"। मृदुगणः चित्रानुराधा मृगशिरो रेवत्यः। क्षिप्रगणो लघुगणः। पुष्याश्विहस्ताध्रुवगणो रोहिण्युत्तरात्रयम्। "गोचरे वा विलग्ने वा ये ग्रहारिष्ट सूचकाः। पूजयेत्तान् प्रयत्नेन पूजिताः स्युः शुभावहाः"। गोचरे स्वराश्यपेक्षया यदा कदापि। विलग्ने जन्मलग्ने सूचका न तु रिष्टकारकाः। तेन दुष्टग्रहसूचनीयदोषो-पशमनं फलम्। मत्स्यपुराणे। "उत्सवानन्दसन्तानयज्ञोद्वाहादि मङ्गले। मातरः प्रथमं पूज्याः पितरस्तदनन्तरम्। ततो माता-महानाञ्च विश्वेदेवास्तथैव च"। नान्दीमुखे वारादिदोषो नास्ति। "नान्दीमुखे पितृश्राद्धे संक्रान्त्यां ग्रहणद्वये। युगाद्यादि निमित्तेषु न वारतिथिदूषणम्" इति सत्यव्रतवचनात्। अत्र शूद्रस्याप्यधिकारः। स्मार्त्तं शूद्रः समाचरेदिति वचनात् अस्य स्मार्त्तत्वेन प्रतिनिधिनाप्यारम्भः कर्त्तव्यः। "श्रौतं कर्म स्वयं कुर्य्यादन्योऽपि स्मार्त्तमाचरेत्। अशक्तौ श्रौतमप्यन्यः कुर्य्यादाचारमन्ततः"। इति शातातपीयात्। अन्तत उप-क्रमात् परतः। याज्ञवल्क्यः। "श्रीकामः शान्तिकामो वा

ग्रहयज्ञं समाचरेत्। वृष्ट्यायुः पुष्टिकामो वा तथैवाभिचरन्नपि। सूर्य्यः सोमो महीपुत्रः सोमपुत्रो वृहस्पतिः। शुक्रः शनैश्चरो राहुः केतुश्चेति ग्रहाः स्मृताः। ताम्रकात् स्फाटिकाद्रक्तचन्दनात् स्वर्णकादुभौ। रजतादयसः सीसात् कांस्यात् कार्य्या ग्रहाः क्रमात्। स्ववर्णैर्वा पटे लेख्या गन्धैर्मण्डलकेषु वा। यथावर्णं प्रदेयानि वासांसि कुसुमानि च। गन्धाश्च वलयश्चैव धूपो देयः सगुग्गुलुः। कर्त्तव्या मन्त्रवन्तश्च चरवः प्रतिदैवतम्। आकृष्णेन इमं देवा अग्निर्मूर्द्धादिवः ककुत्। उद्बुध्यस्वेति च ऋचो यथासंख्यं प्रकीर्त्तिताः। वृहस्पतेऽतियदर्य्यस्तथैवान्नात् परिस्रुतः। शन्नो देवी तथा काण्डात् केतुं कृण्वन्निति क्रमात्। अर्कः पलाशः खदिरस्त्वपामार्गोऽथ पिप्पलः। उडुम्बरः शमी दूर्वा कुशाश्च समिधः क्रमात्। एकैकस्याष्टशतमष्टाविंशतिरेव वा। होतव्या दधिसर्पिर्भ्यां दध्ना क्षीरेण वा युताः। गुडौदनं पायसञ्च हविष्यं क्षीरषष्टिकम्। दध्योदनं हविश्चूर्णं मांसं चित्रान्नमेव च। दद्याद् ग्रहक्रमादेवं द्विजेभ्यो भोजनं बुधः। शक्तितो वा यथालाभं सत्कृत्य विधिपूर्वकम्। धेनुः शङ्खस्तथानड्वान् हेमवासो हयस्तथा। कृष्णा गौरायसं छाग एता वै दक्षिणा क्रमात्। यश्च यस्य सदा दुःस्थः स तं यत्नेन पूजयेत्। ब्रह्मणैषां वरो दत्तः पूजिताः पूजयिष्यथ। ग्रहाधीना नरेन्द्राणामुच्छ्रायः पतनानि च। भावाभावौ च जगतस्तस्मात् पूज्यतमा ग्रहाः"॥ शान्तिधर्म्मद्वारा ऐहिकानिष्टनिवृत्तिः। शान्त्यर्थयागो मलिम्लुचादिष्वपि कार्य्यः। "नैमित्तिकानि काम्यानि निपतन्ति यथायथा। तथातथैव कार्य्याणि न कालस्तु विधीयते" इति दक्षवचनात्। नैमित्तिकानि काम्यानीति समानाधिकरणमिदम्। ग्रहदौःस्थ्यव्याधिदुःस्वप्नादिनिमित्तान्नैमित्तिकानि

तच्छान्तिफलकत्वात् काम्यानि । श्रीग्रहयज्ञार्थयागस्तु न कार्य्यः पुष्ट्यर्थत्वेन केवलकाम्यत्वात् । अतएव मत्स्यपुराणम् । वैशम्पायनमासीनमपृच्छच्छौनकः पुनः । सर्वकामाप्तये नित्यं कथं शान्तिकपौष्टिकम्" ॥ वैशम्पायन उवाच । "श्रीकामः शान्तिकामो वा तथा चाभिचरन् पुनः । येन ब्रह्मन् विधानेन तन्मे निगदतः शृणु" ॥ इत्युपक्रम्य ग्रहयागाभिधानात् । वृष्टिकामहोमस्त्ववग्रहनाशार्थत्वे शान्तिकः । केवलवृष्ट्यर्थत्वे पौष्टिकः । अयमपि सङ्कल्पात् परमशौचेऽपि कार्य्यः । "व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे । आरब्धे सूतकं न स्यात् अनारब्धे तु सूतकम्" इति विष्णुवचने व्रतशब्दस्य सङ्कल्पाङ्गककर्म्मपरत्वात् । "विवाहादौ च संस्कारे वृद्धिश्राद्धे कृते सति । सङ्कल्पे ग्रहशान्तौ च नाशौचं मन्यते बुधाः" इति निर्णयामृतधृतवचनाच्च । अत्र नान्दीश्राद्धं विवाहादावित्यनेन श्राद्धस्यारब्धार्थकत्वात् वृद्धिश्राद्धे कृते इति श्रवणाच्च विवाहोपनयनादावन्योत्सर्गात् परमशौच एव दोषाभावः । न वृद्धिश्राद्धारम्भणादपीति । अत्राग्निनामान्याह गृह्यासंग्रहे । "पूर्णाहुत्यां मृडो नाम शान्तिके वरदस्तथा । पौष्टिके बलदश्चैव क्रोधाग्निश्चाभिचारके" ॥ ग्रहाणाह सूर्य्य इत्यादि यद्यपि सर्वजनसिद्धत्वात् ग्रहाणां बहवः शब्दा वाचकाः सन्ति शब्दोपहितस्यार्थोऽर्थोपहितः शब्दो वा देवता उभयथापि शब्दानियमादविनिगमना स्यात् । तथापि सूर्य्यसोममङ्गलबुधवृहस्पतिशुक्रशनैश्चरराहुकेतुपदैः पूजनं सर्वजनसिद्धत्वात् । उभौ बुधवृहस्पती । स्वैर्वर्णैस्ताम्राद्यभावे यस्य ग्रहस्य यो वर्णो रक्तादिस्तैर्वर्णैर्वर्णमाह मत्स्यपुराणम् । "संस्मरेद्रक्तमादित्यमङ्गारकसमन्वितम् । सोमशुक्रौ तथा श्वेतौ बुधजीवौ च पिङ्गलौ । मन्दराहू तथा कृष्णौ धूम्रं केतुगणं विदुः" ॥

पिङ्गलौ पीतौ। धूम्रं चन्द्रं नानावर्णं "सोमपुत्रो गुरुश्चैव तदुभौ पीतकौ स्मृतौ" इति। चित्राश्च केतव इति वशिष्ठ-संहितास्कन्दपुराणगोभिलैकवाक्यत्वात्। तथा चामरसिंहः। "धूम्रधूमलौ कृष्णलोहिते"। गन्धैश्च रक्तचन्दनादिभिः। कृतेषु मण्डलकेषु वर्त्तुलादिग्रहरूपेषु पूज्या इति शेषः। तथा च शान्तिदीपिकायाम्। "वर्त्तुलो भास्करः कार्य्यो ह्यर्द्धचन्द्रो निशाकरः। अङ्गारकस्त्रिकोणस्तु बुधश्चापाकृतिस्तथा। पद्माकृतिर्गुरुः कार्य्यश्चतुष्कोणस्तु भार्गवः। सर्पाकृतिः शनिः कार्य्यो राहुस्तु मकराकृतिः। खड्गाकृतिस्तथा केतुः कार्य्यो मण्डलपूजने"॥ मण्डलकरणासामर्थ्ये वेदिकामाह मत्स्य-पुराणम्। "गर्भस्योत्तरपूर्वस्यां वितस्तिद्वयविस्तृताम्। विप्र-द्वययुतां वेदीं वितस्त्युच्छ्रायसंयुताम्। संस्थापनाय देवानां चतुरस्रामुदक्प्लवाम्। अग्निप्रणयनं कृत्वा तस्यामावाहयेत् सुरान्"। गर्भस्य मण्डपगर्भस्य। मत्स्यपुराणे "मध्ये तु भास्करं विद्यात् लोहितं दक्षिणेन च। उत्तरस्यां गुरुं विद्याद्बुधं पूर्वोत्त-रेण तु। पूर्वेण भार्गवं विद्यात् सोमं दक्षिणपूर्वके। पश्चिमेन शनिं विद्याद्राहुं दक्षिणपश्चिमे। पश्चिमोत्तरतः केतुं स्थापयेत् शुक्लतण्डुलैः"॥ अत्रैव आवाहयेद्व्याहृतिभिरिति दर्शनादावाहनं व्याहृतिभिः शुक्लतण्डुलैः कार्य्यम्। स्कन्दपुराणे। "जन्मभू-र्गोत्रमेतेषां वर्णस्थानमुखानि च। योऽज्ञात्वा कुरुते शान्तिं ग्रहास्ते नावमानिताः॥ उत्पन्नोऽर्कः कलिङ्गेषु यमुनायाञ्च चन्द्रमाः। अङ्गारकस्त्ववन्त्यान्तु मगधायां हिमांशुजः॥ सैन्धवेषु गुरुर्जातः शुक्रो भोजकटे तथा। शनैश्चरस्तु सौराष्ट्रे राहुर्वैराटिकापुरे॥ अन्तर्वेद्यां तथा केतुरित्येता ग्रहभूमयः। आदित्यः काश्यपो गोत्र आत्रेयश्चन्द्रमा भवेत्॥ भरद्वाजो भवेद्भौमस्तथात्रेयश्च सोमजः। गुरुः पूज्योऽङ्गिरो गोत्रः शुक्रो वै भार्गवस्तथा। शनिः काश्यप एवायं राहुः पैठीनसिस्तथा॥ केतवो जैमिनेयाश्च ग्रहा लोकहिते रताः"॥ मत्स्यपुराणम्। "आदित्याभिमुखाः सर्वे साधिपप्रत्यधिदेवताः। स्थापनीया मुनिश्रेष्ठ नान्तरा न पराङ्मुखाः"॥ आदित्यान्यान्यस्य च

स्थापितग्रहस्थान्तरालेऽन्यो ग्रहो न स्थापनीयः नाप्यादित्य-पराङ्मुखाः कार्य्याः । अधिदैवतपूजा अयुतहोमादौ कार्य्या । कात्यायनः । "तन्नोवजातीरस्नात्वा होमं यः कुरुते नरः । न तस्य फलमाप्नोति न च तुष्यन्ति देवताः ॥ न हुतं न च संस्कारो न च यज्ञफलं लभेत्" ॥ वशिष्ठगोभिलकात्यायनाः । "ब्राह्मणौ भार्गवाचार्य्यौ क्षत्रियावर्कलोहितौ । वैश्यौ सोम-बुधौ चैव शेषान् शूद्रान् विनिर्दिशेत्" ॥ बलयस्तु मत्स्य-पुराणे । "गुडौदनं रवेर्दद्यात् सोमाय घृतपायसम् । संयावकं कुजे दद्यात् क्षीरान्नं सोमसूनवे ॥ दध्योदनञ्च जीवाय शुक्राय तु घृतौदनम् । शनैश्चराय कृषरमाजं मांसञ्च राहवे ॥ चित्रौ-दनञ्च केतुभ्यः सर्वभक्ष्यैः समर्चयेत्" ॥ सर्वभक्ष्यैस्तु तत्तद्द्रव्या-लाभे यथालाभोपपन्नैः । मन्त्रवन्तः । ओम् सूर्य्यायत्वायुष्टं निर्वपामीति मन्त्रयुक्ताः । यजुषां ग्रहणनिर्वापप्रोक्षणमन्त्र-युक्ताः । ऋग्वेदिनान्तु निर्वापप्रोक्षणमन्त्रयुक्ताः । चरुद्रव्य-माह गोभिलः । "अथ हविर्निर्वपति व्रीहीन् यवान् वेति" तदलाभे शालिगोधूमावपि ग्राह्यौ । "यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत् । यवानामिव गोधूमा व्रीहीणामिव शालयः" इति छन्दोगपरिशिष्टात् । समित्प्रमाणन्तु मत्स्यपुराणे । "प्रादेश-मात्राः सशिखाः सवल्काः सपलाशिनीः । समिधः कल्पयेत् प्राज्ञः सर्वकर्मसु सर्वदा" ॥ तत्तत्समिदलाभे पैठीनसिः । "काण्ड-वल्कलपुष्पप्ररोहरसगन्धादीनां सादृश्येन प्रतिनिधिं कुर्य्यात् सर्वालाभे यवः प्रतिनिधिर्भवतीति काण्डं नालं प्ररोहोऽङ्कुरः । यव इति कल्पतरु पाठः । अवयव इति नारायणोपाध्यायाः । आकृष्टेनेत्यादयः क्रमेण सूर्य्यादिमन्त्राः । एकैकस्येति स्वगृह्या-नुसारेण । चरुसमूहेनाज्यभागं कृत्वा चरूणां प्रत्येकमेकैका-हुतिमर्कादिक्रमेणार्कादिमन्त्रैर्हुत्वा पश्चात् स्वस्वमन्त्रैरेव यथोक्तसंख्या होतव्या । इति शूलपाणिमहामहोपाध्यायाः । दूर्वाहोमे दूर्वात्रयं ग्राह्यम् । सरदातिलके होमद्रव्यपरिमाणे दूर्वात्रयसमुद्दिष्टमिति दर्शनात् । चूर्णं पक्वं तिलतण्डुलचूर्णं कृषररूपं शनैश्चराय कृषरमिति मत्स्यपुराणात् । मांसमाजं "आजं मांसञ्च राहवे" इति मत्स्यपुराणात् । चित्रान्नं "अजा-

क्षीरेण संखिन्ना यवाश्च तिलतण्डुलाः। अजाकर्णस्य रक्तेन रक्ताश्विनाश्च संज्ञिता" ॥ इति दीपिकोक्तम्। यथा लाभमित्यनेन तत्तद्द्रव्यालाभे भक्ष्यान्तरं देयम्। सर्वभक्ष्यैः समर्चयेदिति मत्स्यपुराणात्। सत्कृत्य पाद्यादिना पूजयित्वा धेन्वादिर्दक्षिणा देया। तदभावे तु मत्स्यपुराणम्: "सुवर्णमथवा दद्यात् गुरुर्वा येन तुष्यति"। तथा च मत्स्यपुराणम्। "यजमानः सपत्नीक ऋत्विजस्तान् समाहितः। दक्षिणाभिः प्रयत्नेन पूजयेद्गतविस्मयः ॥ इत्युपक्रमात् गुरुर्वा येन तुष्यतीत्युपसंहारात्। तत्रैव लक्षहोमे। "दातव्या यजमानेन पूर्ववद्दक्षिणा पृथक्। त्वराक्रोधविहीनेन ऋत्विग्भ्यः शान्तचेतसा" ॥ इत्युक्तत्वात् ऋत्विग्भ्य एव दक्षिणा। "सूर्य्याय कपिलां धेनुं दद्याच्छङ्खं तथेन्दवे" ॥ इत्यादिषु तादर्थ्ये चतुर्थी। तेन सूर्य्ययागप्रतिष्ठार्थं कपिलां धेनुम् ऋत्विजे दद्यात्। गुडोदनादिभोजनमपि तस्यैव उपस्थितत्वात्। एता दक्षिणा भोजितब्राह्मणानामिति शूलपाणिव्याख्यानाच्च। "समन्त्रेण प्रदातव्याः सर्वाः सर्वत्र दक्षिणा" इति मत्स्यपुराणात्। धेन्वादिदाने कपिले सर्वदेवानामित्यादि तत्तन्मन्त्राः पाठ्याः। ते च प्रयोगे वक्ष्यते। ऋत्विग्भ्य इत्ययुतादिहोमविषयम्। अल्पहोमेऽशक्तावेकोऽपि पृथक्। अतएव गुरुर्वा येन तुष्यतीत्युक्तं यश्चेति यत्नेन पूर्वोक्तादतिरिक्तोपचारेण अतएव दीपिकायाम्। "एकैकस्याष्टशतमष्टाविंशतिरेव वा। होतव्या मधुसर्पिर्भ्यां दध्ना क्षीरेण वा युतम्" ॥ पूजयिष्यथ त्वभीष्टवरदानेन अतोदुःस्थः ग्रहो यत्नतः पूजनीयः। यथा मत्स्यपुराणे। "सुस्थः स्वल्पोपचारेण दुःस्थः शक्त्याद्यपेक्षया। यत्नतः पूजनीयास्ते पूजिताश्चेत् शुभावहाः" ॥ तथा "यस्तु पीडाकरो नित्यमल्पवित्तस्य वा ग्रहः। स तं यत्नेन संपूज्य शेषानप्यर्चयेन्नरः ॥ तस्मात् पीड़ाकरो नित्यं य एव भवति ग्रहः। तमेव पूजयेद्भक्त्या द्वौ वा त्रीन् वा यथाविधिः ॥ एकमप्यर्चयेद्भक्त्या ब्राह्मणं वेदपारगम्। दक्षिणाभिप्रयत्नेन न बहूनल्पवित्तवान्" ॥ इति वन्द्यघटीय-हरिहरभट्टाचार्य्यात्मज-श्रीरघुनन्दनभट्टाचार्य्यविरचितं संस्कारतत्त्वं समाप्तम्।

